Prājña Pāṭhashālā Maṇḍala Grantha Mālā

# *MIMAMSAKOSAH*

## Part VI

*Edited by*

The Late Kevalānandasaraswatī

1962 Rs 35

# अनुक्रमणिका

# प्रकाशकस्य निवेदनम् ।

भारतसंघराज्यमुख्येन भूतपूर्वेण राष्ट्रपतिना श्रीराजेन्द्रप्रसादेन मीमांसाकोशपञ्चमभागस्य प्रकाशनं निर्वर्तितं मार्गशीर्षकृष्णदशम्यां पूर्वाह्णे शके १८८२ तमे । मन्यामहे, अहो भाग्यमस्माकं यत् अयं षष्ठोऽपि भागः विश्वविख्यातयशसा परिणतप्रज्ञेन महादार्शनिकेन पौरस्त्यपाश्चात्त्योभयतत्त्वदर्शनेषु निष्णातेन भारतसंघराज्यस्य द्वितीयेन राष्ट्रपतिना श्रीमद्राधाकृष्णन्महोदयेन महता सरम्भेण प्रकाशनगोचरतामद्य नीयते ।

गुरुचरणनिर्मितस्यास्य भागस्य संस्कारः गुरुचरणान्तेवासिना मीमांसाभूषणेन तपःस्वाध्यायनिरतेन आहिताग्निना ताम्हनकरइत्युपाख्येन दत्तात्रेयशास्त्रिणा संपादितः ।

अस्य षष्ठभागस्य यथापूर्वं मुद्रितपरिशोधनादि सूक्ष्मेक्षिकया धर्मकोशस्य कार्यकारिसंपादकेन श्रीरङ्गनाथशास्त्रिणा निर्वर्तितम् । श्रीरङ्गनाथशास्त्रिणः एतादृशकार्यनिर्वर्तनसामर्थ्ये गुरुचरणानामपि विश्वास आसीत् । न्यूनातिरिक्तदोषपरिहाराय गुरुभिस्तेन सह पुनःपुनः विमर्शोऽपि कृतोऽस्ति । ग्रन्थगुणवत्तासंपत्तावेव श्रीरङ्गनाथशास्त्रिणश्चित्तसमाधानमित्यस्माकमपि चिरकालीनोऽनुभव इति तस्मिन्विश्रभ्य धर्मकोशकार्यमपि वयं संचालयामः ।

अधिकरणादिसंख्या— षष्ठेऽस्मिन् भागे भाष्याधिकरणानि ८१, संकर्षाधिकरणानि ४१, केवलानन्दीयवृत्त्यधिकरणानि १००, तौतातिताधिकरणानि १९, न्यायाः १८४, लघुसिद्धान्ताश्च ४६३४ भवन्ति ।

अथ प्रथमभागमारभ्य भाष्याधिकरणानि ९७९, संकर्षाधिकरणानि २६८, केवलानन्दीयवृत्त्यधिकरणानि ६९०, तौतातिताधिकरणानि ८०, न्यायाः १२१६, लघुसिद्धान्ताश्च २२२८१ इति ।

कार्तिकः कृष्णः ६<br>शकः १८८४

लक्ष्मणशास्त्री जोशी, तर्कतीर्थः<br>अध्यक्षः प्राज्ञपाठशालामण्डलस्य<br>मुख्यसंपादकश्च धर्मकोशस्य

# ग्रन्थादिसंक्षेपाक्षराणि तद्विवरणं च ।

अद्वैत—अद्वैतसिद्धिः श्रीमधुसूदनसरस्वतीप्रणीता मोहमय्यां निर्णयसागरे १९१७ सने मुद्रिता ।

अद्वैत. चं— अद्वैतसिद्धेः टीका लघुचन्द्रिका ब्रह्मानन्दी नाम ।

अलंकारः— भाट्टालङ्कारः नाम मीमांसान्यायप्रकाशस्य टीका अनन्तदेवविरचिता । चौखम्बायां १९२१ सने मुद्रितः ।

आचारमयूखः— श्री. ज. र. घारपुरेसंपादितः, मुम्बई ।

आपध— आपस्तम्बधर्मसूत्रम् । प्रश्नः, कण्डिका, सूत्रं इति अङ्कत्रयम् ।

आपस्तम्बाचार्यः— प्रसिद्धः कल्पसूत्रकारः ।

आभरणम्— शांकरशारीरकभाष्यस्य टीका । अध्याय–पाद–सूत्राङ्काः । क्वचित् तृतीयोऽङ्कः अधिकरणस्य ।

आर्षेयब्राह्मणम्— सामवेदीयम् ।

आश्व. गृ— आश्वलायनगृह्यसूत्रम्, नारायणवृत्तिश्च ।

आश्व. श्रौ— आश्वलायनश्रौतसूत्रम् । पुण्यपत्तनस्थानन्दाश्रमे मुद्रितम् ।

इ— इत्यादि ।

उद्योतः— व्याकरणमहाभाष्यस्य टीका ।

उपदेशसाहस्री— श्रीशंकराचार्यप्रणीता । रामतीर्थः टीकाकारः । प्रकरणश्लोकाङ्कौ । गद्यं पद्यं च ।

ऋजु— ऋजुविमला नाम शाबरभाष्यव्याख्यानरूपायाः प्राभाकरीयबृहत्याः टीका श्रीशालिकनाथप्रणीता । चौखम्बासीरीज् १९२९ सने मुद्रिता ।

ऋसं— ऋग्वेदसंहिता । मण्डलम्, सूक्तम्, ऋक् इत्यङ्कत्रयम् ।

ऐआसा— ऐतरेयारण्यकस्य सायणभाष्यम् ।

ऐब्रा— ऐतरेयब्राह्मणम् । पुण्यपत्तनस्थानन्दाश्रमे १९३० सने मुद्रितम् । अध्यायः, खण्डः, सूत्र इत्यङ्कत्रयम् ।

ऐब्रासा— ऐतरेयब्राह्मणस्य सायणभाष्यम् । अध्याय–खण्ड–सूत्राणामङ्काः । आनन्दाश्रमे १९३० सने मुद्रितम् ।

कठोप— कठोपनिषत् ।

कणादसूत्रम्— वैशेषिकदर्शनम् । अध्याय– आह्निक– सूत्राणामङ्काः ।

कणिका— न्यायकणिका विधिविवेकस्य टीका वाचस्पतिमिश्रप्रणीता । काशी मेडिकल्हॉल्-मुद्रणालये १९०७ सने मुद्रिता ।

कर्क— कर्काचार्य, कात्यायनश्रौतसूत्रस्य भाष्यकार ।

कल्पतरु— भामत्या टीका । अमलानन्दसरस्वतीप्रणीत, १९१७ सने मोहमय्यां निर्णयसागरे मुद्रित । अध्याय, पाद, सूत्र इत्यङ्कत्रयम् ।

कस्तूरि— कस्तूरिरङ्गाचार्यविरचिता जैमिनिसूत्रवृत्ति । १९०८ सने मैसूरनगरे मुद्रिता । सा च भाट्टदीपिकापुस्तके एव मुद्रिता ।

कातीयसूत्रम्— कात्यायनश्रौतसूत्रम् ।

कासं— काठकसंहिता ।

कु., कुतूहलम्— अध्वरमीमांसाकुतूहलवृत्ति श्रीवासुदेवदीक्षितविरचिता । श्रीरङ्ग-वाणीविलासे मुद्रिता । अध्याय, पाद, अधिकरणम, सूत्र इत्यङ्कचतुष्टयम् ।

के— केवलानन्दसरस्वती । तत्कृता जैमिनिसूत्रवृत्तिश्च ।

कैउ— कैवल्योपनिषत् ।

कयटः— व्याकरणमहाभाष्यस्य टीकाकार । काश्यां मुद्रित ।

कौ, कौस्तुभः — मीमांसाकौस्तुभ खण्डदेवप्रणीत । चौखम्बायां १९३९ सने मुद्रित । अध्याय, पाद, अधिकरणम्, सूत्र इत्यङ्कचतुष्टयम्, पृष्ठाङ्कश्च ।

कौब्रा., कौषीतकिब्राह्मणम्— पुण्यपत्तने आनन्दाश्रमे १९११ सने मुद्रितम् ।

चतुर्ग्रन्थी— महामहोपाध्यायश्रीअनन्तकृष्णशास्त्रिभि प्रणीता न्यायामृत- अद्वैतसिद्धि- न्यायामृततरङ्गिणी-लघुचन्द्रिकाणां चतुर्णां ग्रन्थानां निष्कर्षरूपा ।

चन्द्रिका— अद्वैतसिद्ध टीका ब्रह्मानन्दी नाम । निर्णयसागरे मुद्रिता ।

जै— जैमिनिद्वादशलक्षणी । अध्याय, पाद, अधिकरणम्, सूत्र इत्यङ्कचतुष्टयम् ।

जैब्रा— जैमिनीयब्राह्मणम् ।

टुप्— टुप्टीका नाम वार्तिक कुमारिलभट्टप्रणीतम्, पुण्यपत्तने आनन्दाश्रमे शाबरभाष्येण सह १९३१ सनादौ मुद्रितम् ।

तत्त्वप्रकाशिका— परिभाषेन्दुशेखरटीकाया मूले टीका । २००२ सवति काश्यां मुद्रिता ।

तत्त्वबोधिनी— सिद्धान्तकौमुद्या टीका निर्णयसागरीया १९२९ सने मुद्रिता ।

तन्त्ररत्नम्— टुप्टीकाया पार्थसारथिप्रणीता टीका । लिखिता । अध्याय, पाद, अधिकरणम्, सूत्र चेति अङ्कचतुष्टयम् ।

ताण्ड्य— ताण्ड्यब्राह्मण पञ्चविंश नाम । अध्याय, खण्ड, सूत्र चेति अङ्कत्रयम् ।

ताण्ड्यभा— ताण्ड्यब्राह्मणस्य सायणप्रणीत भाष्यम् ।

तैसं— तैत्तिरीयसंहिता । काण्ड, प्रपाठक, अनुवाक इत्यङ्कत्रयम् ।

तैसंभा— तैत्तिरीयसंहिताया सायणभाष्यम् ।

तौता— तौतातितमततिलकः भवदेवप्रणीतः मीमांसासूत्रवृत्तिरूपः अधिकरणरचनात्मकः। काश्यां मुद्रितः।

दमी— दत्तकमीमांसा श्रीनन्दपण्डितकृता।

द्र०— द्रष्टव्यम्।

धर्मसिन्धुः— श्रीकाशीनाथोपाध्यायविरचितः।

निरुक्त— यास्काचार्यप्रणीतं निरुक्तम्। अध्यायः खण्डश्च।

निर्णयसिन्धुः— श्रीकमलाकरभट्टविरचितः।

न्या.माला—न्यायरत्नमाला पार्थसारथिमिश्रप्रणीता, चौखम्बायां मुद्रिता।

न्यायनि—न्यायनिर्णयः नाम शांकरशारीरकभाष्यस्य टीका आनन्दगिरिप्रणीता। अध्याय-पाद-सूत्राङ्काः।

न्या. सू— न्यायदर्शनसूत्रम्। अध्यायः, आह्निकम्, सूत्रं इति त्रयोऽङ्काः।

पं— पङ्क्तिः।

पञ्चिका—प्रकरणपञ्चिका श्रीशालिकनाथप्रणीता प्राभाकरमतानुसारिणी। अनेकप्रकरणात्मको ग्रन्थः। चौखम्बायां मुद्रितः।

पराक्रमः—उपक्रमपराक्रमः अप्पय्यदीक्षितप्रणीतः। लिखितः। पत्रम्, पृष्ठं इत्यङ्कद्वयम्।

परि— परिभाषा। क्रमाङ्कः।

परिभाषेन्दुः— परिभाषेन्दुशेखरः नागेशप्रणीतः। काश्यां २००२ संवति मुद्रितः।

परिमल— भामत्याष्टीकायाः कल्पतरोः टीका। अप्पय्यदीक्षितविरचितः मोहमय्यां निर्णयसागरे १९१७ सने मुद्रित।

पा— पाणिनिः व्याकरणाचार्यः प्रसिद्धः। अध्यायः, पादः, सूत्रं चेति अङ्कत्रयम्।

पुरुषार्थचिन्तामणिः— श्रीविष्णुभट्टविरचितः। मोहमय्यां मुद्रितः।

पृ—पृष्ठम्।

प्र. पञ्चिका— प्रकरणपञ्चिका श्रीशालिकनाथप्रणीता। काश्यां विद्याविलासयन्त्रालये १९०४ सने मुद्रिता।

प्र. वि— प्रभाकरविजयः नन्दीश्वरविरचितः। कलकत्तायां १९२६ सने मुद्रितः।

भाट्ट—भाट्टमीमांसाप्रकाशः शंकरभट्टप्रणीतः। काश्यां विद्याविलासमुद्रणालये १९०२ सने मुद्रितः।

बिन्दुः— न्यायबिन्दुः भट्टपाल्यवैद्यनाथप्रणीतः, मुम्बई गुजरातीमुद्रणालये १९१५ सने मुद्रितः।

बृहती— शाबरभाष्यस्य प्रभाकरमतानुसारिणी टीका। नव्यप्राभाकरमतमयः। चौखम्बायां १९२९ सने मुद्रिता।

**बृहस्पतिः**— बृहस्पतिस्मृतिः ।

**बौध**— बौधायनधर्मसूत्रम् । प्रश्न पटल सूत्रं च ।

**ब्रसू**— ब्रह्मसूत्रम् । अध्याय, पाद, सूत्र इत्यङ्कत्रयम् । अङ्कचतुष्टये सति तृतीयोऽङ्कः अधिकरणस्य ।

**भगी**— भगवद्गीता । अध्याय श्लोकश्च ।

**भट्टसोमेश्वरः** – तन्त्रवार्तिकटीकायाः न्यायसुधायाः कर्ता ।

**भा**— शाबरभाष्यम् आनन्दाश्रम मुद्रितम् । अध्याय, पाद, अधिकरणम्, सूत्र इत्यङ्कचतुष्टयम् । क्वचित् पृष्ठाङ्कः अधिकः ।

**भाद्व**— भाट्टदीपिका नव्यमीमांसकखण्डदेवप्रणीता । मैसूर १९०८ सने मुद्रिता । अध्याय, पाद, अधिकरणमिति अङ्कत्रयम् ।

**भाट्टालङ्कारः**— मीमांसान्यायप्रकाशस्य अनन्तदेवविरचिता टीका ।

**भामती**— श्रीवाचस्पतिमिश्रप्रणीता शाङ्करशारीरकभाष्यस्य टीका । मुम्बई निर्णयसागरे १९१७ सने मुद्रिता ।

**भावनाविवेकः**— मण्डनाचार्यप्रणीतः काश्यां १९२३ सने मुद्रितः ।

**भाष्यम्**— शाबरभाष्यम् ।

**भूति**— परिभाषेन्दुशेखरस्य टीका श्रीतात्याशास्त्रिपटवर्धनप्रणीता । काश्यां २००२ सने मुद्रिता ।

**मणि** – भाट्टचिन्तामणिः गागाभट्टविरचितः । तर्कपादमात्रम् । चौखम्बायां १९०० सने मुद्रितः ।

**मण्डन**— मण्डनमिश्रकृता मीमांसानुक्रमणी चौखम्बायां १९२९ सने मुद्रिता, मण्डनाचार्यश्च ।

**माघ**— माघकविकृतं शिशुपालवधं नाम महाकाव्यम् । सर्ग श्लोक इत्यङ्कद्वयम् ।

**मिताक्षरा**— याज्ञवल्क्यस्मृतिटीका श्रीविज्ञानेश्वरविरचिता ।

**मीको**— मीमांसाकोषः ।

**मीन्या** – मीमांसान्यायप्रकाशः श्रीआपदेवप्रणीतः । चौखम्बायां १९२० सने मुद्रितः ।

**मीमांसाजीवरक्षा**— प्राभाकरमतानुसारिणी शालिकनाथप्रणीता । प्रकरणपञ्चिकापुस्तके अन्ते काश्यां १९०४ सने मुद्रिता ।

**मुरारि** — अङ्गत्वनिरुक्तिकर्ता । आनन्दाश्रमीय मीमांसादर्शने तृतीये भागे अन्ते १९३१ सने मुद्रिता ।

**मेधातिथिः**— मनुस्मृतेः भाष्यकारः ।

**याज्ञ, यास्मृ**— याज्ञवल्क्यस्मृतिः । अध्याय, श्लोक इति द्वौ अङ्कौ ।

**रत्न**— तन्त्ररत्नम् । पार्थसारथिमिश्रप्रणीतम् । टुप्टीकावार्तिकस्य टीका । लिखिता । अध्याय, पाद, अधिकरणम्, सूत्र इत्यङ्कचतुष्टयम् ।

**रत्नमाला**— न्यायरत्नमाला पार्थसारथिमिश्रप्रणीता । चौखम्बायां मुद्रिता ।

**रत्नाकरः**— न्यायरत्नाकरः श्लोकवार्तिकस्य टीका पार्थसारथिमिश्रप्रणीता । चौखम्बायां १८९८ सने मुद्रितः ।

**रसायनम्**— विधिरसायनं अप्पय्यदीक्षितप्रणीतम् । चौखम्बायां १९०१ सने मुद्रितम् ।

**रहस्य**— भाट्टरहस्यं श्रीखण्डदेवप्रणीतम् । शाब्दबोधविषयकम् । काञ्चीनगरे मुद्रितम् ।

**वा**— तन्त्रवार्तिकं आचार्यकुमारिलभट्टविरचितं शाबरभाष्यस्य विवरणात्मकम् । पुण्यपत्तने आनन्दाश्रमे भाष्येण सह १९३१ सने मुद्रितम् । अध्यायः, पादः, अधिकरणम्, सूत्रं चेति अङ्कचतुष्टयम् ।

**वाक्यार्थ**— वाक्यार्थमातृकावृत्तिः शालिकनाथप्रणीता । प्रकरणपञ्चिकापुस्तके एव अन्ते १९०३ सने मुद्रिता ।

**वि**— जैमिनीयन्यायमालाविस्तरः सायणमाधवाचार्यप्रणीतः । पुण्यपत्तने आनन्दाश्रमे १९१६ सने मुद्रितः । अध्यायः, पादः, अधिकरणं चेति अङ्कत्रयम् ।

**विवि**— विधिविवेकः मण्डनाचार्यप्रणीतः । काश्यां मेडिकलहॉलमुद्रणालये १९०७ सने मुद्रितः ।

**वृ**— मीमांसासूत्रवृत्तिः सुबोधिनी नाम रामेश्वरसूरिविरचिता । काश्यां मेडिकलहॉलमुद्रणालये १९२२ सने मुद्रिता ।

**वैजयन्ती**— महादेवकृता सत्याषाढश्रौतसूत्रवृत्तिः पुण्यपत्तने आनन्दाश्रमे १९०७ सने मुद्रिता ।

**वैद्यनाथः**— शाबरभाष्यीयतर्कपादस्य टीकाकारः । आनन्दाश्रमे १९२९ सने मुद्रिता वैद्यनाथी नाम ।

**वैद्यनाथी**— वैद्यनाथकृता शाबरभाष्यस्य टीका ।

**वैया. भू**— वैयाकरणभूषणसारः ।

**वै. सार. कारिका**— वैयाकरणभूषणसारस्था कारिका ।

**व्यवहारमयूखः**— श्री. ग. र. घारपुरेप्रकाशितः, मुम्बई ।

**शंकर**— शंकरभट्टकृतः मीमांसासारसंग्रहः । काश्यां विद्याविलासमुद्रणालये प्रकरणपञ्चिकापुस्तकान्ते १९०४ सने मुद्रितः ।

**शब्दकौस्तुभः**— भट्टोजिदीक्षितप्रणीतः ।

**शां भा**— शांकरभाष्यम् । अध्यायः, पादः, सूत्रम् इत्यङ्कत्रयम् । चतुरङ्कत्वे तु तृतीयोऽङ्कः अधिकरणस्य ।

**शाश्रौ**— शाङ्खायनश्रौतसूत्रम् । अध्याय, खण्ड, सूत्र च । कलिकातायां १८८८ सने मुद्रितं सभाष्यम् ।

**शा**— शास्त्रदीपिका पार्थसारथिमिश्रप्रणीता । निर्णयसागरे १९१५ सने मुद्रिता । अध्याय, पाद, अधिकरण चेति अङ्कत्रयम् ।

**शास्त्रप्रकाशिका**— बृहदारण्यकोपनिषच्छाङ्करभाष्यगतवार्तिकस्य आनन्दगिरिकृता टीका आनन्दाश्रमे मुद्रिता ।

**शेखर**— परिभाषेन्दुशेखर नागेशप्रणीत । काश्यां २००२ सवति मुद्रित भूत्यादिसहित ।

**श्राद्धमयूखः**— श्री ज र. घारपुरेप्रकाशित, मुम्बई ।

**श्रीकर**— ब्रह्मसूत्रभाष्यकार शैवमतानुसारी ।

**श्लोवा**— श्लोकवार्तिक आचार्यकुमारिलभट्टविरचितम् । तर्कपाद । चौखम्बायां १८९८ सने मुद्रितम् ।

**संस्कारकौस्तुभ**— अनन्तदेवविरचित निर्णयसागरे मुद्रित ।

**सकर्ष**— सकर्षकाण्डम् । भास्करभट्टप्रणीता भाट्टचन्द्रिका भाट्टदीपिका वा वृत्ति । काश्यां मेडिकल्हॉल्मुद्रणालये १८९४ सने मुद्रिता ।

**संक्षेपशारीरकम्**— रामतीर्थकृतटीकासहितम् । अध्याय, श्लोक इति अङ्कद्वयम् ।

**संग्रहः**— न्यायसंग्रह । लिखित ।

**सत्याश्रौ**— सत्याषाढीय श्रौतसूत्रम् । आनन्दाश्रमे १९०७ सने मुद्रितम् ।

**सत्याषाढः**— तैत्तिरीयहिरण्यकेशिशाखीयकल्पसूत्र आनन्दाश्रमे १९०७ सने मुद्रितम् ।

**सदसं**— सर्वदर्शनसंग्रह ।

**सना. ध. प्र.**— सनातनधर्मप्रदीप । श्रीकुमरमुण्डेश्वरमहाराजप्रेरितैः म. म. अनन्तकृष्णशास्त्रिभिः प्रणीत ।

**समयमयूखः**— श्री ज र घारपुरेसंपादित, मुम्बई ।

**साहस्री**— सुब्रह्मण्यशास्त्रीरचितन्यायसाहस्री । मुम्बई वेङ्कटेश्वर १८३० शके मुद्रिता । साहस्र्यां ये न्यायसमाम्नाता निवेशिताः त एवास्माभिः प्रदर्श्यन्ते ।

**सि. कौ**— सिद्धान्तकौमुदी भट्टोजीदीक्षितप्रणीता । निर्णयसागरे १९२९ सने मुद्रिता ।

**सिद्धान्तचन्द्रिका**— तर्कपादस्यशास्त्रदीपिकाया टीका रामकृष्णप्रणीता निर्णयसागरे १९१५ सने शास्त्रदीपिकया सह मुद्रिता ।

**सिद्धान्तदर्शनम्**— निरञ्जनभाष्यसमेतम् । आनन्दाश्रमे १९०७ सने मुद्रितम् ।

**सिद्धिव्याख्या**— अद्वैतसिद्धेः टीका ।

सु., सुधा — न्यायसुधा तन्त्रवार्तिकस्य टीका । भट्टसोमेश्वरविरचिता राणकापरपर्याया । चौखम्बायां मुद्रिता । अत्र पृष्ठाङ्का एव केवलमुपन्यस्ताः । यत्र च 'सु. ३।७' इति स्यात् तत्र सुधायाः तृतीयाध्यायस्य सप्तमाष्टमपादात्मके भागे ग्रन्थान्ते मुद्रिते पृष्ठं अमुकं इत्यर्थः । तत्र भागे किल पृथगेव अङ्का मुद्रिता आदित आरभ्य ।

सोम — सोमनाथी मयूखमालिका नाम शास्त्रदीपिकायाटीका अर्थवादाधिकरणमारभ्य द्वादशाध्यायान्ता । निर्णयसागरे १९१५ सने शास्त्रदीपिकया सह मुद्रिता । अत्र अध्यायः, पादः, अधिकरणं इति अङ्कत्रयम् ।

| पृष्ठम् | स्तम्भ | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३२५१ | १ | १३ | क्षयाय | क्षयार्थं |
| ,, | २ | ३२ | कृ्तृ | कर्तृ |
| ३२५७ | १ | ३४ | उच्छ्र | उच्छ्रय |
| ३२६३ | ,, | २१ | ऊरु | उरु |
| ३२९० | १ | ३७ | निमिता | प्रिमिता |
| ३२९१ | २ | ३६ | कल्यात् | कल्यात् |
| ३३०१ | ,, | १९ | श्रत्यैन | भुय्येन |
| ३३०४ | १ | ९ | श्रयमाणा | श्रूयमाणा |
| ३३२२ | ,, | १८ | राजराय | राजसूय |
| ३३३० | ,, | ७ | हुत | हुत |
| ३३३७ | १ | ७ | ॾ रौमक | * रौमक |
| ३३४८ | ,, | १९ | नाह्मत्व | नाह्मत्व |
| ३३५९ | ,, | २३ | मैत्री | मैन्त्री |
| ३३६५ | ,, | २१ | श्रत्या | श्रुत्या |
| ३३७० | १ | २३ | तुन्तीया | तृतीया |
| ३३८० | ,, | १५ | अश्रत | अश्रुत |
| ३३८२ | २ | २३ | यनान्तौ | यवनान्तौ |
| ३३८८ | ,, | १४ | तरस्मते | तस्मृते |
| ३३९१ | ,, | २० | लौकिका | लौकिका |
| ३३९६ | १ | ६ | यात् | स्यात् |
| ३३९८ | ,, | १४ | बहुश्रता | बहुश्रुता |
| ३४०४ | ,, | १ | तत्त | तत्तु |
| ३४०९ | २ | २० | दशना | दर्शना |
| ३४२८ | १ | ९ | कतूमै | कतुमै |
| ३४३२ | ,, | २६ | उत्कर्षप | उत्कर्षाप |
| ३४४४ | १ | ८ | पणापयी | पणींगयी |
| ,, | २ | २१ | पूण | पूर्णं |
| ३४४६ | ,, | ३२ | धानाथ | धानार्थ |
| ३४४८ | ,, | ८ | आक्ड्क्षा | आकाड्क्षा |
| ३४५० | ,, | ३४ | पति | प्रति |
| ३४५५ | १ | ४ | श्रुन | श्रुत |
| ३४५८ | २ | ६ | दशने | दर्शने |
| ३४६३ | १ | ७७ | प्रमण | प्रमाण |
| ३४६२ | २ | ९ | बोधापत्त | बोधापत्ते |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३४६४ | १ | ३० | पदायम्यो | पदार्थेभ्यो |
| ३४६७ | २ | ३२ | पूर्व लाम | पूर्वलाम |
| ३४७४ | १ | २१ | च्छिन | च्छिन्न |
| ३४८४ | ” | १९ | पश्युन् | पश्यन् |
| ३४८६ | २ | १७ | अग्नि | आग्नि |
| ३४८८ | १ | २९ | पश्युन् | पश्यन् |
| ३४८९ | ” | १४ | मवेत्त | मवेत्तु |
| ३४९४ | २ | ४ | चतुर्मा | चातुर्मा |
| ३५०९ | १ | ३० | प्रामाण्य | प्रामाण्य |
| ३५११ | ” | १६ | ओत्सर्गि | औत्सर्गि |
| ३५१६ | ” | १४ | कार्यो | कार्यो |
| ३५१८ | ” | १३ | पूर्वोत्ता | पूर्वोक्ता |
| ३५२३ | ” | ३० | सत्र स्ह्म | सत्रस्ह्म |
| ३५३१ | ” | १५ | पदाय | पदार्थे |
| ३५३७ | १ | ३१ | अत्रर्थी | अर्थेर्थी |
| ३५४९ | ” | ९ | यात | यत्र |
| ३५५० | १ | ९ | पार्थी | पार्थ. |
| ३५५५ | ” | २१ | माल | माधः |
| ३५५७ | ” | २८ | ऊचै | उच्चै |
| ३५७६ | ” | २५ | ाद्दौ | रात्दौ |
| ३५८१ | ” | ९ | चीकीर्पा | चिकीर्पा |
| ३५८४ | ” | ५ | निधिन | निविष्टै |
| ” | २ | ३१ | बृद्द | वृद्दं |
| ३५८५ | ” | २३ | मधुम | [illegible] |
| ३५८८ | १ | १ | काय | [illegible] |
| ३५८९ | २ | १४ | युक्त | [illegible] |
| ३५९२ | १ | १ | नचस | [illegible] |
| ” | २ | १७ | दशनात् | [illegible] |
| ३५९५ | ” | ७ | भत्या | [illegible] |
| ३५९६ | ” | ३१ | अथ | [illegible] |

## भ

• भक्ति. अन्याय्या मुख्ये सम्भवति । भा. १।८।२२।४३.

• भक्षः अस्ति चमसिनां ज्योतिष्टोमे । ३।५।७।१९. • भक्षः अस्ति मैत्रावरुणस्य अग्नीषोमीये पशौ । १०।७।६।१८–१९. मीको. पृ. ११७ 'अग्नीषोमीये पशौ मैत्रावरुणस्य०' इत्यत्र द्रष्टव्यम् । • भक्षः (इडायाः) पशुमेधीये अस्ति । आज्यभागौ स्विष्टकृत् भक्षश्च इति यावदुक्तं कर्तव्यम् । नात्र कुतश्चिदतिदेशः । नैवं कस्यचिद्विकृतिः । वि. १०।७।१०. • भक्षः (मतं) ज्योतिष्टोमे नित्यः । भा. ६।८।८।२८. • भक्षः द्विः ज्योतिष्टोमे ऐन्द्रवायवग्रहे, 'द्विरैन्द्रवायवस्य भक्षयति, द्विर्ह्येतस्य वषट्करोति' इति वचनात् । ३।५।५।१८. • भक्षः न कर्तृसंस्कारः, किन्तु द्रव्यसंस्कारोऽयमिति तत्र तत्र स्थापयिष्यामः । भा. ३।५।८।२६. • भक्षः नास्ति प्रतिप्रस्थातुः पशौ । १०।७।८।२१–२२. मीको. पृ. ११३ 'अग्नीषोमीये पशौ प्रतिप्रस्थातुः०' इत्यत्र द्रष्टव्यम् । • भक्षः प्रथमो वषट्कर्तुः । ३।५।११।३६–३९. • भक्षः ब्राह्मणानां राजन्यचमसे राजन्यसदृशपेये । ३।५।२०।५२–५३. • भक्ष वषट्कारनिमित्तकः यजमानस्य स्वय याज्यापाठे ऋतुयाजेषु, ज्योतिष्टोमे । ३।५।१८।४४–४६. • भक्षः सोमस्य एकपात्रे अनेकैः अनुज्ञाप्यैव । ३।५।१४।४०. • भक्षः सोमस्य एकपात्रे प्रथम होतुरेव । ३।५।१३।३६–३९. • भक्षः सोमयागे भक्षविधानात् सिध्यति 'अग्नौ जुहोति' इति विशेषवचनात् शेषः सिध्यति । 'आश्विनं भक्षयन्ति' 'द्विरैन्द्रवायवस्य भक्षयन्ति' 'सदसि भक्षयन्ति' इति वचनानि अपूर्वार्थं प्रतिपादयन्ति । वि. ३।५।६. • भक्ष. सोमतोपस्यास्ति ज्योतिष्टोमे । ३।५।९।१९–२१. • भक्षः हारियोजने ग्रावस्तुतोऽपि ज्योतिष्टोमे । ३।५।९।२७–३०. • चोदकेन भक्षपूर्वस्य शेषः प्रतिपाद्यते तस्य तत्कर्मकरे भक्षः । एवं हि तस्योपकारको भवतीति । भा. १०।७।९।२३. • भक्षाः उपयुक्तशेषाः । १२।१।१५।३१. • भक्षाः कर्तृसंस्कारार्थाः । कृष्णलानां भक्षाश्च चर्वणादिधर्मयन्ते । कृत्वाचिन्तेयम् । टुप्. १०।२।३।१३. • भक्षाः कृष्णलचरौ भक्षणे युगपत् परिहरणीयाः । १०।२।४।१८. • भक्षाः कृष्णलचरौ सर्वेषां ऋत्विक्पुरुषेभ्योऽपनीय भक्षणे एव देयाः । १०।२।५।१९–२०. मीको. पृ. १४८२ "कृष्णलचरौ सर्वे शेषभक्षाः०' इत्यत्र द्रष्टव्यम् । • भक्षाः पुरुषसंस्कारा इति याज्ञिकैः विवेकमगृहीत्वा उक्तम् । टुप्. ६।४।३।९. • भक्षाः पुरोडाशादौ चत्वारः १ इडाभक्षः, २ प्राशित्रभक्षः, ३ चतुर्धाकरणभक्षः, ४ शंयुवाकभक्षश्चेति । वि. १०।२।४. • भक्षाः प्राकृताः सर्वे अपि समन्त्रकाः इति पूर्वपक्षः । समन्त्रकत्वेन विहितेष्वेव समन्त्रकत्वं नेतरेषु इति सिद्धान्तः । संकर्ष. ३।२।९. • भक्षाः शेषस्य ज्योतिष्टोमेऽग्नीषोमीये पशौ मैत्रावरुणस्यापि, परन्तु एकमात्रात्मकम् । १०।७।१,७।१८–१९, २०–२१. • भक्षाः शेषस्य प्रतिपत्तिः । १०।२।९।२९–३३. • भक्षाः समाख्यया सगुणसंख्यानां उद्गातॄणामस्ति । भा. ३।५।८।२३–२६. 'अपसुब्रह्मण्याना' इति वार्तिकम् । • भक्षाः सर्वे पुरुषान्तरेभ्योऽपनीय भक्षणे परिहरणीयाः कृष्णलचरौ । १०।२।५।१९–२०. मीको. पृ. १४८२ 'कृष्णलचरौ सर्वे शेषभक्षाः०' इत्यत्र द्रष्टव्यम् । • इडाभक्षप्राशित्रादिभक्षाः कृष्णलचरौ कर्तव्याः । तत्र च निरवयवत्वतः (दन्तैः पीडामकुर्वन्तः) चुम्बुकाकारं भक्षयन्ति । १०।२।३।१४–१७. मीको. पृ. १४८० 'कृष्णलचरौ भक्षाणां न बाधः' इत्यत्र द्रष्टव्यम् । • भक्षस्य अनुज्ञापनं ज्योतिष्टोमे वैदिकेनैव मन्त्रेण, न लौकिकवाक्यादिना सोमस्य । भा. ३।५।१५।४१. • भक्षस्य सर्वत्र द्रव्यसंस्कारार्थता वक्ष्यति (१२।१।१७।३३–३४)। वा. ३।४।१७।५०.

■ भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् । १० । २।३।१४॥

प्रकृतौ इडाप्राशित्रचतुर्धाकरणशंयुवाकभागा भक्षा भवन्ति । तेषां भक्षाणां प्रीत्यर्थत्वात् प्रीतिजननार्थत्वेन सामर्थ्यजननार्थत्वात् शतकृष्णले चरौ च तदभावात् अकर्म स्यात् भक्षा न कर्तव्यास्तेनेति पूर्वपक्षः ।

स्याद्वा निर्धानदर्शनात् । १५ ॥

शतकृष्णले चरौ भक्षाणां कर्म स्यात् । भक्षाः कर्तव्याः । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । चोदकेन प्राप्ता भक्षाः । उपायविशेषश्चोक्तस्तेन , निर्धानदर्शनात् निर्धानस्य दर्शनात् । 'निरवधयन्तो भक्षयन्ति, चुरुचुरा- (चुरचुरा)- कारं भक्षयन्ति ' इक्षुकाण्डभक्षणे इव । इति । तस्मात् भक्षाः सन्ति इति सिद्धान्तः ।

यचनं वाऽऽज्यभक्षस्य प्रकृतौ स्यादभागित्वात् । १६ ॥

वाशब्दः सिद्धान्तपक्षं व्यावर्तयति । प्रकृतौ दर्शपूर्णमासयोः पुरोडाशस्येव भक्षभागित्वं नाज्यस्य । शतकृष्णले तु हिरण्यस्य अभागित्वात्, भक्षभागित्वाभावात् भक्षणीयत्वाभावात् अर्थलोपात् नातिदेशः । यत्तु वचनमुक्तं ' निरवधयन्तो भक्षयन्ति, चुरचुराकारं भक्षयन्ति ' इति तत् वचनं आज्यभक्षस्य स्यात् । हिरण्यशकलेषु यद् लिप्तमाज्यं तत् चुरचुराकारं भक्षयन्ति इति । तत्र भक्षणं चोदकप्राप्तं चुरचुराकारता विधीयते इति न वाक्यभेदः । तस्मात् कृष्णलानां न भक्षाः इति पूर्वः पक्षः ।

वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् । १७ ॥

शतकृष्णले चरौ ' चुरचुराकारं भक्षयन्ति ' इति येन भक्षा उक्ताः । तद् वचनं हिरण्यस्यैव भक्षणे स्यात्, न आज्यस्य, तस्य हिरण्यगुणभूतत्वात् । अत एव सत्याषाढ कल्पसूत्रे ' तानि हिरण्यकृष्णलानि काकिण्या मापेण वा संमितानि । यत् प्राणत्रह्मनात् तत् कृत्वा पवित्रान्तर्हिते आज्ये अवपति ' इत्यादि ( २२।२।१२।१–४, तैब्रा. २।३।२ ) । प्रदानवत् यथा अभक्षणीयानामपि कृष्णलानां प्रदानं विहितं तद्वत् भक्षणमपि । इति सिद्धान्तः । के.

—* भक्षणा न बाधः कृष्णलचरौ चुरचुराकारेण तत्संभवात् । १०।२।३।१४–१७, मीको. पृ. १४८० ' कृष्णलचरौ भक्षाणां न बाधः ' इत्यत्र द्रष्टव्यम् । * भक्षाणां सर्वेषां युगपदुपह्वानम् भक्षणां स्वस्वकाले भक्षणं शतकृष्णलचरौ । १०।२।६।२१. मीको. पृ. १४८१ ' कृष्णलचरौ युगपद्० ' इत्यत्र द्रष्टव्यम् । * भक्षे कृष्णलेषु चतुर्धाकरणं नास्ति, ब्रह्मतरभागाधीन ब्रह्मणं एवैकस्य तत्र भक्ष्यत्वात् । १०।२।७।२२. मीको. पृ. १४७१ ' कृष्णलचरौ चतुर्धाकरणस्य बाधः ' इत्यत्र द्रष्टव्यम् । * भक्षे वषट्कारोऽपि निमित्तम् । ३।५।१०। १९. * भक्षे होमाभिषवौ अपि निमित्तं ज्योतिष्टोमे । ३।५।११।३२. * भक्षेषु अनुज्ञापनं सोमे एकपात्रेषु एव । ३।५।१७।४२.

⊠ भक्षेषु समन्त्रकेष्वेव भक्षमन्त्रः ॥

' अग्निः प्रथमः ' ' भद्राय श्रेयः ' ' एतमु त्यम् ' इति विहिता भक्षकरणत्वेन मन्त्राः सौमिकेषु भक्षेषु ' भक्षेहि ' इति मन्त्रपरम्परासूक्तेषु सर्वेषु भक्षेषु भवेयुः । इति प्राप्ते, सोमस्यापूर्वत्वेन मन्त्रविधेराग्नीघ्रवर्जभक्षेषु अन्वयेऽपि प्रकृते चोदकेन समन्त्रकभक्षा ये प्राप्तास्तेषामेव मन्त्रोपस्थितत्वेन हिरण्यगर्भमन्त्रस्येवाश्वाघार इव तेष्वेव मन्त्राणां प्राप्तिः । संकर्ष ३।१।९.

* भक्षाधिकरणम् । ३।२।१।२५–२६, ' लिङ्गसमाख्यानाधिकरणम् ' इत्यत्र द्रष्टव्यम् ।

* भक्षानुवाकः विभज्य विनियोक्तव्य । ' भक्षेहि मा विश, दीर्घायुत्वाय शंतनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय, एहि वसो पुरोवसो प्रियो मे हृदोऽसि, अश्विनोस्त्वा बाहुभ्यां सध्यासम् ' ( तैस. ३।२।५ ) इति मन्त्रभागो ग्रहणे । ( वस्तुतस्तु ' भक्षेहि...हृदोऽसि ' इतिभागः आदित्यभक्षस्य प्रतीक्षणे विनियोक्तव्यः ' अश्विनो ... सध्यासम् ' इति ग्रहणे । वेदभाष्योदाहृतकल्पेन तथोक्तत्वात् ) । ' नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम् ' ( तैस. ३।२।५ ) इतिभागः अवेक्षणे । ' मन्द्राभिभूतिः केतुर्यज्ञानां वाग् जुषाणा सोमस्य तृप्यतु । मन्द्राभिभूतस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रछन्दसोऽमिहुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो

क्षयं कर्तुं यजमानो न समर्थः । तस्मात् ऋत्विजां भक्षार्थमेव हविःशेषं यजमानो विभजति । गुरुपुरुष-दानादौ त्यक्तस्य द्रव्यस्य परस्परं कलहनिवृत्त्यर्थं यथा यजमानकर्तृको विभागः तद्वत् ।

- व्यादेशाद्दानसंस्तुतिः । ५१ ॥

यदुक्तं पूर्वपक्षिणा दक्षिणात्वेन विभागस्य संस्तुतेः दानशब्दः परिक्रये इति तत्राह सिद्धान्ती । 'अयं वै भागः' इति विभज्य निर्देशः व्यादेशः । 'इद ब्रह्मणः इद होतुः' इत्यस्मात् व्यादेशात् हेतोः 'यथैवादः सौम्येऽध्वरे आदेशं ऋत्विग्भ्यो दक्षिणा नीयन्ते तादृगेव तत्' इति दानेन भक्षस्तुतिः ज्ञातव्या । न ऋत्विक्परिक्रयार्था । तस्मात् दानशब्दो भक्षार्थः इति सिद्धान्तः । के.

● भक्षनिमित्तानां वषट्कारादीनां संनिपाते समुच्चयः स्वीकार्यः । ३।५।१२।३३–३५.

● भक्षपेटिका ( ३।२।९–१८।२५–४४ ) । ज्योतिष्टोमे इन्द्रस्यापि देयमाहोस्वित्‌यागात्. । कथमन्यथा भक्षपेटिकाया अनैन्द्रेषु इन्द्रपीतशब्दस्य निवृत्तिपक्षस्य तत्पक्षस्य चोदियति. । सोम. ९।१।१४.

● भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणम् । १०।२।६।२१.

● भक्षमन्त्रः ऐन्द्रेषु अनैन्द्रेषु च अनूहेन प्रयोज्यः, न तु अनैन्द्राणा अमन्त्रकं भक्षणम्, नापि यथादेवत-मूहः । इन्द्रपीतपदं तत्रानिक्षेपणं ज्योतिष्टोमे । भा. ३।२। ११।२८–२९,३६,४४. ● भक्षमन्त्रः समन्त्रकेष्वेव भक्षेषु । मंकर्ष. ३।१।९. मीको. पृ. २१९८ 'भक्षेषु समन्त्रकेष्वेव भक्षमन्त्रः' इत्यत्र अधिकरणं द्रष्टव्यम् । ● भक्षमन्त्राः 'भक्षेहि मा विश दीर्घायुत्वाय' इत्यादयः । १०।५।२६।८८. ● भक्षमन्त्राः श्यामाक-व्रीहि-यवाग्रयणेषु 'अग्निः प्रथमः' 'सद्यान: श्रेष्ठ.' 'एतमु त्यम्' इति । संकर्ष. ३।२।९. ● भक्षमन्त्रस्य गायत्र्यान्यच्छन्दस्केऽपि विनियोगः । ३।२।१२।४१–४२. ● भक्षमन्त्रेषु विद्यमानानां छन्दोनाम्नां व्यतिक्रमः सवनत्रये कर्तव्यः । प्रातःसवने जगतीछन्दस इति पठनीयम्, माध्यंदिने गायत्रच्छन्दस इति पठनीयम् । तृतीयसवने त्रिष्टुप्छन्दसः इति वक्तव्यं व्यूढे द्वादशाहे । भा. १०।५।२६।८८. ● न च 'भक्षेहि' इति भक्षमन्त्रेषु तृप्तेः अनुनिष्पादितया अननुष्ठेयत्वेन तृप्ति-प्रकाशकभागस्य तत्र विभज्यविनियोगाभावेऽपि अवे-क्षणस्यानुष्ठेयत्वात् तत्प्रकाशकभागस्य अवेक्षणे विनियोगः इति तृतीयाध्यायोक्तिः विरुध्यते इति वाच्यम् । इन्द्रिय-संप्रयोगरूपावेक्षणस्य तृप्त्यादिवत् अनुनिष्पादित्वाभावेन अनुष्ठेयतया तत्प्रकाशकभागस्य तस्मिन् विभज्य विनि-योगः इत्येवंपरत्वात् । अद्वैत. ३।७।२७–२८.

● भक्षयपदकारौ यजमानस्यैव ऋतुग्रहयागेषु यज-मानस्य स्वयं याज्यापाठपक्षे ज्योतिष्टोमे । भा. ३।५। १८।४४–४६.

● भक्षव्यापाराः सोमे १ ग्रहणं २ अवेक्षणं ३ भक्षणं ४ जरणं इति चत्वारः । वि. ३।२।९.

● भक्षसमुच्चयः एकपात्रे । भा. ३।५।१२। ३३–३५.

● भक्षसिद्धये कृष्णलेष्वपि पुरोडाशादिवत् चत्वार उपहाराः । तेषां भक्षणे साहित्येनानुष्ठानम् । इडाकाले एव चत्वारोऽपि उपहाराः देयाः । वि. १०।२।४.

● भक्षणं अनैन्द्रेषु अमन्त्रकम् ( पूर्वपक्षचिन्ता ) । वि. ३।२।१७. ● भक्षणं कर्तव्यं शास्त्रकृत्यस्त्वन्तरे । भा. १०।२।३।१४–१७. ● भक्षणं नाम सर्वान्तरङ्गः कर्तृ-संस्कारः । वा. ३।४।१७।५० ● भक्षणं नियमादृष्टार्थम् । वि. ३।५।१२. ● भक्षणं ( शेषस्य ) पुरुषसंस्कारार्थम् । ( भक्षणक्रियाप्रयोजनं द्रव्यसंस्कारः, भक्षणे कर्तृनियम-प्रयोजनं तु कर्तृसंस्कारः इति विवेकः ) पुरुषाः संस्कृताः प्रचरिष्यन्तीति । भा. ३।४।३।५ ● भक्षणं यद्यपि कृष्णलेषु न सम्भवति तथापि कृष्णलशिरोभागस्य चुम्बना-कारेण भक्षणीयम् । वि. १०।२।२. ● भक्षणं शेषस्य ऋत्विग्भिरेव कार्यम् । ६।४।३।४–९. ● भक्षणेन स्वाहो जन्यते । वि. ३।४।२१. ● भक्षणस्य सोम-संस्कारत्वम् । वा. ३।५।१९।२२. ● भक्षणे अनुज्ञा-पनमेकपात्रिणामेव न्यूनाधिक्यपरिहारार्थम् । वि. ३।५।१७. ● भक्षणे चमसित्वं न कारणम्, अचम-सिनोऽपि प्रशस्तौ भक्षणसद्भावात् । ३।५।९,

० भक्षणे होमस्य, प्रश्नः ' उपहूतम ' इति मन्त्रेण, उत्तरं च ' उपहूतः ' इति मन्त्रेण कार्यम् । ३।५।१६, ● भक्षणेषु इडाभक्षार्थं प्राशित्रभक्षार्थं वा अवत्तस्य नादौ पुनर्नाशदेयम् , किन्तु तत्तद्भक्षणेषु पत्र । ६।४।२.

● भक्षणनिमित्तानि चत्वारि समाख्या, वाक्यम् , वषट्कारः, अभिषवसहितहोमश्च । ' यैत् होतु भक्षः ' इत्यत्र समाख्या । हारियोजने ' अथैतस्य हारियोजनस्य सर्वे एव लिप्सन्ते ' इति वाक्यम् । ' वषट्कर्तुः प्रथमभक्षः ' इति वषट्कारः । ' हविर्धाने ग्रावभिरभिषुत्य, आहवनीये हुत्वा.........सदसि भक्षयन्ति ' इति अभिषवहोमौ । वि. ३।५।९–१२, ● भक्षणनिमित्तयोः चमस-वषट्कारयोः उभः होऽपि प्राप्ता. । चमसाभिषवयोः उभयः अन्यवी प्राप्तः । तत्र विकल्पेन अन्यतरनिमित्तके भक्षणं इति पूर्वपक्षः । चमसित्व चमसित्वमात्रनिमित्तकमेव भक्षणं इति द्वितीयः पक्षः । समुच्चयः निमित्तं इति सिद्धान्तः । नियमाद्यर्थं भक्षणम्, तस्य अदृष्टं प्रयोजनं द्विविधम् । ३।५।१२.

● भक्षणनिमित्तता होमाभिषवयोः समुदितयोरेव न प्रत्येकम् , योऽभिषव होमं च करोति स भक्षयति । वि. ६।४।७.

● भक्षणमन्त्रः ' इन्द्रपीतस्य ' इतिपदयुक्त इति इन्द्रपानदोषभक्षणे एव मन्त्रः मैत्रावरुणादिदोषभक्षणं अमन्त्रकमेवेति एकः पक्षः । ' इन्द्रपीतस्य ' इतिपदस्थाने ' मित्रावरुणपीतस्य ' इत्यूहः कार्यः इति स्वरभक्षणमपि समन्त्रकं इति द्वितीयः पक्षः । इन्द्रपीतशब्दो यद्वृत्तिका स्तवनपरः तथा च ऊहमन्तरेण यथाश्रुतो मन्त्रः सर्वभक्षेषु ग्राह्य इति सिद्धान्तः । वि. ३।२।११. ● भक्षणमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगः । ३।२।९।२५–२६, भक्षणमन्त्रे अनुवषट्कारदेवताया अनुपपन्न ज्योतिष्टोमे । ३।२।१६।३८. ● भक्षणमन्त्रे मित्रावरुणादिभिः सह इन्द्रोऽपि उपलक्ष्यते ' इन्द्रमित्रावरुणपीतस्य ' इति, न तु इन्द्रपदस्योहमङ्ग्या ' मित्रावरुणपीतस्य ' इत्येवान्यान्यमुपार्थम् । वि. ३।२।१२.

( कुतूहलनिवेशात् । वस्तुतस्तु ऊहमङ्ग्येव ' इन्द्रपीतस्य ' इत्येव मन्त्रः पठनीयः । ) ।

● ' भक्षयामि, वाक् तर्पयति ' एषा भविष्यन्ती ( लृट् ) क्रियायामुपपदभूताया भवति । तत्र द्वयोः क्रिययोः अस्ति सम्बन्धः । भा. ३।२।१०।२७.

न्या. भक्षितेऽपि लशुने न व्याधिशान्तिरिति. न्यायः । यत्र कृतेऽपि वाञ्छिते कर्मणि नाभीष्टप्राप्तिस्तत्रास्य प्रवृत्तिः । माहस्री १६३. ● ' भक्षितेऽपि लशुने न शान्तो व्याधिः ' इति न्यायेन अनन्यसाध्यातिपरिहेहार्थेन भ्रमसृत्वे निषिद्धलशुनभक्षणम्, मद्यादौ मैवमहं वारणमाश्रयः अनुमितावपि च एव कारणं स्यात्, इति अन्वयव्यतिरेकानुमितेरेवास्य प्रतिषेधः । परिमल. ३।१।१ पृ. २९, अस्.

न्या. भक्ष्यनियमेनाऽभक्ष्यप्रतिषेधो गम्यते इति न्यायः । यथा ' पञ्च पञ्चनखा भक्ष्याः ' इत्युक्तेऽन्ये पञ्चनखेऽभक्ष्याः इति । साहस्री. ५९६.

● ' भगो वा विभजतु ' अयं मन्त्रः पुरोडाशविभागार्थः. दर्शादौ वैकल्पिकः । संकर्ष. ३।२।४.

न्या. भद्रमभद्रं वा कृतमात्मनि कल्प्यते इति न्यायः । साहस्री. ७४०.

● ' भद्रम् ' इति मन्त्रेण फल अध्वर्युयजमानौ भक्षयाति । वि. ३।८।१६. ● ' भद्रान्नः श्रेयः ' इति श्रीकामस्य मन्त्रः । संकर्ष. ३।१।९.

● भद्रत्वं दुरितशान्तिसामान्यम् । तु. पृ. १४७.

न्या. भर्तृन्यायः । यथा— श्रूयते हि लौकिकी गाथा वेदान्तग्रन्थेषु । भर्तृनामा मन्त्री कश्चिदासीत् नृपः । स च राज्ञा दूरदेशस्थशत्रुविरोधिदस्युजननिग्रहार्थं गतः । तत्र हत्वाऽपि उद्देशमर्यादास्थापनार्थं तत्र चिरं विलम्बिते तस्मिन् राजसमीपे तच्छत्रुभूता राजपुरुषा दस्युकर्तृकं भर्तृवधं निखिलनगरे घोषयित्वा राज्ञेऽपि न्यवेदयन्त । आगत्य ततः भर्तृप्रेषितसमाचारपत्राणि च मार्ग एव निलोपयामासुः । श्रुत्वा च भर्तृवधं राजा परिदेवनन्तर कृतम् । ततः किञ्चित्कालानन्तरं कृतकृत्यो भर्तुः स्वपुरमागच्छन् पथि राजकृत्यमिव तत्र श्रुत्वा वैराग्यमाश्रित्य उपशान्तम्,

संस्थुवास च वने। तच्छ्रुत्वा प्रसमपिशाचिकायाः तं हैकमत्येन राज्ञे मृतभर्तुः प्रासपिशाचयोनिर्भस्मावगुण्ठितदेहविकारस्वरूपो निर्जनवने विचरतीति विज्ञापयामासुः। ततः कदाचित् मदान्धो राजा मृगयानुगतो वने भस्मानुलिप्तशरीरमर्तुं दृष्ट्वा पिशाचता गतोऽयमिति मेने, तथा प्रहृतेऽपि। साहस्री. ३९४.

● भर्त्रा भृत्येन सह परिमत्यार्थे पणितव्यम्। भा. १०।३।१२।५१.

● भर्तृमित्रादिभिः 'नित्यनिषिद्धयोः इष्टानिष्टं फलं नास्ति' इति बहुपसिद्धान्तपरिग्रहेण मीमांसा लोकायतीकृता। श्लोवा. रत्नाकरः, १।१।१।१०.

● 'भवत्पूर्वं ब्राह्मणो भिक्षेत' इति सामान्यविधेरुपसंहारेण 'ब्राह्मणेषु चरेद् भैक्षम्' इत्यनेन व्यावर्तितस्य क्षत्रियादेरभ्यनुज्ञाविधिः 'चातुर्वर्ण्यं चरेद् भैक्षम्' इति। याज्ञ. पृ.१७.

● भवच्छब्दः (भवन् इति) भवतीत्यस्यार्थे वर्तमान. धात्वर्थविशिष्टकर्तृवाचित्वात् यौगिकः। मु. पृ. १४८.

● भवति इति वर्तमानप्रतीतिः। मणि. पृ. १०२,
● भवतेः प्रातिकस्य प्रकाशजनकत्वादिक्रिया अर्थः। पृ. १४१.

● 'भवत्यर्थस्य भ. कर्ता, (क.) करोतेः कर्म जायते' इति न्यायेन अष्टाकपालकर्तृकभवनाश्रितायाभावनाया अष्टाकपालस्य कर्मत्वेन अन्वयनैयत्यम्। मी. ११४।७।९.

● भवतिक्रियायाः कर्ता करोतेः कर्म सम्पद्यते। 'भवत्यर्थस्य कर्ता च करोतेः कर्म जायते'। या. २।१।१।१ पृ. ३७७.

● भविष्यकथनं अनादिनाऽपवृत्तगुरुत्वसाधर्म्याधर्मानुगतफलविपाकवैचित्र्यज्ञानद्वारेण वेदमूलम्। या. १।३।१।२.

● 'भविष्यता संयोगस्य तन्निमित्तत्वात्' (४।१।११।२६)। यत्र पुनर्यागो पुरोडाशार्थे कपाले तुषोपवपनमन्यत्रज्यते, नैतदुभयार्थमिति। तत्रोऽयं न्यायः-- 'भविष्यता संयोगस्य तन्निमित्तत्वात्' इति.। भा. १२।४।६।१३.

● भविष्यत्कालतायास्तु भूतकालस्य न्याय्या। टुप्. १०।२।२७।६३.

● भविष्यत्त्वं वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वम्। मणि. पृ. २८.

● भविष्यत्--प्राप्तिमतिबन्धकत्वमेव क्वचिद् बाधकत्वम्। यथा लिङ्गादीनां श्रुत्यादिभिर्निर्दिष्टं बाधकत्वम्। के.

● 'भविष्यति' 'भविता' इत्यादौ उत्पत्तिर्धात्वर्थः। आख्यातार्थः तदनुकूलव्यापारः। तेन वर्तमानकालोत्तरकालीनकालाधिकरणकोत्पत्त्यनुकूलव्यापारवान्, वर्तमानप्रागभावप्रतियोग्युत्पत्त्यनुकूलव्यापारवान्, वा घटः इति बोधः, उत्पत्त्याश्रय इति वा इति शिरोमणिः। मणि. पृ. २८.

● भविष्योत्तरादौ दोलकवाचारा निबद्धाः। के. पृ. १८९.

● भव्यं कर्म, भूत द्रव्यम्। भा. ६।१।१।१ पृ. १३४८, ● भव्यम्। भूतस्य च भव्यार्थता न्याय्या द्रव्यार्थत्वात्, न तु भव्यस्य भूतार्थता। ६।१।१।१ पृ. १३४८, ● भव्यस्य तु भूतार्थत्वे अदृष्टार्थता स्यात्। ११।१।२६।६६.

● भव्यार्थास्ते भूतार्थे समुच्चारिताः। भूतस्य भव्यार्थतायां दृष्टार्थता, भव्यार्थस्य प्रयोजनवतः उत्पत्तिरर्थवती, सा च भूतेन क्रियते इति दृष्टोऽर्थः। भव्यस्य पुनर्भूतार्थतायां न किञ्चित् दृश्यते, कल्प्यते चादृष्टम्। भा. २।१।१।४

● भस्माङ्गाराध्यारोपभावः शौर्ये चरौ। १०।१।१८।५९.

● भस्मसंयोगः दृष्टबाधर्मः। न च चित्रिण्यादीनामप्रकरणे समाम्नातानामपि कर्तव्यः अनर्थत्वात्। भा. ३।६।१२।३५.

● भस्मीभूतस्य देहस्य पुनरागमनं कुतः इति न्यायः। अयं न्याय, पुनर्जन्मनिगमनाभावविवक्षायां प्रवर्तते। साहस्री. ८८२.

* भाग एक एव, न द्वौ मैत्रावरुणस्य ज्योतिष्टोमे अग्नीषोमीये पशौ । १०।७।७।२०–२१. * यमुद्दिश्य संकल्पो भवति स तस्य भाग इति प्रसिद्धिरेषा । भा ३।३।१५।४४

* भागरूप परस्त्रीकरणात्मक अस्य यागस्य । भा ३।३।१५।४४

* भागित्वात् । उक्तस्तु न्यायो 'भागित्वात्' इति । (वैदिकी अपि भागिनी प्रवृत्ति, साऽपि हि अपूर्वस्येति कर्तव्यता)। भा ७।१।१२.७ * 'भागित्वात्' (७।३।१।२) भागवत्त्वात् योग्यत्वादित्यर्थं । सू ७।३।१।२

* भाग्यज्यानि । 'योऽग्नीन्नाधाय भाग्यज्यानिं पुनर्ज्यानिं वा जीयेत स पुनरादधीत'। भा १०।२। ५।३०

* 'भाग्यया श्रीकामाः पुनरादधीत' । भा २०।१।५।३०.

* भाण्डवाहृपणिक्न्याय । भाण्डवाहकदोषेण वणिजो यदि द्रव्यं नश्येत् तत् भाण्डवाहको वहेत् (इत्यक्षरार्थं)। य शिल्पी कश्चन कर्माणि प्रवर्तयति तडागखनने देवस्य गृहकरणे (वा) 'अहं ते समापयिता प्रवर्तस्व' इति । पश्चात्त्वमसौ तेन स्वामिन अय व्यवसायात्त सर्वं सवोढव्या भाण्डवाहृपणिक्न्यायेन । मेधातिथि ८।२१५ का

* भामतीन्याय । यथा एकेनैव नाम्ना (यथा एवैव) भामती स्त्री रूपयौवनादिसंपन्ना मम सुखाकरोति, दु खाकरोति च सपत्नी, मोहयति च नवान्तरा । तथा प्रकृतेऽपि । साहस्री १७५

* भामाशब्देन सत्यभामाया अभिधानम् । ■ पृ १९१

* 'भारो यो येन वोढव्य स प्रागभातो यथा । तथा कन्तस्य वोदेति वाक्यस्य कर्तृनिरूपणम् ॥' ('भारो यो येन वोढव्य स प्राग्भातोऽस्तीतो यश्च । तदा॰ ॥' इति वार्तिके पाठ । ३।३।१।१२ पृ ६५१)। यद्यपि लोके 'अयं वोढा अस्य को भार' इति वोढृतोऽपि भारनिरूपणमस्ति, तथापि लोकेऽपि अयमेतावत् पूर्वमूढवान्, इदानीमपि एतावत् वोढुं शक्नोति इत्येव वोढृत्वं निश्चित्य 'अयं वोढा, अस्य को भार' इति वोढृतो भारनिरूपणं वाच्यम् । एतावत् वोढुं शक्त इति निश्चयश्च वोढव्यस्य एतावत्त्वनिश्चयाधीन । एवं च लोके 'अयं वोढा, अयमस्य वोढुर्भार.' इतीदं निरूपणं विविच्यमानं एतावत् वोढुं यत् द्रव्यसामान्यमभ्यस्तम्, तस्य द्रव्यस्य 'अयं भार' इत्येव विशेषनिरूपणमात्ररूपं पर्यवसितम् इति लोकेऽपि नास्ति वोढृतो भारनिरूपणम् । सोम ६।१।१ पृ ४४४

* भारतं वर्षम् । धर्माधर्मसाधनप्रदेश जम्बूद्वीपस्य भारतवर्षम् । सु पृ १२८ ■ भारत व्यासेन प्रोक्तं पौरुषेयम् । वि १।१।८

* भारतादिवाक्ययोजना अर्थवादाधिकरणे वार्तिके मीको पृ ६४७ इत्यत्र द्रष्टव्या ।

* भारुण्डानि सामानि 'इम स्तोम' इत्यत्र गीतानि । वत्सर्गमयूख पृ १ (भारुण्डे)

* भार्यया पश्चात्यचिन इति गौभिल । वि १०।७।२० टिप्पणी

* भार्या । एकैव भार्या कर्मार्था अपत्यार्था च । तत्सत्त्व विद्याग्रहणोत्तरकालत्वा । 'अन्यतरापायेऽन्या कुर्वीत', 'सोमपो न द्वितीया जायामभ्युपयुवते' इति द्वितीयामपि जायां दर्शयति । भा ६।८।५।१७–१८

* सवर्णाया स्वभार्याया उत्पादित सवर्ण एव । असवर्णाया मूर्धावसिक्तादि । परभार्याया जीवत्पतिकाया कुण्ड, विधवाया गोलक । सु पृ १०

* भार्यात्वम् । परिणयन विना भार्यात्वाभावेऽपि न परिणयन प्रति भार्यात्वस्य सत्ता, किन्तु पतिमेव प्रति । सु पृ ९५३

* भार्याद्वयमपि एकस्य संभवति कारणान्तरे । मीको पृ २८२७ 'पत्नीद्वय एकस्य॰' इति त्रिदो द्रष्टव्यम् ।

* भार्यासंयुक्तभावान श्रूयते । भा, ६।८।२।२२

* भाव । के पुनर्भावशब्दा ? यजति ददाति जुहोति इत्येवमादय । भा २।१।१।१ पृ ३७४ । सिद्धान्तवादी भवतेर्णिजन्तात् 'एरच्' इत्यच्प्रत्यये कृते भावनावाचिन

भावशब्द व्युत्पाद्य उदाहरति 'यजति ददाति' इति। या * भावे न धात्वर्थ एव इत्युक्तम्। वा ३।४।४।१२ पृ. ९०३ * 'धात्वर्थे केवल शुद्धो भाव इत्यभिधीयते'। सु पृ. ५४७ * भावे कत्वर्थो विधिर्यथा, स्विष्टकृदयावदानागे आम्यविधि 'या वै का चिद् हेमतामन्वरित हस्या आवृश्चयते आग्नेयैता देवता परिसख्याय यजेत' इति। याल पृ २०, * भावे पुरुषार्थो विधिर्यथा 'सप्तावपूर्वं स्विचित यजेत' इति। पृ १०

* 'भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्' (श्लोवा निरालम्बने ११८) इत्यनेन न्यायेन भाव निरपेक्ष अभाव एवानुपपन्नः। सु पृ ५१०.

* भावाभावौ एतन वेदो समुच्चेनुमहतस्तौ। शा १।१।५ पृ ७८.

¶ भावार्थाः कर्मशब्दास्तेभ्य क्रिया प्रतीयेतैष ह्यर्थो विधीयते। २।१।२।१॥

यदेकस्मादपूर्वं तदा ऽयेह किं भावशब्देभ्य, उत द्रव्यगुणशब्देभ्य इति। अत्राय पूर्वपक्षिणोऽभिसन्धि। यद्यपि धात्वर्थनामार्थयोर्नियमेनापि एकधात् अनेका दृष्टकल्पनापरिहारो भवत्येव, तथापि एकदुर्चारितस्य श्येनादिवाक्यस्य कदा चिन्नामार्थप्राधान्येन धात्वर्थगुणभावनोपकत्वम्, कदा चित् धात्वर्थप्राधान्येन नामार्थगुणभावनोपकत्वम्। एतच्च वैरूप्यलक्षणवाक्यभेदप्रसङ्गात् न संभवति। तदुक्तम् 'प्रधान फलसम्बन्धि तत्सम्बन्ध्यङ्गमिष्यते। प्रधानाङ्गत्वमेकस्य न चैकत्रावकल्पते।' इति (भा पृ २७४)। तस्मात् नियमेन एकस्यैकफलसम्बन्धो वक्तव्य। तत्र सिद्धस्य करणत्वयोग्यत्वात् नामार्थस्य सिद्धत्वात् करणप्रचितृतीयाविभक्तियोगित्वाच्च धात्वर्थस्य साध्यत्वेन करणत्वायोग्यत्वात् करणवाचितृतीयाविभक्त्यभावाच्च नामार्थादेव फलम्। न च अन्य फलसाधनत्वादाश्रयसंबन्धविधाने फलस्य च विधाने च वाक्यभेद इति। यथा धात्वर्थस्य फलकरणत्वे सत्यर्थलक्षणया नामार्थविशिष्टस्य फलकरणत्वात् न वाक्यभेद इति। तथा नामार्थस्यापि सत्यर्थं करणतया धात्वर्थविशिष्टस्यैव फलकरणत्वात् कुतो वाक्यभेद इति। ननु भवतु धात्वर्थस्य आश्रयत्वम्, तथापि यथा नामार्थस्य धात्वर्थनिष्पादकत्वमेव दृष्टोपकारकत्वम्, न तथा नामार्थे धात्वर्थस्य दृष्टोपकारकत्वमस्तीति भावार्थपक्षधात्वर्थस्य यादृष्टकल्पनाया प्रतिपदपूर्वपक्षवत् अत्रापि अदृष्टकल्पनागौरवमेवेति। मैवम्। गोदोहनस्येव प्रणयनेनासमर्थस्यापि धात्वर्थेन कारकत्वसम्पादनरूपोपकारसम्भवात्। नियमादृष्ट ▮ द्रव्यविशेषनियमात् क्रिया तेऽपि समानम्। इत्येव प्राप्ते, अभिधीयते। भवेदेव यदि विधिश्रुति समानपदोपात्तस्य धात्वर्थस्य प्रथम फलभावनाया करणत्वं न प्रतिपादयेत्। तथाहि, 'यजेत' इत्यत्र विध्यवरुद्धभावनाविषयत्वेन याग प्रतीयते। भावनाविषयस्य च भावनाकरणत्वमेव। भावना च विध्यवरुद्धा पुरुषेप्सितमेव भाव्य गृह्णाति। कर्मभूतमपि धात्वर्थं नेप्सितकर्मत्वेन अनुमन्यते, किन्तु अनीप्सितकर्मत्वेनैव। पुरुषसमीहितफलोद्देशेनैव प्रवृत्त्या श्रुतिस्वर्गेवानीप्सितकर्मतया गृह्णाति, यदेतत्साधनभूतम्, ओदनोद्देशप्रवृत्तेव पाक तत्साधनत्वम्, भावना तदानन्तरं साध्ये भवतु स्वकारकत्वमेवेति। तेन यजेतेत्यत्र विधिश्रुतितो धात्वर्थस्यैव ▮ भावनाकरणत्वावगमात् तृतीयान्त्यापि नामार्थस्य धात्वर्थकरणत्वेनैवान्वय इति सिद्धम्। तदुक्तम् 'आख्यातवर्ती धात्वर्थः सिद्धरूपः प्रतीयते। तस्मिन् फलवतीष्टे तु नाम्नो द्रव्यार्थतेष्यते॥' इति (भा पृ ३८८)। नन्वेवं सति 'गोदोहनेन पशुकामस्य प्रणयेत्' 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्रापि समानन्यायेन धात्वर्थस्यैव फलकरणत्वम् गुणफलसम्बन्ध स्यादिति। नैवम्। विधिश्रुतिरेव धात्वर्थकरणत्वे प्रमाणमित्युक्तम्। विधिश्चात्र विधत्र। अत्र च फलकरणस्यैव धात्वर्थस्य प्रकरणप्राप्तस्यानूद्यमानत्वात् तस्य विधिव्यापारविषयत्वमिति गुणसक्रान्तो विधि प्राप्ताप्राप्तविवेकेन प्रकृत धात्वर्थमाश्रित्य तेन गुण एव फले सम्बन्धनीय इति। इह ▮ धात्वर्थस्यैव विधिविषयत्वादुक्तन्यायेन तस्यैव करणत्वमिति वैषम्यम्। ननु नामार्थस्य फलकरणत्वनिराकरणेन भावार्थस्य फलकरणत्वमिह साध्यम्। तच्च चातुर्थिकरणस्वर्गकामाधिकरणन्यायेन सिद्धम् (४।३।३,६।१।२)।

तथाहि, बादर्यधिकरणसूत्रं ' कर्माण्यपि जैमिनिः फलार्थत्वात् ' ( ३।१।३।४ ) इति । अनेन कर्मणामेव फलसाधनत्वमित्युक्तम् । तथा स्वर्गकामाधिकरणसूत्रं ' असाधकं तु तादर्थ्यात् ' ( ६।१।१।२ ) इति । अनेनापि अफलार्थत्वे सति कर्मणः साधकपुरुषशून्यत्वप्रसङ्गादिति फलसाधनत्वमेव प्रतिपाद्यते । न च नामार्थस्य फलकरणत्वनिराकरणार्थमेवेदमधिकरणमिति द्रष्टव्यम् । तथाप्यर्थसिद्धत्वात् । यदा प्रतिपदाधिकरणसिद्धान्ते एकस्य फलसाधनत्वमिति निरूपितम्, बादरिस्वर्गकामाधिकरणाभ्यां च धात्वर्थस्य फलकरणत्वमिति प्रतिपादितम्, तदा अर्थादेव नामार्थस्य फलकरणत्वनिराकरणात् तदर्थमिदमधिकरणमुपपद्यते इति । नैवम् । नहि बादर्यधिकरणे धात्वर्थस्य फलकरणत्वं प्रतिपाद्यते, किन्तु एतदधिकरणसिद्धेनैव धात्वर्थस्य फलकरणत्वेन दृष्टोपकारदर्शननिबन्धनद्रव्यगुणसंस्कारकर्मणां शेषत्वमिति बादरेर्मतं निरस्यते । स्वर्गकामाधिकरणे चैतदधिकरणसिद्धमेव कर्मणः फलसाधनत्वमाश्रित्य फलकामस्य कर्मस्वधिकारः प्रतिपाद्यते इति न किञ्चिदनुपपन्नम् । मत्र तु वार्तिकेनैव व्याख्यातम् । तदुक्तम् ' भावार्थाः कर्मशब्दा ये तेभ्योऽपूर्वक्रियागतिः । तं कुर्यायजिना स्वर्गमेष ह्यर्थो विधीयते ॥ ' इति ( वा. पृ. ३७५ ) । चौता.

## भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते । २।१।१।१॥

विधायकत्वसमानत्वात् एकस्मादेव पदात् अपूर्वं गम्यते । तत्र किं भावशब्देभ्यः उत द्रव्यगुणशब्देभ्य इति विचारे सिद्धान्तमाह । भावशब्दाः । भावः भावना । भवतेर्णिजन्तात् ' एरच् ' ( पा० ३।३।५६ ) इत्यच् प्रत्यये कृते भावशब्दो निष्पन्नः । भावस्य वाचकाः शब्दाः भावशब्दाः यजति ददाति जुहोतीत्येवमादयः । भावः अर्थः येषां ते भावार्थाः । ते च कर्मशब्दाः । प्रत्ययेन भावनाप्रतिपादनाः प्रकृत्या च कर्मवचनाः । कर्मवाचकाः शब्दाः कर्मशब्दाः । यागदानहोमाः कर्माणि । तेभ्यः भावार्थेभ्यः कर्मशब्देभ्यः क्रिया कार्यं अपूर्वं प्रतीयेत, न द्रव्यगुणशब्देभ्यः । हि यस्मात् एष भावार्थ एव फलभावनाकरणत्वेन विधीयते । तस्मात् यजेत इत्येवमादेः भावशब्दादेव एकस्मात् अपूर्वं प्रतीयते इति सिद्धान्तः ।

## सर्वेषां भावोऽर्थ इति चेत् । २ ॥

आख्यातशब्दा एव अपूर्ववाचका इति सिद्धान्ते उक्ते पूर्वपक्षी शङ्कते । सर्वेषां द्रव्यगुणवाचकानामपि नामशब्दानां भावः अर्थः स्यात् । नामपदार्थस्यापि सम्पन्नत्वात् भावनानुरञ्जननिमित्तं करणत्वाविशेषभावात् नामशब्दा अपि अपूर्वबोधकाः स्युः इति चेत् ।

## येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात् तेभ्यः पराऽऽकाङ्क्षाभूतत्वात् स्वे प्रयोगे । ३ ॥

नामशब्देभ्योऽपि अपूर्वबोधः इति पूर्वपक्षोक्तं नामशब्दलक्षणकथनपूर्वकं निरस्यति । कानि नामानि नाम ? उच्यते । उत्पत्तौ ' सोमेन यजेत ' इत्याद्युत्पत्तिवाक्ये येषां शब्दानां स्वे स्वीये प्रयोगे प्रयोगकाले उच्चारणकाले रूपोपलब्धिः रूपस्य साध्यार्थस्य उपलब्धिः ज्ञानं सम्भवति । यत् सकृदुत्पन्नं कालान्तरं तिष्ठति, न क्षिप्रमेव उत्पद्यमानं विनश्यति, तानि नामानि द्रव्यगुणशब्दाः । यतः एषामर्थो न क्षणिकः ततः तेभ्यः सैषा पराकाङ्क्षा परस्य प्रधानस्य आकाङ्क्षा न विद्यते इत्युत्तरमुत्तरत्रानुकृष्यते । किंवा परस्य आकाङ्क्षा आकाङ्क्षायाः अभावः । अथवा आकाङ्क्षा परा दूरे नास्तीत्यर्थः । पराकाङ्क्षा कुतो नास्ति तेषाम् ? स्वे प्रयोगे प्रयोगकाले भूतत्वात् विद्यमानत्वात् । तस्मात् नामशब्दाः नापूर्ववाचकाः । अपूर्वं हि साध्यं भवति न सिद्धम् । नामानि तु सिद्धार्थकानि न साध्यार्थकानि ।

## येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि तस्मात्तेभ्यः प्रतीयेताऽऽश्रितत्वात् प्रयोगस्य । ४ ॥

अत्र सूत्रे आख्यातलक्षणमुक्त्वा आख्यातशब्द एव अपूर्वबोधक इति सिद्धान्तमाह । तुशब्दः आख्यातपदस्य नामपदात् वैलक्षण्यं सूचयति । ' येषां शब्दानां उत्पत्तौ उच्चारणोत्पत्तौ स्वेऽर्थे प्रयोगो न विद्यते प्रयोगकाले येषामर्थो नोपलभ्यते इत्यर्थः ' इति भाष्यम् । ' येषां शब्दानां स्वे स्वकीये अर्थे उत्पत्तौ उच्चारणदशायां प्रयोगः

अर्थः न विद्यते, प्रयोगकाले अर्थो न विद्यते इति यावत्' इति कुतूहलम् ।

अत्र 'येषां तूत्पत्तौ स्वे प्रयोगे न विद्यते' इति पाठ प्रवरस्य अर्थं ब्रूमो वयम् । उत्पत्तौ 'सोमेन यजेत' इत्याद्युत्पत्तिवाक्ये 'येषां शब्दानां स्वे स्वीये प्रयोगे प्रयोगकाले उच्चारणकाले रूपोपलब्धिः इति पूर्वमूत्रादनुवर्तते रूपस्य वाच्यार्थस्य उपलब्धिः ज्ञानं न विद्यते'। यत् उच्चार्यमाणं विनश्यति तानि तदर्थवाचकानि पदानि आख्यातानि आख्यातशब्दवाच्यानि स्युः । इत्यादि सर्वत्रैव समानम् । तस्मात् तेभ्यः आख्यातशब्देभ्यः यजेत इत्येवमादिभ्यः क्रिया कार्यं अपूर्वं प्रतीयेत प्रतीतं स्यात् । तानि अपूर्वबोधकानि पदानि ।

आधिकरणात् प्रयोगस्य इति अपूर्वबोधकत्वे युक्त्यन्तरमुच्यते । प्रयोगस्य प्रयुज्यमानधात्वर्थस्य भावनया सह एकं पदं आभिधानात् । एकपदश्रुत्या धात्वर्थस्यैव भावनाकरणत्वात् तस्मादेव क्रिया अपूर्वं प्रतीयेत इत्यन्वयः ।

तस्मात् आख्यातपदमेव अपूर्वबोधकं न द्रव्यगुणपदं इति सिद्धान्तः । के

● भावार्थाः । भवन्ति केचित् कर्मशब्दाः, न भावार्थाः यथा दधनेन्द्रियकामस्य । केचिद् भावार्थाः, न कर्मशब्दाः यथा भरत भावो भूतिरिति । भा २।१।१।१.

५. भावार्थाधिकरणम् । आख्यातपदमेव अपूर्वबोधकम् ॥

भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते । २।१।१।१॥

भाष्यम्— यदा एकं (अपूर्वमेकस्मादेव पदात्) तदा संदेहः, किं भावशब्देभ्यः, उत द्रव्यगुणशब्देभ्यः इति । कः पुनर्भावः, के वा पुनः भावशब्दा इति । यजति, ददाति, जुहोति इत्येवमादयः । ननु यागदानहोमशब्दा एते न भावशब्दाः । नेत्युच्यते । यागादिशब्दा अपि भावशब्दाः । भावयन्ति हि ऐतमर्थम्, भावयेदिति च ।

तथा यजेत यथा किञ्चिद्भवतीति । तेनैते भावशब्दाः । द्रव्यगुणशब्देभ्यो द्रव्यगुणप्रत्ययो न भावनायाः । अतस्ते न भावशब्दा इति । किं तावत्प्राप्तम् ? अविशेषेणेति । तत उच्यते । 'भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत' यजेतेत्येवमादिभ्यः । कुतः ? भावार्थत्वादेव । ये आहुः किमपि भावयेदिति, ते स्वर्गकामपदसंबन्धात् स्वर्गं भावयेदिति ब्रूयुः । तस्माच्चेभ्यः क्रिया प्रतीयेत । फलस्य क्रिया करणं निष्पत्तिरिति । ते च यागदानहोमशब्दाः स्वर्गस्योत्पत्तिं वदन्ति । कुतः ? एष ह्यर्थो विधीयते । यथा यागादिना स्वर्गकामः येन भावयेत् स्वर्गम्, यागादिनेति । यस्य च शब्दस्यार्थेन फलं साध्यते, तेनापूर्वं कृत्वा साध्यत इति, ततोऽपूर्वं गम्यते । अतो यस्तस्य वाचकः शब्दस्ततोऽपूर्वं प्रतीयते इति । तेन भावशब्दा अपूर्वस्य चोदका इति ब्रूमः । न तु कश्चिच्छब्दः साक्षादपूर्वस्य वाचकोऽस्ति । भावार्थः किमपि भावयितव्यम्, स्वर्गकामस्य च तेनापि साध्यतेति । तयोर्नैरन्तर्यवदर्थान्तरस्य प्रयोगः । यजेतेत्येवमादय. साकाङ्क्षाः यजेत किं केन कथमिति, स्वर्गकाम इत्यनेन प्रयोजनेन निराकाङ्क्षाः । नैव द्रव्यगुणशब्दाः । तस्मात् भावार्थाः कर्मशब्दा अपूर्वं चोदयन्तीति ।

अथ कस्मादुभयं सूत्रेण भावार्थाः कर्मशब्दा इति । उच्यते । भवन्ति केचित् कर्मशब्दाः, न भावार्थाः यथा दध्नेन्द्रियकामस्य । केचिद् भावार्थाः, न कर्मशब्दाः यथा भवन भावो भूतिरिति । किं पुनरिहोदाहरणम् ? 'दध्नेन्द्रियकामस्य जुहुयात्' 'चित्रया यजेत पशुकामः' इति । किं दध्नेन्द्रियकामस्य उत जुहुयादिति । तथा चित्रया पशुकामः, उत पशुकामो यजेतेति विधीयते इत्येवमधिकरणे गुणविधिः नामधेयमिति विचारो भविष्यति । तथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति दर्श. काल पूर्णमास इति च । किं ताभ्यां स्वर्गकामः, उत स्वर्गकामो यजेतेति । दर्शपूर्णमासाभ्यामिति च, दध्नेनेति च, चित्रयेति च नैते भावशब्दाः । न चैषामर्थेन कश्चित् संबन्धोऽस्ति, विधिमतिरिच्य । तस्मान्न द्रव्यगुणशब्दा अपूर्वस्य विधायका इति ।

'या— 'कः पुनर्भावः के वा भावशब्दाः' इति। यावन्तः फलवत्सु वाक्येषु आख्यातशब्दा यजतिजुहोती-त्येवमादयस्तेषु प्रत्ययार्थसामान्यात् कर्तरि च लकारोत्पत्ते-र्यागादिविशिष्टकर्त्रभिधानम्, कथंचिद्वा विपर्ययात् कर्तृ-विशिष्टयागाद्यभिधानं मन्वानस्य प्रश्नः। सत्यामपि चैक-पर्यनुयोगेन उभयपर्यनुयोगसिद्धौ, योऽयं भवनमित्या-द्यात् इत्यादुदाहृतेन भावार्थता प्रतीति, तन्नूनं केऽप्य-लौकिका भावशब्दा अपि युज्यमानाः। सिद्धान्तवादी तु भवतेर्णिजन्तात् 'एरच्' (पा० ३।३।५६) इत्यच्प्रत्यये कृते भावनावाचिनं भावशब्दं व्युत्पाद्य, आख्यातस्य नान्यस्यार्थस्य कार्यत्वं कर्त्रभिधान-प्रतिषेधं चाभिप्रेत्योदाहृतवान्— यजतिर्ददातीति। पर: पुनर्भवतेर्णिजन्तादन्येन नैषोऽर्थोऽभिधीयते, न चाऽऽ-ख्यातप्रत्ययस्यायं व्यापारः, भावनार्थत्वात्। कामं तुल्यजातीयत्वेन धातवो युज्युः, तेऽपि तु यागादिवचन-त्वादसमर्था इति मत्वाऽऽह 'ननु यागदानहोमशब्दाः' इति। अतोच्यते 'यागदानाद्यनुस्यूतो भावनात्माऽ-र्थोऽवगम्यते। नित्यमाख्यातशब्देभ्यस्तस्माद्भावार्थ-तेष्यते॥' यावानेव हि आख्यातात् अर्थः शब्दात् गम्यते स सर्वः शब्दार्थः। सर्वत्र चाऽऽख्याते धात्वर्थश्च तदनु-रक्ता च भावना विज्ञायते। तस्माद्भावार्थत्वव्यपदेशः। तद्व्यतिरिक्तास्तु द्रव्यगुणशब्दा विज्ञायन्ते एवेति न पृष्टाः। तत्र द्रव्यादिशब्दानां निष्पन्नार्थाभिधायिनां करणार्थत्व-योग्यत्वात् प्राप्तोति फलगतिः। सर्वत्र हि फलं साध्य-त्वात् सिद्धरूपं साधनमपेक्षते न साध्यान्तरम्, नामा-र्थश्च सिद्धत्वात् तदपेक्षापूरणसमर्थो नाऽऽख्यातार्थः स्वय-मेव तावत् साध्यत्वात्। तस्मात् द्रव्यादिभिः फलम्। इति प्राप्ते, सूत्रेणोत्तर दीयते— 'भावार्थाः कर्मशब्दा ये तेभ्योऽपूर्वक्रियामतिः। तैः कुर्याद्यजिना स्वर्गमेव ह्यर्थो विधीयते॥' फलसंबन्धो हेतुरपूर्वप्रतिपत्ते। संब-न्धश्चाकाङ्क्षापूर्वकः। सा च भावशब्देभ्यः प्रवर्तन्ती दृश्यते, न द्रव्यगुणशब्देभ्यः। तस्मादाख्यातेभ्यः अपूर्वभावना गम्यते। तत्र च धात्वर्थस्य करणत्वप्रतिपत्तिः, प्रत्यासत्तेः। अतस्तेनैव फलकरणभूतेनान्यथाऽनुपपत्त्या अपूर्वं भाव्यते इत्यवधार्यते। फलं पुनर्भज्यादीन् पृथक्कृत्य केवलप्रत्यय-वाच्य एव भावनार्थो लभ्यते भावयेदिति। कुतः? 'अभि-दध्युः स्वशक्त्या हि विधिमात्रं लिङादयः। ण्यन्तस्य भवतेरर्थः केनांशेनाभिधीयते॥' न च धात्व-न्तरार्थं यच्छब्दाः प्रतिपादयन्ति, स्वार्थमात्रव्यापृतत्वात्। अतः शब्दरहितमेवेदमारोप्यते भावयेदिति। किञ्च 'शब्दान्तरस्य योऽप्यर्थः पर्यायैरभिधीयते। न स तेनैव सहितस्तस्मिन्नर्थे प्रयुज्यते॥' तद्यथा 'पिक-मानय' इत्युक्ते यो नामार्थं न प्रतिपद्यते, तस्मै कोकिल-शब्दमेव केवलं प्रयुङ्क्ते, न कोकिलः पिक इति। तथा अत्र यज्ञाख्यातस्य करोतिर्ण्यन्तो वा भवतिः पर्यायः, ततस्तदर्थकथने तन्मात्रमेव प्रयोक्तव्यम्, नाऽऽख्यात-मन्तरोऽपि। न हि तदानीं निलिष्य शब्दो केनांशेन क्रिया प्रत्याय्यते इति। अत्र तु भावयेत्कुर्यादिति वा पुनरपि लिङ् प्रयुज्यते एव। अथवा योऽनेन यजतेः परेणार्थः प्रतिपादितः, असौ भावयतेरपि परेण तेनैवेत्यविकल्पाप एव भावयति। तस्माद्वैदिक इति। अत्राभिधीयते। सर्वेनैव तावत् 'सिद्धकर्तृक्रियार्थाभिन्याख्यातप्रत्यये मतिः। सामानाधिकरण्येन करोत्यर्थोऽवगम्यते॥' इह केभ्यश्चिद्धातुभ्यः परा तिङ्विभक्तिरुच्चार्यमाणा कर्त्र-स्तत्प्रभमात्रमेव व्यापारं प्रतिपादयति यथा अस्तिभवति-विद्यतिभ्यः। अपरेभ्यस्तु सिद्धे कर्तर्यन्यात्मलाभविषय-व्यापारप्रतीतिः यथा यजति ददाति पचति गच्छतीति। द्रव्यमेव न विशिष्टशक्त्युपेतं प्रचलितात्मतत्त्वं विप्रकीर्ण-स्वभाव पूर्वापरीभूतं मध्यमावस्थाव. प्रत्युत परात्मलाभ-प्राप्तं व्यापारशब्दवाच्यं भवति। तत्र कदाचित् कर्तैव एवमात्मः प्रतीयते, कदाचित् सिद्धे कर्तरि अन्यः। तथा कर्तुरेवाऽवस्था भवति तदाऽसौ स्वयमेवान्यस्मा-दात्मलाभमपेक्षमाणः परनिष्पत्तौ अव्याप्रियमाणत्वात् करोतिशब्दवाच्यतां प्रतिपद्यते। यदा तु स्वात्मकोऽन्यत्र व्याप्रियते, तदा करोतीत्येवमपदिश्यते। तथा च किं करोति? पठति गच्छतीति सामान्यविशेषरूपेण सामाना-धिकरण्यप्रयोगो दृश्यते, न तु किं करोति? भवत्यस्ति चेति प्रयुज्यते। तस्मात्कर्तृव्यापाररचनानि करो-त्यर्थवन्ति आख्यातानि। तत्र च क्रियमाणेन केन चिदनन्य-मुचितत्वात्। कुतः? 'करोतिः क्रियमाणेन न कश्चित्

कर्मणा विना । भवत्यर्थस्य कर्ता च करोतेः कर्म जायते ॥' करोतेर्नित्यं सकर्मकत्वात् यावत् क्रियमाणं न लभ्यते, न तावदयं वर्यं वर्तत्स्यति । सर्वकारकाणां चावान्तर क्रियासु कर्तृत्वं प्रतिपाद्यमानानां प्रधानक्रियासु कर्मादिविभागो जायते । प्रतिक्रियं योग्यताभेदाद्वान्तरक्रियावैचित्र्यं भवति । तत्रान्वयव्यतिरेकाभ्यामिदमवगतम्, भवतिक्रियायाः कर्ता करोते कर्म संपद्यते इति । तथाहि— ' नित्यं न भवनं यस्य यस्य वा नित्यभूतता । न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥ ' यः एव हि भवनभवन. समन्वितभवनो वाऽन्येन प्रयुज्यते, स एव क्रियमाणत्वेनाऽभाष्यते नान्यः । तथाच न कश्चित् अप्रयुज्यमानानां वा कुर्वन्नुपलभ्यते । यद्यपि ' पादौ कुरु ' इत्यादिषु निष्पन्नानां कर्मत्वप्रयोगो दृश्यते तथापि अनिष्पन्नसंस्कारादिविषयतया पादादिशब्दप्रयोगाद्व्यभिचारः । सत्यपि च करोतेरनेकार्थत्वे सर्वत्र गन्धनावक्षेपणादौ किंचिदुत्पादनसामान्यमवगम्यते । अथवा यत्र अस्योत्पादनाभिधायित्वं तत्रैव विशिष्टव्यापारमात्राभिकरणं इत्यभिनि तत्रतत्योपादीयमानमेव कर्म भवतीत्युपपन्नम् । तेन भवतिक्रिया तात्पर्यतः । ततश्च 'करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः । भवितुस्तदपेक्ष्यात्र प्रयोज्यत्वं प्रपद्यते ॥ ' भवतिकरोत्योः शक्तिभेदात् णिजिपिचन्योरिव नियत प्रयोज्यप्रयोजक व्यापारवचनत्वम् । तत्र च कदाचिदभिधीयमानधर्मवत्त्वाऽऽश्रितप्रयोज्यव्यापारे वा (घटः करोतीत्यादौ द्वितीयाविहितया कर्मतया घटत्वा अभिहित प्रयोज्यस्य घटस्य, भवनाख्यो व्यापारो यस्य भावोऽभिन्नयं. । करोतिमात्रप्रयोगे कथं आख्येन इत्याशङ्क्याह—स्वयमेवेति । घटो भवतीत्यादौ प्रथमाभिहितकर्तृत्वकत्वाश्रितः प्रयोज्यव्यापारो यस्मिन् इत्यर्थः । यथा च प्रयोज्यप्रयोजकव्यापारयोरन्यतरविधानेषु शास्त्रीति भावोऽनेनेति न तस्मिन्नपि तदन्यव्यापारस्यानावश्यक इति भावः ) स्वतन्त्रमेवाश्रित प्रयोज्यव्यापारे वा केवलं प्रयोजकव्यापार एव विवक्ष्यते ' घटं करोति, ओदनं पचति ' इति । कदाचिदाश्रितप्रयोज्यव्यापारं प्रयोज्यव्यापारमात्र ' घटो भवति, सिद्धयति तण्डुलः ' इति । कदाचिदुभौ मिथो समुच्चित्य प्रयोगः, ' करोति कटं देवदत्तः स च भवति ' । कदाचित् उपसर्जनीभूतप्रयोजकव्यापारः प्रयोज्यव्यापारः ' क्रियते देवदत्तेन ' इति ' स्वयमेव ' इति वा प्रयोगे । कदाचित्पुनः समानपदैकदेशोपात्तोपसर्जनीभूतप्रयोज्यक्रियः प्रयोजकव्यापारो विवक्ष्यते, तदा च करोतिपदस्य साक्षादारम्भेन अप्राप्तेः अप्रयोगात् भूतिक्रियायोश्च केवलप्रयोज्य क्रियानिष्ठत्वाच्च साक्षात्प्रवर्तितृ शक्तिरस्तीति वाचकत्वेन द्योतकत्वेन वा णिच् अपरः प्रयुज्यते भावयति निक्लेदयतीति च । तथा चाऽऽह ' प्रयोज्यकर्तृकेष्वान्तर्व्यापारप्रतिपादकाः । ण्यन्ता एव प्रयुज्यन्ते तत्प्रयोजककर्मसु ॥' न च तेषामण्यन्तानामशक्तिरियन्येषामशक्तया भवितव्यम् । अन्यथा वा शक्तिः इत्येषामपि तदभिप्रायम् । कुतः ? ' शक्तयः सर्वभावानां नानुयोज्याः स्वभावतः । तेन नाना वदन्त्यर्थान् प्रकृतिप्रत्ययादयः ॥ ' एवं करोत्यर्थद्वारेण सर्वास्वपि तेषु भावयत्यर्थं सिद्धः । ' तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः । प्रयोजकक्रियामाहुर्भावनां भावनाविदः ॥ ' यत्तूक्तं न लिङादिव्यतिरिक्ताः लिङादयोऽर्थं वदन्तीति । तदयुक्तम् । कुतः ? ' अभिधाभावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥ ' यदा हि सर्वाख्यातानुवर्तिनी करोतिधातुवाच्या पुरुषव्यापाररूपा भावना अवगता भवति, तदा तद्विशेषाः सामान्याख्यातव्यतिरिक्तशब्दविशेषवाच्या विधिप्रतिषेधभूतभविष्यद्वर्तमानादयः प्रतीयन्ते । यथा च सर्वत्र सामान्यतः करोत्यर्थोऽवगम्यते ' किं करोति ? पचति ' ' किमकार्षीत् ? अपाक्षीत् ' ' किं करिष्यति ? पक्ष्यति ' ' किं कुर्यात् ? पचेत् ' ' किं न कुर्यात् ? न पचेत् ' इति । तत्रापारिमिताया भावनायां लिङादिशब्दानां यः पुरुषं प्रति प्रयोजकव्यापारः सा द्वितीया शब्दधर्मः अभिधात्मिका भावना विधिरित्युच्यते । विशेषतश्चायमर्थो वाक्याधिकरणे वर्णितः । यत्तु पर्यायस्थितिरिन्द्रन मन्ययापरित्यागादसिद्धिनम् । तत्रोच्यते ' केवलस्याप्रयोगित्वात् कर्मसंख्यादिसंभवात् । रूपाभिनाशमिद्धेश्च प्रत्ययोऽपि प्रयुज्यते ॥ ' यदि हि केवलः करोतिर्भावयतिर्वा प्रयोगार्हौ स्याताम्,

ततः कोऽपि शब्दाद्प्रयोगे पिकशब्दवत् प्रत्ययो न प्रयुज्येत, न तु केवलायाः प्रकृतेः प्रयोगः, अपभ्रंशत्वप्रसङ्गात्। तेन यस्मिन् कस्मिंश्चित् प्रत्यये प्रयोक्तव्ये यस्यैवार्थः कथ्यते स एवानुवादभूतः प्रकृत्यनुग्रहार्थं प्रयुज्यते, नान्योऽप्यधिकार्थान्वयापत्तिप्रसङ्गात्। ननु च, 'इक्श्तिपौ धातुनिर्देशे' विहितौ अतस्तदन्तौ करोतिभावयती प्रयुज्येयाताम्। नैतदस्ति। तथा सति शब्दपदार्थकत्वादेव साम्यमात्याख्यातार्थः कथ्येत। यत्तु कश्चिदर्थेऽपि धातुनिर्दिश्यमानं प्रयुङ्क्ते यजिः, पचतिः, इति च, तत् शब्दे अभिहिते लक्षणया अर्थप्रतीतिरित्यवगन्तव्यम्। न चेह किञ्चित्स्वरूपाश्रयणे प्रयोजनमस्ति, येनावाचकः प्रयुज्येत। तदाप्यदेव अनिष्टपर्यायेन, कृभ्वस्तयो धातुलिटा अभिधीयेते इति। तस्मादर्थपरत्वसिद्ध्यर्थमाख्यातप्रत्ययसहितावेव प्रयुज्येते। यदि च भावनैका प्रत्ययार्थः स्यात् करोतिभावयती वा प्रकृतिप्रत्ययार्थोपादानसमर्थौ भवेताम्, ततः केवलप्रयोगोऽप्याकाङ्क्षेत, न तु तदुभयमप्यस्तीति करोतिभावयतिभ्यां कथितेऽपि भावनार्थे कर्तृसंख्यादिप्रत्यायनार्थं पुनः प्रत्ययः उच्चार्यते। यत्तु तत्र भावनाभिधानाय स प्रत्ययोऽनूद्यते, अन्यथा हि भावनैवैका प्रत्ययार्थः, करोतिभावयती वा कर्तृसंख्याद्यानामपि अभिधायकाविति भ्रान्तिः स्यात्। नित्यं च पूर्वापरीभूता भावना आख्यातेनोच्यते। तत्र यदि प्रत्ययान्तरं प्रयुज्यते ततः करोतिभावयतिभ्यां द्रव्यवदुपसंहृतरूपोच्यमाना नैवाऽऽख्यातशब्दैः कथ्येत। तस्मादुभयत्र तदपि प्रयोक्तव्यमिति। किञ्च— 'भावना गम्यमाना च धातुप्रत्ययसंनिधौ। कस्य वाच्येति विस्पष्टं न कदाचित् प्रतीयते॥' यदि खेकान्तेन अस्याः प्रत्ययार्थत्वमवधार्येत, ततः करोतिभावयतिभ्यां प्रत्ययेनैकस्याशङ्का स्यात्, न तु तदस्ति, उभयसंनिधौ गम्यमानत्वात्। केवलप्रकृतिप्रत्ययप्रयोगाभावाद्धि न विवेको विज्ञायते। शक्यते हि वक्तुं धातुसहितेन प्रत्ययेनोच्यते इति, अथवा प्रत्ययानुगृहीतेन धातुना, अथवोभाभ्याम्। न च शक्तिकल्पनाया विशेषः, सर्वथा त्वर्थापत्तिसाम्यात्। न च विवेकज्ञानप्रयोजनमस्ति। स्यादेतत्, कृदन्ताद्धातोरप्रतीतेः किं व्यभिचारित्वेन नेति। तदयुक्तम्। अस्ति-



विधिविभक्तिपरेषु प्रत्ययेष्वप्यदर्शनात्। न वा कृदन्तेष्वत्यन्तं भावना नास्ति, किञ्चिदपकृष्यमाणरूपप्रतीतेः। कृत्येषु तावत् भोक्तव्यम्, यष्टव्यमिति किञ्चिन्न्यूना आख्यातादृश्यते। तथापि कर्मोत्पन्नेषु द्रव्यप्राधान्यात् 'ब्राह्मणो न हन्तव्यः' इति भावोत्पन्नेभ्यो न्यूनतरा। नहि तत्र प्रयोजकव्यापारप्राधान्यम्, एकत्र धात्वर्थप्राधान्यादपरत्र स्वव्यापारविशिष्टप्रयोज्यपरत्वात्। एतेन भावकर्मोत्पन्नलकारास्तिङोऽपि व्याख्याताः। तेष्वपि हि प्रयोजकव्यापारगुणत्वप्रतीतिरविशिष्टा। अतो न तिङन्ततुल्यकल्पत्वम्। तथा 'अव्ययकृतो भावे भवन्ति' इति स्मरणाविशेषेऽपि तुमन्तेष्वपीषन्न्यूनभावनाविज्ञानम्। 'अग्निहोत्रं जुहोति' 'दर्भतरुणकेनोपघातं जुहोति' 'अभिषुत्य हुत्वा भक्षयन्ति' 'पुरा वाचः प्रवदितोः' इति सर्वत्र श्रुत्यैव भावनान्तरापेक्षा भावना अवगम्यते। पक्तः पक्तारित्यपि निर्वृत्तरूपभावनोपसर्जनद्रव्यप्रतीतिः प्रत्यक्षा। एवं पाचकादिष्वपि द्रष्टव्यम्। तथा च सर्वत्र कारकापेक्षा दृश्यते। अन्यथा हि रुदितहसितसमासेष्विव इय न स्यात्। न च निर्व्यापाराण्येते व्यपदेश्या भवन्ति। न चास्ति स व्यापारो, यत्र किञ्चिन्नैव जन्यते। ततश्च सिद्धः करोतिभावयत्योरर्थः। शक्यते च सर्वत्र सामानाधिकरण्यमपि दर्शयितुं विनाऽपि पूर्वापरीभूतत्वेन। तद्यथा 'किं कर्तव्यम्? पक्तव्यम्' 'कथंकारं जुहोति? अग्निनामम्' 'किं कृत्वा जुहोति? अभिषुत्य' 'किं कृतवान्? पक्तवान्' 'किं कृतम्? पक्वम्' 'किंनियो देवदत्तः? पक्ता' 'कैव क्रिया? पाकः' इति। न च करोतिसामानाधिकरण्यातिरिक्तं आख्यातेष्वपि भावनाप्रमाणं विद्यते। तस्मात्कृतोऽपि भावनां न मुञ्चन्ति। तथा चाऽऽहुः 'करोतिरर्थेष्विव सर्वधातून्' इति। यत्तु अस्याः प्राधान्यम्, तत् शाब्दं विधाऽभिधेयं द्योत्यं वा अन्वयव्यतिरेकाभ्यामस्तु, न स्वरूपम्। नन्वेवमपि पचनेति धात्वर्थे निष्कृष्टे तेनैव भावनाऽप्युपात्तेति भावयेदिति पुनः प्रयोगो न प्राप्नोति। नैष दोषः। तथाहि, द्व्यर्थस्य धातोर्भेदेनार्थे कथ्यमाने पचनेनेति निर्देशस्य करणात्मना निष्पन्नम्। इतरत्तु भावनात्मकं सामान्यरूपः शब्दान्तरेण भावयेदित्यनेन कथ्यते। अथवा केचित्

इत्यस्य 'पाके स्पन्दते' इत्यर्थं केचित् व्याचक्षते। तथा 'यत्नार्थश्चात्रोऽवगम्यते। भावयेदिति चेदुक्ते कीदृशी पुनराख्यातात् भावनाऽवगम्यते इत्यपेक्षायाम्, तथा यतेत यथा किञ्चिद्भवति' इति प्रयत्नवाचिता आख्यातस्य भाष्यकृता विवृता। द्रव्येन्द्रियकामाधिकरणे च (४।३।११) 'जुहुयात् इति शब्दस्यैतत् सामर्थ्यम्, यत् होमविशिष्टं प्रयत्नमाह' इत्यभिधानात् (भा. पृ. ५४९) 'जुहुयात्' इत्यस्य 'होमे यतेत' इत्यर्थः सूचितो भवति। प्रयत्नस्य च इच्छायोनित्वात्, निष्पन्ने चेच्छाऽयोगात् भाव्यनिष्ठत्वावगतेः धात्वर्थनिष्पत्तिमात्रेण च फलस्यासिद्धेः तन्निष्पत्तिमात्रेण पर्यवसानायोगेन धात्वर्थकरणस्य प्रयत्नस्य फलसाधनताविधानात् प्रयत्नस्य भावनात्वं न कश्चिद्दोषः। प्रयत्नाभावे च वातरोगादिना देवदत्ते स्पन्दमाने 'नायं स्पन्दं करोति किन्तु वातादिवशात् अस्य स्पन्दो भवति' इति व्यवहारदर्शनात् प्रयत्न एव करोत्यर्थोऽवगम्यते। रथादावपि 'न रथः स्वयं गमनं करोति, किन्तु अश्वादिना अस्य गमनं क्रियते' इति व्यवहारदर्शनात् धात्वर्थस्पन्दातिरिक्तकरोत्यर्थभावनाप्रतीत्यभावः सिद्धः। आख्यातप्रयोगान्यथाऽनुपपत्त्या तु रथादौ भावनाकल्पने 'रथो भवति' इत्यत्रापि सर्वदा भावनाकल्पनाऽऽपत्तेः भूतादिकथनेऽपि भवत्यादिषु भेदानाश्रयणे 'धात्वर्थमात्रम्, कर्तृसङ्ख्यादयश्च आख्यातपदार्थत्वेनाभ्युपगम्यन्ते, न च भावनाव्यभिचारेण दोषः' इति वार्तिके (पृ. ३८२ पं. २-६) निरूप्यते। अनयाऽविकृतभेदविवक्षया रथादौ भावनाऽभ्युपगम पूर्वोत्तरावस्थापर्यालोचनया गौणीमात्रेणेति युक्तम्। अथवा सोऽपि प्रयत्नाभिप्रायेण व्याख्यातुं शक्यते। नित्यस्यात्मनः शरीरशरीरिणो-रभेदविवक्षया शरीरनिष्पत्तौ अनिष्पत्तिव्यपदेशोपपत्तेः। 'पञ्च धातून् स्वयं षष्ठ आदत्ते युगपत् प्रभुः' इत्यादिस्मृतिपर्यालोचनया चात्मनः शरीरोत्पादनप्रयत्नावगमात् सिद्ध्यमानशरीरावयवाधिष्ठानेन आत्मना सिद्ध्यमानान् शरीरावयवान् प्रति प्रयोजकस्य प्रयत्नात्मिका भावना न विरुध्यते। एवं च 'सिद्धकर्तृक्रियावाचिनि' (वा. पृ. ३७६ पं. २५) इत्यपि चैतदभिप्रायं व्याख्यातुं शक्यम्। यद्वा अर्थभावनाया चेतनमात्राश्रयत्वेऽपि शब्दभावनाया अचेतनाश्रयत्वायोगात् उभयसाधारण्यार्थं सिद्ध्यमानग्रहणम्। नित्यस्यापि शब्दस्याभिव्यक्तिः सिद्धिरभिप्रेता। भाव्यनिष्ठप्रयोजकव्यापारत्वलक्षणयोगाच्च शब्दव्यापारस्यापि अविरुद्धं भावनात्वम्। यथैव हि इच्छायोनित्वात् प्रयत्नस्य इष्यमाणभाव्यं विना आत्मलाभायोगात् भाव्यनिष्ठत्वम्, तथा लिङादिव्यापारस्यापि प्रेरणाख्यस्य प्रवृत्त्याख्यभाव्यकत्वेन तन्निष्ठता अवसीयते। न च (भाव्यनिष्ठत्वाभावः इत्यनेन अन्वयः) यथा स्पन्दमात्रमेव सर्वोपनिबन्धोपपत्तेः आकाङ्क्षातः प्रागेव आकाङ्क्षणीयस्याभावे स्वरूपलाभनिमित्ताकाङ्क्षाऽनुपपत्तेः अन्यथा च कदाचित् नैराकाङ्क्ष्यानुपपत्तिप्रसङ्गात् स्पन्दस्य भाव्याकाङ्क्षालक्षणं भाव्यनिष्ठत्वं नास्ति, तथा प्रेरणायाः भाव्यनिष्ठत्वाभावः ('नच' इति अन्वयः। कुतः?) पुरुषप्रवृत्तेः साध्यसाधनेतिकर्तव्यतापर्यालोचनासापेक्षत्वेन प्रेरणानन्तरमनुत्पत्तेः। अनेनैव न्यायेन सर्वशब्दगतस्य अभिधानलक्षणस्यापि व्यापारस्य अर्थप्रतिपत्त्याख्यभाव्यकल्पितस्य भावनात्वमनुसन्धेयम्। तस्या अनभिहिताया एव कार्योपयोगित्वात् 'लिङादियुक्तेषु वाक्येषु द्वे भावने प्रतीयेते' इत्यादौ भावनाद्वयोपन्यासाविरोधः। 'शब्दप्रयत्नयोरेव भावनात्वमिति भ्रमम्। अपनेतुं प्रसक्तानुप्रसक्तमेतदुदीरितम्॥ प्रयत्नव्यतिरिक्तार्थभावना तु न गम्यते। यत्नु-माख्यातवाच्येह प्रस्तुतेऽभिधास्यते॥' (सुधा. पृ. ५७६–५७९)। ये तु तदनुरञ्जनसमर्थाः कर्तृकर्मगता विशेषास्ते तस्य एव कारणेतिकर्तव्यताप्रयोजनविशेषाः। एष तर्हि धात्वर्थसामान्यं भावनेत्युदाहरणम्। सत्यं धात्वर्थसामान्यम्, न तु गोत्वादिरूपेण। कथम्? 'अन्यदेव हि यागादौ सामान्यं करणात्मकम्। अन्यच्च भावना नाम साध्यत्वेन व्यवस्थितम्॥' भावनाया हि स्वयमेव प्रतिपुरुषं सामान्यविशेषौ मततः। तथा तत्करणभूते यागादौ समवेतं भावनाकरणतापेक्षितं धात्वर्थसामान्यं नाम यत् सर्वशब्दैरभिधीयते। विशेषणभावाच्च यागादयो भावनाविशेषा इत्युच्यन्ते, न तद्वत्त्वेन। शास्त्रप्रदेशे तु क्रियाकर्मशब्दौ कदाचि-

भावनाऽव्याप्तिः प्राप्नोति । तथाहि 'येनेप्सिततमे-
र्भावैः क्रियेत्यंशोऽवरुध्यते । तद्योगी तेन
धात्वर्थो न कश्चित् स्यादकर्मकः ॥' यदि वा
सर्वधातूनां सकर्मकत्वापत्तिः अथवा अकर्मकेभ्यो भावनया
न भवितव्यम् । नैष दोषः । कुतः ? 'अन्यदेव हि
धात्वर्थप्राप्यं कर्म सकर्मके । अन्यदेव च सर्वत्र
प्रत्ययार्थनिबन्धनम् ॥' 'ओदनं पचति, ग्रामं
गच्छति' इति धात्वर्थाभिव्याप्यमेकं कर्म, अपरं पुन-
र्भावनाकर्म । तत्र कदाचिद्धात्वर्थकर्मैव भावनाकर्मत्वमपि
प्रतिपद्यते, पाकेनौदनं भावयतीति । कदाचित्पुनः स्वकर्म-
विशिष्टधात्वर्थयुक्ता भावना कर्मान्तरेण युज्यते, ग्राम-
गमनेन स्वार्थं भावयेदिति, ओदनपाकेन चेति । तच्चे-
तत्कारकार्थान् परत्वात्तदवाप्यमानत्वेन गम्यमानं धात्वर्था-
न्तरतिरोहितं भावनाकर्मतया सर्वेणावधार्यते । तच्च प्रायेणैव
कामपदेनैव सम्बन्धमापद्यते, 'सुखकामः आसीत, स्वर्गकामः शयीत' इति । तत्रापि आसिशेत्योरकर्मकत्वे,
यः प्रयत्नेन करोत्यर्थोऽभिहितस्तत्कर्मत्वेन च स्वर्गादी-
न्यवधार्यन्ते । तेन करोतेः सर्वदा सकर्मकत्वात्, अकर्म-
काणामपि च तत्सामानाधिकरण्यदर्शनात् 'किं
करोति ? आस्ते' 'किं करोति ? शेते' इति सिद्धेऽप्या-
दिष्वपि सकर्मिका भावना । 'यत्रापि तु यत् कर्म
पृथक्त्वादेव नेष्यते । तदुक्तत्वेन पुत्रादेः कर्मत्वं
भावनाश्रितम् ॥' तस्मात् सकर्मकाकर्मकयोरविशेषात्
भावनेन भावयेदित्यपि प्रयोगसिद्धिः । कर्हि सकर्मका-
कर्मकयोः भेदः ? उच्यते, 'साक्षादव्यभिचारेण
धात्वर्थो यत्र कर्मभाक् । सकर्मकः स धातुः स्यात्
पारम्पर्ये त्वकर्मकः ॥' आसनशयनादौ हि न
नियमेनाऽऽनन्तर्येण वा इदं तदिति वा कर्म निरूप्यते,
तेनाकर्मका अभिधीयन्ते । पचिगम्यादीनां तु विक्लित्ति-
उत्तरसंयोगलक्षणसाक्षात्कर्मनियमादव्यभिचाराच्च सकर्मकत्वम्,
न तु भावनाविशेषणे कश्चिद्विशेषः । सेयं भावना
अंशत्रयपरिपूर्णा सती सर्वेषामाख्यातानामनुगृहीतानां
करणत्वानुपपत्तेः 'कथं भावयेत्' इतीतिकर्तव्यता-
मपेक्षते । सा च प्रयाजादीनामनुग्राहकदर्शनात्कस्य-
चिदप्यन्यस्याऽऽनर्थक्यमिति यथार्थनिर्णयं वक्ष्यमाणया यथा-
कथञ्चिदुपस्थाप्यमाना शास्त्रानुसारेण मुख्यानुपदेशेन
चोदनासामान्यातिदेशेन वा अत्यन्तादृष्टोपकारद्वारेण
अन्यथानुपपत्त्या कल्प्यते । ततः परिपूर्णत्वादनुष्ठातुं
योग्येति विधीयते । तद्विधानाच्चार्थपरत्वात् यागादिविधान-
मित्युपपन्नं भावार्थसूत्रम् ।

'भान्ति केचित् कर्मशब्दाः' यागो यजनं इज्या
इत्युदाहर्तव्ये तत्सामानाधिकरण्यप्रसिद्धद्रव्येनैव त्रितयोदाहरणं
यागादिवर्तनीयोत्पत्तिवाक्यगतानि कर्मशब्दत्वेन पार-
तन्त्र्यात् सुज्ञानम् । स्वतन्त्राणां कस्यचिदपि भावार्थत्वा-
च्छक्याऽसम्भवात् । यागादयो हि स्वातन्त्र्येणापि कदा-
चिदनुमानात् भावार्थाधिकरणविषयाः स्युरिति । 'के-
चिद्भावार्था न कर्मशब्दाः' यथा भावयेत्कुर्यादिति
चोदाहरणम् । भूत्वादयस्तु प्रतीत्यव्यापारवचनत्वेन
यथावर्णितभावार्था इत्यनुदाहरणम् । तत्र यथा कथञ्चित्
णिजन्तरूपतया भावशब्द एको भवेत्, नेतरौ ।
तावपि तु प्रयोगप्रचारादेव कथञ्चित् भावार्था-
वित्युदाहृतौ । अथवा द्वितीयसूत्रार्थव्याख्यानेन भावना-
प्रयोजनत्वमनयोर्वाचिकत्वे नास्तीति विनाऽपि तत्त्वार्थाभि-
धानाद्भवन्ति भावार्थाः । कथं पुनरमी न कर्मशब्दाः
यतः धातुमात्रं कर्मशब्दत्वेनोक्तम्, निर्विशेषस्य सामान्य-
स्यानुष्ठातुमशक्यत्वात् अकर्मशब्दत्वम् । अतो विशेष-
वाचिनामेव धातूनां कर्मशब्दत्वग्रहणादचोद्यमेतत् । यदि
हि श्येनचित्रादयः पौर्णमास्यादयश्च फलैः सम्भवेरन् ततो
यागकरणत्वाभावात् तत्सामानाधिकरण्यनिमित्तनामधेयता-
नुपपत्तेः प्रसिद्धवदविनिर्गुणविधिरेव स्यात्, अतः
'स्थिते एतस्मिन्नधिकरणे' इत्याह । कस्मात्पुनरिदं
तेनैव न नीतम् ? प्रमाणलक्षणेनासम्बन्धात् । अथ नाम
शेषत्वं कस्मादत्र नाऽभिधीयते ? भेदलक्षणेनासम्बन्धात् ।
तस्मात्सामान्यासम्भवेऽपि विशेषोपदेशात् पौर्वापर्यसिद्धिः । 'न
चैषामर्थेन' इति कल्पनाभिप्रायम् । 'त्रिविभक्तित्वात्'
इति । सम्बन्धनिमित्तत्वात्त्रिविभक्तिविगमात् अथवा
लिङ्गपदार्थाभिधायित्वमुक्तिविभक्तिविशेषयोर्यो त्रिविभक्ति-
त्वम् । तस्माच्च इङ्गादिकल्पना, कल्पनान्न इति । आह
च 'साध्यसाधनसंबन्धः सर्वदा भावनाऽऽश्रयः ।
तेन तस्य न सिद्धिः स्याद्भावनाप्रत्ययादृते ॥'

**सर्वेषां भावोऽर्थ इति चेत् । २ ॥**

भाष्यम्— एवं चेत् भवान् पश्यति, अभावशब्दत्वात् द्रव्यगुणशब्दा अपूर्वस्य विधायका इति सर्वेषां भावोऽर्थः । स्वर्गकामो दर्शपूर्णमासाभ्यामित्येतयोः सम्बन्धं 'यजेत' इति वक्ष्यति, 'श्येनेनाभिचरन्' इत्येतयोश्च । तथा 'चित्रया पशुकामः' इति । तस्मादेतेऽपि साकाङ्क्षत्वात् भाववचनाः । सर्वेषु भाववचनेषु नास्ति विनिगमनाया हेतुः, कर्मशब्दा एवापूर्वस्य विधायकाः, न द्रव्यगुणशब्दा इति ।

वा— 'न तावत्प्रत्ययस्यैषामपूर्वप्रतिपादनम् । न च धातोः स्वरूपात् स्वार्थान्नो वा परतः समम् ॥' यदि हि भावाभिधायिनः प्रत्ययस्यैवापूर्वप्रतिपादकत्व मिष्यते धातोर्वा प्रत्ययनिरपेक्षस्य, ततो नामपक्षो दुर्बलः स्यात्, इह तु यथैव धातोः प्रत्ययसंबन्धानुगृहीतस्य भावनानुप्रवेशनिमित्तं फलसाधित्वं भवति, एवं नामपदस्यापीत्यविशेषः ।

**येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात् स्वे प्रयोगे । ३ ॥**

भाष्यम्— येषां शब्दानां उच्चारणोत्पत्तौ स्वेऽर्थे प्रयुज्यमानानां रूपमुपलभ्यते, यत् सकृदुपलब्धं कालान्तरे तिष्ठति, न क्रियेव उत्पन्नमात्र विनश्यतीत्यर्थः । तानि नामानि । ते द्रव्यगुणशब्दाः । ईदृशो द्रव्यगुणशब्दानामर्थः । ते द्रव्यगुणशब्दा इति वक्तव्ये, तानि नामानीति सूत्रितम् । अतो नामानीत्येषां पर्यायशब्दः । कथं गम्यते ? यत एषां विभक्तयो नामिक्य उच्यन्ते । कतमास्ताः ? शुक्लः शुक्लौ शुक्लाः, शुक्लं शुक्ले शुक्लानि इत्येवमादयः । तस्मात् सम्यक् सूत्रितम् । यत एषां न क्रियतेऽर्थः, ततस्तेभ्यः पराकाङ्क्षा प्रधानाकाङ्क्षा न विद्यते, इति नैषामुत्पत्तिः कल्प्या, भूतत्वात् स्वे प्रयोगे स्वप्रयोगकाले विद्यमानत्वादित्यर्थः ।

वा— यदुक्तं यदेकस्मादपूर्वं तदेवास्मदर्थं भविष्यतीति तद्वदतां तावत् वस्तुधर्मेण विरोधं दर्शयति । कथम् ? 'बहुदृष्टप्रसङ्गाद्धि यत्नो नेष्टः पदेपदे । नाम्नः फलेन संबन्धे परिहारो न तस्य च ॥' एकस्मादृष्टे कल्पिते यदीतरद् दृष्टार्थत्वेन तादर्थ्यं भजते, ततो लाघवं लभ्यते । अस्य तु तादर्थ्यसिद्ध्यै ततोऽपि पुनरदृष्टं कल्प्यते एव, ततो वरं फलेनैव सर्वाणि संबद्धानि । न च शब्दधर्मैरप्यत्राश्रयणम्, नाम्नश्च फलसम्बन्धे अवश्यं तादर्थ्यस्यानुग्रहार्थोऽभ्युपगन्तव्यः । [illegible] च स्वयं निष्पन्नसिद्धरूपस्य नामार्थस्य न शक्नोति दृष्टेनोपकर्तुम् । नहि नामार्थस्तमपेक्षते, शब्दप्रयोगवेलायामेव निष्पन्नतया गम्यमानत्वात् अपेक्षणीयस्य वा सिद्धत्वेनायोग्यत्वात् प्रयुज्यतेऽस्मिन्निति चाभिधेये एष प्रयोगः । तदाकारेण हि निष्पन्नस्योपलब्धिः अनुत्पन्नस्य क्रियारूपस्य सत्त्वे नित्यसिद्धत्वदर्शनं निष्पन्नस्यापि क्षणिकत्वेन पुनः पुनर्निष्पत्त्यपेक्षोपपत्तेः । तेभ्यः पराकाङ्क्षा अन्याकाङ्क्षा, निष्पन्नत्वेन वा प्रधानाकाङ्क्षा न विद्यते इत्यभिप्रायः । अथवा तेभ्यः परा दूरे, आकाङ्क्षेत्यर्थः । कुतः ? भूतत्वादेवेति । स्वरूपकथनार्थमुपन्यस्तं निष्पन्नत्वादेवेति । पुनरन्ते तदेव हेतुत्वेनोद्दिष्टं सूत्रकारेण ।

**येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि, तस्मात्तेभ्यः प्रतीयेताऽऽश्रितत्वात् प्रयोगस्य । ४ ॥**

भाष्यम्— येषां तु शब्दानामुच्चारणोत्पत्तौ स्वेऽर्थे प्रयोगो न विद्यते । प्रयोगकाले येषामर्थो नोपलभ्यते इत्यर्थः । तान्याख्यातानीति भावशब्दान् पर्यायशब्देनोपदिशति । कथं पर्यायशब्दता भावशब्दानाम् ? यत एषां विभक्तय आख्यातिक्य इत्युच्यन्ते । कतमास्ताः ? पचति पचतः पचन्ति इत्येवमादयः । तस्मात् तेभ्योऽपूर्वं प्रतीयेत । भव्यार्थास्ते भूतार्थे समुच्चारिताः । भूतस्य भव्यार्थतया दृष्टार्थता, भव्यार्थस्य प्रयोजनवत्त्वं उत्पत्तिरर्थवती । सा च भूतेन क्रियते इति दृष्टोऽर्थः । भव्यस्य पुनर्भूतार्थतया न किञ्चिद् दृश्यते, कल्प्यते चादृष्टम् । तस्मान्न यागो द्रव्यार्थः । किंच आश्रितत्वात् प्रयोगस्य । एतेषां प्रयोगः पुरुषेण आश्रितो भवति, पुरुषप्रयत्नो भावना उच्यते । पुरुषं हि वदन्ति आख्यातानीति । तेन 'स्वर्गकामो यजेत' इति पुरुषोऽपि प्रतीयते, यागोऽपि, सम्बन्धोऽपि । 'स्वर्गकामो द्रव्येण' इति द्रव्यं प्रतीयते पुरुषश्च, न [illegible] संबन्धः ।

ननु एतदुक्तं भवति, अग्निनश्च द्रव्यस्य च सम्बन्धं यजेतेति वक्ष्यति, द्रव्येण भावयेदिति, अतो द्रव्येणार्थस्य भावना गम्येत, आकाङ्क्षा चेति । सत्यं गम्यते । द्रव्येण भावयेदिति तु वाक्येन, यागेन भावयेदिति तु श्रुत्या । यदा तु, यागेन भावयेदिति यागसम्बन्धो विधीयते, न तदा द्रव्येण भावयेदिति द्रव्यसम्बन्धः । न च द्रव्यसंबन्धे विधीयमाने यजेतेत्यनेन सम्बन्धः । अनूद्यमाने तु सम्भवति । न च यौगपद्येन विध्यनुवादौ संभवतः । तस्मात् श्रुतिवाक्ययोर्विरोधः । विरोधे च श्रुतिर्बलीयसी । तेनार्थिनः ■ द्रव्यसम्बन्धः । तत्र द्रव्यमवति स्वर्गकामसम्बन्धे स्वर्गार्थं भविष्यतीत्यनुपपन्नम् । एष विनिगमनायां हेतुः, येन भावशब्दा एवापूर्वस्य चोदकाः, न द्रव्यगुणशब्दा इति । यदा यागेन कुर्यादिति, तदा यागवचनमेव भवति दर्शपूर्णमासाभ्यामिति लक्षणया, दर्शे च पूर्णमासे च यागो विहित इति ।

वा-- 'आख्यातपदो धात्वर्थः साध्यरूपः प्रतीयते । तस्मिन् फलवतीष्टे तु नाम्नो द्रव्यार्थतेष्यते ॥' धात्वर्थस्तावत् प्रकृत्यैव साध्यात्मको विशेषतस्तु आख्यातवाचिना धातुना उच्यमानः । स यदि फलसाधनत्वेन चोद्यते, ततोऽसिद्धरूपत्वात्तस्य साधनाकाङ्क्षायां तस्या नामपदं गुणविधित्वेन नामधेयत्वेन वोभयथाऽपि द्रव्यैव तादर्थ्यं लभते । ननु नामधेयपदे नामपदमपि साध्यार्थं भविष्यतीति धातुतुल्यं स्यात् । न, तस्य फलसम्बन्धे गुणविधित्वेन सिद्धार्थरूपम् । अपि च '*साध्यात्मकोऽपि धात्वर्थो यदा नाम्नाऽभिधीयते । तदा द्रव्यवदेवासौ निष्पन्नात्मा प्रतीयते ॥*' यद्यपि वस्तुस्वरूपेण धात्वर्थः साध्यः तथापि नामपदेन उच्यमानो लिङ्गसङ्ख्यायोगित्वात् सिद्धरूपोऽभिधीयते । अभिधानकृता चाऽऽकाङ्क्षोत्पत्तिर्न वस्तुकृता । तस्मात्तुल्या धातोरेवाऽऽकाङ्क्षा, न नाम्न इति । 'क्रियाऽऽभिनत्वात्प्रयोगस्य' इति । अधुना शब्दप्रत्ययाधिकृतो विशेषोऽभिधीयते । पुरुषव्यापारात्मिकायां भावनायां धात्वर्थोपश्लेषोऽपि पुरुषेण आश्रितः तदतिक्रमहेतुभावाच्च न नामपदग्रहणम् । तस्मादस्ति विशेषः ।

शा-- यदा एकं ( अपूर्वं ) तदा सन्देहः किं भावशब्देभ्यः, उत द्रव्यगुणशब्देभ्य इति । तदर्थं च किं भावार्थाः फलेन संबध्यन्ते, किंवा द्रव्यगुणशब्दार्था इति । ...अत्र अनध्यवसायमेव केचित् ( प्राभाकराः ) पूर्वपक्षमाहुः । तदयुक्तम् । तथा हि अप्रामाण्यमेव स्यात्, नत्वायुक्तम् । तथा सति प्रमाणलक्षणे एवायं विचारः स्यात् न त्विह, सिद्धत्वात् प्रामाण्यस्य । ननु पक्षद्वयेऽपि अनुष्ठानस्य एकरूपत्वेन अध्यवसितत्वात् नाप्रामाण्यम् । मूर्खप्रलपितमेतत् । यदि पक्षद्वयेऽपि न कश्चित् अनुष्ठाने विशेषः, किमर्थमधिकरणम् । अपि च पूर्वपक्षे श्येनादीनां गुणविधित्वात् श्येनद्रव्येण यष्टव्यम्, सिद्धान्ते तु नामधेयत्वात् सोमेन यष्टव्यं इत्यस्ति विशेषः । यथा आह भाष्यकारः 'चित्रे एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचारः' ( भा. पृ. ३८६ ) इति । यत्र तु न सिद्धान्तेऽपि नामधेयं यथा 'सोमेन यजेत' इति, तत्र प्रतिनिधिसद्भावः प्रयोजनम् । तदप्याह भाष्यकारः ( भा. पृ. ४०५ ) 'यदि द्रव्यगुणशब्दाः अपूर्वं बोधयन्ति, द्रव्यगुणापचारे न प्रतिनिधिसमादानयो यथा पूर्वपक्षः, यथा तर्हि सिद्धान्तः, द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्यः' इति ( भा २।१।२।५ पृ. ४०५ ) । तस्माद् पक्षान्तरे एव अप्रामाण्यमिति नैवं पूर्वः पक्षः । किन्तु द्रव्यादिभ्य अपूर्वम्, ते एव फलसाधनमिति । कुतः ? 'फलं हि साध्यमानत्वात् सिद्धं साधनमिच्छति । *द्रव्यादि च तथा, यागः स्वयं साध्यो, न साधनम्* ॥' इति प्राप्ते, अभिधीयते । 'भावनैव हि भाव्येन फलेनान्वेतुमर्हति । धात्वर्थः करणं तस्यां लाघवात् संनिकर्षतः ॥'

**सोम**--सूत्रार्थस्तु- भावार्थाः प्रत्ययेन भावनाप्रतिपादकाः प्रकृत्या कर्मवचनाः ये शब्दाः तेभ्य अपूर्वं प्रतीयेत । यद्वा भावार्थाः भावनाप्रयोजनकाः ये कर्मशब्दाः धातवः तेभ्यः अपूर्वं प्रतीयेत इति ।

प्रयोजनम्-- यदि द्रव्यगुणशब्दाः अपूर्वं प्रतिपादयन्तीति पक्षः, तदा द्रव्यादीनामदृष्टार्थत्वात् अदृष्टार्थस्य प्रतिनिधिग्रमानात् न प्रतिनिधिः । यदा तु भावशब्देभ्यः

धात्वर्थस्यैव भावनाकरणत्वम्, न तु नामार्थस्य इति भावार्थाधिकरणे वक्ष्यते । सोम १।२।१

* यत्र धात्वर्थे प्राप्त गुणश्रवणम् तत्रैव गुणफलसंबन्ध भावार्थाधिकरणापवादेन, न तु यत्र गुणेऽपि प्राप्त । अत दर्शपूर्णमासवाक्येऽपि, आग्नेयादिवाक्येषु कालयागयोरुभयोरपि प्राप्तौ, गुणफलसंबन्धानुपपत्ति । कौ १।४।४।४.

* पूर्वोक्त तु लक्षणद्वय ( द्रव्योपकारित्व गुणकर्मलक्षणम्, द्रव्योपकाराभाव प्राधान्यलक्षणम् ) न गुणप्रधानविषयम्, अपि तु अपूर्वसद्भावविषयम् । रामात्मस्यैव भावार्थाधिकरणापवादत्वेन प्रतिपिपादयिषितत्वात् । शा २।१।८ पृ १०८

* भावार्थाधिकरणादौ न्यायसुधाकृताऽपि 'कृदन्तशब्दस्थले अधात्वर्थेऽपि भावनाया तात्पर्यवृत्त्या शाब्दत्वम्' इत्यादिभिर्ग्रन्थै तात्पर्यस्यापि वृत्तित्वमङ्गीकृतम् । कौ १।३।८।२४

* भावार्थाधिकरणन्याय । 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र इन्द्रियकर्मिकाया भावनाया भावार्थाधिकरणन्यायेन होमस्यैव करणत्वोपपत्तौ न गुणस्य करणत्वोपपत्ति इति पूर्वपक्ष । भावार्थाधिकरणन्यायो यत्र धात्वर्थानुसारेण विधेः तत्रैव । यदपि च यत्र धात्वर्थनाम श्रवास धात्वर्थनामार्थौ उभौ अप्राप्तौ, यत्र चोभौ समत्वप्राप्तिको, प्राप्तौ वा । यथा– 'अग्निहोत्रं जुहोति', 'सोमेन यजेत', 'उरु प्रथस्वेति पुरोडाशं प्रथयति', 'ऐन्द्रवायवाग्रान् गृह्णीयात् य कामयेत॰' इत्यादौ । यत्र तु नामार्थ एवाप्राप्त तत्र धात्वर्थादौ विधेयताया अभावेन प्रयोजनाकाङ्क्षत्वात् फलसंबन्धस्य पक्षेऽपि अप्राप्तत्वेन प्रत्यासत्तेरतिशयकत्वात् न भावार्थाधिकरणन्यायप्रवृत्ति । कौ २।२।११।२९

* भावार्थाधिकरणन्याय । 'यजेत स्वर्गकाम' इत्यत्र आख्यातांशेन आर्थी भावना अभिधीयते– भावयेदिति । सा चांशत्रयमपेक्षते १ किं भावयेत्, २ केन भावयेत्, ३ कथं भावयेदिति । तत्र भाव्याकाङ्क्षाया पदार्थन्यायेन स्वर्गो भाव्यतयाऽन्वेति स्वर्गं भावयेदिति । करणाकाङ्क्षाया समानपदोपात्तो यागो भावार्थाधिकरणन्यायेन करणतयाऽन्वेति यागेन स्वर्गं भावयेदित्यादि । साहस्री ८५१.

* यत्र द्वयोरपि धात्वर्थगुणयोरप्राप्ति, समकालप्राप्ति, प्राप्तिवैन वा, धात्वर्थस्यैव वा प्राप्ति तत्र भावार्थाधिकरणन्याय । यथा– 'सोमेन यजेत', 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति', 'ऐन्द्रवायवाग्रान् गृह्णीयात् य कामयेत॰', 'अग्निहोत्रं जुहोति' इत्यादौ । भाट्ट २।२।१२. * भावार्थाधिकरणन्यायेन कर्मण एव फलस्य विध्यन्वयत्वम् । 'कर्मण फल' इति भावार्थाधिकरणे साधितम् । कु २।३।४।११ * भावार्थाधिकरणन्यायेन धात्वर्थस्यैव पूर्वप्रवृत्त्या विधेयत्वमङ्गीकर्तव्यम् । कौ १।४।५।२७, * भावार्थाधिकरणन्यायेन धात्वर्थस्यैव फलसंबन्धोपपत्ति । २।३।४।८. * भावार्थाधिकरणन्यायेन फले यागविधानात् यागान्तर ( दाक्षायणयज्ञादि इति पूर्वपक्ष ) । शा २।३।४।५ पृ ५९५. * भावार्थाधिकरणन्यायेन यागकरणिकायां भावनाया भाव्यापेक्षाया स्वर्गस्यैव तत्त्वेन अन्वय । भाट्ट ५।१।४ * अध्ययन न भावार्थाधिकरणन्यायेन भावनाया करणत्वेन अन्वेति । कु १।२।१।१८ * गुण–धात्वर्थयो उभयोरपि प्राप्तौ भावार्थाधिकरणन्यायेन विशिष्टधात्वर्थस्यैव फलसंबन्धोपपत्ति दाक्षायणयज्ञादौ (इद पूर्वपक्षे) । कस्तूरि २।३।४ * धात्वर्थश्च समवस्थानिकोऽपि भावार्थाधिकरणन्यायेन प्रयोजनान्तरार्थं विधीयते 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्यादौ । भाट्ट ५।१।१ * धात्वर्थस्य आख्यातात् प्रच्युतस्य भावार्थाधिकरणन्यायेन करणत्वम् । सोम ६।१।१ * भावनाया भावार्थाधिकरणन्यायेन यागादि करणत्वेन अन्वेति । कौ २।१।२।५ पृ ४१. * 'मासमग्निहोत्रं जुहोति' इत्यत्र मासानुवादेन अग्निहोत्रादिधर्मा एव भावार्थाधिकरणन्यायेन विधेयता । कु २।३।११।२४

* न च गुणभावनाया आश्रयत्वं तस्य सम्भावयितुं शक्यं ('एतस्यैव रेवतीषु वारवन्तीयम्॰' इत्यत्र) । स हि न तावत् करणत्वेन, तथात्वे भावार्थाधिकरण-

न्यायप्रवृत्त्या तस्यैव फलांशत्वापत्तेः । कौ. ३।२। १२।२६.

● भावार्थाधिकरणन्यायस्वरूपम्— 'भावनायाः करणाकाङ्क्षया धात्वर्थे करणत्वलक्षणा यत्रो स्यात्, करणाकाङ्क्षा च विधेयायाः भावनायाः स्यात्, नानूद्यमानायाः' इति । बाल. पृ. ९७.

● भावार्थाधिकरणप्रवृत्तेः 'एकस्मादपूर्वं' इति निर्णयार्थीत्वात् तद्गुपोद्घातत्वेन प्रतिपदाधिकरणमारभ्यते । कु. २।१।१।१.

● भावनाभेदकशीभूतापूर्वभेदोपयोगिभावार्थाधिकरणरूपोपोद्घातप्रसक्तानुप्रसक्तादौ समाप्ते अधुना शब्दान्तरात् भेदोऽभिधीयते । भाट्ट. २।२।१.

● 'भावार्थ. (परिगृह्यते)' इत्यप्ययुक्तम्, भावार्थाधिकरणविपरीतत्वात् । ( भावार्थाधिकरणे हि धात्वर्था एव फलभावनाया करणम्, न नामार्था इत्युक्तम् ) । टुप्. ७।१।१।२.

● भावार्थाधिकरणसिद्धकर्मफलसंबन्धमूलोऽपूर्वसद्भावः । तन्त्र. ६।१।१।१.

● भावार्थाधिकरणसिद्धान्तः ( प्राभाकरमते ) 'क्रियाविशेषितस्य द्रव्यादेर्न विधेयत्वम्, द्रव्यादेः क्रियां प्रति उपसर्जनतया सिद्धतया च प्रतीतस्य अपूर्वविषयतानुपपत्ते. । धातोः एकफलावच्छिन्नानेकक्रियाक्षणनिरयवाचकत्वेन धातुना अन्योत्पादानुकूल्येन अवगतस्य धात्वर्थस्य तदन्यथाऽनुपपत्त्या साध्यत्वेन प्रतीतेः प्राभाकरोत्पत्त्यंगीकारेण तस्यैव विधेयत्वात् । अतो भावार्थस्यैव नियतत्वं इति । सोम २।१।१ पृ. ९७.

● भावार्थपदं आख्यातप्रत्ययान्वयपूर्वप्रतिपादकम् । वि. २।१।१

● भावाख्याते 'स्थीयते' इत्यादौ संख्या अन्विनैव धात्वर्थान्विता वा । अनुशासनाच्च द्विवचनादीना असाधुत्वम् । इति वैयाकरणाः । मणि. पृ. १०५.

● भावाख्यातस्थले संख्याया अन्वयः । 'संख्याया अपि निराकाङ्क्षत्वात्०' इति चिन्तौ द्रष्टव्यम् ।

● भावकृत्तां तु पाको याग इत्यादौ धात्वर्थमात्रे शक्तिः । कृतेस्तु आक्षेप. । मणि. पृ. ११५.

● भावप्रत्यय. । गोमतो भावो गोमत्त्वं इति हि 'यन्निमित्तमपेक्ष्यायं गोमच्छब्दः प्रवर्तते । स एव गोमतो भाव उच्यते त्वतलादिभिः ॥' तेन भावप्रत्ययः 'आनर्थक्यात्तदङ्गेषु' ( ३।१।९।१८ ) इति अर्थमात्र संबन्धमवलम्बते निमित्तत्वमपि च तस्य वस्तुरूपमस्ति । वा. ३।१।६।१२ पृ. ६७७, ● भावप्रत्यय. । यत्र उपसर्जनत्वेन ( गुणं ) विवक्षित्वा पश्चात् निष्कर्षविवक्षा भवति, तत्र तस्य गुणस्य भावात् द्रव्ये शब्दनिवेशः तदभिधाने 'त्वतलौ' इति भावप्रत्ययोत्पत्तिः । ३।४।४।१३ पृ. ९२४ पं. १५–१७, ● भावप्रत्ययः समवेतगुणग्राही । ३।१।६।१२ पृ. ६७७, ● 'शब्दप्रवृत्तिनिमित्ते हि भावप्रत्यय इष्यते ।' ३।१।६।१२ पृ ६७३, ● सर्वत्र हि भावप्रत्ययः संबन्धमभिधत्ते राजपुरुषत्वं औपगवत्वं पाचकत्वं इति ( पूर्वपक्षे स्थित्वा ) । ३।१।६।१२ पृ. ६७४. ● 'भावप्रत्ययं विनापि गुणप्रधानो भवति निर्देश• ' इति महाभाष्ये स्थूलादिषु । सु. पृ. १४२२. ● भावप्रत्ययेन विशेषणभूता जातिः निष्कृष्य अभिधीयते इति गोपदस्य तेन भावप्रत्ययेन यथा इष्टा, तथा देवदत्तस्य गोमत्त्वं इत्युक्ते यदि प्रतिपत्त्यभावात् संबन्धनिष्कर्षप्रतीतेश्च स एव भावप्रत्ययार्थोऽवगम्यते ( पूर्वपक्षे इदम् ) । वा. ३।१।६।१२ पृ. ६७८. ● भावप्रत्ययस्य त्वतलादेरर्थः मीको. पृ. ९३३ 'तद्धितार्थः' इति चिन्तौ मणौ द्रष्टव्यः । मणि. पृ. १६१–१६२. ● भावप्रत्ययस्य लक्षणास्थले सादृश्येन गुणवाचित्वम्, अन्यत्र च गुणनिष्ठधर्मवाचित्वम् । कौ. ३।१।६।१२ ● भावप्रत्ययानां धात्वर्थातिरिक्तवाच्याभावनियमः । मणि. पृ. १०४.

● भावप्रत्ययार्थः य• स एव प्रातिपदिकस्य विशेष्ये वर्तमानस्य निमित्तम् ( पूर्वपक्षे ) । वा. ३।१।६।१२ पृ. ६७४.

● भावप्रत्ययार्थवादार्थः मीको. पृ. ६०५ 'अरुणान्याय•' इति भाष्यीयाधिकरणे द्रष्टव्य• ।

● भावप्रत्ययार्थवादिभि. एव प्रत्ययार्थलक्षणं प्रणीतम्, नेतरैः । वा. ३।४।४।१२ पृ. १०३.

* भावप्रधानं आख्यातम् । आख्याते न कर्ता न क्रिया प्रधानत. । भा. ११।१।४।२४. * 'भावप्रधानमाख्यानम्' इति निरुक्तसूत्रात् १।१।९ भावशब्दवाच्यव्यापारस्य प्राधान्यावगतिः । कौ. २।१।२।५. * 'भावप्रधानमाख्यातम्' इति स्मृत्या अनेकार्थप्रतिपादकेषु आख्यानेषु भावनाप्राधान्यनियमः क्रियते । मणि. पृ ११२. * 'भावप्रधानमाख्यातम्' इति स्मृते. आख्याते भावनायाः प्राधान्यम् । सु पृ. ७०१.

* भावप्रधानः निर्देशः । अन्तरेणापि भावप्रत्ययं प्रत्ययप्रयोगपरम्परप्रधानो निर्देशः भावप्रधानो निर्देशः इत्युच्यते । तत्र गुणः प्रथममेव स्वप्रधानो विवक्ष्यते । के. * भावप्रधानो निर्देशः । कथमन्तरेण भावप्रत्ययं भावप्रधानो भवति निर्देश. इति पृष्टे, भवति यदा प्रथम एव गुणः स्वप्राधान्येन निर्दिश्यते, इति व्याहृतम् । तथाहि 'पूर्वमेव गुण. कश्चित् स्वातन्त्र्येण विधीयते । कश्चिद् द्रव्याङ्गभावेन, ततो निष्कृष्य चापरः ॥' यत्र गुणः प्रथममेव स्वप्रधानो विवक्षित तत्र अनुत्पादितेऽपि भावप्रत्यये विना च सामानाधिकरण्य सम्बद्धो भवति 'पटस्य शुक्ल.' इति । यत्र तु द्रव्योपसर्जनत्वेन च न निष्कृष्य विवक्ष्यते तत्र सामानाधिकरण्य भवति 'शुक्ल पट.' इति । यत्र पुनरुपसर्जनत्वेन विवक्षित्वा पश्चात् निष्कर्षविवक्षा भवति, तत्र यस्य गुणस्य हि भावात् द्रव्ये शब्दनिवेश. तदभिधाने त्वतलौ इति भावप्रत्ययोत्पत्ति. । स्वप्राधान्यविवक्षाया तु यदो (गुण) अनङ्गत्वात् गुण एव न भवति, न तद्द्वारेण द्रव्ये शब्दनिवेशः, तेन नासौ तदा तस्य द्रव्यस्य शब्दप्रयोगे भावयति इति भावप्रत्ययेन नाभिधीयते । पूर्वमेव निष्कृष्टत्वात् निष्कर्षकारिण प्रत्ययस्य निष्फलत्व स्यात् । वा. ३।४।४।१३ पृ ९९४ प. ९-१०.

* भावप्रधानत्वादाख्यातेषु न कदाचित् धात्वर्थस्य नित्यं करणभूतस्य प्राधान्यमिति स्थितम् (भावार्थाधिकरणे) । वा ३।४।४।१२ पृ. ९०३.

* भावप्रयुक्तस्य साधनक्रम. अपेक्षित. । यजेत केन, किमर्थम्, कथमिति । कर्तृप्राधान्ये कार्याभावात् न साधनाकाङ्क्षया भवितव्यम् । नहि भवति 'पाचक' केन किमर्थं कथमिति । (अन. भावप्रधानमाख्यातम्) । भा. ११।१।४।२४.

* भावविपयः अन्यतरकोटिव्यवस्थया कोऽप्यन्तरस्य आर्थिक-व्यवस्थाविधिः यथा, 'पूर्वेद्युरमावास्याया वेदिं करोति' इति अमावास्याया पूर्वेद्युर्वेदिकरणे व्यवस्थापिते अर्थात् हविरभिवासनोत्तर वेदिकरण पौर्णमास्या व्यवस्थितं भवति । इद उदाहरणं पञ्चमे सिद्धम् 'उत्कर्षाद् ब्राह्मणस्य' (५।४।४।१०) इत्यत्र । बाल. पृ. १९.

* भावशब्दस्य घञन्ताद्धवतेः 'एरच्' (पा० ३।३।५६) इत्यचि ॰रुपपत्तेर्भावनावाचकत्व । कणिका. पृ १५९. * भावशब्दो मन्त्रगतो न विधायक', किन्तु अभिधानार्थ' । ३।१।६।१०-११. * भावशब्दा' । क' पुनर्भाव, के ते पुनर्भावशब्दा इति । यजतिददातिजुहोति इत्येवमादय. । ननु यागदानहोमशब्दा एते, न भावशब्दा. । नैतदेवम् । यागादिशब्दाश्चैते भावशब्दाश्च । अन्यापदार्थश्चातोऽवगम्यते भावयेदिति च । तथा भवेत यथा किञ्चिद्ददातीति । तेनैते भावशब्दाः । द्रव्यगुणशब्देभ्यो द्रव्यगुणप्रत्यय, न भावनाया । अतस्ते न भावशब्दा. । भा २।१।१।१ पृ ३७४-३७५, * भावशब्दा सर्वे प्रधानकर्मणो विधायका उत केचित् संस्कारकर्मण इति विचारे केचित् भावशब्दा प्रधानकर्मण केचित् गुणकर्मण. विधायका इति सिद्धान्त । २।१।३।६-८, * भावशब्दान् आख्यातानीति पर्यायशब्देनोपदिशति (सूत्रकारः) । २।१।१।४. * भावशब्दादेवापूर्वम्, न द्रव्यगुणशब्देभ्य । २।१।१।१-४.

* भावना अपेक्षमपेक्षते साध्य साधन इतिकर्तव्यता चेति । किम्, केन, कथ इति । सीन्या. * भावना अन्योत्पादनानुकूल व्यापारसामान्यम् । भवितुर्भवनानुकूलो भावक व्यापारो भावना इत्यन्ये । सीन्या * भावना अर्थवादाधिकरणे विशेषतो वर्णिता । वा. २।१।१।१ पृ ३७८. * भावना आख्यातप्रत्ययार्थो भावयितुर्व्यापार । भावना द्विविधा शब्दभावना, अर्थभावना चेति । लिङ्-लेट्-लोट्-तव्य-प्रत्ययमानगता शब्दभावना । सर्वाख्यातगता अर्थभावना । भिन्नासु भावनासु

भावनात्वं सामान्यम् । प्रयत्नः भावना इति पक्षः, स्पन्दः, उभयसाधारणं ,उदासीनत्वविच्छेदसामान्यम्, धात्वर्थसामान्य इति च पक्षाः सन्ति, परन्तु अयुक्तास्ते । वि. २।१।१ वर्णक २, ● भावना आख्यातप्रत्यय-वाच्या, विशेषरूपात् सामान्यरूपाच्च यजादिधातुवाच्यात् अन्यैव । २।१।१ वर्णके १. ● भावना । उत्पत्त्यास्य-आग्नेयादिविकारानन्तरमाविर्भावात् क्रीतीक्रमादिविकार-रूपाः संस्काराः, तस्मात् अपरस्पराक्रमभेदेन भेदात् तदनुनिष्पादितत्वमेदस्य अवश्यंभावात् सिद्धसत्ताकाः पूर्वे भवनाः प्रयोजकाः, सत्तामर्तव्यापृतत्वात् असिद्ध-सत्ताकाः उत्तरे भवनाः प्रयोज्याः, सिद्धसत्ताकासिद्ध-सत्ताकवर्तिसामान्यं भावनाख्यो व्यापारः इति कल्पना अनुसर्तव्या । सु पृ. ५७०. ● 'भावनैव च वाक्यार्थः सर्वत्रैव विशेषिता । तस्याश्च जायते नित्य भेदः शब्दा-न्तरादिभिः ॥' यस्मिन् पदसमूहे शब्दान्तरादिभिः न भावनान्तरं प्रतिपाद्यते तस्य एकवाक्यत्वम्, भावनान्तरा-पेक्षया तु नानात्वम् । वा १।१।१४।४६. ● भावनैव सर्ववाक्येषु मीमांसकमते कारकविशिष्टरूपेण वाक्यार्थः, न तु नैयायिकवत् संसर्गः इति 'अर्थैकत्वादेकं वाक्यम्०' २।१।१४।४६ इत्यत्र भाष्ये वार्तिके च उक्तम् । बाल. पृ. ७२. ● भावना करण-इतिकर्तव्यता-नामपदत्रिकविशिष्टा विधीयते । टुप्. ७।२।१।१. ● भावना कर्तारमङ्गं करोति । करोतिसामानाधिकरण्येन आख्यातप्रत्ययस्य तदर्थ-वाचित्वावगतेः, करोतेश्च धात्वर्थसामानाधिकरण्ये 'पाकं करोति, पाकेन करोति' इति वा धात्वर्थस्य कारक रूपेण कर्मत्वकरणत्वप्रयोगापत्तेः. धात्वर्थातिरिक्ता भावना प्रत्ययवाच्या कर्तारमङ्गं करोति । कर्तुः अनभिधानपक्षे भावनायैव विना कर्त्रन्वयानवगतेः अनुष्ठानसिद्धयर्थेन च कर्त्राक्षेपस्य अनुष्ठानयोग्यभावनाप्रयुक्तत्वात् करणाद्यन्वयं च विना अनुष्ठानयोग्यताभावात् कारकत्वेन धात्वर्थस्य अन्वयात् भावनाङ्गत्वं (कर्तुः) युक्तम् । अभिधानपक्षे तु आदौ एव कर्त्रन्वयावगतेः सकलकारक-समन्वयानुपपत्तिः तत्र कर्तृत्वस्य सकलकारकप्रयोक्तृत्वात् प्राक् असिद्धेः, सिद्धे कर्त्रन्वयं भावनायाः सिद्धय-व्यभिचारित्वेन कारकाकाङ्क्षत्वात् धात्वर्थान्वयानुपपत्तेः भावनाया व्यापृतः कर्ता धात्वर्थं विना भावना कर्तुम-शक्नुवन् आत्मन एव कर्तृत्वसिद्धये धात्वर्थमङ्गं करोति । सु पृ. १३८२-८३. ● भावना । कर्तृव्यापारसामान्यरूपैव च्यासौ तमेव विशेषतः पर्युपस्थापयति । कारकान्तराणि तु धात्वर्थसमन्वितत्वात् सर्वत्र कर्तेति कर्तृगतात्मक व्यापार-निरूपणतया प्रतिष्ठितानि, भवन्ति । वा.३।४।४।१३ पृ. ९१७, ● भावना केवलप्रत्ययगम्यैव लभ्यते 'भाव-येत्' इति । ३।२।२।१ पृ. ३७६, ● भावना । क्रतु-भावनान्तर्भावो नास्ति अग्निष्टोमादिसंस्थानाम्, तासां फलार्थत्वात् । अग्निष्टोमसंस्था तु क्रतुभावनान्तर्गता । शा. ५।३।२३. ● 'भावना गम्यमाना च धातुप्रत्यय-सन्निधौ । कस्य वाच्येति विस्पष्टं न कदाचित् प्रतीयते ॥' केवलप्रकृतिप्रत्ययप्रयोगाभावात् न विवेको विज्ञायते । लक्ष्यते हि यत्तु धातुवद्धितेन प्रत्ययेनोच्यत इति, अथवा प्रत्ययानुगृहीतेन धातुना, अथवा उभाभ्याम् । न च शक्तिकल्पनाया विशेषः, सर्वथा अपर्यवसिताम्यात् । न न विवेकज्ञानप्रयोजनमस्ति । वा. २।१।१।१ पृ. ३७६ । भावनाया वस्तुतः प्रत्ययमात्रवाच्यत्वेऽपि प्रतीतिमात्रव्यव-हारिणा लोकेन विवेक्तुमशक्यत्वादाख्यातपदेन धात्वर्थ-वत् भावनाऽप्युच्यते इत्येतावदभ्युपगम्य, 'पचति' इत्यस्य कोऽर्थः इति पृष्टे धातुमात्रवाच्यत्वेन निश्चितं धात्वर्थं पाकमिति व्याख्याय समुदायाख्यातपदवाच्यत्वेन ,भावना ख्यापयितुं करोतौ भावयतौ वा प्रयुज्यमाने प्रकृत्यनुगृहार्थं प्रत्ययमात्रस्य भावनावाचित्वाभावेन अपौनरुक्त्य मत्वा प्रयोगो न विरुध्यते । सुधा ● भावना न कारकेषु वर्तमाना न विकल्पत्वेन वर्तते । किं तर्हि ? सर्वेषु युगपत् । वा. ३।४।४।१२ पृ. ९१४. ● भावना न फलस्योच्यते न क्रियायाः, तृतीयानिर्देशात् 'अग्निना यजेत' 'नाभिसा यजेत' इति । स्वर्गस्त्वीप्सितः कामपदयोगात् 'स्वर्गकामः' इति । भा. ११।१। ४।२४. ● भावना तत्र (यजेत दद्यादित्यादौ) यत्रापि धातो मात्रा भावनावचनः सर्वेषु सम्भवन्, तथापि एकैकस्य पूर्वोऽवयवोऽन्यः, अन्यश्च तेन समुदायः शब्दान्तर-मन्यस्मात् समुदायात् । तत्रार्थान्तरं व्यक्तम् । दद्यादिति ददातेन भावयेदिति केवलमेव दान करणं भावनायाः

प्रतीयते । २।२।१।१. ● भावना तावत् न धात्वर्थविशेषाद् विना इतिकर्तव्यता शक्नोति प्रहीतुम् । वा. ३।६।१६।४१ पृ. १०६५, ● भावना तु अनुपस्थानाद् भिद्यमानाऽवधार्यते । भावनान्यत्वानन्यत्वपरीक्षावेलया तदपि धात्वर्थैकत्वे भावना तावत् अनन्यप्रमाणत्वात् आख्यातप्रत्ययान्तरेण अनुपनीयमाना न कथञ्चित् प्रत्यभिज्ञायते इत्युपपन्नं प्रयोजनान्यत्व ( कर्मान्तरत्वम् ) । १।३।११।२४ पृ ६१६, ● भावना । ' तेन भूतिषु ( भवनेषु ) कर्तृत्वं प्रतिपन्नस्य वस्तुनः । प्रयोजकक्रियामाहुर्भावना भावनाविदः ॥ ' ( भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषो भावना इत्यर्थः ) । २।१।१।१ पृ. ३१८. ● भावना व्यंशा । क्रियया फलकरणेतिकर्तव्यतास्य यजेतेत्यनेन कर्ता परोच्यते । यस्यामेव वेलया स्वर्गो मतने कर्तृत्वं प्रतिपन्नो तस्मिन्नेव क्षणे करणेतिकर्तव्यते अपि व्याप्रियेते । टुप्. ५।१।५।८, ● भावना त्र्यंशा । प्रकृतौ षोडशी विधीयते ' षोडशिनं गृह्णाति ' इति । विधीयमानस्य त्र्यंशा भावना, किं केन कथमिति । तत्र किमंशं करणोपकारो विपरिवर्तमानो निराकाङ्क्षं करोति । केन इत्यत्र षोडशी । कथमंशं षोडशिन इतिकर्तव्यता या आम्नायते सा निराकाङ्क्षं करोति । तत्र वाक्यं परिसमाप्तम् । न केनाप्यंशेनापरिपूर्णम् । १०।५।५।१७, ● भावना द्रव्यदेवताविशिष्टा यागमन्तरेणाजन्यमाना यागं कल्पयति, प्रकृत वोपादत्ते । ६।५।१।१२. ● भावना । ( यजेत इत्यस्य यागेन भावयेत् इति कथमर्थः । ) इत्यस्य प्रश्नो. भेदेनार्थे कथ्यमाने यागेन इति विशेषस्य करणात्मना निष्कृष्टम् । इतरत्तु भावनात्मकं सामान्यरूपं शब्दान्तरेण भावयेत् इत्यनेन कथ्यते । वा. २।१।१।१ पृ. ३८० ● भावना द्विविधा शब्दभावना अर्थभावना च । तत्र अर्थभावनाविचारः मीको. पृ. ६२९ ' अर्थभावना ' इति ' विन्दौ द्रष्टव्यः । शब्दभावनाविचारश्च ' शब्दभावना ' इति विन्दौ द्रष्टव्यः । ● भावना धात्वर्थातिरिक्ता कृतिरूपा आख्यातार्थः । आश्रयस्तु आक्षेपलभ्यः । मणि. पृ. ११५. ● भावना । धात्वर्थैकत्वाख्य-सामान्यरूपेऽपि भावनायाश्चैकत्वसामान्यास. बाधाभावात् प्रमाणम् । सु. पृ. ७०६.

● भावना नाम भवितुर्भवनानुकूलप्रयोजकव्यापारः । तेन स्वर्गोत्पत्त्यनुकूलव्यापार एव स्वर्गभावना इत्युच्यते । सोम. ३।३।४ पृ. २३७. ● भावना । पचतीत्युक्ते पाकं करोति इत्येतमर्थं सर्वे जनाः प्रतियन्ति । तत्र पाकः, पक्तिः, पचनं इत्येतैः शब्दैः व्यवह्रियमाणो लिङ्गकारकसङ्ख्यायोग्यो धात्वर्थः सिद्धस्वभावः । करोति इत्यनेन व्यवह्रियमाणो लिङ्गापेतः साध्यस्वभावः । तत्र सिद्धस्वभावद्योतनाय यथा घञ्-प्रत्ययादयो विहिताः, तथा साध्यस्वभावद्योतनाय आख्यातप्रत्ययविधिः । स च आख्यातप्रत्ययार्थः ओदनोत्पत्त्यनुकूलः । ततो भवितुरोदनस्य प्रयोजकव्यापारत्वात् णिजन्तेन भावनाशब्देनोच्यते इति । अन्ये भावनापक्षा अयुक्ताः । प्रयत्नो भावना इति चेन्न, ' रथो गच्छति ' इत्यत्र तदभावप्रसङ्गात् । स्पन्द इति चेन्न, मानसत्यागरूपे यजतौ अव्याप्तेः । उभयसाधारणं उदासीनत्वविच्छेदसामान्यं भावना इति चेन्न, शब्दभावनायामव्याप्तेः । नहि शब्दस्य विभोरचेतनस्य स्पन्दः प्रयत्नो वाऽस्ति । लिङ्लेट्लोट्तव्यप्रत्ययमात्रगता शब्दभावना । सर्वाख्यातगता अर्थभावना । तदुक्तं ' अभिधा भावना( भामा )माहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥ ' इति । किञ्च स्पन्दादिवादिनोऽपि न स्वरूपेण स्पन्दादीनां भावनात्वमाहुः, किन्तु अर्थोत्पादानुकूलं स्वरूपम् । तस्मादस्मदुक्तैव भावना । यथा ' पचति ' इत्यत्र ओदनफलोत्पत्त्यनुकूला, तथा ' यजति ' इत्यत्र स्वर्गादिफलोत्पत्त्यनुकूला । तस्या च फलभावनाया प्रत्ययगम्याया एकपदोपात्तत्वेन प्रत्यासन्नत्वात् प्रकृत्यर्थः करणं न तु द्रव्यादि, तस्य पदान्तरोपात्तत्वेन विप्रकृष्टत्वात् । साध्यस्तोऽपि प्रकृत्यर्थः स्वसाधननिष्पादितः सन् शक्नोति फलं साधयितुम् । द्रव्यादीनां प्रकृत्यर्थोत्पादनेन दृष्ट एवोपकारः । द्रव्यादिनिष्पादितो धातुशब्देन यागादिरूपेण स्वर्गादिफलोत्पत्तौ सत्या येयमनुकूलव्यापारात्मा कृतिशब्दाभिधेया फलोत्पादना, सेयं यत्यादिधातूनामन्यत्वेन केनापि नाभिधीयते सर्वधात्वर्थानुगामित्वात् । अतो न भावनायाः प्रकृत्यर्थत्वमापादयितुं शक्यम् । अस्तु तर्हि धात्वर्थसामान्यमेव भावना इति चेत्, न,

प्रतिपाद्यत्वे विलक्षणरूपत्वात् । अन्यद्धि पाकस्य ओदनं प्रति आनुकूल्यम्, अन्यच्च नरनस्य संयोगविभागौ प्रति, अन्यथा फलविभागानुपपत्तेः । भिन्नासु भावनाव्यक्तिषु भावनात्वसामान्यमनुवर्तते नाम, नैतावता प्रकृत्यर्थसामान्यं तत् भवति । तस्मात् विनियस्यात् सामान्यरूपाख्य यजादिधात्वनुवाच्यात् अन्यैव आख्यातप्रत्ययवाच्या भावना । तथा सति 'यजेत' इत्यत्र आख्यातस्य 'भावयेत्' इत्यर्थो भवति । तत्र 'किं भावयेत्, केन भावयेत्, कथं भावयेत्' इत्याकाङ्क्षायां 'स्वर्गं भावयेत्, यागेन भावयेत्, अग्न्याधानप्रयाजावघातादिभिः उपकारं सम्पाद्य भावयेत्' इत्येवं भाव्यकरणेतिकर्तव्यतासमर्पणेन आकाङ्क्षापूरणात् प्रकरणाम्नातः सकलः शब्दसंदर्भो भावनावाचिन आख्यातस्यैव शेषः । शाब्दप्रकरणवर्ती सेयं आर्थी भावना इत्युच्यते । सा सर्वाऽपि शाब्दभावनाया गम्या, विधायको लिङादिः करणम्, अर्थवादसंपादिता स्तुतिः इतिकर्तव्यता । सेयं शब्दभावना लिङादिभिरेव गम्यते । आर्थभावना सर्वैराख्यातप्रत्ययैर्गम्यते इत्युक्तम् । तस्यां आर्थभावनायां स्वर्गस्य भाव्यत्वं फलनियोगादवगम्यते । प्रकृत्यर्थस्य करणत्वं तृतीयाश्रुत्या । तथा च श्रुतौ 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'चित्रया यजेत पशुकामः' इति च । तत्र करणत्वं अपूर्वकल्पनामन्तरेण न सम्भवति इत्यभिधास्यते । वि. २।१।२ वर्णक २. ● भावना पुंप्रयत्नव्यापारः । सु. पृ. ७४४. ● भावना प्रतीयमानैव साकाङ्क्षा अपेक्षान्तराधीनत्वाय प्रथमं तावत् साध्यमपेक्षते 'किं' इति ।... न च बुद्धिपूर्वकारी पुरुषः पुरुषार्थरहितं व्यापारं वचनशतेनाप्युक्तः अनुतिष्ठति । तत् यदि अस्या भावनाया अपुरुषार्थः साध्यः स्यात् ततः पुरुषेषु अप्रवर्तमानेषु प्रत्ययस्य प्रयोजकशक्तिः बाध्येत । तेन यद्यपि समानपदोपादानप्रत्यासत्तेः धात्वर्थः साध्याकाङ्क्षापूरणाय उपप्लवते तथापि अयोग्यत्वान्निराक्रियते । नहि प्रत्यासत्तिरेवैका संबन्धकारणं (किन्तु) योग्यताऽपि ।......साध्यं पुनः स्वर्गपशुपुत्रग्रामादि प्रागेव अस्मात् सर्वे पुरुषाः प्रतिपद्यन्ते । ततश्च 'भावयेत्, किं' इत्यपेक्षितमात्रे विनैव तावत् शास्त्रेण एतावदवगता, पुरुषार्थः कश्चित् इति । तत्र विशेषमात्रमनवगतत्वादपेक्ष्यते । तदपि न साध्यात्मना, किं तर्हि एतद्भावनाविषयत्वेन । ततश्च दूरस्थस्यापि स्वर्गादेरेव श्रुतास्पदस्य संगतिः ।... लब्धसाध्यांशा भावना 'केन भावयेत्' इत्येव करणमपेक्षते । तत्र च शास्त्राधीनप्रवृत्तित्वात् फलनिष्पत्तौ आश्रीयमाणे प्रमाणान्तराच्च योग्यायोग्यत्वयोरज्ञानात् विध्यविरोधाच्च अत्यन्तप्रत्यासत्त्युपस्थित-धात्वर्थातिक्रमकारणाभावात् सर्वफलभावनाना च केनचित् धात्वर्थविशेषेण विना अनुपपत्तेः यागेन इत्येव विज्ञायते ।... सेयं भावना अंशद्वयपरिपूर्णा सती सर्वकरणाना उपायानुग्रहीतात्मा करणत्वानुपपत्तेः 'कथं भावयेत्' इति इतिकर्तव्यतामपेक्षते । सा च प्रत्यक्षादीना अनुमादकदर्शनसामर्थ्याभावात् अनन्यप्रमाणगम्या इति यथार्थनिकर्ष तदुपकारा यथाकथंचित् उपसाध्यमाना शास्त्रानुसारेण श्रुत्याद्युपदेशेन चोदनासामान्यातिदेशेन वा अत्यन्तादृष्टोपकारद्वारेण अन्यथाऽनुपपत्त्या कल्प्यते । ततः परिपूर्णैतदनुष्ठानं योग्या इति विधीयते, तद्विधानाच्च अर्थापत्त्या यागादिविधानम् । वा. (तण्डुला:) पृ. ३८३–३८६. ● भावना । प्रयत्नस्य चेतनधर्मत्वेन चेतनं विना अनुपपत्तेः चेतनस्य प्रयत्ने स्वातन्त्र्येण कर्तृत्वैकान्तिकत्वात् प्रयत्नात्मकभावनाख्यायाः क्रियायाः कर्तृशून्यायाः कस्याश्चिदभावात् कर्तृभावनाव्यभिचाराभावः । सु. पृ. १३९८, ● भावना प्रयत्नात्मा कर्तारं विना न सिध्यति । पृ. १३९७, ● भावना । भिन्नधात्वर्थानुरागे प्रयत्नात्मभावनाव्यक्तिवैलक्षण्यस्य स्वसंवेद्यत्वात् वैलक्षण्यानवभासेन सामान्यस्य ऐक्यं वाच्यम्, तत्तु दुर्भेदं । पृ. ७०६, ● भावना । यत्र च शुद्धभावनाप्रतीत्यभावात् धात्वर्थान्तरानपेक्षत्वात् न विभज्यमानसाकाङ्क्षत्वम्, भावनाभेदे च भावयितव्यापूर्वभेदावश्यंभावात् न संहत्य एकार्थत्वं तदा एकवाक्योपादानाभावादपि धात्वर्थसमानस्य एकभावनाऽवच्छेदकता न युक्ता । पृ. ७०९. ● भावना यावत् किं–केन–कथं–भावैर्न पूर्यते तावत् विधिर्न प्रवर्तते । भा. ३।६।६।१७. ● भावना व्यापारत्वेन यत्नत्वेन वा प्रत्ययवाच्यो यत्नः । स च नित्यं

पृ. ७६७. ● भावनायाः कर्तृत्वकर्मत्वाक्षेपकत्व युक्तम्, ■ वैयर्थ्यम्। मणि. पृ. ११४. ● भावनायास्तावत् न शब्दव्यतिरिक्तं प्रत्यायकं पश्यामः। वा. ३।४।४।१३ पृ. ९१३. ● भावनायाः धात्वर्थं प्रति विशेष्यता। रहस्य. पृ. ४६. ● भावनायाः धात्वर्थाधीननिरूपणत्वात् धात्वर्थभेदेन भेदोऽनुमीयते। यत् यदधीननिरूपणं तत् तद्भेदेन भिद्यते इति व्याप्तेः सम्बन्धिनिरूपणाधीननिरूपणस्य सम्बन्धस्य सम्बन्धिभेदेन भेदे दृष्टत्वात्। सु. पृ. ७०४, ● भावनायाः धात्वर्थानवच्छिन्नायाः धर्मान्वयः षष्ठाधिकरणे (३।६।१६) भाष्ये निराकरिष्यते। पृ. १२१६, ● भावनायाः धात्वर्थावच्छेदं विना भावनान्तरात् व्यावृत्तप्रतीतेः एकभावनावच्छेदकत्वविशेषप्रसङ्गेन एकस्या भावनाया अनेकगुणसम्बन्धमपेक्षायोगात् अनुरञ्जनमेदः अनुरञ्जनमेव नाक्षिपति। पृ. ७०४. ● भावनायाः नैमित्तिकत्वे नामधेयभावनया भावनाधिकरणे (२।४।१) निरूपितम्। भाट्ट. ६।१।१ पृ. २१९. ● भावनायाः प्रत्ययमानार्थता शाब्दिकानामभिप्रेता। सु. पृ. ५६६, ● भावनायाः भावापेक्षाया भावार्थस्य भावनासम्भवोऽपि विप्रतिपन्नत्वात् पुरुषार्थस्य भाव्यता उक्ता। पृ. ५८२-५८३, ● भावनायाः भेदाभेदावधारणं शब्दान्तरादिसद्भूमायाधीनम्। पृ. ६८३.

● भावनायाः मुख्यविशेष्यत्वं इति विचारः। ननु आख्यातार्थस्य कृतेः मुख्यविशेष्यत्वे मानाभावः। तथाहि। तिङुपात्तैकत्वादिसंख्या तावत् अन्याविशेषणी-भूतप्रथमान्तपदोपस्थाप्ये चैत्रादौ आश्रयतासम्बन्धेन अन्वेति इति तावत् अविवादम्। स च 'चैत्रः ओदनं पचति' इत्यत्र कर्तृस्थाने चैत्र., 'ओदनः पच्यते चैत्रेण' इत्यत्र कर्मस्थाने च ओदनः, तस्यैव अन्याविशेषणत्वात्, इतरस्य कर्मत्वादिविशेषणत्वात्। अत एव 'चैत्र इव गच्छति मैत्रः' इत्यादौ चैत्रे प्रथमान्तपदोपस्थाप्येऽपि न तिङुपात्तसंख्याऽन्वय, तस्य इव शब्दार्थे सादृश्ये प्रतियोगितासम्बन्धेन विशेषणत्वात्। अपि तु मैत्रे एव। अत एव 'चैत्र इव सुत चन्द्रश्च भाषते' इत्यत्र उभयत्र सङ्ख्याऽन्वयः उभयोरपि अन्याविशेषणीभूतपदोपस्थाप्यत्वात्। भावाख्याते धात्वर्थस्य अन्याविशेषणत्वात् तत्र संख्यान्वयवारणार्थं प्रथमान्तेति। अतश्च तद्देव आख्यातोपात्तार्थं भावनाया अपि तस्मिन्नेव आश्रयतासम्बन्धेन अन्वयः, न तु तस्य मुख्यविशेष्यत्वम्। धात्वादिव्यतिरिक्ताख्यातार्थप्रकारक-बुद्धित्वावच्छिन्नं प्रति उक्तविधप्रथमान्तपदजन्योपस्थितिः कारणं इति एककार्यकारणभावकल्पने लाघवात्। इति चेत्,

उक्तप्रथमान्तार्थस्यैव आश्रयतासम्बन्धेन कृतौ अन्वयस्य धात्वादिवत् सम्भवेन तादृशकार्यकारणभावकल्पने एव नियामकाभावात्। नहि आख्यातार्थभावनायाः प्रथमान्तार्थं प्रति प्रकारत्वेनैव अन्वयबोधः इत्यत्र नियामक किञ्चित् अस्ति, जैमिनिपाणिन्याद्यनुमतविरुद्धानुभवस्य अपर्यालोचनमात्रात्। 'तद्भूतानां क्रियार्थेन समाम्नाय.' (१।१।७।२५) इति जैमिनिना क्रियामुख्यविशेष्यकानुभवस्य उक्तत्वात्। न चैवं गौतमानुभवोऽप्यस्ति।

किञ्च, संख्याया अपि तिङुपात्तायाः नैव नामार्थे चैत्रादौ अन्वयः। तस्य प्रथमोक्तसंख्यावरोधात् (प्रथमा-विभक्त्युक्तैकत्वादिसंख्यया आकाङ्क्षाविरहात्)। न च तस्याः साकाङ्क्षत्वात् नान्वयोपपत्तिः, एकपदोपात्तत्व-प्रत्यासत्त्या झटिति उपस्थितस्य तस्य अन्वयेन विलम्बो-पस्थितायाः तिङुपात्तायाः एव साधुत्वार्थकत्वौचित्यात्। न चैवम् 'चैत्रो मैत्रश्च गच्छति' इत्यत्र द्वित्वा-न्वयानुभवानापत्तिः। द्वित्वान्वयानुभवस्य सुपा प्रत्येकैक-त्वान्वयानुभवस्यापि अपरोक्षानुभवतया अवश्यं एक-त्वानुभवस्य अवश्यम्भावे वाच्ये पदान्तरोपात्तद्वित्वस्यैव अनौचित्यात्।

वस्तुतस्तु, तिङो लाघवानुरोधेन कृतौ शक्तावपि वक्ष्यमाणरीत्या कर्त्रादेः निरूढलक्षणया मानस्य आवश्यक-त्वात् तत्र च एकपदोपात्तत्वप्रत्यासत्त्या संख्याया अन्वयेन न कुत्रापि तस्याः प्रथमान्ते अन्वयः। अतश्च एकपदोपात्तानां एकविशेष्यकत्वं औत्सर्गिकं इतिन्यायेन एककार्यकारणभावकल्पनालाघवानुरोधेन च यदि संख्या-विशेष्ये भावनान्वय इत्याग्रहः, तदा अस्तु आख्यात-लक्ष्ये एव कर्त्रादौ उभयान्वयः, न तु प्रथमान्तपदोप-

स्यात्ये । यथा चैत्र प्रति भावनाया न प्रति मुख्य विशेष्यत्व तथा अग्रे निरूपयिष्याम ।

किञ्च, भट्टमते कालव्यतिरिक्ताख्यातार्थनिष्ठप्रकारता निरूपितविशेष्यतासम्बन्धेन आख्यातपदज्ञानजन्य-शाब्द-बुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन प्रथमान्तनामपद जन्य-अन्यार्थविशेषणीभूतार्थविशेष्यकोपस्थितित्वेन कारण तेत्येव कार्यकारणभाव पर्यवसन्न । न चासौ सम्भवति । 'न पचति चैत्र, पचत्यव चैत्र, पचत्यपि चैत्र' इत्यादौ आख्यातार्थभावनाया चैत्र एव अन्वयप्रसङ्गेन नञर्थे अभावे एवकारार्था योगव्यावृत्त्या एकदेशभेदे अपिशब्दार्थभूते समुच्चये वा अन्वयानापत्ते । तत्र चैत्र सख्यान्वयेन 'भावनाविशेष्ये सख्याऽन्वय' इति नियमस्यापि व्यभिचारापत्तेश्च । अत एव निपातासमभि व्याहृतत्व नाख्यातेलम्य विशेषणम्, सख्याया चैत्रे अन्वयानापत्त । न च उक्तकार्यकारणभावे तेन विशेषणे ऽपि निपातसमभिव्याहृतस्थले सख्याभावनयो पृथक् कार्यकारणभावमङ्गीकृत्य स्वस्वविशेष्ये [illegible]न्वयोपपत्ति अनेककार्यकारणभावकल्पनाऽऽपत्ते । अस्मन्मते तु एक कार्यकारणभावेनैव वक्ष्यमाणरीत्या तत्रैव भावनान्वयेन भावनाया मुख्यविशेष्यत्वम् उपपद्यते ।

किञ्च, एवनिपातसमाख्येनापि नैकरूप्यम् । 'चैत्र एव पचति, घट एव दृश्यते' इत्यादौ निपातसमभि व्याहारेऽपि उभयोरपि सख्याभावनयो चैत्रे अन्वयप्रतीते । न च निपातसमभिव्याहृतस्थले एव सख्याभावनयो वैरूप्य नान्यत्र इति नियमोऽपि सम्भवति, 'पचति न चैत्र चैत्रो न पचति' इत्यादौ उभयथाऽपि वैरूप्यात् । अतो भट्टमते कार्यकारणभावानन्त्यात् व्यभिचाराच्च न प्रथमान्तपदोपस्थाप्यस्य भावनाविशेष्यत्वम् ।

अपि च 'ओदन पचति' इत्यत्र प्रथमान्तपदाभाने कारणाभावादेव भावनाप्रकारकबोधानुपपत्ते ज्ञानसामग्री बलात् भावनाया मुख्यविशेष्यत्वे बाधकाभाव । न च अनुभवानुरोधेन भावनाप्रकारकबोधत्वावच्छिन्न प्रत्येव आख्यातपदज्ञानस्य कारणत्व कल्पयित्वा तादृश बोधार्थं प्रथमान्तपदाध्याहार इति वाच्यम् । अनुभवस्य दापयितुमपरत्वेन तत्कार्यकारणभावकल्पने गौरवात् ।

न च तथापि 'पण्डितश्चैत्र' इत्यादौ आख्यात पदाभाने प्रथमान्तस्य मुख्यविशेष्यतापत्ति, गुणार्थ प्रकारकबोधत्वावच्छिन्न प्रत्येव सुबन्तज्ञानस्य कारणत्वात्, वक्ष्यमाणरीत्या प्रथमाया अपि सत्त्वातिरिक्तार्थसद्भावाच्च । अनतिरिक्तत्वेऽपि प्रथमान्तनामपदोपस्थाप्यप्रकारकबोध त्वावच्छिन्न प्रति प्रथमान्तपदज्ञानस्य कारणत्वकल्पनेन तादृशस्थले आख्यातपदाध्याहारोपपत्ते । न च विनि-गमनाविरह 'अस्तिर्भवन्तीपर प्रथमपुरुषे अप्रयुज्य मानोऽप्यस्ति' (भवन्तीपर लट्पर) इति स्मृत्यनु मतत्वेन तस्य अदोषत्वात्, तादृशानुशासनज्ञानाभावे निराकाङ्क्षबोधस्य इष्टत्वाच्च ।

किञ्च भावनाप्रकारकबोधत्वावच्छिन्न प्रति आख्यात पदज्ञानत्वेन कारणत्वे 'चैत्रेण सुप्यते गगनेन स्थीयते' इत्यादिभावाख्यातस्थले प्रथमान्तपदाध्याहारापत्ति । अथ तत्र आख्यातार्थविशेष्यकबोधमेव अङ्गीकृत्य कारणता वच्छेदके भावभिन्नत्व निवेश्यते तदा तदपि गौरवम् । अस्मन्मते तु सर्वत्र आख्यातार्थविशेष्यकत्वात् भावा ख्यातस्थले च कर्तृत्वनभिधानेन प्रथमान्तस्य अप्रसक्ति । किञ्च, यदि अन्यार्थविशेषणीभूतप्रथमान्ते भावनान्वयो स्यात् तर्हि 'चैत्र एव पचति, घट एव दृश्यते' इत्यादौ कुत्र भावनासख्ययो अन्वय कथ वा शाब्दबोध? न तावत् चैत्रादौ, तस्य एवकारार्थभूतान्ययोगव्यवच्छेदैक देशे भेदे प्रतियोगिताकत्वसंसर्गेण विशेषणत्वात् । नापि एवकारार्थभूतायाम् अन्यस्मिन् प्रतियोगिताकत्वसंसर्गेण भावनाया आश्रयत्वसंसर्गेण च एवकारार्थभूते अन्य स्मिन् सख्याया अन्वय, तयो प्रथमान्तपदोपस्थाप्यत्वा भावात् । न च अन्यवोधविरहो इष्टएव 'दधि तिष्ठति' इतिवत् प्रथमान्त्याविशेष । तथात्वेऽपि चैत्रे पाक भावनान्वयानुपपत्ते । चैत्रादिषु बहुष्वपि 'चैत्र एव पचति' इति एकवचनप्रयोगाच्च । अत एव 'पचति'पदस्य व्युत्पत्तिवैचित्र्येण वाक्यस्य अन्वयपरीक्षण 'पाकानुकूल कृतिमच्चैत्रभिन्न पाकानुकूलकृत्यभावाश्रय' इत्येव एव कारार्थैकदेशविशेष्यकशाब्दबोध -इत्यपास्तम्, तद्धेतुत्वेन एकवचनस्य तथान्वयानुपपत्ते । चैत्रस्य अन्यविशेषणतया तत्रापि अन्वयानुपपत्तेश्च । न च चैत्रपदस्य विशेषणतया

विशेषणतया च वाक्यस्य अर्थबोधकत्वम्, तत्र पाकानुकूलकृतिमांश्चैत्र, पाकानुकूलकृतिमांश्च मैत्रश्च चैत्रान्य इति शाब्दबोध, इतरविशेषणत्व च विशेष्यत्वाभाव विशिष्ट यत् विशेषणत्व तदभाव इति वाच्यम् । तथात्वेऽपि 'चैत्रो मैत्रश्च गच्छत ' इति 'चैत्रो मैत्रादयश्च गच्छन्ति ' इत्यादौ द्विवचनबहुवचनयोरपि आपत्ते । न च 'चैत्रो गच्छति न मैत्र ' इतिवत् एकवचनोपपत्ति, तथात्वे तत्र गच्छतिपदानुषङ्गेण भिन्नवाक्यत्ववत् इहापि मुख्यविशेष्यभेदेन भिन्न वाक्यतापत्ते । अस्मन्मते तु चैत्रवृत्ति मैत्रावृत्तिश्च एककर्तृका भावना इति बोध । भेदे च चैत्रमैत्रोभयनिष्ठ कर्तृ पार्थिक एकत्वमेव वा तत्र लक्षणा इति न विरोध ।

परन्तु यत्र तु पचति चैत्रे, मैत्रे चापचति 'कीदृशौ चैत्रमैत्रौ ' इति प्रश्ने 'चैत्र एव पचति ' इत्युत्तरं भवति । अत एव 'कीदृशश्चैत्र ' इति प्रश्ने 'पचति ' इत्युत्तरापत्ते न प्रथमान्तविशेष्यको बोध इत्युक्तम् । 'कीदृशी कृति ' इति प्रश्नोत्तर तु न विद्वानानुभवसिद्धत्वात् इत्याद्युक्तम् । अत अनुभवसिद्धत्वेन भावना मुख्यविशेष्यत्वम् । रहस्य पृ २७–३०

यदपि क (आख्यातेऽपि कर्त्राद्यलक्षणा इति पूर्वमुक्तम् । तदपि कर्त्रादिकमपि ) न भावना प्रति विशेष्यम्, किन्तु भावनैव तद्विशेष्या । अन्यथा 'पचति भूते ' इति प्रयोगापत्ति, 'पक्ता भूते ' इतिवत्, तस्य योग्यत्वात् । 'पचति भवति ' इति आख्यातद्वयप्रयोगानापत्तेश्च । यत्तु 'अपाक्षीत् भवति, पक्ष्यति भवति ' इति मदुदाहृतप्रयोग स च भूषणानुसारं भूतत्वलक्षणया भूत–भाविपाककर्तृत्ववृत्ति–वर्तमानयुक्तताश्रयता इति शाब्दबोधाङ्गीकारात् नायुक्त । दृश्यते च यु ध्वे इत्यर्थे लोके भवति इति प्रयोग । एव 'पचति भवति ' इति प्रयोगोऽपि कर्तृविशेष्यत्वपक्षे नोपपद्यते । तथात्वे 'पचन्ति भवन्ति ' इति प्रयोगापत्तेश्च । 'भावप्रधान-माख्यातम् ' इति निरुक्तस्मृत्या 'भावनातिरिक्ताख्याता-र्थमात्र प्रति भावपदवाच्यभावनाया विशेष्यत्वोक्तेश्च । अत्र हि न प्रकृत्यर्थ प्रति भावनाया प्राधान्य नोच्यते ।

'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत तयोस्तु प्रत्यय: प्राधान्येन ' इति स्मृत्यैव प्रकृत्यर्थनिरूपितप्रत्ययार्थ प्राधान्यस्य सुवर्थसाधारण्येन सिद्धे ।

न च 'धात्वर्थ केवल शुद्धो भाव इत्यभिधीयते ' इति वैयाकरणस्मृत्यनुरोधेन भावशब्दस्य धात्वर्थपरत्वाभ्युपगमात् तस्यैव आख्यातार्थापेक्षया प्राधान्य अनया स्मृत्या ('भावप्रधानमाख्यातम् ' इत्यनया ) नियम्यते, प्रत्ययार्थप्राधान्यस्मृतिस्तु सामान्यविषयत्वात् तदन्याभि-प्रायेण व्याख्येया इति वैयाकरणमतमेव युक्त इति वाच्यम् । एतस्य परिभाषारूपत्वेन नदीवृद्ध्यादिवत् अयत्नाप्रवृत्ते । अत एव व्याकरणशास्त्रे एव तत्र 'भावे घञ्' (पा० ३।३।१८ ) इत्यादौ प्रवृत्ति । साऽपि न सर्वत्र 'भावे ल्युट् ' इत्यादौ अप्रवृत्ते । आख्यात निरूढभावशब्देन निरूढत्वात् अप्रत्यया वा प्रवृत्त्या भावनानुकूलव्यापारत्वेन भावत्वेन उच्यते । न धात्वर्थ ।

अत एव –'सर्वमाख्यातज नाम ' इति स्मृत्या आख्यातशब्दस्य धातुपरत्वावसायात् अनयाऽपि स्मृत्या धातोरेव भावप्राधान्यनियमात् धात्वर्थमुख्यविशेष्यत्वोप-पत्ति – इत्यप्यपास्तम् । इदन्ते पाचकपदादौ आख्यात शब्दप्रयोगाभावेन तत्राख्यातशब्दस्य धातौ लाक्षणि-कत्वस्य लोकेऽपि शुभावितत्वात् । अतश्च आख्याताथौ द्वैकस्मै कस्य प्राधान्यम्, कस्य वा गुणत्व इत्यपेक्षिते 'भावप्रधानमाख्यातम ' ( निरुक्त १।१ ) इति स्मृत्या भावनातिरिक्ताख्यातार्थं प्रति भावनाया एव प्राधान्य इति नियम्यते । अत एव कालादिसाधारण्येन एक कार्य-कारणभाव इत्यपि लाघवम् । रहस्य पृ १८–३९, ० भावनाया मुख्यविशेष्यत्वम् । भावनातिरिक्ताख्याता-र्थस्य सर्वस्य भावनायामेव प्रकारता इति तस्या मुख्यविशे-ष्यत्व सिद्धम् । पृ ४६. ० भावनाया धात्वर्थत्वम् । ■ पृ ६८३, ० भावनाया सन्निपत्योपकारीतिकर्त-व्यता यत्प्रभावेण इतिकर्तव्यताकाङ्क्षानिवृत्ते आरादुप-कारीतिकर्तव्यताकाङ्क्षत्वम् । (पूर्वपक्षे) । पृ ११९३, ० भावनाया साध्यसाधनेतिकर्तव्यताकाङ्क्षाशालित्वम् । पृ ४४५, ० धात्वर्थविधानेऽपि प्रत्ययार्थ भूताया भावनाया विशेषणत्वेऽपि विधौ विधिगम्यत्व

गम्यते । पृ. ११३२, * शुद्धभावनाया विधिविषयत्वा योग. । पृ. ९५४. * भावनाया इष्टरूप फलं अस्ति न वा इति विचारः 'स्वर्गकामाधिकरणम्' इति निर्दिष्टो भाट्टग्रन्थे द्रष्टव्यः । * भावनाया धात्वर्थस्य धर्मत्वकरणत्वा न्यतरसमन्वयेन प्रकारता । रहस्य. पृ. ५७. * भावनाया धात्वर्थगुणफलयोर्द्वयो' अन्वयायोगः । सु. पृ. ८५३. * भावनाया यागः करणम्, अवघातादयः सन्निपातीनि अङ्गानि, प्रयाजादीनि आराद्‌उपकारकाणि अङ्गानि । यथा भोजने ओदनः करणं शाकसूपादयः सन्निपत्योपकारिणः, पीठदीपादयः आराद्‌उपकारिणः तद्वत् । वि ८।१।३ वर्णकं २. * ब्राह्मणे अग्निहोत्रादिवाक्यैः साध्यसाधनेतिकर्तव्यतावत्या भावनायां पुरुषा नियुज्यन्ते । वा २।१। १४।४६ पृ. ४५० पं. ८. * यस्तुतस्तु यस्मात् प्रत्ययः कृतधात्वर्थविच्छेदमेव स्वार्थं वदति तस्मात् फलभावनेऽपि शुद्धभावनेनावगते. नैवस्या भावनाया अनेकप्रकारधात्वर्थाविच्छेदः संभवति । सु. पृ. ७०७. * भावितिष्ठत्यादिषु करणानपेक्षणात्, पतनपतनादिषु च भाष्यानभ्युपगमात्, अकर्मकेषु कर्माभावात्, आसनशयनगमनादिषु संप्रदानापादानाभावात् सर्वैव सर्वभावनासु एकान्ततनिहितः । या ३।४।४।१३ पृ ९१४

* भावनातिरिक्ते नञः सम्बन्धात् पर्युदासः । 'नेक्षेतोद्यन्तमादित्यम्' इत्यत्र । भाट्ट. ४।१।३.

* भावनार्थे करोतिभावयतिभ्यां कथितेऽपि कर्तृसङ्ख्यादिप्रत्यायनार्थं पुनः प्रत्ययः उच्चार्यते । वा २।१।१।१ पृ. ३७९

* अकर्मकधातुयुक्तादपि आख्यातात् भावनाप्रतीतिः । वा. २।१।१।१ पृ. ३८४-८५.

* भावनाक्षेपादेव कर्तृप्रतीतिसिद्धेः आख्यातस्य कर्तृवाचित्वं कर्त्रधिकरणे ( ३।४।४ ) निषेत्स्यते । सु. पृ. ५४७

* भावनोपसर्जनधात्वर्थनिरूपणत्वात् कारकाणां धात्वर्थेनैव संबन्धसिद्धिः । स एव हि तानि स्वसिद्धयर्थमपेक्षते, भावनाऽपि च तथाभूतान्येव तानि गृह्णातीत्ययं संबन्धः । या. २।१।१।१ पृ. ३८२.

* भावनाकरणत्वं धात्वर्थस्यैव, न द्रव्यगुणयोः । मीन्या. * भावनाकरणत्वं उद्भिदादिज्ञानस्य भावनाभाव्यनिर्वर्तकत्वेन । मीन्या

* भावनाकर्म यत् आम्नायेरितेन पुंसा अनुष्ठितकर्माणि कदाचिदुत्पद्यते कुतश्चित्तु कारणात्र कदाचिदुत्पद्यते तत् नियोगप्रयुक्तत्वात् नियोगस्य च भावनाविषयत्वात् भावनाकर्म । सु. पृ ५८५.

* 'भावनातः प्राग्जाग् ( कर्तृकर्मणोः प्रत्ययेन ) कारकानभिधाने इति न्यायः । एतद्वर्णक एव 'अन्यतः प्राप्ते कर्तृकर्मणोराख्यातां' इति न्याय । 'एवं वर्ण्यमाने लौकिकन्यायानुगताः ( पाणिनि- )सूत्रार्थो वर्णितो भवति । सूत्राण्यपि च न्यायानुगतानि भवन्ति' इति शाबर भाष्यम् । अत्र वार्तिकम्- एवं च व्याख्यायमाने यत् लौकिकेन न्यायेन 'भावनातः... धानात्' अवगतं तदपि अनुगतं सूत्रैर्भविष्यति । वा. ३।४।४।१३ पृ ९१६

* भावनात्वम् । भूतभविष्यद्वर्तमानापदेशमानेष्वेव अपारमार्थिक भवितृव्यापारस्य भावनात्वम्, न मिथ्यादिषु । वा. २।१।१।१ पृ. ३८१.

* भावनाद्वयम् । इह हि लिङादियुक्तेषु वाक्येषु द्वे भावने गम्येते शब्दात्मिका अर्थात्मिका च । तत्र अर्थात्मिका अर्थवादा. नापेक्ष्यन्ते । शब्दात्मिका तु अपेक्ष्यन्ते । सा हि एवं प्रवर्तते, स्वाध्यायाध्ययनविधिना ग्रहणे कृते विचारितः स्वाध्यायपदोपात्तश्च आम्नाय नियुज्यते भावयेदिति । तत्र लिङादीनां प्रयोजकत्वं तस्य पुरुषः प्रयोज्य, तेन किं इत्यपेक्षायां पुरुषप्रवर्तनं इति गम्यते । अथ तु योग्यतयैव लिङादिविषया निश्चीयते प्रवर्तयेदिति ततः किमिति अपेक्षिते पुरुषं इत्येव गम्यते । यद्यपि च अचेतनत्वात् लिङादिषु एवंविधं प्रयोक्तृत्वं न सम्भवति तथापि पुरुषस्य प्रयोजनस्य प्रयोजनत्वानुपपत्तेः तदर्थैवान्यद्वारेण विधायकत्वात् प्रयोजकता । यदि चैवं न कल्प्येत, नैवैषा विधायकस्य वाक्यस्यैव भवेत् । अथ तेनैवापेक्षिते पूर्वं संबन्धमुपजातापेक्षेण विधिविज्ञानेन इति संबध्यते । कथं इति प्राशस्त्यज्ञानानुगृहीतेन इति । सुच एवात् । बुद्धि-

विशेषाभिधानोपपन्नमेवेत्यम्, इति चेत्, न, तस्या. प्रत्ययार्थत्वेनाभ्युपगमात् । प्रत्ययस्य चैकत्वे वाचकभेदाद्वते वाच्यनानात्वायोगात् ।

धातवस्तु नानात्वात. करोतिसमानाधिकरणतया तदर्थभेदाभिधायिन इति साम्प्रतम् ।

अपि च—

भावाभावे प्रयोगस्य द्विधाऽपि खलु दर्शनात् ।
धात्वर्थवर्ति सामान्यं करोत्यर्थमुपागमत् ॥

'किं करोति, शब्दं ध्वनति' इति न ध्वनिजन्यमन्यत् । तदपि च विवक्षित धात्वर्थमात्राभिधानात् । तथा च नाभूतप्रादुर्भावनम् । अतो वस्तुतस्तदभावेऽपि प्रयुज्यमानस्य करोतेरिह कुतस्तदर्थः ? ।

तथा 'का क्रिया ? पाकः' इति धात्वर्थमात्रस्य क्रियाभिधानात् भावनायास्तत्सामर्थ्याच्च भावनाविशेषप्रतिनियतैनाधिकरण्यम् । सम्बन्धमात्रापेक्षमिति चेत्, न, विरुद्धेऽपि प्रसङ्गात् । प्राधान्यात्तिङन्तेष्वभिधेयत्वमिति चेत् । न, तत्रापि तद्विशेषणत्वात् धात्वर्थस्य तत्प्रधानार्थत्वात् प्राधान्यमभिमतम् । अतः सकलधात्वर्थानुयायिनः करोतेः तत्सामान्यार्थो नाभूतप्रादुर्भावनमिति शब्दप्रवृत्तिविदः प्रतिपेदिरे ।

तथा चोचुः 'क्रियावचना धातवः । कथं ज्ञायते क्रियावचनाः पचत्यादयः इति ? यदेषां करोतिसामानाधिकरण्यम् । करोतयः क्रियासामान्यवचनाः, क्रियाविशेषवचनाः पचत्यादयः ।'

अथ मतम्, न भावनारहितो धात्वर्थः । सर्वेण तेन किंचित्कृयते । तत्,

सर्वत्र यदि धात्वर्थे भाव्यं सैवास्तु भावना ।
स्वर्गभूतिसमर्थोऽन्यो व्यापारः कोऽनुपागतः ॥

भाव्यसाधनसमर्थो हि व्यापारो भावना । धात्वर्थ एव चेत् कस्यचित्तत्तत्सम्पत्त्यनुकूलतया स एव भावनाऽस्तु, न तद्व्यतिरिक्तभावनायोग । एव चैव खलु स्वर्गादिफलोदयानुकूलः यागादिधात्वर्थभेदमात्रं व्यापारान्तरमुपलम्भात्मदे पद भावनापदेनोऽभिनिवेश । यागादय एव तु स्वर्गादिफलोदयाय चोदितास्तत्सामर्थ्येन तथा व्यपदेशमर्हन्ति । अव्यापारस्वभावात् धात्वर्थस्य नैनमिति यदि मन्येत । वक्तव्यः व्यापारे यदि समीहितसर्गोत्पादनागुणः साध्यस्वभावो धर्मभेदः तदपेक्षया तथा व्यपदेश्यो न धात्वर्थस्तथाविधस्वभावत्वमतिवर्तत इति ।

अथ परिस्पन्दस्वरूपा स्पन्दात्मना धात्वर्थानामविहन्ता भावनात्मम् । अस्पन्दमानसाधनेषु 'आस्ते' 'शेते' 'यजते' 'जानाति' इति चाधकर्तृकेषु तदभावप्रसङ्गः ।

[उम्बेकः– अपरेषां तु दर्शनम्– आत्मकर्तृकः प्रयत्नो भावना भूवादिवर्तृकगमनागमनादिधात्वर्थात् व्यतिरिक्तः । चास्यानन्ययथाख्यः । तस्य स्पन्दमानास्पन्दमानसाधनेषु 'पचति' 'गच्छति' 'आस्ते' 'शेते' 'यजते' 'जानाति' इत्यादिषु च समनात् सर्वेनाख्यातमर्थवदिति नास्ति अव्याप्तिदोषः । तच्चैतत् दूषणायोपन्यस्यति ।]

व्यापारोऽपि भावना ।

कर्त्रन्तरेऽस्य नाख्यातं धीमान्यात्रोपचारतः ।

[उम्बेकः– 'कूलं पतति' 'रथो गच्छति' 'अग्निर्ज्वलति' इत्यादिकूलादिकर्तृषु प्रयत्नाभावादाख्यातप्रयोगानुपपत्तिरित्यर्थः ।]

योऽपि मन्यते सकलपुरुषप्रत्यात्मवेदनीयश्चेतनव्यापार. [उम्बेकः– 'सकलपुरुषप्रत्यात्मवेदनीयश्चेतनव्यापार' इति मानसं प्रत्यक्षमुपन्यस्तम् ।] औदासीन्यप्रच्युत्युपलक्षणस्वभावः प्रयत्नादिशब्दवेदनीयो व्यापारो भावना । कर्त्रन्तरेऽस्य नाख्यातं प्रयुज्येत 'कूलं पतति, रथो गच्छति, अग्निर्ज्वलति' इति ।

अपि च—

धातुगोचरनिर्वृत्तिपर्यन्तत्वाच्च कर्मता ॥
सर्वत्र तस्य न परः करणाभिमतेऽप्यसौ ॥ इति ।

[उम्बेकः– यत्रापि धात्वर्थस्य यागाधिकारे करणत्वमीप्सितमिह तत्रापि प्रयत्नान्तरानुपलब्धेर्न फलस्य कर्मत्वं वक्तुं शक्यते इत्यर्थः ।]

पुरुषप्रयत्नो हि धात्वर्थनिर्वृत्तिमात्रापवर्गीति सर्वत्र काम्ये नित्ये नैमित्तिके च तत्कर्मतायासङ्गः व्यापारविशेषानुपलम्भात् । न हि काम्ये प्रयोगे करणाभिमतस्य धात्वर्थस्य पश्चात् तत्साध्यस्वर्गादिफलविशेषसाधनप्रयत्नभेद समस्ति । अपूर्वं तु न फलभेदः । न च कर्तृ-

व्यापारः, करणव्यापारत्वाभ्युपगमात् । अन्यथा व्यापारसद्भावात् कारकभेदाभावप्रसङ्गात् इत्यलमतिप्रसङ्गेन ।

**कर्मणो भावभेदं यः फलावधितया वदेत् ।**
**तस्यादृष्टफलेष्विष्टमनुष्ठानं न युक्तिमत् ॥**

[ उम्बेकः— अपर मतम् । फलपर्यन्तं कर्म कर्तव्यतया चोद्यते ' यजेत स्वर्गकामः ' इत्येवमादिभिर्वाक्यैः । कर्मस्वरूपं धात्वर्थः, फलपर्यन्तत्वं त्वाख्यातार्थः । सा च भावनेति । तदेतदपि निराकरणाय दर्शयति— कर्मण इति । एवमुपन्यस्य निराकरोति— तस्येति । अदृष्टफलेषु यागादिषु फलपर्यन्तस्वरूपस्याप्रतीयमानत्वादनुष्ठाननियमस्वरूपो नियुक्तोऽपि नानुतिष्ठेदित्यर्थः । ]

धात्वर्थो हि कर्मस्वरूपमात्रेणोपादत्ते आख्यातोपसर्जनात्तु भावनात्मनाऽवगम्यते । तथाहि, यावता कर्मक्षणेनोत्पादनियमेनेदमर्थं साधयति तावत्येवासौ प्रयुज्यते । अवस्थेन तेन फलोत्पादनियमेनावच्छिद्यमानः स स कर्मक्षणोत्पादनियमस्तेन तेनाख्यातेन अभिधीयते । तदिदं फलावधिकं कर्म भावनात्मनाऽवसीयते । नामाख्यातार्थः फलं भावनायामिति । फलोत्पादकावस्थाऽऽख्यातार्थः ।

तथा यतेन यथा किञ्चिद्दर्शितं दर्शितम् । एवमवस्थाभेदेन भावनाकर्मणोर्भेदः । उक्तं च— पूर्वापरीभूतं भावमाख्यातमाचष्टे 'व्रजति पचति' इत्युपक्रमप्रभृत्यपवर्गपर्यन्तम् । तत्र प्रतिक्षणमपवर्गिणः कर्मणः क्वउपक्रमापवर्गौ । फलापेक्षया तु कल्प्येते इति यो वदेत्, तस्य प्रत्यक्षफलेषु कर्मसु कामसमारम्भविरामौ कल्प्येते, पुरस्तात्तत्पर्यन्तकर्मक्षणप्रचयपरिज्ञानात् । अदृष्टफलकर्मस्वपि तत्पर्यन्तपरिमाणभेदेषु कथं प्रवर्तेत ? न हि नियुक्तोऽप्यप्रसिद्धनियमविशेषः प्रवर्तितुमर्हति । प्रवृत्तो वा पुरःफलादर्शनादकृतार्थमात्मानमवबुध्यमानो न विरन्तुमर्हति । शास्त्रात् फलोत्पत्तिं प्रतिपद्य विरमति, इति चेत्, न । कृतशास्त्रार्थस्य फलोत्पत्तेः, फलोत्पत्त्या च कृतशास्त्रार्थत्वादितरेतराश्रयप्रसङ्गादित्यलमतिप्रसङ्गेन । प्रकृतमनुसरामः ।

[ उम्बेकः— प्रकृतमनुसरामः इत्यस्याभेदपक्षादितरभवनान्तर्यव्यतिरेकपक्षं दूषयितुं यतामहे इत्यर्थः । ]



**धातुप्रत्यययोर्वाच्ये प्रतीयेते न हि क्रिये ।**
**संबन्धो नावकल्प्येत द्वयोः साध्याभिधायिनोः ॥**

[ उम्बेकः— यदि प्रत्ययः क्रियान्तरमाचक्षीत ततो धातुप्रत्यययोर्वाच्यं क्रियाद्वयं प्रतीयेत । न क्रियमाणद्वयमिह क्रियाद्वयमुपलभामहे । अतो न प्रत्ययः क्रियावचन इति । ]

' येषा तूत्पत्तौ० ' ( २।१।१।४ ) इत्याख्यातवर्ती धात्वर्थः साध्यक्रियात्मकोऽपेक्ष्यते । यदि च प्रत्ययः क्रियान्तरमाचक्षीत क्रियाद्वयं प्रतीयेत ' ओदनं पचति, करोति पाकम् ' इति यथा । तस्माच्च धात्वर्थव्यतिरेकिण्याख्यातेषु क्रियाऽस्ति । साध्यस्य च साध्यान्तरेण सम्बन्धादर्शनात् तदभिधायिनोः प्रकृतिप्रत्यययोः समभिव्याहारानुपपत्तिः ।

[ उम्बेकः— ' येषा तूत्पत्तौ० ' इति भावार्थाधिकरणसूत्रे धात्वर्थस्य साध्यात्मनः क्रियात्वमुक्तमिति कुतः करणत्वसम्भवः । ततश्च क्रियान्तरप्रतीतिः स्यात् । ]

करणत्वात् धात्वर्थस्यानुपालम्भः इति चेत् ।

[ उम्बेक— ननु च करणत्वाद्धात्वर्थस्य क्रियाकारकवचनयोरुपपन्न एव समभिव्याहारः । न च पुनर्विरोधः । तस्य भावनासम्बन्धप्रतिपादनपरत्वादित्यभिप्रायेण चोदयति— करणत्वादिति । ]

न, ' येषा तूत्पत्तौ ' इति विरोधात् ।

[ उम्बेकः— तत्र धात्वर्थस्य साध्यत्वप्रतिपादनपरत्वं मन्यमानः परिहारमाह— न येषामिति । ]

न हि तद्भावनाभिप्रायम् । नामपदार्थस्य धात्वर्थसम्बन्धे द्रव्यार्थता अपेक्ष्यते, संबन्धप्रतिपादनार्थत्वात् ।

[ उम्बेकः— नामपदार्थस्य व्रीह्यादेर्धात्वर्थसम्बन्धे या द्रव्यार्थता तदपेक्षितसाध्यसाधनसम्बन्धप्रतिपादनार्थत्वात्तस्य सूत्रस्य । ]

अपि च—

**न भावेनापि धात्वर्थे कार्यैरिति समागमः ।**
**अक्रियात्वादन्यरोधाच्छब्दान्तरत्वात्करणस्य च ॥**

[ उम्बेक.— धात्वर्थभावनयोः कारकत्वेन कारकान्तरसेवेन च व्रीह्यादेः कारकान्तरस्य सम्बन्धो न सम्भवतीति । न चेतिकर्तव्यतात्मना कारकानां भावनानुप्रवेशः

'काष्ठैः पचति' इतिशब्दात् करणत्वमुद्दिश्यमाना कथं भावेनाग्रहणात्। अतः 'काष्ठैः पचति' इति समभिव्याहारे ■ स्यादिति श्लोकार्थः ।]

न तावद्द्वारसंसर्गिणा काष्ठानाम्, करणतया क्रियापेक्षितामनवरमनः वाक्यान्तरेण संगमायोगात्। नापि भावनामेवाश्रित्य, तस्या वाक्यान्तरावच्छेदात्। नाप्यन्तरतया एकस्य, नान्वयस्यान् करणस्य। तदेव यत्र करणभावः क्रियाया तस्या अनवरुद्धत्वादाकाङ्क्षायां चानियामकमिति अनुपपत्त्या 'काष्ठैः पचति' इति भवत्यन्वयः। अर्थाक्षिप्तभावनाद्वारः सम्बन्ध इति चेत्, न, अन्वयधानेन सम्बन्धोपगमात्। न हि 'मृदा घटम्', 'काष्ठैः पचति' इति सम. सम्बन्धागम। एवम् तैरकारकत्वादयनाच्य मपेक्षणात्।

[ उम्बेकः— अर्थाक्षिप्तभावनाद्वारकसम्बन्धाभ्युपगमे व्यवहितसम्बन्धाभ्युपगम प्राप्नोति, अपेक्षिताभूतक्रियाध्याहारपूर्वकत्वात्, मृदा घटमितिवत्। न चेह तथा, अभूतक्रियानपेक्षणात्। यथा 'घटम्' इत्युक्ते भवतीत्यभूता क्रियाऽपेक्ष्यते नैवमत्रेत्यर्थः।]

विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्प्यते।
कः प्रत्ययार्थो धात्वर्थव्यापारे यदि वर्तिता॥

[ उम्बेकः— उभयत्र प्रयोजकव्यापारवचनत्वात् प्रत्ययस्य धात्वोर्विक्लित्त्यर्थतादित्यर्थः।]

अपि च, विक्लिद्यन्ति पचन्तीत्युभयत्र प्रयोजकव्यापारस्य प्रत्ययेनाभिधानात् धातुभ्यां च विक्लित्तेरिति नार्थभेदः स्यात्। नन्वस्ति तावन्नर्थभेदेन व्यापारभेदः, तदभिधानान्न दोषः। तथाहि, विक्लिद्यन्तीति तण्डुलाः कर्तारः, पचन्तीति देवदत्तादयः। पुनर्भावात् कर्तृन्तरमभेदमाह, यदि साधननियोगादिकम्, तत्र तण्डुलानां कर्तृत्वम्, देवदत्तस्य तत्र कर्तार इति अविशेषप्रसङ्गः। अप्रगुणतया धातुना अभिधीयमानव्यापारत्वात् इदानीं प्रत्ययार्थः, कर्तृन्तरस्य भावनाया धातुनैवाभिधानात्। फलव्यापारयोर्भावनान्तरादारभ्याभावो इत्यसो धातु वाच्यः। फलार्थस्तु धात्वर्थवाचक प्रत्ययवाच्यः। नेत्यत्राम्।

न हि धात्वर्थकरण. फलभेदप्रभावन.॥

[ उम्बेकः—'धात्वर्थे फलभेदे न व्यापारो दृश्यतेऽन्तरा' इति पाठान्तरम्।]

सोऽपि व्यवहितफलेषु दृश्यते, सोऽपि हन्त्यादिधात्वर्थान्तर्गतत्वो न प्रत्ययार्थः। प्रयत्नान्तरजन्मा न प्राचीनधातुगोचरप्रभावनीय इति।

[ उम्बेकः— अतो यथैव पाकादेः पचत्यादिधात्वर्थस्य प्रयत्नान्तरजन्मनो न प्रत्ययार्थत्वं तथावगीत्यर्थः। ... '■ प्रायो धातुगोचरप्रभावनीयः' इति क्वचित्पाठः। तत्राप्ययमर्थः— यद्यपि व्यवहितफलेषु श्येनादिषु व्यापारान्तरं प्रत्ययवाच्यमस्ति तथापि ■ कर्तृव्यापारः पचत्यादिधातुगोचरप्रभावनीय ■। न हि द्वितीयः फलकर्मकोऽस्ति, यः प्रत्ययवाच्यः स्यात्। अतस्तत्परमेव प्रत्ययानर्थक्यम्। धातुगोचरः प्रभावनीयो यस्येति विग्रहः। पाकादिधात्वर्थकर्मक इति यावत्।]

कर्मणा च करोत्यर्थो व्याप्तोऽवस्तदयोगतः।
तदभावः प्रत्ययार्थसाधनेऽपि विभक्तयः॥

[ उम्बेकः— इतश्च न क्रियान्तरं प्रत्ययवाच्यमस्तीत्याह— कर्मणेति। नियमाद्धिकरणात् क्रियायास्तदभावे क्रियाभाव इत्यर्थः। यथोक्तम्—'करोतिः क्रियमाणेन न कश्चित्कर्मणा विना' इति। ननु च 'यजेत स्वर्गकामः' इत्यादावस्त्येव स्वर्गादि कर्म। यत्तु तत्र कर्मबुद्धिर्न जायते, तद् द्वितीयाऽभावात्। तदभावस्तु भावनार्थकारकविषयत्वात् कारकविभक्तीनाम्। तथा च 'उपांशुयाजमोदनकार्यैर्नरः पचेत्' इति भावनार्थकारकेषु कारकविभक्तयो दृश्यन्ते, न भावनाकारकेषु स्वर्गयागादिष्विशेषात्प्रत्याह— प्रत्ययार्थेति। अस्यायमर्थः— प्रत्ययार्थभावनाकारकेऽपि विभक्तिभिर्भवितव्यम्। 'कर्मणि द्वितीया' 'कर्तृकरणयोस्तृतीया' इत्येवमादिविभक्तिविधाने विशेषानुपादानात्। न च स्वर्गे द्वितीया पश्यामः, अतः कर्म नास्तीत्यवगम्यते।]

करोते गत्या सकर्मकप्रत्ययोगनिर्देश करोत्यर्थाभावं प्रतीम। यद्विशिष्टेनैव भूमास्मनः। तथाहि, न जातु 'यजेत स्वर्गम्' 'दद्यात् साम्यम्' 'आसीत गुणम्' इति दृष्टचरं लोके।

[ उम्बेकः— सकर्मकत्वात् क्रियायाः क्रियमाणाभावे तदभावः, यथा व्यापकाग्न्यभावे धूमाभाव इत्याह— करोतेरिति । ]

यदि मन्वीत संगतिरमर्थविभक्तिभेदाभावादेवम् । तथाहि, धात्वर्थसाधनात्यागाहिन्यः सुब्विभक्तयः, प्रत्ययार्थनियोगकर्मणि स्वर्गकामादौ तद्दर्शनात् ।

[ उम्बेकः— अस्यायमर्थः— प्रत्ययार्थभावनाकर्मणि स्वर्गादौ तत्करणे विधिपर्यायनियोगकर्मणि च यागादौ द्वितीयातृतीये कर्मकरणविभक्ती न दृश्येते । नियोगकर्मत्वं यागादेर्विषयत्वेन । प्रत्ययार्थनियोगकर्मणि स्वर्गकामादाविति व्यधिकरणे सप्तम्यौ । स्वर्गकामादौ शब्दे प्रत्ययार्थनियोगकर्मणि विषये कारकविभक्तिर्न दृश्यते इत्यर्थः । यद्वा सामानाधिकरण्यम् । सिद्धान्त्यादिना स्वर्गकामादिशब्दस्य फलपरत्वेनाभ्युपगम्यमानत्वात् । ततश्चायमर्थो भवति । स्वर्गादौ भाव्यतया विधेश्च कर्मणि कारकविभक्त्यदर्शनादिति । ]

नव वार्तम् । एवं सति दोषत्वे सम्बन्धहेतोः षष्ठ्या अप्यादृतप्रसरत्वात् ।

[ उम्बेकः— सर्वत्र तदभावत्वं न प्रामाणिकमिति । यदि स्वर्गस्य द्वितीयाऽभावात्कर्मणोऽनभिव्यक्तेः कर्मत्वं न विवक्षितं ततः 'कारकाणामविवक्षा शेषः' इति न्यायाच्च शेषलक्षणा षष्ठी स्यात् स्वर्गस्य यजेतेति स्वर्गभावनयोः सम्बन्धप्रतिपादिका । न च तामुपलभामहे । तेन न कथञ्चिदुद्भूतः कर्मसम्बन्ध इत्यर्थः । ]

अपिच प्रत्ययार्थभावनाकरणधात्वर्थनामधेयेभ्यो विश्वजिदादिभ्यः करणविभक्तिरीक्षमाणैरेवाध्यवसातुमर्हति । अस्त्येव कर्मसम्बन्धः 'यजेत स्वर्गकामः' इति चेत् ।

[ उम्बेकः— ननु 'स्वर्गकामः' इत्यत्र पदे स्वर्गः श्रूयते । स तु पुरुषार्थत्वेन साध्यत्वयोग्यः, भावना च भाव्यापेक्षिणी, अतोऽस्त्येव कर्मसम्बन्धो द्वितीयामन्तरेणापीति चोदयति— अस्त्येवेति । ]

न, पुरुषविशेषणत्वेन साक्षादसंबन्धात् । 'स्वर्गाय यजेत' इति साक्षात्संगतिरिति चेत् । न, अकर्मरूपत्वात् कर्मरूपसंबन्धाभावस्य च भावनाभिधानाभावहेतुत्वात् । अकर्मता च चतुर्थीनिर्देशात् ।

[ उम्बेकः— ननु सामर्थ्यात्स्वर्गस्याप्यवगतनियोज्यपुरुषप्रतिपत्तेरविवक्षितत्वादप्रतीतस्वर्गभावप्रतिपादनपरत्वं स्वर्गकामपदस्य ततश्च पुरुषान्तरयोगो नास्ति । एवं चायमर्थो भवति— स्वर्गाय यजेतेति, तदेतच्चोदयति— स्वर्गायेति । ]

स्वर्गाय याग इति च धात्वर्थेनापि सम्बन्धनात् ।

[ उम्बेकः— न चतुर्थीनिर्दिष्टस्य कर्मत्वं गम्यते । 'शुक्तये पचति' 'तृप्त्यै भुङ्क्ते' इत्यादौ सत्यपि तृप्त्यादेः चतुर्थीनिर्देशे ओदनादिकर्मिकैव क्रिया प्रतीयते न तृप्त्यादिकर्मिकेत्यर्थः । न च कर्मणि चतुर्थी स्मर्यते । यदि चतुर्थीनिर्देशात् कर्मसम्बन्धोऽभ्युपगम्येत ततस्तदविशेषात्तत्रापि स्वर्गादेः कर्मत्वसम्बन्धप्रसङ्ग इत्याह— स्वर्गायेति । तस्मात्कर्माभावात् क्रियान्तराभाव इति सिद्धम् । ]

तुल्यार्थत्वं भावयति भवतीति प्रसज्यते ।
कः प्रत्ययार्थो धातुश्च व्यापारे खलु कर्तरि ॥

भावयति घटं कुम्भकारः, भवति घट इत्यपि प्रसज्येत । तुल्यार्थत्वात् । तथाहि एकत्र कर्तुः ) कुम्भकारस्य व्यापारं णिजाचष्टे, अन्यत्राख्यातप्रत्यय इति न भिद्यतेऽर्थः । प्रयोजकव्यापारे णिजर्थः कर्तृव्यापार आख्यातार्थ इति नानार्थत्वं योऽपि मन्यते, यत्कृत्यस्तेनेह कर्तृप्रयोजकभेदः । यदि साधनानां प्रवर्तयिता निवर्तयिता न कर्ता स चैकः कुम्भकार एवेति तद्व्यापाराभिधाना तुल्यार्थत्वम् । घटः कर्ता, प्रयोजकः कुम्भकार इति चेत्, कथमचेतनस्य साधनप्रवृत्तिनिवृत्त्योरपटस्य कर्तृत्वं तदन्तं कुम्भकारमतिक्रम्य ? अथागुणत्वे धातुनाऽभिधीयमानव्यापारत्वम् । कस्तर्हीदानीमाख्यातार्थः ? धातुनाऽभिहितत्वात्तद्व्यापारस्य । न च व्यापारभेददर्शनम्, येन धातुप्रत्यययोर्विभागः स्यात् । करणत्वं च शब्दतोऽन्यतो वा धात्वर्थस्योभयत्राप्यविशिष्टमिति दुर्वारं तुल्यार्थत्वम् । अतो न प्रत्ययो भावनावचन इति युक्तम् ।

ण्यन्तस्य भवतेरर्थः केनांशेनाभिधीयते ॥

किञ्च—

कर्तृव्यापारदृष्टश्च पश्चाद्वी यदि भावना ।
धात्वर्थान्तररूपः स्यात् सोऽप्यधिश्रयणादिकः ॥

यदि च कर्तृव्यापारो भावना, स च पच्यादिष्व-धिश्रयणादिकः, न पचिरेवोपादत्ते । अन्यथा सिध्यति-चिकित्सतिस्यामविशेषः स्यात् ।

[ उम्वेकः—अस्यायमर्थः– यदि सिद्ध्यतिचिकित्स-तीतिवत् पचिरपि प्रयोज्यव्यापारवचनः स्यात् तत्स्था-पिव देवदत्तः पचतीति कर्तृभेदेन सामानाधिकरण्यं न स्यादेति । ]

अथापि नोपादत्त तथाप्यधिश्रयणादिव्यापारसन्तानार्थं इति नान्यो धात्वर्थाद्भावनापदार्थः । अथ मतम्–करोतीत्यन्वितस्वभावस्य प्रत्ययस्य विषयतयाऽनुगतात्मा व्यावृत्तानग्रहणगोचरेभ्यो धात्वर्थेभ्योऽन्यो भावनापदार्थ इति, तदसत् । एवं हि सामान्यलक्षणमनुपातितया धात्वर्थसामान्यरूप एव स्यात् । न पदार्थान्तरं भावना-पदार्थः ।

अथ मतम्, तस्य साध्यतया सामान्यं न गोत्वादि-वत्सद्रूपतया । तस्याः प्रतिपुरुषं शीघ्रं करोति मन्दं करोतीति स्वसामान्यविशेषाभ्यां योगात् । धात्वर्थगति तु करणसामान्यमन्यदेव ।

उक्तं च—

अन्यदेव हि धात्वर्थसामान्यकरणात्मकम् ।
अन्यच्च भावना नाम साध्यत्वेन व्यवस्थितम् ॥

तदेतदपेशलम् । तथाहि—

न क्रियाकरणाकारे द्वे ज्ञाने अनुयायिनी ।
यतः प्रतीमः सामान्ये द्वे साध्यसमवायिनी ॥

नहि करणं करोमिति क्रियाकारकव्यतिरिक्तेऽर्थे पच्यादिषु प्रत्ययः, अतः क्रियारूपव्यतिरिक्तं करणात्मकं धात्वर्थसामान्यं कल्प्येत ।

शीघ्रमन्दादिश्च धात्वर्थसामान्यस्यैव करोतिवाच्यस्या-वान्तरसामान्यभेदः । गोत्वशाबलेयादिरिवाश्वत्वस्य ।

उक्तं च–

न हि धात्वर्थकरणः फलभेदप्रभावनः ।
धात्वर्थं फलभेदं च व्यापारो दृश्यतेऽन्तरा ॥

[ उम्वेकः– यदि क्रियाख्या प्रयत्नाख्या अन्या भावना मतया नाभ्युपगम्येत कस्य तर्हि शीघ्रं करोति मन्दं करोतीति शीघ्रमन्दादयो विशेषा इत्यपेक्षिते तत्राह—शीघ्रमन्देति । ]

वाच्यो लक्षणभेदश्च तत्र धात्वर्थभावयोः ।
भावः परिस्पन्द इति यद्यत्रासावसंभवः ॥

[ उम्वेकः– यदि च धात्वर्थभावनयोर्भेदः स्यात्तो घटपटयोरिव रूपभेदोऽपि दर्शयितव्यः । न चासौ दर्शयितुं शक्यते इत्यभिप्रायेणाह– वाच्य इति । ]

ननु शक्यते एव रूपभेदो दर्शयितुं स्पन्दात्मा भावः अस्पन्दात्मा धात्वर्थः इति, इत्याशङ्क्याह– भाव इति । ]

अयस्य च भावनाधात्वर्थभेदवादिना तयोः स्पष्टो रूपभेदो दर्शयितव्यः । अस्पन्दात्मा धात्वर्थः स्पन्दात्मको भावः इति चेत्, एवमस्पन्दमानात्मस्वपि तु यजते ददातीत्यादिधात्वर्थेषु अभावप्रसङ्गः । गच्छत्यादौ च धात्वर्थस्य भावनात्वप्रसङ्गः । चेतनव्यापारस्तु पुरस्तात् प्रत्युक्तः ।

कश्चैष परिस्पन्दः ? न खल्वयमाश्रयाभिमताद्भेदेन गम्यते ।

[ उम्वेकः– स्पन्द इति विभागाभिप्रायमेतत् देव-दत्तादेः संयोगविभागलक्षणस्वभावोऽन्यः परिस्पन्दो न गम्यते इत्यर्थः । ]

कथं न गम्यते ? यत्र खल्वाश्रये प्रत्यक्षे कदा-चिच्चलतीति प्रत्ययः प्रादुर्भवत्यतिरिक्तमर्थमवलम्बते ।

नैतत्सारम् ।

कार्यं विभागसंयोगलक्षणं चलतीति धीः ।
आलम्बतां ततो नान्यो विशेषो लक्ष्यते स्थितात् ॥

[ उम्वेकः— चलतीति प्रत्ययस्य देवदत्तकार्य-संयोगविभागालम्बनत्वात् . संयोगविभागविलक्षणस्वभावो-ऽन्यः स्पन्दो देवदत्तात् गम्यते इत्यर्थः । कार्यमित्या-लम्बनगतकादाचित्कत्वेन प्रत्ययकादाचित्कता दर्शयति– तत इति । स्थितात् निश्चलात् चलतो देवदत्तस्य संयोग-विभागावेव विशेषो न तदतिरिक्तो भवदभिमतः स्पन्द इत्यर्थः । ]

स खलु परिस्पन्दोऽक्षगोचरः पूर्वोत्तरदेशसंयोग-विभागफलोऽभ्युपेयते । तथा च तावेव गोचरस्तस्य प्रत्ययः । न खलु पूर्वोत्तरदेशहानोपादाने अप्रतिपद्य-

[ उम्बेकः— इदानीमुक्तमर्थं विवृणोति— तद्विपरीतस्येति । अन्तरङ्गाव्यभिचारिविपरीतस्य व्यभिचारिणो बहिरङ्गस्य च प्रयत्नादेर्हेतुत्वमयुक्तमिति कृत्वा अन्तरङ्गमव्यभिचारि च कर्म कारणं संयोगविभागयोरप्रसिद्धमपि कल्पितमित्युच्यते । तदयुक्तम् । संयोगविभागवत्कर्मण्यपि प्रयत्नस्य बहिरङ्गत्वव्यभिचारित्वाविशेषात्कारणत्वापत्तेः । अथ आत्माधिकरणमपि प्रयत्नादिपारम्पर्यसम्बन्धात् निमित्तकारणत्वेऽविशेषेऽपि निरन्तरं स्पन्दमारभते इत्युच्यते, तत संयोगविभागयोरप्येवं प्रयत्नः कारणं स्यादित्यविशेषः ]

प्रायेण च कर्महेतुः संयोगविभागैकाधिकरणा इति यदपि विवेदितत् ।

[ उम्बेकः— अपि च गुरुत्वादेः पतनादिकर्महेतोः संयोगविभागैकाधिकरण्यं व्यस्तीति न बहिरङ्गत्वं वक्तुं शक्यते इत्याह— प्रायेणेति । ]

हेतुमत्ता च कार्येण ततः प्रागनुमीयते ।
वर्तमानावभासः स्यान्न क्रियाधिगमक्षणः ॥

[ उम्बेकः— संयोगविभागाभ्यां कार्यभूताभ्यां कारणभूतः परिस्पन्दोऽनुमीयमानोऽतिक्रान्तोऽनुमीयते न वर्तमानः । न हि संयोगविभागज्ञानकाले वर्तमानः परिस्पन्दः संयोगविभागयोः कारणम् । उभयोरनिपात् न समानकालयोः कार्यकारणभाव इष्यते, किं तर्हि ? पौर्वापर्यव्यवस्थितयोः । तेन यद्यपि संयोगविभागकाल यावत् परिस्पन्दोऽधिगम्यते तथापि अनन्तरपूर्वकालस्य भवता कारणं न तत्कालस्य । अतः 'चलति' इति वर्तमानपरिस्पन्दावभासो न युक्तः स्यात् ।

उक्तं च —

'तद्वानमानिमानं च हेतुत्वेन वार्यते । पौर्वापर्यविनिर्मुक्तं कार्यकारणकालयम् ॥' इति । ]

कार्योत्पादनप्रत्यनन्तरक्षणं हेतुसत्त्वं तदुपयोगि, न वर्तमानत्वम्, तस्य तदा सिद्धत्वात् । ( अतः कार्येणानुमितं तत्कालस्थैवानुमिनोति, न वर्तमानकालम् ) । तथा च कार्यद्वारकजन्मा ततः क्रमात्क्रियागोचरः प्रत्ययो न वर्तमानावगाहः स्यात् ।

अपि च—

संयोगान्तं वर्तमानं तत उन्नीयते कथम् ।
विभागतो मीयमानं स्थाणावप्येतदापतेत् ॥

[ उम्बेकः— विभागं संयोगं च उत्पाद्य कर्म विनश्यतीति वैशेषिकाः । तेन विभागोपक्रमं संयोगान्तं कर्म विभागपूर्वकसंयोगोत्तरकालं विनष्टमेवानुमीयते, न वर्तमानम् । चलतीति च वर्तमानप्रतिभासः, तस्मात्संनुमीयमानक्रियालम्बनमेवैतत् ज्ञानं अपि तु वर्तमानसंयोगालम्बनं प्रत्यक्षमेवेति न्याय्यम् ।

ननु च विभागादेव क्रियामनुमास्यामहे, तथा च वर्तमानप्रतिभासो न विरुध्यते संयोगान्तत्वेन तदा तस्य वर्तमानत्वादित्याशङ्क्याह— विभागत इति । '

यदि विभागानुमेयं कर्मेत्युच्यते तथा सति स्थिते स्थाणावपि कर्मानुमानप्रसङ्गः । स्थाणुत्वेनविभागस्य स्थाणावपि विद्यमानत्वात् । अथ देशविभागो लिङ्गम्, न च स्थाणोर्देशभूतेन द्रव्येण विभागः, अतः कथं तत्र कर्मानुमानम्, इत्युच्यते तथा सति चलित्वा स्थिते देवदत्तादौ पृथिव्यादिदेशविभागस्य विद्यमानत्वात् कर्मानुमानप्रसङ्गः न चाविरले विभागो लिङ्गमिति वक्तव्यं विभागान्तरस्यैवाया वर्तमानावगाहवर्तमानावभासाभावप्रसङ्गादित्यर्थः । ]

संयोगान्तं कर्म संयोगोत्पादज्ञानकगोचरकालमनुमीयमानं न वर्तमानम्, संयोगविभागौ तु वर्तमानौ । ज्ञानस्यानुरूपश्च विषयः, न तु तद्विपरीतः । तस्माच्चलतीत्येव चल्तीति प्रत्ययविषयता, न तु कर्मणः ।

अथ विभागानुमेयत्वात्प्रत्यक्षस्य आसंयोगोत्पादं व्यवस्थानात् वर्तमानमनुमीयते इति, तदयुक्तम् । स्थाणावपि प्रसङ्गात् । विभागस्य तुल्यत्वात् ।

तस्मात् गुणविशेष एव धात्वर्थः क्रिया, न तु तदतिरिच्यमानात्मा क्रियापदार्थः, यः प्रत्ययस्य धात्वर्थोऽभिधेयः स्यात् ।

[ उम्बेकः— यथा चल्तीत्यत्र ,प्रत्ययः संयोगविभागालम्बनस्तथा पचत्यादिशब्दजनिता अपि प्रत्ययाः संयोगविभागसमुदायविशेषालम्बना न तद्व्यतिरिक्तक्रियाग्राहिण इत्याह— तस्मादिति । ]

न फलनिमित्तयोरन्यतरापत्तेः । निमित्तत्वे तु यावज्जीवश्रुत्युपसंहारे स्यादानर्थक्यम् । अनुपसंहारे त्वेतत् स्यात् ।

[ उम्बेकः– यदि स्वर्गस्य साध्यत्वं नाभ्युपगम्यते ततः फलनिमित्तयोर्मध्ये अन्यतरस्य निमित्तस्य आपत्तेः निमित्तप्रतिपादकं स्वर्गकामादिपदं स्यात् । स्वर्गेच्छा चेद्भवति यजेत जुहुयाच्चेति । निमित्तत्वे तु 'यावज्जीवमग्निहोत्रं जुहुयात्' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्येवमादिसामान्यश्रुतिविशेषोपसंहारयोरभ्युपगन्तव्यम् । 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति जीवता स्वर्गकामेन सता होतव्यं यष्टव्यं चेति । एवं च सामान्यश्रुतेः अकिञ्चित्करत्वेन आनर्थक्यमेव स्यात् । कामश्रुतेरेवाधिकारार्थत्वात् । यदि च सामान्यश्रुत्युपसंहारोऽयं नाभ्युपगम्यते ततो विशेषश्रुतेरानर्थक्यं स्यात् । सामान्यश्रुतित एव स्वर्गकामस्याप्यनुष्ठानोपपत्तेः । तदेतदाह– अनुपसंहारे इति । सामान्यश्रुत्यनुपसंहारे त्वेतस्याः विशेषश्रुतेः आनर्थक्यं स्यात् । स्वर्गकामस्य च तया सामान्यश्रुत्या अनुष्ठानं चोदितमेव, किं पुनर्वचनेन स्वर्गकामो यजेत, स्वर्गकामो जुहुयादिति । ]

स्याच्चानर्थक्यं नित्येषु परिहारो न काम्येषु ।

[ उम्बेकः– एवं मीमांसकेन चोदिते सति पूर्वपक्षवाद्याह– स्याच्चेति । यान्यग्निहोत्रदर्शपूर्णमासादीनि कर्माणि नित्यानि सन्ति पुनः कामसम्बन्धेन विधीयन्ते तेषां पुनःश्रुत्यानर्थक्यात् भवतु स्वर्गकामादिपदं फलप्रतिपादकम्, यानि पुनः केवलकामसम्बन्धेन चोद्यन्ते यथा 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इत्येवमादीनि कर्माणि, तेषु पशुकामादिपदस्य निमित्तार्थत्वमविरुद्धम् । अथवा अग्निहोत्रादावपि स्वर्गकामादिपदस्य निमित्तार्थत्वेन, न फलार्थता । न हि भावनाऽभावे स्वर्गादिर्भाव्यत्वं सम्भवति । यदि तु तथा सति सामान्यश्रुत्यानर्थक्यं भवति, भवतु । किं कुर्मः ? सर्वथा तावदीदृशः शब्दार्थो नावगम्यते इति । ]

अपि चानर्थक्यं स्यादित्यनर्थो नावगन्तुं शक्यते इत्युक्तम् ।

[ उम्बेकः– पूर्वापरविरोधेन परिहारान्तरमाह– अपि चेति । ]

पुनरुपदेशाद्वा स्वर्गकामः पुनः प्रयोक्ष्यते इति नानर्थक्यम् ।

[ उम्बेकः– यद्येतदानर्थक्यं अस्मिन् पक्षे चोदितं तदपि न भवति, पुनर्विधानेन द्विरनुष्ठानोपपत्तेः । तेन सामान्यश्रुतिबलात् स्वर्गकामोऽग्निहोत्रादि अनुष्ठास्यति, 'स्वर्गकामो जुहुयात्' इति पुनरनुष्ठानं स्यात् । अस्वर्गकामस्य तु सकृदेव । तेन पुनरनुष्ठानविधानार्थत्वादनभ्यासव्यवच्छेदकस्यापि नानर्थक्यमित्याह– पुनरिति । ]

तदनेनैव भगवान् ददर्श खलु बादरिः– न द्रव्यगुणसंस्कारव्यतिरिक्तस्यास्ति शेषता । द्रव्यगुणयोः खलु योग्यता । अतः कारकविभक्तितो वा विनापि वा शेषभावो गम्यते । संस्कारोऽपि संमार्गादिः द्रव्यतो वस्तुतो वा कर्मसम्बन्धी तत्र श्रुतिबलेन न प्रकरणेन क्रियां यायात्, यागादिस्तु प्रधानकर्मणो देवताकर्मणो वा कथं स्वर्गेण सम्बध्येत ? भावनाकर्मणा तेन तदन्तरितः सम्बध्येत, सा च नास्तीति गम्यमानो भगवान् बादरिः द्रव्यगुणसंस्कारेष्वेव शेषभावं मेने इति ।

[ उम्बेकः— द्रव्यगुणयोः व्रीह्यरुणिम्नोर्यागसम्बन्धयोः धातुवाच्ययोर्विभागरूपक्रिययोः व्रीहिभिररुणयेति तृतीयाश्रुतेः भूतभव्यसंनिकर्षवशात् साक्षात्तद्विनियोगेन वा शेषभावो गम्यते । संस्कारस्यापि ग्रहसंमार्गात् 'ग्रहं संमार्ष्टि' इति द्वितीयाश्रुतेः संस्कारस्य च संस्कार्यनिष्ठत्वमिति । वस्तुतो वा ग्रहादिसंबन्धोऽवगम्यते । तत्र प्रतिपत्त्युपरत संमार्गादिग्रहमुखेन ग्रहद्वारान्विती ज्योतिष्टोमक्रियां गच्छेत् निर्वर्तनयोग्याम् । तत्र प्रधानक्रियां प्रति शेषभावः धातुवाच्ययोः संयोगविभागयोः क्रियाशब्दाभिधेयत्वेनान्यतः साध्यत्वात् । यागस्तु यजेतेत्येवमादिशब्दादवगम्यमानः साध्यतोऽकर्मक एव प्रतीयते । देवतापूजात्मकत्वात् वा यागस्य पूज्यमानदेवताकर्मत्वं गम्यते । न कथञ्चित् कर्मभूतः स्वर्गसम्बन्धः । यदि तु भावना स्यात्तत्सद्द्वारेण यागस्य स्वर्गसंबन्धो भवेत् । सा चोक्तेन प्रकारेण नास्त्येवेति मन्यमानो भगवान् बादरिर्यागस्य न स्वर्गशेषत्वमिति मेने इति । ]

करोत्यर्थ इति। यदपि 'का क्रिया? पाकः' इत्युदाहृत तत्रापि भावनाविशेषनिबन्धनं सामानाधिकरण्यम्, न शुद्धपाकनिबन्धनम्, येन धात्वर्थवचनता करोतेः स्यात्। तदेतदाह– लक्ष्यते तयेति।]

'घण्टा ध्वनति' इति हि भाव्याभावेन भावनाभाव उच्यते। सर्वश्च धात्वर्थः किञ्चिदुत्पादयति ध्वननमपि द्रुप द्रु.पशानं वाऽन्ततो धात्वर्थ एव भाव्यः।

[उम्बेकः–तत्र भाव्यसमानाधिकरणस्य करोतेः यथा भावनाभावे न प्रयोगस्तथा दर्शयति– घण्टेति।]

न हि सर्वत्र धात्वर्थस्य करणतैव कर्मताऽपि तु क्वचित्तन्मात्रनिर्वृत्तिविवक्षायाम्।

[उम्बेकः– ननु धात्वर्थस्य करणत्वाभ्युपगमात् कथमिव कर्मत्वमुच्यते इत्याशङ्क्याह– नहीति।]

यद्यपि करणं धात्वर्थस्तथापि व्यापारसाध्यत्वात् कर्मताऽपि। तेन यदा धात्वर्थमात्रनिर्वृत्तिर्विवक्षिता भवति नान्यस्य फलस्य तदा कर्मनिर्देशो न विरुध्यते।]

'का क्रिया? पाकः' इति चेहापि द्विविधत्वात् शब्दार्थस्य श्रौतलभ्यभेदेन नाभावो भावनायाः शब्दतस्तु द्वितीयलक्षणामगम्यत्वात् पाकशब्दस्य।

[उम्बेकः— लक्ष्यते तयेति यदुक्तं तत् विवृणोति– का क्रियेति।

यद्भावनाप्रतिपादकशब्दाभावेन भावनाभावे सति 'का क्रिया? पाकः' इति सामानाधिकरण्यं करोतेरुदाहृत तदयुक्तम्। पाकशब्द एव हि भावनाप्रतिपादकः। न ह्यभिधेय एव शब्दार्थ इति व्यवस्था। किं तर्हि? यतरः शब्दः स शब्दार्थ इति पचिना लक्षितभावनाविशेषनिबन्धनमपि ऐकाधिकरण्यमत्रेति न दोषः।]

तिङन्तेऽपि तर्हि लभ्य एव भावोऽस्तु। नैतत्सारम्, यतः तर्हिं न कः पाको बुद्धिभेदमपह्नुते न भावनापरामर्शमन्तरेण न भाक्तमेतत्।

[उम्बेकः— यतः 'कः पाकः' 'पचति' इत्यत्र बुद्धिभेदो न स्यात्, अस्ति चासौ। तथाहि पाक इत्यत्र सिद्धरूपो धात्वर्थो गम्यते, पचतीत्यत्र साध्यरूपः। तच्च साध्यत्वं भावनासंस्पर्शकृतम्, तत्संस्पर्शश्च यद्यपि सा प्रत्ययेनाभिधीयेत। ततोऽनभिधेयभावनानिबन्धनमैकाधिकरण्यम्, न पाकवत् गम्यमानापेक्षमित्यर्थः।]

इद भवान् पृष्टो व्याचष्टाम् 'पाकः पचति, इत्यत्र धात्वर्थो भिद्यते न वा' इति। को हि स्फुटं प्रत्ययभेदमवजानीते? तथाहि, तिङन्ते भाव्यः स गम्यते, न तथाभूतो घञन्ते, भावे तद्विधानात्, शुद्धस्य च धात्वर्थस्य तत्रव्याख्यानात्। 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इति। तर्हि भाव्यत्वं भावनासंस्पर्शकृतमिति तिङन्तानां सोऽर्थः। गम्यमानत्वे हि तिङन्तघञन्तयोर्नैव भिद्येत, अविशेषात्।

न च साधनसाध्यसंबन्धाद्भेदावगमः, 'स्थीयते' इत्यत्राप्रसङ्गात्।

[उम्बेकः— यत्र साध्यत्वावगमः, हन्त तर्हि भावोत्पन्नत्वात्ते स्थीयते इत्येवमादौ शब्दे कारकसम्बन्धाभावात् धात्वर्थस्य साध्यस्यावगमो न प्राप्नोति। अस्ति चासौ। देवदत्तेन स्थीयते इत्यत्र स्थिति क्रियते इत्यर्थोऽवगम्यते। तेन भावनासंस्पर्शकृतमेव साध्यत्वं न कारकसम्बन्धकृतमित्यर्थः।]

किञ्च—

पाकं करोति पचतीत्याख्यातार्थो न दृश्यते।
भेदेन शब्दवत्त्वज्ञैः पाकदौ न त्वयं क्रमः॥

[उम्बेकः– पचतीत्यस्य पाकं करोति, इतीममर्थं निदर्शयति, न पाकशब्दस्य। तेन तिङन्ते केनचिच्छब्दभागेन पाकोऽभिधीयते केनचित्करोत्यर्थ इति गम्यते। गम्यमाने भावे पाकादावपि तथा निदर्शनप्रसङ्ग इत्यर्थः।]

पचति पाकं करोतीति तिङन्तपदार्थं भेदेन निदर्शयति नाप्रतिपद्य भेदम्, पाकादिषु तु न तथा भेदप्रतिपत्यमानादिति गम्यते।

[उम्बेकः— ननु तिङन्तेऽपि न पृथक्करोत्यर्थोऽभिधीयते, अभिधाने प्रमाणाभावात्। यत्तु निदर्शनं तद्शब्दभेद भेद परिकल्प्य, यथा कस्याभिनिर्वर्तन करोतीति। न तावत् पाकादिनिर्वर्तनविषयोऽपरः करोत्यर्थोऽभिहितः। करोत्यर्थ एवाभिनिर्वर्तनम्, न च तत्रापि अपर करोत्यर्थं सम्भवति योऽभिधीयते।]

परिकल्प्य भेदं तथोपदर्शनं पाकस्याभिनिर्वर्तनं करोतीत्यर्थेति चेत्।

[ यत्तु धात्वर्थे साध्यत्वं तदावस्यैव स्वाभाविकमित्यभिप्रायेण चोदयति– परिकल्प्येति । ]

न, पाकादावपि भेदप्रतिपादनप्रसङ्गात् ।

[ उम्वेकः— यथा शब्दमेन भेदं परिकल्प्य निदर्शयन्ति, का व्यवस्था यत्रिङन्ते निदर्शयन्ति– न पाकादाविति । ]

शब्दोपकल्पितस्तिङन्तेष्वपि भेद इति चेत् । अस्तु तावच्छब्दार्थभेदो वस्तुन्यपि उपपादयिष्यामः ।

[ उम्वेकः— तिङन्तस्य धात्वर्थरूपं भवनाऽङ्गीकृतम्, तत्तु तात्त्विकमित्यनन्तरमेव वक्ष्यामः । ]

नन्वेवं भावनाया अपि साध्यरूपाया भावनान्तरापत्तावपि तथेत्यनवस्था । यदि मतं व्यापारो हि स स्वरूपमेव तज्जातादृशां पराधीनोपजननम् । अतः स्वरूपापत्तिसिद्धेः नान्यसम्पर्कमपेक्षेति । धात्वर्थोऽपि तर्हि तथाऽस्तु । यथाहि– वस्तुतः सोऽपि तथा अतथा वा भवनादिततथाभावः स्वशब्दैर्व्यापारमोपादीयते ।

घनन्तादिष्वपि कारकसम्बन्धोपपत्तेः अन्यथा व्यापारे कारकसंबन्धयोगादभ्यासान्तरन्निधिनः कारकत्वानुपपत्तेः । क्रियासम्बन्धप्रभावितत्वात् कारकभावस्य ।

बुद्धिभेदस्तु पाकादिषु प्रत्ययोपादानेन सिद्धभावेनानुभवात् । अनभिभवति चेत्यादौ न चानभिभूतरूपमन्ययाभव्यं यद्यपि व्यापारान्तरनिदर्शनेन निदर्शयति भावनाया इव । न च सिद्धसाध्ययोरेकशब्दस्य विरुद्धभेदाभेदयोरिव गोत्वादिषु भिन्नप्रकृतिप्रत्ययोपादानत्वात् ।

साध्यमानरूपप्रतीतिनिदर्शनाभ्यां च धात्वर्थस्य तिङन्तेषु भावनाभिव्यक्तौ धात्वर्थस्य कर्मत्वप्रसङ्गो न करणत्वं स्यात् ।

तस्माद्धात्वर्थ एव व्यापारात्मा धातुशब्दोपादानः फलभवनसमर्थो भावनाभिधा चेति साम्प्रतम् ।

[ उम्वेकः—तस्मात् मल धात्वर्थातिरिक्तभावनया, धात्वर्थ एव व्यापारात्मा धातुनोपादीयमानः प्रत्ययाच्च फलभवनसमर्थतया गम्यमानः फलभवनसमर्थव्यापारवचनभावनाभिधानादर्थे इत्याह– तस्मादिति । ]

तदेतदसमञ्जसम् । तथाहि—

दृश्यमाने वस्तुभेदे नेष्टा शब्दार्थमात्रता ।
प्रत्ययार्थेनाभिभव सिद्धे तद्भावनिश्चयः ॥

[ उम्वेकः— यदि धात्वर्थभावनयोस्तात्त्विको भेदो न स्यात् ततः शब्दोपकल्पित एवायं भेद इत्यभ्युपगम्येत, न त्वेतदस्ति, प्रयत्नपरिस्पन्दयोः धातुवाच्ययोगविभागातिरिक्तयोः प्रत्यक्षसिद्धत्वात् ।

यत्तु पाकादौ साध्यत्वं न गम्यते तत् प्रत्ययार्थेन सिद्धत्वेनाभिभूतत्वादिति तत्राप्याह—प्रत्ययार्थेनेति । ]

दर्शयिष्यते हि व्यापारात्मनो धात्वर्थाद्भेदवत क्रियाऽतो न शब्दसामर्थ्यविलसितमिति युक्तम् । असति हि वस्तुनि तथा नाम भवेदपि ।

तदन्यग्रहणापेक्षत्वाच्च शब्दस्य न वस्तुस्वरूपकल्पनाभिमतः । निश्चिते तु धातुभिर्भाव्यतयेहोपादानेऽभिमताभिधानं युक्तम् । न चेह तथा प्रमाणाभावात् । साध्यसम्बन्धस्य गम्यमानभावनाविषयत्वात् ।

[ उम्वेकः —यदि धात्वर्थव्यतिरिक्ता भावना नाभ्युपगम्येत ततः सम्बन्धिन्यगृहीते सति अगृहीतसम्बन्धः प्रत्ययः कथमिव भावनाबुद्धिं कुर्वीतेन शब्दोपकल्पितो भेद इत्युच्यते, इत्याह– सम्बन्धेति । विभवः सामर्थ्यमित्यर्थः ।

उत्तरार्धं विवृणोति— निश्चिते त्विति । भावनासम्बन्धस्येति । ' देवदत्तेन पाकः ' इति धात्वर्थेन लभ्यमानाद्व्याह्रियमाणान्निश्चितेः शब्दवाच्यभावनाविषयत्वादित्यर्थः । ]

तथादर्शनात् शङ्कुल्या खण्ड इति ।

[ उम्वेकः— दृश्यते च गम्यमानभावनाविषयकारकमन्वय इत्याह— तथेति । एतावत्युक्ते यद्‌शङ्कुल्या खण्डः क्रियते इत्येतावत्यर्थे वाक्यं समाप्यते इति । ]

किञ्च—

विक्लियन्ति पचन्तीति न विशेषः प्रकल्प्यते ।
ऋते व्यापारनानात्वात् कर्तृभेदोऽपि वै कुतः ॥

[ उम्वेकः— इतश्च धात्वर्थव्यतिरिक्ता भावना अस्तीत्याह– किञ्चेति । यदि धात्वर्थव्यतिरिक्ता भावना अभ्युपगम्यते तदा विक्लियन्ति पचन्तीत्यनयोरपि धात्वर्थस्तुल्यार्थता प्राप्नोति । उभयोरपि विक्लित्त्यात्मकत्वात्-

विषयत्वात् । ननु पचतीतिप्रत्ययोपात्तदेवदत्तादिकर्तृकः व्यापारोऽभिधीयते, विक्लिद्यन्तीति च तण्डुलकर्तृकः, अतः कथमैकार्थ्यमित्याशङ्क्याह— ऋते व्यापारेति । सत्य कर्तृभेदे सति अर्थभेदो भवति । स एव धात्वर्थातिरिक्तव्यापारानभ्युपगमे न युक्तः । ]

न तावल्लिङन्तेषु धात्वर्थ एव व्यापारत्वेनोपादीयते विक्लिद्यन्ति पचन्तीति धात्वर्थाभेदात् प्रत्ययाभेदप्रसङ्गात् ।

कर्तृभेदार्थमिति चेत्, न, व्यापारभेदमन्तरेण तदनुपपत्तेः । तथाहि, साधनाना नियोक्तृत्वे कर्तृत्वे देवदत्तादय एव कर्तारो न तण्डुलाः । अगुणतया धातुनाभिधीयमानव्यापारत्वे तु तण्डुला एव कर्तारः । एतेन भिनत्ति भिद्यते छिनत्ति छिद्यते इत्यादयो व्याख्याताः । तस्मात् धात्वर्थातिरिक्तो व्यापार उपेयः यस्ततोऽर्थभेदः कर्तृभेदश्च ।

[ उम्वेकः— भिनत्तीति प्रयोजकदेवदत्तादिकर्तृको व्यापारोऽभिधीयते । भिद्यतीति तु प्रयोज्यकाष्ठादिकर्तृको धात्वर्थः । तथा छिनत्तीति देवदत्तादिकर्तृक एव, छेदाभवतीति प्रयोज्यवृक्षादिकर्तृकः । तस्मात् तेषां शब्दानां धात्वर्थव्यतिरिक्तव्यापारानभ्युपगमे तुल्यार्थता स्यात् । ]

अपरः कल्पः । व्याप्यमतम्, कर्मसमवायिक्रियेष्वेव धात्वर्थातिरिक्तो व्यापारोऽभ्युपगम्यते । कर्तृसमवायिषु कथमिति ।

[ उम्बेकः— अनेन शङ्कां दर्शयति । अयं चाशङ्कार्थः, कर्मसमवायिक्रियेषु विक्लिद्यन्ति पचन्तीत्येवमादिषूक्तेन प्रकारेण धात्वर्थातिरिक्तः कर्तृव्यापारो नोऽद्य बाध्यते । तदनभ्युपगमेऽभिधीयमानव्यापारत्वे न कर्तृत्वे सति तण्डुला एव सर्वनाभिधीयमानव्यापारत्वेन कर्तारः प्राप्नुयुः । न हि तण्डुलादिकर्मसमवायिना पाकेन प्रयोज्यव्यापारेणाभिधीयमानेनाभिधीयमानव्यापारा देवदत्तादयो भवन्ति तेन अवश्यं कर्मसमवायिक्रियेषु देवदत्तादीनामभिधीयमानव्यापारत्वसिद्ध्यर्थं प्रयोज्यव्यापारातिरिक्तो व्यापारोऽभ्युपगन्तुं शक्यः । कर्तृसमवायिक्रियेषु तु यजते यजन्तीत्येवमादिषु शब्देषु यागधात्वर्थस्य यजमानर्त्विक्परत्वादुभयोरपि अभिधीयमानव्यापारत्वेन कर्तृत्वोपपत्तेः । अस्त्यपि व्यापारान्तरे भवति कर्तृभेदोऽर्थभेदश्चेत्यापकमिदं कर्तृभेदकारणमिति । ]

उच्यते—

ऋते व्यापारनानात्वात् कर्तृभेदोऽपि वै कुतः ।

'ऋत्विजो यजन्ति' 'यजते यजमानः' इत्यगुणतो धातुनाऽभिधीयमानव्यापारस्य कर्तृत्वात् फलविशेषस्य च तदभिधेयस्य यजमानव्यापारत्वात् 'यजन्ति याजकाः' इत्यनुपपत्तिः । धात्वर्थातिरिक्तव्यापारप्राधान्यविवक्षया तूपपद्यते । ननु अनभिधानेऽपि व्यापारभेदस्य स्वातन्त्र्यविवक्षाभेदात् कर्तृभेदः करणमेव स्वातिशयविवक्षाभेदादुपपद्यते ।

[ उम्वेकः— यद्यपि धात्वर्थात् व्यापारान्तरं नाभिधीयते इति तथापि धात्वर्थे एव स्वातन्त्र्यविवक्षाभेदात् कर्तृभेदो भवति । तस्मिन्नेव यज्यर्थे यदर्त्विजां स्वातन्त्र्यं विवक्ष्यते तदा 'यजन्ति याजकाः' इति प्रयुज्यते । यजमाने तु स्वातन्त्र्येण विवक्षिते ( यजते ) यजमान इति । विवक्षातो हि कारकाणि भवन्ति, यथा 'प्रदीपेन पश्यामि' इति व्यवहितमपि दीपं करणत्वेनोपदिशन्ति, दर्शनक्रियायां तस्यातिशयो विवक्षित इति । ]

किमिदं स्वातन्त्र्यम् ? साधनानां नियोक्तृत्वम् । काष्ठादीनि पचन्तीति कथम् ? नियोज्यान्तराभावात् नियोक्तृत्वविवक्षा प्रयोगे न स्यात् । तस्मात् प्राधान्येन प्रतिपाद्यमानव्यापारता स्वातन्त्र्यम् ।

[ उम्बेकः— यस्य व्यापारः प्राधान्येनाख्यात प्रतीति तत् स्वतन्त्रम् । काष्ठादीनि पचन्तीति काष्ठादीनां व्यापारः प्राधान्येनाभिधीयते । तस्मात्तानि स्वतन्त्राणि । ]

तथा चोक्तम्— स्थालीस्थे प्रयत्ने कथ्यमाने स्थाली स्वतन्त्रेति ।

[ उम्वेकः— प्रयत्न इतीह स्थालीव्यापारः कथ्यते यथा पच्यमानमोदनं बिभर्ति । स्थाल्या हि धार्यमाण ओदनो निर्वर्त्यते, नान्यथा । तदनेन वर्त्मना स्थाली ओदनपाके स्वतन्त्रेत्युच्यते । अथवा प्रयत्न इति पुरुषप्रयत्नोऽभिधीयते तस्मिन्नोदनपाचनापरनाम्नि अनुभावदर्शने स्थालीस्थे विवक्ष्यमाण इत्यर्थः । न खलु विना स्थाल्या कश्चिदोदनं पाचयितुं प्रभवतीति । ]

कारकत्वाभिव्यक्तिर्न प्राप्नोति अकारकस्यापि भावस्य धातुनोपात्तत्वादिति । 'न चापि व्यभिचारस्य साक्षात् प्रामाण्यघातिता । क्वचिद् दृष्ट भ्रान्तिबोधे बाधधीरुपघातिका ॥'

नैव हि व्यभिचारस्य क्वचित्साक्षाद्व्याघातकत्वं दृष्टं येन शाब्दस्य व्यभिचारित्वे गम्यमाने तेन प्रामाण्यं व्याहन्येत । ननु भ्रान्तिबोधे दृष्टं व्यभिचारस्य व्याघातकत्वम् । अत आह– भ्रान्तिबोधे बाधधीरुपघातिका । भ्रान्तिबोधेऽपि बाधधियो व्याघातकत्वं न व्यभिचारस्य ।

वार्तिककारस्तु छिदादिव्यापारं प्रेरणमाह– इह छिदादिभ्यो नान्येभ्यो द्वे भावने अवगम्येते शब्दात्मिका चार्थात्मिका चेति । प्रयोजकव्यापारश्च भावना । उक्तं च भट्टपादैः— 'स्वाध्यायाध्ययनविधिना सर्वे विधायका. स्वाध्यायाध्येतृपुरुषप्रेरणा नियुज्यन्ते भावयेदिति' इति । एतदनेन निर्दिष्टेन विधिनियुज्यमानपाक्षिकप्रयोजकव्यापारो भावनेति । ]

हतवान् यष्टैरित्यत्रापि द्रव्यप्रधानभावनाभ्युपगमात् छिदादिषु तथाप्रतीतेरवियोगः ।

[ उम्वेकः — ननु हतवान् यष्टैरित्यत्र क्तवतुप्रत्ययप्रयोगे भावनाया अप्रतीतेर्न भावनायां यागस्य करणत्वम् । अतोऽत्र या गतिः साऽन्यत्रापि भविष्यतीत्याशङ्क्याह– हतवान् यष्टैरिति ।

किं कृतवान् ? हतवानिति करोतिसमानाधिकरण्यात् द्रव्यप्रधानभावनाभिधानमिति भावनायामेव यागस्य करणत्वमित्यर्थः । तथा निष्क्रियो देवदत्तः ? पक्ता, पाचक इति करोतिसामानाधिकरण्यदर्शनात् अन्यत्रापि द्रव्यनिष्ठभावनाप्रतिपत्तिरिति क्वादिग्रहणम् । ]

यत्तूक्तं भावनाविवेककर्तृत्वं करणत्वहानिः, तत् अनिरूपितकरणत्वस्य ।

[ उम्वेकः— यत्तूक्तमिति । तत् अनिरूपितकरणत्वस्य वचनमित्यर्थः । ]

तथाहि—

करणं खलु सर्वत्र कर्तृव्यापारगोचरः ।
तिरोदधाति कर्तारं प्रधानं तन्निबन्धनम् ॥

[ उम्वेकः— तिरोदधातीति । प्रधानं कर्तारं तिरोदधाति कर्तुं प्राधान्यादित्यर्थः । अथवा तिरोदधाति कर्तारमिति प्रतिज्ञायते । तत्र हेतुः प्रधानं तन्निबन्धनमिति । यस्मात्प्रधानं करणनिरूपणं न साक्षात्कर्तृनिबन्धनं तेन कर्ता करणेन कदाचित्तिरोधीयते । 'प्राधान्यं तन्निबन्धनात्' इति तु समीचीनः पाठः । ]

न खलु कर्तृव्यापारलक्षणाया भावनाया धात्वर्थस्य कर्मत्वप्रसङ्गः अकरणत्वं वा परश्वादावपि तथाप्रसङ्गात् । तथाहि– छिदादिषु न साक्षाद् व्याप्रियते कर्ता, अपि तु परश्वादिकरणे । तद्व्यापारस्तु उद्यमननिपतनादिलक्षणः परशुगोचर एव ।

[ उम्वेकः– तथाहीति । वेगवता हि परशुना तीक्ष्णधारेण मनुष्यमाणं दारु छिद्यते । छेदने परशुरानन्तर्येण साधकतमत्वेन करणं भवति । कर्तृव्यापारस्तु कुठारे वर्तते न दारुणि इति । ]

अत एव करणस्याव्यवहितव्यापारतया क्रियासिद्धौ साधकतमत्वम् । तद्व्यापारापेक्षप्रवृत्तितया च करणस्य कर्तृ स्वातन्त्र्यतारतम्यपरिशेषोऽपि ।

[ उम्वेकः– कर्तृव्यापारायत्ता हि करणस्य प्रवृत्तिः । यदि पुनरुद्यमननिपातने च परशुना दारु छिद्यते । तदेव करणव्यापारद्वारेणापि फलस्योपकुर्वतः स्वातन्त्र्यं भवति, कर्तृत्वं भवतीत्यर्थः । ]

अन्यथा करणमेव स्यात् ।

[ उम्वेकः– अन्यथेति । व्यत्यये वा प्रदिश्यते । तस्यायमर्थः– असति कर्तृव्यापारे परशोः करणत्वं न स्यादिति । ]

अपि च–

साधनानामभावः स्यात्कर्तृकर्मातिरेकिणाम् ।
साधनानां नियोगो हि कर्तृव्यापार इष्यते ॥

यदीनेदानीं कर्तृकर्मातिरिक्तसाधनान्तरकथा साधनान्तरनियोगः कर्तृव्यापार इति निर्विषयत्वापत्तिः सर्वत्र कर्मत्वापातात् ।

संयोगस्तेजसः संभवति। अन्त्यावयवसंयोगेऽपि च सर्वत्र चलतीति प्रत्ययो न स्यात्। सलिलद्रव्यस्य च नैकः- सलिलादेर्घटवदेकार्थस्यावयवसंघातमात्ररूपत्वाच्च तदवयवी विद्यते, येनैकदेशसंयोगेऽपि सर्वत्र चलनप्रत्ययः स्यादित्यर्थः। ]

तस्मादस्ति धात्वर्थावच्छिन्नविशेषातिरिच्यमानात्मा क्रियापदार्थो भावनापर्यायः।

[ उम्बेकः— तस्मादिति। धात्वर्थावच्छिन्नो तदाहितविशेषश्चेति विग्रहः। तदाहित इति व्यापाराहितः। गच्छत्यादिपदे प्रत्ययप्रतिपाद्यभावनारूप इत्यर्थः। विशेष इति गुणविशेषः संयोगविभागात्मकः। ]

नन्वेवं भावनातो धात्वर्थस्य निष्पत्तिस्ततश्च फलस्येति कथं तन्निष्पाद्यो धात्वर्थस्तस्या करणम्, स्वर्गादि च अन्यसाध्यं कथं कर्म? तस्मात् धात्वर्थ एव भावनाऽस्तु। स्वर्गे धात्वर्थे चान्तरा व्यापारान्तरानुपलम्भादित्युक्तम्।

[ उम्बेकः— स्वर्गमिति। अस्यायमर्थः— यदि धात्वर्थकर्मकात् व्यापारात् व्यापारान्तरं स्यात् ततस्तस्य स्वर्गादेः कर्मत्वं भवेत्, व्यापारान्तरनिष्पादितस्य धात्वर्थस्य करणत्वम्, न तु तदुपलभ्यत इत्युक्तम्। ]

उच्यतेऽत्रैकम्। तथाहि—

फलेन साक्षात्करणे कर्तुश्चेष्टाफलार्थिनः।
करणत्वं प्रधानांशो ताद्रूप्यं वा यतस्ततः॥

[ उम्बेकः— ताद्रूप्यमिति। ताद्रूप्यं छेदनरूपत्वं परिस्पन्दस्य। ततः इति द्विधाभवनात्। यस्मात् द्विधाभवनावच्छिन्नः परिस्पन्दः छिनत्तीत्युच्यते तस्मात् तत्र परशोः करणत्वमिति। ]

न इमे अन्यकर्मकरणविलक्षणे फलधात्वर्थयोः कर्मकरणत्वे। दर्शितं हि 'परशुना छिनत्ति' इति न हि द्विधाभावे कर्तृव्याप्तिरपि तु करणे साधननियोगादिलक्षणत्वात् गतेः। तत्र फले चेष्टा व्यापारस्तदभिधानादनन्यप्रकारत्वात्। इयांस्तु भेदः— धात्वर्थस्योत्पादनं नियोगः, परश्वादेस्तु सिद्धस्योद्यमनिपातनादिः। वृक्षादेश्च कर्मत्वं द्विधाभवने कर्तृत्वात्।

तदर्थं परशुनिष्ठं निपातोद्यमनादिलक्षणं द्विधाभवनं प्रति करणत्वम्।

[ उम्बेकः— 'करणत्वं प्रधानांशे' इति यदुक्तं तद्विवृणोति— तदर्थमिति। तदर्थमिति तत्कारणकं वृक्षादिकर्मत्वकारणकमित्यर्थः। तदर्थमित्यत्र अर्थशब्दः कारणवाची। निपातोद्यमनादिलक्षणमिति। निपातोद्यमननिमित्तकमित्यर्थः। यद्वा तदर्थमिति वृक्षादिकर्मप्रयोजनं तच्छेदभूतं तद्द्विधाभवनं प्रति करणमिति। ]

अथ परशोः करणत्वं छिनत्तौ प्रधानांशापेक्षम्। ताद्रूप्यस्य तदधीनत्वात्। न ह्युद्यमननिपातनादिमात्रमथ च तद्द्विधाभवनं छिनत्तीति निरूप्यते।

[ उम्बेकः— 'ताद्रूप्य वा यतस्ततः' इति यदुक्तम्, तद्विवृणोति— ताद्रूप्यस्येति। ]

तस्मादिहापि धात्वर्थस्योत्पादनोऽनुग्राहको वा कर्तृव्यापारः समुद्दिष्टफलभावनतया प्रतिलब्धभावनाव्यपदेशो धात्वर्थोपनिबद्धप्रधानांशताद्रूप्यफलकर्मको धात्वर्थकरणश्च इति न दोषः। न हि छिदां भावयति परशुनेति परशु क्रियात्मकं चान्तरेण कर्तृव्यापार एकोऽपरसाध्योऽपरसाधन उपलभ्यते। न च करणस्य निषिद्धम्। प्रधानांशनिष्पत्तेस्तदधीनत्वात्। तथापि फलभूते प्रधानक्रियापेक्षत्वात्कारकविभक्तिः विभागव्यवस्था च।

[ उम्बेकः— एवं दृष्टान्तं व्याख्यायाधुना दार्ष्टान्तिकं योजयति— तस्मादिहेति। धात्वर्थोपनिबद्धप्रधानांशताद्रूप्य इति धात्वर्थकरणकः प्रधानांशः फलभवनं ताद्रूप्यं भावनारूपत्वं यस्येति विग्रहः। प्रधानांशनिमित्तकमपि ताद्रूप्यं प्रधानांश इत्यभेदेनोपचरितम्। यद्वा, प्रधानांशे ताद्रूप्यं यस्येति गमकत्वाद् व्यधिकरणेऽपि समासः। अथवा, धात्वर्थोपनिबद्धश्चासौ कर्तृव्यापारः प्रधानांशताद्रूप्यश्चेति विग्रहः। अनेन ग्रन्थेन 'ताद्रूप्य वा यतस्ततः' इत्ययं पक्षो दर्शितः। एतदुक्तं भवति— यद्यप्येकः कर्तृव्यापारः, स च धात्वर्थगोचरः, तथापि तस्य धात्वर्थकरणत्वं स्वर्गादिफलकर्मकत्वं चाविरुद्धं क्रियारूपत्वादिति। ]

अमुमेवार्थं दृष्टान्तेन दर्शयति— नहीति। न हि परशुद्विधाभवनगोचरात् व्यतिरिक्तोऽपरसाध्यः अपरसाधनश्च व्यापार उपलभ्यते। अपरं साध्यं अपरं साधनं यस्येति

विग्रहः । परशुगोचरस्य व्यापारस्य यत्साध्यं यत्र साधनं तद्व्यतिरिक्तमित्यर्थः । न च परशुगोचर एकस्मिन्नेव कर्तृव्यापारे परशोः करणत्वं वृक्षादेश्च कर्मत्वं विरुद्धमित्यर्थः । पुनरपि दार्ष्टान्तिके योजयति— तथेहापीति । न यागस्य स्वर्गत्वमित्यनुषङ्गः । ]

तथाहि —

प्रधानांशमुपादाय साधनान्यैकवाक्यताम् ।
व्रजन्ति नान्यव्यापारो रूपतो ह्यन्यसाधनः ॥

[ उम्बेक — तथाहीति । उखाया ओदनं काष्ठैर्देवदत्तः पचतीत्येकस्मिन्नेव कर्तृव्यापारे फलभक्तनिष्ठकाष्ठादयः करणत्वादिना सम्बध्यन्ते । न च तत्र व्यापारभेद उपलभ्यते काष्ठगोचरः ओदनगोचरश्च । अपि त्वेक एव कर्तृव्यापारः । स तु रूपतः स्वभावतः फलोद्देशप्रवृत्तत्वात् काष्ठादिसाधनो न काष्ठादिकर्मकः । अन्यसाधन इति । अन्यत्साधनं निष्पादकं गुणरूपं यस्येति विग्रहः । एतेन 'न व्यापारो ह्यस्यनेऽन्यत्र' इति यदुक्तं दूषणं तन्निरस्तम् । ]

तस्मादनुपलम्भो व्यापारान्तरानुपलम्भादिति ।

[ उम्बेकः— तस्मादिति । गवेव धात्वर्थभावनयोर्लक्षणभेदो दर्शितः— संयोगविभागात्मको धात्वर्थः, पचति पठतीत्येवमादिषु स्पन्दात्मकश्च भाव इति । ]

यतार्थकर्तृकेषु यजते इत्यादिष्वत इति । तत्र केचित्—

भाव्ये यतेतेति गिरा प्रयत्नं प्रतिपेदिरे ।
अचेतने प्रयोगस्य प्राचुर्याच्चोपचारधीः ॥

तथा यतेत यथा किञ्चिद्भवतीति फलभावनानुकूलप्रयत्न एवाख्यातार्थो दर्शितः । अचेतने रथादावप्रयोग, उपचारात् । प्रयोगप्राचुर्यान्नु नौपचारिकः प्रत्ययः ।

[ उम्बेक — 'औपचारिकः प्रत्ययः' इत्यस्य अयमर्थः— औपचारिकोऽयं प्रयोग इत्येवंविधः प्रत्ययः प्रयोगप्राचुर्यान्न भवति । ]

इदं तु समाधानं प्रसिद्धे उपचारे स्यात् । न च प्रत्यये समाने हेत्वन्तरे चासति तत्प्रसिद्धिरस्ति । विपर्ययोपगमस्याप्यशक्यत्वात् ।

[उम्बेक —इदं त्विति । सिद्धे औपचारिकत्वे तत्प्रतिपत्त्यमानोऽन्यथासिद्धः शक्यो दर्शयितुम् । न च देवदत्तो गच्छति वायुर्धावतीति समाने मुख्यप्रत्यये औपचारिकत्वप्रतिपादके प्रमाणान्तरे चासति तत्सिद्धिः । अस्तित्वमात्रेण चौपचारिकत्वाभ्युपगमे चेतने एवाख्यातप्रयोगः औपचारिकोऽन्यत्राचेतने मुख्य इति विपर्ययावगमस्याप्यशक्यनिवारणत्वादित्याह— विपर्ययेति । ]

उदासीनत्वविच्छेदसामान्यात्मा ततो मतः ।
करोत्यर्थो द्वये चेह तद्रूपप्रत्ययोद्भवः ॥

[ उम्बेकः— उदासीनेति । औदासीन्यविच्छेदः करोत्यर्थः । स च प्रयत्ने परिस्पन्दे च गम्यते । तथाहि प्रयत्ने सत्यनुदासीनः सन् कुर्वन्नुपलभ्यते परिस्पन्दे च सति रथादिः । तेन प्रयत्नपरिस्पन्दयोरौदासीन्यविच्छेदसामान्यरूपयोः आख्यातार्थत्वात् चेतनाचेतनयोः अर्थ यदाख्यातमित्यर्थः । ]

औदासीन्यविच्छेदो हि करोत्यर्थः, उदासीने क्रियाज्ञानाभावात् । औदासीन्यप्रच्युतेश्च द्वैधम्, आत्मनि प्रयत्नादन्यत्र रथादौ परिस्पन्दात् । तथाहि, प्रयत्नवन्तं यतमानं आत्मानमनुदासीनं कुर्वाणं व्यापारवन्तमवैति, परिस्पन्दमानं चान्यम् । अतः प्रयत्नपरिस्पन्दयोः औदासीन्यविच्छेदसामान्यात्मरूपयोः तदवभासधीविषयत्वेन क्रियापदार्थत्वमचेतनकर्तृकेषु तदभावः ।

[ उम्बेक — तस्मादस्ति पुरुषप्रवृत्त्यात्मिका विधिज्ञानकरणिकार्थवादोत्पादितविपर्ययात्मस्यज्ञानेति कर्तृमनोगता लिङादिव्यापारः प्रेरणात्मिका शब्दभावना, अभिधानलक्षणोऽपि च देवदत्तादेरिव व्यापारः शब्दभावना । ]

तदुक्तम् 'न परिस्पन्द एवैकः क्रिया नः कणभोजिवत् ।' इति । अत्रापि परिस्पन्देन न प्रयोजनम्, अस्त्वेवासौ ।

मनोभूतपरिस्पन्द आत्मनस्तत्प्रयत्नजः ।
सिद्धिस्त्यादिर्यथा तस्मिन् साधनोपनिपातवः ॥

आत्ममनःसंयोगात् विज्ञान-संस्कारविशेषापेक्षात् उत्पत्तेः तद्विषयनमनोऽसमवेतादृष्टप्रयत्नहेतुकं मनसि कर्म स्पन्द-

स्पन्दोऽपेक्ष्यते । आत्मप्रयत्नापेक्षया भूतेषु द्रव्योपादानादि-रूपस्तु परिस्पन्दः । उभयोरप्यसात्मनः तदधीनत्वात् विक्लित्त्यादिवत् ।

तथाहि—

विक्लित्तिभिदाच्छिदास्तण्डुलादिसमवायिन्यो देवदत्ते असमवेता अपि देवदत्तस्य क्रियास्तासु तस्य कर्तृत्वात्, प्रधानक्रियायां सर्वकारकोपनिपातात्, एकवाक्यत्वात् ।

[ उम्बेकः—— प्रधानेति । विक्लित्त्यादीनामुद्दिष्टत्वेन साध्यभूतानां प्रधानक्रियात्वात्तत्रैव साधनत्वेन सर्वकारकाण्युपनिपतन्ति । तेनान्यसमवेता अपि विक्लित्त्यादयो देवदत्तसाध्यत्वेन तत्क्रियाः । सर्वकारकोपनिपाते प्रयोजनमाह—एकेति । यदि प्रधानक्रियायां सर्वकारकोपनिपातो न स्यात् ततस्तत्कर्मणि पाके देवदत्तादिकर्तृव्यापारसम्बन्धाभावात् तण्डुलाश्रमोदन काष्ठैर्देवदत्तः पचेदिति कारकाणां भिन्नार्थत्वेनैकवाक्यत्वं न स्यात् । विक्लित्त्यर्थानि सन्ति काष्ठादीनि विक्लित्तिफलत्वेन प्रयोजक-व्यापारेण सम्बध्यन्ते । एवं तत्सम्पादनाङ्गत्वेनैकवाक्यत्व-मवतीत्यर्थः । ]

न हि स्वव्यापारविषयं करणादिभावः कारकाणाम् । तेषां भेदादेकवाक्यत्वानुपपत्तेः । एवं च कर्तृविनियोगवता सर्वसाधनानां व्यापारः कर्तुरिति तेषां भावनान्त-र्गतिः । तन्मुखेन च साधनताऽप्युपपन्ना ।

[ उम्बेकः — तेषामिति । तस्मात्प्रधानक्रियायां सर्व-कारकोपनिपातात् विक्लित्त्यादयस्तण्डुलादिसमवायिन्योऽपि देवदत्तक्रियाः । एवं च कर्तृविनियोज्यतया करणादीनां तत्समवेताः परिस्पन्दादयः प्रयोजकादिक्रियाः, विक्लि-त्तिरिव देवदत्तस्य । अतः करणादिपरिस्पन्दादयोऽपि भावनान्तर्गता इत्याह— एवं चेति ।

तन्मुखेनेति । विचित्रावान्तरव्यापारत्वेन कारक-वैचित्र्यमुपपन्नमित्यर्थः । ]

परोपाधिक्रियारूपात् ज्ञायते न क्रियान्तरम् ।
संबन्धादेव साध्यत्वमतः करणसंगतिः ॥

[ उम्बेकः— ' धातुप्रत्यययोर्नान्ये प्रतीयेते न हि क्रिये । ' इति, तत्राप्याह— परोपाधीति । काष्ठैः पचती-त्यत्र तण्डुलाश्रयविक्लित्त्यादिसंयोगवैचित्र्यात्मनः पाकधात्व-र्थस्य स्वयं अक्रियात्मनो भावनासम्पर्कात् क्रिया-त्मत्वम् । अतश्च धात्वर्थस्योपाधिना क्रियारूपत्वात् न क्रियाद्वयप्रतीतिप्रसङ्गो दोष इत्यर्थः ।

औपचारिकत्वे एव कारणमाह— सम्बन्धादेवेति । यदि क्रियासम्बन्धनिरपेक्षः पाकादिधात्वर्थः सिध्येत्, सिद्धश्च कालान्तरं न तिष्ठेत्ततः प्रयत्नवदेव क्रियात्व परिस्पन्दवदेव वा भवेत् । न त्वेतदस्ति, क्रियासम्बन्धेनैव सिद्धेः काला-न्तरस्थायित्वाच्चेत्यभिप्रायः । अनेन च अनियतात्मक-धात्वर्थप्रतिपादनेन ' सम्बन्धो भावनस्यैव द्वयोः साध्याभि-धायिनोः ' इति यदुक्तं तदपि निराकृतमिति द्रष्टव्यम्, करणाभिधायिक्रियाभिधायिनोः सम्बन्धे साहाय्योपपत्तेः ।

अतः करणेति । यस्मात् साध्यरूपो धात्वर्थः करण-मतस्तस्य काष्ठादिकरणान्तरसम्बन्ध इत्यर्थः । ]

धात्वर्थस्य खलु भावनामनुरञ्जयतस्तद्विषयतया प्रतीतिः । तस्याः प्रतीत्या तत्परामर्शकृतं तदन्तर्गतस्य भावनारूपं क्रियात्वमिति कुतः क्रियाद्वयप्रत्ययः ? न हि जातिगुणो-परक्तेषु द्रव्येषु तद्रूपभेदः । भावनासम्बन्धितयैव च साध्यता न तत्स्वरूपं निरूप्यते, तदभावे तस्या अप्य-भावात् । अतश्च करणसम्बन्धोऽप्युपपन्नः । भावनाविषय-तामुपयात करणभावयोगात्, साध्यताप्रतीतेः क्रियारूपा-पत्तेः ।

प्रधानं व्यापृतिर्यस्य धात्वर्थं प्रति गम्यते ।
स कर्तातः पचन्तीति विक्लिद्यन्तीति भिद्यते ॥

[ उम्बेकः— यत्पुनः पूर्वपक्षेऽभिहितम्— ' विक्लि-द्यन्ति पचन्तीति न विशेषः प्रकल्पते ' इति, तत्र परि-हारमाह— प्रधानमिति । विक्लिद्यन्तीत्यत्र तण्डुलाश्रय-परिस्पन्दः स्थाल्युदकाधिकरणं वा तण्डुलपरिभ्रमणं प्रत्ययेनोच्यते विक्लित्तिधात्वर्थं प्रति प्रधानभूतम् । पचन्तीत्यत्र देवदत्तादिव्यापारः पाकं प्रति प्रधानभूतः पचन्तीतिशब्दात् विक्लिद्यन्तीति इत्ययं शब्दोऽर्थभेदेन भिद्यते इति ग्रन्थयोजना । ]

न खलु गुणतो धातुनाऽभिधीयमानव्यापारः कर्ता येन प्रत्ययार्थं पर्यनुयुज्येत, अपि तु धात्वर्थं प्रत्यभिहित-प्रधानव्यापारः । अतश्च धात्वर्थस्य कर्तृव्यापारमभिधेयं स्वयं च प्रति विशेषकत्वात् । तेन विक्लिद्यन्तीति तण्डुल-

व्यापारस्य पचनाभिधानकर्मणोऽवश्याश्रितस्य स्थाल्युदकाधिकरणतण्डुलप्रमणात्मनो वा प्रधानभूतस्याभिधानात् पचन्तीति देवदत्तव्यापाराभिधानात् अर्थभेदः कर्तृभेदश्च सिध्यतीति ॥ प्रत्ययार्थपर्यनुयोगानवकाशः । कथं पुनः पचिना तुल्यार्थात् विक्लिदेः परेण प्रत्ययेन तण्डुलव्यापार एव विवक्ष्यते, न देवदत्तव्यापारः । प्रकृतीनां रूपभेदात्तुल्यार्थत्वेऽपि प्रत्ययस्य स्वार्थे शक्तिभेदात् ।

भार्या दारा जलान्याप एकार्थत्वेऽपि दृश्यते ।
प्रकृते रूपभेदेन प्रत्ययार्थो विशेषवान् ॥

[ उम्बेक – भार्यादारशब्दयोर्जलापशब्दयोश्च तुल्यार्थत्वेऽपि सति तत्र बहुवचनमेकं विनियमं अतिवदद् दृश्यते इत्यर्थः । एतदेव विवृणोति— जलानीति । ]

जलानीति प्रकृत्यर्थसमवायि तदेकार्थसमवायि च बहुत्वं बहुवचनस्यार्थः । तथा भार्या इति । आपो दारा इति प्रकृत्यर्थावयवसमवायि तदाश्रयैकार्थसमवायि । प्रकृतीनां रूपभेदात् तदपेक्षत्वात् प्रत्ययस्याभिधानशक्तेः । तथेहापि पचिपदे धात्वर्थैकार्थसमवायिनं व्यापारं कर्म कर्तृविषयं प्रत्यय आह । विक्लिदेः पुनः । विक्लिदिपरस्तु प्रकृत्यर्थैकार्थसमवायिनमित्यनवद्यम् ।

[ उम्बेक— प्रकृत्यर्थसमवायीति व्यक्तिवाच्यत्वाभिप्रायेण । यतः शब्दः स शब्दार्थः इत्येव चोक्तम् । 'तदेकार्थसमवायि वा' इत्याकृतिवाच्यत्वाभिप्रायेण । यथोक्तम्— 'आकृतिर्व्यक्तिराकृतिषु प्रतीतिर्व्यक्तिसंख्यया' इति । येषां तच्छब्दतत्त्व एवाप्स्वाप्रातिपदिकार्थ इति दर्शनं तेषां प्रकृत्यर्थावयवसमवायित्वं द्रष्टव्यम् । यदा त्वाकृतिप्रतिपदिकार्थमाश्रित्य बहुत्वं तद्व्यक्तिषु दारव्यक्तिषु च प्रयुज्यते तदा तत्समर्थं इत्याह— तदाश्रयैकार्थसमवायि वेति । तन्निरूप्यप्रकृत्यर्थाश्रयतदेकार्थसमवायीत्यर्थः । अवयवैरेकार्थसमवायो द्रष्टव्यः । यदा तदिति प्रकृत्यर्थवाच्योक्तिर्निर्दिष्टा व्यक्तिः परामृश्यते बुद्धिस्थत्वात् । अथवा तदित्यवयवपरामर्शः । स आश्रयः आसौ एकोऽर्थश्च अवयवरूप इति विग्रहः । तस्मिन् समवायो यस्य तदाश्रयैकार्थसमवायि । ]

'पचति' इत्यत्र तु कर्तृविषयः प्रत्ययः देवदत्ताश्रयं धात्वर्थाक्व्यधिकरणं व्यापारमाह इत्याह— विक्लिद्यते वेति ]

अग्निं चिनुत इत्यत्र स्वं यज्ञं यजतीति च ।
दर्शनात्कर्मयोगस्य नाभावस्तदभावतः ॥

[ उम्बेक — यत्पुनरिदमुक्तं कर्मणा च करोत्यर्थो व्याप्त इति । अव्यापकत्वेनात्रापि दूषणमाह— अग्निमित्यादिना । ]

धात्वर्थस्य हि चयनस्येष्टकाः स्वं वा अव्यवधानात् कर्म न व्यापारान्तरविधीयमानो व्यभिचारीति । ]

[ उम्बेक — धात्वर्थस्येति । चयनस्य चीयमानं कर्म । इष्टकाश्च चीयन्ते, नाग्निः । तेनेष्टकाकर्मकं चयनं न्वग्निकर्मकं वा । स्थलस्य चयनसाध्यत्वात् । ननु चेष्टकासंयोगात्मकं चयनस्य अनित्यत्वात् कर्मसम्बन्धो न घटते । नैष दोषः । चयनं इह इष्टकानां उपर्युपरि स्थापनं नाम पुरुषपरिस्पन्दोऽभिप्रेतः । स च क्रियात्मकत्वात् कर्मणा युज्यते एव अव्यवधानात् । ]

स तु भावनाकर्म । अनिरुद्धश्च न स्थलचयनीऽपि तु स्थलवचनः । एवमुक्तम्— 'अन श्लेष प्रसिद्धः' इति भाष्यकारेण । स यज्ञं यजतीति तु न भावनातोऽन्यत्र कर्मत्वमिति दर्शितम् । तथा महाभाष्ये कर्मद्वयसम्बन्धो विक्लित्तेर्भावनाभेदेनैव दर्शितः । इह तावत् 'तण्डुलानोदनं पचति' इति । द्व्यर्थः पचिः तण्डुलान् विक्लेदयन् ओदनं निर्वर्तयति । यद्यपि द्व्यर्थः पचिरित्युक्तम् । द्वौ तत्र व्यापारौ कर्मान्वयगोचरौ दर्शितौ, यत्रैकेन निर्वर्त्यतामिति यथा प्रत्ययार्थस्तथा प्रतिपादितम् ।

प्रयोजकक्रियामाहुः कर्तृव्यापारगोचराम् ।
कर्तृव्यापारविषयो धातोरर्थो विवक्ष्यते ॥

स्वव्यापारे वर्तमानस्य नियोगात् कर्तृव्यापारविषयः प्रेरणादिप्रयोजकतर्तृव्यापारो णिजर्थः । धात्वर्थविषयः कर्तृव्यापारस्त्वयं इति न धात्वभिधानयोस्तुल्यार्थत्वमिति ।

[ उम्बेक — स्वव्यापारे इति । भावयेत् घटं कुम्भकार इति स्वव्यापारे कुम्भकारो नियुज्यते । तस्य च घटादि कर्तृव्यापारविषयं घटकरणं स्वव्यापार इति ॥ एव णिचो विषय इति प्रयोजकव्यापारो णिजर्थः ।

भवतीत्याख्यातात् भवनधात्वर्थविषयो घटकर्तृव्यापार इत्यनुपलभ्यते भवतिभावयतिशब्दयो । अथवा घटभवनात्मिका सिद्धभवना प्रयोजका, भवनव्यापाराश्च प्रयोज्याः, सिद्धभवनाया असिद्धभवनावयवर्तिना भवनेन घटो भाव्य । सिद्धभावनाया प्रयोजकव्यापारो भावनेत्युच्यते । एतदुक्तं भवति— असिद्धभवनावयवभवनं करणं भवनस्य घटभवना भाव्या सिद्धभवनविशिष्टा भावना । तदुक्तम्— ' अस्त्यादावपि कर्तृत्वे भावेऽस्त्येव हि भावना । अन्यसंयोगभावात्तु न तथा सा प्रकाशते ॥ ' इति ]

तदेवं भावनार्थत्वादाख्यातप्रत्ययस्य हि ।
यागेन भावयेत्स्वर्गमित्यर्थं शब्दनिर्मितं ॥

[ उम्बेक — तदेवमिति । तदनेन भावनाया वाक्यार्थत्वं दर्शितम् । इद हि इह वक्तव्यम्, फलमेव वाक्यार्थं कस्मान्न भवति । तद्धि सर्वेषामभिलषितं येन च प्रधानम् । कार्यप्रधानभूतार्थप्रतिपादनपरं च वाक्यम् । उपात्तं चैतत्स्वर्गकामपदेन । नेत्युत्तरम् । विधेयप्रयोजनं हि वाक्यं विधायकत्वप्रधानत्वात् । तथाहि यद्यपि न श्रूयते तथापि कल्प्यते । फलं च न विधीयते, लिप्सात एव पुरुषस्य प्रवृत्तत्वात् । फलनैकत्र विधिर्नान्यरूप । तेन यत्र पुरुषः प्रवर्तते स विधेयः । न च फले पुरुषः प्रवर्तते इत्यविधेयत्वम् । ननु यागेन स्वर्गं भावयेदिति फलमेव विधीयमानमुपलभ्यते । नैष वचनव्यक्तिः यागेन स्वर्गं कुर्यादिति, किं तर्हि ? यः स्वर्गं कर्तुमिच्छेत् स यागेन कुर्यादिति । तेनानुवाद्य स्वर्गो न विधेय ।

तथा च ' वसन्ते ब्राह्मणोऽग्नीनादधीत ' इत्यत्राभिधानत सत्यपि साध्यत्वावगमे साधनपरत्वाद्धानस्य वसन्तमित्युद्दिश्यादिति वाक्यार्थो भवति ।

' उद्भिदा यजेत ' इत्यस्य वाक्यस्य प्रथमं कीदृशोऽर्थः प्रतीयते ? न तावदुद्भिदा यागेन कुर्यात् इति, साध्यत्वप्रतीत्यभ्युपगमात् । नापि उद्भिदा यागं कुर्यादिति, नामधात्वर्थयोरनन्यत्वात् । वैयधिकरण्ये च गुणविधिना पर्यवसानमिति । तेन निश्चितकरणार्थतृतीयान्तोक्तिपदसामानाधिकरण्यादप्येतत् निश्चित यजते यागेनेति । एवं करणार्थता प्रतिपाद्य मात्वर्थाधिकरणे धात्वर्थादपूर्वमिति प्रतिपादयता सूत्रकारेण भाष्यकारेण च यजेतेत्यस्य अयमर्थो व्याख्यातो यागेन कुर्यादिति । तेन करणार्थपदान्तरसामानाधिकरण्यावगमात् करणार्थमाख्यातमिति निश्चयोऽस्ति । तस्मात् भावनैव अशत्रयोपेता वाक्यार्थः, न धात्वर्थ इति सिद्धम् ।

एवमेव ' अग्निहोत्रं जुहुयात् स्वर्गकाम ' इत्यधिकारवाक्येऽपि द्वितीया तृतीयार्थेन व्याख्यातव्या । ]

कथं पुन इति चेत् ।

अपेक्षितत्वात्प्राधान्य कामशब्दा हि तत्पराः ।
विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितम् ॥

[ उम्बेक — ननु स्वर्गकाम इत्यत्र पुरुषविशेषणत्वेन स्वर्गं श्रूयते, विशेष्यत्वेन पुरुष । तेन विशेष्यपुरुषपरत्वैव कर्मपदस्य युक्ता, न विशेषणभूतस्वर्गपरता स्वर्गकामपदस्य इत्याशङ्क्यते— कथमिति । परिहारमाह— अपेक्षितेति । दृष्टे ज्योतिष्टोमप्रकृतिविकृतिप्रकरणाना प्रैषानुवचनादीनामतिदेशात एव प्राप्तत्वात् ' लोहितोष्णीषा ऋत्विजः प्रचरन्ति ' ' दण्डी प्रैषानन्वाह ' इतिवचन विशेषणभूतलोहितोष्णीषदण्डविधानार्थं गम्यते, तथा नात्यन्तत एव पुरुषस्य प्राप्तत्वात् विशेषणभूतस्वर्गपरता स्वर्गकामपदस्येत्यर्थः । ]

यद्यपि स्वर्गादय पुरुषविशेषणत्वेन श्रूयन्ते, तथापि कामश्रुतयस्तत्प्रधाना, ' दण्डी प्रैषानन्वाह ' ' लोहितोष्णीषा ऋत्विज प्रचरन्ति ' इति दर्शनात् । कुतः ? भावनाया भाव्यस्यापेक्षितत्वात् । स्वर्गादीना च काम्यतया भाव्यत्वप्रतीते द्वितीयाद्यप्रयोगे इव तथापीष्टत्वप्रतिपादनात् ।

[ उम्बेक — तथेति । काम्यत्वमात्रेऽपि इष्टं भाव्य प्रतीयते इत्यर्थः । ]

तेन पुरुषप्रतीति स्वर्गकामपदे अनुवाद, स्वर्गमित्येतावद्विधित्सितम्, भाव्यविशेषपरत्वात्, धात्वर्थस्य श्रोतस्यापि विधिप्रापकविधायकत्वात्, करणत्वेऽपि श्रुत्यनुग्रहाद्विरोधात्, शास्त्राधीनत्वात् योग्यायोग्यत्वयोरज्ञानात्, सर्वपुम्भावनानां पारार्थ्यविशेषप्रापकत्वात् । स्यान्मत स्वर्गादिविशेषणपरत्वेऽपि गुणाभावात् स्वर्गादि स्यात् । न, भाव्यस्य प्रथमापेक्षणात् ।

गृहदाहादेरप्यनुपरमप्रसङ्गः । तस्मात् फलगाः स्वर्गकामादिश्रुतय इति मनोहरम् । इति श्रीमण्डनस्य कृतिः भावनाविवेकः अवसितः ।

* भावनाशब्दो हि णिजन्तात्मिकां तत्स्वरूपापन्ना लिङ्गसंख्यायोगिनीं ( भावना ) अभिधत्ते । न चासौ आख्याते तादृशी अभिधीयते, लिङ्गसंख्यारहितरूपेण गम्यमानत्वात् । वा. २।१।१।१ पृ. ३८३. * भावनाशब्दस्य प्रयोजकव्यापारवाचित्वात् त्रिधेऽपि प्रयोजकलिङादिव्यापारत्वात् भावनात्वमस्ति । सु. पृ. ५५१.

* भावनासंबन्ध्यर्थप्रतिपादनेनैव पदार्थानां अर्थवत्वं घटते । सु. पृ. २५

* भावयेत् कथमित्यपेक्षा भवति, न करणेन कथमिति समभावनभावयोश्च नश्यति । वा ३।६।१८। ४१ पृ. १०६९ * भावयेत् । किम् ? स्वर्गम् । केन ? यागेन करणेन दर्शपूर्णमासलक्षणेन । स्वर्गः प्रधानभूतः, यागः साधने उपादीयमानश्च, तस्मात् तेषामितरेतरयोगो विरचितः । टुप्. ११।१।१।१, * भावयेत् स्वर्गम् । केन ? यागेन । कथम् ? इति प्रकारकाङ्क्षा भवति । ९।१।५।१७.

* भावितः सुखरूपस्य फलस्य प्रतिबन्धकं दुःखजनकं यत् पाप तस्य नाशक दुःखस्य तपः, स्नातिसंस्कारः । वि. २।८।४.

* भाव्युपयोगद्रव्यसंस्कारार्थं अदृष्टार्थं सन्निपत्योपकारकं कर्म प्रवृत्तिरूपं वैदिकं कर्म द्विविधं साक्षान्नियुक्तसंस्कारार्थं साक्षान्नियुक्तोपकारकसंस्कारार्थं चेति । बाल पृ. ८३.

* भाव्युपयोगसंस्कारार्थं दृष्टार्थं सन्निपत्योपकारकं कर्मेदं प्रवृत्तिरूपं वैदिकं कर्म द्विविधं द्रव्यसंस्कारकं देवतासंस्कारकं चेति । बाल. पृ. ८१.

* भाव्यं प्रागसत् । यच भाव्यते तद् व्यक्तं असत् । सतो हि भावो नोपपद्यते । असच्चेत् कर्मणा भाव्यते, पुनः पुनरपि भावयिष्यते, कृषिवत् । भा. ११।१।८।२४. * यद् भाव्यं तत् कर्तव्यतां प्रतिपद्यते । यच्चिरस्य तत् करणत्वं प्रतिपत्तुं शक्नोति दानादि । टुप्. ६।२।१।१. * कश्चित् विक्रियमाणतया भाव्यः यथा 'व्रीहीनवहन्ति' इत्यत्र अवघातभावनायाः व्रीहयः । कश्चित् संस्कार्यत्वेन यथा व्रीहय एव प्रोक्षणभावनायाः । कश्चिदुत्पाद्यत्वेन यथा 'प्रणीताभिर्हवींषि संयौति' इत्यत्र संयवनभावनायाः पुरोडाशः । कश्चित् प्राप्यत्वेन यथा 'गां दोग्धि पयः' इत्यत्र गोदोहनभावनायाः पयः । टुप्. टिप्पणी च ९।१।२।२.

* भाव्यता । इच्छायोनित्वेन भावनायाः समीहितभाव्यनिरूपणव्यापारणात् भावनास्वरूपालोचनया पुरुषार्थस्य भावना । सु. पृ. ५८३.

* भाव्यमानं धर्मानाकाङ्क्षति करणानुग्रहद्वारेण । टुप्. ९।१।२।१, * भाव्यमानेन करणेनेतिकर्तव्यता आकाङ्क्षिते । ९।१।१।१.

* भाषा । यद्यपि पाणिनिना वेदे इव भाषायामपि स्वरानुशासनस्य कृतत्वात् लोकेऽपि स्वरनियमावश्यम्भावः तथापि लोके स्वरनियमस्य शिथिलादरेण सम्प्रत्यनुष्ठाने वर्तन्ति इत्यादिवत् अप्रयोगादेव स्वरनियमो नावश्यक इत्याहुः । सोम. १।३।१० वर्णकं १.

* भाषाशब्दत्वं न प्राकृतत्वम्, अनादित्वाभावात् । तवि. पृ. ७२.

भाषास्वराधिकरणम् । मन्त्रे ब्राह्मणमन्त्रेषु प्रवचनः स्वरः एव प्रयोक्तव्यः, न भाषिकस्वरः ॥

भाषास्वरोपदेशादैरवत्प्रावचनप्रतिषेधः स्यात् । १२।३।८।२०॥

भाष्यम्— भाषिकेण स्वरेण केचित् मन्त्रा ब्राह्मणे उपदिष्टाः, मन्त्रब्राह्मणप्राये त्रैस्वर्येण पठिताः । यथा 'इमामगृभ्णन्' इत्यश्वमेधे । कः पुनर्भाषिकः स्वरः ? उच्यते, 'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥' इति । तेषु मन्त्रेषु प्रावचनस्य स्वरस्य प्रतिषेधः स्यात् निवृत्तिः । कस्मात् ? स्वरान्तरोपदेशात् । ऐरवत् । यथा इरापदस्योपदेशात् कर्मकाले गिरापदस्य निवृत्तिः । कथं पुनर्ज्ञायते स्वरस्यायमुपदेशो न मन्त्रस्य इति ? मन्त्रो नोपदेष्टव्यः, रूपादेव प्राप्नोति । स्वरस्त्वनुपदिष्टो न प्राप्नोति । तस्मात्स्वरस्योपदेशः ।

उपयोगसंभवेन कर्मकालप्रयोज्यत्वे प्रमाणाभावात् ब्राह्मणस्वर एव प्रयोक्तव्यः । इति प्राप्ते, विनियोजकवचनस्य शब्दमन्त्रस्वरूपमात्रविनियोजकत्वेन अशब्दस्वरविनियोगपरत्वे प्रमाणाभावात्, ब्राह्मणस्वरस्य च पूर्ववाक्यप्रवृत्तस्वराविच्छेदार्थत्वेन अन्यथासिद्धतया स्वतो विनियोगान्तरकल्पनानुपपत्तेः, मन्त्रसमाम्नानसिद्धस्वरस्य च अनन्यथासिद्धतया स्वाध्यायविधिबलेन विनियोगान्तरकल्पनया कर्मकालप्रयोज्यत्वावधारणात्, तस्यैव जपादौ पाठः ।

यत्तु पार्थसारथिना लिङ्गविनियुक्तमन्त्रविषये ब्राह्मणे गुणार्थवादपरिसंख्याद्यर्थत्वेन पुनः श्रवणेऽपि मन्त्रविनियोगफलकत्वस्यैव अभावे मुतरां स्वरविनियोगस्याप्रसक्तेः न ब्राह्मणस्वरप्रसक्तिरिति दूषणान्तरमुक्तम्, तत् लिङ्गविनियुक्तमन्त्राणां जपनिचोदनाचोदितत्वाभावे जपत्वे प्रमाणाभावात्, यत्र जपनिचोदनाचोदितत्वमस्ति तत्रैव लिङ्गविनियोगः, तत्र ब्राह्मणे पुनःश्रवणतो ग्यात्व्येयम् ।

' मण्डन—' मन्त्रोच्चारे भाषिको न स्वरः स्यात् । '
शंकर—' ब्राह्मणस्वरतो न ते । '

ट्री भाषास्वरोपदेशादैरवत् प्रावचनप्रतिषेधः स्यात् । १२।३।८।१० ॥

भाषा नाम स्वरविभागरूपो पन्थाः, तत्र उक्तः स्वरः भाषास्वरः, तेन भाषास्वरेण मन्त्राणां ब्राह्मणे उपदेशात् कर्मकाले मन्त्राणां प्रावचनस्य प्रवचनकालीनस्य अध्यापनाध्ययनकालीनस्य स्वरस्य प्रतिषेधः स्यात् । कर्मकाले मन्त्राः प्रावचनेन स्वरेण न प्रयोज्याः किन्तु भाषिकस्वरेण प्रयोज्याः । ऐरवत् यथा इरापदस्य उपदेशात् कर्मकाले गिरापदस्य निवृत्तिः तद्वत् । इति पूर्वः पक्षः ।

मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः । २१ ॥

ब्राह्मणे 'इन्द्राक्षाभिधानी आदचे इन्द्रात्' इत्यादौ मन्त्रोपदेशः मन्त्रस्योपदेशः न भाषिकस्य स्वरस्योपदेशः । भाषिकश्रुतिस्तु प्रायापत्तेः । भाषास्वरो ब्राह्मणे प्रवृत्तः । तन्मध्ये मन्त्रो यदि प्रावचनेन स्वरेण पठ्येत भाषिकस्वरसंतानस्य विच्छेदः स्यात्, तत्परिहारार्थं भाषिकेण उपदेशः । न मन्त्राणां भाषिकस्वरोपदेशः इति सिद्धान्तः । जपादिमन्त्रेष्वेतत् ।

विकारः कारणाग्रहणे । २२ ॥

यदुक्तं ऐरवत् इति (२० सूत्रे) तत्रोच्यते । गिरापदे इरापदरूपो विकारः । कारणाग्रहणात् यथा भाषिकस्वरस्य अनुपदेशो मन्त्रोपदेशेन कारणेन उक्तः नैवं इरापदस्य अनुपदेशे किंचित् कारणं दृश्यते । तस्मात्तत्र विकारः । तस्मात् कर्मकाले जपादिमन्त्रेषु न भाषिकस्वरोपदेशः किन्तु त्रैस्वर्यम् । इति सिद्धान्तः । के.

* भाषिकः स्वरः । ' छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥ ' भा. १२।३।८।२०. * भाषिकः स्वरः शतपथब्राह्मणस्वरः । वि. १२।३।८. * भाषिकस्वरः क्रतौ ब्राह्मणोत्पन्नानां मन्त्राणां प्रयोक्तव्यः । १२।३।९।२३–२४. मीको. पृ. १४९७ 'क्रतौ ब्राह्मणोत्पन्नानाम्० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* भाष्यान्तरमतिभ्रान्त्यपनयार्थं तु पुनरारम्भः (अश्वप्रतिग्रहेष्ट्यधिकरणस्य) । वा ३।४।११।३१ पृ. ९६७.

* भाष्यकारेण तत्पक्षनिराकरणपरं यत्किञ्चिदुक्तं (वाणमपि चमसश्च ब्रह्म एव) तत् उपेक्षणीयम् । वा. ३।७।१८।३८.

* भाष्यकारान्तरम् । यत्तु अस्मिन्नधिकरणे भाष्यकारान्तरेण अत्र फलवदफलत्व– प्राकृतवैकृतत्व– नित्यानित्यत्व– उत्तरवेदिनिकायविकारत्व– विचारः कृतः, स उदाहरणान्तरेषु अधिकरणान्तरसिद्ध, इह अप्रसक्तोऽपि स्मरणमात्रार्थेन उपन्यस्त इत्युपेक्षित. । भा. २।३।१०।२२ । अत्र सुधा– फलवदफलत्वविचारः पर्णमय्यधिकरणसिद्धः । प्राकृतवैकृतत्वविचारस्तु अस्मिन्नेवोदाहरणे अग्न्यतिग्राह्याधिकरणसिद्धः । नित्यत्वानित्यत्वविचारस्तु गोदोहनोदाहरणे 'नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात्' (३।६।३।१०) इति तृतीयाधिकरणसिद्धः । उत्तरवेदिनिकायविकारत्वविचारस्तु पञ्चमे द्वितीयेऽध्याये 'मध्यमायामुपसदि अग्निश्रीयते, महायु-

पशुन्तरात्' इत्यत्र तत्रत्यभाष्यकृता कथमाप्त । पृ. ९४९ ॥ भाष्यकारान्तरैः वारुणेष्टिः प्रतिग्रहीतुरेवेष्टिः न्यवस्थापिता इति वार्तिकादिषु उक्तम् ( ३।४।११।३१ इत्यत्र ) । पराक्रमः ९।१.

● भिक्षा । यज्ञार्थं यद् भिक्षितं तत् ऋत्विक्परिग्रेषु अन्यस्य यजार्थं भार्थयितुम् । भा. १०।२।८।२७.

■ भिक्षुपादप्रसरणन्यायः । यथा कश्चिद्भिक्षुः यथेष्टाच्छादनवासस्थानादिलाभाय धनाढ्यगृहे प्रविष्टो युगपत्तल्लाभं दुर्लभं मन्वानः पूर्वमिह पादप्रसारस्तु मे भवतु पश्चात्तदितरच भवतु क्रमेण सर्वं सम्पादयिष्यामीति धिया भव्या भिक्षां स्वीकरोति, तथा गानेऽपि हितैषिणी श्रुतिर्द्वैतवाक्ये मुमुक्षोः मनोऽभिनिवेशयन्ती सहसा तं अशक्यं मन्वाना पूर्वोक्तक्रमेण सत्वरमुक्तये तद्बोधयतीति बोध्यम् । साहस्री. ४१.

● भिक्षुभिया स्थाल्यनधिश्रयणन्यायः । नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते ( भामती. १।१।१ प्रस्. पृ. ७४ ) । संग्रहः.

■ भिक्षुभिया स्थाल्यनधिश्रयणन्यायः । यथा भिक्षुकभयेन कोऽपि स्थाल्य(न)धिश्रयणं न करोति, तथा स्वमनःप्रविचारेण तत्त्वज्ञानासमर्थेनोपदेशकाना च प्रतारकत्वशङ्कास्पदत्वात् प्रायुत तेभ्योऽनर्थप्राप्तिशङ्कासम्भवेन तद्भयेन त्याज्य एव गुरवेषिणो ब्रह्मविचार इति न समीचीनम् । किन्तु शास्त्रोक्तप्रकारेण सम्यक् परीक्ष्य साधुत्वाऽसाधुत्वनिर्धारणम् असाधुत्यागःसाध्वाश्रयणयोः संभवेनाऽसाधुप्रतारणभिया ब्रह्मविचारो न त्याज्य इति भावः । साहस्री. ३४७.

● 'भिक्षुको भिक्षुकान्तरात् भिक्षते' इति न्यायः । एकाहायया द्वादशाहोऽतिदिश्यन्ते उक्थ्यादिस्तोत्राणि तथा द्वादशाहेऽपि एकाहादेव अतिदिश्यन्ताम् । द्वादशाहदतिदेशे तु 'भिक्षुको भिक्षुकान्तरात् भिक्षते' इति न्याय आपतेत् । नि ८।३।७.

● भिद्येत हि तथा वाक्यम्, यदि दध्यत्र विधि.। है ऐते तत्र भवेत् । ( 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र )। भा १।४।५।८.

● 'भिन्ने' इतिवत् 'पुत्रे' इति निमित्तपरैव सप्तमी इति पूर्वपक्षः ( 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्यत्र )। भाट्ट.४।३।१४. ● 'भिन्ने जुहोति' इति सप्तम्यन्तं निमित्तं भवति । टुप्. ९।१।११. ● 'भिन्ने जुहोति' इति हि नैमित्तिकं कर्माङ्गम् । भा. ६।४।४।१६, ● 'भिन्ने जुहोति' इति होमः एकदेशभेदेऽपि । कृत्स्नभिन्नं नाम चूर्णीकृतं अयोग्यं प्रयोजनाय । यच्च कृत्स्ने विगतेऽपि प्रयोजनसमर्थं तदेकदेशभिन्नम् । ६।४।४।१०, ● 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति विहितो भेदनादिहोमः निमित्तावृत्तौ आवर्तनीयः, न तु सकृदेव कार्यः । दर्शपूर्णमासादौ पात्रादिभेदे आज्यादिस्कन्दनादौ चायं होमः । वि. ६।२।९, ● 'भिन्ने जुहोति' 'स्कन्ने जुहोति' एषां भेदनहोमादीनां नैमित्तिकानामनेकेषां प्रयोगवचनपरिगृहीतत्वेन समुच्चयः, न तु विकल्पः, भेदनादिनिमित्तमुपजीव्य विहितत्वात् । १२।३।६ .

● भिन्नकर्तृकत्वं प्रयोगार्थयोः । ३।८।११।२३.

● भिन्नकल्पयोः अपि याजपुरोहितयोः कुलायऽधिकारः । ६।६।२।१२-१५.

● भिन्नकार्याणां गुणानां एकस्मिन् कर्मणि समुच्चयः । १२।३।३।९. मीको. पृ. १२६८ 'एकस्मिन् कर्मणि भिन्नकार्याणा॰' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● भिन्नजातिषु पशुषु कुम्भ्यादीनां भेदेनानुष्ठानम् । ११।४।१०।४०-४१.

● भिन्नदेवताकेष्वपि शूलादीनां तन्त्रता । ११।४।५।१४-१५.

● भिन्नदेवताकपशुगणे वपाहोमस्य आवृत्तिः । ११।२।६।२६.

● भिन्नदेशकालानामप्यङ्गानां तन्त्रता वचनानुसारेण । भाम. ११।३।१.

● भिन्नप्रयोगवचनपरिगृहीतानां अपि पौर्वापर्यं चिन्त्यते । टुप्. ५।१।१२।३०-३४.

● भिन्नप्रवृत्तिनिमित्तानां शब्दानां सामानाधिकरण्यम् । मु. टू. ४०९.

ॾ मीमभासहदन्यायः । 'दाम शल्कटन्यायो न स्यात् तत्र कदाचन । मीमभासहदन्यायः सर्वदा नेऽस्तु यत्र ॥' इत्यादि वासिष्ठे सप्रपञ्चमुपन्यस्तम् । तत्र आद्यस्य (दामव्यालकटन्यायस्य) उच्चैस्तरां दशामापन्नस्यापि अशस्य अतिनीचदशाप्राप्तिः अचिरेण कालेन भवतीति तत्त्वबोधोऽवश्यं सपाद्य इति विवक्षाया प्रवृत्तिः । दामव्यालकटाख्याः त्रयः असुराः शम्बरेण स्वमायया निर्मिताः । ते च तत्प्रद्युम्नादिना मेर्वादिचूर्णीकरणे क्षमा अपि अज्ञानप्रभावात् कालेन मशकादियोनिं प्रापु इति प्रसिद्धं तत्र । द्वितीयस्य (मीमभासहद॰न्यायस्य) तु तत्त्वविद् कदापि स्वपदात् पततीति विवक्षाया प्रवृत्तिः । यथा भीमभासदृढाख्या. त्रयोऽसुराः शौनैर शम्बरेण तथा निर्मिताः चिरं जीवन्मुक्तिसुखमनुभूय निर्वाणपदं प्राप्ता इति तत्रैव । मादृशी. ४०५,४०६.

● मीमभस्य च सर्वाश्रमधर्मव्यतिरेकेणावस्थानम् । अपत्नीकस्य च ऋतुप्रयोगः धर्मव्यतिक्रमः । वा. १।३।६।७ पृ. २०३—०४ । भीष्मस्य अनाश्रमित्वं अपत्नीकस्य च 'स एव भीष्म कुरुनन्दनेन बुभुक्षुताश्रितवीर्यागिभेदाः.' इति ऋतुप्रयोगश्चेति धर्मव्यतिक्रमद्वयम् । सु. पृ. १८५ । (इति षट्न्यायमुच्यम्—) भीष्मस्य पितृभक्तिवशात् क्रियमाणधर्ममात्रार्थदारस्य व्यतिक्रमापत्तिनिमित्तत्वस्य नामाशिद्धिः । 'भ्रातृणामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥' इत्येवं विचित्रवीर्यक्षेत्रजपुत्रलब्ध— पितृऋणतः वैयर्थ्यकार्यपत्नीसम्बन्ध आसीत् इति अर्थापत्त्या अनुक्तमपि गम्यते । 'यो वा पिण्ड पितृ पाणौ निशातेऽपि न दत्तवान् । चाद्यार्थाविश्वमाङ्गीनो भवेत्फलस्यौ कथम् ॥' वा. १।३।३।७ पृ. २०८ । भीष्मेण शन्तनवे सत्यवतीं तत्पितरं याचता तस्मिन् महाराजे गजाभिधपुरे तिष्ठति एतस्याः पुत्राणां राज्यालाभात् नेमां ददामि इति तत्पित्रा प्रत्याख्यानेन 'राज्यं नाहं करिष्यामि' इति प्रतिज्ञाते, तत्पत्नीत्वचापि तत्सन्ततिभयात् नैतस्याः सन्ततिः राज्यभागिनी स्यात् इति तत्पित्रा पुनः प्रत्याख्यानेन 'अनपत्यतोऽपि च करोम्येनद्विनिश्चयम् । अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति ॥' इति पितृभक्त्या ब्रह्मचर्यव्रतग्रहणात् नैमित्तिकेन च व्रतेन नित्यस्य ऋतुकालगमनस्य बाधात्, धर्ममार्गेण अहं भार्यां परिणेष्यामि इति परिभाष्य परिणीतायाः अगमनेऽपि अदोषः । सु. पृ. १९२.

● भीष्मादेः यज्ञानधिकारिणः यज्ञसङ्कीर्तनालम्बनानि पूजाप्रतिग्रहदानानि पुराणेषु दर्शितानि । सु. पृ. ७५०.

■ मुञ्जया शिरोवेष्टनेन नासिकास्पर्श इति न्यायः । यत्र आयासं विना साक्षात् सिद्ध्यन्तमर्थं उपेक्ष्य आयासेन परम्परया स एवार्थः साध्यते, तत्र अयं न्यायः अवतरतीति । माहुली. २५४.

ॾ 'भुवनस्य पते' इत्याद्यो दशाहुतयो रथमुखे स्युः ॥

'भुवनस्य पते इति रथमुखे दशाहुतीर्जुहोति' इति विधायैव शाखान्तरे 'पञ्चाहुतीः' इति पठ्यते, तत्र शाखाभेदाद्विकल्पे प्राप्ते, 'भुवनस्य पते' 'स नो भुवनस्य पते' इत्यनयोर्द्वयोरेकरूपत्वादेकपर्यायीकृत्य पञ्चेति वाद । अथवा दशसु पञ्चानां अन्यासु वाचः 'यद्द्वाकपाले भवति' इतिवत् । शाखान्तरीयशाखानुपसंहारेण एकवाक्यतोपपत्तौ वाक्यभेदविकल्पयो अन्याय्यत्वात् । संकर्ष. २।४।२८.

● 'भूः भुवः सुवरित्युभौ पतौ सहायत्ते स हि तस्य योनिः' इति श्रुतौ उभौ इति पदेन गार्हपत्याहवनीययोः उपादानोपादेययोः सहाधानाभावेन परामर्शायोगात् सभ्यावसथ्यपरत्वस्य वक्तव्यतया 'स हि तस्य' इत्यस्य साहित्यवद्भवपरत्वेन (साहित्यविशिष्टोभय॰) आहवनीययोनित्वश्रवणात् सभ्यावसथ्ययोः आहवनीयात् आधानं स्यात् इत्यादिः पूर्वपक्षः. 'स हि तस्य' इत्येकवचनेन सहितास्थिपयपरत्वायोगेन सः गार्हपत्यः तस्य आहवनीयस्य योनिः इत्येवं तदर्थकतया तयोर्नोक्तः प्राप्तिः इति सिद्धान्तः । संकर्ष. १।२।३. ● 'भूः (नाम यागः) वैश्वदेवस्त्रिवृदेव सर्वः, तस्य विश्वरूपः स्थौरीयाः धेनुर्दक्षिणा' । सा न दक्षिणा कृत्स्नस्य ऋतुदाक्षिण्यस्य निर्वर्तिका, न तु धेनवः समस्तम् । १०।३।१४।

५६-५८ मीको पृ २२७७ 'धेनुयाग' इत्यत्र द्रष्टव्यम्।

* 'भूः स्वाहेति गार्हपत्ये जुहुयात्, भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्, स्वः स्वाहेत्याहवनीये जुहुयात्, भूर्भुवः स्वः स्वाहेत्याहवनीये जुहुयात्' एतेषां विकल्पः, न समुच्चयः, विशिष्टवैगुण्यसमाधानार्थं प्रायश्चित्तत्वेन विहितत्वात्। ऋग् यजुः-सामतो भ्रेषप्रायश्चित्तार्थं निषिद्धाचरणजन्यदोषपरिहारार्थं च तेषां क्रमेण विधानेन अन्योन्यनिरपेक्षत्वात्। वि १२।३।७, * 'अथैष भूः' इति एकाहविशेषो भूः। तत्र 'धेनुर्दक्षिणा'। अनया धेन्वा 'गौश्चाश्वश्चाश्वतरश्च' इत्यादौ गोसामान्यस्यैव बाधः नाश्वादेः, ततश्च द्वादशशतं गावो धेन्वा एव दातव्याः, अश्वादयश्च दातव्या एव इति पूर्वपक्षः। धेनुरेकैव दातव्या। अन्या च सर्वा निवृत्तदक्षिणा बाध इति सिद्धान्तः। १०।३।१४

भ्वादिन्यायः। यथा 'भू सत्तायाम्' इत्यादि धातुर्हि निजनानार्थैरुपसर्गप्रत्ययरूपोपाधिभेदेन नानार्थः भवति, तथा भवदीयमपि 'सत्ताभावे मत्सरे वृद्धौ निवासे प्राप्तिसम्पदोः। अभिप्रायो च शक्तौ च प्रादुर्भावे गतौ च भूः॥' इत्युक्तत्वभेदेन प्रमाणानुभावपरीभवत्यादौ उपसर्गभेदेन भवन भूयते भवितेत्यादौ प्रत्ययभेदेन चार्थभेदः प्रतीयते, तथैकमेव ब्रह्म उपाधिभेदेन नानात्वमाभासते इति। साहस्री १७८

* भूवादि धातुः अभिधायी श्रुतिः। धाउ पृ ४१.

* भू-निष्पिष्टो वेदवर्णो मनीषानिश्चयम्। या २।१।२।१ पृ २०८

भूर्मौन्यौष्ण्यन्यायः। अथ यत्र अयथार्थाचारवचनस्य अन्यत्र आरोपविवक्षया प्रवर्तते। साहस्री ३७२

* भूसवर्णोरादे औपदत्तिकधेनुदक्षिणया ब्राति देवदत्तादत्तसकलदक्षिणाया बाधः। १०।३।१४।५६-५८ मीको पृ. २२०७ 'धेनुयाग' इत्यत्र द्रष्टव्यम्।

* भूत इव भव्य कर्म। मा ६।१।१।१ पृ १३४८

'भूत भव्य भविष्यद्वषट् स्वाहा नमः' इत्यादौ न मन्त्रभेदः॥

'भूत भव्य भविष्यद् वषट् स्वाहा नमः ऋग्यजुः साम वषट् स्वाहा नमः' इत्यादौ वषट्कारस्वाहाकारनमस्कारा प्रदानार्थाः, भूतादिनयेन यथाक्रमम् न्वयेन नियमनीतत्वसम्भवात्। इति प्राप्ते, सामा समस्तप्रधानप्रमाणमानेन केवललिङ्गेन होमानां कल्पनायोगात् भूताद्युद्देशेन प्रदानभेदकथनस्य स्तुत्यर्थत्वेनोपपत्तेश्च शुद्धिकरणमन्त्रस्य आहवनीयदेनेऽपि न प्रदानार्थाः। सकर्ष २।४।२९

भूतं भव्यायोपदिश्यते इति न्यायः। अयं मीमांसान्यायकाशो धृतः। तथाहि, किं द्रव्यगुणयो भावनाकरणत्वमुत धात्वर्थस्य इति भावार्थाधिकरणे (२।१।१।१-४) संदिग्ध द्रव्यगुणयोरेव भावनाकरणत्व भूतं भव्यायोपदिश्यते इति न्यायादित्याशङ्क्य धात्वर्थस्यैव भावनाकरणत्वमभियुक्त तन्त्र इति। साहस्री ८५२

* भूतं द्रव्यं भव्या क्रिया निवर्तयति इति क्रियाशेषत्वम्। अथवा यद्यपि यागो देवताः संस्कुर्वन् उपकरोति, तथापि साधनता प्रतिपद्यमान आश्रयो भवति, नान्यथा। अतो भूतं भव्यायोपदिश्यते। टुप् ४।१।७।१८

* स्वर्गादेस्तु नामपदाभिधेयतया सिद्धरूपस्य आख्यातवाच्य साध्य धात्वर्थ प्रति 'भूतं भव्यायोपदिश्यते' इति न्यायात् साधनतया गुणत्वेनाभिधानं च। तथा च पारमर्षं सूत्रम् 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः' (६।१।१।१)। भामती ३।२।८।३१ भट्

भूतं भव्याय कल्पते इति न्यायः। साहस्री ७११

* भूत हि तज्जन्य भयार्थं इत्येतद्धितं कर्मणा प्रयोजनम्। भा १०।१।६।१० * भूता नाम मन्त्राः राजसूये 'पृथिव्यै स्वाहा' इत्यादयः। अग्निप्रकरणे 'पृथिवि असि जमना' इत्यादयश्च। तथा च भूतेष्टकोपधाने उभये मन्त्राः समुच्चयेन विकल्पेन वा ग्राह्या इति पूर्वपक्षः। न सर्वे ग्राह्याः किंतु राजसूयिका एव (अग्निप्रकरणस्था) ग्राह्या इति सिद्धान्तः। सकर्ष ३।८।२३ * भूतस्य च भयार्थतां व्याख्या

दृष्टार्थत्वात् । न तु भव्यस्य भूतार्थता । भा. ६।१।१।१ पृ. १३४८, ० भूतस्य भव्यार्थता भविष्यति । एतद्धि कर्मणा प्रसिद्धं कार्यं यदाराद्रुपक्रिया । १०।४।२०।३८. ० भूतस्य स्वर्गपरत्वादेः द्रव्यस्य, भव्यं कर्म प्रति गुणत्वेन अन्वयः वक्ष्यते । सु. पृ. ४१५.

० भूतान्वाख्यानमात्रं यथाऽर्थिनैः ' सोऽरोदीत् यदरोदीत्तद्रुद्रस्य रुद्रत्वम् ' इत्यादिवाक्यैः यत् प्रतिपाद्यते तत्र यद्यपि तत्परमस्त्येव तथापि न तेन प्रयोजनम् । वा. १।२।१।२.

० भूतार्चकः । ' एवं य. सर्वभूतानि ब्राह्मणो नित्यमर्चति । स गच्छति परं स्थानं तेजोमूर्तिः पथर्जुना ( पथा ऋजुना ) ॥ ' मनु. २।९३। वा. टिप्पणी च ३।१।७।१३ पृ. ७०२.

० भूतार्थवादः । ' विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ ' विरोधावधारितयोः ज्ञानाभावे भूतार्थवादः । अत्र औपनिषदाः ' प्रजापतिरात्मनो वपामुदक्खिदत् ' इत्यादीनुदाहरन्ति । तदयुक्तम्, नवमे निग्रहादिपक्षनिरासात् । ' यत्र दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत् तत्सुखं स्वःपदास्पदम् ॥ ' इति अपनिषदश्च उदाहरणम् । बाल. पृ. ८८–८९.

० भूताधानवत् । आधानं भूतं यथा आहिताग्निं उत्पादयति तथा भूतचयनमात्रं अग्निचितं उत्पादयति इति पूर्वपक्षे । भाट्ट. ५।३।१०.

० भूतेष्टकाः अग्निशेषः न [illegible] चितिशेषः । तेन ताः सकृदुपधातव्याः न [illegible] प्रतिचिति । भा. ५।३।६। १५–१६. ० ' भूतेष्टका उपदधाति ' इति विहितानां इष्टकानां उपधानं प्राकरणिकैरेव मन्त्रैः । संकर्ष. २।४।२३. ० भूतेष्टकाः नाम इष्टकाः अग्रकरणे समाम्नाताः । तासामपि अग्न्यर्थत्वात् अमन्त्रकत्वं अकृष्यातं परम-संयोगः इति पूर्वः. वर्तव्याः । प्रकरणात् वाक्यस्य बल-वत्त्वात् । भा. ३।६।१२।३५.

० भूतेष्टकोपधानं प्राकरणिकैरेव मन्त्रैः । संकर्ष. २।४।२३. मीको. पृ. ४५ ' अग्निचयने भूतेष्टकोपधानं० ' इत्यत्र द्रष्टव्यम् । ० भूतेष्टकोपधानं राजसूय-मन्त्रैरेव इतिपक्षे यथाऽऽम्नातैरेव स्वाहाकारान्तैर्मन्त्रैः कर्तव्यम् । संकर्ष. २।४।२४, मीको. पृ. ४५ ' अग्निचयने भूतेष्टकोपधानं राजसूयगतमन्त्रैरेव० ' इत्यत्र द्रष्टव्यम् । ० भूतेष्टकोपधाने यदि पृथिव्यै स्वाहेत्यादि-राजसूयस्थमन्त्राणां विनियोगः स्यात् तदा स्वाहाकारमुक्तस्य प्रयोगः इति पूर्वः पक्षः । यथाम्नानमेव प्रयोग. इति सिद्धान्तः । संकर्ष. २।४।२४.

० भूतेष्टका-चित्रिणी-वज्रिणी-इष्टकानां मध्यमचितौ उपधानम् । ५।३।७।१७–१९ । अथ लोकंपृणायाः प्राक् । ५।३।८।२०.

० भूतोपयोगसंस्कारार्थं अदृष्टार्थं सन्निपत्योपकारकं तदर्थं प्रवृत्तिरूपं वैदिकं कर्म यथा, तुषदहिर्दोहः शिष्टाचारस्थाविधिप्रसः । बाल. पृ. ८१, ० भूतोपयोगसंस्कारार्थं दृष्टार्थं सन्निपत्योपकारकं तदर्थं प्रवृत्तिरूपं वैदिकं कर्म प्रतिपत्तिः इत्युच्यते । पृ. ८२.

० भूतत्वं वर्तमानध्वंसप्रतियोगित्वम् । मणि. पृ ११६.

० भूतभविष्यतो. भूते लक्षणा, भविष्यति नास्ति लक्षणा । टुप्. ४।१।११।२६.

० ' भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते ' (भाष्यवाक्य १।४।१४।००)। न्यायंकामाधिकरण-( ६।१।१ )पूर्वपक्षसूत्रे भूतस्य स्वर्गपरत्वादेः भव्यं कर्म प्रति गुणत्वेन अन्वयः गम्यते । सु. पृ. ८१५. ० भूतभव्यसमुच्चारणे हि भूतं भव्यार्थं भवति । भव्यस्य [illegible] भूतार्थत्वे अदृष्टार्थता कल्प्या स्यात् । न च दृष्टे सति अदृष्टकल्पना भवति । भा. ११।२।१६।६६

० भूतभव्यसमुच्चारणन्यायः । (६।१।१।१–३) अथ पदार्थपूर्वपक्षसूत्राणि । सु. पृ.१५४४. ० क्रयस्य गवामानयनसोमप्राप्त्यर्थत्वेन भूतभव्यसमुच्चारणन्यायेन विधायकत्वेन च प्राधान्यम् । वा. ३।१।६।१२ पृ. ६९८, ० ' पशुमालभेत ' इत्यत्र पशौ द्रव्यस्य नियोजनत्वात् तन्तुवत् अविवक्षिते प्सितार्थया द्वितीयया कारकसामान्य स्पृष्टिः तद्विशेषाकाङ्क्षाया सत्या भूतभव्यसमुच्चारणन्यायेन करणत्वेन गुणभाव. अवगमित. । ३।१।७।१५. ० सामान्यः

भूतभव्यसमुच्चारणन्यायेन अर्थवादानां चोदनार्थकार्ये हेतुत्वेनान्वयात् हेतुमपेक्षत्वलक्षणमप्रामाण्यं चोदनाना निराकर्तुमिदमधिकरणं इत्याहुः । मीम. १।२।१. * भूतभव्यसमुच्चारणन्यायात् अनुवषट्कारयागे वस्तुसामर्थ्यात् सोम अदृष्टम् । सु. पृ. १९५४–५५, * भूतभव्यसमुच्चारणन्यायात् उर्वंन पात्रसंनिष्पादकस्य द्रव्यस्य भवसीयते । पृ ६२२.

* ' भूतभाव्युपयोगं हि संस्कार्यं द्रव्यमिष्यते । सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित् ॥ ' इति सक्तुन्यायस्य स्वरूपम् । वा. ३।१।४।१२ पृ. ४११.

* भूतभाव्युपयोगोभयदेवतासंस्कारार्थं दृष्टार्थं संनिपत्योपकारकं नरत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म यथा, पशुपुरोडाशयागः । इदं च आश्रयिकर्मभेदेषु वक्ष्यते । बाल पृ. ८२.

* भूतभाव्युपयोगोभयसंस्कारार्थं तु द्रव्यसंस्कारकं कर्म नास्त्येव । बाल पृ. ८२

* भूमा गौणीवृत्तिहेतुः । ' सृष्टीरुपदधाति ' इत्यत्र 'एकयाऽस्तुवत ' इत्यनुवाके ( तैस. ४।३।१० ) सृजधातुप्रयोगभूमा वर्तते । तेन सृष्टि-असृष्टि-समुदायः सृष्टिशब्देन लक्ष्यते । शा. १।४।१०.

॥ भूमा । १।४।१२।२३–५ ॥

' सृष्टीरुपदधाति ' इति श्रूयते । अग्निचयने उपनेमा काश्चित् इष्टकाः सृष्टयो नाम । तदुपधानकरणमन्त्रेषु बहुषु ' प्रजा असृज्यन्त ' ' भूतानि असृज्यन्त ' इति सृजधातुः प्रयुक्तः । नैपुण्येषु सृजधातुर्नास्ति । तथापि सृजधातुघटितानां बहुत्वात् सर्वे मन्त्रा तदुपधेया इष्टकाश्च सृष्टिशब्देन उच्यन्ते । तेनात्र सृष्टि-असृष्टिसमुदायः सृष्टिशब्दबोध्य । तादृशे समुदाये सृष्टिशब्दो गौणः । गुणश्चात्र भूमा नाम बाहुल्यम् । बहोर्भावः भूमा । अत्र सप्तदश मन्त्राः, तेषु प्रथम-चतुर्दश-षोडश सप्तदशेषु सृजधातुर्नास्ति, तत्र सृष्टिशब्दो गौणः । के.

॥ भूमाऽधिकरणम् । सृष्टिन्याय ॥

भूमा । १।४।१२।२३–५ ॥

भाष्यम्— ' सृष्टीरुपदधाति ' इति श्रूयते । तत्र गुणविधिः अर्थवाद इति संदेहे, अपूर्वत्वात् विधिः । इति प्राप्ते, उच्यते । यदि विधिः, सृष्टिमन्त्रका उपदधातीष्टका इत्यर्थः । तत्र नेष्टकानां विशेषः कश्चिदाधीयते, एवरूपाः सृष्टिमन्त्रकाः नैवरूपा इति । तत्र सर्वाः सृष्टिलिङ्गा मन्त्राः प्राप्नुयुः । अन्येषां असृष्टुक्तानां मन्त्राणां आनर्थक्यं स्यात् । तस्मात् अनुवादः, मन्त्रसमाम्नानात् प्राप्तानामुपधाने मन्त्राणाम् । सृष्टीनां सृष्टिषु संकीर्तनं सर्वनार्थवादार्थम् । अपि च विधित्वे लक्षणा, ' एकयाऽस्तुवत ' इत्यत्र या असृष्टयस्ता लक्षयेत् । ननु अनुवादेऽपि लक्षणा । नानुवादपक्षे लक्षणाया दोषः । कथं तु असृष्टिषु सृष्टिषु च सृष्टिशब्द इति । भूम्ना । बहवस्तत्र सृष्टिलिङ्गा मन्त्राः, अल्पको विलिङ्गा इति ।

वा—भूमा । यदि ' सृष्टीरुपदधाति ' इत्याख्यातप्रत्ययश्रवणात् विधिराश्रीयते, तत्र न तावत् धर्मविशेषेण वा काश्चिदिष्टकाः सृष्टयो नाम अन्याभ्यो विलक्षणा विज्ञायन्ते, या एवंविधलिङ्गैर्मन्त्रैः उपधीयन्ते ता एव सृष्टयः, तन्तेषधानमात्रमुद्दिश्य मन्त्रेषु विनीयमानेषु सकलत्वात्ते प्रत्यक्षवचनाविनियुक्तलिङ्गप्रकरणविनियोज्यमन्त्रानर्थक्यप्रसङ्ग । तस्मात् प्रकरणपाठादेव सर्वेन मन्त्रेषु प्राप्तेषु एकदेशानुवाद सृष्टयभिधाननिमित्तार्थवादार्थं अत्र चोदयन्ति । वचनचोदनयैव उपधानस्य प्राप्तत्वात्, लिङ्गप्रकरणानुमितया च श्रुत्या मन्त्रप्राप्ते, एकदेशानुवादस्यार्थवादानुपपत्तिः, एकवाक्याधीनत्वात् अर्थवादप्रवृत्तेः । तथा च प्रथमार्थवादे व्याख्यातम् । न चान्यो गुणः श्रूयते, यदर्थता कल्प्येत, तत्र परिसंख्यार्थतैव प्राप्नोति । ततश्च तदवस्थमानर्थक्यमिति वाच्यः पुनः श्रुतिप्रयोजनम् । तत्र केचिदाहुः । उपधानमेवात्र विधीयते, तस्माच्चाभ्यपदर्शनार्थं न मन्त्रग्रहणम् । इत्थमिदं प्रशस्तम्, यदेवरूपैर्मन्त्रैः क्रियते इति । चयनेनार्थगृहीतमुपधानमिति चेत्, तद्धृतस्थापनेनापि चयनोपपत्तेः । न नैव सहतानामेोपधानं स्यात्, न, तस्येष्टकाः प्रति उपादीयमानस्य प्रतिप्रधानावृत्तिन्यायसिद्धेः । अपि च,

' प्राप्नुवन्त्यपि वक्तव्या पुनरेवंविधा क्रिया । आध्वर्यवसमाख्यानं तथा हि प्रतिपद्यते ॥ ' तत-श्चाध्वर्युकर्तृकत्वं च लभ्यते । अर्थगृहीतायां तु अनियमः स्यात् । न चावश्यमुपधाने एव सर्वे मन्त्रा विनियुज्येरन् ।

अविशिष्टसामर्थ्या हि केचिद् ग्रहणाद्यपि कुर्युः । अपिच, ‘ प्रत्यक्षब्राह्मणोक्तानां मध्यमा चितिराश्रयः । तदर्थमपि संबन्धः कार्यो मन्त्रोपधानयोः ॥ ’ ये तु श्रोपानुवाक्यगण्डाधीनास्तेषां वाक्यादृते संबन्ध एव नास्तीत्यर्थवदेव वचनम् । न चावश्यमनेन सूत्रेणार्थवादत्वं प्रतिपाद्यते, अलिङ्गातल्लिङ्गेषु भूयस्त्वनिमित्तशब्दप्रवृत्तिमात्रकथनात् । अतो नातीव सूदिनामविधानमाकर्तव्यम् । भाष्यकारेण तु विधौ लक्षणा परिहर्तुं अनुवादत्वमाश्रितम् । ‘ एकयाऽस्तुवत ’ इति हि अनुवाकाद्यस्यैवानुष्टिलिङ्गत्वात् आत्मपरित्यागेनेतरलक्षणार्थता स्यात्, तत्कृतविधा च पुनस्तस्माऽपि प्रतिपादनीय इत्यतिगौरवम्, उपधानानुवादर्थत्वेन पुनरनुवादत्वादृष्टा लक्षणा ।

शा— ‘ सूदीरुपदधाति ’ इति सूदिशब्दो गुणविधिः, उत अर्थवाद इति संशयः । तत्र आख्यातसंबन्धात् विध्यन्तरैकवाक्यत्वाभावात्, अर्थवत्त्वाच्च विधिः । सूदिलिङ्गा मन्त्रा उपधानार्थेन विधीयन्ते । ( सूदिशब्दो हि ‘ तदस्यास्त्यस्मिन्निति मतुप् ’ ‘ तद्वानासामुपधानो मन्त्र इतीष्टकासु, लुक् च मतो ’ [ पा० ४।४।१२५ । मत्वन्तात् प्रथमासमर्थात्, आसामिति षष्ठ्यर्थे यत्-प्रत्ययः स्यात्, यत् प्रथमासमर्थं उपधानः उपधानकरणभूतः मन्त्रश्चेत् स भवति । तत् यत् आसामिति निर्दिष्टम्, इष्टकाश्चेत् ताः भवन्ति । मतोश्च लुक् भवति इति सूत्रार्थः ] इति सूत्रेण सूदिमान् आसां इष्टकानां उपधाने उपधानार्थो मन्त्रः इत्यस्मिन्नर्थे यत्प्रत्यये मतुप्-प्रत्यये च सति छान्दसत्वेन यत्प्रत्ययलोपात् निष्पन्नः [ सूदिशब्दः ] सूदिशब्दवन्त् मन्त्रोपधेयेष्टकावचनः । तत्र विशेष्यभूतानामिष्टकानां अन्यतः प्राप्तावपि विशेषणभूतमन्त्रविधिः संभवति इति भावः । पूर्वपक्षं निरस्य सिद्धान्तमाह— ) नैतम् । लिङ्गप्रकरणाभ्यामेव प्राप्तत्वात् न विधिर्मन्त्राणां संभवति, तथा सति परिसंख्या स्यात् । तत्र बहुषु मन्त्रेषु प्रकरणपाठेषु सूदिविधानात् अन्ये परिसंख्यायेरन्, सा च त्रिदोषा परिसंख्यानानां च मन्त्रान्तराणां चानर्थक्यं स्यात् । तस्मात् उपधानमेवात्र विधेयम् । ‘ सूदीः ’ इति तु लिङ्गप्राप्तमन्त्रानुवादमात्रम् ‘ यथासूक्तमेवावरुन्धे ’ इत्यस्यार्थवादस्य उपपत्त्यर्थं इति भाष्याभिप्रायः । केचित्तु मन्त्रविधिमेव समर्थयन्ते । नहि ‘ एकयाऽस्तुवत ’ इत्येवमादीनां उपधानैकान्तिकं लिङ्गमस्ति, येन प्राप्तिः स्यात् । ( उपधाने योगं विना ‘ यो वा इष्टकानां प्रतिष्ठां वेद, प्रत्येव तिष्ठति, तया देवतयाऽङ्गिरस्वद् ध्रुवा सीदेत्याह, एषा वा इष्टकानां प्रतिष्ठा ’ इतिवाक्यविहितस्य तयादेवतयेतिमन्त्रैकवाक्यभावस्यापि असिद्धेः, न तदेकवाक्यतयाऽपि उपधानैकान्तिकं लिङ्गमुपपादयितुं शक्यमिति भावः ) । साधारणलिङ्गत्वाद्धि इष्टकानां ग्रहणासादनादिष्वपि मन्त्राः प्राप्नुयुः, तस्माद्विधेयाः । सत्यामपि उपधानप्राप्तौ मध्यमचितिसंबन्धार्थमपि मन्त्रविधानमर्थवत् भविष्यति । वक्ष्यति हि ‘ मध्यमायां तु वचनाद् ब्राह्मणवत्यः ’ इति ( ५।३।५। १९ ) । ‘ या वै का ब्राह्मणवतीरिष्टका अभिजानीयात्, तां मध्यमायां चितावुपदध्यात् ’ इति वचनेन अभिपूर्वकस्य जानातेः प्रत्यक्षार्थकत्वात् प्रत्यक्षब्राह्मणविहितानामिष्टकानां चयनगतपञ्चचितिपञ्चकमध्ये या मध्यमा तृतीया चितिः तस्यां प्राप्तिः, इति तत्सिद्ध्यर्थं विधानमित्यर्थः ) न चास्मिन् पक्षे सूदीनां विधानमवश्यमावक्तव्यम्, गुणवृत्तिनिमित्तकथनमात्रपरत्वात् । कः पुनरत्र गुणः ? भूमा । सूदिसमुदाये हि भूमाऽस्ति । सूदयसूदिसमुदाये अपि ‘ एकयाऽस्तुवत ’ इत्यनुवाके ( तैसं. ४।३।१० ) सूदिभूमाऽस्ति इत्यनेन साहश्येन सूदिशब्दः । १।४।१७.

सोम— पूर्ववैरूप्येण प्रत्यवस्थानात् संगतिः ।

वि— ‘ सूदीरुपदधातीति ये मन्त्राः सूदिलिङ्गकाः । विधेयास्ते गुणत्वेन वादो वा, ऽत्र गुणे विधिः ॥ आख्यातेनाभिसंबन्धाद्विध्यन्तरयोगतः, लिङ्गप्रकरणप्राप्तैर्मन्त्राणां विध्यसंभवात् ॥ तन्नन्यूनेष्वकाऽऽधानं विदध्यात् स्तोष्यते यतः । यथासूक्त्येनेनात्र सूदीरित्यर्थवादगीः ॥ एकयाऽस्तुवतेत्यादौ मन्त्रसंघे क्वचिद्धि । सूदिशब्दस्तथाप्युक्तिः सूदिशब्देन भूमतः ॥ ’ १।४।१७.

भाट्ट— ‘ सूदीरुपदधाति ’ इत्यत्र विध्यन्तरैकवाक्यत्वाभावात् प्रत्यक्षविधिश्रवणाच्च विधित्वम् । तत्र च उपधानमेव इष्टकासंस्कारार्थत्वेन विधीयते । यद्यपि

चेष्टनात्  चयनाद्वत्वान्यथाऽनुपपत्त्यैव उपधानं प्राप्तेन, तथापि तत्पूर्वमेव प्रत्यक्षविधिना विधीयते । तत्फलं च प्रत्येकोपधानसिद्धिः, चयनसमानकर्तृकत्वसिद्धिश्च । अन्यथा समुदितोपधानमपि कदाचित् प्राप्नुयात् । आर्थिकत्वाच्च नयनभिन्नकर्तृकत्वमपि । सति त्वस्मिन् इष्टकासंस्कारद्वारा चयनाङ्गताबोधकविधौ प्रतिप्रधानावृत्तिन्यायात् अङ्गप्रधानयोरेककर्तृकत्वलाभ एकत्वसिद्धिः । सृष्टिपदं तु लिङ्गसमवायप्रत्यक्षसृष्टिमन्त्रमात्रस्य गौणानुवाद इति भाष्यकारः । वार्तिककारस्तु–लोपधानमात्रविधिः तथा सति 'प्राणभृत उपदधाति' इत्याद्यनेकोपधानविधिवैयर्थ्यापत्तेः । अतो मन्त्रमात्रमुपधानानुवादेन मन्त्रनिशिष्ट वा उपधानमिष्टकासंस्कारार्थत्वेन विधीयते । तत्रोपधानविधिफलं तु पूर्ववत् । मन्त्रविधिफलं तूपधाने तन्नियमः । मन्त्रा हि इष्टकामात्रप्रकाशनसमर्थत्वाद् ग्रहणादिष्वपि प्राप्ता उपधाने नियमेन प्राप्नुवन्ति । अन्यत्र नियमः ग्रहणादिपरिसंख्यैव वा फलं लभ्यमानत्वेऽपि परिसंख्या । 'यां वै कांचन ब्राह्मणवतीमिष्टकामभिजानीयात् तां मध्यमायां चित्यामुपदध्यात्' इति वचनेन प्रत्यक्षब्राह्मणवतीनामिष्टकानां मध्यमचितिनिवेशस्य विधानात् । अन्यथा तत्तच्चित्यन्तरप्रकरणपाठप्राप्तानां मन्त्राणां नयनमहाप्रकरणेन सर्वचितिषु अन्त्यमायामेव वा निवेशापत्तेः । अतो मध्यमचितिनिवेशार्थं मन्त्रविधिः । इष्टकानां प्रत्यक्षब्राह्मणवत्त्वं च इष्टकावाचि-प्रत्यक्षमन्त्रपठित-पदविधेयमन्त्रकत्वम् । सृष्टिपदं हि सृष्टिप्रकाशकमन्त्रोपधेयेष्टकापरम् । तत्र च विशेषणांशस्य मन्त्रस्य विधेयत्वात् तत्तदिष्टकानां प्रत्यक्षब्राह्मणवत्त्वसिद्धिः । इतिकरणविनिर्मुक्तलोकपृणमन्त्रस्यापि मध्यमचितिमात्रसम्बन्धापत्ते इष्टकावाचीति पदविशेषणम् । अतश्च मन्त्रविशिष्टोपधानमत्र विधीयते । सृष्टिपदं परं गौण्या वृत्त्या समवायसम्बन्धेन सृष्टिमन्त्रपरम्, 'यत्सतदशेष्टका उपदधाति' इत्यर्थवादानुसारात् । तत्र चतुर्दश सृष्टिमन्त्राः ( १,१४,१७ इति– ) त्रयः असृष्टिमन्त्राः इति सृष्टिशब्दस्य भूयो योगीत्वनिमित्तम् ।

मण्डन—' भूम्ना स्युः सृष्टयो मताः । ' १६.

शंकर—' भूम्ना सृष्ट्यादिगौणता । ' १७.

* प्रत्यक्षब्राह्मणवत्त्वं इष्टकावाचिश्रुतशब्दविनिर्मुक्तमन्त्रोपधेयत्वं इत्युक्तमेव भूमाधिकरणे । भाट्ट.५।३।७.

२ भूमगुणयोगेन सृष्ट्यसृष्टिसत्त्वे सृष्टिशब्दप्रयोगः 'सृष्टीरुपदधाति' इत्यत्र । वि. १।४।१७.

* भूममूलकगौण्या इतय गौणी वाच्यते । बाल. पृ. १४३, * भूममूलकगौण्या लिङ्गसमवायमूलिका गौणी बाध्यते, पूर्वस्या बहूनां वाक्यानां नावभार्थान्वयात् इतरस्या तदभावात् । पृ. १४३.

* भूमिः न देया । का पुनर्भूमिरत्राभिप्रेता ? यदेतत् मृदाख्यं द्रव्यान्तरं पृथिवीलोकं नाम । न क्षेत्रमात्रं मृत्तिका वा । भा. ६।७।२।१, * भूमिर्न देया विश्वजिति । ६।७।२।१.

* भूमिरथिकवत् । प्रक्षणवाक्ये प्रयोगार्थे भूमिरथिकवत् । तथथा भूमिरथिकः भूमौ रथमालिख्य शिक्षां करोति, तथावे–प्राशुभावो भवितेति । भा. ७।२।२।१५, ९।२।२।१२

* भूयसा अल्प बाध्यते । प्रासङ्गोऽयम् । बाल पृ. १३२, वा ३।३।७।१४ पृ ८६०.

* 'भूयसा स्यात् सधर्मत्वम्' इति न्यायः । ( 'विप्रतिषिद्धधर्माणां समवाये०' १२।२।७।२२ इति सूत्रस्यायोऽयम् ) । निगद शब्दः सोमक्रयण इत्यत्र ( प्रकृतिवः प्रातेषु क्रयसाधनेषु ) गोत्व–अजात्व–जात्योः विकल्पेन प्राप्तौ गोत्वस्य 'गोमिथुनेन क्रीणाति' 'एकहायन्या क्रीणाति' इति वाक्यद्वयविहितक्रयद्वयसाधनत्वात् 'भूयसा स्यात् सधर्मत्वम्' इति न्यायेन एकहायनादनीभूत–अजात्व–बाधकता । क्रयान्तराणां तु अनयेव बाधा प्रासङ्गसिद्धिः । कौ. ३।१।६।१२ पृ १६९. * बहवश्च प्रैषार्थाः एको निगदः, 'तेन भूयसा स्यात् सधर्मत्वम्' इत्यपि प्रैषार्थे अध्वर्युरिति परिशेषात् प्रैषे अधीत् इति पूर्वपक्ष । वा. ३।८।१२।२३.

* भूयोऽनुग्रहन्यायः । दहराकाशमतिप्रपञ्चनस्य तदन्तर्गतवस्तुप्रतिपत्त्यर्थत्वाभावात्  उपासनायैवानर्थभावेन तेषामनन्वयासिद्धाना भूयसामनुग्रहानुरोधेन तत्सन्निधस्थत्वात्रादेः दहराकाशस्य अन्वेष्टव्यतापरत्वं अव-

सीयते, न तदुपाक्षिप्तगोपसंहारमात्रानुरोधेन । पराक्रमः ५९।२. ॐ भूयोऽनुग्रहन्यायः द्रव्यधर्मविषयः । सु. पृ. ८१३.

ॐ भूयोऽनुग्रहन्यायः । बह्वनुग्रहन्यायः । प्रधानेषु सहानुष्ठीयमानेषु धर्मविरोधे भूयोऽनुग्रहेण धर्माणामनुष्ठानम् ॥

**विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् । १२।२।७।२२ ॥**

भाष्यम्— पञ्चदशरात्रे अभिष्टुदेवाहः प्रथममहः । ततो ज्योतिर्गौरायुरिति त्र्यहः । परिशिष्टान्येकादशाहानि द्वादशाहप्रकृतीनि । तत्र धर्मविप्रतिषेधे सति एकादशानामह्नामभिष्टुवश्च विचार्यते । किमेषु द्वादशाहिको धर्मः कर्तव्यः उत अभिष्टुव इति । ननु सिद्धमेतत्, योरनामधेययोर्नानात्वपरीक्षायामेवाह्निको धर्मः कर्तव्य इत्युक्तम्, 'न वा नामभिधानाद्‌विशानामप्रत्यन्तरम्' इति ( ७।४।३।१५ ) । तथा सिद्ध न्यायान्तरेण आक्षिप्यते । अथवा नाम्नामेव विप्रचिन्ता । विप्रतिषिद्धधर्माणामेवैषा अभिष्टुवस्यैकादशानां चाह्नां समवाये एतस्मिन् पञ्चदशरात्रे भूयसामेकादशानामह्नां सधर्मत्वं स्यात् । तदीयो धर्मः कर्तव्यः । को हेतुः ? भूयस्त्वमेव । भूयःसु गुणवत्सु महत् फलं भवति । एकस्मिन्नल्पं फलम् । एवं हि लोके दृष्टान्तः । लोके, एकादशसु प्रदीपेषु तैलानि उपधीयन्ते एकस्मिन् गृहे महान् प्रकाशो भवति, विपर्यये अल्पः । किं पुनरिहोदाहरणम् । सुब्रह्मण्या अभिष्टुति आग्नेयी, इतरेष्वह स्वैन्द्री । तत्रैन्द्री कर्तव्या ।

दुप्— ( अत्र भाष्यकारेण पञ्चदशरात्रमुदाहृतम् । तत्र अभिष्टुत् प्रथममहः, ततो ज्योतिः, गौः, आयुः इति त्र्यहः, परिशिष्टानि एकादशाहानि द्वादशाहिकानि । तत्र अभिष्टुति आग्नेयी सुब्रह्मण्या नामधेयात् प्राप्ता, द्वादशाहिकेषु चोदकेन ऐन्द्री, तत्र बलाबलं चिन्त्यते । अथवा ज्योतिर्गौरायुः इति त्र्यहे नाम्ना ऐन्द्री प्राप्ता अभिष्टुति च नाम्नैव आग्नेयी । तत्र नाम्नामेव बलाबलं चिन्त्यते इति । इद भाष्यकारोक्तमुदाहरणमाक्षिपति — ) अस्मिन् सूत्रे पञ्चदशरात्रस्तावत् अनुदाहरणम् । ( कथम् ? ) या तावत् चतुर्जीवर्गपरिग्रहणोक्तकाला सुब्रह्मण्या, सा अभिप्लवे क्रियते ( 'तस्मात् त्र्यहर्तर' [ ११।३।११।२४ ] इति ह्युक्तम् ) । यथादेका च ( सा कर्तव्या ) आग्नेयी अभिष्टुति, अन्येषु ऐन्द्री । तत्र तावत् संशय एव नास्ति ( भेदेन करणात् ) अविरोधात् । या तु आग्निष्यान्ते उपसत्सु च ( क्रियते ), तस्याः ( तन्त्रेण क्रियमाणायाः ) विरोधः ( समापद्यते ) । तथापि देवतासंस्कारकत्वात् निगदस्य, यथादेवतमेव तन्त्रभेदः, नास्ति तन्त्रेणोच्चारणम् । यथा निर्वापमन्त्रः द्रव्यसंस्कारकत्वात् प्रतिनिर्वापं भिद्यते, एवमियमपि । तस्मात् इदं अपि सुब्रह्मण्ये भाक्ता तव्ये ( इत्यनुदाहरणम् ) । किं तर्हि अत्रोदाहरणम् ? यत्र पञ्च यागाः सह चोदन्ते फल प्रति, तत्र च त्रयाणां पौर्णमासिको विध्यन्तः, द्वयोर्दार्शिकः, तत्र अभिमर्शनाज्यभागमन्त्रयोर्विरोधः ( तदुदाहरणम् । तथाहि— अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामः, दधि मधु घृतमापो धानाः प्राजापत्यं इति सप्त यागाः । तत्र आग्नेये पुरोडाशे धानासु च आग्नेयो विध्यन्तः । तेन आग्नेयस्य पौर्णमास्यमावास्ययोर्भावात् न विरोधः । इतरे तु पञ्च यागाः विध्यन्ते । तत्र ऐन्द्रे पुरोडाशे दधनि च दार्शिको विध्यन्तः, मधुघृतयोश्च तथाप्युपांशुविकारत्वात् पौर्णमासिकः, तत्र अभिमर्शनाज्यभागमन्त्रयोः विरोधः चतुर्होतृपञ्चहोत्रोः अभिमर्शनमन्त्रयोः, वार्त्रघ्नयोः वृधन्वत्योश्च आज्यभागमन्त्रयोर्विरोधः इत्यर्थः । सिद्धान्तमाह— ) तत्र भूयसां धर्मानुग्रहः प्रयोगवचनानुग्रहाय ।

सोम—किं मुख्यधर्मस्यैव इतरत्र प्रसङ्गः, उत भूयसां धर्मस्य इति प्रसङ्गविशेषविचारात् संगतिः ।

वि— 'या पञ्चदशरात्रस्य सुब्रह्मण्याऽऽद्यकालगा । आग्नेयी स्यात् किमैन्द्री वा, प्रथमाहानुरोधतः ॥ आग्नेयी प्रथम चाह्नो विरोधानुदयाद् बलि ।, न बहुनुग्रहादैन्द्री कुलधर्मव्यापनीतितः ॥' 'त्यजेदेकं कुलस्यार्थे' इति न्यायादित्यर्थः । इद भाष्यमतेनोक्तम् । वार्तिकमतेनाह— 'दर्शयागप्रभृत्य वृधन्वत्याप्तवाचापुत । वार्त्रघ्नयाज्यभागार्थे, प्रथमत्वाद् दर्शीन्द्रयो ॥ दर्शधर्मातिदेशेन प्राप्त आद्यो, ऽन्तिमो यतः । घृतं मध्वापः इत्येषां बहूनां नन्तिरोचितः ॥'

**भाट्ट—** काम्येष्टिकाण्डे ‘ अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं दधि मधु घृतमापो धानाः तत्संसृष्टं प्राजापत्यं पशुकामः ’ इति श्रुतम्। तत्र चित्रेष्टिवदेव दध्यादिद्रव्यका अनेके यागाः। तत्र आग्नेयोऽष्टाकपालः, आग्नेयविकारः, स उभयकालत्वादविरुद्धः। ऐन्द्र एकादशकपाल ऐन्द्राग्नविकारः। दधियागो दधिद्रव्यत्वेन तद्धर्मा। मधुघृतोदकानां तु द्रव्यसामान्याभावात् पौर्णमासधर्मा। तदिह बहुद्रव्येषु सद्भिरमतीषु आज्यभागयोरात्मीयेन्द्रेषुमतीमन्त्राणाम्, हविरभिमर्शने चतुर्होतृपञ्चहोतृमन्त्रयोश्च नियमे मुख्यत्वेनाग्निजातविरोधित्वात् अमावास्याधर्माः। इति प्राप्ते, मुख्यधर्मानुग्रहस्य प्रथमभागत्वादपि भूयोऽनुग्रहानुरोधेन मासनाधनिधनं मुख्यत्वे प्रत्यक्षत्वं यागमङ्गीकृत्य भूयोधर्मजन्योपकारोपजीवित्वावगतेः पौर्णमासीविकारत्वम्, भूयसा तन्निदानम्, अल्पानां च निरूढधर्मे विषये प्रवर्तित्वम्। अविरुद्धानामन्यधर्माणां त्वग्रहणविशेषत्वात् सर्वेषां तन्त्रित्वमेव, आहवनीयधर्मादेरानुवृत्तिः। इदं च उभयानुग्रहस्यासंभवाभ्यासमभावनयाभिप्रायेणोदाहरणम्। उभयत्र तत्त्वे मुदाहरणान्तरं मृग्यम्।

यत्तु भाष्यकारेण ‘ पञ्चदशरात्रे अग्निष्टुत् प्रथममहस्तस्य नाम्ना अग्निष्टुन्नामविकारत्वादाग्नेयी सुब्रह्मण्या। ज्योतिष्टोमधर्मादिति स्यात्, तेषामपि नाम्नैवैकाहकाण्डपठितज्योतिष्टोमधर्मा. तैन्द्री सुब्रह्मण्या। इन्द्रस्तु एवाहस्तु चोदनाभिव्याप्तिदेशेनैव ऐन्द्री। तदिह सुब्रह्मण्याह्वानस्य द्वयोर्देवतयोरेव अनुष्ठानात् न कश्चिद्विचारः। अग्निष्टोमकतदीयसुब्रह्मण्याऽऽह्वानस्य तु सर्वमुख्यार्थं अग्निष्टोमस्य साधितत्वात् नियोज्यतो भूयोऽनुग्रहाय ऐन्द्री कार्या ’ इत्युक्तम्, तत् सुब्रह्मण्याह्वानस्य देवताप्रकाशनार्थत्वात् इन्द्रप्रकाशेन च अग्निप्रकाशनरूपकार्यसिद्धेरभावात् भेदेनैवोभयदेवत्यसुब्रह्मण्याकरणावगतेरपेक्षितम्।

अत एव एकादशाधिकरण अप्रतिरूपदेवताकसुब्रह्मण्याविषयम्। ■ नैतदभिमर्शनस्यापि द्रव्यभेदेन भिन्नानुष्ठानापत्तेः प्रकृतसिद्धवत्प्रसक्तिः, ‘ आसन्नानि हवींष्यभिमृशति ’ इति वचनान्तरविहिताभिमर्शनानुवादेन तत्तद्धविरुद्दिश्य ‘ चतुर्होत्रा ’ इत्येताभ्यां मन्त्रविधानेनानेकेषामपि हविषां सकृदभिमर्शनसंभवे मन्त्रमात्रानुरोधेन तदावृत्तौ प्रमाणाभावात् प्रसङ्गसिद्धत्वोपपत्तेः। अत एवासंभवे यत्राभिमर्शनस्यावृत्तिः तत्र स एव मन्त्र इति न प्रसङ्गः।

**मण्डन—** ‘ विरोधे बहुधर्मता। ’

**शंकर—** ‘ भूयांसः स्युः सधर्माणः। ’

* न चाऽऽकाराश्रुतिरपि पञ्चप्रकारमभ्यस्ता इति भूयोऽनुग्रहन्यायः उभयत्रापि तुल्यः इति चेत्, न। पराक्रमः ६।१।२, * भूयोऽनुग्रहन्यायेनापि आत्मनो सर्वलोकानिरसनसंबन्धस्यैव प्रवान्तरतात्पर्येणापि प्रतिपन्नता। ६।१।२, * अनुनिर्वाप्याधिकरणे भूयोऽनुग्रहन्यायेन अनुनिर्वाप्यधर्मप्रसङ्गे प्राप्ते यत्र सर्वेषां तन्त्रितया न कश्चिद् विशेषः, तत्र मुख्यानुग्रहन्यायात् भूयोऽनुग्रहः। यत्र तु एकस्मिन् द्वितीये प्रकृतिः इति प्रश्ने विशेषः तत्रैकस्य तस्मिन् एव धर्माः ग्राह्याः, बहूनामपि प्रधानोपजीवित्वेन स्वधर्मप्रयोजकत्वात्। ५७।१.
* नामधेयमुक्त्वाहम् अविरुद्धा इत्येऽपि कर्तव्याः विरुद्धास्तु नामप्रापिताः विरुद्धा अपि अनुन्याकालाये सर्वेऽपि तन्त्रेणानुष्ठेया धर्माः ये भूयोऽनुग्रहन्यायेन चोदकप्रापिता एव कर्तव्याः न नामप्रापिताः। सोम. ७।४।१.
* भूमोकस्य अग्रहावचनमाख्यातस्य भवणतत्परत्वान्तरप्रवाहानुसारेण तस्य प्रतिष्ठालोकत्वेन प्रतिपद्ये पृथिवीलोके एव विश्रान्तेः भूयोऽनुग्रहन्यायात्। पराक्रमः ६५।१.

## ■ भूयस्त्वेनोभयश्रुति। ३।३।३।१० ॥

‘ ज्योतिष्टोमेन स्वर्गकामो यजेत ’ इति यजुर्वेदे सामवेदे च समानस्वरमेव आम्नातम्। तत्र सामवेदे यदाम्नातं तत् नियमार्थं यजुर्वेदे च गुणार्थं विपरीतं वेति न निश्चयः। इति प्राप्ते, सिद्धान्तमाह। उभयश्रुति भूयस्त्वेन निर्णेयम्। यस्य उभयोर्वेदयोः श्रुतिः अस्य भवति तस्य भूयस्त्वेन निर्णयः। यत्र भूयांसो गुणाः समाम्नाताः तत्र तस्य कर्तव्यस्य चोदना स्यात्। यत्र च कर्तव्यतया चोदना तत्र इतिकर्तव्यता आकाङ्क्ष्यते। तत् इतिकर्तव्यतासिद्धेन कर्तव्यताचोदना अनुमिमीमहे।

तथा च ज्योतिष्टोमस्य याजुर्वेदिकत्वात् उपांशुः प्रयोगः । के.

■ भूयस्त्वेनोभयश्रुति । ३।३।३।१०॥

यजुर्वेदे ज्योतिष्टोमं समामनन्ति– 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तथा सामवेदेऽप्येवं समाम्नातम्– 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तत्रश्च कृतायां क्रियाबुद्धौ द्वितीयं गुणार्थं श्रवणं भवति । तत्र सन्देहः किं याजुर्वेदिकं गुणार्थम्, उत विपरीतम् इति । पूर्वमङ्गेष्वौत्पत्तिको वेदधर्मो विनियोगविधिवशेनापतन् इति प्रतिपाद्य इदानीं प्रधानमेव यन्मयत्वेन श्रूयते, तत्र कतरस्य वेदस्य मन्त्रस्य उच्चैष्ट्वादिधर्मोऽनुष्ठातव्य इति सन्देहे सति उभयत्र वाक्यस्य समत्वाविशेषात् कर्मोत्पत्तिस्तत्रैवानुष्ठातव्य इति स्थिते उत्पत्तिविधिरेव कुत्रेति विचार्यते । अत्राय पूर्वपक्षिणोऽभिसन्धिः । न तावत् एकस्योत्पन्नस्य अन्यत्र अङ्गसम्बन्धार्थं श्रवणम्, उभयत्रैवाङ्गश्रवणाविशेषात् । नापि फले विनियोगार्थम्, फलस्याप्युभयत्र श्रवणाविशेषात् । अतोऽप्येतमेवेन विकल्पेनैवोत्पादकत्वम् । यत्र एकस्य नाम वेदाध्ययनमभवे तत्र स्वशाखा नाकप्रथममध्येतव्या । तेन यद्वेदगता शाखा येन प्रथममधीता स एव वेदस्तस्योत्पादक इति शाखान्तराद्वेदमुख्ययोरपि व्यवस्थिततये विकल्प एवेति । एवं प्राप्ते, अभिधीयते । अनेनैव न्यायभूयस्त्वश्रवणेन निर्णयावधारणं स्यात् । यजुर्वेदे हि ज्योतिष्टोमस्य दीक्षणीयादिकेतिकर्तव्यता भूयसी श्रूयते, न तथा वेदान्तरे । इतिकर्तव्यतायाः प्रकरणत्राधत्वाद्येतिकर्तव्यता तत्रैव प्रकरणम् । यत्र च प्रकरणं तत्रैव कर्मोत्पत्ताप्रमाणादुत्पत्तिः । इतरत्र च गुणार्थं श्रवणमिति । तदुक्तम्– 'गुणानां यत्र भूयस्त्वमितिकर्तव्यतात्मकम् । तत्र तेनैव लिङ्गेन तस्य कर्तव्यतेष्यते ॥' इति (वा. पृ. ८१५)।

प्रयोजनम्— पक्षोक्तम् । सूत्रं तु उभयश्रुति यत्कर्म तस्याङ्गभूयस्त्वेनोत्पत्तिनिर्णय इति ।

तदस्य यथाभाष्यं सिद्धान्तहेतु वार्तिककारपादा नानुमन्यन्ते । यदि ह्यल्पितिकर्तव्यतोत्पत्तिगतो लिङ्गं तदा तदल्पत्वभूयस्त्वयोः को विशेषः । न हि धूमत्वेनावधारितोऽल्पीयान् धूमोऽग्निं नानुमापयति । तदुक्तम्– 'यच्चास्य गमकत्वेन स्वशक्त्यैवावधारितम् । तदल्पं बहु वा तस्य प्रतीतौ न विशिष्यते ॥' इति 'यादृशस्य हि धूमस्य गमकत्वावधारणा । स तादृग्बहुरल्पो वा वह्निं गमयति ध्रुवम् ॥' इति । (वा. पृ ८१६) । अतो यथावार्तिकमेव सिद्धान्तहेतुर्वर्णनीयः । प्रतिकर्म विशेषस्वरूपविज्ञानमुत्पत्तिः । द्रव्यदेवतेन च कर्मविशेषनिरूपणं भवति । ज्योतिष्टोमस्य च द्रव्यदेवतं कृत्स्नेन यजुर्वेदे समाम्नायते । तेन तत्रैव कर्मोत्पद्यते । इतरत्र वेदे कर्मस्वरूपमात्रमनुकीर्त्य स्तोत्रशस्त्रमात्रविधानात् गुणार्थमेव श्रवणम् । ननु अनेकेऽपि गुणाः प्रतिवेदं विधीयन्ते । नैषां प्रतिवाक्यं कर्मानुवादेन न विधयः श्रूयन्ते । नाप्येकेन कर्मानुवादेन सर्वेषां विधानमवगम्यते । अतो न वाक्यभेदेन अनेकगुणविधानम् । नापि प्रकरणेनानूद्यमानस्य, प्रकरणाभावात् । कर्तव्यस्य हीतिकर्तव्यताकाङ्क्षा प्रकरणम् । न चानुवादे कर्तव्यता सम्भवति । अतः प्रकरणेनाप्यङ्गसम्बन्धासम्भवात्कथं गुणार्थं श्रवणमिति । उच्यते, न हि स्वरूपेणानूद्यमानमितिकर्तव्यताकाङ्क्षापरिग्रहि । किं तर्हि ? विधानुद्देश्यत्वेनानूद्यमानत्वम् । इह तु यादृशं कर्मोत्पत्तिविधावगतं तेन गतेनान्येष्वन्तरे गुणस्यैव श्रवणमध्ययनविधिराश्रितं तदस्य प्रयोजनम् । स तु संनिधिसमाम्नातेतिकर्तव्यतासम्बन्धावगमार्थमेवेति निर्णीयते । अतो यजुर्वेद एव ज्योतिष्टोमस्योत्पत्तिः । वेदान्तरे गुणस्तन्त्रार्थमेव श्रवणमिति सिद्धम् । प्रयोजनम्– पक्षोक्तम् । सूत्रं तु द्रव्यदेवतादिप्रकाशकभूयस्त्वेन यजुर्वेद एव ज्योतिष्टोमस्योत्पत्तिरुभयवेदश्रवणेऽपीति स्थितम् । गीता.

* 'भूयस्त्वेनोभयश्रुति' इत्यनेन न्यायेन यन यागपरिचायकदेवतादिमता तत्रैव यागविधिः । कौ. २।२।४।१०.. * अंशद्वयस्य 'भूयस्त्वेनोभयश्रुति' इति न्यायेन औपानुवाक्यकाण्डे एव गुणविधिबाहुल्यात् प्रधानविधिरपि । संकर्ष. १।१।१४. * यस्य कर्मणः एकस्यां शाखायां भूयसामङ्गानां विधानम्, 'भूयस्त्वेनोभयश्रुति' इति न्यायेन प्रधानस्यापि तत्रैव विधानम् । शाखान्तरे तु स्वल्पाङ्गमात्रविधानम्, तत्र कर्मणि

तच्छासाध्यायिनामेवाधिकारः स्यात् इत्याशङ्का । सोम. ६।१।७. * यदि तु उभयत्र ( वेदद्वये मन्त्रः ) विधास्यते तत्रोभयत्र 'भूयस्त्वेनोभयश्रुति' इत्यादि न्यायेन तत्रागत्या विकल्पो गृहीष्यते । वा. ३।३।१।७.

☒ भूयस्त्वात्तद्वाद इति न्यायः । वस्त्वन्तरसम्पृक्तत्वेऽपि यस्य वस्तुनो बाहुल्यं तेनैव लोकव्यवहार इत्यर्थे अयं प्रवर्तते । स्पष्ट. । माहूली. ७५९.

▪ भूयोमन्त्राधिकरणम् । एककर्मणि भूयोमन्त्रसत्त्वे विकल्पेन मन्त्रस्य ग्रहणम् ॥

दर्शपूर्णमासयोः पुरोडाशपिण्डविभागे 'यथाभागं व्यावर्तेथाम्' 'भागो वा विभजत' इत्यादयो बहवो मन्त्रा आम्नाताः । ते सर्वेऽपि समुच्चित्य विभजने अङ्गानि, अन्यतमग्रहणे विनिगमनाविरहात् । एकस्य विनियोगे अन्यस्याऽऽकाङ्क्षाया अभावात् । अनेकेषामङ्गिना एकस्मिन् अङ्गे समुच्चयदर्शनाभावान्न्यायतौल्येन सिद्धेरिति पूर्वस्य पक्षस्य पुनः कथाभावात् मन्त्राकाङ्क्षायाश्च विकल्पेन विनियोगेऽपि शान्ते 'वा चतुर्भिरादत्ते' इत्यादिलिङ्गाच्च विकल्पेन विनियोगः । संकर्ष. १।२।३.

* भूयोमन्त्राधिकरणे ( १।२।३ ) 'यथाभागं व्यावर्तेथाम्' इत्यादिमन्त्राणां विकल्प उक्तः । संकर्ष. १।३।१६.

☒ भूलिङ्गशकुनिन्यायः । हिमाचलप्रान्तदेशे भूलिङ्गाख्यः पक्षी 'मा साहसं कुरु' इति पुनःपुनर्वर्णयन् सिंहदंष्ट्रान्तर्गतं मांसं जिघृक्षतीति प्रसिद्धम्, तथा परोपदेशमात्रकुशलः स्वयं च यथेष्टाचरणशीलो दाम्भिकस्यायं प्रवेति भावः । उक्तं च महाभारते— 'न गाथा गाथिनं शास्ति बहु चेदपि गायति । प्रकृतिं यान्ति भूतानि भूलिङ्गशकुनिर्यथा ॥' इति । साहस्री. ३४०.

* भृगूणां पञ्चावत्तम् । वा. ३।३।७।१७.

* भृगुशुनककवसिष्ठानां सत्रे नाधिकारः । ६।६।८। २४-२६

* 'भृतत्वाच्च परिक्रयः' इत्यत्र 'दक्षिणाः सोमस्य' इति वचनात् प्रधानस्यानाङ्गभूतस्याऽपि दक्षिणया प्रसङ्गात् कार्यसिद्धेः न अङ्गभूतेष्टिपशुषु आतिदेशिकान्वाहार्यदक्षिणाप्राप्तिः इति वक्ष्यते । को. २।१।५।१२ पृ. ८३-८४

▪ भृतत्वाच्च परिक्रयः । १२।१।१६।३३ ॥

दर्शपूर्णमासयोः परिक्रयः परिक्रीयन्ते ऋत्विजो येन स परिक्रयः अन्वाहार्यः सोदकप्राप्तोऽपि सोमे ऐष्टिकेषु न कर्तव्यः । भृतत्वात् सोमार्थेन परिक्रयेण गवादिना भृता ऋत्विजः । अङ्गप्रधानार्थेश्च सौमिकः परिक्रयः । तस्मादन्वाहार्यो न कर्तव्यः इति सिद्धान्तः । के.

* भृतिः कर्मकरेभ्य आनत्यर्थं यद्दीयते तत् । भा. १०।२।८।२७, * त्रिभिः प्रकारैः भृतिः भवति व्यापारतः फलतः वचनतः इति । व्यापारतस्तावत् न मागधीवान् द्वादशशतं भृतिः । कर्मकुर्वाणा हि कर्मकरा पादिकमपि अहः लभन्ते । फलानुरूप्य नैव ज्ञायते । वचनं तु भृतौ सत्या परिमाणविशेषपरं भवति । यत्र हि पादिकमपि अहर्न लभ्यते न सा दक्षिणा भवति । न हि या तस्मिन् कर्मणि दक्षः करोति । स्नेहाद्वा अन्येन वा प्रकारेण कृत्स्नमपि अहः कर्म कुर्यात् । न वीहीणां द्वादशशतेन प्रोत्साहितः । आश्रित्य यं यद् द्रव्यं सा भृतिः । ( 'तस्य द्वादशशतं दक्षिणा' इत्यत्र इदम् । आश्रितस्य उदरपूरणपर्याप्तम् ) । १०।३।११।७५, * यो खलु कर्म करोति तस्मै सा भृतिः दीयते । १०।३।१३।५४.

* भृतियाचनं ( वननं ) ज्योतिष्टोमे धनवतोऽपि नित्यम् । ६।८।७।२६-२७. मीको. पृ.१८२२ 'ज्योतिष्टोमे भृतिवननं०' इत्यत्र द्रष्टव्यम् । * भृतिवननं यज्ञार्थं याच्ञया द्रव्यसंपादनम् । 'दीक्षितो भृतिं वन्वीत' इति वचनात् । वि. ६।७।८.

* भृतिवननादिवत् । यथा भृतिवननं नियमं वदार्जितद्रव्यस्य च क्रत्वर्थत्वं तथा प्रतिग्रहादिनियमस्य क्रत्वर्थत्वेन वदार्जितद्रव्यस्य क्रत्वर्थत्वम् । भाट्ट. ८।१।२ वर्णक ३.

* भृत्येन सह भर्त्रा परिक्रयार्थं पणितव्यम् । भा. १०।३।१३।५९.

* भूत्यादीनां प्रत्येकं बुद्ध्या व्याप्रियमाणानां एकस्मिन् एकस्मिन् ऋत्वादौ स्वाम्युपाकारेण यागसाध्ये सहत्य साधनत्वम् । सु पृ. १२०७.

■ भेदोऽपि पादप्रसाराय चेष्टते इति न्यायः । अनयमस्य समर्थाहर्यमेकरूपमीहते अयमवमरति । साहस्री ९०४.

* भेद: अनपूर्वाणां अन्यभेदे । वि ७।२।१. * भेद अपूर्वाणां द्वितीयाध्यायार्थे । टुप् ७।१।१।२ * भेद कर्मणो द्रव्यदेवताद्युपदर्शने, यथा ' गायत्र श्वेत मालभेत ' ' सौर्यं चरु निर्वपेत् ' इत्यत्र । वि २।३।५ * भेद कर्मणा अभ्यासेन भावनाभेदात् । २।२।१।२ * भेद कर्मणा गुणात् । २।२।६।१२३ * भेद कर्मणा द्रव्यदेवताभेदात्, यथा चातुर्मास्येष्वैश्वदेवपर्वणि ' वैश्वदेव्यामिक्षा ', ' वाजिभ्यो वाजिनम् ' इत्यत्र । वि २।२।९ * भेद कर्मणा संख्यया, यथा ' सप्तदशप्राजापत्यान् ' ' तिस्र आहुतीर्जुहोति ' इत्यत्र । २।१।७।२१ * भेद कर्मणा नामभेदात्, यथा ' अथैष ज्योतिः अथैष विश्वज्योतिः अथैष सर्वज्योतिः ' इत्यत्र । २।२।८।२२. * भेद । मन्त्र स्वगतात्यावदि न कर्मान्तर ( भेद ) करोतीति । भा. ३।१।६।१२ पृ ६४९, * भेद । निषेधान्तरात्विरोऽनन्यत्वो विधि कर्मस्वरूपमेव विदधत् पूर्वनिहितादवदन्येन कर्मान्तर ( भेद ) करोति । इति (प्रथमाध्यायोक्त--) विधिनिर्णयप्रयोजनीलनम् । ३।१। १।१ पृ ६४९.

■ भेदस्तु तद्भेदात् कर्मभेद प्रयोगे स्यात् तेषां प्रधानशब्दत्वात् । ११।४।६।२६ ॥

तद्भेदात्, अदिम्यनेन पूर्वमनुनिर्दिष्ट वाक्ये गृह्यते । वाक्यभेदात् मुख्यावर्तिनानामङ्गानां भेद स्यात् । प्रयोगे तेषां कर्मभेद करणभेद स्यात् प्रगट भेदेनानुष्ठानं स्यात् । वाक्यभेदे हेतुमाह । तेषां मुख्यावर्तिनानामङ्गानां प्रधानशब्दत्वात् प्रधानमाहकेण तद्देनैव गृहीतत्वात् । तस्मात् तेषामावृत्ति इति सिद्धान्त ।

तथा चान्यार्थदर्शनम् । २७ ॥

अङ्गानामावृत्तौ लिङ्गमाह । ' पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते ' इति अन्यार्थदर्शन भेदेन अङ्गा पत्नीप्रयाजान्तता दर्शयति । तस्माद्भेद ।

स्व सुत्यावचनं तद्वत् । २८ ॥

' सस्थितेसस्थितेऽहनि आग्नीध्रागारं प्रविश्य सुब्रह्मण्यामाह्वयति स्व सुत्यामागच्छ ' इति ( सस्थितेसस्थितेऽहन्याग्नीध्रागार प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यति ' इति भाष्ये पाठ )। तत्र सस्थितेऽभिन्ने इति वीप्सावचनात् सुब्रह्मण्याभेद दर्शयति । तस्माद्भेद ।

पश्वतिरेकश्च । २९ ॥

द्वादश अहानि, ऐकादशिनाः पशव एकादश । प्रत्यह एकैकस्मिन् पशौ एकस्य अह पशुद्वयस्येन प्रसङ्गेन अतिरेको भवति । तत्र ' स ऐन्द्राग्न कार्य ' इत्युक्तम् । तदाह पश्वतिरेक इति । तस्मात् सुत्यावर्तिनानामङ्गानां आवृत्ति इति सिद्धान्त । के.

■ भेदस्तु सदेहात् देवतान्तरे स्यात् । ११ । ४।१।३४ ॥

देवतान्तरे देवताभेदे सति पशुगणे ऐकादशिनेषु कुम्भीशूलवपाश्रपणीना भेद स्यात् । सदेहात् एकस्या उखाया अवदानानां कस्य पशो अवदानानि इति सदेहप्रसङ्ग । तस्मात्तेषां भेद । इति पूर्व पक्ष ।

अर्थाद्वा लिङ्गकर्म स्यात् । ३५ ॥

ऐकादशिनेषु पशुषु कुम्भीशूलवपाश्रपणीना भेदो न स्यात्, किन्तु तन्त्रम् । हृदयावदानानां प्रत्येकमनेकत्वात् कस्य हृदय इति सदेहप्रसङ्गे । अथात् भेदज्ञानरूपप्रयोजनसिद्ध्यर्थं लिङ्गकर्म लिङ्गस्य चिह्नस्य कर्म करण स्यात् । हृदयेषु चिह्न चिह्न करिष्याम तेन भेदो ज्ञास्यते । इति सिद्धान्त । चाशब्द भेदपूर्वपक्षनिरासार्थ ।

अवाच्यत्वाद्वभमाना भेद. स्यात् स्वयाज्यावदानत्वात् । ३६ ॥

पूर्वपक्षी पुनराह । वसाना अयाज्यत्वात् स्वयाज्याप्रदानत्वाच्च कुम्भ्यादीना भेद स्यात् इत्यन्तर । अधिग मात्रा तैषा पशूना याज्या यागा ता अयाज्या,

अपान्यत्वात् । अध्वर्युणा क्रियमाणस्य हृदयाद्यङ्गाना होमस्य कृते या होत्रा पठनीया याज्या, तस्याः प्रथमस्य अर्धर्चस्य अन्ते प्रतिप्रस्थाता वसा जुहोति, तदर्थं च 'घृतं घृतपावान.' इत्यादिकं 'अन्तरिक्षाय स्वाहा' इत्यन्त मन्त्रं पठति । होतुर्याज्यायाः प्रथमार्धर्चसमाप्तिः यदा स्यात् तदैव प्रतिप्रस्थातुर्मन्त्रसमाप्त्या भवितव्यम् । तदा च वसाहोमः । होतुर्याज्यायाश्च उत्तरार्धर्चान्ते वषट्कारे अध्वर्युः हृदयाद्यङ्गानि जुहोति । तथा च वसाहोमे होतुर्याज्या करणभूता नास्ति । तदेतत् 'अपान्यत्वाद्वचनानाम्' इत्युक्तम् । अथ वसाहोमे करणं मन्त्र. प्रतिप्रस्थात्रा पठनीय. 'घृतं घृतपावान.' इत्यादिरेव, तेन च स्वशक्त्या स्वस्य वसायाः याज्या, तया स्वयाज्यया मङ्गनः वसा ताः स्वयाज्याप्रदाना वसा. । तदेतत् स्वयाज्याप्रदानत्वादित्यनेनोक्तम् । वसा नाम मांसरसः । पशुगणे च भिन्ना एव वसाः । तासां च भेदज्ञानार्थं चिह्नकरणाश्रवणात् तद्धारणार्थानां कुम्भीनामपि भेदः स्यात् । इति पूर्वपक्ष. ।

अपि वा प्रतिपत्तित्वात् तन्त्रं स्यात् स्वत्वस्याश्रुतिभूतत्वात् । २७ ॥

सिद्धान्ती आह । अपि वा तन्त्रं कुम्भी स्यात् । प्रतिपत्तित्वात्, दोषभूताना वसाना प्रतिपत्तिरियम् । ननु कुम्भ्यासन्ने वसा स्वयाज्यार्धर्चान्ते एव हुता न भवेयु. । उच्यते । स्वत्वस्य अश्रुतिभूतत्वात् । स्वत्व श्रुतिभूतं श्रुत्या विहितं न भवति । तस्मात् परम होमो न दोषाय नाभ्युदयाय । तस्मात् कुम्भी तन्त्रं स्यात् ।

सकृदिति चेत् । २८ ॥

पूर्वपक्षी आह । नहि प्रथमे एव याज्यार्धर्चान्ते वसानां समाना सकृत् होमो भवतु । इति चेत् ।

न कालभेदात् । २९ ॥

सिद्धान्ती आह । न वसाना सकृत् होम. । काल भेदात् याज्यार्धर्चान्ताः भिन्नाः तत्र कालभेदः स्पष्ट. । तस्मात् याज्यार्धर्चान्ताना कालभेदात् वसाहोमे भेदैव । ततश्च सर्वेषु याज्यार्धर्चान्तेषु होम. । के.

● भेदः द्वितीयाध्यायस्य प्रतिपाद्यः । कर्मभेदकानि प्रमाणानि षट्, शब्दान्तरमभ्यास. संख्या संज्ञा गुणः प्रकरणान्तर चेति । बाल पृ. ८. ● भेदो नैव वाक्यार्थत्वेन अभिप्रेत., अस्माकं आकृतिपदार्थकत्वात् । वा. २।१। १४।४६. ● भेदो न कर्मणः उत्पत्तिवाक्ये द्रव्यविशेषानुक्तौ, यथा 'अग्निहोत्रं जुहोति', 'दध्ना जुहोति', 'पयसा जुहोति' इत्यत्र । वि. २।२।१०. ● भेदो न भवति यागस्य द्रव्यभेदेऽपि । ६।३।३।११-१२. ● 'भेदो नाम पदार्थानां व्यवच्छेदः परस्परम् ।' वा. २।१।१४।४६. ● भेदो यावत्प्रयुक्तः तावत् दोषशेषिभावो नास्ति । (अतः द्वितीयानन्तर तृतीयोऽध्याय.) । टुप्. ७।१।१।१. ● भेद' संज्ञाशब्दान्तरयोः गुणसंयोगे अभिधीयते 'स्वरूपाभिधानत्वात्तया शब्दान्तरात् पृथक् । व्यासज्यसमवायाच्च संख्या भिन्ना गुणान्तरात् ॥' वा २।१।१३।२६. ● भेद' समिदाद्यपूर्वाणा दर्शपूर्णमासयो. । २।२।२।२. ● अनिशरिभर्तमाने हि पूर्वकर्मणि येनापि प्रकारेण उत्तरस्य भेद. प्रतीयते, न तु प्रकरणान्तर सदृशि किञ्चिदुपालभ्येति, तथा च 'एकं चाकर्मसंनिधौ' (२।३।१२।२५) इत्यत्र वक्ष्याम. । वा २।३।१२।२४ पृ. ६१५. ● भेदं विना प्रकृतिविकारभावायोग । सु. पृ. ४०९. ● भेदेन व्यपदेशः पृथक्त्वे सति भवति । भा १०।६।११।१४. ● भेदस्य अग्रहण अतिसादृश्यात् अज्ञानितानां व्यालादीना च दृष्टम् । अग्रहणे च भेदस्य नान्यतरं व्यपदेष्टुं शक्यते । बृहती. पृ. १८४. ● भेदे एकदेशस्यापि प्रमाभिश्रित स्वन्दते वा । ६।८।८।१०—१६.

● भेदाग्रहणात् तद्बुद्धि. अतस्मिन्नपि भवति । बृहती. पृ. २०४.

● भेदाग्रहणनिबन्धन एव शुक्तिकादिषु रजतभ्रमः । बृहती पृ. २०५.

● भेदाभेदौ आकृतिव्यक्त्योः । मीको. पृ ७८६ 'आकृतिवाद' इति निर्दौ आकरदीपिकाग्रन्थे द्रष्टव्यम् । ● भेदाभेदौ । 'इह गौः' इति पदयो भिन्नप्रवृत्तिनिमित्तकयो. सामानाधिकरण्येन अनुवृत्त्यावृत्ताकारबोधकत्वेन भेदाभेदसिद्धिः । एवं अवयवावयविनोः गुणगुणिनोः क्रियाक्रियावतोरपि भेदाभेदोऽनुसंधेय. । मणि. पृ २३

* भेदाभेदनिरासः । सम्प्रति भेदाभेदौ निराक्रियेते । केचित् जातिव्यक्तिगुणगुण्यवयवावयव्यादीनां भेदाभेदौ वर्णयन्ति । तथाहि, जातिव्यक्त्योर्भेदस्तावत्सर्वजनसिद्धः । अभेदोऽपि तयोः प्रतीयते । खण्डो गौरित्यत्र प्रतीतौ तावत् खण्डतादात्म्येन गोत्वं प्रतीयते, अन्यथा खण्डश्च गौश्चेति प्रतीतिः स्यात्, खण्डस्य गोत्वं इति वा । न कदाचिदपि तथा प्रतिपत्तिः । अतः खण्डतादात्म्येन गोत्वस्य प्रतीतत्वात् खण्ड एव गौरित्यभेदः प्रतीतः । तथा अनेन प्रतीतौ खण्ड एव गौः, न मुण्ड इति व्यवहारात्, खण्डतादात्म्येन प्रतिपन्नस्यैव मुण्डाद्भेदोऽप्यवसीयते । तथा मुण्डो गौरित्यत्र मुण्डतादात्म्येन प्रतिपन्नस्य सामान्यस्य न खण्ड इति व्यावृत्तिदर्शनात् भेदोऽप्यवसीयते । एतत् उक्तं भवति, यस्यां व्यक्तौ तादात्म्येन सामान्यस्य प्रतीतिः, तस्या व्यक्तेः तया प्रतीत्या तदभेदः एव प्रतीतः ।

अथाप्यभेदेन प्रतीतौ भेदस्य विपरीतत्वमशक्यम्, किन्तु व्यक्त्यन्तरात् भेदः प्रतीयते, अतो जातिव्यक्त्योः प्रत्यक्षेणैव भेदोऽभेदश्च प्रतीतः । न च भेदाभेदावेकत्र समावेशविरोधात्, सदसत्त्ववदिति वाच्यम्, विरोधाभावात्, ययोरेकत्र प्रतीतिर्नास्ति तयोरेव विरुद्धत्वम्, यथा सदसतोः । तदुक्तम् 'प्रतीयते चेदुभयं विरोधः कोऽयमुच्यते ।' इति । प्रतीतयोरपि विरोधेऽङ्गीक्रियमाणे एकस्यैव सामान्यस्य नानाभूतासु व्यक्तिषु युगपत्परिसमाप्य वृत्तिर्नाङ्गीक्रियेत । यदि प्रतीतिबलादङ्गीक्रियते, तर्हि भेदाभेदयोरपि समानमिति तुल्यचर्चः । किञ्च, प्रथमव्यक्तिदर्शने तावदेव प्रतीयते, तदानीमनुवृत्ताकारस्य प्रतीतिरेवाङ्गीकृता सर्ववादिभिः । किञ्च अभेदप्रतीतिर्नास्तीति यो वदति, तस्य सर्वलोकविरोधः । धर्मधर्मिव विस्फारिताक्षाणां पुरतः स्थितेषु वस्तुषु प्रथम एकाकारैव प्रतीतिः । अतः सर्वेषु वस्तुषु सर्वेषां प्रथममभेदप्रतीतिरेव समुत्पद्यते पश्चात् भेदप्रतीतिः । अतोऽबाधितविषयप्रतीतिसिद्धौ भेदाभेदौ नापह्नवमर्हतः ।

किञ्च, खण्डो गौरिति सामानाधिकरण्येन प्रतीतिरस्तीति निर्विवादम् । तत्र अत्यन्तभिन्नयोर्गवाश्वयोः यथा सामानाधिकरण्यं न दृश्यते, तथाऽत्यन्ताभिन्नजात्यादिस्वरूपप्रतिपत्तौ न च दृश्यते । अतोऽत्यन्तभिन्नादत्यन्ताभिन्नाच्च व्यावृत्तं सामानाधिकरण्यं भेदाभेदौ कल्पयति । न च वाच्यम्, अत्यन्ताभिन्नयोरपि प्रकारप्रकारितया प्रतीतत्वेन सामानाधिकरण्योपपत्तिः इति, प्रकारप्रकारिभावस्यैव अत्यन्तभिन्नयोरत्यन्ताभिन्नयोश्च अदर्शनात् तदपि भेदाभेदमेव कल्पयति । न हि अत्यन्तभिन्नयोर्दण्डपुरुषयोः प्रकारप्रकारित्वं सामानाधिकरण्यं वा दृश्यते । न च समवायनिबन्धनं सामानाधिकरण्यम्, समवायस्यान्यस्यैव प्रमाणाभावेनानभ्युपगमात् । अतो येन पिण्डेन अभिन्नं सामान्यं प्रतीयते, तदपेक्षया भिन्नमेव पिण्डान्तरापेक्षया अभिन्नम् । यथा एक एव देवदत्तः पुरुषान्तरापेक्षया दीर्घः प्रतीयते, स एवान्यापेक्षया ह्रस्वो भवति, तथा भेदाभेदावपि एकप्रतीतिसंसिद्धत्वान्नापह्नवमर्हतः । तदुक्तम् 'सर्ववस्तुषु बुद्धिर्या व्यावृत्त्यनुगमात्मिका । जायते द्व्यात्मकत्वेन विना सा च न सिध्यति ॥'

अत्रोच्यते । ययोर्जातिव्यक्त्योर्भेदः प्रतीतः तयोरेवाभेदः प्रतीयते इति दुर्घटं वचः । तथाहि, अनुवृत्ताकारस्वभावा जातिः प्रतीता, व्यावृत्ताकारस्वभावा च व्यक्तिः । अतः आकारद्वयव्यतिरेकेण तयोरभेदकं नाम आकारान्तरं न पश्यामः । आकारान्तरभावेऽपि सोऽपि तृतीय एवाकारः स्यात्, न तु जातिव्यक्त्योरभेदावभासः सः । यथाऽयमनयोः संयोग इति प्रतीतौ संयोगिद्वयाकारव्यतिरेकेण संयोगाकारस्तृतीयः ।

ननु यथा संयोगिनोराकारः संयोगाकारः एवं जातिव्यक्त्योरभेद इति प्रतीतौ अभेदाकारे तादात्म्याकारो न स्यात् । अत्रोच्यते न वयं जातिव्यक्त्योरभेद इत्यभेदप्रतिपत्तिं अभ्युपगच्छामः किन्तु भिन्नाकारेण प्रतिपत्तिमेव, नहि जातिव्यक्ती एकाकारेण कदाचित् प्रतीयेते । अतो न तृतीयाकारप्रसङ्ग इति । तथा, भिन्नाकारेण प्रतीतयोः कदाचिदेकाकारप्रतीतिरसिद्धैव । तथाप्युच्यते, स चायमेकाकारेण यदि तयोः सम्बन्धित्वेन प्रतीतः, तदा संयोगवत्तृतीयाकारः स्यादिति ... प्रतीतिर्नास्ति चेत्, केवलमेकाकारप्रतीतिरेव, तर्हि जातिव्यक्त्योः का वार्ता ? वस्त्वन्तरप्रतीतिरेव भातु, को दोषः ? अथ निरूप्यमाणवस्त्वन्तरस्यादर्शनात् तयोरेव आकार इत्यङ्गीक्रियेत,

* भेदनादिवत् । काम्यमानफलसाधनत्वेन हि तानि (काम्यानि) कर्माणि कामोत्पत्तौ सत्यां कर्तव्यानि भवन्ति इति कामनाया निमित्तत्वमुच्यते, न तु भेदनादिवत् निमित्ततया वाक्येनान्वयात् । रत्न. ५।३।२२। ३३.

* भेदनहोमः तु निमित्तानन्तर्येण क्रियते । टुप्. ४।३।१६।१९ वर्णकं २. * भेदनहोम. स्कन्दनहोमश्च न लौकिके । वि. ६।५।२५.

* भेदनहोमादीनां नैमित्तिकानामनुष्ठाने पाठक्रमो न नियामकः किन्तु यथानिमित्तमनुष्ठानम् । भाट्ट. ५।३।१२. * भेदनहोमादीनां नैमित्तिकानामनेकेषां प्रयोगवचनपरिगृहीतत्वात् समुच्चयः, न तु विकल्पः भेदनादिनिमित्तप्राप्तौ च विहितत्वम् । वि.१२।२।३।६.

* भेदनहोमादिवत् । भेदनहोमो यथा क्रतु–निमित्त–उभयमनुष्ठ. तथा चयने वैश्वानरयाग । भाट्ट. ४।४।६.

※ भेर्याघातन्याय. । तत्रया भेर्याघाते भेरी-माद्य कश्चिद्दिग्दिगन्तानि गच्छति, कश्चिन्निवर्तते, कश्चित्ताडितोऽपि न प्रह्वेऽपि । साहस्री. ६०८.

※ भैरवविभ्रमन्यायः । मर्कटन्यायवदेव अयम् । साहस्री. ३९९.

* भोगः सुखदुःखविषयः अनुरोधानुभव उच्यते । शा. ११।५ पृ. १२५.

* भोग्यस्य पाप्मनापि भोक्तृत्वासौ भोगो न दृश्यते । [illegible] ३।८ पृ. ५६.

* भोजनं आस्येनैव भवतात्ते दाक्षिणात्यानाम् । वा. १।३।३।७ पृ २०४. * भोजनम् । दक्षिणस्त भोजनाचारमूलभूता श्रुतिः 'अर्पयते तद्दक्षिणत्वो दधाति, तस्माद्दक्षिणेन हस्तेन पुरुषोऽन्नमत्ति' इति । वा. १।३। ४।९ पृ. २३१, * भोजनम् । पात्रधारणपूर्वकभोजन चारमूलभूता श्रुतिः 'यस्मादद्यासीमुद्दधाति' इत्याद्यर्थवादगते । १।३।७।१९ पृ २२१. * भोजनम् । प्रदक्षिणभोजनपात्रविशेष निर्देशः ( 'देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्' इति वाक्यो-रम्भ) । सु. पृ. ४, * भोजा निमन्त्रकोच्छिष्टग्रहा-चस्य अनाचार उदीच्यानां दाक्षिणात्यानां च । वा. १।३।३।७ पृ. २०४ * भोजने उपयुक्तं स्वर्णपर्णं प्रक्षाल्यापि न पुनः शिष्टाः स्वीकुर्वन्ति । वि.१।३। १२, * भोजने 'प्राङ्मुखोऽन्नानि भुञ्जीत' इति स्मार्तो नियमः । तत्रोपनीतस्यैवाधिकारो नानुपनीतस्य । ६।२।६. * भोजने प्राङ्मुखता नियम्यते । भा. ५।२। ७।१९.

* भोजनादौ मौनविधाने वाक्यैरिङ्गिताद्यपि इह-महादिना न कार्यम् । सु. पृ. ३१८, * भोजनादौ लौकिके अपि वैदिकप्राङ्मुखत्वादिनियमो दृश्यते । पृ. ९२९.

* भोजनवत् । यथा चतुर्थे चतुर्थेऽहनि वैनद्धो भुङ्क्ते इति चतुर्थे भुक्त्वा ततश्चतुर्थे गम्यते एकस्मिन् पक्षे इति । भा. १०।५।२४।५९.

* भोक्ष्यं अनतिकाठिन्यात् अविद्यमानत्वत्वप्रतीत्या नपेक्ष चर्वणीयेव यत्किमपीदं तत् इति देमाद्रिः । बाल. पृ. १६८.

* भ्रम अग्रहणात्मकः । नार्थशून्यात्मकः । प्रज्ञु. पृ. ५७, * भ्रम. । यत्र हि दर्शनस्य प्रमाण नास्ति व्यामोह. स । यथा शुक्तिकायां रजतविज्ञानम् । भा ३।८।१२।२८, * भ्रमे अलिङ्गे लिङ्गस्य साधारणधर्मदर्शनत्, अलिङ्गत्वामविविञ्चन् लिङ्गत्वमध्यस्य तद्दृष्टा स्मरत् लिङ्गपरामर्शं प्रवर्तयति । प्रज्ञु पृ ११. * भ्रमे दोष कारण इति नैयायिकाः । मणि. पृ १४.

* भ्रमज्ञानम् । ननु प्रत्यक्षमपि व्यभिचारि स्यात् । तथापि विनाऽप्यर्थेन ऐन्द्रियकं ज्ञान दृश्यते शुक्तिकायां रजतमिदमिति । (उच्यते-) न तत्र ऐन्द्रियकं ज्ञानं व्यभिचरति । एक हि तत्र ज्ञानं इद इति चाक्षुषम् । अपरमपि रजतमिदं इति रजतत्वस्यैव स्मरणज्ञानम् । तयोर्विवेकाग्रहणनिबन्धनो भ्रमोऽयम् , न पुनः ऐन्द्रियक विज्ञानं व्यभिचरति । बाधकं च तत्र ज्ञानं विवेकग्रहणम् । प्रत्यक्षादिषु दोषवशात् इन्द्रियं न सम्यग् कार्यं करोति । तेन विवेकाग्रहणात् भ्रम. । बाधकज्ञानोत्पत्तौ सत्यां विवेके अवधारिते प्रतिपत्तिविज्ञानं विवेक-ग्रहणनिबन्धनम् । भ्रान्तिज्ञानं न संविदर्थं बाधका-

वस्थाभाविनिर्दोषेन्द्रियादिसामग्रीप्रभवं किन्तु दोषखण्डितशक्तिकज्ञानजननकारणचक्रोत्थम् । नैव कदाचित् विज्ञानं ( वेद्यं प्रति ) व्यभिचरति येन अनिश्चयः स्यात् । बाधकज्ञानमपि नैयायिकव्यभिचारिता दर्शयति । किन्तु ग्रहणस्मरणयोः विवेकमवधारयति । ऋजु. पृ. १९–२०.

* भ्रमसंशयोत्तरमप्यक्षे विशेषदर्शनस्य भ्रमादिविरोधित्वेन हेतुत्वम् । मणि. पृ. ३०.

* भ्रमरुत्यादिन्यायः । वाक्यत्वं नाम जातिः भिन्नस्थानकरणप्रयत्नाभिव्यङ्ग्य–क्रमवद्वर्णात्मक–पदसमूहे अनन्यवर्णे वा विलक्षणावयवपदार्थसम्बन्धप्रत्यासत्त्या-व्यवधानात् भ्रमरुत्कादिन्यायेन कल्पयितु तद्भूताधिकरणे नाध्यवसितम् । वा. १।१।१।१ पृ. ८०५.

☒ भ्रमरन्याय. ॥

१ यथा भ्रमरो हि पुष्पाणां कन्दनादीरलबराजा गन्धगुणमात्रमादत्ते, तथा प्रकृतेऽपि । २२३.

२ यथा भ्रमरो हि प्रतिपुष्पं गन्धमादत्ते, निर्गन्धीभूत परित्यज्यान्यपुष्पमवलम्बते, तथा प्रकृतेऽपि । २२४.

३ यथा भ्रमरो हि स्वदंशेन कठिनकाष्ठमपि सच्छिद्रीकरोति, परन्तु स्वप्रीतिपात्रकोमलनवसुकुमारकमलकुसुमान्तःपाती स्वजातिक्रिया त्यजति, तथा सन्निभ सन्निभं प्रति वर्तते । साहस्री. २२५.

☒ भ्रष्टावसरन्याय । यथा केनचित् कश्चित् प्रति उक्तम्, ' त्वया अमुकावसरेऽआगन्तव्यम्, तव अभीष्टसिद्धिर्भविष्यति, अन्यथा न ' । एवं प्रतिज्ञातावसरे स न आयातः, भ्रष्टावसरत्वात् तस्य अभीष्टसिद्धिः न जाता, तथा प्रकृतेऽपि । साहस्री. ३५.

* ' भ्रातृणामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ ' (मनु. ९।१८२ ' सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ' इति मुद्रिते मनौ पाठ. ) । इत्येवं मौग्धः केवल्यशार्यपत्नीसम्बन्धः आसीदिति गम्यते । वा. १।३।३।७ पृ. २०८.

* भ्रातृजायाया. कनीयोऽर्जितायाः परिणयनं अनाचारः । वा. १।३।३।७ पृ. २०३–२०४.

* भ्रातृव्यवान् अध्वरकल्पया यजेत । भा. ११।१।४।१९ * ' भ्रातृव्यवता अदाभ्यो ग्राह्यो ब्रुभूषताऽऽत्तुः ' । संकर्ष. ३।३।१५. * भ्रातृव्यवतः अभिजिद्विश्वजितः कतीये । बाल. पृ. ३४, * भ्रातृव्यवतः गौरविरात्र. कतीये । पृ. ३४.

* भ्रान्तः । न च कालान्तरे पुरुषान्तरे अवस्थान्तरे वा अविपर्यासात् भ्रान्त इति शक्यते कल्पयितुम् ( प्रत्यक्षेणोपलभ्यमान. इन्द्रियकाव्यतिरिक्तः अवयवी ) । टुप्. १।१।७।२७ टिप्पण्याम्.

* भ्राष्ट्रायमिना काम्येन अग्निचयनगतेन उख्यस्याग्निर्बाधः । १२।४।७।१७–२५. मीको. पृ. २४ ' अग्निचयनगतेन व्यल्दृष्टखाप्रख्याद्धवेन० ' इत्यत्र द्रष्टव्यम् । * भ्राष्ट्रावग्नेः काम्यस्याहवनीयत्वाभावादाहवनीयधर्मवत्ता नास्ति चयने । १२।४।८।२६–२७. मीको. पृ. २६ ' अग्निचयनप्रकरणे श्रुतस्य० ' इत्यत्र द्रष्टव्यम् ।

* भ्राष्ट्रादिकाम्येऽग्नौ आधानादिसंस्काराणां लोपश्चयने । १२।४।९।२८–२९.

* भ्रूणहा । ' तस्मादविज्ञातेन गर्भेण हतेन भ्रूणहा भवति ' इति । भ्रूणहा पापकृत्तमः । यश्चोभयोर्लोकयोरुपकरोति, तस्य हन्ता भ्रूणहा । यज्ञहन्ता भ्रूणहा । स यज्ञसाधनवधकारी । तस्मात् यत्र भ्रूणशब्देनाभिदधाति । स हि निर्मितिं वा सर्वं भूतिं वा नयति । अतो भ्रूणहा यज्ञवधकारी । तथा ' आत्रेयीं हत्वा भ्रूणहा भवति । आत्रेयीमापन्नगर्भामाहु । अत्र कुम्भी अस्याः विद्यते इत्यात्रेयी ' ( पूर्वपक्षे इदम् ) । भा. ६।१।३।७.

# म

■ मक्षिकान्याय । यथा मक्षिका हि सर्वं देहं परिहृत्य व्रणस्थानमनागच्छते, तथा दुष्टोऽपि । साहस्री ३२८

⌛ मक्षिकास्थाने मक्षिकापात इति न्याय । अत्र यादृशे तादृशकरणविषये प्रवर्तते । साहस्री ७७१

* मङ्गलम् । तच्च समाप्तिनिर्विघ्नसमाप्त्यन्यतरहेतुत्वेन विहितत्वम् । विधायको वेदस्तु आचारानुमेय । न च नास्तिकग्रन्थकारग्रन्थादौ अन्वयव्यतिरेकव्यभिचारेण मङ्गलस्य तद्धेतुत्वेन विधिर्न सम्भवति इति वाच्यम् । नास्तिकस्य हेतुतरप्रयुक्तस्य श्रुतिनोदितहेतुत्वाभावात् विघ्नसमाप्त्योर्मङ्गलस्य कारणत्वकल्पनाद्वा इति जीर्णाः । नव्यास्तु बुद्धिप्रतिभादिकारणसामग्रीसत्त्वतया मङ्गलानायत्ता विघ्नध्वंसहेतुत्वेन विहितत्वं मङ्गलस्य इति मणिकृत् ।

अत्र चिन्तयन्ति । विघ्नध्वंसस्य न मानता अनुपपत्तेः । न च समाप्तिजनकत्वेन तस्य पुरुषार्थता, समाप्तौ विघ्नध्वंसाश्रयत्वेन जनकता ध्वंसस्य असत्त्वात् । अन्यथा विघ्नध्वंसाभावजन्यस्य समाप्तिर्न स्यात् । इच्छाविषयत्वमात्रस्य समानप्रकारकत्वात् । न च निःस्वसमाप्तिमात्रेण सा सुखाभाववत् सामान्यतो प्यक्तदुःखत्वेन सुखाभावतया सामानाधिकरण्याद्यन्वयात् । अत आह्लादस्य मङ्गलस्य, बुद्धिमानमाधीना च इच्छा समाप्तिजनकत्वम् । यदि च तत्रापि कर्मजनकत्वेन तदभावनियमस्य व्यभिचार इति विभावना तदा आकीर्णप्रतिपत्तिकर्मतातिरिक्तकर्मतयान्ये तादृशनियमात् विघ्नध्वंसस्य भाग्यतावच्छेदकानुपपत्तिरेव । अदृष्टकल्पनागौरवं तु विघ्नध्वंसस्य फलत्वे ■ मङ्गले पूर्वोक्तपक्षोपसङ्गत्वं तुल्यं ज्ञानं दिक् । मणि पृ ६

* मङ्गलाचाराशास्त्रविरोधो रोदनस्य ('रोदरोदी यद्रोदीत् तद्रुद्रस्य रुद्रत्वम्' इत्यत्र) । मु पृ ४

■ मज्जनोन्मज्जनन्याय । यथा नद्यादौ पतित सरणानभिज्ञः कदाचिन्मज्जति कदाचिदुन्मज्जति, तथा संसारसमुद्रे पतितो ज्ञानानभिज्ञो जीवः कदाचित् भजति शान्तिमुप ■ प्राप्नोति यावज्ज्ञानचरणादिना भयो न भवेत् । साहस्री ७

* 'मह्यां ज्योतिरिति' इत्यत्र श्वस्व गोणनिरिक्त उक्तमन्वयानादिमि । या ११८११७१२३ पृ ३५४

* 'मद्रा ज्योतिरिति' इत्यादौ ज्योतिषा विना पञ्चान्तरान्वयसंभव । मु पृ ७९३

⌛ मञ्जूषाऽऽखुन्याय । अयं न्याय इष्टार्थमनुगमे अनिष्टार्थप्राप्तिविषये प्रवर्तते । यथा कश्चिन्निरन्नक्षुत्पीडितो मञ्जूषाऽऽश्रया सर्पमञ्जूषां दृष्ट्वा प्रविष्टस्तेन भक्षित इति । साहस्री १७८

⌛ मणिप्रदीपप्रभान्याय । मणिश्च प्रदीपश्च मणिप्रदीपौ, तयो प्रभा मणिप्रदीपप्रभा । यथा कस्मिंश्चिन्मन्दिरे अपवरकस्य अन्त दीपस्तिष्ठति तस्य प्रभा बहिर्द्वारप्रदेशे वर्तुला दृश्यते, तथाऽन्यस्मिन् मन्दिरेऽपवरकस्यान्तः स्थितस्य रत्नस्य प्रभा बहिर्द्वारप्रदेशे दीपप्रभेव समानरूपोपलभ्यते, तथाविध प्रभाद्वय दूरतो दृष्ट्वा अयं मणिरयं मणिरिति बुद्ध्या द्वौ पुरुषावभिधावन्तौ तत्र गतयोरुभयोरपि प्रभाविषये जायमानं मणिज्ञानं भ्रान्तमेव । अथापि दीपप्रभाया मणिबुद्धिं कृत्वा धावता पुरुषेण मणिर्नोपलभ्यते, मणेः प्रभायां मणिबुद्ध्या धावता मणिर्लभ्यते एव । अयं भावः – या दीपप्रभाया मणिभ्रान्तिरस्ति ■ विसंवादिभ्रम, या मणिप्रभाया मणिबुद्धिरास्ते स संवादिभ्रम इति । एवं हि 'स्वप्रयोगेऽपि समादौ यथा सम्यक्फलभव । ब्रह्मतत्त्वोपासनाऽपि तथा मुक्तिफलप्रदा ॥' इत्युक्तमित्यत्र विस्तर । साहस्री ४९८

⌛ मणिप्रवालन्याय । मागधा एक सौवर्णं मणि एक प्रवाल पुनर्मणि पुन प्रवाल इति ग्रथन रीति । तथा वालखिल्यसूक्तेषु प्रथमा बृहती (८।८।१२।८) द्वितीया सतोबृहती (१२।८।१२।८) तृतीया बृहती चतुर्थी सतोबृहती इत्येवं मणिप्रवालन्यायेन एकान्तरपठिता । ऐब्रामा ३।२।१

⌛ मणिमन्त्रन्याय । यथा मणिमन्त्रादिना वह्नेर्दाह प्रति प्रतिबन्धेन प्रतिबन्ध एव लोकप्रसिद्धः, न

च तत्र युक्त्यपेक्षा, एवं कामिनो जिज्ञासया अपि ज्ञानमात्रं प्रति प्रतिबन्धकत्वम् । इत्येवं यत्र पृथक्प्रतिबन्धकत्वम्, तत्रास्य प्रवृत्तिरिति । माहस्री. ४९९.

● मण्डपस्य आग्नीध्रस्योपस्थानं प्रकृताभिरेव आग्नेयीभिः एवं हविर्धानाख्यस्य प्रकृताभिरेव वैष्णवीभिः, तथा सदोनामकस्य प्रकृताभिरैन्द्रीभिः, ज्योतिष्टोमे । (याज्ञिकास्तु एभिर्मन्त्रैः अभिमर्शनमाचरन्ति नोपस्थानम् । तत्र 'आग्नेय्यर्चाऽऽग्नीध्रमभिमृशेत्' इति तैत्तिरीयश्रुतिरेव प्रमाणं द्रष्टव्यं इति शम्भुभट्टः) । वि. ३।२।८.

● 'मण्डलेष्टकाः उपदधाति' इति चतुरस्राणामेवेष्टकानां नामान्तरं अग्निचयने । संकर्ष. २।१।२५. मीको. पृ. २४ 'अग्निचयने चतुरस्राणा०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● मण्डूकेन चित्यग्नेः अभिनुकौ 'मण्डूकेनाग्निं विकर्षति' इति विहितम् । तत्र प्रतीयते न कर्षणं किन्तु सद्देश, अग्नेः एकत्वात् । वि. ५।१।८. ● मण्डूकस्य अदेवतात्वेऽपि अग्निचयने विनियुक्तत्वेन तात्पर्यतः हव्येष्टत्व पूर्वपक्षाभिमतम् । सु. पृ. ६४०.

मण्डूकतोलनन्यायः । यथा मण्डूकतोलने तुलायां मण्डूकाः उत्प्लुत्योत्प्लुत्य पतन्ति तथा प्रकृतेऽपीति बोध्यम् । साहस्री. १०.

मण्डूकप्लुतिन्यायः । यथा मण्डूकाः उत्प्लुत्योत्प्लुत्य गच्छन्ति, तद्वदन्यत्रापि । अयम् 'इको गुणवृद्धी ।' पा० १।१।३ इति सूत्रमहाभाष्येऽभिहितः । माहस्री. ४१९.

● मण्डूकप्लुतिवत् कश्चित्सूत्रपि । (मण्डूको गच्छन् उत्प्लुत्य उत्प्लुत्य गच्छति मध्यभूभागान्न स्पृशति तद्वत्) । मणि. पृ. ७१.

● मण्डूकवसया अक्ताक्षः. बद्धान् उरगानिव पश्यन्ति । बृहती. पृ. २०६ । न मण्डूकवसाञ्जनं नेत्रसंस्कारः । किन्तु शक्तिप्रतिबन्धकमेव । अत एव वंशादारस्य अप्रतीतिः, उरगाकारस्य स्मरणं इति स्मृतिप्रमोषे दर्शितम् । ऋजु. पृ. २०७.

● मण्डूकसूक्तस्य अग्नौ प्रयोगः, तत्र मण्डूकेन अग्निविकर्षणाम्नानात् । (अतः मण्डूकसूक्तस्य अर्थवत्त्वम्) । वा. २।१।५।२२-२३.

● 'मत्वर्थो-वाक्यभेदाभ्यामेकवाक्यवशाद् भवेत् । इत्यर्थ. पदोक्त्या गृह्यमाणोऽविरुद्धोंऽशः ॥' (इदं पूर्वपक्षे, 'श्येनेनाभिचरन् यजेत' इत्यत्र । सिद्धान्ते तु-) गुणवचनेभ्यश्च मत्वर्थलक्षणा स्मर्यते, न द्रव्यवचनेभ्यः । इत्यर्थस्तु प्रकृतस्य परस्य प्रयोगात् स्वयमेवोपजायते । मत्वर्थलक्षणा च स्वयं कल्पनीया, व्यक्तस्तु वत्यर्थः । वा. १।४।४।५.

● मत्वर्थीयः । 'सोऽस्यास्तीति च सम्बन्धे मत्वर्थीयः प्रवर्तते' । वा. ३।१।६।१२ पृ. ६७३, ● षष्ठीसप्तमीभ्यां हि यादृक् सम्बन्धः स्वप्रधानः असत्त्वभूतश्च प्रत्याय्यते न तादृक् मत्वर्थीयेन । १।१।६।१२ पृ. ६७६.

● मत्वर्थलक्षणा गौणी वाऽभ्यते श्येनादौ, उपमानार्थत्वात् । बाल. पृ. १८५, ● मत्वर्थलक्षणा । विशिष्टविधिरपि यत्र 'सोमेन यजेत' इत्यादौ तृतीयान्तेन द्रव्यविधिः, तत्र सोमादिप्रातिपदिके सोमादिमान् यागो मत्वर्थः तल्लक्षणाऽपि । तथाहि, सोमादि हि करणत्वेन श्रूयते, करणं न कारकत्वात् क्रियया सम्बध्यते अन्येन, क्रिया चात्र फलभावनैव प्रत्ययगम्या, न च तस्या सोमादेः करणत्वं सम्भवति समानपदोपात्तधात्वर्थव्यपेक्षत्वात् इति भावार्थाधिकरणे (२।१।१।१-४) स्थितम्, न च धात्वर्थेनैव सोमादेः सम्बन्धः सम्भवति तस्य धातुना प्रयत्नार्थं प्रति करणत्वेन उपादानात् क्रियारूपतया अनवस्थानात्, क्रियारूपत्वे वा धात्वर्थस्य प्रत्ययार्थं प्रति करणत्वानुपपत्तेः । न च सत्यपि प्रत्ययवाच्यायाः फलभावनायाः धात्वर्थान्वये स्वर्गाश्रितधात्वर्थभावनया सोमादेः सम्बन्ध इति वाच्यम् । तस्याः इहाश्रुतत्वात्, अश्रुतायाश्च तया शब्दान्तरस्यान्वयायोगात् । फलभावना हि अत्र श्रुता, न धात्वर्थभावना । न चाध्याहृत्य धात्वर्थभावनया सोमादेरन्वयः, सोमेन भाव्यमानेन यागेन इष्टं भावयेत् इति निराकाङ्क्षे अध्याहारेण

वाक्यभेदप्रसङ्गोपपत्तेः । तदनन्तरं यत्र मत्वर्थो करण यागः तत्रैव तृतीयान्तेन सोमादिपदेन वर्तितव्यं नान्या गतिरस्ति । तत्र अत्यन्तं निरूढत्वेन सोमादिपदस्य सामानाधिकरण्यमात्रेण नामत्वासम्भवात् अर्थान्तरवाचिनः सोमादिपदस्य अर्थान्तरे यागे वृत्तिः मत्वर्थलक्षणया अङ्गीक्रियते इति ।

सेयं मत्वर्थलक्षणा विशिष्टविधावेव इति ग्रन्थतः प्रतिभाति । दधिग्रहाधिकरणवार्तिके हि ( २।२।१२-२ ) कर्मणि गुणविधिः, फले गुणविधिः, विशिष्टविधिरूपेण वा इति विकल्प्य त्रिष्वपि पक्षेषु पञ्चपञ्च दोषा उक्ताः । तत्र तृतीयपक्षे एव मत्वर्थलक्षणादोषः उभौ नेतरयोः । शास्त्रदीपिकायामपि ' विशिष्टविधिपक्षे च भवेन्मत्वर्थलक्षणा ' इति । तेन ' दध्नेन्द्रियकामस्य जुहुयात् ' इत्यादिगुणफलसम्बन्धेषु यथा धात्वर्थाभिधानात् न मत्वर्थलक्षणा अभिमता, एवम् ' व्रीहिभिर्यजेत ' इति कर्मणि गुणविधावपि इति । केचित्तु एवमेव सिद्धान्तं वर्णयन्ति– ननु धात्वर्थस्य करणत्वावगतिः मत्वर्थलक्षणाया बीजम् । तत्करणत्वं च न शब्दाभिहितमस्ति, किन्तु लाक्षणिकम् । भावनायाश्च करणाकाङ्क्षया तल्लक्षणा यदि स्यात् । करणाकाङ्क्षा च विधेयायाः भावनायाः स्यात्, नानूद्यमानायाः । सोऽयं भावार्थाधिकरणन्यायः । तेन ' व्रीहिभिर्यजेत ' इत्यादौ भावनाऽनुवादात् न करणाकाङ्क्षाऽस्ति, इति न धातुना धात्वर्थः करणत्वेनोच्यते, किन्तु कर्मत्वेनैव, भावार्थाधिकरणन्यायाप्रवृत्तेः । धात्वर्थकर्मिकाया च भावनाया व्रीह्यादेः करणत्वेनैव अन्वयो घटते, इति न मत्वर्थलक्षणा इति । तदयुक्तम् । धात्वर्थस्य हि करणत्वं सिध्यति, तथापि भावार्थन्यायेन यागस्वरूपे व्रीहिविधिरनर्थकः, इति भावनायां गुणं विधातुम् अनद्य धात्वर्थं करणत्वेन अनुपादित्सया लक्षणया, इति गुणविधावपि सिद्धा मत्वर्थलक्षणा, तदुक्तं ' विधाने वाऽनुवादे वा यागः करणमिष्यते ' इति ( वा. २।४।१।२ पृ. ३२८. वापदयोः स्थाने च-पदयोः पाठान्तर ) । विशिष्टविधावेव तु मत्वर्थलक्षणोक्तिः भावार्थाधिकरणन्यायेन अतिसुलभत्वात् कृता इति ज्ञेयम् । इति मत्वर्थलक्षणा । पृ. ९६-९७.

* मत्वर्थलक्षणातः लक्षितलक्षणा दुर्बलतरा । मु. पृ. ४१३.

* मत्वर्थवादार्थः मीको. पृ. ६०९ ' अरुणान्याय ' इत्यत्र वार्तिके द्रष्टव्यः ।

* मतुप् अस्त्यर्थे स्मृतः । मु. पृ. ८९१.

* मतुपः अस्तित्वयोगविषयत्वम् । वा. २।२।१।२ पृ. ५७६.

⧗ मत्तकाशिन्या दृष्टा तिर्यक्षु कामितेति न्यायः । अयं न्यायो यत्र अधिकार्थलाभे अल्पार्थे वृत्तिरिति विवक्षा तत्र प्रवर्तते । मत्तकाशिनी स्त्रीविशेषः । साहस्री- ४७७.

* मत्स्यान् न पयसा समश्नीयात् । यद्यपि भगुणा मत्स्या भवन्ति तथापि पयसा सह न समदयन्ते लोके । भा. १०।७।१९।६६ .

⧗ मत्स्यकण्टकन्यायः । यथा मत्स्यमांसार्थी तदंशबद्धान् कण्टकादीनपि तावत् गृह्णाति, त्यजति च तस्मिन् गृहीते, तथा नरसम्बन्धार्थविवक्षया तदुपाधी अपि गृह्येते, त्यज्येते च भागत्यागलक्षणया सति लक्ष्यार्थप्रदे । ' तस्यापत्यम् ' ( पा० ४।१।९२ ) इतिसूत्रमहाभाष्ये अयमुक्तः । तथाहि ' यथा कश्चित् मांसार्थी मत्स्यान् सशकलान् सकण्टकानाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकानुत्सृजति ' इति संक्षेपः । साहस्री २३९ .

* मथितः अग्निः आधाने गार्हपत्यार्थे प्र । संकर्ष. ३।२।१. मीको. पृ १२७ 'आधाने मथितोऽग्निः ' इत्यत्र द्रष्टव्यम् ।

* मथुरानिवासिब्राह्मणीनां सुरापानं अवरवेऽपि दृश्यते, स अनाचारः । वा. १।३।३।७ पृ. २०४. अधिकं तु मीको. पृ ३६९ ' अनाचाराः ' इति बिन्दौ द्रष्टव्यम् ।

⧗ मधु न दीक्षिता ब्रह्मचारित्वात् । १०।६।१२।३२ ॥

गवामयने सत्रे छान्दस्याह्नाद् ' सम्भिते पुरुषे पयदि मध्वाशयेत् घृतं वा ' इति श्रुतम् । परन्तु ऋत्विजः मधु न भक्षयेयुः, ब्रह्मचारित्वात् । ऋत्विजो हि दीक्षिताः,

दीक्षितत्वात् ब्रह्मचारिणः, ब्रह्मचारिणा च ' मधु मांसं च वर्जयेत् ' इति मधुनो निषेधात् । तस्मात् सत्रिणः मधु न प्राश्नीयुः इति पूर्वः पक्षः ।

प्राश्येत वा यज्ञार्थत्वात् । ३३ ॥

गवामयने सत्रे द्वादशाहात् ' संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा ' इति चोदकेन प्राप्तं मधु सत्रिभिः प्राश्येत । सत्रिणा दीक्षितत्वेन ब्रह्मचारित्वेऽपि ब्रह्मचारिणा निषिद्धमपि मधु प्राशनीयमेव यज्ञार्थत्वात् क्रतुधर्मत्वात् । पुरुषार्थः प्रतिषेधः क्रत्वर्थं प्राशनम् । क्रतुसाद्गुण्यार्थं सत्रिभिरपि मधु प्राशनीयम् । इति सिद्धान्तः । वाशब्दः न प्राश्नीयुरिति पूर्वपक्षव्यावृत्त्यर्थः । के.

● मध्वशनं द्वादशाहगते पृष्ठ्यषडहे अवसितसमीपे क्रियते । क्वचित् विकृतौ यत्र अपरिज्ञाताः निवृत्ताः पृष्ठ्यषडहः तत्र निवृत्तसमीपे कार्यम् । मध्वशनस्य षडहाङ्गत्वात् अवसितसामीप्यस्य च आकस्मिकत्वात् । सि. १०।६।९. ● मध्वशन षडहधर्मौ गृहपतिव्रतं द्वादशाहे । भाट्ट. १०।६।१९. ● मध्वशनेन पृष्ठ्ये षडहे उपदिष्टेन अतिदिष्टस्य पयोव्रतादेः न बाधः, किन्तु समुच्चयः । १०।८।१।१-२. मीको. पृ. २३२७ ' नारिष्ठहोमादीनां आतिदेशिकानां० ' इत्यत्र द्रष्टव्यम् ।

● मध्वशनादेः अनुष्ठानं गवामयने पृष्ठ्यषडहावृत्तौ सर्वषडहान्ते एकवेव न तु प्रतिषडहान्ते । १०।६।१०। २९-३०. मीको. पृ. १५५८ ' गवामयनादौ पृष्ठ्यषडहावृत्तौ० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● मध्वशनादेरप्यावृत्तिः पृष्ठ्यषडहस्य कर्मान्तरत्वाभावेनावृत्तौ गवामयने । १०।६।११।३१.

● मध्वशनघृताशनयोः वैकल्पिकयोः गवामयने पृष्ठ्यषडहान्ते अनुष्ठानम् । १०।६।९।२७-२८. मीको. पृ. १५५२ ' गवामयने पृष्ठ्यषडहान्ते० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

▩ मधूदके द्रवसामान्यात् पयोविकारः स्यात् । ८।१।१९।४०॥

चित्रायामिष्टौ ' दधि मधु घृतं पयो धाना उदकं तण्डुलाः तत् संसृष्टं प्राजापत्यं भवति ' इति श्रूयते । तत्र मधुनि उदके च को विध्यन्त इति विचारः । तत्र पूर्वपक्षमाह । मधु च उदकं च ते मधूदके पयोविकारः स्यात् । पयसो विकारः । पयः प्रकृतिः । तस्मात् मधूदकयोः पयसो विध्यन्तः स्यात् । द्रवसामान्यात् । मधु उदकं च द्रवः, पयश्च द्रवः । इति द्रवत्वं सामान्यम् ।

आज्यं वा वर्णसामान्यात् । ४१ ॥

चित्रेष्टौ मधूदकयोः पयः प्रकृतिः इति पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह । मधुनः उदकस्य च हविषः आज्यं प्रकृतिः स्यात् न पयः । वर्णसामान्यात् । मधूदकयोः आज्यस्य च वर्णः समानः न मधूदकयोः पयसश्च वर्णः समानः । तस्मात् आज्यं प्रकृतिः तस्य विकारः मधूदके । अतः आज्यविध्यन्तो मधुनि उदके च ।

धर्मानुग्रहाच्च । ४२ ॥

चित्रेष्टौ मधूदकयोः हविर्विशेषयोः आज्यविध्यन्तो ग्राह्यः इति सिद्धान्ते हेत्वन्तरमाह । मधुनि उदके सूपस्य आज्यधर्माणां उत्पवनादीनां अनुग्रहो भवति, पयोधर्माणां दोहनादीनां तु नानुग्रहः । तथा च मधूदकयोः आज्यधर्मानुग्रहात् आज्यविध्यन्त एवेति ।

पूर्वस्य चाविशिष्टत्वात् । ४३ ॥

चित्रेष्टौ मधूदकयोः हविर्विशेषयोः आज्यविध्यन्तो ग्राह्यः वर्णसामान्यात् इत्युक्तम् । पूर्वस्य च पूर्वपक्षोक्तस्य च द्रवत्वसामान्यस्य तु मधूदकयोः अविशिष्टत्वमेव । आज्यमपि अग्नियोगात् द्रवं मधूदके च द्रवे इति तदपि सामान्यमत्र वर्तते एवेति न विशेषः । तस्मात् मधूदकयोः आज्यविध्यन्त एव स्यात् इति सिद्धान्तः । के.

● मधूदकयोः आज्यविकारत्वं अष्टमे ( ८।१।१९। ४० ) वक्ष्यते । सु. पृ. ८१२. ● मधूदकयोः चित्रेष्टिगतयोः आज्ययाज्यधर्माणामतिदेशः । ८।१।१९।४०-४३. मीको पृ. २०८ ' अतिदेशः चित्रेष्टौ० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● मधुभक्षणं क्रत्वर्थं सत्रिभिः कर्तव्यम् । १०।६। ३२।३२-३३. मीको. पृ. २२०३ ' द्वादशाहे सत्रात्मके सत्रिभिः० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* मधुभक्षणनिषेधः ब्रह्मचारिणः पुरुषार्थः । वि. १०।६।१२.

* मधुमिश्रेण दध्ना अग्निचयने अग्निं ( चिति-समुदायं ) प्रोक्षति । तच्च सकृदेव, न प्रतीष्टकम् । वि. ९।१।८.

* मधुयागः पशुकामेष्टौ सप्तधामापतः उपांशुयाजस्य विकृतिः । वि. १२।२।७ वर्णक २.

* मधुकरन्यायः । मत्स्यपि विग्रहे हविषो देवतया भोगः प्रत्यक्षविरुद्धोऽशक्योऽभ्युपगन्तुम् । शा. ९।१।४। प्रत्यक्षेणाग्नौ भस्मीभावावगमात्, मधुकरन्यायेन रसमात्रग्रहणे प्रमाणाभावाच्चेति भावः । सोम.

※ मधुकरराजमधुमक्षिकान्यायः । यथा मधुकरराजं मधुमक्षिका अनुवर्तन्ते, तथेन्द्रियाणि चित्तमिति योगशास्त्रे विस्तरः । साहस्री. ८७१.

* ' मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च । नोच्छिष्टो भवति द्विज.' अत्र प्रकृतिगतसंनिपत्योपकारकअदृष्टार्थक्रियानिषेधः । बाल पृ. ९६.

* मधुपर्कार्थं अग्ने. सोमस्य च, अग्नीषोमीयः पशुः, औपवसथ्येऽहनि गौल्यात् पूर्वाह्ने क्रियते । वि. ४।२।११, ५।१।६.

※ मधुमक्षिकान्यायः । सा हि रसगुणमेवादत्ते न कण्टकादि, तथा सज्जनः गुणमात्रं गृह्णाति न दोषान् । संग्रह. .

* मधुर. रस , स्निग्धः शीतो गुरु इति स्निग्धशीतत्वादीनां गुणान्तरविशेषत्वात् न रसेन सम्बन्धोऽस्ति इति रसलक्षितेन द्रव्येण सम्बध्यते । भा. ३।१।६।१२ पृ. ९८४.

※ मधुररसभावितानाम्रबीजन्यायः । यथा मधुररसभावितानामाम्रबीजानां परिवर्धितानां वृक्षतामुपगतानां अङ्कुरकाण्डस्कन्धशाखापल्लवादिषु तद्द्वारा परम्परया फले माधुर्यनियम , तथा प्रकृतेऽपि । साहस्री-६९९.

* ' मध्यादवद्यति, पूर्वार्धादवद्यति ' इत्यत्र समुदायेनानुसमय. । भा. ५।२।३।४–६. * मध्यात् पूर्वार्धात् इति द्विरवदानं अवदानधर्म । वि ६।४।१.

* मध्यत कारिण ब्रह्मयजमानहोत्रुद्गातार. । मु. पृ. ११८३.

※ मध्यदीपकन्यायः । ' मध्यमणिवत् ' अस्य ( न्यायस्य ) प्रवृत्ति. । साहस्री. ६७२.

※ मध्यमणिन्यायः । यथा नासिकाऽलङ्कारमुक्ताफलयोर्मध्ये संयोजितो लोहितो मणिः मौक्तिके स्वप्रभया भूषयतीति प्रसिद्धम् । साहस्री. २४७.

※ मध्यस्थं यस्य तन्मध्ये । ४।४।२।३ ॥

राजसूयप्रकरणे अभिषेचनीयमध्ये ' पष्ठौहीं दीव्यति ' इति विदेवनादय. पठिताः । ते किं अभिषेचनीयस्याङ्गं उत कृत्स्नराजसूयस्य इति विचारे पूर्वः पक्षः । यत् यस्य मध्यस्थं तत् तन्मध्ये तदङ्गं इति शेषम् । यत् विदेवनादि, यस्य अभिषेचनीययागस्य मध्यस्थं मध्ये पठितम्, तत् विदेवनादि तन्मध्ये अभिषेचनीयमध्ये अभिषेचनीयाङ्गं इति ।

सर्वासां वा समत्वाच्चोदनात. स्यान्नहि तस्य प्रकरणं देशार्थमुच्यते मध्ये । ४ ॥

' पष्ठौहीं दीव्यति ' इत्यादिविदेवनादीनां अभिषेचनीययागमध्ये पाठात् अभिषेचनीयाङ्गत्वं विदेवनादिचोदनाना इति सूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तयति । वाशब्दः पूर्वपक्षनिरासार्थं । विदेवनादिचोदनाना नाभिषेचनीयाङ्गत्वं किन्तु सर्वासां इष्टिपशुसोमदर्विहोमचोदनानां विदेवनादिकं अङ्गं स्यात् चोदनानां समत्वात् 'राजसूयेन स्वाराज्यकामः' इति फलचोदनाया. समत्वात् फलवत्त्वादिति यावत् । ननु अवान्तरप्रकरणेन अभिषेचनीयाङ्गत्वं भवतु अत आह, नहि तस्य प्रकरणमिति तस्य अभिषेचनीयस्य प्रकरणं नास्त्येव । तस्मात् तदङ्गत्वम् । ननु तर्हि अभिषेचनीयमध्ये किमर्थं पाठ इति चेदुच्यते । देशार्थमुच्यते मध्ये इति । अभिषेचनीयस्य मध्ये विदेवनादिकं देशार्थमुच्यते । देशार्थं कालार्थमित्यर्थः । विदेवनादीनां सकलराजसूयाङ्गत्वेऽपि तेषामनुष्ठानं अभिषेचनीये माहेन्द्रस्तोत्रकाले, तद्विधानार्थं अभिषेचनीयमध्ये पाठ. । तस्मात् विदेवनादिकं सकलराजसूयाङ्गमेव । अनुष्ठानं तु अभिषेचनीयगतमाहेन्द्रकाले माध्यन्दिने । के.

* ' मध्यमेन पलाशपर्णेन जुहोति ' । संकर्ष. १।३।१२. * मध्यमस्य इति अपाणा निरुपद भवति

वृहमेधीये 'ओदनानुद्दरति' इत्यत्र। अन्यत्र सोपपदम् 'पञ्चाना मध्यमः', 'अष्टाना मध्यमः' इति। भा. ११।१।८।८६. ● मध्यमयोरेव पर्वणोः प्रणयननियमः। ७।३।१२८-२६. ● 'प्रत्यक्षग्राह्ययोकाना (मन्त्राणा) मध्यमा चितिराश्रयः'। वा. ३।४।१२।२३ पृ. ३६४. ● मध्यमायामुपपर्याग्निश्रीयते प्रकृत्युपकृत्वात्। इति सकर्षे द्वितीयेऽध्याये (पञ्चविंशेऽधिकरणे) किं चितौ औत्तरवेदिका धर्मा. कार्या न वा इति सन्दिह्य आन्युत्तरवेद्यो. समुच्चयाभावात् भिन्नकार्यत्वावगमेन अतो. उत्तरवेदिकार्यात्यभावागतेः औत्तरवेदिकधर्मानतिदेश पूर्वपक्षयित्वा, सोत्तरवेदिषु 'क्रतुषु चित्या उत्तरवेदामग्निश्रीयते' इति वचनालोचनया समुच्चयावगमे अपि चयननिष्पादितस्थण्डिलस्य 'अग्निं चिनुते' इति द्वितीयोक्तसंस्कार्यत्वे अस्य सोमस्य अग्निधारणसंस्कारार्थत्वावगमेन 'उत्तरवेद्या अग्निं निदधाति' इत्यग्निधारणोत्तरवेदिकार्योपपत्त्यवगमात्, कार्यैक्येऽपि च 'वेद्या बर्हिषि हवींष्यासादयति' इति वेदिबर्हिषोरिव स्थण्डिलोत्तरवेद्योरपि पाक्षिकप्राप्त्यभावेन नियमविध्यभावात् अन्योन्यनिरपेक्षत्वानवगतेः समुच्चयाविरोधात् उत्तरवेदिकार्यापत्त्या स्थण्डिलत्वाभावे. तद्धर्मातिदेश सिद्धान्तयित्वा उत्तरवेद्याः समुच्चीयमानेऽपि चयने उत्तरवेदिकार्याभावे उत्तरवेदिधर्मा भवेयु इति परास्त तन्त्रमाध्यकृता औत्तरवेदिकधर्मप्राप्तिलक्षणस्य तद्विकारत्वस्य अतद्विकारत्वपूर्वपक्षनिराकरणपूर्वकं उपपादयिष्यमाणत्वात्। सिद्धस्य समुच्चयोक्त्या अतद्विकारत्वनिरासेन तद्विकारत्वस्य तत्र वक्ष्यमाणत्वात् तद्विकरणसिद्धः प्राकृतत्वयैकृतत्वविचारः। मु. पृ. १४९.

● मध्यमचितौ तिस्त्रिण्यादीना इष्टकानामुपधानं न पञ्चम्याम्। ५।३।७।१७-१९। तत्र लोकंपृणाया. प्राक्। ५।३।८।२०

● मध्यमपुरुष' नहि परोपयमन्त्रोऽत्र उपपद्यते इति वक्ष्याम (३।८।१२।२३ इत्यत्र)। वा ३।२। ४।१०.

● मध्यमपुरोडाशस्य यवमयस्य नियमश्रोषधन्यायम्। सा. १०।७।२६।५.६-५.७.

● मनः (बौद्धमतेन)। न खलु मनो नाम चक्षुरादिवत् किञ्चिदिन्द्रियान्तर बौद्धाभ्युपगमंदे, किन्तु पूर्वंभव विज्ञानं चरमज्ञानस्य उपादानमात्रमभ्युपगमदे। तदेव हि सम विज्ञानत्वेन अनन्तर चाव्यवहितत्वेन समनन्तरप्रत्यय इत्युच्यते। तत्र यदिन्द्रियजविज्ञानसमनन्तरप्रत्ययसहकारिणा स्वविषयक्षणोपादानेन स्वविषयक्षणान्तरेण इन्द्रियजविज्ञानसमानकालेन जनित स्वजनकक्षणविषयं विशदाभं उपरतेन्द्रियव्यापारस्य ज्ञानम्, तत् मानसं प्रत्यक्षं (नाम)। न तत् इन्द्रियजं तद्व्यापारोपरमे भावात्। नान्तरविषय इन्द्रियजविषयविज्ञानविषयक्षण जनितक्षणान्तरगोचरत्वात्। न च अन्धबधिराद्यभावः, तेषा इन्द्रियरहिततया तद्विज्ञानाभावेन उपादानविरहात्। न चाप्रत्यक्षं विशदाभासत्वात् इति। न्यायका. पृ. ११०. ● मनसो विभुत्वमतः सांख्यमते। मणि. पृ ५४. ● मनसि इन्द्रिये 'सुखी इति प्रत्यक्ष इन्द्रियजन्यं प्रत्यक्षत्वात्' इत्यनुमानं प्रमाणम्। अन्ये तु सुखादीनां विशेषगुणत्वेन द्रव्यान्तरसंयोगासमवायिकारणत्वे सिद्धे तादृशसंयोगाश्रयतया मनःसिद्धिरित्याहुः। तत्र। शरीरसंयोगेन सिद्धसाधनात् अर्थान्तरत्वाच्च। तच्च अन्तरिन्द्रियम्, स्वातन्त्र्येण आत्मतद्योग्यगुण-तद्गतजातिमात्रग्राहकम्, बाह्यविषयेषु तस्य स्वातन्त्र्याभावात्। कुतो न स्वातन्त्र्यमिति चेत। तस्य अणुपरिमाणस्य देहात् बहिर्भावाभावेन सन्निकर्षाभावात्। युगपज्ज्ञानानुत्पत्तिश्च मनसोऽणुत्वे प्रमाणम्। येऽपि तस्य विभुत्वमाहुः, तेषामपि देहावच्छिन्नस्य इन्द्रियत्वात् अस्वातन्त्र्याक्षतिः। युगपज्ज्ञानोत्पत्तिरिष्टैव। पृ. १९-२०.

● मनोभेदस्य आत्मभेदाधीनत्वात् आत्मत्व सामान्योक्त्यैव मनस्त्वसामान्यसिद्धिः। ▮ पृ. ३४२.

§ मनोराज्यविजृम्भणन्यायः। स्वचित्तपरिकल्पितमनोरथविकास इत्यर्थ.। 'मनोरथाना न समाप्तिरस्ति वर्षायुतेनाप्यथ वाऽब्दलक्षैः। पूर्णेषु पूर्णेषु पुनर्नवानामुत्पत्तय. सन्ति मनोरथानाम्॥' इति। अयं च सर्वदर्शनसंग्रहे चार्वाकदर्शने, पाणिनिदर्शने च दर्शितः। तथाहि, चार्वाकैः 'नवाङ्कुरे फलानि सन्ति' इति

यवनश्रवणानन्तरं फलार्थिना नदीतीरे प्रवृत्तिरिति तदेतन्मनोराज्यविजृम्भणमिति । पाणिनीये तु— ननु स्फोटस्याचक्षताक्षेऽपि प्रागुक्तविकल्पग्रासेण षड्बुद्धी प्रमायितमिति चेत् तदेतन्मनोराज्यविजृम्भणं वैषम्यादिति । साहस्री ६९२

* मनः सद्भावतदणुत्वे । इदानीं मनः सद्भावोऽणुपरिमितत्वं च साध्यते । बुद्ध्यादिकं तावत् कार्यम्, तस्मात्समवायिकारणेन असमवायिकारणेन द्रव्यान्तरसंयोग एव आश्रयेय । तथाहि, बुद्ध्यादिकानां असमवायिकारणद्रव्यान्तरसंयोगासमवायिकारणक नित्यद्रव्यगताऽनित्यविशेषगुणत्वात् पार्थिवपरमाणुगतरूपादिवत्, तत् द्रव्यं मनःशब्दाभिधेयं तत् च नित्यमिति ज्ञातव्यम् । इतरथा तस्यापि कारणकल्पनाप्रसङ्गात् । नित्यं च द्रव्यमणुत्वं विभुत्वं वा भवति । तस्य च विभुत्वमनुपपन्नम्, संयोगाभावप्रसङ्गात्, संयोगस्य साक्षाद्वा परम्परया वा निमित्तकारणम्, सप्रतियत्ने संयोगे तथा दर्शनात् । न च नैरन्तर्यमात्रं संयोगः, गुणगुणिनोरपि संयोगप्रसङ्गात् । ▮ च द्रव्यनैरन्तर्ये अवयवावयविनो र्व्यभिचारात् । अप्राप्तयोर्द्रव्ययोरेव प्राप्तिः संयोगः, स च विभुनोर्न संभवति ।

ननु विभुनोरपि संयोगः संभवति । तथाहि विभुनी मिथः संयुक्ते, द्रव्यत्वे सति नित्यत्वात् परमाणुद्वयवत् । तथाहि— आकाशमात्मसंयोगि, तत्संयुक्तद्रव्यान्तरसंयोगित्वात्, आत्मसंयुक्तघटसंयुक्तपटवत् इत्यादि । नैवम्, प्रमाणान्तरबाधितविषयत्वात् । अयमत्र संयोगमनुगम्य विभुनी साधयितुं युक्तम्, इतरथा अप्रसिद्धविशेषणत्वात् गगनविषयज्ञानवत्त्वमितिवत् । उत्पन्नश्च अयं संयोगः क्रियाजन्येन द्रष्टः, विभुद्वये ▮ संयोगे साध्ये कारणाभावात् कार्याभावानुमानदर्शनात् बाधितविषयत्वम् । अतो न विभुनोः संयोगः ।

यत्र विभुत्वसाधकमनुमानम्– मनो विभु, ज्ञानासमवायिकारणसंयोगाधारत्वात्, आत्मवत्, द्रव्यत्वे सति स्पर्शरहितत्वात् आकाशवत्, निरवयवत्वे सति द्रव्यानारम्भकद्रव्यत्वात् आकाशवत्, द्रव्यत्वे सति भूतत्वात् आकाशवत्, स्पर्शरहितत्वे सति इन्द्रियत्वात् श्रोत्रवत् इत्यादि, तत् सर्वं धर्मिग्राहकप्रमाणविरोधादेवापास्तं संयोगार्थं तावन्मनः कल्पनात् । अतः पारिशेष्यादणुत्वमेव निश्चीयते । तर्हि पार्थिवाद्यणुरेवास्तु, न द्रव्यान्तरं मन इति चेन्न, पार्थिवाद्यणूनां द्रव्यारम्भकत्वनियमात्, मनसश्च न द्रव्यारम्भकत्वं स्पर्शशून्यत्वादिति व्योमटीकायां प्रपञ्चितम् । किञ्च विवादाध्यासित पार्थिवादिद्रव्यसंयोगो न ज्ञानासमवायिकारणम्, पार्थिवादिद्रव्यसंयोगत्वात् इतर पार्थिवादिद्रव्यसंयोगवत् द्रव्यान्तरसंयोगवद्वा । विभुत्वपक्षे दिगात्मसंयोगो वा भवतु, कालात्मसंयोगो वा, किं द्रव्यान्तरेण मनसा इति तुल्योऽयमनुयोगः । अतो मनसोऽस्तित्वमणुत्वं च सिद्धम् । प्रवि पृ १०–३२

* मनोऽर्च ( मनुसर्वमिदम् ) सामिधेय यावदर्थं उपादेया न सर्वा । १०।५।११।७३–७६ * मनोऽर्चा 'अग्निस्तव पुरोहित' ( ऋग् ८।२७।१ ) इत्याख्याता 'पृथुपाजा' ऋक् ( ३।२७।५–६ ) इति द्वयोश्च धाय्या इति समाख्या । मु पृ ११११ * मनोऽर्चा पृथुपाजवत्यश्च समाख्यया धाय्याव प्रतेलिङ्गेन सामिधेनीत्वेन विनियोग इत्युक्त ( ३।३।७।२० ) इत्यत्र । वा ३।३।७।१४ पृ ८३७ * मनो अनियम्यापि प्रार्थकत्व 'यद्वै किञ्च मनुरवदत् तद्भेषजम्' इति वेदानुमततत्वात् अविरुद्धम् । मु पृ १७२

* मन्वादय राजशान्ताभिधेय परिपालनादि कर्म क्षत्रियस्य इति स्मरन्ति । वा २।३।२।३ पृ ५८४, * न च अत्र मन्वादयः सर्वधारणाध्यायिनः, ते हि प्रयत्नेन आगमशास्त्राध्यायिभ्य श्रुत्वाऽपमार्गस्ववाक्यैः परिस्मरणार्थं निबध्नीयुः । १।३।१।२ पृ १६४, * मन्वादिभि क्षत्रियस्य रक्षणं विहितं तद्राजकर्मत्वेन ज्ञायमानं राज्ञ इत्यत्र प्रयत्नार्थं वेन प्रतिपद्यते । ३।७।१९।८०

* मन्वादिवाक्यप्रतिपादिताचाराणां प्रामाण्यं अवश्यमभ्युपगन्तुम् । वा १।३।३।७ पृ २११

* मन्वादिस्मृतय पौरुषेया एव । दृष्टपुरुषकर्तृकत्वम् अविच्छिन्नपारम्पर्येणानुवर्तनात् वेदमूलत्वाच्च प्रामाण्यं तासाम् । ▮ १।२।७

( त्रिधौ इव अर्थवादेऽपि भाक्तत्वात्स्थाने दोष एव । तस्मात् विकृत्यर्थमिदं वचनं इत्यनूहः । ऊहानूह-चिन्तायाः अध्यायसङ्गतिमाह—) दशमस्याद्यः बाधसामान्येन ( न्यायजातस्य ) ऊहस्य ( वचनेन ) बाधः इति । ( इह चाधिकरणं आक्षेपः सवनीयः पशुः ज्योतिष्टोमे नास्तीति कृत्वा चिन्तितम् । ) ।

शा— अग्नीषोमीये पशौ मनोतामन्त्रः ‘ त्वं ह्यग्ने प्रथमो मनोता ’ इति । तत्रैव वेद वचनं ‘ यद्यप्यन्य-देवत्यः पशुः, आग्नेय्येव मनोता कार्या ’ इति । सोऽयं मनोतामन्त्रः किं विकृतिषु वायव्यादिपशुषु यथादेवतं ऊहितव्यः, अथवा अविकारेण प्रयोक्तव्य इति संशयः । तदर्थं च ‘ यद्यप्यन्यदेवत्य ’ इत्येतत् वचनं प्रकृत्यर्थम्, उत विकृत्यर्थमिति । तत्र पशौ अग्नीषोमदेवत्यत्वात् ऐन्द्राग्निदेवत्या मनोता । तत्रासमर्थ्यात् उत्कृष्यमाणा यथादेवतेन कार्या । यद्यपि द्विदेवत्या, तथापि एकदेवत्यैव मनोता तत्र कार्या, नोत्कष्टव्येति । ... तस्मात् वायव्यादिषु यथादेवतम् ऊहितव्या । इति प्राप्ते, ब्रूमः । ‘ अग्निद्वारेण मन्त्रोऽयमग्नीषोमौ प्रकाशयन् । अन्तरेणैव वचनं प्रकृतावपतिष्ठते ॥ ’ न च विकृतिषु सामान्यवचनोऽस्ति, येन लिङ्गेन केवलाग्निदेवत्यायाः उत्कर्षः स्यात् । तस्मात् नोत्कर्ष-प्राप्तिः, येन तन्निराकरणेन प्रकृतावेव वचनं कार्यं कुर्यात् । तस्मात् विकृतिषु यथादेवतम् ऊहे प्राप्ते तन्निराकरणार्थं वचनमिति वायव्यादिषु अनूहः इति अधिकरणस्य सारः ।

सोम— यागान्तरवत् मनोताया अपि ऊहार्थत्वादूह-दृष्टिरिति संगतिः ।

वि— ‘ मनोतामन्त्र ऊहोऽस्ति वायव्ये नास्ति वा, ऽस्त्यसौ । आग्नेय्येवेतिवचनं प्रकृतौ सार्थकं यतः ॥, अग्नीषोमाग्निनैव स्यान्मनोता वचनं विना । अनर्थकत्वात् तत्र वाक्याद् विकृतावूहवारणम् ॥ ’ तस्मात् ऊहो नास्ति ।

भाट्ट— अग्नीषोमदेवत्ये पशौ मनोतामन्त्र समाम्नातः केवलाग्निप्रकाशकः । स किं विकृतौ ऊहितव्यो न वेति चिन्तायाम्, प्रकृतावग्नीषोमयोर्देवतात्वेऽपि देवतात्वप्रथमा-भिधानप्रकाशकत्वेन मनोताशब्दाभिधेयस्य समवेतार्थत्वात् विकृतावपि तत्प्रकाशनार्थमूहः । स च यद्यप्यनेकदेवत्यः पशुस्तत्र स्पष्ट एव । यद्यप्येकदेवत्यः, यथा वायव्यो, तथापि स एव । तत्र प्रथमाभिधानमिति भवत्येवोहः । माऽस्तु वा तत्र । अत एव प्रकृतौ मनोतामन्त्रो नाग्नी-षोमयोर्लाक्षणिकः प्रमाणाभावात् । यदि तु मनोताशब्दस्य ‘ मनोतायै हविषोऽवदीयमानस्य ’ इति मन्त्रे चतुर्थ्यन्त-तया अवदीयमान—हवि संबन्धिदेवतावाचित्वावगमात् प्रकृतमन्त्रे चाग्निशब्दस्य ‘ त्वं ह्यग्ने प्रथमो मनोता ’ इति मनोतापदसामानाधिकरण्येन देवतापरत्वावगतेः अन्य-थानुपपत्त्या लक्षणया प्रकृतदेवताग्नीषोमलक्षकत्वमा-श्रीयते, तदा अग्नि( मर्ति )इत्येकदेवत्ये पशौ ऊहाप्रसक्ता-वपि वायव्यादिपशौ निरुक्तसंबन्धासम्भवेनाग्निपदनिवृत्तौ देवताप्रकाशनरूपकार्यानुरोधेन ‘ वायव्यमसि ’ इत्यनेन वायव्यादिपदोहे बाधकाभाव । न चैनमपि ‘ घूयति वा एतद्यो ऽध्वरं यदेवतमूहति तस्माद्यथं मोदेत् ’ इति कृतमूह-पर्युदासादूहानुपपत्तिः, उपक्रमस्थार्थवादे ऊहाभावोहनिन्दया पर्युदासस्य पशोहविषयत्वेऽपि प्रकृते प्राकृतसम्बन्धे वृत्तिभेदेन सिद्धे प्रयोजनानुरोधेन अन्यत्वगमरूपमात्रोहे बाधकाभावात् । अत एव नाधकमस्यैवेह विचारोदा-हरणत्वमुपपत्तिः ।

न च यद्यपि ‘ यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या ’ इति बाधसमुदायोपपत्तेर्नैवासिद्धिरिति वाच्यम् । अस्य देशप्रकरणसत्त्वेन विकृतिविषयत्वे उत्कर्षापत्तेः । मनोतामन्त्रस्याग्नेये पशौ उत्कर्षप्रसक्तौ तन्निवृत्त्यर्थत्वेन प्रकृतावेवोपपत्तेश्च । इति प्राप्ते, देश-संनिधौ पठितस्य मनोतामन्त्रस्याग्नेयप्रशस्तत्वे, सामान्य-सम्बन्धबोधकप्रमाणाभावेन उत्कर्षानुपपत्तेः अस्य वचनस्य प्रकृतावुत्कर्षनिवृत्त्यर्थत्वायोगात् तत उत्कृष्टस्य वायव्यादि-पशावूहनिवृत्त्यर्थत्वावगतेर्न तत्र मनोतामन्त्रस्य बाधः । इह च ज्योतिष्टोमे सवनीयाभावं कृत्वा चिन्तया । यदा तु आग्नेय सवनीयः पशुर्ज्योतिष्टोमेऽस्ति तदा मनोता-मन्त्रस्य महाप्रकरणाद् ज्योतिष्टोमसम्बन्धेऽवगते अवदीय-मानहृदयादिसम्बन्धावगमात् तत्रानर्थक्यप्रसक्तौ आनर्थ-क्यतदङ्गन्यायसहकृतप्रकरणेन सवनीये सामान्यसम्ब-न्धबोधकप्रमाणेन तत्रैव विनियोगोपपत्ते अस्य वचनस्य प्रकृता-

येनोत्कर्षनिवृत्त्यर्थत्वेन सार्थकत्वम् । तदाऽस्य विकृतावूहनिवृत्त्यर्थत्वे प्रमाणाभावात् वायव्यादिपशौ अत्रागन्तोरूह इष्ट एव ।

याज्ञिकास्तु नैनोहमाचरन्ति । तेषामयमभिप्रायः, प्रकृतौ नाग्न्यधिष्ठानकत्वसम्बन्धेनाग्नीषोमलक्षणा, व्याप्यवृत्तिसम्बन्धेन लक्षणोपपत्तौ अव्याप्यवृत्तिसम्बन्धेन तदयोगात्, अपि तु अग्न्यधिकरणकहविरुद्देश्यत्वसम्बन्धेन । अतश्च वायव्यादिपशौ तेनैव संबन्धेन लक्षणोपपत्तेर्नास्योह इति । वस्तुतस्तु देवतात्वे अग्न्यधिष्ठानकत्वस्याव्याप्यवृत्तित्वे प्रमाणाभावादित्येते एवोहचार्यौ । २२.

मण्डन— 'मनोता न विकारभाक् ।' २४.

शंकर— 'मनोताऽमेवनूहनम् ।' १४.

• 'अग्नीषोमाभ्यामाज्यभागौ यजति' इत्यत्र द्वयोरपि अग्नीषोमदेवताद्वयकारकत्वम् । मन्त्रा. पुनः मनोतान्यायेन उभय( देवता )प्रकाशकाः । भाट्ट. १०।२।८. • यत्तु वार्तिके मनोतेव ( गम्भो. ) एषा अनुवाक्या एका गाथा उभयत्रापि मनोतान्यायेन उभयत्र लक्षकत्वमनीहस्य वक्तव्यीया इत्युक्तम्, तत् अनुवाक्यासमाख्याबाधापत्तेः लक्षणायां प्रमाणाभावात् न उपेक्षितम् ( 'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम्' इत्यत्र इदम् ) । कौ. २।१।३।३.

• मनोतामन्त्रस्य प्राजापत्येषु पशुषु वाजपेये । मा. ५।२।६।१२. • मनोतामन्त्रस्य गौणार्थे विनियोगः । भाट्ट ३।१।१. • मनोतामन्त्रस्य 'त्वं ह्यग्ने मनोता' इत्यस्य सौम्यपशावूहितायां कृष्णग्रीवयोरावृत्तिः । ११।४।२०।५७–५९. 'इनिपृत. अग्निसो. पुरोऽनुवाक्यामनोतयोश्च आवृत्ति. ज्योतिष्टोमे' इत्यत्र द्रष्टव्यम् ।

• मन्त्रः 'अग्नये जुष्टं निर्वपामि' इति आम्नायते । आम्नानसामर्थ्यात् तेनोपकर्तव्यं प्रकरणिनः । तत्र कथं नाम उपकरिष्यतीति विशेषाकाङ्क्षा जायते किं उच्चारणमात्रेण उपकरिष्यति उत प्रकाशनद्वारेणेति । अपूर्वदेवताप्रकाशनमात्राद्युक्तिम् । शक्नोति न अयं कर्तुम् । तस्मात् प्रकाशनद्वारेणोपकरोतीति । टुप्. ९।१।२।१ वर्णकं २. • मन्त्रः अभिवदन् कर्म तत्साधनं वा कर्मणि समनैति । मा. १।८।३।४. • मन्त्र. अभिधान मुक्त्वा अन्यत्र करण न भवति । वा. ३।२।२।३. ■ मन्त्र अग्निवर्षणाङ्ग 'उन्दतीर्गोजो भक्ते' इति सवानेनाभिवर्षणे तन्त्रं ज्योतिष्टोमे । भा. ११।४।१७।५०, • मन्त्र. अग्नोष्यप्रतिमन्त्रणे ज्योतिष्टोमे 'अबद्धं चक्षुः०' इति । यदा एककाल अनेकं अमेध्यं पश्यति तदा सकृदेव मन्त्र । ११।४।१७।५०, • मन्त्रः अर्थाभिधानेन अङ्गी भवति । १२।३।१४।३०, • मन्त्रः अर्थाभिधानसंयोगात् शक्नोति उपकर्तुम्, न गौणमर्थं शक्नोत्यभिधातुम् । ३।२।१।१ पृ. ७४९. • मन्त्रः अवघाताङ्गं तन्त्रं दर्शपूर्णमासयो. । ११।४।१२।४५. • मन्त्रः आग्नीध्रमण्डपोपस्थाने प्रकृत एव आग्नेयः । ३।२।८।२१–२४. • मन्त्र. आज्यग्रहणाङ्ग तन्त्रं न दर्शपूर्णमासयोः । भा. ११।४।१४।४४–४५. • मन्त्रः 'आयुर्दा अग्नेऽसि' इत्यादिर्याजमानः दर्शपूर्णमासयोः । ३।८।६।१५–१६. • मन्त्र उपभृतोऽभिमर्शने 'युनज्मि ते वायुमन्तरिक्षेण ते सह' इति । भा १२।१।४।११. • मन्त्र एक एव 'मन्द्राभिभूतिः' इत्यादिः 'भक्षयामि' अन्त भक्षानुवाके । ३।२।१०।२७. • मन्त्र कण्डूयनार्थं तन्त्रं ज्योतिष्टोमे ( कण्डूयनमन्त्रस्तु 'कृषिपु त्वामस्ये' इति भाष्ये । 'कृषिं सुसस्यामुत्कृषे' इति मैत्रायणीये । 'सुपिप्पलाभ्यस्त्वौषधीभ्यः' इति विस्तरे । 'कृष्यै त्वा सुसस्यायै' इति भाट्टदीपिकादौ । 'विषाणे विष्यैत' इति शम्भुभट्टयाम् । ) । ११।४।१४।५१–५२. • मन्त्र 'कदाचन स्तरीरसि०' इति गार्हपत्योपस्थानाङ्ग श्रुतिप्राबल्यात् । वि. ३।३।७ • मन्त्रः करणभूतः कर्तव्यस्य वस्तुनः अभिधानार्थः समधिगतः । भा. ११।४।१२।४१. • मन्त्रः [?] अग्निस्वरूपप्रकाशनार्थमुच्यते उताग्निस्वरूपमविवक्षितम्, तस्मादित्थं मनोतायां इत्यतिदेशप्रकार एव नवमे चिन्त्यते । टुप्. ७।१।१।१. • मन्त्रः कश्चित् वेदमात्रः यः विहितमर्थं प्रयोगकाले प्रकाशयति यथा 'बर्हिर्देवसदनं दामि' इत्येवमादिः । भा. १।४।१।१. • मन्त्र. कश्चिद्विधायकः यथा 'वसन्ताय कपिञ्जलानालभेत' इति । वि. २।१।७. • मन्त्र. जपरूपः 'वैश्वदेवीमनूच्य वाग्यता या' इति । स्तुतिरूप. 'अग्निर्मूर्धा दिवः' इति । आशीरूप. 'आयुर्दा अग्नेऽस्यायुर्मे

देहि ' इति। अभिधानार्थः 'एषोऽसि, रोपोऽसि ' इति। भा. १२।४।१।१, * मन्त्रः द्रुह्वा अभिमन्त्रणे 'पुनन्मि वाचं सह दिवा सूर्येण ' इति ।१२।१।४।२१, * मन्त्रः ' त्रीन् परिधीन्० ' इति दर्शपूर्णमासयोः अपूर्वप्रयुक्तः न तु परिधिश्चिन्तसत्याप्रयुक्तः । ९।१।५।११-१९.

* मन्त्रः त्रिविधः ऋक्, यजुः, साम इति। (१) विधायकः ऋङ्मन्त्र.- ' पूर्णावादिन्नाघमानाय हन्यात् ' इति। (२) विधायको यजुर्मन्त्रः- ' वसन्ताय कपिञ्जलानालभते ' इति। (३) अभ्यन्तो मन्त्रः- ' मेधोऽसि '। (४) रान्तः- ' इषे त्वा '। (५) आशीर्मन्त्रः- ' आयुर्दा असि '। (६) स्तुतिरूपः- ' अग्निर्मूर्धा '। (७) सख्यामन्त्र.- ' एको मम एका च तस्य '। (८) मन्त्रिमन्त्र.- ' कसी ते इन्द्र पिङ्गले दुर्लेखि '। (९) परिदेवनमन्त्र.- ' अम्बेऽम्बिके० '। (१०) प्रैषमन्त्रः- ' अग्नीदग्नीन् विहर '। (११) अन्वेषणमन्त्र.- ' कोऽसि कतमोऽसि '। (१२) प्रश्नमन्त्र - ' पृच्छामि त्वा परमन्तं० '। (१३) आख्यानमन्त्रः- ' इयं वेदिः परो अन्तः '। (१४) पुरस्तादनुपङ्गमन्त्र - ' या ते अग्नेऽयाशया '। (१५) परस्तादनुपङ्गमन्त्र.- ' चित्पतिस्त्वा पुनातु '। परस्तादनुपङ्ग ऋङ्मन्त्र - ' अभ्यर् सा त इन्द्र '। (१६) प्रयोगरूप. नैराकाङ्क्ष्यात् ऋङ्मन्त्र - ' अग्ने मृळ महा असि '। (१७) प्रयोगरूप. नैराकाङ्क्ष्यात् यजुर्मन्त्र.- ' इषे त्वोर्जे त्वा '। (१८) प्रयोगरूपः चातु साकाङ्क्ष्यात् ऋङ्मन्त्र.- ' अभिमीळे पुरोहितम् '। (१९) प्रयोगरूपः चातु साकाङ्क्ष्यात् यजुर्मन्त्र- ' देवो वः सविता प्रार्पयतु '। (२०) सामर्थ्यात् मन्त्र.- ' देवस्य त्वा '। (२१) अभिमध्य- ' ईडश्चासि यन्त्रश्चासि '। (२२) स्वामध्य - ' तत्त्वा यामि ब्रह्मणा '। (२३) इतिकरणबहुल.- ' इति वा इति मे मन. '। (२४) इत्याहोपनिबद्ध - ' भग मञ्जीत्याह '। (२५) व्याख्यायिकारूप - ' शुभो ह सुज्यम् '। (२६) हेतुविधिः- ' इन्द्रो नासुरानि हि '। (२७) निर्वचनार्थः- ' यत् प्रेषिता वरुणेन '। (२८) निन्दामन्त्रः- ' मोघमन्नं विन्दते '। (२९) संशयार्थः- ' तिरश्चीनो विततो '। (३०) परकृतिरूपः- ' चित्र इत्राजा राजका '। (३१) पुराकल्परूपः- ' यज्ञेन यज्ञमयजन्त '। (३२) हेतुविधिस्वरूपः- ' द्वादशार न हि '। (३३) यजमानगामिफलविधिः- ' ममाग्ने वर्चो० '। (३४) ऋत्विग्गामिफलविधिः- ' अग्नाविष्णू मा वा '। (३५) यजमानर्त्विगुभयगामिफलविधिः- ' दिवमन मह वनौ सह '। (३६) पदार्थविधिरूपः- ' आयुर्दा अग्नेऽसि '। (३७) गुणभूतदेवताविधिः- ' समिधः समिधो '। (३८) प्रधानभूतदेवताविधिः- ' स्वाहाऽग्निं स्वाहा '। (३९) देवताविधिस्वरूप.- ' ऐभिरग्ने सरथं '। (४०) गुणभूतद्रव्यविधि - ' प्रैतु होतुश्चमसः '। (४१) प्रधानभूतद्रव्यविधि - ' सोम व्याघ्रो वीहि '। (४२) द्रव्यविधिस्वरूप.- ' शुना सुनासीराः '। (४३) जातिविधिः- ' छागस्य वपायाः '। (४४) जातिविधिस्वरूप.- ' बर्हिर्देवसदनं दामि '। (४५) गुणविधि - ' दर्भैः स्तृणीत हरितैः '। (४६) गुणविधिस्वरूपः ' पशुर्निशातिरस्य '। (४७) क्रियाविधि - ' अश्विनोर्बाहुभ्या '। (४८) क्रियाविधिस्वरूप- ' न ता नशन्ति '। (४९) निषेधविधिः- ' अथीरा तनूर्भवति '। (५०) निषेधविधिस्वरूप.- ' धनिष्टुमस्य मा '। (५१) निमित्तविधिस्वरूप.- ' यत् पशुर्मायु '। (५२) वाक्यनिषेधस्वरूप- ' श्येनमस्य वक्ष. '।

पुनरपि ऋङ्मन्त्राणां चतुर्दशच्छन्दःप्रयुक्ताः १४ भेदा.। गायत्री-उष्णिक्-अनुष्टुप्-बृहती-पङ्क्तिः-त्रिष्टुप्-जगती-अतिजगती-शक्वरी-अतिशक्वरी-अष्टि.-अत्यष्टि.-धृतिः अतिधृतिः इति। * गायत्री चतुर्विंशत्यक्षरा तत उत्तरोत्तर चतुरक्षराचतुरक्षरवृद्ध्या उष्णिगाद्या। तेन उष्णिहि २८ अक्षराणि, अनुष्टुभि ३२, बृहत्या ३६, पङ्क्तौ ४०, त्रिष्टुभि ४४, जगत्या ४८, अतिजगत्या ५२, शक्वर्या ५६, अतिशक्वर्यां ६०, अष्ट्या ६४, अत्यष्ट्या ६८, धृत्या ७२, अतिधृत्या ७६ अक्षराणि। तथापि सर्वानुक्रमणीकृता गायत्र्यादीनामायाना सङ्क्षेपतः अवान्तरभेदा उक्ताः। यथा-

गायत्र्याः भेदाः- गायत्री ८।८।८ ( प्रथमादिपादेषु तावन्ति तावन्ति अक्षराणि ज्ञेयानि )। उदाहरणम्- 'अयं

देवाय ' ( ऋग. १।२०।७ )। पदपङ्क्ति ५।५।५।६ उदा० ' अग्निरेष्ट अद्य ' ( ऋग ४।१०।४ ) । किंवा ५।५।५।४।६ उदा० 'अग्ने तमद्य' (ऋग. ४।१०।१)। उष्णिग्गर्भा ६।७।११ उदा० ' त्वा गे अश्व्याना ' ( ऋग. ८।२५।२३ ) । पादनिचृत् ७।७।७ उदा० 'स्वावत पुरूवसो' (ऋग ८।४६।१ )। अतिनिचृत् ७।६।७ उदा० ' पुरूतम पुरूणा ' ( ऋग ६।४५। २९ )। यवमध्या ७।१०।७ उदा० ' स सुन्वे यो वसूना ' ( ऋग. ९।१०८।१३ )। वर्धमाना ६।७।८ उदा० 'ईशाना वार्याणा ' ( ऋग. १०।९।५ )। प्रतिष्ठा ८।७।६ उदा० 'आप पृणीत भेषज' ( ऋग. १०।९।७ ) । ह्रसीयसी ६।६।७ उदा० ' प्रेष्ठ प्रियाणा' (ऋग ८।१०३।१०) । विपरीता ह्रसीयसी ७।६।६ उदा० ' इन्द्र सहस्रदामा' (ऋग १।१७।०)।

अथ उष्णिक् तद्भेदाश्च । उष्णिक् ८।८।१२ उदा० ' प इन्द्र सोम पातम ' ( ऋग ८।१२।१ ) । पुर उष्णिक् १२।८।८ उदा० ' युञ्जन्ति हरी इषिर ' ( ऋग ८।९८।९ ) । ककुप् ८।१२।८ उदा० ' गर्भे सर्भे च प्रपो ' ( ऋग. ५।५३।११ ) । ककुम्न्यङ्कुशिरा ११।१२।४ उदा० ' हरी रेवन्त वे ' (ऋग. ८।४६।१५ )। तनुशिरा ११।११।६ उदा० ' प्र या घोषे भृगवा ' ( ऋग १।१२०।५ ) । पिपीलिकमध्या ११।६।११ उदा० ' हरी यस्य सुयुजा ' (ऋग १०।१०५।२ ) । अनुष्टुब्गर्भा ५।८।८।८ उदा० ' पितु नु स्तोषं ' ( ऋग. १।१८७।१ )। उष्णिक् ७।७।७।७ उदा० ' मसीमहि त्वा वय ' (ऋग. १०।२६।४ )।

अथ अनुष्टुप् तद्भेदाश्च । अनुष्टुप् ८।८।८।८ उदा० ' अन औषधमा भर ' ( ऋग ५।१०।१ ) । महापदपङ्क्ति ५।५।०।५।५।६ उदा० ' तन्न स्वादिष्ठा ' । ( ऋग. ४।१०।५) । कृति १२।१२।८ उदा० ' मा कस्मै धातमभ्य ' ( ऋग १।१२०।८ ) । पिपीलिकमध्या १२।८।१२ उदा० ' पर्यू षु प्र धन्व वाजसा ' ( ऋग ९।११०।१ ) । काविराट् ९।१२।९ उदा० 'ता विद्वासा हवामहे' (ऋग. १।१२०।३ )। नष्टरूपी ९।१०।१३ उदा० ' वि पृच्छामि पाक्या ' ( ऋग. १।१२०।४ )। विराट् १०।१०।१० उदा० ' प्रेष्ठो अग्ने दीदिहि ' ( ऋग ७।१।३ )। विराट् ११।११।११ उदा० ' अग्नि नरो दीधितिभि ' ( ऋग. ७।१।१ )।

अथ बृहती तद्भेदाश्च । बृहती ८।८।१२।८ उदा० ' मा चिदन्यत् ' ( ऋग. ८।१।१ ) । पुरस्ताद्बृहती १२।८।८।८ उदा० 'महो यस्पति ' ( ऋग १०।२२। २ ) । न्यङ्कुसारिणी ८।१२।८।८ उदा० ' ईशानमिद् द्यौ ' ( ऋग १०।१३२।१ ) इयमेव उरोबृहती वा स्कन्धोग्रीवी वा । उपरिष्टाद्बृहती ८।८।८।१२ उदा० ' ये पातयन्ते अज्म ' ( ऋग ८।४६।१८ ) । विष्टारबृहती ८।१०।१०।८ उदा० ' पुन त्वारस महो ' (ऋग. १।१२०।७) । ऊर्ध्वबृहती १२।१२।१२ उदा० 'अव र्दाति यव' ( ऋग ९।११०।९ ) । पिपीलिकमध्या १३।८।१३ उदा० ' अभि नो वीरम चमो ' ( ऋग ८।४६।१४) । विषमपदा ९।८।११।८ उदा० ' पनित गुपनिर ' ( ऋग ८।४६।२० ) । बृहती ९।९।९।९ उदा० ' व रथा नर सितो मचो ' ( ऋग. १।१८७।११ ) ।

अथ पङ्क्ति तद्भेदाश्च । पङ्क्ति ८।८।८।८।८ उदा० 'दानास पृथु' ( ऋग ८।४६।२४ ) । विराट् १०।१०।१०।१० उदा० 'वि पिप्रोरहिमा ' ( ऋग. ६।२०।७ ) । सतोबृहती १२।८।१२।८ उदा० ' आ य नर सुदानवो ' ( ऋग ५।५३।६ ) । विपरीता ८।१२।८।१२ उदा० ' य ऋष्व आवयत् ' (ऋग. ८।४६।१२) । प्रस्तारपङ्क्ति १२।१२।८।८ उदा० 'तम्ना समुद्रा अधि' ( ऋग १।१६४।४२ )। आस्तारपङ्क्ति ८।८।१२।१२ उदा० ' आग्नि न स्व' ( ऋग. १०।२१।१ ) । सम्नारपङ्क्ति १२।८।८।१२ उदा० ' पाहि सद्म्या ' ( ऋग ८।४६।२२ ) । विष्टारपङ्क्ति ८।१२।१२।८ उदा० ' अपीपाम निर्हस्तर ' ( ऋग ५।५३।१४ ) ।

अथ त्रिष्टुप् तद्भेदाश्च । त्रिष्टुप् ११।११।११।११ उदा० ' कस्य नून कतमस्या ' ( ऋग. १।२४।१ ) । अभिसारिणी १०।१०।१२।१२ उदा० ' यो वाचा विवाचो ' ( ऋग १०।२३।५ ) । विराट्स्थाना ९।९।

१०।११ उदा० 'सखाय न इन्द्रो' (ऋग्. १।८१।६)। किंवा १०।९।११।१ उदा० 'शुभ्र नु ते शुष्मं' (ऋग्. २।११।४)। किंवा १०।९।१०।११ उदा० 'श्रुधी हवमिन्द्र मा' (ऋग्. २।११।१)। विराड्रूपा ११।११।११।४ उदा० 'श्रुतं वे मित्रावरुणा' (ऋग्. १।१२२।६)। विपरीता विराड्रूपा ८।११।११।११ उदा० 'पीळवो रश्म' (ऋग्. ५।१०।५)। ज्योतिष्मती १२।१२।१२।८ उदा० 'अग्निनेन्द्रेण वरुणेन' (ऋग्. ८।३५।१)। ज्योतिः १२।८।१२।१२ उदा० 'तामिरागाम' (ऋग्. ८।२३।१२)। महाबृहती ८।८।८।८।१२ उदा० 'नचना नवतीना' (ऋग्. १।१९१।१३)। यवमध्या ८।८।१२।८।८ उदा० 'स मा तपन्त्यभितः' (ऋग्. १।१०५।८)। पङ्क्त्युत्तरा १०।१०।८।८।८ उदा० 'एकैकामिम्या' (ऋग्. ५।८६।६)। किंवा विराट्पूर्वा नाम इयमेव।

अथ जगती तद्भेदाश्च। जगती १२।१२।१२।१२ उदा० 'प्र देवमच्छ' (ऋग्. १।६८।१)। महासतोबृहती १२।८।१२।८।८ उदा० 'आ य. पप्रौ भानुना' (ऋग्. ६।४८।६)। महापङ्क्तिः ८।८।७।६।१०।९ उदा० 'इयत्तिका शकुन्तिका' (ऋग्. १।१९१।११)। किंवा ८।८।८।८।८।८ उदा० 'तद्वाप तद्वसो' (ऋग्. ८।४७।१६)।

अथ प्रगाथाः। बार्हतः प्रगाथः बृहती–सतोबृहत्यौ उदा० 'अयं ॥ मधुमत्तमः' + 'शिवस्युरेण शिवता' (ऋग्. १।७३।१-२)। काकुभः ककुप्–सतोबृहत्यौ उदा० 'आ घ उताय: सवर्दुघा' + 'या सर्घाय मादनाय' (ऋग्. ६।४८।११-१२)। महाबार्हतः महाबृहती – महासतोबृहत्यौ उदा० 'बृहद्दिवसे अचि' + 'विश्वासा गृहपतिः' (ऋग्. ६।४८।७-८)। विपरीतोत्तरः बृहती–विपरीते उदा० 'नहि ते शूर राधसः' + 'य कन्नः आवत्' (ऋग्. ८।४६।११-१२)। आनुष्टुभः अनुष्टुप् एका + गायत्र्यौ द्वे उदा० 'आ रज रथ' + 'युविद्युम्न युविक्रतो' + 'यस्य ते महिना महः' (ऋग्. ८।६८।१+२–३)।

अथ अतिजगती १२।१२।१२।८।८ उदा० 'प्र वो महे मतयो' (ऋग्. ५।८७।१)।

अथ शक्वरी ८।८।८।८।८।८।८ उदा० 'प्रो ष्वस्मै पुरोरथं' (ऋग्. १०।१३३।१)।

अथ अतिशक्वरी १६।१६।१२।८।८ उदा० 'सार्कं जात क्रतुना' (ऋग्. २।२२।३)।

अथ अष्टिः १६।१६।१६।८।८ उदा० 'त्रिकद्रुकेषु महिषो' (ऋग्. २।२२।१)।

अथ अत्यष्टि १२।१२।८।८।८।१२।८ उदा० 'अग्निं होतारं मन्ये' (ऋग्. १।१२७।१)।

अथ धृतिः १२।१२।८।८।८।१६।८ उदा० 'अव मंह इन्द्र' (ऋग्. १।१३३।६)।

अथ अतिधृतिः १२।१२।८।८।८।१२।८।८ उदा० 'स हि शर्धो न' (ऋग्. १।१२७।६)।

एते गायत्र्यादाः सर्वे भेदा. प्रत्येक चतुर्विधाः १ एकेनाक्षरेण न्यूनाः निचृद्गायत्र्याद्या., २ एकेनाक्षरेण अधिकाः भुरिग्गायत्र्याद्या., ३ द्वाभ्यामक्षराभ्यां न्यूना. विराड्गायत्र्याद्याः, ४ द्वाभ्यामक्षराभ्यां अधिकाः स्वराड्गायत्र्याद्या. इति।

| | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|
| दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ |
| आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

अत्र दैवी गायत्री १ अक्षरा । दैवी उष्णिक् २ अक्षरा । . दैवी जगती ७ अक्षरा । एवं आसुरी गायत्री १५ अक्षरा, आसुरी उष्णिक् १४ अक्षरा इ० । ब्राह्मी गायत्री ३६ अक्षरा, ब्राह्मी उष्णिक् ४२ अक्षरा, ब्राह्मी जगती ७२ अक्षरा इतिरीत्या कोष्ठकार्थो ज्ञेयः । एते सर्वे भेदाः यजुःष्वेव सम्भवन्ति न ऋक्षु । एकेनाक्षरेण न्यूनाधिकत्वे निचृद्भुरिजौ, द्वाभ्यामक्षराभ्यां न्यूनत्वाधिकत्वे विराट्स्वराजौ । एते चत्वारश्छन्दसां भेदाः उक्तेषु यजुःषु सम्भवन्त्येव । बाल पृ. ५८–७०.

* मन्त्रः दर्भच्छेदनाङ्ग 'बर्हिर्देवसदनं दामि' इति तन्त्रं न दर्शपूर्णमासयोः । भा ११।४।१४।४४–४९, * मन्त्रः 'वेदस्य त्वा' इति निर्वपणस्य न तन्त्रं दर्शपूर्णमासयोः । ११।४।१४।४४, * मन्त्रः देवताप्रकाशकः 'अग्नेरहमुज्जितिमनूज्जेषम्' इत्यादिः अपूर्वप्रयुक्तः । ९।१।३।४–५, . * मन्त्रः द्विविधः क्रियाप्रकाशकः फलप्रकाशकश्चेति । इडोपाह्वानमन्त्रः क्रियाप्रकाशकः । सूक्तवाकमन्त्रः फलप्रकाशकः । वि. ९।१।१९ * मन्त्रः 'धाम नामासि' इति आज्यग्रहणस्य न तन्त्रं दर्शपूर्णमासयोः । भा. ११।४।१४।४४, * मन्त्रः मुवाभिमर्शने 'पुनज्मि ते पृथिवीं ज्योतिषा सह' इति । १२।१।४।११, * मन्त्रः नदीतरणार्थः 'देवीराप.०' इति । यदा अनेकस्रोतसं नदीं तरति तदा आदौ सकृदेव मन्त्रः, न [redacted] प्रत्येकं स्रोतसि मन्त्रावृत्तिः, ज्योतिष्टोमे । ११।४।१७।५०, * मन्त्रः प्रकरणे समाम्नानात् प्रधानैकवाक्यतामुपैति । २।२।१।१ पृ.७४९, * मन्त्रः फलप्रकाशकः दर्शपूर्णमासादौ 'अगन्म स्वः स ज्योतिषाऽभूम' इत्यादिरपूर्वप्रयुक्तः न तु स्वर्गादिफलप्रयुक्तः । ९।१।३।४–५. * मन्त्रः बर्हिषः संनहनस्य हरणस्य च आतिथ्यादेशात् अग्नीषोमीयदेशे नयनकाले नानुनेनीयः । ( सनहनहरणमन्त्राधिकरणम् ) । १२।१।२१।४६–४७. * मन्त्रः । मन्यते, मनोर्वेदा 'गुपूधूपविच्छिपणिपनिभ्य आयः' (६।१६) इत्यौणादिके अन्वयथे कृते मन्त्रशब्दव्युत्पत्तिः । सु. टू. ९९. * मन्त्रः मुख्ये एव विनियोजकः न गौणे । बर्हिन्यायः । ३।२।१।१–२. * मन्त्रः यमर्थं प्राधान्येन अभिदधाति सोऽपि देवता । सु. टू. ४५७.

* मन्त्रः यागहोमस्थले तदङ्गभूतदेवताप्रकाशनार्थ एव । भाट्ट. ४।१।७. * मन्त्रः लिङ्गविनियोज्यः न फलकल्पनायै प्रभवति । वा. १।२।४।३५. * मन्त्रः 'वाचस्प०' इति अध्वर्युयजमानोभयप्रयोज्यः दर्शपूर्णमासयोः । भा. ३।८।२।८. * मन्त्रः वेदिप्रोक्षणस्य 'वेदिरसि बर्हिषे त्वा' इति निः प्रोक्षणे सकृत् प्रयोक्तव्यः । ११।४।१५।४९–५०. * मन्त्रः 'शुन्धध्वम्' इति सान्नाय्यपात्रप्रोक्षणाङ्गं सन्निधिक्रमात् दर्शपूर्णमासयो । वि. ३।३।५. * मन्त्रः संस्कारकः । भा. ३।२।१।२, * मन्त्रः स्तरणाङ्ग 'ऊर्णाम्रदसं त्वा स्तृणामि' इति तन्त्रं न दर्शपूर्णमासयोः । ११।४।१४।४४–४९, * मन्त्रः स्नानार्थो ज्योतिष्टोमे 'इमा आपः शमु मे सन्तु' इति [?] । एकस्मा स्नाने पुनः पुनः स्नाने न तस्यावृत्तिः । ११।४।१७।५०. * 'मन्त्रो हीनः स्वरतो वर्णतो वा' इति बहुजनप्रसिद्धस्य शिक्षाकारपठितस्य मन्त्रपदस्य उद्धारेण पदान्तरप्रक्षेपः स्वपक्षानुरागमात्रेण व्याकरणमहाभाष्यकारेण कृतः, न वस्तुतः । ( शिक्षायां 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥' इति श्लोकः, महाभाष्यकृता तु 'दुष्टः शब्दः स्वरतो वर्णतो वा' इति पठितम् ) । सु पृ ९९३ * उपरवमन्त्रः प्रत्युपरवमावर्तते ज्योतिष्टोमे 'रक्षोहणो वलगहनो वैष्णवान् खनामि' इति । ११।४।१९।५५–५६. * 'चोदितार्थानुरोधेन मन्त्रः सर्वः प्रवर्तते ।' मन्त्रस्य परार्थत्वात् न चोदनामतिक्रम्य स्वातन्त्र्येण प्रकाशनसामर्थ्यं अवकल्पते । वा. ३।२।१५।३७. * क्षपादिमन्त्राः स्वदार्थाः । भाट्ट ३।२।१. * दक्षिणमन्त्रः उपांशुयाजाङ्गं यथाधस्तात्क्रमात् दर्शपूर्णमासयोः । वि. ३।३।५. * 'नहि श्रुत्यनुमानात् प्राक् स्वयं मन्त्रो विधीयते ।' वा. ३।१।७।१४ पृ. ७११. * बर्हिषः स्तरणमन्त्रः आतिथ्याया उपसत्सु अग्नीषोमीये च अभ्यावर्तते देशपृथक्त्वात् । १२।१।२०।४५. * मनोतामन्त्रो वाच यद्यपि पशौ अविकृतः प्रयोक्तव्यः । भा. १०।४।११।२१. * 'यत्र वर्णविकारो वा वर्णलोपोऽपि वा स्मृतः । स्वरान्तरनिवेशो वा न मन्त्रस्तत्र नेष्यते ॥' ( किन्तु

मन्त्रत्वं इष्यते एव ) । वा. २।१।१।३४, ● सर्वत्र क्रिया तत्साधन वा अभिदधन् मन्त्रः अङ्गभावं गच्छति । ३।२।५।११ पृ. ७६२. ● मन्त्राः अकर्मकरणाः ( कर्मसु करणतया न सम्बद्धाः ) याजमानाः । वि. ३।८।७. ● मन्त्राः ( १ ) अर्थप्रकाशनार्थाः न ते उच्चारणमात्रादृष्टं कुर्वन्ति । ( २ ) मुख्यार्थाभिधायिनः न तु गौणार्थाः । ( ३ ) अपूर्वप्रयुक्ताः न तु अभ्यादिस्वरूपप्रयुक्ताः । (४) समवेतार्थाभिधायिनः न तु सविज्ञादिपदवत् असमवेतार्थाः । ( ५ ) अपरार्थाः न तु यजपतिशब्दवत् परार्थाः । ( ६ ) प्राकृतस्थानापन्नान्यद्रव्यदेवताकाः यथा विकृतौ । इति षड्विधाः । टुप्., रत्न ९।३।१।१. ● मन्त्राः अलौकिकशब्दाः । संकर्ष. २।८।२२. ● मन्त्राः अविज्ञातार्थाः यथा 'अम्यक् सा त इन्द्र ऋष्टिरस्मे' इति 'सृण्येव जर्भरी तुर्फरीतू' इति, 'इन्द्रः सोमस्य काणुका' इति च ( इदं पूर्वपक्षे ) । भा. १।२।४।३१–८ । सिद्धान्ते तु विद्यमानोऽप्यर्थः प्रमादालस्यादिभिर्नोपलभ्यते । निगमनिरुक्तव्याकरणवशेन धातुतः अर्थः कल्पयितव्य । यथा 'सृण्येव जर्भरी' इत्येवमादीनि अश्विनोरभिधानानि द्विवचनान्तानि दृश्यन्ते । अनेन 'आश्विनोः कामप्रा' इत्याश्विनं सूक्तमवगम्यते । भा. १।२।४।४१. ● मन्त्रा अनियामकाः इति प्रसिद्धिः । वा. २।१।६।११. ● मन्त्राः अदृष्टलिङ्गा वेदे श्रूयन्ते 'या जनाः प्रतिनन्दन्ति' इत्येवमादय । भा १।३।१।१०. ● मन्त्राः ऋषिभिः न कृताः, किन्तु अन्तरणरूपेणोपाहृताः । वा– न तु ▮ मन्त्रः तैरेव ( ऋषिभिरेव ) कृताः, तदानीं वा पुरुषान्तरेषु अपठेन तेषामाविर्भूताः । किं तर्हि ? यथा अन्योऽपि कश्चित् मह्वार्थविवक्षया तदर्थं वाक्यं उपादित्समानः तदर्थरूपं ग्रन्थं श्लोकं वा अन्यदीयं स्मृत्या स्ववाक्यस्थाने प्रयुङ्क्ते, तत्प्रत्ययेन च अन्ये तदर्थमवधारयन्ति, एवमिहापि वेदार्थविद्भिः तदासितान्तःकरणैः मन्वादिभिः आत्मीयव्यवहारेषु श्रुतिसामान्यरूपेण विशिष्टार्थप्रत्यायनार्थं मन्त्राः प्रयुक्ताः । तद्वत्तेन चास्मदादीनां तदनुरूपा वाक्यार्थप्रतिपत्तिर्भवति । प्रत्ययहेतुत्वार्थमेव च आर्षस्मरणम् । वा. १।२।४।४१. ● मन्त्राः कर्मोपकारित्वात् कर्मशेषभूतार्थप्रकाशकत्वसंभवे प्रयोक्तव्याः, नान्यथा इति द्वितीयसूत्रवार्तिकाधिकरणन्यायः । सु. पृ. ११०८. ● मन्त्राः किं विवक्षितवचना उत अविवक्षितवचनाः । किं अर्थप्रकाशनेन यागस्य उपकुर्वन्ति उत उच्चारणमात्रेण इति संदेहे विवक्षितवचना मन्त्राः । नियमोच्चारण ▮ अदृष्टार्थमेव इति सिद्धान्त. । कर्माङ्गस्मारका मन्त्राः । मन्त्रैरेव मन्त्रार्थः स्मर्तव्यः । भा. १।२।४।३१–४५. ● मन्त्राः क्रियास्वरूपप्रकाशनेन तदङ्गविप्रकाशनेन वा कर्मोपयोगिनो भवन्ति । वा. १।४।६।९ पृ. ३४०.

सु मन्त्राश्चाकर्मकरणास्तद्वत् । ३।८।५।१५ ॥

'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादयः मन्त्राः अकर्मकरणाः कर्मसु करणतया न सम्बद्धाः । आशीर्मन्त्रा एते । एतादृशा मन्त्राः आध्वर्यवसमाम्नानात् अध्वर्युणा पठनीया इति तत्सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्त उच्यते, अकर्मकरणा मन्त्राः याजमाना यजमानेन प्रयोक्तव्याः । यजरिच अर्थसंयोगात् इति पूर्वतनसूत्रात् अनुवृत्त पदं हेतुत्वेन सम्बध्यते । 'आयुर्मे देहि' इति प्रार्थनया यजमानस्य अर्थेन फलेन संयोगः अपेक्षितः । तस्मात् अर्थसंयोगात् याजमानास्तादृशा मन्त्राः । तद्वत् 'य. कामयेत' इत्युक्त कामो यथा याजमानः तद्वत् । एवं च अर्थसंयोगरूपसामर्थ्यात् समाख्याया बाधः इति भावः । अत्र सुधा— आशीर्मन्त्राणामपि फलप्रार्थनसामर्थ्यान्मात् लिङ्गात् कामवत् याजमानत्वम्, इति ।

विप्रयोगे च दर्शनात् । १६ ॥

'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादयः आशीर्मन्त्रा याजमाना एव नाध्वर्यवाः इति पूर्वसूत्रेण उक्ते सिद्धान्ते हेत्वन्तरोपन्यासार्थं सूत्रमिदम् । विप्रयोगे यजमानस्य अग्निभिर्वियोगे प्रवासे इत्यर्थः । अग्नयः स्वगृहे सन्ति, यजमानश्च प्रोषित. तदापि तस्य अग्न्युपस्थान दृश्यते 'इहैव सन् तत्र सन्तं त्वाऽग्ने' इत्यादिना मन्त्रेण । न चैतदध्वर्योः सम्भवति । उपस्थानमन्त्रश्च आशीर्मन्त्र एव 'तिरो मा सन्तमायुर्मा प्रहासीत्' इति तृतीयचरणे प्रार्थितत्वात् । तस्मात् 'आयुर्दा अग्नेऽसि' इत्यादिरपि मन्त्रः याजमान एवेति सिद्धान्तः । के.

यादृशा एव निश्चिताः तादृशा एव प्रयोक्तव्याः । तत्र ब्राह्मणस्य व्यापार एव नास्ति । १२।३।८।२१. ● मन्त्राः यच्छब्द– आमन्त्रण– उत्तमपुरुषाद्युपहतविधिशक्तयः धर्मसाधनत्वेन उच्यमानाः ' देवाश्च याभिर्यजते ददाति च ' इत्येवमादिभिः आख्यातपदैः पुनः पुनः श्रुतैरपि न कर्मान्तरं कल्पयन्ति । वा. ३।१।१।१ पृ. ६४९. ● मन्त्राः वेदैकदेशः । धर्मे प्रमाणम् । त्रि १।४।१. ● अभिधेये तावत् विनियोगाय मन्त्राः श्रुतिं परिकल्पयन्ति । तत्र यदि शब्दस्यार्था गौणी वृत्तिर्भवेत् तत्तत्तुल्यतद्गुणकस्यापि श्रुतिः कल्प्येत । यदि तु गौणमपि धर्मतः पूर्वतः स्वार्थोऽभिधेयः तदा तदतिक्रमकारणाभावात् तद्विनियोगश्रुतौ कल्पितायां निराकाङ्क्षेषु मन्त्रस्वरूपस्वाध्यायाध्ययनविधिषु न पुनः श्रुतिकल्पनहेतुरस्ति इति न विनियोगः । वा. ३।२।१।२ पृ ७५०. ● ' कृत्वा दर्थादयो मन्त्रा ब्राह्मणाश्च चतुःश्रुताः । न ते निर्मोक्षयता यान्ति विनियोगाः पुनः पुनः ॥ ' सु. पृ. ११२१ ● नाभिधायकत्वं मन्त्रत्वे हेतुः । [illegible] तर्हि ? अभियुक्तप्रयोगः । येऽभियुक्तैः मन्त्रा इति नोच्यन्ते न ते मन्त्राः । भा. २।१।९।३४ । ' स्वाध्याये पठ्यमानेषु येषु मन्त्रपदं स्मृतम् । ते मन्त्रा नाभिधानं हि मन्त्राणां लक्षणं स्मृतम् ॥ ' वा. ● दोषभूतमर्थं संस्कुर्वन्तो मन्त्राः उपकुर्वन्ति नान्यथा । भा. ३।२।६।१७. ● मन्त्रं यूपपरिव्याणकरणभूतं ' परिवीरसि० ' इति होता पठेत् कौण्डपायिनामयने अग्नीषोमीये पशौ । वि. ३।८।११. ● मन्त्रान् कर्तृसंज्ञकान् अभिक्रमेव यजमानं वाचयेत् वाजपेये । ' आयुर्यज्ञेन कल्पताम्० ' इत्यादयो मन्त्राः कल्पतयः । ३।८।८।१८. ● मन्त्रेण ' उपहूयस्व ' इत्यनेन अनुज्ञापनम्, ' उपहूत. ' इत्यनेन च प्रतिवचनं ज्योतिष्टोमे सोमभक्षे । भा ३।५।१६। ४२, ● मन्त्रेण एकेन कृते कर्मणि द्वितीयस्य प्रयोगोऽनर्थकः । १२।३।१३।२९ ● मन्त्रेण यत् देवतासंकीर्तनं तत् दृष्टार्थम्, स्मरणस्यापेक्षितत्वात् । टुप्. ४।३।७।१९. ● मन्त्रेण स्मृतं क्रियमाणं अभ्युदयकारि भवति । वा. १।२।१।७ पृ. ११८. ● मन्त्रेण हिरण्यगर्भेण नाय... आघारे विहितेन प्राकृताङ्गान्तराणां न

बाधः । भा १०।३।१।११–१२. ● न च यावत् कर्माद्भूतेऽर्थे विद्यते तत् सर्वं मन्त्रेण अभिधातव्यम् । न्यूनमधिकं वा असौ यदभिधातुं समर्थः तदभिधत्ते । वा. २।१।९।१५ पृ. ४४७. ● अभिमर्शनमन्त्राभ्यां आग्नेयाग्नीषोमहविरभिमर्शनं दर्शपूर्णमासयोः । भा. ३।७। ४।८, १०, ● चतुर्होतृपञ्चहोतृमन्त्राभ्यां अभिमर्शनस्य अपूर्वं प्रयोजकम्, न तु दर्शपूर्णमाससमुदायः, दर्शपूर्णमासयोः । ३।२।५।११–१९, ● मन्त्रैः एव मन्त्रार्थः स्मर्तव्यः । ' अनेनोपायेन स्मृतिः कर्तव्या इति नियमार्थमाम्नानं महत्त्वात् ' ( तत्र अदृष्टार्थम् ) । १।२।४।३७. ● मन्त्रैरेव स्मृत्वा कृतं कर्म अभ्युदयकारि भवति इति नियमादृष्टसिद्धिरस्यार्थत्वे । वा. ९।१।६।११. ● मन्त्रैः प्रकृतैरपाठैः आग्नीध्रोपस्थानं ज्योतिष्टोमे । ३।२। ८।११–२४ ● मन्त्रस्य अभिधेयानोद्धरणाद्यस्य नानुष्ठानं दर्शपूर्णमासयोर्द्धरणकाले । ९।४।८।३१. ■ मन्त्रस्य अपचारे प्रतिनिधिर्नास्ति । भा. ६।३।५।१८–१९. ● मन्त्रस्यापि अर्थवादत्वं उक्तं सूत्रभाष्यकाराभ्याम् । ' अर्थवादो वा तदर्थत्वात् ' ४।४।९।२४ इति सूत्रम् । ' एव च मन्त्रार्थवादः अर्थवान् भविष्यति इत्यादि सुतोरायाः परिवीत आगात्० ' इत्यादि च भाष्यम् । के. ● मन्त्रस्य अभिधानार्थस्य आम्नानसामर्थ्यात् अभिहितं अभ्युदयकरं भवति । भा. १२।३।१४।३०. ● मन्त्रस्य अभिधानपूर्वकमेव सामर्थ्यकल्पना तथापि न तद्विनियोगस्याभिधानम् । किं तर्हि ? धर्मस्वरूपस्य । अन्यैव च तेन प्रथमं तदभिधानशक्तिः कल्प्यते अन्या च तद्द्वारेण विनियोगशक्तिः । वा. ३।१।७।१४ पृ. ८२५. ● मन्त्रस्य अवहननकरणस्य सकृत् प्रयोगः ग्रहणसमुदायार्थः दर्शपूर्णमासयोः । ११।४।१२।४५. ● मन्त्रस्य ऊहः अष्टविधः– ( १ ) प्रकृत्यूहः ( २ ) वचनोहः ( ३ ) लिङ्गोहः ( ४ ) प्रकृतिवचनोहः ( ५ ) लिङ्गवचनोहः ( ६ ) प्रकृतिलिङ्गोहः ( ७ ) प्रकृतिवचन– लिङ्ग– नियमोहः ( ८ ) अभ्यासलक्षणः ऊहः । ( विस्तरस्तु मीको. पृ १२३४ इत्यत्र टुप्टीकायां च द्रष्टव्यः ) । टुप्. ९।३।१।१. ● मन्त्रस्य करणता क्रियातत्साधनप्रकाशनेनैव । पराक्रमः. ८८।१.

ततो विपास्यति क्षेत्र. नियोगात् ग्मापयिष्यति ॥' ( इह पूर्वपक्षे) । या. २।१।६।३०. ● प्रकरणमन्त्रस्य 'वाचं विसृजति' इत्यनेन कालविधिर्नोत्कर्षे । वि. ३।२।४. ● व्रीहिमन्त्रस्य विकारो न प्रतिनिधिप्रयोगेऽपि । ९।३।१। २४–२७. ● 'हविष्कृदेहि' इत्याह्वानमन्त्रस्याह्वाने विनियोगः । वि. ३।२।२. ● मन्त्रयोः फलदेवताप्रकाशकयोरपूर्वप्रयुक्तत्वम् । 'फलदेवतयोश्च प्रकरणम्' । ९।१।३।८–९. ● पाशमन्त्रयोरेकवचनान्तत्वद्विवचनान्तयोर्द्विवचनान्तेनोहो द्विपशुकार्ये विकृतौ । 'पाशन्याय.' । ९।३।८।१०–१४. ● 'मन्त्राणामपि कर्मार्थे विहितार्थप्रकाशनम् । तेन गोदानगोपायौ नाम्याश्नद् मेदमागतौ ॥' या. ३।१।१।२ पृ. ६४९. ● मन्त्राणां अर्थप्रत्यायनार्थत्वम् । 'मन्त्राधिकरणम्' । १।२।४।३१–४५. ● मन्त्राणां भाष्ये आवृत्त्या संख्यापूर्तिः । संकर्ष. ३।१।१८. ● मन्त्राणां 'इन्द्रपीतस्य' इत्यादीनां सवनीय कर्मभक्षणेषु विनियोगो ज्योतिष्टोमे । ३।२।२१।२८–२९, ३९–४४. ● मन्त्राणां उपांशु मन्त्रिकल्पतया अप्राप्तौ. पृषत् कापि चातुर्मास्येषु वरुणप्रघासेषु दधिमतिहारे । १२।१।९।१८ ● मन्त्राणां अग्निहोत्रनामधानात् प्रयोगस्य च मन्त्ररूपेण सर्वत्र सद्भावात् न वैदिककार्यावश्यकत्वम् । सु पृ. १११, ■ मन्त्राणामेकत्वेऽपि न कृत्स्नानुसारार्थत्व., स्मार्याभिधानद्वारा मन्त्राणां प्रयोगादिज्ञापनकत्वात् प्रतिमन्त्रं च यामयार्थमेवम्, प्रत्येकमेव स्मार्याभिधानान्तरानुकार्यद्वारा स्तोत्रादिज्ञापनकत्वे सति संख्यापूर्णेन वचनेन बाधनात् समुच्चयानुपपत्तेः समुच्चितबाधकत्वाभावेन बाधनस्य स्यादकिंचित्करत्वात् । पृ. ८१७, ● मन्त्राणां औत्पत्तिकेन प्रथमाम्नातेन मुख्येनैवार्थेन सम्बन्धः । पृ. १०८४.

मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात् सर्वस्य वचनार्थत्वात् । १२।३। १०।२५॥

'इषे त्वेति छिनत्ति' 'देवस्य त्वा सवितुः प्रसवे इत्यादत्ते' इत्यादिविनियोजनानां मन्त्राणां करणार्थत्वात् करणस्मरणात् मन्त्रान्तेन मन्त्रस्य अन्त्येन अवयवेन कर्मादिसंनिपातः. कर्मणः य आद्योऽवयवः तस्य कर्मादिः, संनिपातः आदिरिणं कर्तव्यम् । 'इषे त्वा' इति मन्त्रस्य यत् अन्तिमं 'त्वा' इति पदं तत्रापि वा 'आ' इति अन्तिमो वर्णः तदुच्चारणकाले शाखाया छेदनस्य प्रहारः कार्यः । एवं सर्वत्र । तस्मात् करणमन्त्रेषु मन्त्रान्ते कर्मप्रारम्भः इति सिद्धान्तः । के.

● मन्त्राणां करणभूतानामन्ते कर्मारम्भः । १२।३। १०।२५. ● मन्त्राणां करणभूतानामेकार्थानां विकल्पः । १२।३।११।२९. ● मन्त्राणां कर्मोपदेशार्थाभिधानार्थत्वेन प्रकरणाद्यर्थसंयोगोपपत्तेः नाऽदृष्टकल्पना युक्ता । सु पृ.१०२. ● मन्त्राणां कर्मप्रकाशनार्थत्वम् । वा. ३।८।७।१७.

मन्त्राणां कर्मसंयोगात् स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ।१२।३।७।१८ ॥

मन्त्राणां कर्मसंयोगात् कर्मसु प्रयोज्यत्वात् मन्त्रकाले यस्तेषां धर्मः 'पर्वणि नाध्येयम्' इत्यादिः, तेन स्वधर्मेण स्वेन धर्मेण विशिष्ट. कर्मकाले प्रयोगः स्यात् । धर्मस्य तन्निमित्तत्वात्, स. मन्त्रप्रयोगः निमित्तं यस्य तादृशत्वात् । तस्मात् अनध्यायकाले कर्मसु मन्त्रा नोपार्याः । इति पूर्वः पक्ष. ।

विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात् कर्मार्थत्वात् प्रयोगस्य । १९ ॥

'पर्वणि नाध्येयम्' इत्यादीनां धर्माणां विद्यां प्रति ग्रहणार्थाध्ययनकाले विधानात् प्रयोगस्य च कर्मार्थत्वात् मन्त्रप्रयोगस्य कर्मानुष्ठानार्थत्वात् सर्वकालं स्वाध्याये अनध्याये न मन्त्राणां प्रयोगः स्यात् । इति सिद्धान्तः । के.

● मन्त्राणां न अर्थवचनं कार्यम्, न स्वरूपम् । स्वरूपे हि अदृष्टं कल्पयितायम् । अर्थवचनेन दृष्ट उपकारः । भा. ९।३।१।१. ● मन्त्राणां च स्वरूपे सामर्थ्यम्, नापूर्वीयस्वरूपे । टुप्. ९।१।३।४. ● मन्त्राणां जपस्तुत्याशीरभिधानानां समुच्चयः, न विकल्पः । १२।४। १।१–२. ● मन्त्राणां निर्वापमन्त्रादिस्मारकत्वेन अनभिमतार्थमन्त्रानुरूपमाप्ताप्यावधमनेऽपि अविसंवादिकल्पकत्वेन प्रामाण्य इति जीर्णाः । अन्तरानिधिकल्पनद्वारा इष्टसाधन–निर्वापादि विशेष्यकमन्त्रस्मारकमन्त्ररूपतादिसर्गक्रममाप्रयोजकत्वेन उभयोपपत्ति इति सोमेश्वरः ।

● मन्त्रस्य स्मरणार्थस्य भवति असकृत् प्रयोग, यथा 'कुरु कुरु करवाणि ' इति । मा. १२।३।१४।३०. ● मन्त्रस्य कर्मणा आकृष्यमाणस्य कर्म समानकर्तृकत्वनियमः । वा. ३।८।१३।२६. ● मन्त्रस्य कर्मसमवेतार्थप्रकाशकत्व विना करणत्वायोगात् करणत्व० श्रवणे तदन्यथानुपपत्त्या मन्त्रार्थस्य कर्मसमवायकल्पना नान्यथा । सु. पृ. ७२८. ● मन्त्रस्य कर्मसमवेतार्थप्रकाशनसामर्थ्यं एकवाक्यत्वोपगमनसामर्थ्यं च शब्दगाम् र्थ्यम् । बाल पृ ९. ● मन्त्रस्य तन्त्र न दर्शपूर्णमासयोः —निर्वापे प्रतिसृष्टि, प्रवने प्रतिस्वनम्, वेदिकरणे प्रतिघात, भाज्यग्रहणेषु प्रतिग्रहणम् । शा. ११।४।१४।४४–४५. ● मन्त्रस्य तावत् अविभायकत्वात् लिङ्गवद् श्रुतितो दौर्बल्य भवेत् ( देवन-विधाने ) । मा. ५।२।९।२१ पृ. ५३१. ● मन्त्रस्य तु सापेक्षतापि यद्यपि नैव कश्चिद् विरोधः । ३।२।१५।३७. ● मन्त्रस्य दर्शस्य न माहृतस्य बाध. वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितेन ग्रथोपादिना । भा १०।४।२।१–२ वर्णक १. ● मन्त्रस्य 'पत्नी सन्नद्य' इत्यस्य द्विपत्नीके विकृतियागेऽपि नोहः । ९।३।७।२२ ● मन्त्रस्य प्रतिनिधि नास्ति । भा ६।३।९।१८–१९ बौधे. पृ. २११० 'देवताऽग्निशब्दक्रियाणा०' इत्यत्र द्रष्टव्यम् । ● मन्त्रस्य प्रमाणान्तरप्राप्त अर्थं प्रकाशयितुं सामर्थ्य नानार्थ्यवाद विवेचितुम्, अविधायकत्वात् । टुप्. १०।८।१०।२०. ● मन्त्रस्य प्रयाणाद्यन्य सकृत् प्रयोग ज्योतिष्टोमे दीक्षितस्य । ११।४।१८।५४. ● मन्त्रस्य मन्त्रगाणुषेयवृत्तिरत मन्त्रब्राह्मणयोर्विरोधे 'मन्त्रस्य तु ब्राह्मणचोदितार्थप्रकाशनत्वात् तत्परता भवेत् ।' ( 'विरोधिन स्वार्थमर्त्यस्य मुख्य मुक्तो हि गौणार्थनिमित्तभाव. ॥' इति दीप. । वा. पृ. ७५१ ) इति ऐन्द्रयधिकरणवार्तिके उक्तम् । पृ. १२४८. ● मन्त्रस्य यस्यैव यत्र वेदे विधान एव तेन स्वरेणपाठे । यदि उभयत्र विधास्यते तत्र आगत्य विकल्पो मन्त्रीयते । वा. ३।३।१।७. ● मन्त्रस्य स्मरणमपि नास्तीति विचारे अस्तीति निर्णय । मन्त्रेण अभियुक्तप्रतिदिश मन्त्रण्यगम् । भा. ३।१।७।१२, ● मन्त्रस्य वचनार्थ. प्रयोगकाले पदार्थस्योपस्थापनम् । मन्त्रेणोपस्थित. पदार्थ. कर्तव्य इति विज्ञायते । १२।३।१०।२५. ● मन्त्रस्य विष्णुप महाराजापात. । पराक्रम०. ४।३।२. ● मन्त्रस्य सकृद्वचनम् । 'असन्निपातिकर्मणा विशेषाग्रहणे कालैकत्वात् सकृद्वचनम् । ' सूत्रम् ११।४।१९।५३ । यथा सुब्रह्मण्याह्वाने 'देवा ब्रह्माण. ' इति औपवसथ्ये अहनि । भा. ११।४।१९।५३. ● मन्त्रस्य स्मरणार्थत्व आतिथ्याबर्हिष० अग्नीषोमीयार्थं स्तरणकाले पृथक् आवृत्ति कर्तव्या ज्योतिष्टोमे । १२।१।२०।४५. ● मन्त्रस्य स्मरणार्थस्य आम्नानसामर्थ्यात् स्मारितकृत अदृष्टार्थाय भवति । यथा प्रेषितं कृतम् । ननु विधिशब्दादेव स्मृतिर्भवति । सत्य विधिशब्दादपि सामर्थ्यात् भवति । मन्त्रादपि भवति । मन्त्रस्य आम्नानसामर्थ्यात् मन्त्रेण कर्तव्या । भा. १२।१।१५।३०, ● मन्त्रस्य हि एतत् प्रयोजन यत् स्मारयति क्रिया साधन वा । असति स्मरणे न क्रिया भवेत् । ६।१।५।१८ ● मन्त्रस्य हिरण्यगर्भस्य वायव्यपशौ आघारे विहितस्य उत्तराघारे निवेश । १०।३।७।१३–१७. ● अकर्मसमवेतार्थाभिधायिनामपि पदाना समवेतार्थपदशेषत्वेन स्मृत्यर्थत्वोपपत्तेः सकलस्य मन्त्रस्य करणत्वसिद्धि. । सु पृ. ११०. ● अग्निविहरणमन्त्रस्य 'अचिक्रदद्वृषा' इत्यनेन कालविधिर्ज्योतिष्टोमे । वि ३।२।४. ● अभिमर्शनमन्त्रस्य आग्नेयविकारेषु विकल्प । भा. ८।२।५।२४. ● अश्वघातमन्त्रस्याहुतिर्नानार्थीर्थैरौ राजसूये । ११।४।१३।४६. ● चयने होतृगाया आवृत्तौ तन्त्रमभ्यासावृत्ति । भा. ११।४।१२।४९. ● न च विधिमन्त्रयो पूर्वापरभावनियमोऽस्ति । अत. मन्त्रस्य विष्णुपमहाराजामात. । पराक्रम०. ४।१।१. ● पूषानुमन्त्रणमन्त्रस्य दर्शपूर्णमासाभ्यामुत्कर्षं । भाट्. ३।२।१. ● प्रकाशनार्हानुष्ठेयक्रिया विना प्रकाशकमन्त्रस्य अन्वयायोग । सु पृ ४९७. ● पद्युपस्थानमन्त्रस्य प्रकृतावेव निवेश. । ९।३।५।१८–२०. ● मनोतामन्त्रस्य गौणार्थे विनियोगः । भाट् ३।२।१. ● स्तनमन्त्रस्य दुग्धे बर्हिष्येव विनियोगः । वि. ३।२।१. ● 'विधिवाक्यविनियोगेन न मन्त्रस्यानर्थक्ये ।

समुच्चये प्रमाण भवति । लिङ्गप्राप्तमपि गुणार्थं पुन श्रवण इत्युक्त मन्त्राधिकरणे ।

वि— ' प्रथमन्त्रो समुच्चेयौ विकल्प्यौ वा चतुष्ट्व वत् । आद्य उक्तिद्वयात्, मेन समुचित्यनुदीरणात् ॥ '

भाट्ट— ये तु स्वरूपा विनैव ब्राह्मणेन अनेके मन्त्रा प्रत्येक विनियुक्ता , येषु वा लिङ्गविनियुक्तेष्वपि ब्राह्मणे एव अर्थवादार्थं प्रत्येक पुन श्रुति , तत्र ये ताव द्वचनविनियुक्ता , तेष्वदृष्टार्थत्वादेव प्रयाजादिवत् समु च्चय , अन्यथा तद्विनियोगवैयर्थ्यापत्ते । लिङ्गविनियुक्ते ष्वपि ' उरु प्रथा उरु प्रथस्वेति पुरोडाश प्रथयति ' ' उरु ते यज्ञपतिरिति पुरोडाश प्रथयति ' इत्यादिषु यथा अर्थवादिक पुन श्रुतिप्रयोजन तथा सत्त्वयोऽपीति मन्त्र मानस्योत्तरम्, दृष्टार्थत्वेऽपि वचनविनियोगस्य 'इषे त्वेति शाखा छिनत्ति ' इतिवत् तत्रत्न प्रयोजनान्तरार्थत्वेनो पपत्ते , न दृष्टार्थत्वमात्रे तत्कल्पनम् । अतश्च निरपेक्ष साधनत्वश्रवणात् विकल्प एव । एव लिङ्गविनियुक्तेष्वपि मन्त्रेषु न श्रुतेरभावादसामर्थ्यात् न मणिमन्त्रौषधन्यायेन समुच्चयस्य कल्पना । अत एव तत्र प्रथममेव अभ्युपेत्य फलार्थे तत्तच्छास्त्रेषु विधीयते इत्युक्तम् ।

मण्डन— ' मन्त्रोऽनेको ब्राह्मणोक्तो विकल्प्य । '

शबर— ' ब्राह्मणे विहितेष्वेषम् । ' विकल्प ।

• मन्त्राणा प्रत्येकार्थे विनियोग ( ३।२।३।१–२ ) इत्यस्य ऐन्द्रीन्याय अपवाद । वा ३।२।२।३. • मन्त्राणा सम्यग्प्रयोगेऽपि क्रियातत्समवेतार्थप्रकाशनेन नियामकता । सु पृ ४५७ • मन्त्राणा सम्प्रयोगनाम प्रयाणनिर्णय एकवाक्यत्वनिर्णयेन भवति । वि ३।१। १४ • मन्त्राणा लिङ्ग नाम अर्थप्रकाशनसामर्थ्यम् । तच्च मुख्ये गौणे च केनचित् प्रकारेण क्रियते । (गौणस्य अर्थस्य अशाब्दत्वे शाब्दार्थप्रकाशनान्यथापत्ते गौणेऽप्यर्थे शब्दव्यापार अस्ति— इति सु ) । वा ३।२।१।१ • मन्त्राणा विध्यन्वयेन प्रामाण्यम्, न साक्षात् । १।४।२ • मन्त्राणा विदिष्टार्थस्मरण प्रयोजनम् । भाषा. पृ • मन्त्राणा श्रुतिलिङ्गादि–प्रमाणप्राप्त– फलाङ्ग भावाना व्यापार विना स्वरूपेण अफलत्वानुपपत्ते व्यापाराकाङ्क्षाया उच्चारण अदृष्टार्थत्वादुपेक्ष्य अर्था भिधानमेव शाब्दबोधरूप अनुष्ठेयार्थस्मरण अनुष्ठान-रूपदृष्टप्रयोजनार्थत्वात् व्यापारत्वेन अङ्गीक्रियते । तदेतत् ' अग्नये जुष्ट निर्वपामि ' इत्यादिकरणमन्त्रेषु सूपपादम् । यत्र तु स्वरसतो नानुष्ठेयक्रियावगति , अथ च विनियुज्यते, ' इषे त्वोर्जे त्वेति शाखामाच्छिनत्ति ' इत्यादिना तत्रापि ' छिनद्मि ' इत्यध्याहारेण अनुष्ठेय-क्रियाभिधान सभावनीयम् । क्रियमाणानुवादिषु ' सुधा सुजाता ' इत्यादिषु यूपपरिव्याणादिक्रियाया दीर्घ कालसाध्यत्वेन कदाचि मध्ये ' परिवीरसि ' इति परिव्याणमन्तरास्मरणविच्छेदे प्रसक्ते सति तत्स्मृति दार्ढ्यार्थं स्मारकापेक्षाया अनुष्ठेयस्मृतिदार्ढ्यहेतुत्वेन अर्थाभिधान अर्थवत् । कर्मण स्मारकानपेक्षाया मपि मन्त्राकाङ्क्षयैव तदाकाङ्क्षोत्थापनात् न दोष । के • मन्त्राणा सङ्ख्यायुक्तवचनविहिताना समुच्चय , यथा अग्निचयने अभ्यादाने चतुर्णाम्, स्नाने द्वयो , मुराहरणे षण्णाम् । १२।३।१४।३० मीको पृ ७१ ' अग्निचयने संख्यया निहितानां० ' इत्यत्र द्रष्टव्यम् ।

• मन्त्राणा सन्निपातित्वादेकार्थाना विकल्प स्यात् । १२।३।१३।२९॥

एकार्थाना एककार्याणा मन्त्राणा ' पूषा वा विभजतु ' ' भगो वा विभजतु ' ' अर्यमा वा विभजतु ' इत्या दीना विकल्प स्यात् । सन्निपातित्वात् समवेतत्वात् करणत्वात् । करणमन्त्राणा च कर्मादिसन्निपात उक्त । न च विकल्पमन्तरेण सर्वेषामन्वै कर्मादिसन्निपात कर्तु शक्य । तस्मात् एकार्थाना करणमन्त्राणा विकल्प इति सिद्धान्त । के

• ' मन्त्राणा सन्निपातित्वादेकार्थाना विकल्प स्यात् ' ( १२।३।१३।२९ ) । विकल्पो एषा मन्त्राणाम् ( ' उरु प्रथस्व ' इत्यादीना ), न समुच्चय । इद १ उक्तो न्याय ' मन्त्राणा० ' इति । मा १२।३।१५। ३३ • मन्त्राणा स्मारकत्वेऽपि प्रामाण्यम् । भाषि पृ १२ • मन्त्राणा हौत्राणा क्रियमाणानुवादित्वात् समुच्चय , न एकार्थत्वे विकल्प । १२।३।१६।३६–३८ ' हौत्रमन्त्राणा समुच्चय ' इत्यत्र अधिकरण द्रष्टव्यम् । • ' अर्थाभिधानसंयोगान्मन्त्रेषु शेषभाव स्यात् ' । मुख्येन

च कृतार्थता न गौणे श्रुतिकल्पना ॥' 'अपि वा प्रयोगसामर्थ्यात्०' ( २।१।३।३१ ) इत्यनेन न्यायेन अभिधेये तावद्विनियोगाय मन्त्रा. श्रुतिं परिकल्पयन्ति। तत्र यदि जहत्स्वार्था गौणीवृत्तिर्भवेत् ततस्तुल्यवत् उभयत्रापि श्रुतिः कल्प्येत । यदि तु गौणमपि वदता पूर्वतर स्वार्थोऽभिधेय, तदा तद्विनियोजकप्रकरणाभावात् तद्विनियोगश्रुतौ कल्पितायां निराकाङ्क्षेषु मन्त्रप्रकरण-स्वाध्यायाध्ययनविधिषु न पुन श्रुतिकल्पनहेतुरस्ति इति न विनियोग । शा. ३।२।१।२ पृ. ७४९-५०. ● करणमन्त्राणां कर्मसमवेतानुद्रास्यमानार्थ-स्मृतिफलकत्वम् । क्रियमाणानुवादिनां अनुष्ठीयमानार्थस्मृतिफलकत्वम् । अनुमन्त्रणादीनां कृताकृतप्रत्यवेक्षणाय अनुष्ठितार्थ-स्मृतिफलकत्वम् । प्रोत्साहनार्थानाम् 'अगन्म स्व. स ज्योतिषाऽभूम' इत्यादीनां 'यदेव श्रद्धया करोति तदेव वीर्यवत्तरं भवति' इति वाक्यावधारितकर्मोद्-भूतश्रद्धाजननार्थं अनुष्ठेयकर्मस्मृतिफलकत्वम् । स्तोत्र शस्त्रमन्त्राणां आरादुपकारकत्वम् । सु पृ १०२, ● 'चतुर्भिरभ्रिमादत्ते' इति तृतीयया मन्त्राणां करणत्वे अभिहिते स्वव्यापार विना तद्योगात् उच्चारण-स्यातद्व्यापारत्वात् कर्मोत्पत्त्यनुपयोगित्वाच्च स्वव्यापार कर्मोत्पत्त्युपयोग्यभिधानव्यापारेण करणत्वावगमात् चतुर्भिरभ्न्यादान अभिदध्यादिति वाक्यार्थावगमे इति करण-विनियुक्तानां अर्थनियामकत्वेन कर्मभावाभावत्वात् द्रव्य-देवतावत् क्रियोत्पत्त्युपयोगित्वाभावात् कारकत्वावधारणात् करणव्यतिरिक्तकारकत्वानुपपत्तेः करणत्वनिश्चये सति अभिधानार्थत्वसिद्धे स्तोत्रशस्त्रमन्त्राणां च सोविशेषश्रुति-त्वामेव अभिधानार्थत्वावगमात् 'ता चतुर्भिरादत्ते' इत्यादिश्रुतिविनियोज्येषु अन्वाधानादिमन्त्रेषु तदर्थ श्राम्नानर्थक्यप्रसङ्गापत्तेनापि अर्थप्राधान्य अभिहितम् । पृ. १०३. ● दीक्षाहुतिमन्त्राणामभिचयनप्रकरणे श्रुताना सौमिकदीक्षाहुतिमन्त्रैः समुच्चय । १०।३।४।२३-२९. ● न तात्स्थ्येनैव मन्त्राणां ब्राह्मणे विनियोगोऽस्ति । या. २।१।१।४६. ● प्रयाजानुमन्त्रणमन्त्राणां याजमानत्वात् ● कर्मेन प्रम. दर्शपूर्णमासयो. । ५।१।२।१२. ● प्रैष मन्त्राणामाध्वर्यवत्वम् । ३।८।१२।२४-२९. ● मुख्य

नियमविनियोजकश्रुतिकल्पना विना गौणविषयश्रुति-कल्पनाप्रयोगात् मुख्यविषयश्रुतिकल्पनायाः प्राथम्यावगतेः मुख्यविनियोगेन मन्त्राणां नैराकाङ्क्ष्यात् गौणे मन्त्र विनियोगकल्पना न युक्ता । सु पृ.१०८४. ● तत्त्वपि उपायान्तरेषु विशिष्टानुपूर्वीकमन्त्रविशेषाम्नानात् उपाया-न्तरनिवृत्तौ नियमादृष्टमात्रकल्पनया मन्त्राणां अर्थाभि धानं सिद्धम् । वा १।२।४।२६. ● मन्त्रे 'अगाम सुवः सुवरगन्म' इत्यत्र स्वर्गस्वरूप अपूर्वार्थस्य मन्त्रस्य द्वार उत अपूर्वसम्बन्धिविशेष इति चिन्ता । द्वितीय कोटि. सिद्धान्त. । सोम. ९।१।१ वर्णक २. ● मन्त्रे एकस्मिन् नियममपि समवति स्तुतिः अभिधान कथम् । यथा 'इदं विष्णुर्विचक्रमे' इति । यदि विष्णुर्नोच्यते तत स्तुतिः । अथ अन्यस्मै वृत्तान्त आख्यायते ततो ऽभिधानम् । अथ आत्मना व्यवधीयते ततो जप । भा. १२।४।१।२, ● मन्त्रे नैन्द्रे चरौ बर्हि स्तरणविषयके हविःपदस्थाने चरुपदस्य ऊह । ९।२।१।३. ● मन्त्रे सौर्यादिविकृतौ अतिदिष्टे वैश्वदेव्यदेवतावाचकपदोह । ( मन्त्रोहन्याय ) । ९।१।१।१-८. ● मन्त्रे 'स्योनं ते०' इत्यस्मिन् नीवारचरावूह 'इन्द्राग्न्योः सदनमसि' इत्यत्र ऐन्द्राग्नमेकादशकपालम्' इत्यत्र । भा. ९।३।१।१-८. ● आहवनीयाग्न्याधानकरणमन्त्रे अत्र पद याजमान दर्शपूर्णमासयो. । (वर्चोन्याय ) । ३।८।१२।२६-२८. ● ऐन्द्राग्नैकादशकपालनिर्वापमन्त्रे पैन्द्राग्नपदोह । भा ९।३।१।१-८, चित्रेष्टिगतनिर्वापमन्त्रे तद्देवतापदोह । ९।३।२।१-८. ● द्विबहुपत्नीके दर्शपूर्णमासप्रयोगे प्रैषमन्त्रे पत्नीशब्दस्य नोह, एव विकृतावपि । ९।३।६-७।२०-२१. ● सर्वत्र हि मन्त्रे निर्दिश्य पद कर्म-समवेतमर्थं वदन्ति, यथा 'अग्नये जुष्टं निर्वपामि' इति अग्निनिर्वपाभिपदे । शिष्टानि ● असमवेतार्थाभिधायि-त्वात् अप्रयोगार्हाणि इत्ययमनेकवाक्यतान्यथानुपपत्त्या अनुमितसमवेतार्थाभिधानानि सन्ति स्वार्थमुपसर्जनीकृत्य तद्विशिष्टसमवेतार्थप्रकाशनेन प्रयोगार्थतां प्रतिपद्यन्ते । ततश्च श्रुतिमनुमाय विनियुज्यन्ते । तच्चानिषेधे सति सर्व-मप्यनुज्ञायते । चा. ३।३।७।१४ पृ. ८१२. ● साग्रहणी-ष्टिनिर्वापमन्त्रे विश्वेदेवपदोह । भा ९।३।१।१-८.

✿ मन्त्रेषु अग्न्यादिस्वरूपं न विवक्षितम्, किन्तु अग्न्यादिनिरूपपूर्वकावगततात्पर्यम् । सोम. १।१।१ वर्णक २.

● मन्त्रेष्वपि ब्राह्मणलिङ्गानि दृश्यन्ते । तेन अभियुक्तैः मन्त्रत्वेन अभिधानमेव मन्त्रलक्षणं तदितरवेदवाक्यत्वं च ब्राह्मणलक्षणं इत्येव स्वीकर्तव्यम् । न च हेत्वादीनामन्यतम ब्राह्मण इति ब्राह्मणलक्षणम् । मन्त्रेष्वपि हेत्वादिसद्भावात् । तथाहि– 'इन्द्रो वामुशन्ति हि' अत्र हेतुः । 'उदानिषुर्महीरिति तस्मादुदकमुच्यते' अत्र निर्वचनम् । 'मोघमन्नं विन्दते अप्रचेताः' अत्र निन्दा । 'अग्निर्मूर्धा दिवः ककुत् पतिः' अत्र प्रशंसा । 'अधः स्विदासीदुपरि स्विदासीत्' अत्र संशयः । 'कपिञ्जलानालभेत' अत्र विधिः । 'सहस्रमयुत ददत्' अत्र परकृतिः । 'यज्ञेन यज्ञमयजन्त देवाः' अत्र पुराकल्पः । 'इयदसि इत्यनया इत्यपच. इति आहत्यो गायेत्' अत्र ब्राह्मणोक्तमन्त्रे इतिकरणबाहुल्यम् । 'राजा चित्रं गर्गो भक्षीत्याह' 'यो वा रक्षाः शुचिरस्मीत्याह' अत्र 'इत्याह' इति वाक्योपबन्धः । नि.२।१।७.

☸ मन्त्रेष्वपवाक्यशेषत्वं गुणोपदेशात् स्यात् । १०।८।१०।२०॥

'वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति अनारभ्यवचनस्य दर्विहोमेषु श्रूयमाणम् 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, वायवे स्वाहा' इति वाक्यशेषः यत् स्वाहाकारेण देवेभ्यः प्रदीयते, तत् 'पृथिव्यै स्वाहा' इत्यादौ इति पूर्वपक्षे सिद्धान्तयति । मन्त्रेषु 'पृथिव्यै स्वाहा' इत्यादिषु अनारभ्यवाक्यशेषत्वम्, न वाक्यशेषत्वम् । ब्राह्मणं विधायकम्, मन्त्रो न विधायकः, विधायकाविधायकयोश्च नैकवाक्यता स्यात् । अपि च 'पृथिव्यै स्वाहा' इत्यादौ गुणोपदेशात् देवतालक्षणगुणोपदेशात् देवताविधिपरत्वमस्य न तु स्वाहाकारविधिकल्पनया उपसंहारार्थत्वम् । तस्मादन्येष्वपि दर्विहोमेषु स्वाहाकारोऽस्ति इति सिद्धान्तः ।

अनाम्नाते च दर्शनात् । २१ ॥

क्वचिद्दर्विहोमे स्वाहाकारे अनाम्नातेऽपि स्वाहाकारस्य दर्शनात् सर्वेषु दर्विहोमेषु स्वाहाकारः कर्तव्यः । ज्योतिष्टोमे 'धृतेन द्यावापृथिवी आपृणेथाम् इति औदुम्बर्या विशाखे जुहोति आऽन्वादन्तमस्रावयति भूमिगते स्वाहा करोति' इति अनाम्नाते स्वाहाकारस्य दर्शनम् । सिद्धान्तोऽयम् ।

प्रतिषेधाच्च । २२ ॥

'न स्वाहेति वचनं करोति, मन्त्रं च नाह' इति क्वचित् दर्विहोमे स्वाहाकारस्य प्रतिषेधात्, प्रतिषेधस्य च प्राप्तिपूर्वकत्वात् सर्वेषु दर्विहोमेषु स्वाहाकारो भवति इति सिद्धान्तः । के.

✱ मन्त्रेषु समानार्थेषु मन्त्रसमाम्नायसिद्धस्वरनियमः (भाषास्वराधिकरणम्) । १२।३।८।१०–१२.

✱ मन्त्रेषु प्राधान्याभिधानात् देवतात्वेन अग्न्यादयः प्रतीताः । वा. २।४।६।९ पृ. ३४०. ✱ मन्त्रेषु 'यथाभागं व्यावर्तेथाम्' इत्यादिषु पुरोडाशपिण्डौ एव संबोध्यौ न देवता । संकर्ष. १।३।१६. ✱ मन्त्रेषु लिङ्गवचनसामर्थ्यं 'बर्हिर्देवसदनं दामि' इति विनियोगकारणमुक्तम् । भा. ३।३।४।११. ✱ यस्तु मन्त्रेषु अध्येतृणां वेदशब्दप्रयोगो दृष्टः (वेदमधीमहे, वेदो पठ्यते इति) सत्यम्, अन्यत्रापि लक्षणा, तथापि तु इतरैव (ऋग्यजुःसामसु वेदे लक्षणा) न्याय्यसी । वा. १।१।२।१.

✿ मन्त्राकरणपक्षः । अश्वमेधे अश्वविषये वड्क्रीवत्त्वादिसाधनार्थे वेदोपि मन्त्राकरणपक्षे भवाणां पशूनामर्थे, षडशीतिरेवा वङ्क्रयः इति समाससम्बन्धम् । १।४।२।१७–२१. मीको. पृ. ७४१ 'अश्वमेधे अग्निगुणेषे०' इत्यत्र द्रष्टव्यम् ।

✿ मन्त्राधिकरणम् (मोक्षोहनमन्त्राणां याथमानत्वम्) । ३।८।६।१५. मीको पृ. १०१२ 'आशीरधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

☸ मन्त्राधिकरणम् । मन्त्रा अनुष्ठेयार्थस्मारकाः ॥ तदर्थशास्त्रात् । १।२।४।३१–१ ॥

भाष्यम्— अथेदानीं किं विवक्षितवचना मन्त्राः उत अविवक्षितवचनाः । किमर्थप्रकाशनेन यागस्योपकुर्वन्ति, उत उच्चारणमात्रेण इति । यद्युच्चारणमात्रेण तदा न नियोगतः 'बर्हिर्देवसदनं दामि' इत्येव बर्हिर्लवने विनियुज्येत । अभिधानेन चेत्, प्रकरणेन विज्ञाताङ्गभावो नान्यत्रोपकर्तुं शक्नोतीत्यन्तरेणापि वचनं बर्हिर्लवने

नियमो दृश्यते यथेन्द्राग्नी नीलोत्पल यावपुरुषाश्विनौ निष्कौशाम्बिरिति, युक्त तत्र नियमेऽप्यन्यदार्थात्त्वया पृथक्त्वप्रसङ्गात् । अजाद्यदन्तविशेषणत्वादिनिमित्तो हि तत्र नियत पूर्वनिपात स्मर्यते । तेनाग्नीन्द्रो इत्यसाधु त्वम्, पुरुषराज इत्यर्थान्तरम्, कौशाम्बिनि इत्य नर्थकत्वम् । यत्तु अग्नीन्द्रो इति क्वचित् प्रयोग स च्छान्दस , अग्नेर्वाऽभ्यर्हितत्वस्य विवक्षयेति मन्तव्यम् । तुल्यकक्षायप्रतीतौ इन्द्राग्नीपदमेव व्यवस्थितम् । ननु इहापि क्रमान्यत्वादनर्थान्तरं स्यात् । तदेवार्थपरत्वे सति तद्विनाशे तु किं निमित्तमिति न विद्म । तेन मन्त्र प्रसिद्धौ 'वाक्यनियमात्' इत्यपि सूत्रम् ( सुत्रैकदेशे सूत्रशब्दप्रयोग , ग्रामैकदेशे 'ग्राम आयात' इति प्रयोग-दर्शनात् ) । अपरा अन्यप्रकरणाधीतवाक्यनियमात् । न ह्यर्थाभिधाने अध्वर्युस्याऽऽग्नीध्रस्य च विशेष । अथवा मन्त्रपौरुषेयवाक्ययो तुल्ये अर्थाभिधानसामर्थ्ये मन्त्रवाक्यनियमोऽदृष्टार्थ । अथवा अनेकध्यानादि स्मरणोपायप्रसङ्गे वाक्यनियमात् । न हि दृष्टेऽर्थे मन्त्रस्य ध्यानादेर्वा कश्चिद्विशेष इत्यदृष्टार्थता ।

बुद्धशास्त्रात् । ३१-३ ॥

भाष्यम्— बुद्धे खल्वपि पाठादर्थे तदभिधानसमर्थो मन्त्रो भवति 'अग्नीदग्नीन् विहर' इति । स बुद्ध किं बोधयेत् ? अथ नूच्चारणविशेषार्थो, बुद्धेऽपि उच्चारण विशेषोऽवकल्प्येतेति । ननु पुनर्वचनात् संस्कारविशेषो भविष्यति । एवमदृष्टपक्षमेव आश्रितोऽसि । वचन मुच्चारणम् । तद्धि शक्यते कर्तुं नावश्यकत्वम् । तस्य वीतेऽशक्यम् । यथा सोपानत्के पादे द्वितीयामुपानहं मध्यस्य वाऽऽसोपाद्वत्ते ।

वा— 'न ह्यविद्वान् विहितोऽस्ति' ( ३।८।८।१८ ) इत्यनयैव तावदग्नीधाऽऽग्नीध्रस्य पदाया प्रागेव कर्म-स्वरमादवगन्तव्या । तत्र प्रैष पिष्टपेषणन्यायेनार्थं ज्ञाप यितुमशक्नुवन् अदृष्टार्थो भवति । अत्र स्मारको मन्त्र इत्युच्यते । तदपि नास्ति । आम्नायज्ञानाम्यासपाठन निमित्तसंस्कारादेव तत्सिद्धे । संस्कारार्थमनृत्तिहेतुरपि पूर्वपदार्थस्मृतिसंस्कारमेव वा भविष्यति नार्थो मन्त्रे । तत्र यत् उच्यते संस्कारविशेषो भविष्यतीति, तत्रान

दृष्टादृष्ट मभ्यासात्, अत पूर्वपक्षापत्ति । यदि हि प्रतीतोऽप्यर्थो नैव दृष्ट साधयति ततो यत्नतुरमपि गत्वाऽवश्य कल्पनीय तदुच्चारणादेव वरमिति ।

अविद्यमानवचनात् । ३१-४ ॥

भाष्यम्— यज्ञे साधनभूत प्रकाशयितव्य । न च तादृशोऽर्थोऽस्ति यादृश अभिदधाति, यथा 'चत्वारि शृङ्गा' ( तैआ १०।१०।१७ ) इति । न हि चतु शृङ्ग त्रिपाद द्विशिरस्क सप्तहस्त किञ्चिद् यज्ञसाधनमस्ति । तदर्थाभिधानार्थं किमभिदध्यात् । उच्चारणार्थं एव कल्प्यते । तथा 'मा मा हिंसी ' इत्यसत्यामपि हिंसाया किमभिदध्यात् ? ।

वा— न च तु शृङ्गादि किञ्चित्कर्म तत्प्रयोजक वा प्रकृतौ विकृतौ वा विद्यते । यद्यपि च गुणवादेन किञ्चित् स्यात् तथापि तदनुष्ठानाभावाच्च तन्मृषा कार्यम् । न च ज्ञायते क प्रदेशो प्रयुज्यतामिति । तत्र मन्त्रपाठक्रमानुरोधेनोच्चारणमापततीति सिद्ध पूर्व पक्ष । 'मा मा हिंसी ' 'मा मा सन्ताप्तम्' इत्यादीनि वेदिहविर्धानादिविषयत्वात् 'अचेतनेऽर्थबन्धनात्' इत्यनयोरुदाहरणम् । इह त्वप्रसक्ताया हिंसाया प्रतिषेधा नर्थक्यम् ।

अचेतनाऽर्थबन्धनात् । ३१-५ ॥

भाष्यम्— अचेतने अर्थे खल्वर्थं निबध्नाति 'ओषधे त्रायस्वैनम्' इति । अभिधानेनोपकुर्वन्त एव जातीयका ओषधि पशुनाशाय प्रतिपादयेयु । न चाचेतनं शक्या प्रतिपादयितुम् । उच्चारणार्थे तु नैष दोषो भवति । तस्मादुच्चारणार्था । 'शृणोत ग्रावाण ' इति चोदाहरणम् ।

वा – 'ओषधे त्रायस्व', 'शृणोत ग्रावाण ' इति च सम्बोधन कार्यनियोगाभिमुखीकरणार्थम् । न चाचेत नस्याऽऽभिमुख्य संभवति । न च पशुनाशे प्रातरनु वाकश्रवणे वा प्रैषेण प्रवृत्तिरुपपद्यते इत्यानर्थक्यमर्थ विवक्षायाम् ।

अर्थविप्रतिषेधात् । ३१-६ ॥

भाष्यम्— अर्थविप्रतिषेधोऽपि भवति 'अदिति र्द्यौरदितिरन्तरिक्षम्' इति । तेन द्यौरदितिरेवान्तरिक्षमिति

को जातुचिदवधारयेत्। अनवधारयंश्च किमभिधानेनोपकुर्यात्। उच्चारणमात्रे तु नैव विरोधो भवति। तस्मादुच्चारणार्था मन्त्राः। 'एको रुद्रो न द्वितीयोऽवतस्थे', 'असंख्याताः सहस्राणि ये रुद्रा अधि भूम्याम्' इति चोदाहरणम्।

व्या— पुरुषमन्तरिक्षत्वं चादितेरनेकत्वं च रुद्रस्य विप्रतिषिद्धम्। न चेष विप्रतिषिद्धोऽर्थः कर्मोपयिकः। कथं वा अदितिर्देवता अन्तरिक्षं द्यौर्वा भवेत्। न च स्तुत्यर्थतयाऽपि हेतुद्वयं परिहर्तुं शक्यम्। लक्षणे हि निमित्तोपयुक्ता स्तुत्यर्थोऽर्थवन्तो भवन्ति। मन्त्रस्तुतिस्तु अप्रयोजकत्वान्नाऽऽदर्तव्या।

स्वाध्यायवदवचनात्। ३१–७॥

भाष्यम्— स्वाध्यायकाले पूर्णिका (मीमांसान्यनिर्देशोऽयम्) अवहन्ति करोति। माणवकोऽवहन्तिमन्त्रमधीते। नासौ तेन मन्त्रेण तदभिधानमन्यस्यति अक्षरानुपूर्व्या. अवधारणे एव यतते। येन च नाम प्रयोजनं तदभ्यसितव्यम्। अतः उच्चारणमात्रादुच्चारणेन प्रयोजनमित्यवगच्छाम।

व्या— स्वाध्यायाध्ययनस्य कर्मार्थत्वात् यत्कर्मण्युपयोक्ष्यते तत् अभ्यसितव्यम्, तथा विद्वांसः सन्तो वृद्धाः शिष्यानक्षरावधारणे एव प्रवर्तयन्ति संनिहितेऽप्यर्थे, न तदवगमाभ्यासे। तेनावगम्यते तेषामुच्चारणमेवाङ्गत्वेनाभिप्रेतमिति।

अविज्ञेयात्। ३१–८॥

भाष्यम्— अपि च केषांचिन्मन्त्राणामर्थ एवार्थो वेदितुम्। यथा 'अम्यक् सा त इन्द्र ऋष्टिरस्मे' इति, 'सृण्येव जर्भरी तुर्फरीतू' इति, 'इन्द्रः सोमस्य काणुका' इति च। एते किं प्रत्याययेयुः। उच्चारणार्थे तु न दोषः। तस्मादुच्चारणार्था मन्त्रा इति।

व्या— केचित् पदार्था अनेनाविज्ञेयाः। केषाञ्चित्तु वाक्यार्थ एव न ज्ञायते। न च मन्त्रार्थः सत्तामात्रेणोपकरोति क्रियायामनवगम्यमान इति यदेवमन्त्रेन शक्यं कर्तुमुच्चारणं तदेव कार्यमित्यवधार्यते।

अनित्यसंयोगान्मन्त्रानर्थक्यम्। ३१–९॥

भाष्यम्— अनित्यसंयोगः खल्वपि भवेत् मन्त्रेणाभिधानार्थेन, यथा 'किं ते कृण्वन्ति कीकटेषु गावः' ('किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्। आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः॥' ऋग्. ३।५३।१४) इति। कीकटा नाम जनपदाः, नैचाशाखं नाम नगरम्, प्रमगन्दो राजेति। यद्यभिधानार्थाः, प्राक् प्रमगन्दात् नाय मन्त्रोऽभूतपूर्व इति गम्यते। तदेवैतदर्थशास्त्रादिभिः कारणैर्मन्त्राणामविवक्षितवचनता।

व्या— अर्थप्रकाशनपरो यस्य योऽर्थः स एव तेन प्रकाशयितव्यः। केचित् च अनित्यैरर्थैः प्रभृतिभिश्चार्थैरर्थवन्तो मन्त्रा दृश्यन्ते यथा 'किं ते कृण्वन्ति कीकटेषु गावः' इति। अयं हि इन्द्रस्य विश्वामित्रेण स्तवनेन विश्वामित्रस्याऽऽर्षं गम्यते। तेन किल कर्मार्थं धन प्रार्थयमानेनेन्द्रोऽभिहितः। त्रैलोक्याधिपते याः कीकटेषु जनपदेषु गावः स्तास्तव किं कुर्वन्ति। ते हि नास्तिकाः किं क्रतुना इति यज्ञे न किञ्चित्कर्म अनुतिष्ठन्ति। अतश्च ता नाऽऽशिरं (सोममिश्रणार्थं पयः) सोमसंस्कारार्थं दुह्रते, न घर्मं (घर्म.=तप्ते घृते पयोनिक्षेपेण निष्पन्दितं यत् द्रव्य तत्) तपन्ति न घर्मतपने पयोदानेन साधनीभवन्ति। तस्मात् प्रमगन्दस्य कीकटाधिपतेः यत् वेदः धनं तदस्माकं नैचाशाखं नगरमाभर। 'हृग्रहोर्भश्छन्दसि' (पा. ३।१।८४ वा.) इति भकारः। अथवा अस्मान् प्रति तत् विभद्धि धारय पोषय चेत्येवं तथो मघवन् रन्धया साधयास्माकमिति। छान्दस दीर्घत्वम्। यत्रैवङ्किंपक्षितं तथा सति अविनदर्थाभिधानात् वेदस्य कृतिमत्वेनाप्रामाण्यं प्रसज्यते। न चान्यो मन्त्रार्थः शक्यते वक्तुमप्रतीतेः। अतोऽर्थवदध्यावनाद्याक्षरोच्चारण फलदायकमीश्वमिति।

अविशिष्टस्तु वाक्यार्थः। ३२॥

भाष्यम्— अविशिष्टस्तु लोके प्रयुज्यमानानां वेदे च पदानामर्थः। स यथैव लोके विवक्षितस्तथैव वेदेऽपि भवितुमर्हति। नैवम्। लोके तैरर्थैरनुद्धैः प्रत्यवहारः। इह देवतामिरन्यत्रामिश्रेस्त्र्याचेतनैः संलापे न कश्चि-

भिधानीम्' इति । लिङ्गादर्शनाभावे शब्दात्तु विशेषे अश्वाभिधान्यामिति । सति च वाक्ये लिङ्गं विनियोजकम् । तच्चास्य प्रकरणाम्नानानुमितं वाक्यं नास्ति । कुतः ? एतेन मन्त्रेणाऽऽदानं कुर्यादिति यस्मिन् सति रशनामात्रे लिङ्गात्प्राप्नोति । अश्वाभिधान्या तु प्रत्यक्षमेव वचनम् । अस्मिन् सति तदानुमानिकं नास्ति । तेन गर्दभरशनाया न प्राप्तिरेवेति ।

वा— यावद्धि मन्त्राम्नानमनन्यप्रयोजनं प्रकरणे च व्यवहारार्थदर्शनप्रवृत्तिसिद्धयर्थं कल्प्यते तावदेव वैदिकं भवति । नैराकाङ्क्ष्योपदेशात्तु कल्पितमपि पौरुषेयत्वादप्रमाणं स्यात् ।

न च श्रुतिमकल्पयित्वा लिङ्गादेः स्वातन्त्र्येण प्रामाण्यमिति वक्ष्यते ( तृतीये अध्याये ) । तदेतदाह 'सति च वाक्ये लिङ्गं विनियोजकं तच्चास्य नास्ति' इति । यदैव हि प्रकरणात् अनेन मन्त्रेण , रशनां वा गृह्णीयादिति कल्पयितुमिष्यते तदैवाश्वाभिधानीमित्यनेनाऽपहार्ये मन्त्रस्य । यदपि "नैव मन्त्रः 'इत्यादत्ते' इति, कथं तर्हि 'इत्यश्वाभिधानीम्'" इति । तत्कारकसम्बन्धाभावाभिप्रायेण तत् सामान्याभिप्रायेण द्रष्टव्यम् । तस्मात् आदानमात्रे विधीयते । किं तर्हि ? अश्वाभिधानीविशिष्टे । अथ वा क्रमतः पश्चात्तनवाक्यसम्बन्ध उपन्यस्यते । सर्वथा दर्शनान्तरं नास्ति । यदि हि यदेव मन्त्रवचनादप्राप्नुयात्तदेव प्रत्यक्षवचनेनोच्यते ततो वयमुपालभ्येमहि । मन्त्रे गमनासिद्धिविधिरेवायं भवेत इति न शक्यं परिकल्पयेति । यत्नेनैवमभिधानाद्दोषः । सर्वत्र हि परिसंख्याभ्यन्तरेण विना न श्रुत्या परिसंख्या नियमो वोच्यते । विधिरेव नैरन्तर्यात्तस्य फलेनैव व्यपदेशः । कस्तर्हि विधिनियमपरिसंख्यानां भेदः ? उच्यते । ' विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते ॥ ' विधिरेव हि केनचिद्विशेषेण भिद्यते । तत्र योऽत्यन्तमप्राप्तो न च प्राप्स्यति प्राग्वचनादित्यवगम्यते तत्र नियोगः शुद्ध एव विधिः, यथा 'व्रीहीन्प्रोक्षति' इति । यत्र तु प्राग्वचनात्पाक्षिकी प्राप्तिः समाप्यते तत्राप्राप्तपक्षपूरणार्थो विधिः प्रवर्तते स नियमविधिरित्युच्यते यथा ' व्रीहीनवहन्ति ' इति । तण्डुलनिष्पत्त्यर्थाक्षेपादेव तत्सिद्धेर्न तत्प्राप्तिमात्रं विधेः फलम् । किं तर्हि ? अप्राप्तांशपूरणम् । तदप्राप्तिपक्षे च तण्डुलैरुपायान्तराण्याक्षिप्येरन्, पूरणे तु सति या तेषां निवृत्तिरसावर्थात्, न वाक्यात् । न च तद्द्वारेण नियमः । परिसंख्या हि तथा स्यात् । प्रत्यासन्ना चावहन्तिनियतता मुत्सृज्य नान्यनिवृत्तिफलकल्पनावसरः । तत्प्रसक्तिद्वारा ह्यवहन्तेः अनियतिर्मा भूदिति नियमान्तर्गतैवार्थान्निवृत्तिर्गम्यते । न च प्राप्ते सति विधिरयं प्रवृत्तो येनान्यनिवृत्त्यर्थता कल्प्येत । प्रागेव तु वर्तमाने नार्थस्य प्रापकशक्तिनिरोधात्प्राप्तिः कृता, सा चार्थलभ्येति न तथैव व्यपदिश्यते । यः पुनः प्राङ्नियोगात्तत्र चान्यत्र च प्राप्नुयादिति संभाव्यते यत्र वा यथान्यत्र तु परिसंख्या यथा अत्रोदाहृते यथा च शशमेधीये पञ्चमे पदे । अत्रापि च न प्राप्ते यत्नेन प्रवर्तने प्रापकस्य ह्याम्नानानुमितत्वात् । कथं तर्हि ? यद्येतद्वाक्यं नाभविष्यत्तत्र एव प्राप्स्यदिति । सर्वस्य प्रत्यक्षस्य वाक्यस्य नानुमानिकवाक्यपरिकल्पनमात्रं फलमिष्यते । किं हि तेन पठितेन यस्यान्यतोऽप्यर्थं सिध्यति ? तद्रूपं गर्दभरशनानिवृत्तिः फलं कल्प्यते । तेनैव कल्प्यते फलाभिसन्धानात्मेन, यदि नामैतद्वाक्यं न भवेत्ततः कीदृशमनुष्ठानं स्यात् । तत्र मन्त्रप्राप्तिसामर्थ्यैकान्त्येन सिध्येदश्वाभिधानीम्, तद्वदेव तु गर्दभरशनायामपि प्रसज्येत ।

यदा त्वनेन वाक्येन प्रत्यक्षेण नैराकाङ्क्ष्यादविशेषविनियोगसमर्थवाक्यानुमानं निषिद्धं तदा येनाश्वाभिधानीमित्यश्वसिद्धिरिति तेनैवास्य वाक्यपरिकल्पनम् ।

अर्थवादो वा ॥ ३५ ॥

भाष्यम्— ' उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति ' इत्यर्थवादार्थेन पुनः श्रुतिः ' यज्ञपतिमेव तत्प्रथयति ' इति । ननु नायं मन्त्रस्य वाक्यशेषः, न च प्रथनस्य स्तुत्या प्रयोजनम् ? सत्यम् । नायं मन्त्रस्य विधिर्न संस्तवः । प्रथनमेव तत्र स्तूयते । मन्त्रः पुनः रूपादेव प्राप्त इत्यनूद्यते प्रथनं स्तोतुम् । इदं प्रथनं महत्त्वं यत्क्रियमाणमेवरूपेण मन्त्रेण क्रियते । कस्तत्र भवति गुणः ? यज्ञपतिमेव तत्प्रजया पशुभिः प्रथयति । किमेतदेवास्य

फलं भवति । नेति ब्रूम । स्तुतिः कथं भविष्यतीत्येवमुच्यते । कथमसति प्रथने प्रथयतीति शब्दः । मन्त्राभिधानात् । मन्त्रेण पुरोडाशमध्वर्युः प्रथस्व इति ब्रूते । यथैवं प्रथस्व इति ब्रूते स प्रथयति, यथा यः कुरु इति ब्रूते स कारयति ।

वा— यद्यपि प्रदेशान्तरस्थत्वान्मन्त्रविधानं न स्तूयते तथापि प्रथनविधानात्तत्प्रयोजनतया च मन्त्र वाक्यमर्थवत् । तस्य चैतद्देशेऽन्यत्रविधानयम् । ननु च पुरोडाशान्यथानुपपत्तिमात्रत्वात्प्रथनं न विधातव्यम् । नैतद्वियोगतः प्राप्नोति । इतरथा हि विषमाभिवमपि प्रथेत । विधाने तु सति तादृशं कर्तव्यं येन प्रथितं भवति । एवं च अध्वर्युकर्तृकत्वमपि सिध्यति । पठ्यमाने ह्यध्वर्युसमाख्यया लब्धा कर्तृकत्वेऽपि नियच्छति । अर्थप्राप्ते त्वसमाख्यातत्वात् नियामकं स्यात् । एतमर्थं च यद्यप्यनेकान्ततोऽर्थात् प्राप्तुवत्तथापि वाक्येनैव धारयितव्यम् । तस्मादुपपन्ना प्रथनस्तुतिः । एवमपि 'यज्ञपतिमेव तत्प्रथयति' इत्यनेन स्तुतौ सिद्धायां मन्त्रग्रहणमनर्थकम् । न । मन्त्रस्यैव स्तुत्यर्थमुपादानात्, प्रथनं कर्म म तस्य हि क्रियमाणस्य मन्त्रः साधनं भवति । तत्र च 'उरु ते यज्ञपतिः प्रथताम्' इत्येतान्यक्षराणि प्रयुज्यन्ते । तथा सति यज्ञपतिः प्रथितो भवतीति गुणो लभ्यते । 'निमित्तदेशस्य फलमिति केषाञ्चित्' । यज्ञार्थमेव तत् 'द्रव्यसंस्कारकर्मसु' ('फलश्रुतिरर्थवादः स्यात् ।' ४।३।१।१ ) इति न्यायात् । यद्यप्यत्र फलप्रत्यभिहितं स्वार्थफलं कल्प्यते तथापि ब्राह्मणे तावत्फलकीर्तनमेकान्तेन स्तावकम् । मन्त्रेऽपि तु लिङ्गविनियोगयोः न फलस्य नार्थे प्रभवति । करणविभक्तिविनियुक्तानां हि मन्त्राणां यौगान्यथानुपपत्त्या तत्साधनता युक्ता । लिङ्गानुमिता पुनः श्रुतिरवाह्यावशेन क्रियाप्रकाशनमात्रविनियोगायैव शक्यते । तेनैवञ्जातीयको मन्त्रोऽपि प्रधानफलसङ्कीर्तनात्मिका स्तुतिरेवाभ्युपगन्तव्या । 'कथमसति प्रथने' इति कस्यात्र प्रश्नः ('कस्य' इति कर्मणि षष्ठी किंविषय इत्यर्थः) किं विध्युद्देशवर्तिनः पुरोडाशप्रथनस्य, अथ अर्थवादगतस्य यज्ञपतिप्रथनस्येति । द्विधाऽपि चायुक्तम् । पुरोडाशप्रथनं तावद् विधीयमानत्वादेव न प्रष्टव्यम् । न च मन्त्राभिधानात् तस्यासित्वम् । किं तर्हि ? स्वरूपसद्भावात्, इत्युत्तरमप्यसंबद्धम् । अथ पुनरितरार्थवादन्यायेन कथमसतीति प्रश्नः, तथाप्युत्तरमसंबद्धम् । 'मन्त्रेणाध्वर्युः पुरोडाशम्' इति पुरोडाशेन सम्बध्यते न यजमानेन । तस्मात् असम्बद्ध इति केचित् । तत्पक्षपातिदिदमयुक्तम् । अस्तु तावत् पुरोडाशप्रथने । तत्र हि याज्ञिकानां केषाञ्चिदयं मन्त्रः कृत्वा प्रथनमभिमर्शने प्रयुज्यते, सोऽयं स्वसिद्धान्तेन पृच्छति— कथमसति इत्ते प्रथने प्रयुज्यमानेनानेन प्रथयतीति । तत्राभ्युपेत्यवादेन उत्तरं 'मन्त्राभिधानात्' इति । यद्यपि प्रथनं प्रथम कृतत्वादस्ति, मन्त्रेण तु भवत्स्य (यथा वर्तमानता भवति तथा) उच्यते इत्युपपन्नः शब्दार्थः । अथवा सर्वप्रयोजकव्यापाराणां प्रयोजकव्यापारपूर्वकत्वं अर्थरूपेण स्थितमिति शब्देनापि तथैव प्रवर्तितव्यम् । इह च स्तुतिविषयसिद्ध्यर्थं प्रथयति इत्येतद्विधीयते इत्युक्तम् । तत्राऽऽह, नात्र विधिं मन्यते विषयानुपपत्तेः । प्रयोजकव्यापारो हि प्रतीयमानस्तद्गोचरः स्यात् । स चानुपात्तप्रयोजकव्यापारत्वात् न प्रतीयते । तेन यथा यजेतेत्यनुक्ते यजयतीति नोच्यते तथेह प्रथेतेत्यनुक्ते प्रथयतीति न वाच्यम् । न चेह पुरोडाशः प्रथेत येन वा प्रथितव्यमित्युपादानमस्ति । तस्मिन्नसति प्रथयतीत्यनुपपन्नम् । तदुपपादयति 'मन्त्राभिधानात्' इति प्रतीकग्रहणसमन्त्रोपात्तप्रयोजकव्यापारं हि शास्त्रं प्रथयतीति विधत्ते । 'यथा प्रथस्वेति ब्रूते' इत्यनेन पुरोडाशकर्तृकां क्रियामध्वर्युः प्रेरयतीत्येतद्दर्शयति । यद्यपि च सम्भाव्यमानक्रियाणां पदार्थानामनुपादानेऽपि व्यापारशब्देन प्रयोजकव्यापारः सिध्यतीत्येतदप्युक्तं संभवति तथाऽपि स्फुटार्थविभागादुपादानपूर्वकत्वोक्ता । अथवा अस्तु यजमानप्रथने 'कथमसति' इति सर्वस्तुतीनां किञ्चिच्छद्मगतमर्थयत्वे वाऽऽलम्बनमुक्तम् । तदत्र किन्निबन्धना स्तुतिरिति । तदभिधीयते । मन्त्रोक्तमर्थमाश्रित्य स्तुतिः प्रवर्तिष्यते । 'मन्त्रेणाध्वर्युः पुरोडाशं ब्रूते' इति न पुरोडाशप्रथनोपादानाभिधानम् । किं तर्हि ? पुरोडाशं ब्रवीति, उरु ते यज्ञपतिः प्रथतामिति । प्रथस्वेत्यपीतिकरणः प्रभृत्यर्थो न शब्दपदार्थतायै । 'यथा प्रथस्वेति ब्रूते' इत्यपि तदार्थं

कल्प्यते । शुष्कतृणे दीप्तोऽग्निरिव या लक्ष्यते तत्र सहचारिणी नियमुष्टिरिव पद्मा सा तावत् त्वत्प्रसादेना स्माकमेव । येऽप्यमी पुराण जर्ठ वृद्धिरूपेण निश्चिन्ततः आप इव दीपमध्यानि भासन्ति तत्र प्रियसख्याखेऽप्यस्माकमेव । ■ एवमेवं साधारणश्च मन्त्रस्य न वेत्ति देहि । 'एकया प्रतिधापिबत्' इतीन्द्रस्यैव स्तुतिः । ('एकया प्रतिधापिबत् साकं सरांसि त्रिंशतम् । इन्द्रः सोमस्य काणुका ॥' ऋग्. ८।७७।४) । एकेन प्रयत्नेनापिबत् साक यौगपद्येन, सरांसि पात्राणि सोमस्य पूर्णानि इन्द्रः काणुका कामयमानः काणुकाशब्दस्य छान्दसो वर्णव्यत्ययः, आकारस्तु विभक्त्यादेशः, अथवा कान्तकानीदृशश्च (कान्तकानि = प्रियाणि इति दुर्गः । कान्तं प्रियं क उदकं सोम रसात्मकं येषु तानि इति सु) निरुक्तोक्ता काणुकाशब्दविकल्पा योजनीया । तदेव सर्वत्र येनचित्प्रकारेणाभियुक्तानामर्थोऽप्युपपद्यते प्रसिद्धतरार्थाभावेऽपि वेदस्य तदभ्युपगमात्सिद्धमर्थवत्त्वम् ।

वक्तृश्चानित्यसंयोगः । ४२ ॥

भाष्यम्—'परं तु श्रुतिसामान्यमात्रम्' (१।१।३१) इत्यनेति ।

व्या—परं तु श्रुतिसामान्यमात्रमिति । यजमानस्याभ्यार्थयिता इन्द्रश्च प्रार्थ्यमानः सर्वदाऽस्ति । कीकटा नाम यद्यपि जनपदास्तथापि नित्याः । अथवा सर्वेऽपि कीकटाः कृपणाः कीकटाः । प्रमगन्दः कुसीदवृत्तिः, स हि प्रभूततरमागमिष्यतीत्येवं ददाति । नीचाशाखः पण्डः तदीयं धनं नैचाशाखम् । तथ सर्वमन्यत्राप्यभूतमेव अर्थवत्प्रसिद्धेस्तदस्माकमाहरेति । शेषं गतार्थम् ।

लिङ्गोपदेशश्च तदर्थवत् । ४३ ॥

भाष्यम्—'आग्नेय्याऽऽग्नीध्रमुपतिष्ठते' इति विधानाद्विवक्षितार्थानामेव मन्त्राणां भवति लिङ्गोपदेशः । यदि तेऽप्रयोजकास्स्युः, आग्नेय्या नाग्निशब्दसंनिधानात् ।

व्या—आग्नेय्येत्यग्निना देवतया लिङ्गेन तदभिधानसामर्थ्येन वा य उपदेशः स तदर्थाहेना मन्त्रस्य द्योतयति । देवताविशिष्टो येन स्मर्यते य वार्थप्राधान्येन मन्त्रः प्रकाशयति सा तस्य देवता नाभिधानमात्रेण । एतदेवत्येऽपि मन्त्रे अनेकदेवतान्तरपदप्रयोगे सति तद्देवत्यव्यपदेशाभावात् । प्राधान्याभिधानं च नार्थपरत्वेन विनोपपद्यते ।

ऊहः । ४४ ॥

भाष्यम्—ऊहदर्शनं च विवक्षितार्थानामेव भवति । ऊहदर्शनम् 'न पिता वर्धते न माता' इति । अन्ये वर्धन्ते इति गम्यते । प्रत्यक्षं कौमारयौवनस्थाविरैर्वर्धन्ते मातादयः । शब्दो न वर्धते इति ब्रूते । का पुनः शब्दस्य वृद्धिः । यद्द्विवचनबहुवचनसंयोगः ।

व्या—ऊहदर्शनं 'न माता वर्धते' इति । अर्थस्य पुष्ट्यादिवृद्धेः प्रत्यक्षत्वात्प्रतिषेधासंभवात् 'आनर्थक्यात्तदङ्गेषु' (३।१।९।१८) इति सूत्रे विधास्यते । तत्रापि स्वीरयादिबहुवचनप्रकारादधिकार्थवाचित्वेन द्विवचनबहुवचनयोः प्रतिषेधः । स चार्थपरत्वे सर्वत्र विशेषणमात्रानुपादित्साया समाम्नायते । या चान्यपदवृद्धिमन्नानप्रतीतिरिव न । यद्यपि मातृप्रभृतीनां पार्यर्थानुगतिभेदादेव भेदविधेरनूहत्वं यद्वेषानुसक्ति तथापि न्यायावगतानुहमनीर्तनान्यायगर्ब्धिदेवपृथक्त्वभावात् मन्त्रौ विवक्षितार्थता विज्ञायते । अन्यथा तु तददृष्टमधिगमैरेव भाव्येत । तथा 'यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या' इत्यूहप्रसिद्धदर्शनम्, एवम् 'उस्राया वपायाम्' इत्येवमादीनां यथार्थमूहितानामेव आम्नानमपि विवक्षितार्थं भविष्यति । इतरथा प्राकृतपदस्थाने अभ्यूहकल्पने च अदृष्टद्वयं कल्प्येत ।

विधिशब्दाश्च । ४५ ॥

भाष्यम्—विधिशब्दाश्च विवक्षितार्थानेव मन्त्राननुवदन्ति 'शतं हिमाः शतं वर्षाणि जीव्यासमित्येतदेवाऽऽह' इति ।

व्या—विधिरेव च ब्राह्मणगिरस्तमन्त्र पर्यायैरन्यथान्याख्यानविनिर्वचनादिभिरर्थप्रकाशनपरत्वं दर्शयति । अर्थानाश्रयणे हि सर्वं तदनर्थकं स्यात् । तस्माद्विवक्षितवचना मन्त्रा इति सिद्धम् ।

अत्र—'यदि दृष्टार्थतैव स्यान्मन्त्राम्नानमनर्थकम् । मन्त्रायनादृष्टं चेत्तदुच्चारणतो वरम् ॥' अत्राभिधीयते—'यस्य दृष्टं न लभ्येत स्यात् तस्या-

दृष्टकल्पना । अनुष्ठेयस्मृतेश्चेह मन्त्रोच्चारणसमर्थ्यत् ॥ स्मरणं च प्रयोगार्थं प्रयोगाच्च फलोदय । एवं दृष्टार्थताऽभावादृष्टपरिकल्पना ॥ तस्मात्प्रकाशनेनैवं मन्त्राणामुपकारिता । उपायनियमादेव त्वदृष्टपरिकल्पनम् ॥ '

सोम— संगतिः— विधिसमभिव्याहृत-अर्थवाद-विचारानन्तरं अवसरसंगत्या तदसमभिव्याहृतमन्त्रविचारः ।

वि— ' मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः । यागेषूत पुरोडाशप्रथनादेः प्रकाशकाः ॥, ब्राह्मणेनापि तज्ज्ञानात् मन्त्रा पुण्यैकहेतवः ।, न तज्ज्ञानस्य दृष्टत्वात् दृष्ट परमदृष्टवत् ॥ '

गुरुमतेन— ' मन्त्रब्राह्मणयोर्नन्द्य कल्प्यो विनियोजने ।, न मन्त्रलिङ्गसिद्धार्थमनुवर्तीउपपद्यते ॥ '

भाट्ट— मन्त्राणां धर्माधर्मयोः प्रामाण्यमस्ति न वेति चिन्तायां न तावद्विधित्वेन प्रामाण्यम्, तस्य द्वितीये निराकरिष्यमाणत्वात् । नापि स्तावकत्वेन अर्थवादवत्, तेषां हि सन्निहितेन विधिना एकवाक्यत्वात् सुखस्वसमर्पितप्राशस्त्यान्वित –भावनाविषयकशाब्दज्ञानजनकत्वम् । मन्त्राणां तु तदभावेन एकवाक्यत्वानुपपत्तेः न तद्विधया प्रामाण्यसम्भवः । नापि प्रत्यक्षादिवत् स्वातन्त्र्येण वाक्यार्थं, पदार्थविधानोपस्थित यात् । नाप्यर्थस्मारकत्वेन प्रामाण्यम्, अनधिगतार्थबोधकत्वाभावेन तदसम्भवात् । सामर्थ्यमात्रानर्थाभावेन याथार्थ्यस्याप्यनुपपत्तेश्च । न च प्रामाण्याभावेऽपि स्मारकत्वादिना प्रयोजनवत्त्वमानाम्नी स्यात्, ध्यानानुसन्धानादिनापि स्मृतिसिद्धौ नियतमन्त्रस्मानैरर्थक्यात् । प्रयोगसमवेतार्थस्मारकेषु स्मृतिरेव स्यादिच । अतोऽधिकारस्यप्रकरणादिना अवगततत्त्वभावनाया मन्त्राणां उच्चारणमात्रं अदृष्टार्थं विधीयते । स्वाध्यायविधिश्चोच्चारणोपयोगिप्रयोगप्राप्तमन्त्रफलतयैव अध्ययनं विधत्ते इति न कश्चिद्दोष । इति प्राप्ते, अभिधीयते । दृष्टे सम्भवत्यदृष्टकल्पनाऽनुपपत्तेः प्रयोगसमवेतार्थस्मृतिरेव सम्भवता मन्त्राणां प्रयोजनम् । यद्यपि तत्तावत् कामं मन्त्रस्यादृष्ट प्रयोजनम् । सम्भवते तु तत्रापि मन्त्राः अर्थप्रकाशनार्थाः, प्रकाशन परमदृष्टार्थमिति वक्तुम् । साक्षात् तु तत्प्रकाशाभिव्यक्तिरेव दृष्टं प्रयोजनमर्थाभावेऽप्यवाहृतम् । अनूपाश्च तदृष्टार्थत्वमेवेत्यत्र विस्तरः । न खेवावता सर्वत्र अदृष्टार्थत्वम् । न च मन्त्राणां नियमेन पाठैनर्थक्यम्, तद्बलेन मन्त्रैरेव स्मर्तव्यमिति नियमकल्पनात् । तस्य चादृष्टफलकत्वेऽपि न दोषः । न चैवं सामर्थ्यादेव तत्तन्मन्त्राणां विनियोगसिद्धौ पुनस्तेषां कश्चिद्विनियोगकल्पनं व्यर्थमिति वाच्यम् । गुणपरिसंख्यानार्थकत्वेन सार्थक्यात् । तथाहि, अर्थमासे अश्वाभिधाने विकल्पेन चतुर्णां मन्त्राणां लिङ्गेन प्राप्यमाणानां प्रापकप्रमाणात् पूर्वमेव प्रवृत्तेन ' इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते ' इति वचनेन मन्त्रचतुष्टयनिरूपितविधानमात्रायां विहितायां एतद्वचनाभावेऽपि मन्त्राणां आक्षेपस्य च प्राप्तिसम्भवे एतद्वचनप्रवृत्तिफलजिज्ञासायां समुच्चयस्य च तत्त्वारूपगुणप्राप्तिरिति निर्णीयते । तथा लिङ्गादेवाभिधानप्रत्यभावसमानार्थे प्राप्यमानस्य मन्त्रस्य तत्र पूर्वप्रवृत्तेन ' इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते ' इत्यनेन वचनेन मन्त्रनिविशेषणे अश्वाभिधानत्वेन विहिते पूर्ववत् फलजिज्ञासायां गर्दभरशनानिवृत्तिरूपशेषपरिसंख्या फलम् । न च फल्ग परिसंख्यायां स्वार्थहानिः परार्थकल्पन प्राप्तबाध इति त्रैदोष्यम् । अधाभिधानीसम्बन्धरूपस्वार्थस्यैव विधेयत्वात्, अन्यनिवृत्तिरूपपरार्थस्य अर्थसिद्धत्वेन अकल्पनीयत्वात्, प्रापकप्रमाणस्याप्रवृत्ततया प्राप्तबाधाभावाच्च । अत एव यत्र प्रापकप्रमाणप्रवृत्त्युत्तरमेव परिसंख्याशास्त्रस्य प्रवृत्तिः यथा— ' पञ्च पञ्चनखा भक्ष्याः ' इत्यादौ यागत प्राप्त पञ्चनखभक्षणे पञ्चातिरिक्तपरिसंख्यापकत्वं तत्रैव तत् । यत्रापि च श्रौती परिसंख्या यथा ' नानृतं वदेत् ' इत्यादौ तत्रापि न तत् । तदेवं मन्त्राणामर्थस्मारकत्वेऽपि न कश्चिद्विनियोगवैयर्थ्यम् । न चैवमपि प्रामाण्याभावः, याथार्थ्यानुभवस्याविघातात् । सामान्यविशेषमन्त्रवाक्यार्थत्वेन तु पदार्थविधया । यथा हि शाब्दबोधं प्रति कारणीभूतज्ञानविषयत्वाच्छब्द प्रमाणमिति सर्वदर्शनमतं तथा पदार्थज्ञानस्यापि कारणत्वात् पदार्थोऽपि तथेत्यपि वक्तुं शक्यते । अतश्च मन्त्रविनियोगविधौ मन्त्राणां पदार्थत्वात् कुतः प्रामाण्यमिति । अस्तु वा प्रामाण्याभावेऽपि

प्रयोजनवत्त्वलाभप्रकारेण स्वाध्यायविध्युपपत्तेर्न कश्चिद्दोषः। प्रयोजनमर्थवादवदेव स्पष्टम्।

मण्डन— 'मन्त्रस्यार्थो विवक्षितः।'

शंकर— 'मन्त्राणां च प्रमाणता।'

* मन्त्राधिकरणम्। मन्त्राणां प्रयोजनविशेषः (मन्त्राधिकरणं वक्ष्यते)। [ अर्थवादाधिकरणं तु ] मन्त्राणामपि प्रयोजनवत्त्वात् प्रामाण्यमस्ति इत्येतावद् सिद्धम्। शा. १।२।१. * मन्त्राधिकरणे त्वर्थवाद-प्रयोजित- मन्त्रस्मारित- द्रव्यदेवतादियुक्तयागादिविषय-धात्वर्थभावनारूपधर्मप्रमितौ अर्थवादानां प्रयोजकत्वमेव मन्त्राणामपि स्मारकतया प्रामाण्यं सिध्यति। सोम. १।२।१. * मन्त्राधिकरणे 'ऊरुप्रथस्वेत्यस्य प्रयोगः' (१।२।४।४२) इत्यत्र मन्त्राणां प्रयाजनियततया नियमप्रयत्नविधिविषयत्वं प्रपञ्चितम्। कु. १।२।७।२०. * मन्त्राधिकरणे ऋङ्मन्त्रेऽपि अनुषङ्ग उक्तः। 'अग्न्यक्ता ते' (ऋग्. १।११९।३) इत्यस्यामृचि, उपरितन्यामृचि 'स्व नू न इन्द्र त रयिं दाः' इति श्रूयते तदेव अनुषङ्गेण द्रष्टव्यं इति (ना. पृ. १५७)। बाल पृ. ६०. * मन्त्राधिकरणे चेतनप्रतिपादकेषु मन्त्रेषु तत्तन्मन्त्रेणाना देवतानाम्, अचेतनप्रतिपादकेषु तदभिमानिदेवतानां शाब्दबोधः, न तु प्रयोजनम्। इति अयोजाम। कु. २।१।१५।४३. * मन्त्राधिकरणे तु अर्थप्रकाशनरूपदृष्टप्रयोजनत्वेन मन्त्राणां स्मारकतया प्रामाण्यं सिध्यति इति न्युत्पादितम्। सोम. १।२।१ * मन्त्राधिकरणे प्रथनमन्त्रस्याऽऽनर्थक्येऽपि प्रथनस्य आध्वर्यवत्वसिद्ध्यर्थं प्रथने विधिरङ्गीकृत। रत्नाकर, पृ. १४६. * मन्त्राधिकरणे मन्त्राणां अभिधानार्थत्वमुक्तम्। सु. पृ. ६८८, उच्चारणमात्रप्रयोजनत्वं च निरस्तम्। पृ. ६८९. * अनुष्ठेयार्थप्रकाशनसामर्थ्यं मन्त्राधिकरणे स्थितम्। कु. ३।२।१।१, * अर्थाभिधानसामर्थ्यद्वार संयोगात् मन्त्रेषु क्रतुशेषत्वं मन्त्राधिकरणे व्यवस्थापितम्। ३।२।१।१. * 'चत्वारि शृङ्गा' इत्यस्य तु विषुवति होतुराज्ये प्रयुक्तस्य योऽर्थः स मन्त्राधिकरणे व्याख्यातः। २।३।८।२४ पृ. २७०. * 'देवान् यामियंब्रते ददाति च' इत्यादिमन्त्राणां मच्छब्दादिना विधिशक्तिप्रतिक्षेपात् विधायकत्वं नास्ति इति विधिमन्त्राधिकरणे (२।१।६) उक्तम्। सोम. १।२।१. * नियमविधिप्रकारश्च सर्वोऽपि कौस्तुभे मन्त्राधिकरणे प्रदर्शितः। भाट्ट. ४।२।९. * मनोतास्याग्निशब्दे देवतावाचिमनोतापदसामानाधिकरण्येन लक्षणाङ्गीकरणं इत्युक्तं मन्त्राधिकरणे। कौ. १।१।६।२१, * मन्त्रेष्वपि हि अभ्युदयकारित्वं तन्नियमविधेरेव प्रमेयम्, न मन्त्राणाम्। अत एव मन्त्राणां पदार्थविषयेव प्रामाण्यं इत्युक्तं मन्त्राधिकरणे। १।३।६।१२, * यथा न नास्य वाक्यस्य ('यद्यप्यन्यदेवत्यः पशुः आग्नेय्येव मनोता कार्या') वाक्यान्तरेण ऊहनिवर्तकत्वं तस्य प्रकृतौ अन्यायनिगदत्वेन अप्रसक्तत्वात् किन्तु उत्कर्षनिवर्तकत्वमेव, तथा मन्त्राधिकरणे एव प्रपञ्चितम्। ३।३।७।१४ पृ. ९५९. * ततश्च प्रयोक्तृगतशाब्दबोधप्रधानत्वे, पूर्वपूर्वस्या ऋचः अर्थावबोधे व्यापृतचित्तस्य प्रयोक्तुः, उत्तरोत्तरस्याः ऋच स्मरणानुपपत्तिः इत्यादि मन्त्राधिकरणे अवोचाम। कु. २।१।५।१०. * मन्त्रार्थानुवादकत्वे अपि अप्रतिगतसमुदायादिनोपयुक्तत्वेन प्रामाण्योपपत्तिः मन्त्राधिकरणे उक्ता। कौ. १।२।२।३, * समीरणादिविधिष्वपि न गृहप्रथनरत्वादिविवक्षा, किन्तु तत्तद्गुणोपसर्जनीभूत-गुणाभिधानवत्त्वात्सपूर्वसामर्थ्य-विवक्षेत्युक्तं मन्त्राधिकरणे। ३।१।४।८. * 'चतुर्भिरभ्रिमादत्ते' इत्यत्र प्रथमशिष्टवाक्यानुवाद एवायं चतुर्भिः इति शब्दः मन्त्राधिकरणोक्तगुणविधित्वाभावेन पूर्वः पक्षः। सोम. १२।३।१४. * [illegible] चेय यथाध्याहारोपपत्तावपि ('स यज्ञपतिराशिषा' इत्यत्र) अध्याहृतस्य पदस्य ध्यानेनापि स्मरणोपपत्तेः, नावश्यमुच्चारणोपपत्तिः। मन्त्राधिकरणोक्तन्यायेन पठितमन्त्रेष्विव अध्याहृतमन्त्रेष्वपि प्रयोजनसमवेतार्थप्रकाशकेषु उच्चारणोपपत्तेः। कौ. २।२।१८।५०. * यदपि च कृत्स्नवाक्यस्य ('स्पृणीरूपद्धाति' इत्यस्य) अर्थवादत्वे सन्निहितविध्यन्तराभावेन अर्थवादत्वमेव न निर्वहतीति, तदपि आपाततः। 'अर्थवादो वा' इति मन्त्राधिकरणगुणसूत्ररीत्या प्राकरणिकविधिविहितस्तुतिमन्त्राणामपि मितदेवताकत्वादेव कृत्स्नवाक्यस्य स्तावकत्वोपपत्तेः।

कु १।८।१७।१९ पृ ११६ * मन्त्रगताना पदानां मन्त्राधिकरणन्यायेन प्रयोगकाले अर्थाभिधायकत्वेन विप्युपयोग. । को २।१।७।२२, * ' तत्सिद्धिजाति-गुणाश्रया० ' ( १।४।१२।२३ ) इत्येतस्यैकसूत्रत्वेऽपि मन्त्राधिकरणपूर्वपक्षसूत्रयन् ( ' तदर्थशास्त्रात्-मन्त्रा-नर्थक्यम् ' १।२।४।११ इति सूत्रवत् ) प्रत्येक प्रथमान्त-सूत्रोपन्यासो व्याख्यातोक्तार्थे न विरुध्यते । १।८।१३।२३ * मन्त्राधिकरणभाष्ये लिङ्गविनियोज्यमन्त्रप्रकाश्यस्य यजमानप्रयतनस्य पुरोडाशप्रथनफलत्व निराकृतम् । पराक्रम . ४८।१, * अर्थवादानामनयनार्थपरत्वाभावे ' विधिशब्दाश्च ' इति मन्त्राधिकरणस्थगुणसूत्र-विरोध. । कु. १।२।२।१८.

* मन्त्रानुसारेण आकाङ्क्षाभावे पदार्थस्य संकोच अयुक्त । मन्त्रो हि अनुष्ठानकाले पदार्थं प्रकाशयन् पदार्थशेष । न च शेषानुसारेण शेषिसंकोचो युक्त । पराक्रम . ४३।१, * मन्त्रानुसारेण निराकाङ्क्षस्य विधे संकोच इन्द्रपीताधिकरणे निराकृत. । ४३।१, * मन्त्रानुसारेण विधे. पर्यवसाननियम । ४३।२

* मन्त्रान्तेन कर्मादिसंनिपात । भा १२।४।१९।५१. * मन्त्रान्तेन कर्मादिसंनिपात आघारे दर्शपूर्णमासयो । १२।३।१२।२८. मीको पृ ८५८ ' आघारे मन्त्रान्तेन० ' इत्यत्र अधिकरण द्रष्टव्यम् । * मन्त्रान्तेन कर्मादिसंनिपातो वसोर्धारायामग्निचयने । १२।३।११।२६-२७. मीको. पृ ४७ ' अग्निचयने वसोर्धारायाम्० ' इत्यत्र अधिकरण द्रष्टव्यम् । * मन्त्रान्ते कर्मप्रारम्भ करणमन्त्रेषु । १२।३।१०।२७ . मीको पृ १३६४ ' करणमन्त्रेषु मन्त्रान्ते कर्मप्रारम्भ ' इत्यत्र अधिकरण द्रष्टव्यम् ।

* मन्त्रापचारे नान्यो मन्त्र प्रतिनिधीयते । न शब्दस्य प्रतिनिधि । भा. ६।३।२०।१९८ .

* मन्त्राभिधेयत्वावगति प्रसिद्धक्रियान्वयस्य ( पुरुषस्य ) प्रथम भाति, तथापि प्रसिद्धक्रियान्वयाभिधानसामर्थ्याभावात् मन्त्रस्य प्रसिद्धक्रियान्वयपदार्थाभिधायित्वाप्रतिपत्तौ श्रुतार्थवाक्यार्थानुपपत्त्या मन्त्राभिधेयस्य क्रियान्वयकल्पनारूपो विपर्यय पश्चाद्भवति । सु पृ ११०५.

* मन्त्राभेदे सत्यपि पाठभेदात् विषयान्तरम् । पाठभेदेन हि प्रयोजन कल्पयितव्यम् । वा. ३।८।७।१७.

* मन्त्रार्थः यत्रैक एव तत्र मन्त्रावृत्तिर्न्याय्या । भा ११।४।१२।०२, * मन्त्रार्थं अनुष्ठाने चोदक न मन्त्राक्षराणि । अर्थपराणि हि तानि न स्वरूपप्रधानानि । ९।३।२।६. * मन्त्रार्थान् यथाविनियोग मन्त्रविदो वर्णयन्ति । बृहती २।२।७।१४ पृ ३७०, * मन्त्रार्थस्य यत्र नानात्व तत्र मन्त्रस्य आवृत्तिर्भवति, यथा अग्नौ लोष्टन्यायः । भा. ११।४।१२।४२

* मन्त्रार्थाधिगमोपाया । अर्थ-प्रकरण-सूक्त-देवता-आर्ष-निगम-निरुक्त-व्याकरणज्ञानानि अधिगमोपाया । वा. १।२।४।४१ । अत्र सुधा- अर्थ सामर्थ्यं पदान्तरसामानाधिकरण्यादियोग्यता । प्रकरण प्रक्रम । सूक्त देवताज्ञान अन्यक्तलिङ्गायामृचि देवताज्ञानहेतुरेव अर्थज्ञानोपाय । आर्षज्ञानस्य ' अहं मनुरभव सूर्यश्च ' इत्यादौ अस्मदर्थज्ञानहेतुत्वेन अर्थज्ञानोपायत्वम् । पृ १११.

* मन्त्रार्थप्रतिपत्तिः मन्त्रप्रयोक्तुर्वा मन्त्रश्रोतुर्वेति विचार । मन्त्रभागस्य कृत्स्नस्य विवक्षितार्थत्व सिद्ध मन्त्राधिकरणे ( १।२।४।३१-४५ ) ।

अत्रेद प्रतिभाति । अस्मिन्नधिकरणे ' तदर्थशास्त्रात् ' इत्यादिसूत्रजातेन मन्त्रा अर्थप्रकाशका इत्येतावत् अवगतम् । मन्त्रार्थप्रतिपत्ति मन्त्रप्रयोक्तुर्वा मन्त्रश्रोतुर्वा इत्येतत्तु सूत्राक्षरत स्पष्ट न निर्धारितम् । तत्र अनुष्ठानहेतुभूतानुष्ठेयस्मरणार्थत्व करणमन्त्राणा वदन्तो भाष्यवार्तिकादिकृत मन्त्रप्रयोक्तुरेव मन्त्रजन्य शाब्दबोध मन्यन्ते । वयं तु वय न मृष्यामहे किन्तु श्रोतुरेव मन्यामहे, शब्दोच्चारणस्य पर प्रत्येव शाब्दबोधजनकत्वस्वाभाव्यात् । नहि स्वस्मिन्नेव शाब्दबोधाय वाक्यप्रयोग अर्थवान् भवति । वक्तु तदर्थावबोधस्य शब्दप्रयोगात् पूर्वं अवश्य भावित्वात् । नहि अबुद्धेऽर्थे वाक्यरचना युज्यते । सूत्रकारेऽपि ' अविशिष्टस्तु वाक्यार्थ ' ( १।२।४।३२ ) इति लौकिकस्य वैदिकस्य च

 मन्त्रार्थप्रतिपत्तिः

वाक्यस्य अर्थविशेषं निर्दिशेषं ब्रुवन् श्रोतुरेव मन्त्रजन्यं शाब्दबोधं अभ्युपगच्छति । अन्यथा लोके श्रोतुः शाब्दबोधः, मन्त्रेषु तु उच्चारयितुः इति वैरूप्यापत्तेः ।

किञ्च श्रोतुरेव मन्त्रतः शाब्दबोधः इत्ययमर्थः मन्त्रगतसम्बोधनपदेन स्पष्टं लभ्यते । प्रायेण हि सर्वे मन्त्राः संबोधनविषयाः । तथाहि, 'इषे त्वोर्जे त्वा' इत्ययं मन्त्रः शाखाछेदने विनियुक्तः । तत्र शाखाछेदनात् तस्याश्च संबोध्यत्वेनाचेतनत्वात् विनियोगबलाच्च 'शाखे छिनद्मि' इत्यध्याहार्यम् । शाखे इति संबोधने प्रथमा 'संबोधने च' इति व्याकरणसूत्रेण विहिता । संबोधनं ज्ञापनम् । 'इषे त्वा ऊर्जे त्वा छिनद्मि' इति शाखां प्रति ज्ञाप्योऽर्थः । मन्त्रं प्रयुञ्जानो ज्ञापयति । तज्ज्ञात्वा शाखा अनुजानाति । शाखाभिमानिनी हि तदभिमानिनी देवता अभेदेन उपचर्यते । तथा चेतनस्य तज्ज्ञापनस्य च तत्रान्वयो न विरुध्यते । 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इति बादरायणसूत्रे ( २।१।५।१ ) तद्भाष्ये च स्पष्टमेतत् । 'विष्णो हव्यं रक्षस्व' इत्यादौ तु सुस्पष्टमेतत् ।

ननु देवताविग्रहचेतनत्वादिकं नवमे निराकरिष्यते । सत्यं निराकरिष्यते शबरस्वामिना, न तु सूत्रकृता । प्रत्युत सूत्रकारस्य देवताविग्रहादिकं अभिमतं वार्त्तिकाभिमतं च इति पदार्थाधिकरणे प्रतिपादयिष्यते ।

किञ्च, स्तोत्रशस्त्रीया ऋचः देवतास्तुतिपराः स्तुत्यदेवताः प्रत्येव तद्गुणबोधिकाः । स्तुतिवाक्यानां स्तुत्यं प्रत्येव बोधकत्वस्य लोकसिद्धत्वात् । लोके हि स्तोता गद्यपद्यादिभिः स्तुत्यं स्तौति । स्तुत्यश्च तदुक्तं चमत्कारं जानानः प्रसीदति । वेदेऽपि तथा मान्यम् । न च सामानि गातुः शस्त्राणि च शंसितुः अग्निवायुसूर्यादिस्तुत्यगुणबोधं स्तोत्रीयाः शस्त्रीयाश्च ऋचः शक्नुवन्ति कर्तुम् 'अग्न आयाहि वीतये' इत्यादिसंबोधनविभक्त्यनुपपत्तेः ।

किंच, शस्त्रीयाणामृचां शंसनं विहितम् 'सूक्तमन्वाह' इति । पूर्वपूर्वस्या ऋचः उत्तरमुत्तरमर्धर्चं प्रणवान्तमुक्त्वा अविरामेण उत्तरोत्तरस्या ऋचः पूर्वपूर्वामर्धर्चमुक्त्वा विरमति इति सातत्यन्यायम् । नहि एव शंसितुः होतुः प्रत्युत अर्थावबोधः कथमपि संभवति, तत्तदवसाने तत्तदर्थावबोधकपदानुचितस्य उत्तरोत्तरस्या ऋचः सातत्येन स्फुरणासंभवात् । ततस्तुत्यदेवताया एव प्रत्युत अर्थावबोधे तु न किञ्चिद् विरुध्यते ।

किञ्च, द्वादशस्य तृतीये 'मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात् सर्वस्य वचनार्थत्वात्' ( १२।३।१०।२५ ) इत्यधिकरणे करणमन्त्रेषु मन्त्रान्तेन कर्मादिसंनिपातः सिद्धान्तितः । मन्त्रार्थस्मरणस्य प्रयोक्तृगतस्य अनुष्ठानहेतुत्वे तु आदौ मन्त्रोच्चारणं ततः अनुष्ठेयार्थस्मरणं ततः अनुष्ठानं इति क्रमः स्यात् । तत्र अनुष्ठेयार्थस्मरणेन व्यवहितत्वात् कथं मन्त्रान्तेन कर्मादिसंनिपातो घटेत । मन्त्रश्रोतृदेवताया एव मन्त्राः शाब्दबोधाभ्युपगमे तु न कश्चिद्विरोधः । न च एवं सति करणमन्त्राणां अदृष्टार्थत्वापत्तिः । देवतागतशाब्दबोधस्य मन्त्रजन्यस्य अनुष्ठानहेतुत्वाभावात् इति वाच्यम् । देवतानां शाब्दबोध आदावेव दृष्टार्थसंभवात्, तथा च मन्त्रार्थस्मरणेषु कर्मसमवेतार्थाभिधायिषु तथैव अभ्युपगन्तव्यम् । न च श्रोतृदेवतागतशाब्दबोधस्य कथं दृष्टत्वं देवतानामप्रत्यक्षत्वात् इति वाच्यम् । तर्हि लोकेऽपि श्रावकस्य परप्रत्यायकस्य दृष्टत्वानुपपत्तिः, परबुद्धेरप्रत्यक्षत्वात् । अनुमानादिना लोके परस्मिन् शाब्दबोधस्य दृष्टत्वं इति चेत्, वेदेऽपि तुल्यम्, देवतासंबोधनादिलिङ्गात् तस्य तदुपपत्तेः । 'देवानां परिषूतमसीत्याह । यद्वा इदं किंच । तद्देवानां परिषूतम् । अथो यथा वस्यसे प्रतिप्रोच्याहेदं करिष्यामीति । एवमेव तदध्वर्युः देवेभ्यः प्रतिप्रोच्य बर्हिर्दाति । आत्मनोऽहिंसायै' 'अग्नाविष्णू मा वामवक्रमिषमित्याह । अग्निः पुरस्तात् । विष्णुर्यज्ञः पश्चात् । ताभ्यामेव प्रतिप्रोच्यात्याक्रामति' 'अग्निं होतारमिह तं हुवे इति देवेभ्य एव प्रतिप्रोच्य यज्ञेन यजते' "यदाह । ब्रह्मन्नश्वं मेध्यं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति । ब्रह्म वै ब्रह्मा । ब्रह्मण एव देवेभ्यः प्रजापतये प्रतिप्रोच्य अश्वं मेध्यं बध्नाति । न देवताभ्य आवृश्च्यते । वसीयान् भवति' इत्यादिवाक्यशेषा अपि अत्र अनुगुणाः । इयांस्तु विशेषः । लोके वाक्यरचनस्य प्रयोक्तृपुरुषाधीनत्वात्

अज्ञाते चार्थे वाक्यरचनायोगात् प्रयोक्तुः अर्थज्ञानं नान्तरीयकमस्ति । न तु तत्प्रयोक्तृतात्पर्यविषयीभूतम्, परप्रत्यायनेच्छयैव वाक्यप्रयोगात् । मन्त्राणां तु अपौरुषेयत्वेन नित्यसिद्धतया तत्प्रयोक्तुरर्थज्ञानं नावश्यकम् । तथा च अव्युत्पन्नस्यापि मन्त्रप्रयोगो न विरुध्यते । नहि वक्तुरर्थज्ञानमपि श्रोतुर्वाक्यार्थबोधे प्रयोजकम् । अव्युत्पन्नपुरुष– शुकसारिकाद्युदीरित – कालिदासादिरचितपरपद्येभ्यो व्युत्पन्नानां शाब्दबोधदर्शनात् । 'देवदत्त घटमानय' इत्यत्र सम्बोधने प्रथमा । सम्बोधनं अभिमुखीकृत्य ज्ञापनम् । ज्ञानं श्रोतरि, ज्ञापनं प्रयोक्तरि । ततश्च अभिमुखीभूतदेवदत्तनिष्ठं यत् घटानयनज्ञानं तदनुकूलः प्रयोक्तृगतव्यापारो वाक्यार्थः । एवं सम्बोधनं च सम्बोध्यस्य तद्विशेषणं श्रोतॄणां प्रयोक्तुश्च सम्भाव्यमानोऽपि न सर्वेषां कार्यकारी । सम्बोध्यगतघटानयनज्ञानमेव कार्यकारि, अन्यथा 'देवदत्त' इत्यस्य वैयर्थ्यात् । एवमत्रापि ।

न च छान्दोग्यब्राह्मणे 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा' इत्युपक्रम्य 'तस्मादेतानि मन्त्रेमन्त्रे विद्यात्' इति विधानात् प्रयोक्तुरपि अर्थज्ञानमावश्यक इति वाच्यम् । नहि अत्र देवताज्ञानं वाक्यार्थज्ञानरूपं विधेयम्, व्युत्पन्नस्य मन्त्रोच्चारणादेव तत्सिद्धेः । ऋषिच्छन्दोविषये तदसम्भवाच्च । किन्तु अस्य मन्त्रस्य अग्निर्देवता, इन्द्रो देवता इत्येवं व्युत्पत्त्या पुरुषव्यापारेण देवतापरिज्ञानमात्रं ऋषिच्छन्दोज्ञानवत् विवक्षितम् । तच्च कात्यायनादिप्रणीतसर्वानुक्रमणिकादिग्रन्थतः मन्त्रार्थज्ञानाभावेऽपि सुलभमेव । प्रयोक्तुः मन्त्रार्थज्ञानस्य आवश्यकत्वे देवताज्ञानविधिवैयर्थ्यापत्तेः न प्रयोक्तुः तदावश्यकं इति प्रतीमः ।

अत एव च उपनीयमानस्य बटोः उपनीतमात्रस्य च मन्त्रविषयः सङ्गच्छते । नहि तस्य मन्त्रार्थज्ञानं कथमपि सम्भाव्यते । अस्य मन्त्रस्य इयं देवता इति एतावन्मात्रं तु कथञ्चिदपि ग्राहयितुं शक्यते । आद्रियन्ते च शिष्टाः । यथा 'गायत्र्याः विश्वामित्र ऋषिः, गायत्री छन्दः, सविता देवता' इत्यादि ।

अत एव च सर्वाङ्गोपसंहरणाय प्रवृत्तेषु कल्पसूत्रेषु क्वापि मन्त्रार्थस्मरणं अङ्गतया नोपनिबद्धम् । न च तेषु ऋषिच्छन्दोज्ञानस्यापि अनुपबन्धात् अङ्गत्वं न स्यात् इति वाच्यम् । इष्टापत्तेः । नहि कर्मकाले प्रतिमन्त्रं ऋष्यादिज्ञानं [redacted] विवक्षितम् । तादृशीयानुष्ठानेन शक्यमानत्वात् तदसम्भवात् । किन्तु बहिर्भूतं यागनिष्पत्त्युपयोग्यताविधायकं तत् ।

किञ्च सङ्कर्षकाण्डे चतुर्थस्य तृतीये 'यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेत् वषट् करिष्यन्' इति वाक्यमुदाहृत्य इतिहासपुराणमन्त्रार्थवादप्रत्यायितदेवतास्वरूपध्यानं अत्र विवक्षितं इति पूर्वपक्षयित्वा आग्नेय ऐन्द्र इत्यादौ देवताप्रतिपादकस्य अग्न्यादिशब्दस्य श्रवणात् तस्य च प्रथमोपस्थितस्य त्यागे प्रमाणाभावात्, शब्दे कार्यान्तराभावे तस्यैव अर्थे कार्यविधानात्, इह च शब्दे ध्यानसम्भवात् देवताशब्दस्यैव ध्यानं इति सिद्धान्तितम् (सङ्क. ४।३।७) । तन्न्यायेन 'मन्त्रेमन्त्रे विद्यात्' इत्यत्रापि देवताशब्दध्यानस्यैव विवक्षितत्वात् मन्त्रजन्यवाक्यार्थज्ञानरूपं तत् इति दूरापास्तम् । न च मन्त्रजन्यशाब्दबोधस्य देवतास्मरणस्य अनुष्ठेयस्मरणानुपयोगात् करणमन्त्रत्वव्यवहारोच्छेदः, 'इषे त्वा शाखामाच्छिनत्ति' इत्यादौ इतिकरणाकरणश्रवणविरोधः, 'चतुर्भिरभ्रिमादत्ते' इत्यादौ तृतीयाविरोधश्च इति वाच्यम् । प्रयोक्तुः अर्थज्ञानाभ्युपगमेऽपि तुल्यत्वात् । 'इषे त्वा' इति मन्त्रो हि साकाङ्क्षः 'शाखां छिनद्मि' इत्यध्याहारेण शाखाच्छेदनप्रकाशकः । तदध्याहारश्च 'इति शाखामाच्छिनत्ति' इति विनियोजकवाक्यबलात् । एवं च आदौ विनियोजकवाक्यत एव शाखाच्छेदने अवगते पुनः मन्त्रात् तत्स्मरणस्य अदृष्टार्थत्वापत्तेः अपरिहार्यत्वात्, एवं न मन्त्रजन्यार्थस्मरणस्य अनुष्ठेयक्रियास्वरूपनिष्पत्तौ अनुपयोगात् कथं तद्द्वारा मन्त्राणां करणत्वसम्भवः । तस्मात् अतिशयविशेषकत्वेन छेदनानुकूलो मन्त्राणां साधनतया तृतीयाश्रुत्यादेरविरोध उपपाद्यः । अन्यथा 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इत्यादौ तृतीयायाः का गतिः । 'व्यृद्धं वा एतद्यज्ञस्य यद्यजुष्केण क्रियते । इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै'

बहूनिति, सर्वे इमे मन्त्रा एकरूपे भवेयुः। उभयमपि मा भूदिति नियमः क्रियते। यदि द्वावुपस्पृशेत्, एतौ ते वायू इति ब्रूयात्। यदि बहून्, एते ते वायव इति ब्रूयात्। तस्मादेतदप्यठिङ्गमिति।

शा— मन्त्राणामिदानीमूहश्चिन्त्यते ( प्रावप्रस्तुतावशिष्टो मन्त्रोह एवेदानीं चिन्त्यते इत्यर्थः )। 'अग्नये जुष्टं निर्वपामि' इति 'व्रीहीणां मेध सुमनस्यमानः' इत्येतौ मन्त्रौ किं सौर्यादिषु नीवारादिषु च ऊहितव्यौ, उत नेति संशये 'प्रकृतौ यादृशो मन्त्रस्तोदृक्केन हि तादृशः। प्राप्यते विकृतौ, तस्मान्नोहस्तत्रावकल्पते॥' इति प्राप्ते, अभिधीयते। 'प्रकृतौ यादृशं रूपं मन्त्राणां हि नियामितम्। तादृगेवातिदेष्टव्यं विकृतौ नाविवक्षितम्॥' तस्मादूहः।

सोम— प्रथमपादे मन्त्रोहमध्ये एव अवान्तरप्रसक्तिलोमेन सामोहोनोहावप्रसक्त्या शोधोहाद सामोहविचार तत्प्रगतसंस्कारोहविचारं च परिसमाप्य इदानीं स एव मन्त्रोहः प्रस्तूयते इत्यानन्तर्यम्। प्रथमपादे प्रायेण प्रकृत्यूहो विचारितः। अत्र पादे (तृतीये) तु प्रायेण मन्त्रोहविचारः, प्रकृत्यूहस्तु अल्पकः। सूत्रार्थस्तु— प्रकृतौ यथा स्वशक्तिप्रदर्शनतया मन्त्रा उक्तास्तादृगुणैरेव मन्त्रैः अर्थानामभिधानं, कृतं तद्विकारत्वात् उत्तरकर्मणामपि तत्रो विकृतावपि तथैव अविकृतयुक्तैरेव अभिधानं कर्तव्य इति प्राप्तिं पक्षं चकारशब्देन निराचष्टे। नैतदेवम्। अर्थे प्रकारान्तरात् नैकत्वेऽर्थे यथाऽऽम्नातमन्त्रप्रकाशनसामर्थ्यात् इति।

वि—'अग्निषोमाद्यो नोह्या ऊह्या वा, नहि चोदनात्।, विकृता देवहविरादिस्थले ऊहो युक्तः॥' ( 'इन्द्राय मरुत्वते नैवारमेकादशकपालम्' इत्यादौ नीवारविषये ऊहो द्रष्टव्यः )।

भाट्ट— 'अग्नये देवयज्यायै' 'व्रीहीणां मेध' इत्यादिमन्त्रेषु समवेतार्थत्वादियुक्तिबलेन अग्निषोमादिपदानां सौर्यनीवारादिषु तदन्यतरवचनविनिवेशान्यथानुपपत्त्या स्वतः ऊहः सिद्ध एव प्रोक्षणादिवत्। तद्वदेन पदान्तरप्रक्षेपणात्मको भाक्तः ऊहः परमार्थसिद्धोऽपि व्याक्षिप्य समाधीयते। प्रकृतौ हि अग्निषोमादिपदेन अग्निषोमादीनां लक्षणयैव अपूर्वसाधनत्वेन रूपेण प्रतिपादनात् सूर्यनीवारादीनामपि तेनैव रूपेण प्रकाशनोपपत्तेः न पदान्तरप्रक्षेपो युक्तः। अत एव 'पाशान्' इति बहुवचनान्तस्य मन्त्रस्य प्रकृताविव एकपाशिकायां विकृतावपि लक्षणयैव एकत्वप्रकाशकत्वात् नोहः। नहि अग्निषोमादिपदशक्त्या अपूर्वसाधनीभूतद्रव्यदेवतादिपरम्, अपि तु लक्षणयैव 'वाक्यार्थान्तेन रूपेण ज्ञाते भवति लक्षणा' इति न्यायात्। विशेषतश्च शब्दस्यैव देवतात्वात्, तस्य चाविशेषेण लक्षणयैव प्रतीतेः सूर्यस्यापि तथैव प्रतीतिसिद्धौ नोहसिद्धिः। इति प्राप्ते, सत्यपि अपूर्वसाधनत्वस्य प्रकृतौ उद्देश्यताऽवच्छेदकत्वे अग्निषोमादिपदेन स्वशक्ति-जन्यबोधाय अपूर्वसाधनीभूतद्रव्यदेवतादि सम्मुखार्थ इत्यर्थोऽवगम्यते। अत एव शक्तिजन्यबोधोऽपि व्रीहित्वाग्नित्वादिप्रकारक एव, न तु अपूर्वसाधनत्वप्रकारकः। लिङ्गस्यापि श्रुतिविरोधेन तदवच्छिन्नस्य उद्देश्यत्वेऽपि मन्त्रान्तर्गताग्न्यादिपदे लक्षणया प्रमाणाभावात्। अत एव तद्बोधेनापि प्रोक्षणमन्त्रादिवत् विशेष्ये एव द्रव्यदेवतादौ संस्कारो जन्यते, न तु उद्देश्यताऽवच्छेदकेऽपि अपूर्वसाधनत्वे। अतश्च उपकारप्रकारभावेन द्वारस्य शक्तिजन्यबोधस्य विकृतौ अतिदेशे तद्रूपभावेन प्राप्यमाणस्य अग्न्यादिपदस्य सौर्यादौ नाभावात् तादर्थ्यार्थं पदान्तरप्रक्षेपो युक्त एव। अत एव अग्निषोमादिपदानाम् अवघातादिवत् तत्त्वेनैव रूपेण प्रकृतौ नियतकार्यजनकत्वेन विधानेऽपि तत्कार्याभावे एव तत्कार्यस्य तेन कर्तुमशक्यत्वेऽपि युक्त एव तस्य विकृतौ लोपः। तत्र तु एतावान् विशेषः, कार्याभावे लोप एव, अशक्यत्वे तु तज्जन्योपायान्तरानुष्ठानमिति।

यत्तु मूले प्रकृतावेव नावघातस्य तत्त्वेन विधेयता, अपि तु अपूर्वसाधनत्वविशेषोपायत्वेन, इतरथा आनर्थक्यापत्तेः। अतश्च अग्न्यादिपदस्य स्वरूपेण अविवक्षितत्वात् युक्त एव पदान्तरप्रक्षेप इति, तन्न, तथात्वे प्रकृतावेव व्रीहिपर्यायाणां विदलनादेश्च अनुष्ठाने वैगुण्यापत्तेः, येनैव रूपेण मुख्यकार्यं प्रति जनकता, तेनैव रूपेण नियमादृष्टं प्रत्यपि जनकत्वोचित्याच्च। यत्तु अग्निपदेन शब्दरूपदेवताप्रकाशनार्थं लक्षणावदसम्भव इति,

अत्र ब्रूमः । सत्यामपि लक्षणया येन स्वप्रयत्नवाचक-त्वसंबन्धेन प्रवृत्तो शब्दलक्षणा, न तेनैव संबन्धेन विहतो इति द्वारभेदात् युक्तः पदान्तरप्रक्षेपः । वस्तु-तस्तु, शब्दस्य देवतात्वेऽपि अपूर्वीयदेवतारूपशब्द-शब्दत्वसंबन्धेन अर्थस्यापि अपूर्वसंबन्धात् प्रत्यय-त्वोपपत्तेः न मन्त्रान्तर्गताग्न्यादिशब्दे शब्दलक्षणा, इति युक्तो व्रीहिपदे इव पदान्तरप्रक्षेपः । अत एव सत्रेनैव समाप्तौ 'गृहानि वा एतदन्नोऽश्वर यदेम-मूहति, तस्मादर्धं नोहेत्' इति प्रकृतपरोहप्रतिषेधोऽपि संगच्छते । अत एव तत्त्वार्थप्रकाशनार्थे लक्षणाप्रकाश-समर्थकाग्नरोह. एव कार्यो वैदिकत्वसामान्यात्, वद-सगने लौकिकाग्नरोह. । तथा 'अन्वेनं माता मन्य-ताम्' इत्यादिमिगुणैये मात्रादिशब्दोहप्रतिषेधोऽपि 'न माता वर्धते, न पिता' इत्यादिरूप अन्यनोहलिङ्गम् । यद्यपि च नाय प्रतिषेधविधिः न्यायप्राप्तत्वात् इत्युक्त मन्त्राधिकरणकौस्तुभे, तथापि नित्यानुवादः एवाय अन्य त्रोहलिङ्गम् । न च ऊहस्य न्यायसिद्धत्वे लिङ्गविधिर्वैत्रे 'विश्वेषा देवानामुक्षाणा वपाना मेदसोऽनुब्रूहि' 'छागस्य वपाया मेदसोऽनुब्रूहि' इत्यादिमन्त्रपाठवैयर्थ्यम्, तस्य मन्त्रप्रेषप्रायश्चित्तमासिकस्वकमन्यत्रविद्यर्थत्वात् ।

मण्डन— 'निर्बाधमन्ते मुग्मुहन स्यात् ।'

शंकर— 'मीढादिमन्त्र ऊह्य स्यात् ।'

• मन्त्रकल्प्यः प्रतिषेधो द्विविध, मन्त्रगतस्यैव नञ्नुप्रवर्तमानापदेशस्य निषेधकल्पनात् निषेधयुक्त-वाक्यान्तरकल्पनाच्च । बाल. पृ. २०, • मन्त्रकल्प्य. विधि. द्विविध., मन्त्रगताख्यातस्यैव लेट्त्वकल्पनात् विधियुक्तवाक्यान्तरकल्पनाच्च । पृ. १९.

• मन्त्रकाण्ड-विधिकाण्डयोः उपांशुग्रह. प्रथमः, अन्तर्यामग्रहो द्वितीय, ऐन्द्रवायवस्तृतीय., मैत्रावरुण-श्चतुर्थः । धारप्रदेषु पैन्द्रवायव• प्रथम• । वि. १०।५।१७.

• मन्त्रक्रमेणैव अनुष्ठानम्, तदभावे तु विधिरपि स्मारक इति तत्रैव क्रमस्य प्रामाण्यम् । तेनाग्नेयधर्माः प्रथम तत. अग्नीषोमीयस्य दर्शपूर्णमासयोः । भा. ५।१। १।१६. • मन्त्रक्रमेण ब्राह्मणक्रमो बाध्यते, यथोक्त 'मन्त्रतस्तु विरोधे स्यात्०' इति (५।१।९।१६) । अप्रातमाघ. । बाल. पृ.१४३.

• मन्त्रगतं आख्यात न विधायकम् । २।१।६। ३०—३१. 'विधिमन्त्राधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । • मन्त्रगतं लिङ्ग शास्त्रस्य बोधकम्, चोदना-गतं प्रापकम् । भा. ८।२।१६।२२. • मन्त्रगतः वक्ते ददाति इति मानशब्दः विधायको न वेति विचारे न विधायक., किन्तु अभिधानवाचकः । (विधिमन्त्राधिकर-णम्) । २।१।६।१०—११. • मन्त्रगता: अपि विधा-यका. क्वचित् इदमन्ते 'वसन्ताय कपिञ्जलानालभते' इत्यादयः । वा. २।१।६।३०. • मन्त्रगतस्यैव नञ्-नुप्रवर्तमानापदेशस्य निषेधत्वकल्पनात् मन्त्रकल्प्यः प्रतिषेध. । बाल पृ. ३०. • मन्त्रगतानां आख्यात-गताना चाख्यातशब्दाना येषा विधिप्रवृत्तिरपगच्छति तेषामभिधायकत्वम् । वा. २।१।६।३१.

• मन्त्रगताख्यातस्यैव लेट्त्वकल्पनात् मन्त्रकल्प्यः विधि यथा 'वसन्ताय कपिञ्जलानालभते' इति । बाल. पृ. १२.

• मन्त्रजन्यार्थस्मरणं कर्मणोऽङ्गम् । वि. १।२।३। १०.

• मन्त्रजपः असिपक्षे मृताविकारपक्षे लुप्यते । (भूराचिन्ता) । वि १०।४।१८.

• मन्त्रजातम् । यागानुवाक्यादिसंनिपत्योपकारि-मन्त्रव्यतिरिक्तस्य आरादुपकारिण• स्तोत्रादेः प्रकरणस्य मन्त्रजातस्य निष्प्रयोजनत्वाद्ध्यायेन ज्योतिष्टोमाद्भ्याव-र्तमान् सवनीयागप्रधानत्वात् स्तोत्राण्यपि प्रति आधारत्व-भावदेव सवनानाम्, न तु प्रधानता इति सवनीयादिसुवचता वक्तु शक्या । सु पृ. ११८०.

• मन्त्रतः वर्तनस्थ विरोधग्रहणं सवनीयपशौ मैत्रावरुणकर्तृकम् 'अग्निमद्य होतारमवृणीताय सुत्यासुती यजमान.' इति अग्नीषोमीयवत् अतिदिष्टात् सूक्तवाक-प्रैषात् तत्रिणि सवनीयाङ्गविरुद्धानां मैत्रावरुणवर्तिनाना प्रवृत्तिरेव । बाल. पृ १४८. • 'मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्तिदेशः सः' (५।१।९।१६) इत्यस्मिन्नधिकरणे मन्त्रस्य कर्मकाल-

प्रयोजकत्वात् रूपेणाभिधानेनैव कर्मप्रयोगे अनुष्ठाने सामर्थ्यात् स्मारकत्वावगते. स्मृतिकारितेन चानुष्ठानस्य स्मृतिक्रमेण क्रमस्य न्याय्यत्वात् मन्त्रब्राह्मणपाठयोः विरोधे मन्त्रपाठक्रमानुरोधेन पश्चाद्विहितस्यापि आग्नेयस्य प्रागनुष्ठानं इत्युक्ते, ननु ब्राह्मणपाठस्यापि तदेव दृष्टमनुष्ठेयस्मरणं प्रयोजनं इत्याशङ्क्य 'उत्पत्तिदेशः सः' इति सूत्रावयवेन कर्मोत्पत्तिप्रकाशको ब्राह्मणपाठः इति कल्प्यते। 'उत्पत्तिदेशः सः' इति यत् सूत्रांशं कल्पितं तत् विरोधे सति न तु अविरोधेऽपि। सु. पृ. ६६७.

सू मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्तिदेशः सः। ५।१।९।१६॥

दर्शपूर्णमासगतः अग्नीषोमीययागः पूर्वमाम्नातः आग्नेययागः पश्चादाम्नातः। होतृकाण्डे आग्नेययाज्यानुवाक्ये पूर्वमाम्नाते, अग्नीषोमीययाज्यानुवाक्ये पश्चादाम्नाते, एवं आध्वर्यवकाण्डे याजमानकाण्डे च। एवं सति ब्राह्मणपाठो वा बलीयान् मन्त्रपाठो वा इति विचारे अनियम इति पूर्वपक्षं तुशब्देन निरस्य सिद्धान्तमाह। ब्राह्मणपाठमन्त्रपाठयोर्विरोधे मन्त्रतः मन्त्रपाठानुसारेण अनुष्ठानं स्यात्। मन्त्रपाठो बलीयान्। प्रयोगरूपसामर्थ्यात् प्रयोगे रूपस्य मन्त्रस्वरूपस्य सामर्थ्यात् समवायात्। मन्त्रो हि प्रयोगे समवैति। ब्राह्मणं तु विधाय कृतार्थं सत् प्रयोगं न समवैति। तस्मात् स ब्राह्मणपाठः उत्पत्तिदेशः प्रयोगोत्पत्तेः देशः प्रदेशो भवति। अनुष्ठाने मन्त्रः संनिकृष्टः ब्राह्मणं तु विप्रकृष्टम्। तस्मात् मन्त्रपाठो ब्राह्मणपाठात् बलीयान्। तथा च मन्त्रानुसारेण आग्नेयः पूर्वं पश्चादग्नीषोमीयः इति सिद्धान्तः। के.

● "विधानं तदर्थं ब्राह्मणं स्मारयिष्यति। 'मन्त्रतस्तु विरोधे स्यात्' इत्यत्रैतद्वक्ष्यते॥" वा. २।१।६।३१ पृ ४२२.

● मन्त्रत्वं ऊहप्रवरनामधेयानामस्ति वा नास्तीति विचारे नास्तीति निर्णयः। २।१।९।३४. ● मन्त्रत्वं नास्ति ऊहादीनाम्, अध्येतृस्मरणाभावात्। वा. २।४।३।३. ● विशिष्टक्रमकपदसमूहात्मकवाक्यविशेषस्य मन्त्रत्वम्। सु. पृ. ९९. ● मन्त्रत्वेन ख्यात-विशेषाणां विधिवृत्तिर्नियमेनैवेते इति न नियमः। वा. २।१।६।३० पृ. ४२१.

● मन्त्रनियमार्थवचः। यस्य (मते) तु अदृष्टार्थता तस्य क्रमान्यत्वे तदुच्चारणजन्यादृष्टप्रमाणाभावात् क्रमान्यत्वं न युक्तं इति नियमार्थवचः। वा. १।२।४।३१-२.

● मन्त्रपदानां एतदेव दृष्टं प्रयोजनं यत् समवेतमर्थं प्रकाशयन्ति इति। भा. ९।१।११।३६.

● मन्त्रपाठो ब्राह्मणपाठात् प्रबलः, यथा आग्नेयाग्नीषोमयोः क्रमे। ५।१।९।१६. ● मन्त्रपाठात् मन्त्रलिङ्गोपोद्बलितब्राह्मणपाठो बलवान्। संकर्ष. ४।२।६.

● मन्त्रपाठानन्तरमेव पदार्थानुष्ठानम्। १२।३।१०।२५.

● मन्त्रपौरुषेयवाक्ययोः तुल्ये अर्थाभिधानसामर्थ्ये मन्त्रवाक्यनियमः अदृष्टार्थं। अथवा अनेकध्यानादिस्मरणोपायप्रसङ्गे वाक्यनियमात्। (अदृष्टार्थता। इदं पूर्वपक्षे)। वा. १।२।४।३१-३.

● मन्त्रप्रकाश्यः देवतारूपः अर्थः। सु. पृ ६४१. ● लिङ्गविनियोज्यमन्त्रप्रकाश्यस्य यागदिप्रयतनस्य पुरोडाशश्रपणरूपकार्यं विरुद्धं मन्त्राधिकरणभाष्ये। परास्मः. ४८।१.

● मन्त्रप्रकाश्यत्वम्। 'येषां पृथगनुष्ठानमर्थाधितं प्रतीयते। तेषां मन्त्रप्रकाश्यत्वं नानुनिष्पादिनां भवेत्॥' वा. ३।२।१०।२७.

● मन्त्रप्रकाश्यफलम्। फलमन्त्रप्रकाश्यफलस्य याजमानत्वम्। ३।८।१३।२६-२८.

● मन्त्रप्रतिपाद्यस्य प्रजापत्यादेरेव दैवतत्वम्। 'प्रजापते न त्वदेतान्यन्य इति जुहुयात्' इत्यादौ। संकर्ष. २।४।२.

● मन्त्रप्रयोगः कर्मकालीनोऽनध्यायादावपि। १२।३।७।१८-१९. मीको. पृ. ३६४. 'अनध्यायादावपि कर्मकालीनमन्त्रप्रयोग.' इत्यत्र अधिकरणं द्रष्टव्यम्। ● अर्थाभिधानार्थश्च मन्त्रप्रयोगः। भा. ८।३।६।१६.

● मन्त्रप्रयोगकाले शक्तिज्ञानापेक्षायामपि विनियोगकाले अनपेक्षणम्। सु पृ. १२११.

* मन्त्रप्रामाण्यम् । मन्त्राणां पदार्थत्वेन प्रामाण्यं वाक्यार्थे पदार्थानां प्रामाण्याभ्युपगमात् इति पार्थसारथिमिश्राः शास्त्रदीपिकायामाहुः । तथाहि तर्कपादे ' उत्पत्तौ वाऽवचनाः स्युः ' इति सूत्रे ( १।१।७।२४ ) भाष्ये ' अनाभिधीयते, यत्राप्यस्ति मूलान्तरं न नः । पदार्थानां तु मूलत्वमिष्टं तद्भावनावतः ॥ ' इति वाक्यार्थप्रतीतौ पदार्थानां करणत्वमुक्तम् । दर्शपूर्णमासादिप्रयोगविधिषु श्रुतिलिङ्गादिविनियोज्या मन्त्राः पदार्थत्वेन प्रविष्टाः वाक्यैकवाक्यतया इति मन्त्रविशिष्टा दर्शपूर्णमासादिभावना विदधतो महावाक्यस्य दर्शपूर्णमासादिप्रयोगविधेः महावाक्यार्थे पदार्थभूता मन्त्राः प्रमाणभावं लभन्ते इति । गुरुचरणास्तु एवं सति नीलादिवत् पदार्थविधयैव एषां प्रामाण्यं स्यात्, न शब्दविधया इति दूषयित्वा स्मृतिवत् याथार्थ्यलक्षणमेव एषां प्रामाण्यं इत्याहुः । भट्टसोमेश्वरस्तु अनधिगतार्थगन्तृत्वमप्याह । ' प्रयोगिस्मृतिनिष्पत्त्यै मन्त्राणां यद्यतेऽन्यत् । देवताकल्पनं यच्च मानं तस्यापि वेदि यः ॥ मन्त्रवर्णाच्च यत्रेतु पूर्वपाठं न दिष्यते । ये देवीत्यादयः ...मन्त्राणां तारतम्यता ॥ करणानां तथा (नामा-) दिविशेषेऽप्यज्ञातज्ञापकत्वं यत् । स्वामिनस्तु क्रियार्थस्य ... च गम्यते ॥ मन्त्रकर्मानुरोधेन ब्राह्मणक्रमबाधनम् । ब्राह्मणस्य निश्चयो यत्र क्रमारूढा मन्त्रगाः ॥ तदर्थपरतायाः स्यात् सर्वं नैवान्यथा भवेत् । सर्वसाधारणत्वेन विचारस्य प्रयोजनम् ॥ कर्मकाले तु उपेतो मन्त्रार्थोऽर्थपरस्तत । इषे त्वादिषु चोद्यार्थं छिनद्मीत्यादिपूर्तये ॥ असावित्यादिशब्दस्य स्थाने यष्टुर्नाम च । सिद्धान्ते मन्त्रलोपस्य प्रत्याम्नानं इष्यते ॥ यथाम्नातप्रयोगस्तु पौरुषेऽर्थविपर्यये । यदि त्वर्थपरत्वेऽपि नैतावत् स्यात् प्रयोजनम् ॥ ततो धर्मप्रमाणत्वं मन्त्राणां नैव सिध्यति । स्तवनादिस्वरूपस्य प्रकाशत्वे हि धर्मता ॥ समीहिताङ्गतामाकाङ्क्ष कथंचित् प्रतीयते ॥ अपूर्वसाधनत्वेन यत्राप्येतत् प्रसाध्यते । विधिप्राप्तानुवादत्वाच्च तथापि प्रमाणता ॥ अपूर्वसाधनत्वाच्च स्तवनादौ समीहिते । शास्त्रतोऽन्यतोऽपि मन्त्रः प्रामाण्यमश्नुते ॥ अभुतद्रव्ययागादिकल्पनाच्च प्रमाणता । ( स्फुटेनार्थपरत्वे स्यादिति सर्वमभ्युच्चन् ॥ ) ' इति । ( न्यायसुधायां इमे श्लोका. पृ. ९७–९८ ) ।

तत्रापि गुरुचरणोक्ते याथार्थ्यलक्षणे प्रामाण्ये सोमेश्वरोक्ते च सर्वमन्त्रसाधारणे मन्त्रार्थानुसंधानविषये प्रामाण्ये जपमन्त्रेषु अव्याप्तिरूपो दोषोऽस्त्येव । अविवक्षितार्थकमुच्चारणमात्रं एव हि जपः । तदुक्तं द्वादशे ( १२।४।१ अधिकरणारम्भे शास्त्रदीपिकायां ) ' यत्र सन्तमपि अर्थं अविवक्षित्वा उच्चारणमात्रं अदृष्टार्थं क्रियते यथा वैष्णवीमृचमनूच्येति स जपः ' इति ( शास्त्रदीपिकायां तु ' यत्र सन्तमपि अर्थप्रत्ययं अविवक्षित्वा उच्चारणमात्रं अदृष्टाय क्रियते ' वैष्णवीमनूच्य वाग् यन्तव्या' इत्यादौ स जपः.' इति अक्षरपरिपाटी ) । ' सन्तमपि ' इति अपिशब्दात् क्वचिदर्थाभावोऽपि प्रतीयते । ततश्च असतः कुतो याथार्थ्यं कुतो वा अनुसंधानम् इति केचित् । तत्र । जपमन्त्राणामपि ' सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचःस्तोमे पारिप्लवं शंसति ' इति गुणगुणिसंबन्धकीर्तनात्मके वाक्ये विनियोगात् गुणगुणिसंबन्धरूपेऽर्थे तात्पर्यमस्त्येव । तेन तेषां मन्त्रार्थानुसंधानविषये प्रामाण्यं समवायेव । याथार्थ्यं तु तत्रापि अव्याहतमेव ।

ननु तत्रापि लक्षणया याथार्थ्यं वाच्यमेव । अत एव अर्थवादाधिकरणे ' धूम एवाग्नेर्दिवा ददृशे ' इत्यादिषु अयथार्थेषु ' गुणवादस्तु ' इत्युपक्रम्य ' दूरभूयस्त्वात् ' इत्यादिसूत्रैः उपचारादेव याथार्थ्यमुक्तम्, इति चेत्, न । तेषूदाहरणेषु स्वभावानेन तदुक्तम्, न तु अयं नियमः । अस्ततोऽपि गुणेन असतोऽपि गुणिनः स्तुतिसंबन्धमात्रत्वसंभवात् । अत एव अर्थवादाधिकरणे यत्र ' प्रजापतिरात्मनो वपामुदखिदत् ' इत्यत्र महामूलविपर्ययत्वेन भाष्योक्ता व्याख्या ' एव तु ( किन्तु ) स्तुतित्वमेव हीयते ' इति दूषयित्वा अर्थवादादिमूलिका सृष्टिप्रत्ययप्रतीतिमात्रेण असतोऽपि प्रमाणत्वं. असतोऽपि गुणेन स्तुतिरङ्गीकृता ( वार्तिके ), तस्मात् जपमन्त्रेषु याथार्थ्यं अव्याहतमेव, मन्त्रार्थानुसंधानविषयं तु प्रामाण्यं समयति इति तदेव युक्तं इति सिद्धम् ।

ननु एवमपि साममन्त्राणां कथं शब्दविधया प्रामाण्यं इति चेत् । उच्यते । नैषामशब्दत्वयामपि शब्दाभिव्यञ्जकत्वेन शब्दानुग्राहकत्वात् शाब्दप्रमाजनकत्वमन्यन्तर्गतत्वेन शब्दप्रमाणान्तर्भावात् । सा च इयमपि अनृक्केषु प्रज्ञापनेद्वैदयादिषु विधा न सम्भवति । अनस्तान्यपि व्याप्नोति इति ईदृश पदार्थविधया प्रामाण्यमित्युक्तम् । वाल. पृ. ७०–७२

● मन्त्रब्राह्मणयोः । 'गौणता यत्र नाम स्यात् क्वचिद् ब्राह्मणमन्त्रयोः । तत्रानुवादरूपत्वात् मन्त्राणां गौणतेष्यते ॥' अथवर्त्मापि (यत्र) ब्राह्मणस्य मन्त्रस्य वा गौणत्वम्, तत्र ब्राह्मणस्य अत्यन्तप्राप्तविधित्वात् प्रयमप्रवृत्तेश्च अनन्यप्रमाणके अर्थे गौणत्वमयुक्तम् । 'मन्त्रस्य तु ब्राह्मणचोदितार्थप्रकाशनात् तत्परत्वमिष्यते । विरोधिनि स्वार्थमतीत्य मुख्य गुणो हि गौणार्थनिमित्तभावः ॥' वा. १।२।२।२ पृ ७५३. ● मन्त्रब्राह्मणयोः दीक्षोत्तरमेव वचनब्राह्मणं उपरुद्ध्य. पूर्वमेव अभिधेयः, इति प्राप्ते, 'अहरहमि चेद्ब्राह्मणान्तरहश्भवं समस्येत्' इत्यनयोरुक्तयोः एकाहमिथमात्रकरूपसमासनिपातनात् उत्तरदिने एवाभिधेयत्वः । संकर्ष. २।१।२७. ● मन्त्रब्राह्मणयोर्विरोधे अन्यतरस्य यत्र गौणता आश्रयणीया आपद्यते तत्र मन्त्राणां गौणता युक्ता मन्त्रस्य लिङ्गरूपत्वात् ब्राह्मणस्य च श्रुतिरूपत्वात् । 'मैत्रावरुणः प्रेष्यति चानु चाह' इति ब्राह्मणस्य गौणत्वमेव 'प्रशास्तः' इतिमन्त्रलिङ्गेन बाधोऽभ्युपगतः । सु. पृ १०९०

● मन्त्रब्राह्मणात्मका वेदाः । वा. २।१।१।१ पृ. ८०१.

● मन्त्रभूयस्त्वन्यायः (संकर्ष. १।२।४) । इष्टा स्तनेऽपि मन्त्रभूयस्त्वन्यायेन एकार्थत्वात् विकल्पप्रमाणः । (इदं पूर्वपक्षे) । संकर्ष. २।१।२६. ● षष्ठी अनूयाजेषु एकादश्यैषा मैत्रावरुणकर्तृकाः । अध्वर्युः 'देवान् यज' इति प्रथमानूयाजे एव बहून् ब्रूयात् । प्रशास्ता तु प्रथमानूयाजमारभ्य प्रैषाननुद्रूयात् । अन्ये मन्त्रभूयस्त्वन्यायेन विकल्पेरन् इति पूर्वपक्षः । २।३।८.

● मन्त्रभेदाभेदपूर्वकत्वं अदृष्टप्रयोजनभेदाभेदयोः । सु पृ. ७०५.

● मन्त्रस्वरूपं त्रिविधत्व चेति द्विविधं अवान्तरवाक्यम । वाल. पृ. ९.

■ मन्त्रलक्षणम् ॥

तच्चोदकेषु मन्त्राख्या । २।१।७।३२॥

भाष्यम्— मन्त्रगतो भावशब्दो विधायको नेति परीक्षितम् । कोऽयं मन्त्रो नामेति ? उच्यते । अथाते मन्त्रे वक्ष्ये भावशब्द. कथं विचारित इति । इदमर्थोऽधिकरण पूर्वं द्रष्टव्यम् । किंलक्षणो मन्त्र इति । तच्चोदकेषु मन्त्राख्या । अभिधानस्य चोदकेषु एवंजातीयकेषु अभियुक्ता उपदिशन्ति मन्त्रानधीमहे, मन्त्रानध्यापयाम', मन्त्रा वर्तन्ते इति ।

प्रायिकमिदं लक्षणम् । अनभिधायका अपि केचिन्मन्त्रा इत्युच्यन्ते, यथा 'वसन्ताय कपिञ्जलानालभते' इति । न शक्यं पृथक्त्वेन तत्र तत्र कथयितुमिति लक्षणमुक्तम् । 'ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥' उदाहरणम्, 'मेषोऽसि' इत्येवमादयोऽस्यन्ताः । 'इषे त्वा' इत्येवमादयस्त्वान्ताः । 'आयुर्दा अग्ने' इत्याशी । 'अग्निर्मूर्धा' इति स्तुतिः । सङ्ख्या 'एको मम' इति । प्रलपितम् 'अक्षी ते इन्द्र पिङ्गले कुलेरिव' इति । परिदेवनम् 'अम्बे अम्बिके' इति । प्रैषः 'अग्नीदग्नीन्' इति । अन्वेषणम् 'कोऽसि कतमोऽसि' इति । पृच्छम् 'पृच्छामि त्वा' इति । आख्यानम् 'इयं वेदिः' इति । अनुषङ्ग. 'अच्छिद्रेण पवित्रेण' इति । प्रयोग श्रैष्यं चानु स्वर्ग च । सामर्थ्यमभिधानम् । तस्मिन्नुदाहरणे लोकाहापत्यैवानाऽऽख्यातन् । एतदपि प्रायिकमेव । असमन्ता अपि च मन्त्रा भवन्ति 'ईन्द्र आशि वन्त्रस्य वाजिन्' इति । त्वामन्त्याश्च 'तत्त्वा यामि' इति । आशीर्वादमपि 'सोऽकामयत प्रजाः सृजेय' इति । स्तुतिरपि 'वायुर्वै क्षेपिष्ठा देवता' इति । प्रलाप. 'न चैतद्विद्मो यदि ब्राह्मणा वा स्मोऽब्राह्मणाः स्मो वा' इति । परिदेवनम् 'ये मामयुक्त ते मा प्रयमुच्यन्त' इति । प्रैष. 'अनुतः सोममाहर' इति ।

* **मन्त्रलिङ्गानि** उत्तमामन्त्रणास्यन्तत्वान्तरूपादीनि । उत्तमपुरुषः ' अग्नये जुष्टं निर्वपामि ' इति । आमन्त्रणम् ' अग्ने यशस्विन् यशसे समर्पय ' इति । असि-अन्तम् ' ऊर्वी चासि वस्वी चासि ' इति । त्वान्तम् ' इषे त्वा ' ' ऊर्जे त्वा ' । आदिशब्देन आशीः ( ' आयुराशास्ते सुप्रजास्त्वमाशास्ते ' इति ) । देवताप्रतिपादनम् ( ' अग्निर्नः पातु कृत्तिकाः ' इति ) । वि. १।४।१. * मन्त्रलिङ्गेन ब्राह्मणवाक्यस्य न बाधः । कौ. ३।३।७।१४ पृ ३५९.

* **मन्त्रलिङ्गाधिकरणम्** । मीको. पृ. ३१०१ ' मन्त्राधिकरणम् ' इत्यत्र द्रष्टव्यम् ।

* **मन्त्रलिङ्गानुसारेण** निरपाकृतस्य विधेः सङ्कोचः निराकृतः इन्द्रपीताधिकरणे । पराक्रमः. ४३।१.

* **मन्त्रलिङ्गोपोद्बलितब्राह्मणपाठः** मन्त्रपाठात् बलवान् । संकर्ष ४।२।६.

* **मन्त्रवर्णः** चतुर्थ्या बाध्यते देवताविधौ । यथा ' यवमये च प्रजापतये च चरुं जुहोति ' इति चतुर्थ्या मैत्रस्य अग्निदेवत्यत्वप्रापिकया ' अग्निर्ज्योतिः ' इति मन्त्रवर्णः । बाल. पृ. १४४, * मन्त्रवर्णः तद्धितेन बाध्यते देवताविधौ । यथा ' पात्नीवतं गृह्णाति ' इति तद्धितेन विधेयस्य पत्नीवतो देवत्वस्य बोधयता ' अग्नाइ पत्नीवन् ' इति आध्वर्यवमन्त्रवर्णः । पृ. १४४, * मन्त्रवर्णेन देवताविधिः अपूर्वविधिः । पृ. २२, * मन्त्रवर्णेन द्वितीया बाध्यते । यथा उपांशुयाजे अग्नीषोमीययाज्यामन्त्रवर्णेन ' वायवन्ताम्यस्यै नौ ' इति द्वितीया । पृ. १४८. * ' तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते । देवतासङ्गतिस्तत्र दुर्बलं तु परं परम् ॥ ' वा. २।२।९।२३. * मन्त्रवर्णात् उपांशुयाजस्य देवतावत्त्वात् स्वतन्त्रोदनत्वम् । टुप्. ८।१।३।५. * न च मन्त्रवर्णस्य ( ' छागस्य वपाया मेदसोऽनुब्रूहि ' इत्यस्य ) अत्यन्तानिर्ज्ञातप्रापणसामर्थ्यं पशुचोदनाविहितस्य तु छागदानपरमात्मस्यपुष्यते । वा. ३।१।६। १८ पृ. ५१६.

* **मन्त्रवाचिना** ' धुवैवस्थितिश्च ' इत्युदाहृतन्दस्य । ७।३।१४।३५-३६.

* **मन्त्रविकल्पः** यथा, उपांशुयाजादौ वैष्णवादियाज्यानुवाक्यानाम् । बाल. पृ. १६२.

* **मन्त्रसमाम्नाये** मन्त्राः त्रैस्वर्येण पठिताः । कर्मप्रयोगे न तादृशा एव प्रयोक्तव्याः न ब्राह्मणगतभाषिकस्वरेण । ( भाषास्वराधिकरणम् ) । १२।३।८।२०-२२.

* मन्थः महापितृयज्ञे ' अभिवान्यायै मन्थे दुग्धम् ' इति । तस्य अपवादुत्तर पेषणं प्राप्नोति । तत्र धर्मा न भवन्ति इति पूर्वपक्षः । भवन्तीति सिद्धान्तः । ( दुग्धमिश्राः सक्तवो मन्थाः । धानापिष्टानि सक्तवः । भर्जिता यवा धाना । टुप्टिप्पणी. ) । टुप्. १०।२।१३।३४.

* मन्थी ग्रहः ज्योतिष्टोमे प्रातःसवने गृह्यते । वि. २।३।१.

* ' मन्थ्यग्रान् गृह्णीयात् अभिचर्यमाणस्य ' ज्योतिष्टोमे । भा. १०।५।१९।५७.

* मन्थिग्रहस्य आदितः प्रतिकर्षः कामनयोगे । भा. १०।५।१९।६७-६९, * च अन्तर्यामादूर्ध्वं ऐन्द्रवायवात् प्राक् । १०।५।२०।७०-७२, ग्रहणस्य प्रतिकर्षे सादनस्यापि प्रतिकर्षः । १०।५।२१।७३-७४, प्रदानस्य तु न प्रतिकर्षः । १०।५।२२।७५-७६ .

* मन्दधियामपि नोपदेशः क्रियमाणः फलवान् भवति । अपि च अनिदपेक्ष्य सर्वे मन्दधियः । भा १०।४।२४।४९.

* **मन्दविषन्यायः** । इमा शङ्का ( शाक्यादिकृतानां प्रामाण्याशङ्का ) मन्दविषन्यायेन निराकरोति ' विरोधे त्वनपेक्षं स्यात् ' इति । कु. १।३।३।४ पृ. ५५. * मन्दविषन्यायः । यत्र भुक्तव्रतन्चर्याधारिफलेष्वपि शास्त्रस्य महाविषयत्वाभावे स्वर्गफलकल्पना, तत्र वचोदकिक आयुरादिकम् आनुषङ्गिकं तत्र किं कामनानिभ्रत इति शङ्का मन्दविषन्यायेन शिष्यहितार्थं परिहृतं सूत्रम् ( ' काम्ये कर्मणि० ' इति ) । भाट्ट. ४।३।७.

* मन्दसदनाप्रतिनिने मुख्यस्य च समानविधित्वम् । ३।६।१५।४०.

𝕏 ' **मन्दायन्ते** न खलु सुहृदामभ्युपेतार्थकृत्याः ' इति न्यायः । आन्वयः—सुहृदां मित्राणां

-ये अभ्युपेतार्थकृत्याः अङ्गीकृतपरकार्यकरणदृढप्रतिज्ञाः सत्पुरुषास्ते न मन्दायन्ते नाऽऽलस्यं कुर्वन्ति इति। साहस्री. १७६.

● मन्द्रः स्वरः प्रायणीयायाम्, स च प्रायणीयाप्रयुक्त एव न परमापूर्वप्रयुक्तः ज्योतिष्टोमे। भा. ९।१।२।२-३ वर्णकं २. ● 'मन्द्रं प्रातःसवने' ज्योतिष्टोमे। सु. पृ. ११८९. ● 'मन्द्र प्रायणीयायाम्' ज्योतिष्टोमे। वा. ३।३।२।१ पृ. ८१७. ● 'मन्द्राऽभिभूतिः केतुर्यज्ञानाम्' इत्यारभ्य 'भक्षयामि' इत्यन्तो भाग एको मन्त्रः, स च भक्षणे विनियुज्यते इति सिद्धान्तः। पूर्वपक्षस्तु 'मन्द्राऽभिभूतिः केतुर्यज्ञाना वाग्जुषाणा सोमस्य तृप्यतु' इति तृप्तिप्रकाशकः पृथक्, 'वसुमद्गणस्य सोम देव ... उपहूतस्योपहूतो भक्षयामि' इति भक्षणप्रकाशकः पृथक् वर्तन्त इति। ३।२।१०।२७. मीको. पृ. १५९८ 'गुणाभिधानाधिकरणम्' अत्र द्रष्टव्यम्। ● 'मन्द्रया आज्यभागान्तम्' दर्शपूर्णमासयोः। वा. ३।३।२।९ पृ. ८११.

● मन्द्रादिः भक्षयामन्त्रः तृप्तिविशिष्टभक्षप्रकाशनार्थः एको मन्त्रः। गुणाभिधानाधिकरणम्। ३।२।१०।२७.

● मन्द्रतरः स्वरः आतिथ्यायाम्, स चाऽऽतिथ्याप्रयुक्तो न परमापूर्वप्रयुक्तः ज्योतिष्टोमे। भा. ९।१।२।२-३ वर्णक २. ● 'मन्द्रतरमातिथ्यायाम्' ज्योतिष्टोमे। वा. ३।३।२।९ पृ. ८१९.

● मन्द्रत्वादिधर्मस्य 'माध्यन्दिने स्वरम् मन्द्रं मनसि स्मरन्' इत्यक्षरशिक्षया स्वरनिष्ठत्वमुक्तम्। तेन न वर्णनिष्ठोऽयं धर्मः। मणि. पृ. १६९

● मन्यतेः उत्तमपुरुषैकवचनस्य प्रहासे अर्थः। अतादृशत्वेन जानतः तादृशत्वकथनं प्रहासः। प्रहासादिकं व्यञ्जनागम्यं इति आलंकारिकाः। मणि. पृ. ११६.

● मयूरनृत्यम्। तदेतन्मयूरनृत्यमापद्यते। तद्यथा, मयूरस्य नृत्यतः अग्रम् उपनिधीयते अन्यत् संनिधीयते। भा. ७।४।२।१०.

● मरणं अनियतकालम्। भा. ११।३।१४।३६.

■ मरणाद्वरं व्याधिरिति न्यायः। साहस्री. १४१.

● मरणस्य. निःशेषस्मृतिबीजसंस्कारनाशकत्वं जन्मान्तरीयस्य कस्यचिदर्थस्य अस्मरणात् अवसीयते। जायमानस्य तु स्तन्यपाने प्रवृत्तिः आह्निकी, प्रथमजीभोगप्रवृत्तिवत्। सु. पृ. १२९. ● मरणे कस्यचित् स्वामिनः अन्ये प्रतिनिधिर्नास्ति। ६।३।८।२२। परन्तु तस्य कर्मकरत्वमेव, न तु स्वामित्वम्। ६।३।९।२१-२५। अथापि तस्य अनुष्ठाने स्वामिधर्मेतरं भवत्येव। भा. ६।३।१०।२६. ● सायंहोमोत्तरं यजमानस्य मरणे कथंचित् प्रातर्होमः कर्तव्यः प्रक्रान्तसमाप्तिनिमित्तदोषपरिहारार्थम्। वा. ३।१।५।१६.

● मरणोत्तरं यजमानस्य सर्वस्वारस्य समापनम्। १०।२।२३।५८-५९.

● मरणकामस्य सर्वस्वारो नाम क्रतुः 'मरणकामो ह्येतेन यजेत, यः कामयेतानामयः स्वर्गं लोकमियाम्' इति। यजमानमरणोत्तरं च यज्ञशेषः ऋत्विग्भिः समापनीयः। 'ब्राह्मणाः समापयत मे यज्ञम्' इति हि यजमानप्रैषः। वि. १०।२।२३.

● मरणकामना दीर्घरोगग्रस्तस्य प्रत्यासन्नाभिपत्तिकस्य समञ्जति। संकर्ष. ४।३।९.

● मरुत्वतीयादयो ग्रहाः माध्यन्दिने सवने। वि. ३।६।९.

■ मर्कटमदिरापानादिन्यायः। साहस्री. ९४०.

● मलापकर्षणार्थं स्नानम्। ना. ३।४।५।१४.

● 'मलवद्वाससा न संवदेत, नास्या अन्नमद्यात्' इति निषेधः क्रत्वर्थः पुरुषार्थो वा इति संशये केवलपुरुषार्थ. इति सिद्धान्तः। दर्शपूर्णमासयो.। (संवादाधिकरणम्)। ३।४।७।१८-१९.

● मलवद्वाससंवादः। 'यस्य व्रत्येऽहनि पत्नी अनालम्भुका स्यात् तामपरुध्य यजेत' इत्यर्थवादवचनात् दर्शपूर्णमासयोः उदक्यासंवादप्रसक्तेः 'न मलवद्वाससा संवदेत' इति प्रतिषेधः प्रकरणादुपपद्यते। सु. पृ. १२३.

● मलवद्वास.संवादनिषेधाधिकरणम् । ( रजस्वलया संवादस्य निषेधः पुरुषार्थः ) । ३।४।७।१८–१९. ' सवादाधिकरणम् ' इति निर्देशो द्रष्टव्यम् ।

● ' मलिन. स्नायात् ' इतिवत् । नायमेकान्तो यद् प्रथमान्त गुणभूतम्, प्रधानमपि भवति क्रियाया यथा ' मलिनः स्नायात् ' इति । टुप्. ६।३।६।१२.

¥ मलिनदर्पणन्यायः । ' ससर्गजा दोषगुणा भवन्ति ' इति न्यायेन समानार्थोऽयं तत्रैव द्रष्टव्यः । साहस्री. १००.

¥ मल्लग्रामन्यायः । यथा अन्येष्वपि जनेषु सत्सु मल्लाना बहुत्वात् मल्लग्राम इत्युच्यते, तथा प्रकृतेऽपि । साहस्री. २६.

● मसूरादिनिषेधः श्राद्धे, अत्र जातिनिषेध. पुरुषार्थः । यथा हि भोजनाश्रित प्राङ्मुखत्व विधीयते न भोजनम्, एव भक्षणाश्रित मसूरादि निषिध्यते, न भक्षणम् । श्राद्ध. पृ ३१.

● मस्तु दध्नस्त्व भवन् । भा. ६।१।७।११.

¥ महान्महत्त्वेव करोति विक्रममिति न्यायः । अय महान् जनो महत्सु जनेष्वेव पराक्रम करोति, न दुर्बलेष्विति भावविवरणमुपपन्नतारि । साहस्री. ७९४.

● महेन्द्रस्य याज्यानुवाक्याद्वयम् ' महाँ इन्द्रो य ओजसा ० ', ' भुवस्त्वमिन्द्र ब्रह्मणा महान् ० ' इति । सु. पृ ६५५.

● महेन्द्राधिकरणम् । २।१।५।१३–२९. ' स्तुतशस्त्राधिकरणम् ' इति निर्देशो द्रष्टव्यम् ।

● महर्षयः शापानुग्रहसमर्थाः श्रूयन्ते । वा. १।३। ३।७ पृ. २०८.

● महाकुलीना. विशिष्टेन प्रयत्नेन परिरक्षन्त्यात्मानम् । वा. १।३।३।१२ पृ. १०९.

● ' महादिवाकीर्त्यं पृष्ठ भवति ' इति ' विभ्राड् बृहत् पिबतु ' इति ऋगनुगतस्य महादिवाकीर्त्यस्य साम्न. त्रिवृति पृष्ठसाधनत्वेन विधानम् । सु. पृ. ८९२.

● महादिवाकीर्त्यानि नव सामानि अनकामि । श्राद्ध पृ. ३२.

¥ महादोषत्यागोऽल्पदोषाङ्गीकारो यथा लोकप्रसिद्धिरिति न्याय. । साहस्री. ५६२.

● महापङ्क्तिः जगती । पादेषु अक्षराणि ८।८।७। ६।१०।९ । उदा० ' इयत्तिका शकुन्तिका० ' ( ऋग. १।१९१।११ ), किंवा ८।८।८।८।८।८ । उदा० ' उद्भाव तद्पसे० ' ( ऋग. ८।४७।१६ ) । के.

● महापदपङ्क्तिः अनुष्टुप् । पादेषु अक्षराणि ५।५।५।५।५।६ । उदा० ' स्व स्वादिष्ठा० ' ( ऋग. ४।१०।५ ) । के.

● महापापकारिणः ( ब्रह्महत्याव्यतिरिक्त ) अपरिहरण अनाचारः उदीच्याना दाक्षिणात्याना च । वा. १।३।३।७ पृ. २०४.

● महापितृयज्ञे ' अयं उपमन्थति ' इत्यनेनोक्तस्य पात्रप्रोक्षणस्य स्तुतये ' यत् पूर्ण तन्मनुष्याणाम्, उपर्यर्धो देवानाम् ' इत्यनुवादः । वि. ३।४।७. ● महापितृयज्ञे ' उपरि हि देवेभ्यो धारयति ' इत्यत्र अनुयाजे विधिरेवेति संशयः । नेति सिद्धान्तः । भा. ३।४।१।अनुन्याय – ६ ● महापितृयज्ञे चोदकप्राप्ते वरणे ' नार्षेयं वृणीते न होतारम् ' । अत्र चोदकप्रत्यक्षवचनाभ्या वरणस्य विकल्प. इति पूर्वपक्ष. । चोदकप्रत्यक्षवचनयो एकवाक्यत्वेन वरणव्यतिरिक्तमङ्गजात अनुष्ठेयं इति पर्युदासस्थता इति सिद्धान्त । वि. १०।८।१.

¥ महापितृयज्ञे तिसृणां ऋचां द्वे एव पुरोनुवाक्ये, तृतीया याज्या ॥

महापितृयज्ञे तिस्र ऋच. याज्यानुवाक्यात्वेनाम्नाता । तासु द्वयोरंशो. समुच्चित्य याज्यात्वम् ' द्वे वै देवाना याज्यानुवाक्ये ' इति प्रकृत्य ' परे हि देवेभ्य पितर ' इति श्रुत्या देवापेक्षयाऽधिकत्वकथनात् । आधिक्य च प्रधानमन्त्राद एव, ' त्र्येषा तृतीयैवया वै प्रददाति ' इति श्रुत्या निराकरणात् । अनुवाक्यायाज्यात्वेन क्रमप्राप्तयोर्द्वयोविनियोगे तृतीयाया अवशिष्टाया सन्निहितत्वेन याज्याया मेत्रोक्तलिङ्गेन समुच्चित्य विनियोगस्य न्याय्यत्वात् । इति प्राप्ते, ( द्वे १ ) पुरोनुवाक्यत्वेनैव द्वे विनियोज्ये, त्रिस्तोमसाधारणत्वात् । ' प्रथमया द्वितीयया प्रचरति

प्रैष तृतीयया यच्छति ' इति स्पष्टमेव कौषीतके विनियोगाच्च । संकर्ष. ४।४।५.

ह्व महापितृयज्ञे द्वयोरनुवाक्ययोः प्रत्येकं प्रणवः ॥

अग्नीषोमयोर्देवतात्वात् उभयोः पुरोनुवाक्यात्वस्य न्यायसमवृत्तितया अन्ते अधीयमानः प्रणवो द्वितीयवचोन्ते एव स्यात् । इति प्राप्ते, ' पुरोऽनुवाक्ये ' इति द्विवचनेन प्रत्येकमर्थवत्त्वावधारणात् प्रतिपुरोऽनुवाक्यं प्रणवो विधेयः । एतेन ' ऋचमुक्त्वा प्रणौत्यपरमुक्त्वा प्रणौति ' इति श्रुतिरुपपन्नते । संकर्ष. ४।४।६.

ह्व महापितृयज्ञे धानासु अवघातस्य न बाधः ॥

अर्थेन च विपर्यासे तादर्थ्यात् तत्त्वमेव स्यात् । १०।२।१४।७५ ॥

भाष्यम्— अस्ति महापितृयज्ञः ' सोमाय पितृमते षट्कपालम्, पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम् ' इति । धाना इत्यत्र सन्देह. किं धानासु हन्तिः कर्तव्यः, उत नेति । किं प्राप्तम् ? न कर्तव्य इति । कुतः ? विघातात् । क्रियमाणे हन्तौ धानास्ते विहन्येत, सक्तवो हि भवेयुः । तस्मान्न कर्तव्य इति । एवं प्राप्ते, ब्रूमः । तत्कमविघातकमभिप्राय गुणाय कर्तव्यं अवहननादिति । आह । अवहननमविघातकम्, हन्तिस्तु धानात्वं विहन्तीति । अत्रोच्यते । यथा न विघातकं भवति तथा करिष्यते । विपर्यसिष्यते, तथा न विहनिष्यते । विपर्यासे तत्कार्यं न पुनः भवति, पदार्थस्तु निवर्तते । तदुक्तम् ' गुणलोपे च मुख्यस्य भवति ' इति ( १०।२।२४।६४ ) । तस्मात् पूर्वं हन्तिं कृत्वा पाक. कार्यः । तत्र हि हन्तिः पाकार्थो भविष्यति, न धानात्वं विहनिष्यते इति ।

टुप्— धाना इत्यनुदाहरणम् । द्विधाऽप्यनुपपन्नत्वात् । कथमनुपपत्तिः ? चोदकेनापि विपर्यास एव प्राप्यते । पूर्वमवघातः, ततः श्रपणम् । अथ श्रपणादुत्तरमवधानः प्राप्यते, तथापि तथैवानुष्ठेय । तत्र ' अर्थेन च विपर्यासे ' इत्ययुक्तम् । अथोभयथावघातः प्राप्नोति, तथापि अर्थविपर्यासो न युक्तः ( तथैवानुष्ठानात् ) । अथैवमुच्यते निष्पन्नाया यागचोदनाया चोदकः इति । धानासु चेह निष्पन्नासु चोदना, ततश्चोदकः अवघातं श्रपणं च प्रापयति । एवमेव अवघाते प्राप्ते अर्थेन विपर्यास इत्युक्तम् ( पश्चात् प्राप्तस्य पूर्वमनुष्ठानात् ), तदपि अनुपपन्नम् । यदि निर्वृत्तरूप इव गृह्यते स्थालीवत्, तथा अवघातादीनामपि छेदनादीनामिव ( स्यात् ) तत्राऽपि ( क्रम- ) विपर्यासाशङ्कैव नास्ति ( हन्तिस्वरूपस्यैव दुर्लभत्वात् ) । अथ नैव निष्पन्नानां ग्रहणम्, तथापि यथाप्राप्तमेवानुष्ठानम्, न विपर्यासः ( तस्मादनुदाहरणं धानाः ) ।

किं तर्हि उदाहरणम् ? तत्रैव ( महापितृयज्ञे ' अभिवान्यायै ( मृतवत्साया. ) दुग्धे मन्थम् ' इति ) मन्थस्य श्रपणादुत्तरकालं पेषणं प्राप्नोति अर्थेन । तत्र ( पेषणे सत्यपि किं प्राकृताः पेषण- )धर्मा भवन्ति, न भवन्ति इति । ( तदर्थं च किं प्राकृतमिदम्, उतान्यत् लौकिकमिति । तत्र ) पूर्वपक्षे पेषणान्तरमिदम् । इत्यतः ( देवो ) अधर्मकमेव ( इदं ) पेषणम् । सिद्धान्ते तु तदेव पेषणम्, प्राकृतकार्यत्वात् । क्रममात्रमन्यत् ( न कार्यान्तरम् ) । अतः अर्थकृतेऽपि विपर्यासे ( तादर्थ्यात् तत्कार्यत्वात् पेषणस्य तत्त्वमेव स्यात्, नान्यत्वम् । इति धर्माः- ) भवन्त्येव । ( उदाहरणान्तरमाह- ) कृष्णलेषु पाकधर्माः ( प्राकृताः ) भवन्ति, न भवन्ति इति ( भवन्तः ) । यदि अपूर्वोऽयं पाक. ( ' घृते श्रपयति ' इति ) तत. ( पाकधर्मा. ) न भवन्ति । अथ प्राकृतस्य प्रतिप्रसवः, ततो भवन्ति । ( तत्र प्रतिप्रसव विधौ वाक्यभेदात् पाकान्तरविधिः इति पूर्वपक्षः । सिद्धान्तमाह- ) तत्र प्रतिप्रसवोऽयम् । कथम् ? चोदकेन प्राप्ता ( पाक- ) धर्माः अर्थलोपान्निवृत्ता., श्रपणविधानात् प्रतिप्रसूयन्ते । ननु प्रतिप्रसवे श्रपणमात्रमेव विधातव्यम्, न घृतम् । घृते हि विधीयमाने वाक्यं भिद्येत ( प्राप्तस्य प्रतिप्रसवो गुणस्य विधीयते इति ) । यदि ( तु ) अपूर्वं विधानं तथा सति विशिष्टविधानात् अदोषः, अभ्यास स्यात् । उच्यते । प्राप्तत्वात् अस्मिन् वाक्ये ( ' घृते श्रपयति ' इत्यत्र ) घृतं न विधीयते, ( किन्तु ) श्रपणमात्रमेव ( विधीयते ) । कुतः प्राप्तिर्घृतस्य ? उत्पत्ति-

वाक्ये घृतमेव आधारत्वेन श्रूयते, ( 'प्राजापत्यं घृते चरुम्' इति- ) सप्तमीविभक्तिसंयोगात् चरुशब्दसामर्थ्याच्च। यथा आदित्ये ( अदितिदेवताके चरौ ) पयः अधिकरणम्, तथेहाप्युत्पत्तिवाक्ये ( सप्तमीत्वात् अधिकरणं घृतम्। तच्च श्रपणावस्थायामेव-अर्धश्रपणोत्तरम्-चरुशब्दसामर्थ्यात् ) तस्मात् गुणवाक्ये घृतानुवादः ( 'तस्मात् पाकान्तरं नैतत्पूर्वनिषिद्धोपवः। प्रतिपत्तिमात्रं तु साधनाद्विहितं परम् ॥' ) ।

शा— महापितृयज्ञे श्रूयते 'सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति, पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्' इति। ( प्राभाकरोक्त भाष्यसमर्थनप्रकारमाह- ) ये त्वाहुः 'न क्रमो नाम कश्चित् गुणः पदार्थव्यतिरिक्तोऽस्ति, यस्य पृथक् बाधं व्यवस्थापयाम। पदार्था एव हि विततः प्रतीयन्ते। तेन केवलस्य क्रमस्य बाधासंभवात् तद्वति पदार्थोऽपि बाधितः, हृत्यवघातो न कर्तव्य इत्येतत्प्रदर्शनार्थं इदमधिकरणम्। यत्तु 'विपर्यासो नास्ति' इति तत्राप्याहुः- धानासु श्रपणं कृत्वा अवघातः, प्रकृतौ च विपरीतम्, इत्यस्ति विपर्यास इति। यदि विपर्यासः, कथं तर्हि अवघातानुष्ठानम्, नहि क्रमस्य पृथक् बाधः संभवति। सत्यम्, न तु श्रपणपरमार्थेन क्रमबाधः। प्रकृतौ हि तुषेष्वेव व्रीहिषु अवघातः कृतः, अत्रापि तुषास्वेव धानासु अवघातः, इति नास्ति क्रमविपर्यासः। प्रकृतौ अवघातात् परं श्रपणम्, इह तु विपरीतमित्येतावता विपर्यासवाचो युक्तिः। ननु धानावस्थायां हन्ति क्रियमाणो विघात ( धानात्वस्य ) कुर्यात्। यथा न विघातो भवति, तथा कुर्मेहे, सकृदेव अनभ्यस्तमवहननं क्रियते, न च सविष्यति विघात इति। ( इदं प्राभाकरव्याख्यानं दूषयति ) तदयुक्तम्। संभवति हि पृथक् क्रमस्य बाधः। ते एव हि पदार्था अन्येनान्येन च क्रमेणानुष्ठातुं शक्यन्ते, तेन क्रमस्य प्राकृतस्याभावेऽपि पदार्था न निवर्तन्ते। यत्तु 'श्रपणं कृत्वा अवघातः' इति, तत् 'पूर्वं हन्ति कृत्वा पश्चात् पाकः कार्यः' इति भाष्यविरुद्धम्। यदपि श्रपणोत्तरकालेऽपि अवघाते विपर्यासो नास्ति, अतो हृत्ये अवघातकरणात् इति, तदपि असारम्। प्रकृतौ हि द्वे कृत्यश्रवणे पुरोडाशश्रवणं व्रीहिश्रवणं च। तत्र धाना देवतासंबन्धात् पुरोडाशकार्ये वर्तन्ते, न व्रीहिकार्ये। प्रकृतौ च व्रीहिविषयः अवघातः, न पुरोडाशविषयः, तेन धानास्वपि चोदकप्राप्तेषु व्रीहिष्वेव अवघातः, न धानावस्थायाम्। तत्र तु क्रियमाणे हन्तौ क्रमविपर्यास स्यादेव। धानासु चावघातकरणे धानात्वं विहन्येत। यत्तु सकृदेव अवहनिष्याम इति, तत्र सति अप्राकृतकार्यमदृष्टार्थमवहननं स्यात्। प्रकृतिवत्तु तुषविमोकार्थोऽवघातः क्रियमाणो धानात्वं विहन्यात्। तस्मात् नैतमधिकरणं युक्तम्।

सोम— पर्यूहणादिवैपम्यप्रतिपादनात् संगतिः। सूत्रार्थस्तु— अर्थात् क्रमविपर्यासे हन्तेर्धानार्थत्वात् तत्त्व अविहत धानात्वमेव स्यात् इति भाष्यकारपक्षे। वार्तिककारपक्षे तु तत्र पेषणस्य प्राकृतत्वमेव स्यात् हविर्थत्वात् इति।

वि— 'नावघातोऽवघातो वा धानानाम्, नाविनष्टये।, न नाश क्रमबाधेऽवघातो नात्र नाप्यते ॥' तस्मात् क्रमबाधेन अवघातः कार्यः। इति भाष्यमते। वार्तिकमते तु- 'पेषणं नूतनं मन्ये प्राकृतं वा, क्रमात्ययात्। नूतनम्, प्राकृतधर्ममानत्वसय भावतः ॥'

भाट्ट— 'पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्' इत्यादिना विहिते धानाद्रव्यके यागे धानावस्थाया भर्जनोत्तरमवघातः कर्तव्यो न वेति भाष्यकारेण विचारितम्। तस्यायमभिप्रायः, चोदकेन प्राकृत् पूर्वमेव धानावस्थाया अवघातविधानात् भर्जनोत्तरं तदप्राप्तेः, तदुत्तरमवघातकरणे च धानात्वविनाशापत्तेः न भर्जनोत्तरमवघातः कार्यः। इति प्राप्ते, लोके पूर्वं किञ्चिदवहतानां यवानां भर्जनोत्तरं पुनरवघाते दृष्ट एव धानात्वसिद्धेः प्रयोजनानुरोधेन प्राकृतक्रमबाधेऽपि 'गुणलोपे च मुख्यस्य' इति न्यायेन ( १०।२।२७।६४ ) भर्जनोत्तरमपि प्राकृतः सधर्मकोऽवघातः कर्तव्य एव। न च धानात्वव्याघातः, दलनमुसलप्रहारकरणेन तदनापत्तेः। प्रकृतौ हि हविःसंपादकवेतुषार्थमवघातो यथा हविः संपद्यते तथा कार्यः। अत

एव तदनुरोधेन भर्जनात् पूर्वमपि यत्किञ्चिद्वैतुष्य-संपत्त्यर्थमवघातः सधर्मकः कार्य एव, अन्यथा लोकप्रसिद्धधानात्वानिष्पत्तेः । अत एव अवघातोऽपि तदनुरोधेन न दुष्यति । तत्र पूर्वोऽवघातः पाकार्थः, उत्तरस्तु धानात्वसिद्ध्यर्थः इति न कश्चित् विशेषः । एतन्निर्भं भाष्याभिप्रायमजानतः पार्थसारथेः तद्दूषणाय प्रयासः उपेक्षणीय एव । वार्तिककारस्य तु न विचार-मसहमानामेव धानात्वम्, पूर्वमेव सम्यग्वितुषीकृतानां यवानां भर्जने कृते धानात्वप्राप्तेः । अतो यथाप्रकृत्येवावघातस्य भर्जनात् पूर्वमेवानुष्ठानोपपत्तेः नात्र धाना उदाहरणमपि तु मन्थः । स च दुग्धमिश्राः सक्तवः । प्रकृते च अभिवान्या मृतवत्सा गौः, तस्या दुग्धं विवक्षितम् । ननु भर्जितयवतण्डुलानां पिष्टे एव सक्तुत्वप्रसिद्धेर्भर्जनोत्तरमेव पेषणं प्राकृतक्रमबाधेऽपि हवि-सम्पत्त्यै पेषणस्य गुणलोपाधिकरणन्यायेनैव भर्जनोत्तर करणोपपत्तेः । न च क्रमान्वये पदार्थानामन्वयम्, व्युत्क्रमेऽपि तावदवश्यमित्यस्य व्याघातात् । न च प्रकृतौ पेषणस्य पाकार्थत्वम्, येनेह भर्जनोत्तर पाका-भावात् पेषणाभावः शङ्क्येत । कपालेषु पुरोडाशपाकं प्रति तस्योपकारकत्वे पाकपेषणयोर्द्वयोरपि द्वितीयया द्रव्य-संस्कारार्थत्वात् । अतश्च यथैव प्रकृतौ हविःसम्पत्त्यर्थमेव पेषणं पाकात् पूर्वमनुष्ठितम्, तथैवेह सक्तुसम्पत्त्यर्थं पाकोत्तरमनुष्ठानेऽपि न कश्चिद्विरोधः । अत एव प्रकृतौ पेषणपाकयोः पाठोऽप्यनुवाद एव । अतो वस्तुतो नात्र क्रमबाधोऽपि । तेनात्र भर्जनोत्तरमेव पेषणम् । अव-घातस्तु भाष्यवार्तिककारमतयोः पूर्वोक्तरीत्या मन्थेऽपि भर्जनपूर्वोत्तर पूर्वमेव वा कार्यः । धानापिष्टस्यैव सक्तु-त्वात् । परिवापे तु न निर्वापप्रोक्षणादि, नावघातः न वा पेषणमित्युक्तमेव ।

मण्डन—‘ धानार्थमवहन्यते । ’

शंकर—‘ पेषणं धर्मान्मन्थे । ’ वार्तिकमतेनेदम् ।

* महापितृयज्ञे ‘ नापोय कृणोते ’ इति पर्युदासः । भा. १०।८।१।१–४. * महापितृयज्ञे, पात्रविशेषापो-भागरूपार्थेन परिमिते वत्सरहिताया धेन्वा दुग्धे पिष्टं प्रक्षिप्य मन्थः क्रियते । वि. ३।४।७. * महापितृयज्ञे मन्थे पेषणस्य न बाधः । १०।२।३४।७५. मीको. पृ. ३१२९ ‘ महापितृयज्ञे धानासु० ’ इत्यत्र द्रष्टव्यम् ।

* महापितृयज्ञे मन्थे भर्जनादुत्तरं सधर्मकं पेषणादि कर्तव्यम् । टुप्. १०।२।३४।७४. * महापितृयज्ञे ‘ ये पुरोदञ्चो दर्भाः ’ इत्यत्र विधिरनुवादो वेति संशयः, अनुवाद इति सिद्धान्तः । भा. ३।४।१। पद्सूत्र्याम् ४–६. * महापितृयज्ञे येयजामहस्य पर्युदासः । १०।८।१।१–४. मीको पृ. २५७४ ‘ पर्युदासन्याय. ’ इत्यत्र अधिकरण द्रष्टव्यम् । * महापितृयज्ञे वैदिक्या एव इतिकर्तव्यतया अतिदेशः । भा. ७।४।२।१–१२.

* महाप्रकरणं प्रकृतः विकृतेश्च । बाल पृ. ९. * महाप्रकरणं प्रत्यक्ष परिकल्पितावान्तरप्रकरणात् प्रबलम् । तेन अभिषेचनीयप्रकरणात् राजसूयप्रकरणस्य प्राबल्यात् ‘ अक्षैर्दीव्यति ’ इत्यादीनां राजसूयाङ्गत्वमेव । वि. ४।४।१. * महाप्रकरण ( विनियोजक प्रमाण ) प्रधानस्य । बाल पृ. ९. * महाप्रकरणात् अवान्तरप्रकरणं प्रबलं तेन अभिक्रमणादेः न दर्शपूर्णमासाङ्गत्वम्, किन्तु प्रयाजाङ्गत्वम् । श्लो. ३।३।७।१४ पृ. २६२. * महा-प्रकरणात् अवान्तरप्रकरणस्य बलीयस्त्वं अभिक्रमाधि-करणे ( ३।१।१० ) वक्ष्यते । सु. पृ. ९११. * महा प्रकरणात् बलीयांसि विनियोजकानि योग्यत्वं अवान्तर-प्रकरणं एकवाक्यत्वं चेति । वा. ३।१।२४।२५.

* महाप्रयोगविधिः पुरुषार्थः यथा ‘ सर्वे दर्शपूर्ण-मासाभ्यां स्वर्गकामो यजेत ’ इति । बाल. पृ १३.

* महाबृहती त्रिष्टुप् । पादेषु अक्षराणि ८।८।८।८।१२। उदा० ‘ नवानां नवतीनाम् ’ (ऋस. १।१९१।१३ ) । के.

* महाब्राह्मणः इत्यादौ महच्छब्दस्य पूज्यत्वादि-गुणवाचित्वं अवगम्यते । सु. पृ ६४८.

* महाभारतनिर्वचनाख्याने द्वैपायनेन उक्तम् ‘ महत्त्वात् भारवत्त्वाच्च महाभारतमुच्यते । निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ ’ वा. १।३।५।१० पृ. २९८.

* महाभाष्यकारः उपवर्षः । ‘ व्याकरणे द्विती याया. तृतीयार्थवाचित्वानभिधानात्, [illegible] परीष्टि.

निवर्तकं भवति, तदभिनवं न शक्नोति निवेष्टुम्। यत्र निवर्त्यापि शक्नोति भवितुम्, न तन्निवर्तयति। तद्धि निवर्तनदर्शनेन बाधक सचोदकं प्राप्त बाधेत। ननु कौपीन प्रच्छादने परिधत्ते इति भवति, नान्यस्मिन्नर्थे। उच्यते। नैतदेवम्। सर्वशरीरस्योऽपि कार्ये परिधत्त इति भवति, तद्यथा कम्बलं परिधत्ते, चेलं परिधत्ते इति। सर्वतो धत्ते परिधत्ते इत्यन्वयप्रसिद्ध्या भवति। तस्मादहतस्य वाससो न निवृत्तिः, समुच्चय इति।

समुच्चयं च दर्शयति। १५॥

भाष्यम्— समुच्चयं च वाससां शब्देन बहुवचनान्तेन दर्शयति 'वासांसि ताराणी चोपानहौ विमुञ्चति' इति। कृष्णविषाणया नाभिं विस्रंसयति, ततोऽन्यद् परिधत्ते इति। तस्मादपि पश्याम अनिवृत्तिं, समुच्चय इति।

सोम— तार्प्यमिति क्षौमं वासः। तृपाख्यवृक्ष विशेषस्य ('तृपात्य' इति मुद्रिते दृश्यते। तत्र मुद्रमेव। तथा च शास्त्रदीपिकायां विस्तरादिषु च 'तार्प्यं यजमानं परिधत्ते' इति पाठ सोऽपि अशुद्ध एव। भाट्टदीपिकादीकायां शम्भुभट्टेन 'तार्प्यमिति पत्रीय पकार' इति स्पष्टमेव उक्तत्वात्।) विकार इत्येके (इति) भट्टभास्कर। अहत तथा हृतमनुपभुक्त अकृत्तदशम्। एककार्यत्वादेव सगति।

वि— 'तार्प्यादहतवाससस्य बाधकं स्यान्न वा, ऽग्रिम। शुष्काच्छादनकार्यैक्यात्, द्वयोग्यत्वात् समुच्चय॥'

भाट्ट— सत्रे महाव्रते 'तार्प्यं यजमानं परिधत्ते दर्भमयं पत्नी' इति श्रुतम्। तत्र तार्प्यं घृताक्तकम्बल इति माधव। अत्रापि परिधानोद्देशेन तार्प्यादि विधौ परमाविपरिधानेऽपि उदाप्ते यजमानोद्देशेन तद्विधौ शयनादावपि तदापत्तेरवश्य तार्प्यादिविशिष्ट परिधानमेव यजमानोद्देशेन विधीयते, तच्च प्राकृतमेवा तिदेशत प्राप्तो पूर्वं विधीयते, कर्मान्तरमेव चेत्यन्य देतत्। तस्य च प्राकृतकार्यापन्नत्वेनैव विधानात् प्राकृतस्य अहतस्य निवृत्ति। न च प्रकृतावहतस्य कौपीनपदवाच्यभागस्थितप्रच्छादने विनियुक्तत्वात् तत्र च तार्प्यादीनामयोग्यत्वात् योग्यतयैवोपरिधारण एव तद्विनेश-प्रतीते अभिनवकार्यत्वेन नाहतनिवृत्तिरिति वाच्यम्, कौपीनाच्छादने एव परिदधातिप्रयोगेणोपरिधारणे तार्प्यादिविधाने लक्षणापत्ते। तार्प्यादिना कौपीनाच्छादनस्यापि कर्तुं शक्यत्वाच्च। वस्तुतस्तु— अन्याच्छादनेऽपि 'परिस्तृणीत परिधत्त वेदिम्' इत्यादौ परिदधातिपदप्रयोगात् यद्यपि न कौपीनाच्छादने एव तद्विधानम्, तथापि प्रकृतावपि 'अहतं वासः परिधत्ते' इत्यनेन कौपीनाच्छादन इव आचारप्राप्तोपरिभागाच्छादनेऽप्यहतविधानादिहापि तार्प्यादेरुभयत्रैव विधानादुभयत्रैवाहतनिवृत्ति। इति प्राप्ते, कौपीनाच्छादने गृहस्थस्य कच्छाग्रसमर्पण तार्प्यादीनामयोग्यत्वात् उपरिधारणे एव तार्प्यादिविधिप्रतीतेर्न कौपीनाच्छादने अहतनिवृत्ति। अत एव न्यायेन आचारप्राप्तोपरिधारण एव प्राकृताहतनिवृत्तिप्रसक्तौ 'वासांसि विमुञ्चति' इति प्रतिपत्तिविशेषविधायके वाक्ये वाससोरहतत्वानुवादलिङ्गेन समुच्चयप्रतीतेर्न तत्राप्यहतनिवृत्ति। एवं च यद्यपि तार्प्यं कौपीनाच्छादनेऽपि कथञ्चिद्योग्यम्, तथापि वाससो रहतत्वानुवादबलेनैव तत्राहतेन समुच्चय। दर्भमयस्य तु कथमप्ययोग्यत्वादुपरिधारण एव विधिप्रतीतेर्वाससोरहतत्वानुरोधेन तत्रापि समुच्चय। अत एव यत्र न वाससोरहतत्वानुवाद यथा विश्वजिति 'अजमृषाद्वेष्य यस्तच परिधत्ते' इति श्रुते तत्कम्बलस्य कौपीनाच्छादनेऽयोग्यत्वात् तत्राहतस्यातिदेशप्राप्तस्यानिवृत्तावपि उपरिधारणे तन्निवृत्तिरेव। विशिष्य चेदं द्वादशे वक्ष्यते।

मण्डन— 'समुच्चयो तयोर्वा स्यात्।'

शंकर— 'बाध्यं न वासस्तार्प्येण।'

• महाव्रते 'दिक्षु दुन्दुभयो वदन्ति' इति दुन्दुभिगानम्, तत्सजातीयं च काण्डवीणोपगानम्। वि १०।८।६ .

• महाव्रते पत्नय उपगायन्ति, पिच्छोलाभि, काण्डवीणाभि, आपाघाटिकाभि। भा १०।८।५।८

• महाव्रते शुक्रग्रहेण ऐन्द्राग्नादिग्रहाणां समुच्चय। १०।८।१२–१ मीको पृ ३६४८ 'ग्रहसमुच्चयन्याय' इत्यत्र अधिकरणं द्रष्टव्यम्।

* महाव्रते स्तोत्रान्तरसाधनीभूतं श्लोकादि सामभि प्राकृतसाम्नां समुच्चय ॥

सामस्वर्यान्तरश्रुतेरविकार प्रतीयेत । १०।४।८।१६ ॥

भाष्यम्-- महाव्रते श्रूयते 'श्लोकेन पुरस्तात्सदस स्तुवते, अनुश्लोकेन पश्चात्सदस , क्रौञ्चेन चात्वालमवेक्षमाण ' इति । सन्ति तु प्राकृतानि सामानीह चोदकेन प्राप्तानि । तत्र सशय किं प्राकृतानां साम्नां निवृत्ति , उताऽनिवृत्ति समुच्चय इति । किं प्राप्तम् ? स्तूयते इति प्रकृतिलिङ्गसयोगे प्रत्यक्षश्रुते चोदकप्राप्तानि सामानि निवर्त्यन्ते इति । यथा ' कौत्स भवति, काण्व भवति, वसिष्ठस्य जनित्रे भवत , शुद्धाशुद्धीये भवत , भर्गयशसी भवत , क्रौञ्चानि भवन्ति' इति श्रुतेषु चोदकप्राप्तानि निवर्त्यन्ते, एवमिहापि द्रष्टव्यम् । एव प्राप्ते, ब्रूम ; सामसु ' श्लोकेन पुरस्तात्सदस स्तुवते ' इत्येवमादि श्रूयमाणेषु प्राकृतानामविकार प्रतीयेत । कुत ? अर्थान्तरश्रुते । अर्थान्तरेण हि सम्बद्ध श्रूयते ' पुरस्तात्सदस स्तुवते ' इत्येवमादि । यच्च पद केनचित् पदेन सम्बध्यते विशेषणार्थेन, न तत् पदान्तरेण सह सबन्धमर्हति सकृदुच्चरितम् । यथा ' भार्या राज्ञ , पुरुषो देवदत्तस्य ' इति भार्याविशेषणत्वेनोच्चार्यमाणो राज्ञ इति शब्दो न पुन पुरुषशब्देन सबध्यते इति । एव ' पुरस्तात्सदस स्तुवते ' इत्यनेन सबध्यमानो न पुन ' श्लोकेन स्तुवते ' इति सबन्धमर्हति । यदि स्तुतौ देशमत्ता विधीयते, श्लोकेन चेत्यनूद्यते, तत एकमेकवाक्यमिति । यदा तु पुनर्देशवत्ता विहिता, तदा परिपूर्णं वाक्यम्, श्लोकेन चेत्येतदपि विधातव्यम्, तदा पुनर्विधिप्रत्ययो हृदयमानेत व । इदम् मानुच्चारयितव्य, न चोच्चारित । तस्मादनुच्चारितो वा कल्पयितव्य , उच्चारणं [illegible] कल्पयितव्यम् । कल्पनाया च शब्दो बाध्येत । तस्मान्नैवम् । कथ तर्हि ? देशसामविशिष्टा स्तुति श्रुत्या विधीयते । न चैवं केनचित् सबन्ध विहिते, परिपूर्णे वाक्ये, पुनरपर वाक्य कल्पयितव्य भवति । उभयविशेषणविशिष्टा हि स्तुति श्रुत्या यदा विहिता, तदा परिपूर्णं वाक्यम्, न तदा पुनरपरेण कस्यचित् सबन्ध कल्पयितव्यो भवति, यदर्थं किंचित् निराकार्येत । तस्मात् स्तुत्यन्तरमिद विधीयते, न प्राकृत निवर्त्यते, समुच्चय इति ।

अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकार स्यात् । १७ ॥

भाष्यम्— अथ यदुपवर्णितम्, यथा ' कौत्स भवति, काण्व भवति, वसिष्ठस्य जनित्रे भवत ' इत्येवमादिभिरिव प्राकृताना निवृत्तिरिति, तत्परिहर्तव्यम् । अत्रोच्यते । युक्तमत्र यत् प्राकृत निवर्त्यते । अत्र ह्यर्थान्तर न श्रूयते प्राकृतस्यैव शेष श्रूयते । तस्मात्तत्र वैकृतेन प्रत्यक्षश्रुतेन प्राकृतस्य निवृत्तिरिति । इह तु अर्थान्तरश्रवणात् वाक्यभेदप्रसङ्गात् अनिवृत्तिरित्युक्तम् ।

सोम— पूर्वेण एककार्यत्वात् सगति । सूत्रे-- अर्थान्तरश्रुते प्राकृतस्तुत्यपेक्षया स्तुत्यन्तरसयोगश्रुते अकृत्स्नाम्नाय इत्यर्थ ।

वि-- ' बाध्य श्लोकादिनाऽऽज्यादि न वा, ऽऽद्य स्तुतिर्भिन्नव ।, देशसाम्नोर्विधौ भेदे ( भेदात् ) वैषम्याच्च समुच्चय ॥ ' ९

भाट्ट — इत्येन ' श्लोकेन पुरस्तात् सदस स्तुवीत ' इत्यादिना प्राकृतस्तोत्रानुवादेन श्लोकाद्यवसाममात्रविधेर्देशाद्यगुणा तस्यापि विधेयत्वानुपपत्ते , वाक्यभेदापादकगुणादेव कर्मान्तरत्वप्रतीते , तस्य च उपहोमन्यायेन ( ५।१।९ ) अदृष्टार्थत्वात् समुच्चय स्तोत्रान्तरै । न च प्राकृतस्तोत्राण्येव अतिदेशत पूर्वप्रवृत्तप्रकारेण गुणद्वयविशिष्टानि विधीयन्ता तेन प्राकृतसाम्न प्राकृतदेशस्य च निवृत्तिरिति वाच्यम् । स्तौतिधातो पूर्वविहिताविहितसाधारणस्तोत्रमात्रवाचित्वनातिदेशत पूर्वं प्राकृतस्तोत्राणामेव विशिष्योपस्थापकाभावेन विधिवशात् कर्मान्तरप्रतीते । गृहमेधीये ' आज्यभागौ यजति ' इत्यत्र तु आज्यभागपदस्यैव पूर्वकर्मणो विशिष्योपस्थापकमिति विशेष । ९

मण्डन-- ' श्लोकस्तोत्र न बाधकम् । ' १०

शकर-- ' प्राकृती नैव्रतस्तुते । ' प्राकृती स्तुति न बाध्या । १०

* महाव्रतगत धर्मं सत्तरसत्रे दर्शयति ' पनय अगाय ' इति । भा ८।११११।१८

● महाव्रतप्रयोगप्रतिपादकं आश्वलायनविहितं कल्पसूत्रं अरण्येऽधीयाना बह्वृचाः कर्तृविस्मरणात् वेदत्वेन व्यवहरन्ति । वि. १।२।१ वर्णकं २.

● महासतोबृहती जगती । पादेषु अक्षराणि १२।८।१२।८।८ । उदा० 'आ यः पर्यौ भानुना' । (ऋस. ६।४८।६)। पिं.

● महिममहाभ्यां ऐन्द्रवायवाग्निग्रहाणां समुच्चयः अश्वमेधे । १०।४।२।३-५. मीको. पृ. १६४४ 'प्रकृत्युपबन्धन्यायः' इत्यत्र द्रष्टव्यम् ।

● महिषी प्रसरोन्मुखी महिषो मदनातुर इति न्यायः । यत्र केचित् महामूर्खा मृतम्लेच्छाद्यधमजातिकन्यानामपि स्वस्त्रुस्वैक्यतानि स्वामिकल्पितप्रदानि च मत्वा म्लेच्छाद्यधमजातिनीचयोनिप्राप्त्या अस्तिु रिते-ष्योऽपि स्वामीह याचन्ते, तत्राप्य प्रवृत्तिरिति । उक्तं च गुसानीश्वविना रावणमारीचसंवादनिगये । तथाहि, तं मारीचं प्राप्य मीरूक दशाननः प्रागुवाचहार 'सीतामीहे हांमन मे वणे सहायो भवार्थकार । कुच्च येते दर्द देह की मीयों कहे तुम चले धिकार ॥' इति । साहसी. ८१.

● महिष्याः गृहे आदित्यचरुः राजसूये । भा. ११।२।३।१३.

● मांसं श्यामपशोपात् अनार्थे उपाश्रीयते । भा. १२।२।१।७.

● 'मांसं तु सवनीयानां चोदनाविशेषात् ।' ३।८।२२।४३ ॥ इत्यत्र पुरोडाशानादरेण सवनीयमांसे मांसनिधि यस्मिन् शाक्यानामयने । ह्रु. पृ. २३७. ● 'मांस तु सवनीयानाम्' इति सिद्धान्तात् पुरोडाशमात्रेण अर्थकथ्यमान तासमयत्वम् । वा. २।१।८। १२ पृ. ४१८.

● मांसं [illegible] सवनीयानां चोदनाविशेषात् । ३।८।२२।४३ ॥

शाक्यानामयनं (शाक्त्यानामयन इत्यपि पाठः) नाम षट्त्रिंशत्संवत्सरं सत्रम् । 'तत्र सप्तिनैर्धल्लिवेऽग्नौ गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति, तेषां तरसाः पुरोडाशाः सवनीया भवन्ति' इति श्रुतम् । इह तरसमयत्वं नाम मांसमयत्वं किं सर्वेषामेव पुरोडाशानां सवनीयपुरोडाशानामेव वेति विचारे सर्वेषामेवेति तत्सूत्रे पूर्वपक्षे सिद्धान्तमाह । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तरसशब्देन यत् मांसं उक्तं तत् सवनीयानामेव पुरोडाशानाम् । कुतः । चोदनाविशेषात् । 'तरसाः पुरोडाशाः सवनीयाः' इति तरससवनीयसम्बन्धो विधीयते । पुरोडाशाः इति तु अनुवादः । तस्मात् धानाकरम्भपरिवापपयस्यापुरोडाशरूपाणां पञ्चानामपि सवनीयपुरोडाशशब्दितानां द्रव्याणां स्थाने मांसं मांसं सवनीयेति विशेषचोदनात् इति सिद्धान्तः ।

भक्तिरसंनिधावन्याय्येति चेत् । ४४ ॥

शाक्यानामयने नामसत्रे 'तरसाः पुरोडाशाः सवनीया भवन्ति' इति तरसशब्दितमांसमयत्वं पुरोडाशानामुक्तम् । तत्र धानादिपञ्चद्रव्यात्मकानां सवनीयानामेव पुरोडाशानां न तु यागानां पुरोडाशानां इति सिद्धान्ते पूर्वसूत्रेण उक्ते पूर्वपक्षी ब्रूते । सिद्धान्तिना पुरोडाशशब्दः धानाकरम्भपरिवापपयस्यासु गौणः स्वीक्रियते । ततो वरं चरमश्रुतः सवनीयशब्द एव सवनीयासवनीयसमुदायवाचित्वेन स्वीकर्तुम् । तथाहि– असंनिधौ, संनिधिः अभेदः असंनिधिः अत्यन्तभेदः, असंनिधौ धानादीनां पुरोडाशात् अत्यन्तभेदे सति पुरोडाशशब्दस्य धानादिषु भक्तिः गौणता लाक्षणिकता वा अन्याय्या । ततश्च पुरोडाशशब्दस्य लक्षणा न स्वीकार्या मुख्येऽर्थे संभवति । अत्र सिद्धान्ती ब्रूते, इति चेत् पूर्वपक्षी ब्रूयात् इति ।

स्यात् प्रकृतिलिङ्गत्वाद् वैराजवत् । ४५ ॥

पुरोडाशशब्देन धानादीनामपि ग्रहणे पुरोडाशशब्दस्य लक्षणा स्यात् । सा चान्याय्या मुख्येऽर्थे संभवति । इति पूर्वपक्षिणा पूर्वसूत्रे शङ्कितम् । तत्र उत्तरार्थं सिद्धान्तसूत्रम् । स्यात् पुरोडाशशब्दस्यैव धानादिषु लाक्षणिकत्वं न्याय्यम् । न तु सवनीयासवनीयसमूहे लाक्षणिकत्वं सवनीयशब्दस्य न्याय्यम् । "प्रकृतिलिङ्गत्वात् । प्रकृतौ ज्योतिष्टोमे पुरोडाशशब्दस्य धानादिसवनीयहविःपञ्चके लिङ्गत्वात् तदर्थगमकत्वात् भक्तिः स्यात् । पुरोडाशशब्दस्य मुख्यापि गौणत्वमुचितम् । पुरोडाशस्य सवनीयशब्देन अवयुत्यनुवादानुपपत्तेः धानादिसमुदोचित-

मयता स्यात्। न अवयवे पुरोडाशानां च मांसमयता विधातुं सवनीयशब्देन च पुरोडाशान् विशेषयितुम्। भिद्येत हि तथा वाक्यम्। तस्मात्सर्वपुरोडाशानां मांसमयता। इति प्राप्ते, उच्यते। मांसं तु सवनीयानां स्यात्। तरसाः सवनीया भवन्तीति तरससवनीयसम्बन्धो विधीयते, तरसाः पुरोडाशा भवन्ति इत्ययं त्वनूद्यते। कुत एतत्? सर्वपुरोडाशेषु सवनीयशब्दोऽनुवादो न घटते, पुरोडाशशब्दस्तु सवनीयेऽनुवदत्येव। तस्मात्पुरोडाशशब्दोऽनुवाद इति। तस्मात्सवनीयानां धानादीनां स्थाने मांसं चोदनाविशेषादिति।

वा-- पुरोडाशशब्दस्य धानादिष्वसमर्थत्वात्सर्वपुरोडाशविषयत्वम्, सत्यपि सवनीयत्वे विशेषणासंभवत्वात्। इति प्राप्ते, अभिधीयते। सवनीयशब्दस्यासमाद्पाठात्पुरोडाशशब्दं लिङ्गसमवायाद्गौणं कृत्वा धानादीनामपि ग्रहणमिति।

**भक्तिरसंनिधानादन्याय्येति चेत्। ४३॥**

**भाष्यम्**-- इति चेत् पश्यसि, सवनीयेषु पुरोडाशशब्दोऽनुवादो भविष्यतीति। धानादिषु पुरोडाशशब्दो न घटते। भक्तिश्चान्याय्या मुख्ये संभवति।

वा--- अत्यन्तभिन्नत्वात् धानादिष्वपुरोडाशो न युक्तो यदि वा सवनीयशब्दस्याप्यसमुदायानुवादेन भवितव्यमिति।

**स्यात्प्रकृतिलिङ्गत्वाद्वैराजवत्। ४४॥**

**भाष्यम्**--- प्रकृतौ ज्योतिष्टोमे धानादिष्वयं पुरोडाशशब्दो भाक्तः सन्निहितेषु प्रयुक्तः। इहापि भाक्त एव प्रयोक्ष्यते। अत्रापि हि सवनीयशब्देन ते सन्निहिताः। प्रकृतौ लिङ्गसमवायात्सच्छब्दप्रवृत्तिर्विकृतावपि तथैव। यथा छत्रिणो गच्छन्ति, ध्वजिनो गच्छन्तीति, यथा उक्थ्यो वैरूपसामा, एकविंशः षोडशी वैराजसामा, इति प्रकृतिलिङ्गेन सामशब्देन वैरूपपृष्ठो वैराजपृष्ठ इति गम्यते। एवमिहापि सवनीयानां मांसमयतेति।

वा— 'पुरोडाशानलंकुरु' इति प्रकृतौ धानादिषु दृष्टत्वात्, न तु सवनीयशब्दस्यासवनीयेषु प्रवृत्ति-। साहित्याच्च गम्यते तेन लक्षणेन नेतरेण। न चासवनीयस्य पुरोडाशस्य धानादिभिः सह संबन्धोऽस्ति। तस्मात् धानादीनां स्थाने तरसा इति सिद्धम्। 'इति कथितमल्पाल्पमवेकैकस्वगतसर्वविरोधबाधमार्गैः। श्रुतिक्रमवदनिश्चयैः प्रमाणैः स्थित इह कर्मसु शेषशेषिभावः ॥'

शा— 'ननूद्देश्यः पुरोडाशः सवनीयेन शक्यते। विशेषयितुं तेन मांसार्थं तरसं सवनीयवत् ॥' इति प्राप्ते, अभिधीयते। 'पुरोडाशं समुद्दिश्य मांसं चोद्यते यदि। ततः स्यात्सर्वगामित्वमुद्देश्यस्याविशेषणात् ॥ उद्दिश्य सवनीयांस्तु मांसमत्र विधीयते। पुरोडाशापुरोडाशसमवाये तु लक्षणा ॥ पुरोडाशपदे सद्धि जघन्यं लक्षणां व्रजेत्। प्रकृतौ चास्य दृष्टा सा पुरोडाशानलंकुरु ॥ सवनीयपदं मुख्यं न मुख्यार्थं परित्यजेत्। दृष्टा च प्रकृतौ नैव सवनीयस्य लक्षणा ॥ अव्यवायाच्च तेनैव युक्ता तरससंगतिः। तद्व्यवेतः पुरोडाश इति तेन न संगतिः ॥'

सोम--सूत्रार्थस्तु- श्रौततरसशब्दव्याख्यानं मांसमिति तद्धानादीनां सवनीयानामेव, न तु सवनीयासवनीयपुरोडाशानाम्, संनिहितान्यतरत्वविशेषलाभात् इति।

वि— 'मांसमयत्वे पुरोडाशास्तरसा इति भाव्यताम्। सर्वेषु सवनीये वा सर्वत्र सवनीयवत् ॥ तरसाः सवनीयाः स्युरिति तत्संनिधिः श्रुतः। पुरोडाशस्य मांसत्वं तेनैवातो निवार्यते ॥'

भाट्ट-- षट्त्रिंशदाब्दिके शाक्तानामयनाख्ये सत्रे 'दीक्षिते सम्भिन्नेऽहनि गृहपतिर्मृगयां याति, स यान् मृगान् हन्ति तेषां तरसाः सवनीयाः पुरोडाशा भवन्ति' इति श्रुतं मांसं 'भवन्ति' इति विधिमानत्वाभावात् पुरोडाशस्य तदुद्देशेनैव विधीयते। विधेरेव हि भवनार्थभावनामात्रपराकाङ्क्षत्वम्। अतस्तदन्वयासत्त्यैव तदुचितम्, न सवनीयानाम्। यद्वा तु 'पुरोडाशाः सवनीयाः' इति भवदेवादिभिः पाठस्तदा प्राथमिकत्वाद्विधेयतरसान्वयसम्बन्धाच्च पुरोडाशधर्मस्यैवोद्देश्यत्वं स्यादेव। न च पुरोडाशस्य सवनीयपदेन विशेषणम्, विशिष्टोद्देशापत्तेः। अतः सर्वपुरोडाशकार्ये तरसं विधीयते। सवनीयपदं तु सवनीयासवनीयपुरोडाशमात्रे गौणं लाक्षणिकं वा। अतः पुरोडाशमात्रस्थाने तरसम्, न धानादिस्थाने। इति प्राप्ते,

सवनीयपदवत्पुरोडाशपदेऽपि चार्थस्वभावात् प्राथमिक-सवनीयपदमेव सवनीयपशोर्देवतापरम्। प्रथमायास्तु द्वितीयार्थे लक्षणा उभयत्रादिशिद्धेव। अत सवनीयपशो-देशेनैव धानादिपञ्चकरणेन तस्य विधीयते। पुरोडाशपदं तु एवं तस्य च पुरोडाशवत्ससम्बन्धेन सवनीयपशोषु लाक्षणिकमनुवाद। इत्थं 'पुरोडाशानलङ्कुरु' इत्यादौ पुरोडाशशब्द, सवनीयपशुनिर्हृति पर इति तस्य सवनीय-यागलक्षकत्व सुस्थमेव। तदेवं मुख्यादिपर्यन्तं निरूपितम्। अत पर प्रयोगक्रम निरूपयिष्यते।

मण्डन— 'मांस त्रिधैव सवनीयकार्ये।'

शकर— 'तस्य सवनीयाङ्गम्।'

* मांसाधिकरणम्। ९।४।१३।३८–३९ वर्णक १. मीको पृ २२७३ 'धान्याधिकरणम्' इत्यत्र द्रष्टव्यम्।

* मासानशाने छेदनार्थं स्वधिति. स्वरु आम-स्यात्। मा. १।८।१४।२९.

* मांसपाक शामित्रे न आहवनीयादौ। भा. १२।२।१।२, * मांसपाकस्य वैहारिकेऽग्नौ अभाव.। १२।२।१।५.

* मांसपाकप्रतिषेधः योऽत्र वैहारिकेऽग्नौ स पशु-यागार्थ आहवनीये विहित तस्य स्यात्। अथवा दक्षिणेऽग्नौ पत्न्या सवनस्य श्रपणमाम्नातम्। यदा आग्नेय-दोषात् मास श्रपणार्थे उपादीयते तदा तत्र दक्षिणाग्नौ अप्रतिषिद्ध इति तस्य दक्षिणाग्नौ श्रपणश्रावणमासस्य दोष, श्रपण मासात् इति। भा. १२।२।१।७.

* मांसप्रसङ्ग न वैदिके, किन्तु लौकिके पाके। भा. १२।२।१।२

* मांसभक्षणम् 'यथैव सर्वाद्भीक्षित यथा मा-समासभक्षणम्। श्रेयसे विहित धर्मे न सर्वत्र निषि-ध्यते॥' पञ्चपञ्चनखैर्भक्ष्यादीषु मासभक्षणेषु प्रा-दिविधानिषेधात् सङ्कल्पस्य अन्यत्र कामचारे प्राप्ते तदकरणनियम. श्रेयसे विहित। यथाह 'न मांसभक्षणे दोषो न मद्ये न च मैथुने। प्रवृत्तिरेषा भूताना निवृत्तिस्तु महाफला॥' (मनु ५।५६) इति। वा. १।३।२।४ पृ. १९१.

* मांसमया पुरोडाशाः पर्यग्निकर्त वा. पशुविधा-तोत्सर्गे सिद्धान्ते। पूर्वपक्षे तु पिष्टमय. पुरोडाश.। भा. २।१।४।१२.

* मांसविक्रयिणो हि प्रत्यङ्गविभक्तानेव पशून् विक्रीणते। वा. ३।३।१०।२३

* मांसस्पर्शनमपि वैहारिकाग्नावस्मीना पशुत्व दृश्यत परिहृतम्। भा. १२।२।१।५.

ह्ल 'माजीवन् य: परानन्नाद् दग्धोऽपि जीवति' इति न्याय.। उक्तं च माघकविना 'मा-जीवन् य. परावज्ञादु.खदग्धोऽपि जीवति। तस्याऽजन-निरेवास्तु जननीक्लेशकारिण:॥' इति। साहस्री ५०१.

* माघ्या पौर्णमास्या पुरस्तात् चतुरहे गवामयन दीक्षा कर्तव्या, न चैत्रा: प्राक्। ६।५।९।३०–३७. मीको. पृ. १५४५ 'गवामयनस्य दीक्षा०' इत्यत्र द्रष्टव्यम्।

* माघकृष्णाष्टमी एकाष्टका नाम। वि. ६।५।१०.

* माघसप्तमीपौर्णमासीफाल्गुनीप्रतिपदन्त्येत्स्वा-दीना नियमक्रियमाणा न शास्त्रादृते किञ्चिदस्ति। वा १।३।३।७ पृ २०५। फाल्गुनीपौर्णमास्यनन्तरा प्रतिपदि वसन्तनिमित्त उत्सवः। मु. पृ १८७.

* मातुलकन्यापरिणयादीनां अननुष्ठानम्। भाट्ट. १।३।४ वर्णक २.

* मातुलदुहितृपरिणयनं अनाचार. वासुदेवा-र्जुनयो. दाक्षिणात्याना च। वा १।३।३।७ पृ २०३–२०४.

* मातुलदुहितृपरिणयनादिविषयाणा स्मृतिविरु-द्धाचाराणा कामादिहेतुत्वं स्पष्टमेव दृश्यते इति न कथञ्चिदपि श्रुतिमूलत्व सम्भावनीयम्। यदि मातुलदुहितृ-परिणयनात् प्रत्यवायोत्पत्ति. अनुत्पत्तिश्च भगवति इय-मस्यं अन्यतरस्याप्रामाण्य व्याश्रयणीयम्। तत्र वक्ष्यमाण-निमित्तस्य आचारस्य अप्रामाण्य इति सिद्धमेवतादृश-काना दुराचारत्वम्। शा. १।३।५ पृ. ३४.

* मातुलसुतापरिणयः केषुचित् दक्षिणदेशेषु क्रियते, स प्रमाणम्। इति चेत्, न, स्मृतिबाधितत्वात्। 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्॥' इति स्मृतेः। सदाचारश्च स्मृतिः प्रमाणम्। वि. १।३।९ वर्णकं २.

* मातुलसुतापरिणयनम् 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्॥' इतिस्मृतिनिषिद्धम्। अत्र मातुलसुतायाः पुनिराकरणादौ गान्धर्वादिविवाहादौ वा यत्र मातृगोत्रनिवृत्तिः नास्ति, तद्विषयो मातुलसुतापरिणयननिषेधः, न तु यत्र गोत्रनिवृत्तिः तद्विषयोऽपि इति चन्द्रिकादौ (स्मृतिचन्द्रिका) प्रपञ्चितम्। सोम. १।३।९ पृ. ३४.

* माता च परमं दैवतम्, सभा च पुत्रेषु इत्येतैरुपनिरूप्यमाणो (मातृशब्द) जननीवचनः अवगम्यते। माता पुत्रः पिता इत्येभिरप्यनुगम्यमानो धान्यस्य मातृवाचकः। भा. १०।१।७।१८. * 'माता भस्त्रा पितुः पुत्रः' (महाभारतम् १।९५।३०) इति सत्यपि दर्शने जनयितुश्च नात्मजातिरोपपत्तिः, तेन वर्णसङ्करः। वा. १।२।१।१३ पृ. १२८ ('येन जातः स एव सः' इति द्वितीयचरणः। सुधा)। * मातुरेव क्षेत्रिणो वा यदि पुत्रः स्यात् तनयस्तयोः प्रसिद्धजातिरतात् नैव (पुत्रजातेः) दुर्ज्ञानता भवेत्। वा. १।२।१।१३.

* मातृगणयागः नैमित्तिकः। नि. (गुरुमते) १।४।२

* मातृगोत्रा कुमारी न परिणेया। वि. १।३।९ वर्णक २.

* मातापितृगुर्वादिशुश्रूषा धर्मः। वि ५।१।४.

* मात्स्यन्यायः। प्रकम्पत्स्य निर्गमस्थान् नाश्यन्तीति न्यायार्थः। अत्र च वासिष्ठे प्रह्लादोपाख्याने तत्समाधि प्रस्तुतोक्तः 'एतावताऽपि कालेन नद्यस्तत् मण्डलम्। बभूवाराजकं वीक्ष्य मात्स्यन्यायकदर्थितम्॥' (योगवासिष्ठम् ५।३७।७) इति। मादस्ती. २३०.

* माथुरत्वम्। यथा मथुरामभिप्रस्थितो माथुर इति, मथुराया एतन् मथुराया निर्गतश्च (उच्यते)। यस्य तु अतोऽन्यतमः सम्बन्धो नास्ति न स माथुरः। तथा प्राचीनेषु नाना ■ दाक्षिणात्यादिकस्य आख्यया व्यवस्था। भा. १।३।७।२१। अत्र वार्त्तिकम्- यत्तु मथुरामभिप्रस्थितो माथुर इति भाष्यकारेणोक्तम्, तत् 'तद्गच्छति पथिदूतयोः' (पा. ४।३।८५) इति वा दूतविषयं व्यवस्थापयितव्यम्, अप्रत्यभिज्ञोक्तत्वाद् वा उपेक्षितव्यम्, सर्वस्मिन्नपि प्रस्थिते तद्धितस्मरणाभावात्।

* माध्यंदिनं सवनम्। 'पञ्चदशस्त्रिष्टुभो माध्यंदिनं सवनम्' इत्यत्र अनेकास्याकारोपदेशेन मानमानप्रधानविधिः। मणि पृ. १११. * माध्यंदिनः पवमानः। 'त्रिच्छन्दा आवापो माध्यंदिनः पवमानः पञ्चसामा' इति ज्योतिष्टोमे त्रीणि छन्दांसि। भा. १०।५।२।७. * माध्यंदिनः पवमानः त्रिच्छन्दस्कः। गायत्री बृहती त्रिष्टुभ् इति छन्दसाम्। वि १०।५।३, * माध्यंदिनः पवमानः नाम स्तोत्रं अग्निष्टोमे माध्यंदिने सवने प्रथमम्, चत्वारि च पृष्ठस्तोत्राणि इति पञ्च स्तोत्राणि माध्यंदिने सवने। ८।३।९ * माध्यंदिने पवमाने गानं आद्ये तृचे न तु तृचान्तरासु स्तोत्रियासु, पक्षविशेषे नवौ। १०।५।१०-१. मीको. पृ. ४५४ 'अन्यतरोपाधिकरणम्' इत्यत्र द्रष्टव्यम्। * माध्यंदिने पशुपुरोडाशेन चरन्ति सवनीयस्य पशोः। भा. ११।२।३।१४, * माध्यंदिने सवने एकादशकपालः सवनीयपुरोडाशः। १०।५।२९।८८. * माध्यंदिने सवने ग्रहाः पञ्च 'पञ्च माध्यंदिने गृह्णाति' इति वचनात्। सोम. ३।१।६. * माध्यंदिने सवने चत्वारि पृष्ठस्तोत्राणि सप्तदशस्तोमकानि ज्योतिष्टोमे। नि १।४।२. * 'माध्यंदिने सवने दक्षिणा नीयन्ते' ज्योतिष्टोमे। भा. १०।६।१८।६९, * माध्यंदिने सवने पौर्णदार्वेणाभ्यज्ञते अञ्जनाभ्यञ्जने नाम सत्रे। १०।८।६।१०, * माध्यंदिने सवने ब्रह्मसामकाले प्राजापत्यानामालम्भः श्रूयते 'तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभते' इति। ४।१।१८।३३, * माध्यंदिने सवने सरस्या दक्षिणा स्मृताः ज्योतिष्टोमे। १०।६।१८।६९. * 'आग्नावैष्णवमेकादशकपालं (निर्वपेत्), माध्यंदिने सारस्वतं चरुम्, बार्हस्पत्यं चरुम्' अभिचारकर्मणाम्। ११।२।८।२१,

* मानवीषु पञ्चदशानामेव सामिधेनीत्वम् । वि. १०।६।१९.

* मानसं अहः । 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' । द्वादशाहे 'दशमेऽहनि मानसाय प्रसर्पन्ति' । भा. १०।६।१३।३९–४०.

※ मानसमहरन्तरं स्याद् भेदव्यपदेशात् । १०।६।१३।३४॥

द्वादशाहे 'अनया त्वा पात्रेण समुद्रस्यापा प्रजापतये गृह्णामि इति प्राजापत्यं मनोग्रहं गृह्णाति' इति श्रूयते । इदं मानसं कर्म मानसो ग्रहः द्वादशाहात् अहरन्तरं भिन्नं अहः स्यात् । 'वाग् वै द्वादशाहो मनो मानसम्' इति ब्राह्मणात् मानसस्य भेदेन व्यपदेशात् । किञ्च 'वाग्वै द्वादशाहः' इति वाचा द्वादशाहः संस्तुतः, 'मनो मानसम्' इति च मनसा मानसं संस्तुतम् । वाङ्मनसयोश्च भेदः प्रसिद्धः, तेन द्वादशाहमानसयोरपि भेदो गम्यते । तस्मात् द्वादशाहात् मानसं भिन्नमहः इति पूर्वः पक्षः ।

तेन च संस्तवात् । ३५ ॥

तेन च मानसेन द्वादशाहस्य संस्तवात् द्वादशाहात् मानसं अहरन्तरं इति गम्यते । 'त्रिवृन्ति ह वै द्वादशाहस्य गतरसानि छन्दांसि, तानि मानसेनैव आप्याययन्ति' । द्वादशाहस्य यानि गतरसानि छन्दांसि तानि मानसेन आप्याययन्ति इति ब्रुवन् द्वादशाहात् मानसं भिन्नं दर्शयति । नहि स्वेनैव स्व उपस्तूयते । स्तुत्यस्तावकयोर्भेदाधीनत्वात् । तस्मात् द्वादशाहात् मानसं अहरन्तरं इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

अहरन्ताच्च परेण चोदना । ३६ ॥

प्राजापत्यो मानसो ग्रहः द्वादशाहाङ्गमपि सन् द्वादशाहात् अहरन्तरम् । कुतः ? अहरन्तात् । अह्नः अन्तः पत्नीसंयाजाः । 'पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति' इति पत्नीसंयाजान्तात् अहरन्तात् परेण परस्तात् मानसस्य चोदना भवति । तस्मात् मानसं द्वादशाहात् अहरन्तरम् । द्वादशाहिकानि गुणत्वे तु पत्नीसंयाजेभ्यः प्राक् स्यात् । परस्तात्तु अग्नौ विहितः । तस्मात् अहरन्तरं इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

षष्ठे संख्या सहत्ववत् । ३७ ॥

प्राजापत्यो मानसो ग्रहः द्वादशाहाङ्गमपि सन् द्वादशाहात् अहरन्तरं इति पूर्वपक्षिणा उक्ते सिद्धान्तिनः शङ्का । ननु एवं त्रयोदशसु अहःसु द्वादशाह इति संज्ञा नोपपद्यते इति । अत्रोच्यते । षष्ठे त्रयोदशाहत्वपक्षेऽपि संख्या सप्तविंशतिरात्रादिवत् द्वादशाहादीनां कर्मणामनामधेयत्वात् उपपद्यते । सहस्रवत् । यथा अतिरात्रः सहस्रमहानि 'अतिरात्रेण सहस्रसाव्येन यजेत' इति सहस्राधिकेऽपि सहस्रशब्दो दृष्टः तद्वत् । तस्मात् मानसं द्वादशाहात् अहरन्तरं इति पूर्वः पक्षः ।

अहरङ्गं वांऽशुवच्चोदनाऽभावात् । ३८ ॥

मानसो ग्रहः द्वादशाहाङ्गमपि द्वादशाहादहरन्तरं इति पूर्वपक्षे प्राप्ते सिद्धान्तयति । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । मानसो ग्रहः अहरङ्गं दशमस्य अह्नः अङ्गं स्यात् न अन्यदहः । चोदनाभावात् अहरन्तरप्रकल्पिकायाः चोदनायाः अभावात् । 'अनया त्वा पात्रेण समुद्रस्यापा प्रजापतये त्वा गृह्णामि इति प्राजापत्यं मनोग्रहं गृह्णाति' इति दशममहरधिकृत्य ग्रहचोदना एषा । अंशुवत्, यथा अंश्वदाभ्यौ विधीयमानौ यस्मिन् कर्मणि भवतः तत्परौ ग्रहाभ्यासौ इति विज्ञायते न कर्मान्तरे तद्वत् । तस्मात् दशमेऽहन्येव गुणविधिरयम् ।

दशमविसर्गवचनाच्च । ३९ ॥

सिद्धान्ते हेत्वन्तरमाह । 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' एष दशमस्य विसर्गः अन्तः यन्मानसं इति ब्रुवन् अन्तोऽयं दशमस्य न शक्यमेतत् कर्म इति दशमस्य अह्नः विसर्गस्य वचनं दर्शयति ।

दशमेऽहनीति च तद्गुणशास्त्रात् । ४० ॥

'दशमेऽहनि मानसाय प्रसर्पन्ति', 'दशमेऽहनि सार्पराज्ञीभिर्ऋग्भिः स्तुवन्ति' इति दशमे अहनि इति तद्गुणशास्त्रात् तस्य दशमस्याह्नः गुणस्य आम्नात् शासनात् मानसो ग्रहः दशमस्याह्नोऽङ्गं नाहरन्तरं इति सिद्धान्तः ।

सङ्ख्यासामञ्जस्यात् । ४१ ॥

द्वादशाह इति द्वादशसङ्ख्यायाः सामञ्जस्याच मानसो ग्रहः दशमस्याह्नोऽङ्ग इति । मानसस्य अहरन्तरत्वे तु त्रयोदशाहः द्वादशाह इति सङ्ख्यावचनं असमञ्जसं स्यात् । तस्मान्नाहरन्तर इति सिद्धान्तः ।

पश्वतिरेके चैकस्य भावात् । ४२ ॥

द्वादशाहे ऐकादशिनेभ्यः पशुभ्यः अहः अतिरेके आपादिते सति एकस्य अहः अधिकस्य भावात्, द्वयोरहोरभावात् मानसं न अहरन्तरं इति निश्चीयते । अहरन्तरत्वे तु द्वयोरतिरेकः स्यात् । अहा नवके त्रयोदशत्वात् पशूनां चैकादशत्वात् । ' नः पशुरतिरिच्यते स ऐन्द्राग्नः कार्यः ' इति एकादशिनीं द्वादशाहे विधाय विदधाना तस्य एकस्यातिरेकं दर्शयति । एकादश पशवः द्वादश अहानि । एकस्मादतिरेकः पुनः द्वादश एकान्यहानि इति गमयति । तस्मात् मानसं दशमाहः न कर्मान्तरमिति सिद्धान्तः ।

स्तुतिव्यपदेशमङ्गेन विप्रतिषिद्धं व्रतवत् । ४३ ॥

यदुक्तं पूर्वपक्षिणा ' मानसमहरन्तरं भेदेन व्यपदेशात् ' ( १०।६।१३।३४ ) इति ' तेन च मानसेन द्वादशाहस्य समानात् भेदः ' ( १०।६।१३।३५ ) इति च, तत्रोत्तरमाह सिद्धान्ती । अङ्गेन समुदायस्य स्तुतेर्व्यपदेश अविप्रतिषिद्धं मन्यामहे । व्रतवत् यथा महाव्रतधर्मेण मन्त्रसमस्तस्य । ' यन्ति वा एते मिथुनात् ये सत्त्रमुपयन्ति । अन्तर्वेदि मिथुनौ सम्भवतः, तेनैव मिथुनान्न यन्ति ' इति समुदायस्योपसमिधाय तत्रयत्र भूतस्य महाव्रतस्य धर्मेण अनुविभृङ्क्ते समुदायस्य आपधर्मेण स्तुतिं दर्शयति । लोकेऽपि ' दीर्घे केशैः शोभनो देवदत्त ' इति आयवधर्मेण अवयवी सम्भूयते । तस्मान्न दोषः ।

वचनादतदन्तत्वम् । ४४ ॥

यदुक्तं पूर्वपक्षिणा ' अहरन्तरत्वाच्च परेण चोदना ' ( १०।६।१३।३६ ) इति, तत्राह सिद्धान्ती । ' पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति ' इति वचनात् दशमस्याहः अतदन्तत्वं तदन्तताभावः पत्नीसंयाजान्तत्वाभावः । द्वादशाहिकानामह्नां सामान्येन पत्नीसंयाजान्तता, विशेषेण तु दशमस्याह्नो मानसान्तता उच्यते । अतो न दोषः । तस्मात् मानसं दशमस्याह्नोऽङ्गं न द्वादशाहादहरन्तरं इति सिद्धान्तः । के.

* मानसो ग्रहः द्वादशाहस्य दशमेऽहनि । तत्र ' द्वादशाहस्य छन्दांसि छन्दांसि, तानि मानसेनाऽऽप्याययन्ति ' इति मानसेन द्वादशाहस्तुतिः । ' वाग्वै द्वादशाहः, मनो मानसम् ' इति व्यपदेशभेदः । ' एष वै दशमस्याह्नो विसर्गो यन्मानसम् ' इति विसर्गोक्तिः । वि. १०।६।१३. * मानसे ज्ञाने चाक्षुषादिसामग्री प्रतिबन्धिका । मणि. पृ. ६३.

* मानसान्तता दशमस्याह्नो न पत्नीसंयाजान्तता द्वादशाहे । भा. १०।६।१४।४४

* मानसमहान्तता वचनेनोक्ता द्वादशाहगतस्य दशमस्याह्नः । भा ९।१।९।२९.

* मानसप्रत्यक्षे महत्त्वं हेतुरिति केचित्, नेत्यन्ये । मणि. पृ २१.

‡ मानससंज्ञको ग्रहः द्वादशाहदशमाहाङ्गम् । मानसाधिकरणम् । मानसग्रहाधिकरणम् ॥

मानसमहरन्तरं स्याद्भेदव्यपदेशात् । १०।६। १३।३४ ॥

भाष्यम्— द्वादशाहे श्रूयते ' अनया त्वा पात्रेण समुद्रं रसया प्राजापत्ये जुष्टं गृह्णामीति प्राजापत्यं मनोग्रहं गृह्णाति ' इति । तत्र संशयः किं मानसमहर्द्वादशाहादहरन्तरं उत अहरङ्गमिति । तत्र कानिचित् भेदकारणानि प्रतिभान्ति । तानि सिद्धान्तयिष्यन् आचार्य उपन्यस्यति ' मानसमहरन्तरं स्यात् ' इति । कुतः ? भेदेन व्यपदेशात् । द्वादशाहाद्भेदेन व्यपदिश्यते । कथम् ? ' वाग्वै द्वादशाहो मनो मानसम् ' इति द्वादशाहादन्यमेव मानसं व्यपदिशति, ' वाग्वै द्वादशाहः ' इति वाक्सत्त्वात्, ' मनो मानसम् ' इति च मनःसत्त्वात् । यथा वाङ्मनसयोर्भेदो वस्तुतोऽवगम्यते एवमेतयोरपि द्वादशाहमानसयोः । यत्र पृथक्त्वे सति भेदेन व्यपदेशो भवति, नान्यथा । अतो भिन्नते एवाहरिति व्यपदेशाद्गम्यते ।

तेन च संस्तवात् । ३५ ॥

भाष्यम्— इतश्च अहरन्तरमेव । कुतः ? तेन मानसेनाह्ना द्वादशाहः संस्तूयते । कथम् ? 'विप्रुषानि ह वै द्वादशाहस्य गतरसानि छन्दांसि, तानि मानसेनैवाऽऽप्याययति' इति । द्वादशाहस्य यानि गतरसानि छन्दांसि तानि मानसेनाऽऽप्याययन्ति इति ब्रुवन् भिन्नं द्वादशाहाद् दर्शयति । कथम् ? स्तवनात् । न हि तेनैव आत्मना तस्य संस्तुतिर्भवति । कुतः ? अत्यन्तमेदात् स्तुतिस्तुत्ययोः । न हि देवदत्तो देवदत्तेन स्तूयते । भिन्ने हि पाण्डित्ये सम्भवति । तदिहापि द्वादशाहो मानसेन स्तूयते इति संस्तवाद्भेदोऽधिगम्यते इति ।

अहरन्त्वाच्च परेण चोदना । ३६ ॥

भाष्यम्— इतश्च अहरन्तरमेवेति गम्यते । कुतः ? द्वादशाहाद् अहरन्तरेण चोद्यते 'पत्नीं संयाज्य प्राच उदेत्य मानसाय प्रसर्पन्ति' इति । तस्मिन् द्वादशाहिके स्याहो गुणविधिर्भवेद् द्वादशाहिकी पत्नीसंयाजान्तता स्यात् । अथ त्वहरन्तरं भवति, ततो द्वादशाहिकन्यायप्राप्तः धर्मो नाऽस्येति न दोषो भविष्यति । अतोऽपि चैतदहरन्तरमिति गम्यते ।

पक्षे संख्या सहस्रवत् । ३७ ॥

भाष्यम्— परिचोदनापरिहारोऽयम् । निमित्त परिचोदना ? नन्वेष द्वादशाह इति त्रयोदशत्वे तु नोपपद्यते । अत्रोच्यते । यदा प्रमाणान्तरेण शब्दः एतस्मिन्नर्थे प्रयुक्त इति गम्यते, तदा संख्याधिक्यात् त्रयोदशसु गुणवृत्त्या प्रयोगं मेत्स्यति । यथा 'अतिरात्रसहस्रमहानि', 'अतिरात्रेण सहस्रसाव्येन यजेत' इति अतिरेकेऽपि सहस्रे सहस्रशब्दो दृष्टः, तद्वदिहाप्यधिके भविष्यति । अथवा कर्मणामनामधेयमेतत् द्वादशाह इति । शंसन्ति कर्माण्यङ्गीकृत्य प्रयुक्तत्वात् वाचक इति निश्चीयते । कर्माणि प्रकरणादङ्गीकृत्य प्रयोगात् सर्वेषां वाचको भविष्यतीति न दोषः ।

अहरङ्गं वाऽंशुरचोदनाऽभावात् । ३८ ॥

भाष्यम्— दशमस्याह्नो गुणस्य विधिः स्यात्, नाहरन्तरचोदना । कुतः ? अहरन्तरप्रत्यक्षस्य वचनस्य अभावात् । कथम् ? एवं तावत् श्रूयते 'अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मुखं गृह्णामीति प्राजापत्यं मनोग्रहं गृह्णाति' इति । दशममहरङ्गीकृत्य ग्रहचोदनैषा । गृह्णातीति संस्कारविधानात् । न च संस्कारभेदे कर्मभेदो भवति । 'अचोदकाश्च संस्काराः' ( २।२।६।१८ ) इत्युक्तम् । 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र' ( २।१।३।८ ) कर्म न प्रधानमिति । यथा आभ्यां चिकीर्षमाणो न कर्म भिद्यते । यस्मिन् कर्मणि मानसग्रहणं तदहः प्रत्याम्नायते इति विज्ञायते, न कर्मान्तरं इति । यदि चाहरन्तरमेतत् भवति न कर्मान्तरम् । दशमत्वमीयम्येत अदृष्टानुमानप्रसङ्गकल्पना भविष्यति, प्रकृतत्यागश्च, नामकृतप्रक्रिया निराकरणं च । अतो नाहरन्तरम् । दशमे एवाहनि गुणविधिरिति ।

दशमविसर्गवचनाच्च । ३९ ॥

भाष्यम् — इतश्च नाहरन्तरम्, तत्रैव गुणविधिः । कुतः ? दशमविसर्गवचनात् । दशमविसर्गवचनं हि भवति 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इति । एष दशमस्य विसर्गः अत्र यन्मानसमिति ब्रुवन् अन्तोऽयम् अस्मात् दशमस्य, न स्वतन्त्रमेतत्कर्मेति दर्शयति । तस्मादपि दशमस्याङ्गम्, नार्थान्तरमिति गम्यते ।

दशमेऽहनीति च तत्संख्याशासनात् । ४० ॥

भाष्यम्— इतश्चाङ्गम् । कथम् ? एवं गुणप्रयोगयुक्तं भविष्यति 'दशमेऽहनि मानसाय प्रसर्पन्ति' इति, 'दशमेऽहनि सार्पराज्ञीभिर्ऋग्भिः स्तुवन्ति' इति । दशमस्याह्नः प्रधानभावेन निर्देशात्, ग्रहस्य आधेयभावेन, तस्मात् तस्य गुणोऽयं दशमस्य, नार्थान्तरमिति गम्यते ।

संख्यासामञ्जस्यात् । ४१ ॥

भाष्यम् — यदि च गुणोऽयम्, एवं संख्या सम ञ्जसा भविष्यति द्वादशाह इति । इतरथा त्रयोदशसु द्वादशाह इत्यसमञ्जसं संख्यावचनं स्यात् । अथान्यत्वात् । यदुक्तं गुणवृत्त्या सहस्रशब्दवद्भविष्यतीति, तदनुपपन्नम् । कुतः ? तत्र हि प्रमाणान्तरेण संख्येयानामाधिक्ये सहस्रशब्दो गौण्या वृत्त्या प्रयुक्त इति निश्चीयते । न त्विह संख्येयातिरिक्ते प्रमाणमस्ति, येन गौणीं वृत्तिमाश्रीयेत । यद्प्येतत् 'अनया त्वा पात्रेण' इति वचनम्,

तदपि ग्रहग्रहणविधानाद्दशमेऽहनि यागान्तरं विधत्ते, न कर्मान्तरमिति समधिगतम् । एवं चेत्, नैतदयुक्तं वचनमहरन्तरप्रशस्तम्, नान्यत्प्रमाणान्तरं प्रापकम्, येन सत्यर्थेऽतिरिक्तो शब्दप्रयोग इत्यध्यवस्याम । तस्मादिह गौण्या वृत्त्या प्रयोग इति । यदपि कर्मगण नामधेयत्वात् प्रकरणान्तरेण भक्तत्वमङ्गीकरणात् नामधेय रूपेण वा वृत्तिर्भविष्यतीति । तदपि न युक्तम् । सत्य कर्मगणनामधेयमेतत्, न स्वयथार्थनामधेयेन । द्वादश एतानि कर्माण्यहोभि परिमितान्येकत्र समाहृतानीत्यनेन रूपेण तत्कर्मगणस्य नामधेयम्, न वर्णानुपूर्व्यमात्रेणेति । तथा हि सर्वेष्वेव कर्मनामधेयेष्वर्थतस्तत्प्रत्ययेनानुवाद भूतो नामशब्दो वर्तते, न रौढिकार्थतिरस्कारेण परि भाषामात्रेण प्रवृत्तिगुणकत् । यथा अग्निहोत्र श्येन ज्योति ष्टोम इति । एवं द्वादशाह इत्यर्थान्वयेन नामधेयम्, नार्थाभावेनेति । तस्मादपरिचोदनैषा ।

पशुविशेषे चैकस्य भावात् । ४२ ॥

भाष्यम्— द्वादशाहत्वमिति विज्ञायते । कुत ? पशुविशेषेणैकस्यातिरेकं दर्शयति, न द्वयो । कथम् ? 'य पशुरतिरिच्येत स ऐन्द्राग्न कार्य ' इति एकादशिनीं द्वादशाहे विधाय विद्यमानस्यैकस्यातिरेकं दर्शयति । तत्र तावदतिरिच्यते, द्वयो न भवति । कथम् ? एकादश पशव, द्वादशाहानि । एकस्यातिरेक युक्तं द्वादशैतान्यहानीति गमयति । यदि त्रयोदशाहानि स्यु द्वयोरभाव स्यात्, नैकस्येति । तस्मादप्यहरेव न कर्मान्तरमिति ।

स्तुतिव्यपदेशमङ्गेनाविप्रतिषिद्धं भवत्वम् । ४३ ॥

भाष्यम् – अस्मिन् सूत्रे द्वयो सूत्रयो परिहार उच्यते । यदुक्तम्, मानसमहरन्तरम्, भेदेन व्यपदेशात् । तेन च मानसेन स्तुवानाद्ध । न ह्यात्मनैव आत्मा संस्तूयते इति । अत्राभिधीयते । नैतद्विप्रतिषिद्धम् । अङ्गे नापि समुदायस्य स्तुतिर्दृष्टा । यथा महाव्रतधर्मेण संवत्सर-सत्रस्य । ' यन्ति वा एते मिथुनात् संवत्सरमुपयन्ति । अन्तर्वेदि मिथुनौ सम्भवतस्तेनैव मिथुनान्न यन्ति ' इति समुदायैकदेशमभिधाय तदवयवभूतस्य महाव्रतस्य धर्मेणानु निष्पन्नं समुदायस्यावयवधर्मेण स्तुतिं दर्शयति । लोकेऽप्यवयवधर्मेणावयवी सम्पूयते एवेति । यथा दार्घे नेत्रे शोभनो देवदत्त इति । तद्वदिहापि द्वादशाह समा निष्पन्न इति न दोष ।

वचनादवदन्तत्वम् । ४४ ॥

भाष्यम्— यदुक्तम्, यद्यहरन्तरमेतत्, एवं द्वाद शाहधर्मवैलक्षण्यं मानसान्तता युक्ता भविष्यति, न तद् युज्यते । पत्नीसंयाजान्तता भवेदिति । अत्र वदाम । वचनादवदन्तत्वं भविष्यति । द्वादशाहिकानामह्नां सामान्येन पत्नीसंयाजान्तता । विशेषेण तु दशमस्याह्नो मानसान्तत्वोच्यते ' पत्नी संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति ' इति । नास्ति वचनस्यातिभार । तस्मादयं दोष । अतो दशमस्याह्नो मानसमङ्गं न सत्रमिति ।

सोम— मध्यगतस्य सत्रद्वादशाहाङ्गत्वेऽपि मान सस्य न द्वादशाहाङ्गत्वमित्युत्थानात् सङ्गति । प्रयो जनम्– विकृतिषु दशरात्रप्रवृत्तौ मानसस्याप्रवृत्ति पूर्वं पक्षे । सिद्धान्ते त्वङ्गत्वात् प्रवृत्ति ।

वि— ' मानसं किमहर्भिन्नमङ्ग वा दशमेऽहनि ।, भिन्नं स्तुत्यादिना, ऽङ्ग तद् विसर्गोक्त्यादिभिर्भवेत् ॥ '

भाट्ट— द्वादशाहिके दशमेऽहनि ' प्राजापत्यं मानसं ग्रहं गृह्णाति ' इति श्रुतम् । तत्र किं द्रव्यान्तर विधि उत दशमस्याहत्वेन ग्रहणान्तरमात्रविधि इति चिन्तायाम्, ' सर्वे द्वादशाहो मनो मानसम् ' इति भेदव्यपदेशात् ' विधूतानि वै द्वादशाहस्य गतश्रीणि छन्दांसि तानि मानसेनैवाऽऽप्याययति ' इति मान सेन द्वादशाहस्याप्यायनकथनेन भेदानुमानादहरन्तरविधि मन्यन्ते । द्वादशाहपदं स्वव्युत्पत्त्यनुसारत्त्रयोदशाहे लक्ष वा । इति प्राप्ते, भेदव्यपदेशस्य अवयवावयविभेदाद प्युपपत्ते ग्रहणविधायकस्याप्य यागान्तरविधायकत्वे प्रमाणाभावात् द्वादशाहपदस्य लक्षणाकल्पने प्रमाणाभावाच्च तत्रैव ग्रहणान्तरविधि । अत एव दशमेऽहनि ' मानसाय प्रसर्पन्ति एष वै दशमस्याह्नो विसर्गो यन्मानसम् ' इत्या दिलिङ्गान्यप्युपपद्यन्ते । विसर्गो अन्त । किञ्च एकादशिनीं विधाय ' अथ य पशुरतिरिच्यते स ऐन्द्राग्न कार्य ' इत्येकस्यैव पशोरतिरेकं दर्शयति न द्वयो । या तु सर्वेषामह्नां पत्नीसंयाजान्तत्वात् ' पत्नी

सयाजम मानमाय प्रसर्पन्ति ' इति मानसस्य बहिर्भावावगतिः, या पत्नीसंयाजान्तत्वस्य सामान्यविहितत्वात् दशमाहर्व्यतिरिक्तविषयत्वोपपत्तेर्निरस्ता । अतो विकृतिषु द्वादशाहे प्रवर्तमाने दशमाहाङ्गत्वेन मानसग्रहस्यापि प्रवृत्तिः, अहरन्तरत्वे बाध इत्यध्याहसगति ।

मण्डन— ' न मानसमहरिष्यम् । '

शंकर— ' नाहरन्तरमानसं स्यात् । '

✽ मान्त्रवर्णिको देवताविधिः दर्शपूर्णमासयोरुत्तमप्रयाजे । टुप्. १०।२।७।२४. ✽ मान्त्रवर्णिको देवताविधि: प्रयाजेषु । समिधादिशब्दास्तु कर्मनामधेयम् । भा. ९।२।२०।५९-६०, ✽ मान्त्रवर्णिको द्रव्यनियमविधिः ( अग्नीषोमीये पशौ ) । ६।८।१०।३२, ✽ मान्त्रवर्णिकी देवता आघारे ' इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति ' इति । १।४।३।४.

✽ मान्त्रवर्णिकदेवताकल्पना आघारादिषु क्रियमाणा मन्त्राकाङ्क्षया वचनविनियोगग्रहणान भवति । सर्वजनमन्त्रार्थं देवताविधि. । न्या. १।४।६।९ पृ. २४१.

✽ मान्त्रवर्णिकदेवताकल्पनातश्च परमाराद्गुपकारकत्वम् । भा. २।२।३।३ पृ. ४७९.

✽ मान्त्रवर्णिकद्रव्यकल्पनायां अपि गौरवम्, ' उद्भिदा यजेत ' इत्यादौ । भा. २।४।१।१.

✽ मान्यानां निमन्त्रणे भोजनार्थमागमन न भवति । स्नेहातिशयेन तु पूज्याना अनिमन्त्रितानामपि स्वयमेव भोक्तुमागमन दृष्टम् । वि. १०।१।१ वर्णक ३.

✽ मायावादी नामरूपप्रपञ्चस्य असत्त्वं प्रति जानीते । तत्र ग्रन्थविशेष. । रत्नाकर. पृ. ३६५.

▣ मायिका गुणा वास्तवं निर्गुणत्वं न विघ्नन्तीति न्याय । यथा सत्त्वप्रभादिगुणा अपाणिपाद् इति प्रकृतिनिर्गुणत्वमीश्वरस्य न निवारयन्तीति भाव. । साहस्री. ७८५.

▣ मारणाय गृहीतोऽङ्गच्छेदं स्वीकरोतीति न्यायः । स्पष्ट. । साहस्री. १४१.

✽ ' मारुत. सप्तकपाल: ' ऐकादशिनेषु अष्टम. पशु अग्नीषोमे ज्योतिष्टोमे च । वि. ८।१।७. ✽ ' मारुती आमिक्षा ', ' वारुणी आमिक्षा ' वरुणप्रघासेषु । भा. ११।२।१५।६२. ✽ मारुती मेषी दक्षिणविहारे हविश्च्यै वरुणप्रघासेषु आसमन्यनादेः पुनर्विधिः चातुर्मास्येषु । ७।१।३।२१, ✽ मारुती आमिक्षा दक्षिणे विहारे कर्तव्या वरुणप्रघासेषु । ११।२।९।३९, ✽ मारुतीमेव दक्षिणस्मिन् विहारे आसादयति इति वचनेन मागचोदना भवति । १।२।९।१९ ✽ मारुतीमेव ( आमिक्षा ) प्रतिप्रस्थाता दक्षिणस्मिन् विहारे आसादयति वरुणप्रघासेषु, तत्र पृथग्मन्त्राम्नानम् । ११।२।९।३९-४३. ▪ ' मारुतीं पृश्निम् ' इति राजसूये पशुः पृश्नि मरुत्तनुः । वि. ४।४।१. ✽ मारुत्याः भेदे प्रयाजादीना भेदेन क्रिया वरुणप्रघासेषु । भा. ११।२।१०।४५.

✽ मारुतसप्तकपालस्य ऐन्द्राग्नविकृतित्वं व्यक्षरदेवताविशिष्टत्वात् । बाल. पृ. १२०.

✽ मारुत्यर्थं दक्षिणविहारे पृथगङ्गानुष्ठानं चातुर्मास्येषु वरुणप्रघासेषु । भा. ११।२।९।३५-४३.

✽ मार्जनं परिधिधर्मः अग्निपरिधानार्थमनुष्ठीयते । वि.१२।२।१०.

✽ मार्जनादयः परिधिधर्मा. अग्निपरिधानार्थमनुष्ठीयन्ते । न्यूनहितत्वं समानत्वं इत्यादय परिधिधर्मा । वि १२।२।१०-११.

✽ मार्जालीयस्य चतुर्थीर विहरण सोमे । संकर्ष. ३।२।१६.

▣ मार्दवे बहवो दोषा इति न्याय. । अर्थ च मानकनिना विवृतः ग्रन्थान्तरेण । तथाहि ' तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् । हिमांशुमाशु ग्रसते तन्म्रदिम्न स्फुट फलम् ॥ ' इति । साहस्री. ८३०.

▣ मालतीपुष्पमर्दमना इन्तुमीहते इति न्याय" । मालतीति पुष्पविशेषस्य नाम । तामर्दमना पाषाणेन हन्तुमीहते यतते इति भावः । नयोग्यप्रमेलने अस्य प्रचारः इति । साहस्री. ७३७.

▣ ' माल्यं कस्य विचित्रपुष्परचितं प्रीत्यै न संजायते ' इति न्याय" । सर्वसुन्दरपदार्थे सर्वजनाभिरुचितत्वविवक्षायामस्तरन्यायम् । साहस्री ८८१.

० मापादे प्रतिषिद्धस्य द्रव्यस्य न प्रतिनिधित्वम्। ( ' अयज्ञिया वै माषा ' इति माषप्रतिषेध )। ६।३।६।२० मीको पृ २०१७ ' प्रतिनिधिना प्रतिषिद्धस्य० ' इत्यत्र द्रष्टव्यम्।

० माषपाकाधिकरणम्। ' माषानेव मह्यं पचत ' इत्यपवाद। ६।७।१२।२६-३० मीको पृ २४४८ ' परकृतिपुराकल्पाधिकरणम् ' इत्यत्र द्रष्टव्यम्।

० माषपाकसम्बन्धो न केवल कर्मणोर्णि किन्तु सर्वेषामेव। ' अनुसन्धेयस्तु स्तुत्यथा ' इति द स्माह बर्हिषि माषानेव मह्यं पचत न मा एवेषां हविर्गृह्णाति ' इति। ( पुराचिन्तेयम्। वस्तुतस्तु माषपाको न कस्यापि, आम्नानमस्य तु स्तुतिरेषा। माषास्तु निषिद्धा एव यज्ञिये कर्मणि )। वि ६।७।१२

० ' मासमग्निहोत्रं जुहोति ' इत्यग्निहोत्रशब्द जुहोतिना समानाधिकरण्यात् कर्मपर। वि ७।३।१८ ० ' माममग्निहोत्रं जुहोति ' इत्यग्निहोत्रशब्द ( अग्निहोत्रशब्दो यथा नित्याग्निहोत्रधर्मलक्षकस्तथा ' अदेयाद् पौर्णमासं हवि ' इति ) पौर्णमासशब्द धर्मलक्षक ( इति सिद्धान्त्येकदेशी )। सोम ७।४।४ ० ' मासमग्निहोत्रं जुहोति ' इति कुण्डपायिनामयन नित्यादग्निहोत्रात् कर्मान्तर विधीयते, न तु मास काले विधीयते। भा ७।३।१।१२८ ० ' मासमग्निहोत्रं जुहोति '। न चात्र गुणविधि तद्विधायकाभावात्। टुप् ७।३।१।२ ० ' मास दर्शपूर्णमासाभ्यां यजेत ' इति कर्मान्तरविधिर्न मासगुणविधि कुण्डपायिनामयने। वि ७।३।११ ० मासं दर्शपूर्णमासाभ्यां यजेत ' इति प्रत्यह याग कुण्डपायिनामयने। सरूपं ३।१।२५ मीको पृ १८६८ ' कुण्डपायिनामयने मास० ' इत्यत्र द्रष्टव्यम्। ० ' मासेन यज्ञो भवति आज्ञप्त सीगविनयात्। ' इत्यादय प्रायश्चित्तविधिशेषभूता निन्दार्थवादा न त्वाति नाद्यन्त। सरूपं ३।८।७ ० ' मासेन यज्ञो भवति ' इत्यादयो निन्दाऽर्थवादवचनानि, अथवा त्वगर्वधर्महानिविषयार्थानि इति वक्तव्यम्। वा १।२।१।२ पृ ११०

० मासाग्निहोत्रस्य नित्याग्निहोत्र प्रकृति। वि ७।३।१ ० मासाग्निहोत्रे कुण्डपायिनामयनगते अग्नीषोमीयात् प्राचीनेऽपि उपांशुत्वस्य सम्बन्धो नास्ति, तस्य परमापूर्वप्रयुक्तत्वाभावात्। भा ९।१।६।२०-२२, २५

## मासाग्निहोत्रन्याय। अग्निहोत्रादिनाम्ना धर्मातिदेश। अग्निहोत्रनामन्याय। अग्निहोत्रशब्दन्याय॥

उक्त क्रियाभिधान तच्छ्रुतावन्यत्र विधिप्रदेश स्यात्। ७।३।१।१॥

**भाष्यम्**— नाम्ना धर्मप्रदेश वक्ष्याम इति प्रतिज्ञातम्। सोऽयमुच्यते। कुण्डपायिनामयने श्रूयते ' मासमग्निहोत्रं जुहोति ' इति। तत्रैतत् समधिगतं नैयमिकात् अग्निहोत्रात् कर्मान्तरमेतत् इति ( २।३।११ )। अधुना अग्निहोत्रशब्द चिन्त्यते कथमयं प्रयुक्त इति। तदयमारभ्यते। ' उक्त क्रियाभिधान तच्छ्रुतावन्यत्र विधिप्रदेश स्यात् ' इति। उक्तमाग्नौ क्रियाऽभिधानमेतन् नामधेयं अग्निहोत्रशब्द इति ' तत्प्रख्यं चान्यशास्त्रम् ' ( १।४।२।४ ) इत्यत्र। तस्यास्य श्रुतौ कौण्डपायिनामयनीये जुहोतौ विधिप्रदेश स्यात् धर्मप्रदेश। नैयमिकस्याग्निहोत्रस्य ये धर्मा ते अस्मिन् अनेन नाम्ना अतिदिश्येरन्। किं कारणम्? उच्यते। परशब्दोऽयमन्यत्र वृत्त। परशब्दस्य परत्र वृत्तौ तद्धर्मा गम्यते। न यत्र नियतो भवति तत्रानूद्यते। यथा सिंहो देवदत्त इति। यत्र भविष्यत तत्र विधीयते, यथा अग्निष्टोमेन सिंहा निपतन्ता इति। चाग्निहोत्र अत्र जुहोतेः अग्निहोत्रशब्दात्। तस्मात् न विधीयते। ' मासमग्निहोत्रं जुहोति ' इति अग्निहोत्रवत् जुहोति इति। कथं पुन अनति शक्तिप्रत्यये अन्यत्र शब्दोऽयं गन्तु इति। उच्यते, साहचर्यात्। अग्निहोत्रशब्दोऽयं कर्मणा सह तत्सहचरितैश्चाग्न्यादिधर्मैश्च लक्षणा शक्नोति गमयितुम्। शक्नोति चेद्गमयितुं प्रवेष्टुमपि शक्ष्यति। एवमन्तरेणापि वर्ति वन्यर्य शब्दोऽन्तर्गन्तुमिति।

टुप् — नैयमिकस्य अग्निहोत्रशब्दो नामधेय इत्युक्तम्। पुनरुच्यमानो धर्मातिदेशो भवति। कथम्?

अग्निहोत्रस्य या अवगता इतिकर्तव्यता तां शक्नोति लक्षयितुं विनापि वृत्तिना । न मासशब्दसंयोगात् । न चायं गुणविधिः तद्धितचतुर्थ्योः अभावात् । उच्चार्यमाण एव विज्ञात नामनि अवरोधयति । उभयत्र नामधेयमिति चेत् , तत्र, नामधेय विशिष्टे भवति । न चेह विशिष्टताऽस्ति, द्रव्यदेवताऽभावात् । उभयत्र च नामधेयत्वे अदृष्टा शक्तिः कल्प्या ।

अपूर्वे वाऽपि भागित्वात् । २ ॥

भाष्यम्— वाऽपीति विपर्यासेन प्रयुङ्क्ते, अपिवेत्यर्थः । अपिवा अपूर्वे एते उभे अपि कर्मणी स्याताम् । न कौण्डपायिनामयनीयो जुहोतिः नैयमिकपूर्वः । साधारण च नामधेयमुभयोः । कुतः ? भागित्वात् । अयमपि जुहोतिः भागी एतस्य नामधेयस्य । यथैव तत्र ' अग्निहोत्रं जुहोति ' इति समुच्चारणम् , एवमिहापि । तत्र तुल्ये समुच्चारणे तस्यैव एतन्नामधेयं नास्य इत्यत्र विशेषहेतुर्नास्ति । तस्मादुभयोः साधारणं नाम इति नास्ति धर्मप्राप्तिः ।

नाम्नस्त्वौत्पत्तिकत्वात् । ३ ॥

भाष्यम्— नैतदुक्तम् । कुतः ? नाम्नस्त्वौत्पत्तिकत्वात् । औत्पत्तिको हि नामिनाम्नोः सम्बन्धः । यस्मिन्नर्थे औत्पत्तिकेन सम्बन्धेन प्रसिद्धं तस्मिन्नेव सदा निवेश नान्यत्र च । तथा अन्यत्रस्यापि शब्दार्थे विश्वासो न स्यात् । उक्तं अन्याय्यश्चानेकार्थत्वम् इति । यथा च लोकप्रयोगः तथा नैयमिके तावद्यागे । तस्मादस्यापि अभिधानं चेतरस्यापि प्रयोग उपपद्यते इति नास्ति इत्याभिधानत्वे हेतुः । तस्मात् निवेशेन स्यात् ।

प्रत्यक्षाद् गुणसंयोगात् क्रियाऽभिधानं स्यात् तदभावेऽप्रसिद्धं स्यात् । ४ ॥

भाष्यम्— अथाह । कस्मात् पुनः तन्नामधेयं इद इह प्रयुक्तमित्युच्यते, न पुन एतन्नामधेयं तस्येति । तत आह ' प्रत्यक्षाद् गुणसंयोगात् क्रियाभिधानं स्यात् तदभावेऽप्रसिद्धं स्यात् ' । नैयमिके अग्निहोत्रे प्रत्यक्षो गुणसंयोग । प्रत्यक्षविहिता धर्माः सन्ति । इत्थ दोग्धि, इत्थ श्रपयति, चतुरुन्नयति, इत्यादिना अग्निहोत्रमिदं भवति, इत्थं जुहोति, एतस्मिन् काले जुहोति, इत्येव प्रत्यक्षात् गुणसंयोगात् नैयमिकस्य तन्नामधेयम् । इह प्रयुज्यमानं दोहनादिक्रियाभिधानं स्यात् । धर्मप्रदेशकमित्यर्थः । अस्य पुनर्जुहोतेः न केचिद्धर्माः सन्ति । तदभावे नैषां धर्माणामभावे अप्रसिद्धं स्यात् , न प्रज्ञायेत किमर्थमयमग्निहोत्रशब्द इह प्रयुक्त इति ।

एवं वा । प्रत्यक्षो गुणसंयोगो नैयमिकस्य द्रव्यदेवतासंयोगः । ' दध्ना जुहोति ', ' पयसा जुहोति ', ' अग्नये च प्रजापतये च सायं जुहोति ' इति । एतस्मात् प्रत्यक्षात् गुणसंयोगात् क्रियाभिधानं स्यात् , कर्मनामधेयम् । इत्यस्यो जुहोतेः अग्निहोत्रनाम इति । अथ इतरजुहोतेः रूपं नास्ति । तदभावे अप्रसिद्धं स्यात् , न ज्ञायेत कीदृशं तदग्निहोत्रमिति । ननु मासोऽस्य रूपं भविष्यति । न मासः कर्माङ्गम् , कर्तृधर्मः सः । अपि च अग्निहोत्रं तु मासे विधीयते, न मासेन अग्निहोत्रं रूप्यते । तस्मात् नैयमिकस्य एतन्नामधेयम् , इतरत्र तद्वद्भावनिर्देशः इति ।

शा— कुण्डपायिनामयने श्रूयते ' मासमग्निहोत्रं जुहोति ' इति । तत् नैयमिकाग्निहोत्रात् कर्मान्तर इति स्थिते ( २।३।११२४ ) सन्देहः किमयं अग्निहोत्रशब्दः नैयमिकाग्निहोत्रधर्माणामतिदेशकः उत नेति । ' उभयोरविशेषेण सामानाधिकरण्यतः । नामधेयमिदं तस्मान्न धर्मानतिदेक्ष्यति ॥ एकस्य त्वभिधेयत्वे गौणत्वेनापि सम्भवात् । नान्यस्याप्यभिधेयत्वमनेकार्थत्वदोषतः ॥ ' न च अग्निहोत्रमाणविशेषार्थं नैयमिके अग्नये होत्र इत्येव प्रवृत्तिनिमित्त सम्भवति । कारणं तु अतिदेशस्य नावगतम् । अधर्मकस्य कौण्डपायिनः, तद्वचनत्वे सति न गौणत्वं नैयमिकस्य युज्यते । नैयमिकस्तु धर्मवान् । अतस्तन्नामेद तत्सादृश्यविवक्षया अन्यत्र प्रयुज्यते । सादृश्यं च धर्मनिमित्त अतो धर्मातिदेशोऽयं ' मासमग्निहोत्रं जुहोति ' इति ।

सोम— प्रत्यक्षवचनस्य प्रथम बुद्धौ आरोहात् तन्निमित्तधर्मनिर्देश पादद्वयेन विचार्य कल्पनीयवचनार्थतया तत्र विस्मितः नामधेयनिमित्त. अतिदेश. तृतीयपादे प्रस्तूयते । सूत्रार्थस्तु— अग्निहोत्रशब्दः कर्मनामधेय-

* मासाग्निहोत्रमासदर्शपूर्णमासकर्मभेदाभेदविचार । अथ 'मासमग्निहोत्रं जुहोति' इत्यत्र कर्मभेदो नैयमिकाग्निहोत्रकर्माभेदो वेति चिन्त्यते । तत्र पूर्वपक्ष, 'तिस्र आहुतीर्जुहोति' इत्यादौ अत्र न्याय स्थित 'यत्र गुणद्वये अन्योन्यविरुद्धे कर्मोत्पत्ति वाक्योपात्ते भेदाद्द्वयो अन्यतराक्षेपमन्तरेण कर्मान्तरोऽनुपपन्नस्तत्र भेद एवाश्रियते नाहुति' इति । मासाग्निहोत्रवाक्ये च नामातिदेशेन परस्परविरुद्ध सायमात-कालद्वय कर्मोत्पत्तिवाक्यगतमस्ति । तेन कर्मभेद एवाश्रियते 'यथामेयोऽष्टाकपाल' इत्यत्र पौर्णमास्यमावास्यानामद्वयेनेव इति । अत्रोच्यते । नामातिदेशेन अङ्गस्वादिविशेषात् अभ्यासेऽपि कालद्वयवत् प्राप्त एव । ततश्च उपात्तेन अभ्यासेनैव कालद्वयान्यथोपपत्ते न कर्मभेदाक्षेप । 'तिस्र आहुतीर्जुहोति' इत्यादौ तु नैव भेदविरुद्धेन अभ्यास उपात्त, यत्सत्त्वेनैव तिस्रसंख्या उपपन्ना स्यात्, अतस्तदुपपत्त्यै कर्मभेद एवाश्रियते । एवं आग्नेयवाक्येऽपि, इति दृष्टान्तद्वयवैषम्यम् ।

अथेदानीमिदं चिन्त्यते 'मासं दर्शपूर्णमासाभ्या यजते' इत्यत्र 'आरम्भणीयो यजति' इतिवत् द्वित्वसंख्यया कर्मभेदात् द्वे कर्मणी यजिना विधीयेते इति नारदनिनादम् । तथा दर्शशब्देन पूर्णमासशब्देन च प्राकृताग्नेयादिनामसम्बन्धि हविर्गणं पृथक् पृथक् एकैकेन शब्देन एकैकस्मिन् कर्मणि अतिदिश्यते इत्यविवादम् । अथ परस्परविरुद्धद्रव्यदेवतादिरूपैतिकर्तव्यता तथा तत्र उत्पत्तिवाक्यगत एकैकस्य कर्मणो भेदमाक्षिपति न वेति चिन्त्यम् । तत्र पूर्वपक्ष, यद्यप्यत्र 'मासमग्निहोत्रं जुहोति' इत्यत्रेव अभ्यासोपादानं नास्ति, तथापि निष्पन्नाधिकरणे (७।४।२) इतिकर्तव्यतासमुच्चयनिरासात् यथा सौर्ये प्राकृताग्नेयकर्मभेदेऽपि तत्रपौर्णमास्यामावास्यादिविरुद्धेतिकर्तव्यतयो विकल्पेन अतिदेश, एवमिहापि विनिगमकाभावात् दर्शशब्देन पूर्णमासशब्देन च नियमित इतिकर्तव्यता आग्नेयादिनवसामान्य अतिदिष्टा विकल्पेन एकैकस्मिन् कर्मणि निवेश्यते इति न कर्मभेद चोद्य, किन्तु द्वैधेनेति । अत्र ब्रूम । इतिकर्तव्यताविकल्पोऽपि मासमात्रे निरस्त एव, तथापि 'मासं दर्शपूर्णमासाभ्या' इत्यत्र दर्शशब्देन पूर्णमासशब्देन च एकैकेन लक्षणा इत्येकशब्दोपादानात् समुच्चये सति आग्नेयाद्यत्रयमुद्रामुद्रितत्वात् षट्कर्माणि, सौर्ये तु प्राकृताग्नेयेतिकर्तव्यतयो न प्रत्यक्षशब्दोपादानमस्ति, येन समुच्चय, तदभावात् कर्मभेद स्यात्, किन्तु तत्र एकेतिकर्तव्यताकाङ्क्षावशात् नाम्नकल्पना, एकेतिकर्तव्यतयैव च आकाङ्क्षा उपशाम्यति इति इङ्गितेन अतिदेशक शब्द कल्प्यते पौर्णमास्याग्नेयवत् दर्शाग्नेयवद्वा इति । एवं यावद्युक्ततादेशकशब्दकल्पनात् न प्राकृताग्नेयेतिकर्तव्यतयो समुच्चय, न वा तद्वशात् कर्मभेदापत्ति इति वैषम्यम् । ननु इह यथा पूर्णमासशब्देन दर्शशब्देन वा कर्मत्रयकर्मत्रयसम्बन्धीतिकर्तव्यताद्वय लक्षणया अतिदिश्यते, इतिकर्तव्यताद्वयस्य एकैकशब्दोपादानात् समुच्चयानन्तरं षट् कर्माणि । एवं सान्नाय्ययागद्वयेन सह प्राक् सोमात् दैक्षिकस्य ऐन्द्राग्नस्यापि द्रव्यदेवतारूपेतिकर्तव्यताऽपि प्रकृतिस्था दर्शशब्देन लक्षणया एकशब्दोपात्तैव इति सप्तममपि कर्म दर्शपूर्णमासवाक्ये विधीयते इति षट्कर्मानुष्ठानं याज्ञिकाना चिन्त्यमेव । प्रकृतौ ऐन्द्राग्नविकल्पेऽपि इह तदितिकर्तव्यताया अपि एकशब्दोपादानेन समुच्चित विधानम् । तत्र [illegible] स्यात् विशेष, प्रकृतौ ऐन्द्राग्न प्राक् सोमात् इह तु तद्विरुद्धानपि सप्तस्य सोमोत्तरकालत्वात् तदङ्गत्वे अङ्गगुणविरोधन्यायेन (१२।२।१।२५) प्रधानान्ये तु 'भूयसा स्यात् सधर्मत्वम्' इति न्यायेन (१२।२।७।२२) सोमप्राक्त्वबाध इति । सत्यं सप्तम कर्म ऐन्द्राग्नविकृतिभूत सिध्यति, तस्य तु नित्यवदनुष्ठाने दर्शशब्दनाम्ना अतिदिष्टस्य प्रकृतिवद्भावस्य बाध स्यात् । तथा च एकादशे (११।२।१५।६३-६४) 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इत्यत्र प्रकृत्यन्तरात् कर्मान्तरे अतिदिष्टे प्रकृतिवद्भावस्य बाधस्य तत्तत्पशौ विकारकाष्ठयुपन्यायेन बाध्यते इत्युक्तम् । अत षट्कर्मानुष्ठानं याज्ञिकाना युक्तमेवेति । ननु समुच्चयवागारोपदेशेन प्रकृतिवद्भावनिर्देशादस्तु, भेदस्य । प्रकृतिवाक्येन हि प्रधानाङ्ग नित्यत्वं अतिदिष्ट, समुच्चयस्तु वैकृते प्रधाने कल्प्य, श्रुतस्तु इतिकर्तव्यता

यागहे । तत्र न अङ्गगुणविरोधन्यायात् औपदेशिकोऽपि समुच्चयः आतिदेशिकेनापि विकल्पेन बाध्यते इति प्रकृतिवदेवानुष्ठानं सिद्धम् । बाल. पृ. ८९–९१.

● **मासाग्निहोत्रार्पणं** कौण्डपायिनामयने प्राग हिवेऽग्नौ कार्यं न शालामुखीये । ११।२।६।१३. मीस्मे. पृ. १४६३ 'कुण्डपायिनामयने गार्हपत्ये०' इत्यत्र द्रष्टव्यम् ।

● **मासादिदीक्षाकल्पपर्यंत** इष्टकानिर्माणपर्याप्तकालराहित्यात् साग्निचित्यक्रतौ एकाहदीक्षापक्षो न प्रवर्तेत् । इति प्राप्ते, 'न प्राजापत्येनानिष्ट्वा इष्टकाः कारयेत्' इति प्रतिषेधान्यथानुपपत्त्या दीक्षातः पूर्वं प्राजापत्यपशौ. पशौऽपि तन्निर्माणकालत्वात् अनेन कालेन सह अग्नि योगात् एकाहदीक्षापक्षाणां प्रवृत्तिः प्राप्ताः न बाधः । संकर्ष. २।१।२९.

● **माध्यन्दिनिकः** पवः (सुत्यादिपक्षः) प्रत्युक्तः प्रागेन निराकृत. इत्यर्थः । भा. २।१।५।५ पृ ५१.

● **माहेन्द्र** इत्यादीनि चत्वारि पृष्ठस्तोत्राणि ज्योतिष्टोमे । वि. ७।१।३, ● माहेन्द्र स्तोत्र राजसूयगताभिषेचनीये अतिदेशप्राप्तम् । तस्य काले अपकर्षेण मध्ये माहेन्द्राभिषेकः क्रियते । अभिषेकात् प्राक् च विदेवनादयः क्रियन्ते । ७।७।२, ● माहेन्द्र स्तोत्र वाजपेये 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति', 'दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इति । १०।८।१२ वर्णक ४ ● **'माहेन्द्रमाहूयन्ते'** इत्यस्य माहेन्द्रावसानिककाले अतिग्राह्या हूयन्ते इत्यर्थ इति पूर्वपक्ष । माहेन्द्रेण इष्ट्वा अतिग्राह्यान् हुत्वा अनुग्रहं कुर्यात् इत्यर्थ इति सिद्धान्त । संकर्ष. ३।३।७

● **माहेन्द्रस्तोत्रानन्तरमेव** अतिग्राह्याणां होमः, न तु सह । संकर्ष ३।३।७. मीस्मे. पृ १९० 'अतिग्राह्याः, माहेन्द्रग्रहानन्तरमेव०' इत्यत्र द्रष्टव्यम् ।

● **माहेन्द्रस्तोत्रादीनि** चत्वारि पृष्ठानि ज्योतिष्टोमे न सर्वाणि पठति । भा. ७।३।३।६.

● **माहेन्द्रस्तोत्रोपाकरणकालनत्र** विहितेन रथदुन्दुभिघोषेण प्राकृतमन्त्रयोर्बाधो वाजपेये । रथघोषाधिकरणम् । १०।८।१।१–२ वर्णक ३.

● **माहेन्द्रस्तोत्रकाले** अभिषेकापकर्षे विदेवनादीनामपि तत्र. प्रापकर्षः, राजसूये अभिषेचनीयसोमक्रतौ । भा ५।२।९।२१.

● **मित्रदायादादिभ्यः** पीरयादिना क्रियमाणेऽपदाने नास्ति दोषः नापि प्रायश्चित्तम् । वि. ३।४।१४.

● **मित्रावरुणयोरयनं** गवामयनविकारविशेषः । मु. पृ. ९६६.

● **मित्रविन्दायां** अनारभ्याधीतं सामिधेनीसप्तदशत्वं निविशते । वि. ३।६।२. ● मित्रविन्दायां अनारभ्यविहित (सामिधेनी–)सप्तदशत्व अतिदेशप्राप्तपञ्चदशत्व बाधेन निविशते । वा. ३।६।२।५.

● **मित्रविन्दादौ** सामिधेनीसप्तदशत्वपुनः अनारभ्याधीतसप्तदशत्वेन उपसंहारः । १०।८।९।१७–१९. ● **मित्रविन्दादिषु** 'सप्तदश (सामिधेनीः) अनुब्रूयात्' इति वचनम् । भा. १०।८।१२।२४.

● **'मिथश्चानर्थसम्बन्धात् ।'** (३।१।१३।२३) इत्यत्र आज्यभागक्रमाम्नानात् वार्त्रघ्नीवृधन्वत्योराज्यभागयोः तदङ्गत्वं दर्श्यते । मु पृ ७२२

● **मिथश्चानर्थसम्बन्धात् । ३।१।१३।२३॥**

दर्शपूर्णमासयोः श्रूयते 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' इति । इदमनुवाक्याचतुष्टयं किं प्रधाने विनियुज्यते उत आज्यभागयो इति विचारे सिद्धान्तमाह । मिथः परस्परं मिलिताभ्याम् इत्यर्थः । वार्त्रघ्नीभ्यां अनुवाक्याभ्यां पौर्णमासीकर्मणः वृधन्वतीभ्यां च अमावास्याकर्मण. अर्थेन प्रयोजनेन न सम्बन्ध । प्रधाने नोपयोगः कश्चित् । अनर्थसम्बन्धः, अर्थेन सम्बन्धः अर्थसम्बन्धः न अर्थसम्बन्धः अनर्थसम्बन्धः अर्थसम्बन्धाभाव इत्यर्थः, तस्मात् । 'अग्निर्वृत्राणि जङ्घनत्' इति वार्त्रघ्नी आग्नेयी, 'त्वं सोमासि सत्पतिः' इति वार्त्रघ्नी सौमी । 'अग्निः प्रत्नेन जन्मना' इति वृधन्वती आग्नेयी, 'सोम गीर्भिष्ट्वा वयम्' इति वृधन्वती सौमी । पौर्णमास्यां वैकल्पिकसोमाभावात् अमावास्यायां तु सर्वथैव सोमाभावात् । प्रधाने उक्तानां अनुवाक्यानां नास्ति प्रयोजनम् । आज्यभागयोस्तु अस्त्युपयोगः । इति आज्यभागयोः अनुवाक्यानां विनियोगः स्यात् इति

संशये धर्मज्ञानार्थं कर्तव्येति सिद्धान्तः । भा. १।१। १।१. * मीमांसा च इतिकर्तव्यतात्वेन अङ्गम् । तदुक्तं 'धर्मे प्रमीयमाणे हि वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥' इति । अतो नैव पृथगयं ग्रन्थारम्भः । वाक्यार्थ पृ. १७. * मीमांसा न्यायनिरूपणात्मिका । बाल पृ. २. * मीमांसा लोकवेद-प्रत्यक्षानुमानादिभिः अविच्छिन्नसम्प्रदाय-पण्डितव्यवहारैः प्रवृत्ता । नहि कश्चिदपि प्रथममेव एतावन्तं युक्तिकलापं उपसंहर्तुं क्षमः । वा. १।३।१।२. * मीमांसा समस्त-वैदिकवाक्योपसंहारात्मिका वेदशब्दवाच्या 'विधिविशेष-स्तर्कश्च वेद.' इत्येतस्मिन् दर्शने वर्तते भवति । १।३।६। ११ पृ २४१. * मीमांसा सर्वशास्त्रगतन्यायनिरूपणात्मिका । तेन अस्या यो न्यायमार्गः, तस्मिन्नज्ञाते युक्तिनां विवेकाभावात् न किञ्चित् ज्ञायेत । रत्नाकरः १।१। १।१ श्लोवा. १५. * मीमांसया वेदवाक्यानि व्याख्यायन्ते । भा. १।१।१।१. * मीमांसायाः द्वादशाध्याया द्वादश विषयाः- प्रमाण- भेद- शेषत्व- प्रयुक्ति- क्रम- अधिकार- सामान्यातिदेश- विशेषातिदेश- ऊह- बाध- तन्त्र- प्रसङ्गाः । बाल. पृ. २. * मीमांसायाः धर्मज्ञानप्रयोजनकत्वम् । सु. पृ. १३०, * मीमांसायाः न्यायनिरूपणात् प्रयोगनिरूपणमुक्तं इत्याशङ्क्य प्रयोगार्थस्याभावात् तत्साम्येऽपि यत्र प्रयोगोऽभ्यस्तु तत्र तन्निरूपणीयं इत्याह । पृ १६९. * मीमांसायाः पूर्वेण अध्यायषट्केन प्रत्यक्षविहितधर्माणां कर्मणां दर्शपूर्णमासादीनां इति-कर्तव्यता चिन्तिता । उत्तरेण इदानीं अविहितेतिकर्तव्यताकेषु ऐन्द्राग्नादिषु चिन्तयितुमिष्यते । भा. ७।१।१।१. * मीमांसायाः विषय । धर्म इत्येव मीमांसाविषयः न वेदार्थः इति । तथा च दर्शितम् 'अथातो धर्मजिज्ञासा सूत्रमात्रमिदं कृतम् । धर्माख्यं विषयं वक्तु मीमांसायाः प्रयोजनम् ॥' (श्लोवा. १।१।१।११) इति । तथा च 'अथातो धर्मजिज्ञासा, चोदनालक्षणोऽर्थो धर्मः' इति च सूत्रम्, 'को धर्मः कथंलक्षण.' इत्यादि भाष्यं च न युक्तिभिरपीरिव वेदार्थपरं व्याख्येयम् । शा. २।१।१.

प्रथमेऽध्याये प्रमाणम्, द्वितीये स्वरूपम्, षष्ठे फलम्, इतरेषु साधनं विचार्यते इति विवेकः । सोम. १।१।१.

'धर्मो द्वादशलक्षण्या व्युत्पाद्यस्, तत्र लक्षणे । प्रमाण- भेद- शेषत्व- प्रयुक्ति- क्रमसंज्ञकाः ॥ अधिकारोऽतिदेशश्च सामान्येन विशेषतः । ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात् ॥' द्वादशाध्यायोपेतस्य शास्त्रस्य धर्मो विषयः । प्रथमेऽध्याये विध्यर्थवादादिरूपं प्रमाणं निरूपितम् । द्वितीये यागादिकर्मभेदः । तृतीये प्रयाजादीनां दर्शपूर्णमासार्थत्वेन तच्छेषत्वम् । चतुर्थे गोदोहनस्य पुरुषार्थत्वप्रयुक्तस्य अनुष्ठानं न तु क्रत्वर्थप्रयुक्तया इत्येवमादयः । पञ्चमे क्रमनियतिविधेयत्वादयः । षष्ठे कर्तुरधिकारो नान्धादेः इत्यादयः । सप्तमे सामान्यतः अतिदेशः प्रत्यक्षवचनेन अनुमितवचनेन च । अष्टमे विशेषरूपेण अतिदेशः । नवमे 'अग्नये जुष्टं निर्वपामि' इत्यत्र 'सूर्याय जुष्टं निर्वपामि' इत्यादिः ऊहः । दशमे बाध. । एकादशे तन्त्रम् । द्वादशे प्रसङ्गः । चि. प्रस्तावना.

पूर्वेण अध्यायषट्केन प्रत्यक्षविहितधर्माणां कर्मणां दर्शपूर्णमासादीनां इतिकर्तव्यता चिन्तिता । भा. ७।१। १।१.

पूर्वे षट्के उपदेशविचारः । सोम. ७।१।१.

* मीमांसायां द्वादशलक्षण्यां धर्माधर्मावेव जैमिनिना अनुष्ठानोपयोगितया विचारितौ । यद्यपि धर्माधर्मौ अदृष्टविशेषात्मकौ, न क्रियारूपौ, अत एव 'धर्मः क्षरति कीर्तनात्' इत्यादौ वैशेषिकतन्त्रे च क्रियाजन्यादृष्टे धर्माधर्मशब्दप्रयोगः, तथापि 'धर्मस्त्वनुष्ठितः पुंसाम्' इत्यादौ नयनवविहितनिषिद्धक्रिययोरपि धर्माधर्मशब्दप्रयोगात् ताविह प्राधान्येन विचार्येते । रहस्य. पृ. १.

* मीमांसाशास्त्रं वेदवाक्यार्थविचारोपायभूतन्यायनिबन्धनम् । पाक्षिक पृ. १. * मीमांसाशास्त्रस्य अनुष्ठानपर्यवसायित्वम् । सु पृ. ५४०. * मीमांसाशास्त्रे सिद्धान्तत्वेन धर्मः प्रमेयः प्रक्रान्तः । शा. २।१। १।१ पृ. ३७०.

* मीमांसाशास्त्रारम्भसिद्धिः अधीतवेदवाक्यार्थज्ञानोपयोगित्वात् वैधी । मणि. पृ ५.

* मीमांसासिद्धान्ते व्यवहार. । यतः विधिर्न कर्तव्यता धर्मेण. अवबोधयति, तस्मात् यत्नदुपादीयते

इति गुणविधिः । ( पूर्वपक्षे ) । १।४।१२।२३-१ पृ. ३५५.

¶ मुख्यं वा पूर्वचोदनाल्लोकवत् । १२।२।८। २३ ॥

यत्र तुल्यसंख्यानां प्रधानानां धर्मविप्रतिषेधः तत्र मुख्यं मुख्यधर्मः कार्यः । यथा 'आग्नावैष्णवमेकादशकपालं निर्वपेत् अपराह्णे सरस्वतीमाज्यस्य यजेत' इति । अत्र मुख्यस्य मुख्ये आरम्भे विद्यमानस्य आग्नावैष्णवस्य धर्मो भवति । पूर्वचोदनात् पाठक्रमेण पूर्वं विहितत्वात् । लोकवत् लोके एवं दृष्टत्वात् ।

तथा चान्यार्थदर्शनम् । २४ ॥

पूर्वं प्राप्तस्य बलीयस्त्वं इत्यत्र तथा च अन्यार्थदर्शनं भवति । 'अप्यस्मीत पूर्वमयाक्षीत्यते रूपमपि चैव कर्मसमृद्धिरर्थं' इति । इह चापि 'यथा वै पूर्वागामिनो यवस्यावस्तात्किल नोपीजन्ते नायवस्यन्ति इत्येवमेवैतत्' इति भाष्ये उदाहृते तत्र प्रथमवाक्यार्थो नास्माभिरवगतोऽपि ज्ञातः । उत्तरवाक्यस्य तु कंचिद् विषयं विचार्यं निर्णयकारिणा मध्ये ये पूर्वागामिनः पूर्वमागत्य विचार्य निर्णीतवन्तः ते, जघन्यं पश्चादागत्य सोऽपि निश्चयं कथितवन्तं प्रति न श्लीयन्ते उत्तरतस्तस्य स्वीकारं न कुर्वन्ति । न च तदनुसारेण अवमानयन्ति निर्णयं कथयन्ति, निर्णयं न कुर्वन्ति इत्यर्थः । इति । के.

● न च ( 'वाजिभ्यो वाजिनम्' इत्यत्र ) त्रिषु अवदानस्थानमिति चेत्, न, 'मुख्यं वा०' इत्यवधारणहेतुसद्भावात् । भा. २।२।६।२३ पृ ५३८. ● न हि प्रधानमप्युपसंहारस्थं दुर्बलम्, अङ्गगुणविरोधव्यवस्था 'मुख्य वा०' इति न्यायप्रसादकत्वात् । अन्यथा 'य इष्ट्या पशुना सोमेन' इत्यत्र उपसंहारस्थस्यापि सोमयागस्य, प्रधानत्वात् पूर्वानुग्रहो विरुध्येत । कौ. ३।३।१।१. ● निधनमात्रानुवादेन ईडादिसंबन्धे सर्वेष्वपि ( सोमस्य ) आश्रयत्व अनेकप्रस्तावादिभक्तिमति सौभरे, कतमस्यां भक्तौ ईडादयः प्रयुज्यन्ता इति नैव ज्ञायते, 'मुख्य वा०' इति प्रस्तावे वा प्रयुज्यन्ते । वा. २।२।१३।२९ पृ. ५६८.

● 'प्रजापतिर्वरुणायाश्वमनयत्' इति वरुणात् अश्वं प्रतिगृह्णन् इत्युपसंहारानुरोधेन कल्प्येत, यद्वा उपक्रमदर्शनोपसंहार 'योऽश्वं प्रतिगृह्णाति' इति 'योऽश्वं प्रतिग्रहीष्यति' इति । तत्र 'मुख्यं वा पूर्व०' इति प्रथममनुपदीतव्यं विरोधाभावात् । पश्चात्तनं तु विरोधात् लक्षणया व्यसनीयम् । भा. ३।४।११।३१ पृ ९६१ । अत्र वार्तिकम्-- सर्वैश्च तावत् 'मुख्यं वा०' इति श्रुतिलिङ्गाधिकरणन्यायेन च पूर्वं विज्ञानं अनुपजातप्रतिद्वन्द्वि द्वितीयविज्ञानान्यनुत्पन्नत्वात् आञ्जस्येन आत्मानं लभते । पश्चात्तनं तु पूर्वविज्ञानावरुद्धज्ञाननिलये उपजायमानं सत्ता विरोधावस्थायां तदानुगुण्यातिरिक्तेन रूपेण उत्पत्तुमेव न शक्नोति इति अन्यथात्वमपि प्रतिपद्यते । ● ( 'यो होता सोऽध्वर्युः' इत्यत्र ) प्रथमोच्चारिते होतृशब्दे किंचिदपि परतन्त्रार्थत्वं न पश्यामः । तेन 'मुख्यं वा पूर्व०' इति तं स्वार्थयुक्तमेव गृहीत्वा अध्वर्युशब्दः कर्मलक्षणार्थः अध्यवसीयते । वा. ३।८।१०।२१ पृ. ११२५. ● यत्तु 'मुख्य वा०' इति न्यायेन प्रथमश्रुतार्थवादस्यैवानुसरणमिति तन्न । विप्रतिषिद्धधर्मसमवाये प्रधानयोर्विरोधे मुख्यानुसरणमिति तदर्थत्वात् ( पूर्वपक्षे ) । कु. ३।३। ३।९. ● 'यस्य पुरोडाशौ' इत्यादिषु आधिकारिकहविःक्रमवत्त्वाद् विवरणम् । अन्यथा हि 'मुख्यं वा०' ( १२।२।८।२३ ) इति कश्चनित् आग्नेयग्रहणप्राप्तिः स्यात् । वा. ३।१।७।१८ पृ. ७२१, ● ( 'अग्नेः ऋग्वेदः' इत्यादीनां ) सत्यपि विध्युद्देशगतत्वे दौर्बल्य 'मुख्य वा०' इत्येव द्रष्टव्यमीयस्त्वात् । ३।३।१।२ पृ. ८०६, ● 'मुख्यः प्रथम:प्रथमस्थाऽऽज्योतिष्टोमोऽभिधीयते ।' १।३।८।१६. ● मुख्यः ( अर्थः ) यः शब्दादेवावगम्यते स प्रथमोऽर्थो मुख्यः । मुखमिव भवतीति मुख्य इत्युच्यते । ( किंवा ) यस्मिन् निरपेक्षात् शब्दात् संप्रत्ययः स मुख्यः । भा. ३।२।१।१ पृ. ७४६, यः सुष्ठु प्रसिद्धः स मुख्यः । यस्य बहुशः प्रयोगोऽस्ति स मुख्यः । पृ. ७४८.

¶ मुख्यो वाऽविप्रतिषेधात् । १२।४।१३।३४॥

सत्रे यजमानगणे शुक्लान्वारम्भादीनि कर्माणि मुख्यो

मुख्ये कार्यासमर्थे लब्धेऽपि प्रतिनिधेः कार्यसमर्थस्य मत उपादानम् ॥

अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् । ६।३।१९।३९ ॥

भाष्यम्— अस्ति यूपकाले खादिरालाभे पशोः प्रागल्भ्ये न समर्थो, कदरस्य तु तत्समर्थम् । तत्र सन्देहः किमुपादेय खादिरद्रव्यमुत कदरम् इति । खादिरद्रव्यमित्याह । तद्धि श्रुतम् । तदुपाददानः शास्त्रविहितं करोति । प्रतिनिधावश्रुतकारी स्यात् । तस्मात् प्रतिनिधातव्यम् । इत्येवं प्राप्ते, ब्रूमः । अर्थद्रव्यविरोधे अर्थं प्रत्याद्रियेत यत्नः । तदर्थं हि द्रव्योपादानम् । नियोजनाद्धि प्रागल्भ्यं पशोर्भविष्यतीति, न द्रव्यमेवोपादीयेतेति । कदरमुपाददानो द्रव्यश्रुतिं त्यजति, अर्थं त्वनुगृह्णाति । खादिरमुपाददानः समर्थं नाप्नोति । तस्मात्कदरद्रव्यमुपादेयम् । द्रव्याभावे हि तदुत्पत्तिः, प्रतिनिधेरुपसिद्धत्वात् । द्रव्याण्यर्थं प्रति शेषभूतानि ।

सोम— सूत्रार्थस्तु— प्रयोजनद्रव्यविरोधे प्रयोजनं बलवत्, अतो द्रव्यस्य प्रयोजनशेषत्वात् द्रव्याभावे प्रतिनिध्युपपत्तिः कार्या इति ।

वि— 'नियोजनेऽप्ययोग्यश्चेत्खादिरः तदा भवेत् ।, मुख्यत्वेन स एव स्यात्, तदर्थत्वेन कीतरः ॥'

[भाट्टे इदमधिकरणं पूर्वाधिकरणे एवान्तर्भावितम् ।]

मण्डन— 'कार्यहानेस्तदग्रहणम् ।'

शंकर— 'न तु कार्याक्षम तथा ।'

• मुख्ये प्रधानपर्याप्ते एव लब्धे शेषकार्यलोपः कार्यः । वि. ६।३।२१. • मुख्ये विद्यमाने गौणो नोपादीयते । भा. १०।१।१९।७१, मुख्ये सम्भवति भक्तिर्न्याय्या ३।८।२२।४३.

• मुख्यातिक्रमः संख्यायाः आनर्थक्येन कारणेन 'सप्तभिराप्नोति' इत्यादौ । भा. १०।५।५।१४.

• 'मुख्याधिगमे मुख्यमागमो हि तदभावात् ।' ६।३।१६।३५ ॥ इत्यधिकरणे यदा यूपार्थं मुख्यं खदिरमलब्ध्वा तत्प्रतिनिधिं कदरमुपादातुं प्रस्थितो मध्ये मुख्यं लभते चेत् मुख्य एव ग्राह्य, कदरं गृहीत्वा तदुपादिषु वेपुनिषु संस्कारेषु कृतेषु प्राक् पशुनियोजनात् मुख्यं लभते चेत् तथापि मुख्य एव ग्राह्य इति व्यवस्थापितम् । परिमल. ४।१।१३।१८ नम्.

मुख्याधिगमे मुख्यमागमो हि तदभावात् । ६।३।१६।३५ ॥

श्रुते खदिरादिद्रव्ये अपचरिते कदरादिं प्रतिनिधिमुपादास्ये इति संकल्प्य प्रयोगे प्रवृत्ते । कदरमन्विष्यन् देशात् मुख्यं खादिरमेव लभवान् । तदानीं तु कल्पितोऽपि प्रतिनिधिर्न ग्राह्य, किन्तु मुख्य एव खादिरो लब्धत्वात् ग्राह्यः, तदलाभे प्रतिनिधिरेव । तदाह, मुख्याधिगमे मुख्यस्य अधिगमे लाभे सति मुख्यमेव ग्राह्यम् । हि यस्मात् तदभावात् मुख्याभावात् प्रतिनिधेः आगमः स्वीकृतः । इदानीं मुख्यमेव लब्धं सत् किं प्रतिनिधिना । इति सिद्धान्त । के.

मुख्यानुमद्धन्याय. । मुख्यद्रव्यापचारे गृहीते प्रतिनिधौ पुनर्मुख्यप्राप्तौ मुख्यस्यैवोपादानम् ॥

मुख्याधिगमे मुख्यमागमो हि तदभावात् । ६।३।१६।३५ ॥

भाष्यम्— अथ यत्र विनष्टे श्रुते प्रतिनिधिमुपादाय प्रस्थितो मुख्यमेवोपलभते, तत्र किं प्रतिनिधिमेवोपाददीत उत तमेव मुख्यमिति । किं तावत्प्राप्तम् ? प्रतिनिधिमुपादास्ये इत्येव संकल्पितवानसौ प्रतिनिधिमुपाददान एव सत्यसंकल्पो भवति । तस्मात्प्रतिनिधातव्यं तेन । इत्येवं प्राप्ते, ब्रूमः । मुख्याधिगमे तमेवोपाददीत । अभावे हि श्रुतस्यानुकल्पः प्रतिनिधिः । श्रुते हि सङ्कल्प अन्वयः । प्रतिनिधौ विकल्पः । अथ यदुक्तं संकल्पभेददोषः इति । श्रुतेऽक्षरो, निष्टविगर्हणाया वा ।

सोम— पूर्वत्र वैकल्पिकस्याप्यनपचारेऽपि इह तदपचारात् मुख्यानादर इति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु— मुख्यलाभे तदेव यतो मुख्याभावादमुख्यागमः इति ।

वि— 'प्रतिनिध्युपगमे मुख्यलाभे ग्राह्य किं द्वयोः । सङ्कल्पेन प्रतिनिधिर्मुख्यं शास्त्रार्थलाभतः ॥'

भाट्ट— [भाट्टे १६-१७ अधिकरणयोः एकमेवाधिकरणं कृतम् । तत्सम्यगर्थं तु शम्भुभट्टेन एवं कृतम्— तत्र

मुख्यासंभवे गौणग्रहणं युक्तमिति न्यायः। अयं मुहूर्तचिन्तामणिटीकायां धृतः। तत्र च 'सा दृष्टेन्दुः सिनीवाली' इति वाक्यमीमांसायाम्, ननु च दृष्टश्चन्द्रो यस्यां इत्यन्यपदार्थे सप्तमी सामीप्यपरेति व्याख्यायते इति चेत्, न, तस्याः सामीप्यसप्तम्या गौणत्वापत्तेः, मुख्यासंभवे गौणग्रहणं युक्तं इत्युक्तमिति। साहस्री. ८२३.

* मुख्यकार्ये कृते प्रतिनिधिना, ततः मुख्यस्य लाभेऽपि मुख्ये न प्रारम्भः। ६।३।१७।३६–३७.

* मुख्यक्रमः अपि अङ्गक्रमनियमे प्रमाणम्। मुख्यस्य च प्रधानत्वम्। मुख्यक्रमाधिकरणम्। ५।१।७। १४. * मुख्यक्रम. अतिदेशविषय. अपि। टुप्. ५।१। ११। न च प्रकृतौ आग्नेयसान्नाय्ययोः विकृतौ सारस्वतयोः। नन्वरतनम्, * मुख्यक्रमः अर्थक्रमाद् दुर्बलः, प्रयोगवचनाभिमतत्वात्। टुप्. ५।१।१०।१८. * मुख्यक्रम. एवं क्रमप्रमाणम्। बाल. पृ. ८. * मुख्यक्रमः पाठक्रमात् दुर्बलः, अनुमानिकत्वात् विप्रकृष्टोपस्थितिकत्वाच्च। तेन पौर्णमास्यां अग्नीषोमीयपुरोडाशनिर्वापः प्रथमं ततः उपांशुयाजाज्यनिर्वापः। भा. ५।१।८।१५. * मुख्यक्रमः प्रवृत्तिक्रमाद् बलवान्। दर्शपूर्णमासयोः आग्नेयस्यावदानाभिघारणासादनानि पूर्वं कार्याणि न दध्न.। भा. ५।४।२।२–४। टुप्— स्विष्टकृदवदानं प्रधानस्याभिघारणं बर्हिषि हविरासादनं चोदाहरणम्। तन्त्ररत्नम्— न तु प्रधानचतुरवत्तावयवभूतावदानाभिघारणविषयम्। * मुख्यक्रमेण प्रवृत्तिक्रमो बाध्यते यथा– सान्नाय्यधर्माः पूर्वं प्रवृत्ताः पश्चात् आग्नेयधर्माः। प्रधान[illegible] आग्नेयस्य प्रथमं पश्चात् सान्नाय्यस्य। तत्र सान्नाय्यस्य पूर्वं प्रवृत्तिक्रमात् प्राप्तं अवदानादि, स्विष्टकृदवदानं वा मुख्यक्रमात्तु आग्नेयस्य पूर्वं कार्यम्। इदं 'अवदानाभिघारणासादनेषु०' इत्यधिकरणे (५।४।२) उक्तम्। बाल. पृ. १३७. * मुख्यक्रमेण प्रवृत्तिक्रमस्य बाधो यथा– पाठादर्थाच्च दध्नो धर्मा दोहनादयः पूर्वं क्रियन्ते, पश्चादाग्नेयस्य निर्वापादयः। तत्प्रवृत्तिक्रमेण च दध्न. हविरासादनप्रथावदानाभिघारणस्विष्टकृदवदानान्यपि पूर्वं प्राप्तानि मुख्यक्रमात्तु प्रथमं आग्नेयस्य कर्तव्यानि पश्चात् दध्न.। दर्शपूर्णमासयोः। वस्तुतस्तु नेदं विरोधोदाहरणं संभवति। उदाहरणं तु मृग्यम्। भाट्ट. ५।४।२. * 'मुख्यक्रमेण चाऽङ्गानां तदर्थत्वात्' (५।१।७।१४) इत्यधिकरणे 'सारस्वतौ भवतः' इत्यत्र स्त्रीपुंसदेवत्याविमौ, न पुंद्वयदेवत्यौ इति निर्णयः, 'एतद्वै दैव्यं मिथुनं यत् सरस्वतीसरस्वांश्च' इत्यर्थवादादपि इति शास्त्रदीपिकायामुक्तम्। बाल. पृ.५७.

मुख्यक्रमेण चाऽङ्गानां तदर्थत्वात्। ५।१। ७।१४॥

चित्रायागे चतुर्थप्रपाठके हविषी 'सारस्वतौ भवतः, एतद्वै दैव्यं मिथुनम्' इति समाम्नायेते। 'सरस्वती च सरस्वांश्च' इति विग्रहे समासे 'पुमान् स्त्रिया' (पा. १।२।६७) इत्येकशेषात् सरस्वन्तौ इति भवति। तौ देवते ययोः तौ सारस्वतौ यागौ। तस्य च मिथुनत्वोक्त्या स्त्रीपुंस्त्वम्। तत्र किं निर्वापादयः प्रथमं स्त्रीदेवत्यस्य पुंदेवत्यस्य वेति विचारे अनियम इति पूर्वपक्षं वाक्यबलेन निराकुर्वन् सिद्धान्तमाह। न अनियमेन निर्वापादयः। किन्तु मुख्यक्रमेण अङ्गानां निर्वापादीनां क्रम आस्थेयः। होतृकाण्डे 'प्र णो देवी सरस्वती' इत्यादियाज्यानुवाक्यायुगलं स्त्रीदेवत्यं प्रथमं पठितम्, ततः 'पीपिवांसं सरस्वतः' इत्यादि पुंदेवत्यम्। तेन मन्त्रपाठेन स्त्रीदेवत्यं हविः मुख्यं प्रथमं इत्यवगम्यते। तस्मात् तेन मुख्यक्रमेण निर्वापादीनां अङ्गानां क्रमः स्वीकर्तव्यः। तदर्थत्वात् अङ्गानां प्रधानार्थत्वात् प्रधानानां च मन्त्रपाठक्रमेण नियतत्वात्। के.

* मुख्यक्रमात् औपदेशिकात् आतिदेशिकपाठक्रमो बलवान्। ५।१।२०।१७–१८. मीको. पृ. ३५५ 'अध्वरकल्पान्यायः' इत्यत्र द्रष्टव्यम्। मुख्यक्रमे प्रधानक्रमेण नियमः क्रियते सह चोदितानाम्। टुप्. ५।१।३।३. * मुख्यक्रमो प्रधाननिरूपितप्रत्यासत्त्यनुग्राहीणम्। भाट्ट. ५।१।७.

॥ मुख्यक्रमाधिकरणम् ॥

मुख्यक्रमेण चाऽङ्गानां तदर्थत्वात्। ५।१। ७।१४॥

अनियमप्रसक्तौ मुख्यक्रमेण आग्नेयस्य प्रथममभिघारणं पश्चादन्य इत्युदाहरणं वक्ष्यमाणं द्रष्टव्यम् ।

मण्डन— 'मुख्यक्रमात् क्रमोऽङ्गेषु । '

शंकर— ' मुख्यक्रमात् तदङ्गानाम् । '

* मुख्यक्रमानुरोधः । वैकृतमुख्यक्रमानुरोधेन अध्वरकल्पायां प्रथमं आग्नावैष्णवस्य निर्वापः ततो बार्हस्पत्यचरोः । भाट्ट. ५।१।१० .

* मुख्यक्रमादेः दौर्बल्यं आनिर्देशिकपाठविरोधे एव । भाट्ट. ५।१।१० .

* मुख्यगौणयोः मुख्ये कार्यसम्प्रत्ययः । भा. ३।२। २।१.

* मुख्यजघन्ययोः अन्यतरस्मिन् लोपान्ते जघन्यो हप्येत, मुख्यो अनुग्रहीतव्यः । तदुक्तम् ' मुख्य वा पूर्वचोदनाल्लोकवत् ' ( १२।२।८।२१ ) इति । भा. १०।५।१।१ .

* मुख्यद्रव्यस्य प्रधानमात्रसमर्थस्य लाभेऽपि मुख्यस्यैवोपादानम् । ६।३।२०।४०–४२ . * मुख्यद्रव्ये कार्यासमर्थे प्रतिनिधेरेवोपादानम् । ६।३।१९।३९.

* मुख्यद्रव्यलाभेऽपि प्रतिनिधिना मुख्यकार्यकरणोत्तरं मुख्यं न ग्राह्यम् । ६।३।१७।३६–३७ .

* मुख्यद्रव्यसदृशस्य एव प्रतिनिधित्वं श्रुतप्रतिनिध्यपचारेऽपि । ६।३।१९।३३–३४ .

* मुख्यप्रतिनिध्योः सामानविध्यम् । ३।६।१४। ३७–३९.

* मुख्यप्राशुचिकक्रमौ प्रयोजकाख्यौ । वा. ३।१। १।१ पृ. ६५१.

* मुख्ययागक्रमेण निर्वापाद्युपक्रमो ग्राह्य । विनागोगे हि चतुर्गृहीतप्रयोः सारस्वतयोः स्त्रीदेवत्यस्य याज्यानुवाक्यापाठस्य प्राथम्येन स्त्रीयागस्य मुख्यस्य प्राथम्यं सिध्यति । वि. ५।१।७.

* मुख्यलक्षणम् । ' तत्पुनर्मुख्यलक्षणं यत् फलवत्त्वम् ' । सूत्रम् ४।४।११।१४.

* मुख्यलाभे मुख्यं ग्राह्यं न प्रतिनिधिः । वि. ६।३।१६.

* मुख्यविशेष्यत्वं वाक्यार्थे भावनायाः । भाट्ट. २।१।१–२.

* मुख्यवृत्तिः न्यायमया बाध्यते आनर्थक्यप्रतिघाते विपरीतो बाधो भवति इति रीत्या । बाल. पृ. १४५.

* मुख्यवीहयादिधर्माः प्रतिनिधिष्वपि नीवारादिषु कर्तव्याः दर्शपूर्णमासयोः । भा. ३।६।१४।३७–३९ .

* मुख्यशब्दः प्रधाने । भा. ७।१।१।१.

* मुख्यसम्भवे गौणग्रहणं नार्हति । भा. १।३।८। १६ । अहीनशब्दस्य न हीनः अहीनः इति नञ्समासं स्वीकृत्य ज्योतिष्टोमपर्यन्तः न युक्तः । स हि ' अहः सः क्रतुसमूहे ' इति व्युत्पादितः मुख्यः । भा.

* मुख्यसिद्धौ गुणलोपः सोढुं शक्यते । वि.६।३। १९.

※ मुञ्जादिषीकोद्धरणन्यायः । यथा मुञ्जाख्यतृणादिषीकाख्यं गर्भस्थं मृदु तृणं बहिरावरणकतया स्थितानां मुञ्जाख्यतृणानां विभजनेन समुद्ध्रियते तथा आत्मा अपि युक्त्या अन्वयव्यतिरेकलक्षणोपायेन शरीरत्रितयात् ब्रह्मचर्यादिसाधनसंपन्नैः पृथक् कृतश्चेत् परब्रह्मैव जायते, चिदानन्दरूपत्वस्य स्वभावस्योभयोरविशिष्टत्वात् । उक्तं च पञ्चदश्याम् ' यथा मुञ्जादिषीकैवमात्मा युक्त्या समुद्धृतः । शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥ ' इति । लाहली. २९ .

* मुद्गानां माष–चणक–कोद्रवा न प्रतिनिधिः ' अयज्ञिया वै माषाश्चणकाः कोद्रवाः ' इति वचनात् । वि. ६।३।६.

* मुरारिमिश्राः प्रत्यक्षिज्ञानोत्तरं घटं जानामि इत्यनुव्यवसायो जायते, तेन घटत्वघटितविषयकत्वे सति घटत्वप्रकारकत्वप्रामाण्यग्रहः इत्याहुः । मणि. पृ. १८.

* मुष्करत्वं पुंसां गुणः । तेन पुंस्त्वं दर्शयति ' मुष्करा भवन्ति सेन्द्रियत्वाय ' इति । भा. ४।१। ६।१७.

* मुष्टिकपालादिषु चतुर्मुष्टिनिर्वापादिसमुदायेन अनुग्रहः । समुदायानुग्रहन्यायः । ५।२।३।४–५.

■ मुष्टिकपालोपधानावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन । ५।२।३।४॥

पूर्वपक्षसूत्रमिदम् । पूर्णमासेष्टौ आग्नेयस्य अग्नीषोमीयस्य च पुरोडाशार्थं व्रीहीणां निर्वापे 'चतुरो मुष्टीन् निर्वपति' इत्युक्तम् । तत्र आग्नेयार्थं एक मुष्टिं निरूप्य अग्नीषोमीयार्थं एका मुष्टिः निर्वप्तव्या । तत उभयार्थं द्वितीया, इत्यादि । एवं मुष्टिषु चतुर्षु एकेन एकेन मुष्टिना अनुसमयः कर्तव्य इति पूर्वपक्षः ।

तथा पूर्णमासेष्टौ आग्नेयपुरोडाशश्रपणार्थं अष्टौ कपालानि उपधीयन्ते, अग्नीषोमीयार्थं तु एकादशकपालानि । तत्रापि आग्नेयार्थं एक कपालमुपधाय अग्नीषोमीयार्थं एकं कपालमुपदध्यात् । तत उभयार्थं द्वितीयादि । अग्नीषोमीयार्थं नवमादिकपालानि तु असंनिधानेन उपधेयानि इति पूर्वपक्षः ।

तथा आग्नेयस्य पुरोडाशस्य एकं अवदानं कृत्वा अग्नीषोमीयस्य एकं अवदानम् । तत उभयोर्द्वितीयं इति पूर्वपक्षः ।

तथा ज्योतिष्टोमे दीक्षायां यजमानस्य नेत्रयोरञ्जनं 'त्रिराङ्क्ते' इत्युक्तम् । तत्र दक्षिणनेत्रे एकदा अञ्जनं कृत्वा वामनेत्रे एकदा अञ्जनं कर्तव्यम् । तत उभयोर्नेत्रयोः द्वितीयवारं एवं उभयोर्नेत्रयोः तृतीयवारं अञ्जनं कार्यम् ।

तथा सत्रादौ अनेकयजमानकर्तृके कर्मणि एकस्य यजमानस्य नवनीतेन सर्वाङ्गे अभ्यञ्जनं कृत्वा ततो द्वितीयस्य यजमानस्य ततः तृतीयस्य इत्यादि एकैकेनैव अनुसमयः ।

तथा चातुर्मास्यादौ यजमानस्य वपनम् 'त्रिर्निर्वपति' इत्युक्तम् । तत्र मस्तकस्य पूर्वदिग्भागे एकदा वपनम्, ततो दक्षिणभागे एकदा इतिरीत्या चतुर्दिक्षु त्रिः वपनीयम् ।

तथा दर्शपूर्णमासयोरग्नौ 'चित्पतिस्त्वा पुनातु' इति मन्त्रेण सप्तभिर्दर्भपिञ्जूलैः कण्ठादुपरि 'वाक्पतिस्त्वा पुनातु' इति कण्ठादारभ्य नाभिपर्यन्तम्, 'देवस्त्वा सविता पुनातु' इति नाभिमारभ्य पादपर्यन्तं पुनाति । तदेतत् पावनं सत्रादौ अनेकयजमानकर्तृके सर्वेषां यजमानानां प्रथमतः कण्ठादुपरि, ततः सर्वेषां यजमानानां कण्ठादधस्तात्, ततः सर्वेषां यजमानानां नाभेरधस्तात् इति एकैकेन अनुसमयः कर्तव्य इति ।

एवं मुष्टिषु च कपालानां उपधाने च अवदानेषु च अञ्जनेषु च अभ्यञ्जनेषु च वपनेषु च पावनेषु च एकेन एकेन अनुसमयः कर्तव्य इति पूर्वपक्षः । चकारः प्राजापत्यपशुषु तन्त्रस्य उपाकरणादेः ग्रहणार्थः । उपाकरणादिकम् एकैकस्य पशोः भवति तथा मुष्ट्यादौ इति ।

सर्वाणि त्वेककार्यत्वादेषां तद्गुणत्वात् । ५ ॥

सिद्धान्तसूत्रम् । तुशब्दः पूर्वपक्षनिरासार्थः । सर्वाणि एव अनुक्रमेत यानि न तु एकैकम् । मुष्टिचतुष्टयस्य, कपालाष्टकस्य, अवदानद्वयस्य अञ्जनत्रयस्य अभ्यञ्जनस्य एकस्य, वपनत्रयस्य एकविंशत्या दर्भपिञ्जूलैः पावनस्य च प्रत्येकं एककार्यत्वात् एकं कार्यं अपूर्वं यस्य तादृशत्वात् । ऐककर्म्यात् इति पाठेऽपि स एवार्थः । एषां एतेषां इति वा चतुर्णां मुष्टीनां तद्गुणत्वात् एकमात्रत्वात् । एवं कपालोपधानादावपि योज्यम् । तस्मात् एकैकेन मुष्टिना एकैकेन कपालोपधानेन एकैकेन अवदानेन, एकैकेन अञ्जनेन, अभ्यञ्जनेन एकैकेन च पावनेन नानुसमयः । किन्तु मुष्टिचतुष्टयादिना अनुसमयः कर्तव्य । तथा च समुदायानुसमयोऽत्र सिद्धान्त । के

• मुष्टिचतुष्टय एक पदार्थ निर्वापे दर्शपूर्णमासयो । मि ५।२।२

• मुष्टिपरिमाण निर्वापे अध्वर्योरेव । सत्रपं १।४।११ मीको पृ २३७७ 'निर्वापे मुष्टिपरि माण०' इत्यत्र द्रष्टव्यम् ।

• मुष्टिलोपेन सप्तदशशरावे चरौ चतु सख्यानुग्रहो वाजपेये । १०।२।२८।६५-६८

■ मुष्टिलोपात्तु सख्यालोपस्तद्गुणत्वात् स्यात् । १०।२।२८।६५ ॥

दर्शपूर्णमासयो 'चतुरो मुष्टीन् निर्वपति' इति निर्वापसाधन मुष्टि, मुष्टिगुणश्च चतु सख्या उक्ता । अथ वाजपेये 'नैवार सप्तदशशराव बार्हस्पत्यं चरुं निर्वपति' इत्युक्तम् । तत्र मुष्टिसख्ययोर्ग्रहणस्य उभयोर्वा लोप प्राप्त । एव सति मुष्टिलोपात् सख्यालोपो भवेत् तद्गुणत्वात्

संख्यायाः मुष्टिगुणत्वात् । मुष्टिलोपो न कर्तव्यः तदपेक्षया संख्यायाः लोपो वरम् । संख्या हि मुष्टेर्गुणः । मुख्यापेक्षया गुणलोपो न्याय्यः । तस्मात् यावद्भिर्मुष्टिभिः सप्तदशशरावः पूर्येत तावद्भिर्मुष्टिभिर्नीवारा निर्वप्तव्याः इति पूर्वः पक्षः ।

न निर्वापशेषत्वात् । ६६ ॥

दर्शपूर्णमासयोः 'चतुरो मुष्टीन्निर्वपति' इत्यत्र निर्वापसाधनं मुष्टिः संख्या चोक्ता । अथ वाजपेये 'सप्तदशशरावः नैवारश्चरुर्भवति' । मुष्टिलोपो न कर्तव्यः चतुःसंख्यालोपस्तु कर्तव्य इति प्रथमः पूर्वपक्षः सूत्रेणोक्तः । तं पक्षं नशब्देन निषेधयति । न मुष्टिलोपः कर्तव्यः । चतुःसंख्याया मुष्टिगुणत्वे स्यात्तथा । न तु संख्या मुष्टेर्गुणः । संख्यायाः निर्वापशेषत्वात् । चतुरो निर्वपति मुष्टीन् निर्वपति इति च पृथगन्वयः । तस्मान्न संख्यालोपः किन्तु मुष्टिलोपः कर्तव्यः इति द्वितीयः पूर्वपक्षः । इममेव पक्षं पश्चात् सिद्धान्तत्वेन स्थापयिष्यति ।

संख्या तु चोदनां प्रति सामान्यात् तद्विकारः संयोगाच्च परं मुष्टेः । ६७ ॥

तुशब्दः द्वितीयं पूर्वपक्षं व्यावर्तयति । अथ तृतीयः पूर्वपक्षः उच्यते उभयलोपः इति । न केवलं मुष्टिलोपः । चोदनां प्रति सामान्यात् संख्या तद्विकारः, संयोगाच्च परं मुष्टेः विकारः इति सौत्रपदान्वयः । चोदनां प्रति नैवारचरुविधिं प्रति संख्या सप्तदशसंख्या प्राकृतचतुःसंख्याया विकारः । सप्तदशसंख्या चतुःसंख्याया बाधिका । किंच संयोगात् द्रव्यमात्रसंयोगात् परं शरावद्रव्यं मुष्टेर्विकारः मुष्टेर्बाधकः । तथा च वैकृतसंख्यया प्राकृतसंख्या निवर्त्यते वैकृतेन शरावेण प्राकृता मुष्टयो निवर्त्यन्ते । तस्मात् मुष्टिसंख्ययोरुभयोर्लोपः इति तृतीयः पूर्वपक्षः ।

न चोदनाभिसम्बन्धात् प्रकृतौ संस्कारयोगात् । ६८ ॥

दर्शपूर्णमासयोः 'चतुरो मुष्टीन् निर्वपति' इति निर्वापसाधनं मुष्टिः संख्या चोक्ता । अथ वाजपेये 'सप्तदशशरावः नैवारश्चरुर्भवति' । तत्र सप्तदशसंख्यया चतुःसंख्या बाध्यते शरावेण मुष्टयो बाध्यन्ते इति तृतीयः पूर्वपक्ष उक्तः । तं नशब्देन निषिध्य द्वितीयं पूर्वपक्षमेव सिद्धान्तमाह । न उभयलोपः । चोदनाऽभिसम्बन्धात् । चोदनेति यागं ब्रूमः । यागसम्बद्धा हि सप्तदशसंख्या शरावद्रव्यं च । प्रकृतौ दर्शपूर्णमासयोस्तु संस्कारयोगात् निर्वापसंस्कारसम्बद्धा चतुःसंख्या मुष्टिद्रव्यं च । यस्य हि प्रत्यक्षश्रुतेन चोदकप्राप्तस्य कार्यं अभिनिर्वर्त्यते तत् तेन निवर्त्यताम् । तत्र चतुःसंख्यानुग्रहात् मुष्टिलोपो न्याय्यतरः । तस्मात् मुष्टिलोपः कर्तव्यः, चतुःसंख्यालोपस्तु न कर्तव्यः । तर्हि कथमनुष्ठानम् ? उच्यते । चतुर्भिः कुम्भ्यादिभिः शरावं पूरयित्वा तस्य निर्वापः कर्तव्यः, पुनरेवं पुनरेवं एवं सप्तदशशरावम् । इति । इति सिद्धान्तः । के

० 'मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात् स्यात्' इत्यत्र 'चतुरो मुष्टीन् निर्वपति' इत्यत्र चतुःसंख्यायाः लक्षितमुष्टिविशेषणत्वापत्तेः सप्तदशशरावे चरौ प्रधानभूतमुष्ट्यननुग्रहापत्तौ संख्यानुग्रहो बध्यते । कौ. १।१।५।१२.

● मुष्टीकरणं यजमानं ज्योतिष्टोमे । भा. ३।१। १४।२४. ● मुष्टीकरणं 'मुष्टीकरोति' इति ज्योतिष्टोमे कृत्स्नप्रकरणार्थं न तु दीक्षावेदनार्थम् । भा. ३।१। १४।२४–२५. ● मुष्टीकरणेन हस्तचापल निवारितं ज्योतिष्टोमे दीक्षायाम् । वि. ३।१।१४.

० मुसलं यज्ञायुधम्, 'उलूखलमुसलाभ्यामवहन्ति' इति । वि. ३।१।५. ● मुसलं राजसूये नानावीरेभ्यो कल्पितम् । टुप्. ५।२।७।१३.

● मुसलप्रोक्षणस्य प्रयोजकं अपूर्वम् । भा. ९।१। २।२–३.

० मुसलशब्दः दण्डे प्रसिद्धः । यथा, कथं [illegible] तत्र मुसलिनो माणवका गच्छन्ति नावगच्छेयुः इति । भा. ४।२। ६।१८.

० मुहूर्तः नभश्चिरात्रमपात्रातिलङ्घनफलः सूर्यादिगतिविशेषः इति क्रियातिरिक्तकालमपाकरोति । सु पृ. १७०.

※ मूढं मूढमापयेत बोधयेदिति न्यायः । स्पष्टार्थोऽयम् । साहस्री. ७४२.

⧗ मूर्धवेष्टनन्यायः । यत्र क्रिया निष्फला तत्राऽस्य प्रवृत्तिरिति भाव. । भाव्यम् । साहस्री. ३०३.

* मूर्ध्नि न प्रयोक्तव्यं आम्नातेऽन्तकृष्णादिमन्त्राणां दर्शपूर्णमासयोः । शाङ्क. ४।१।३. * मूर्धानमस्येत्यर्चा संस्कारः । भा. ९।३।३।१९।४८.

* मूलप्रमाणविरहेण पौरुषेयवाक्येषु अर्थनिश्चय-प्रतिरोध इति गुणवाते स्थितेऽपि आलोऽपि निश्चयो दोषेऽपि विपरीतोऽनुप्रमाणको भवति । वैद्यनाथः १।१।२।२ पृ. १६.

* मूलोच्छेदप्रसङ्गः अथ एव अन्तःपाति प्रत्यु-क्तौ । भाट्ट. पृ. १३१.

* 'मूल्यः प्राप्यो परिधारयोरपेयं करोति' इमं मूर्धयोगमध्ये प्रत्याप्रयवक्षा विनियोक्त्री श्रुतिः, योगेश्वरान्त । भाट्ट. पृ. ४५.

* मूलप्रकृतिरियं ह्यग्निष्टोमज्योतिष्टोमानाम् । वि. ८।१।१ वर्णक २.

* मूल्येन क्रीतो ह्यानमतो क्रियते । तद् मधुपि-र्केषु शुक्रवत् नवति । भा.

⧗ मूषकविषाणन्यायः । न हि कश्चित् प्रेक्षावान् मूषकविषाणं परीक्षितुं यतते । साहस्री. ७१४.

* मृत्तिकासूक्तस्य वेदाभिश्रिम्या विनियोगः । भा. ९।१।५।१३ । अत्र सूत्रम् — मृत्तिकासूक्तस्य मृद्गेयाद-भिम्यां उपधानाऽभे सूत्रे 'आकृतो पर्याहरति मृत्तात्' इति विधानात् आकृतो भाषेयवम् । पृ. ९५७

⧗ मूषासिक्तताम्रन्यायः । 'तैजसावर्तनी मूषा' इत्यमरः । तैजसावर्तनी यत्र सा तैजसावर्तनी स्वर्णादि-धातवो यत्र धातुविशेषो मूषा स्यात् । 'कुठाली' इति गुर्जरभाषायां प्रसिद्धा । 'मूष स्तेये' इत्यस्माद्धातो-र्निष्पन्नेति । यथा तत्र मूषायां द्रुतं ताम्रं सिक्तं सत् तदाकारं भजते तदाकारमापद्यते, तथा रूपादीन् विषयान् व्याप्नुवत् चित्तमपि तत्तदाकारं तदाकार-मापद्यते इति भावः । उक्तं च पञ्चदश्याम् 'मूषा-सिक्तं यथा ताम्रं तन्निभं जायते तथा । रूपादीन् व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥' इति । साहस्री. ४५१.

* मृगजलम् । रश्मितोये भ्रान्त्या तोयत्वाद्य-स्याद्वितीयगुणदर्शनेन तोयशब्दस्याप्यवलम्बनात् तोयमुद्दिश्य तोयशब्दप्रयोगः । मु. पृ. ५०१.

* मृगतृष्णायां भ्रान्त्या तोयमध्यारोप्य यदा शब्दं प्रयुङ्क्ते तदा उभयोर्मुख्यार्थाप्रसक्तत्वेऽपि तोयप्रतीतेः भ्रान्तिमुख्यत्वम् ( भ्रान्त्याधारिकः मुख्यः शब्दः भ्रान्ति-मुख्यः इति मध्यमपदलोपिसमासः । मु. पृ. ५०० ) । वा. १।४।१२।२३ पृ. ३५८.

* मृगतृष्णादिज्ञानानि दृष्टानि मिथ्यात्व-दर्शनया बाध्यन्ते, हानोपादानादिफलवियोगात बाध्य-व्यपदेशं लभन्ते । वा. ३।१।७।१४ पृ. ८५८-८५९.

* मृगतृष्णादिप्रत्ययाः प्रत्यक्षेण बाध्यन्ते । वा. ३।१।७।१४ पृ. ८५९.

* मृगतृष्णादर्शनमिव अन्यार्थदर्शनं भवति प्रत्य-क्षे न्याये वा । भा. ४।४।११।१३.

⧗ मृगतृष्णान्यायः । यथा ग्रीष्मे मरुदेशे सिक-तासु सूर्यरश्मयः प्रतिफलिता जलधारा इव भवन्ति, मृगास्तृषिताश्च आपो धारा इति पश्यन्ति, भ्रमन्ति च । न च ताः सन्ति । सा भ्रान्तिर्मृगतृष्णापदवाच्या । अत्रास्त्यस्याम् 'अर्थभ्रान्तम्' । उक्तं च 'रे चित्त चिन्तय चिरं चरणौ मुरारेः, पारं गमिष्यसि यतो भवसागरस्य । पुत्राः कलत्रमितरे सुहृदः सहायाः, सर्वं विलोकय सखे मृगतृष्णिकाभम् ॥' इति । साहस्री. ४४१.

* मृगतृष्णास्वप्नोपलदर्शनम् ( येषु पानीयं चाजानता तेषु भ्रान्तस्यादर्शनम् ) । भा. ९।१।९।३१.

* मृगतृष्णासम् अप्रमाणमूलत्वात् मिथ्यादर्शनम् ( 'अग्नीषोमीयस्य स्थाने अग्नीषोमीयः पुरोडाशः' इत्यादि दर्शनम् ) । भा. १।८।२।२१।४१.

⧗ मृगभिया सस्यानाश्रयणन्यायः । ( अस्यार्थः 'भिक्षुभिया स्थाल्यनधिश्रयणन्याय.' सीके पृ. २०६० इत्यत्र द्रष्टव्यः । ) । साहस्री ३४८.

⧗ मृगवागुरान्यायः । वागुरा मृगबन्धनी । अयं विशिष्टवाचकपदाना सति विशेषणवाचकपद-प्रयोगस्थाने विशेष्यमात्रपरतायां प्रवर्तते । साहस्री. २१४.

टुप्— मेध इत्यत्र चत्वारः पक्षाः, अविकारेणोभयोः प्रयोगः, व्यवस्थया वा द्विवत्रिगदो देवतायामेकवत्रिगदो यजमाने, उभौ वा स्वामिपरौ द्विवन्निगदः पत्न्यपेक्षया, उभौ वा देवतापरौ प्रधानापेक्षया एकवन्निगद इति । तत्र तृतीये पक्षे दोषमाह 'उत्कर्षो देवतायां स्यात्' इति ( ३५ सूत्रे ), यस्य देवतावचनः तस्योत्कर्षं प्राप्नोति, एकवन्निगदोऽसौ एकदेवत्येषु पशुषु इति । तत् प्राधान्यमनालोच्य । ( प्राधान्यं दर्शयति— ) 'यत्रास्ति प्रधानभूतः प्रातिपदिकार्थः, तत्र गुणभूतं वचनं नीयते' इति । ( उत्कर्षे कारणान्तरमाह— ) प्रधानस्य देवतात्वमदृष्टैव ।

अपि वा द्विसमवायोऽर्थान्यत्वे यथासंख्यं प्रयोगः स्यात् । ३४ ॥

भाष्यम्—अपि वा नैतदेवम् । तयोरिह समवायः एकवन्निगदस्य द्विवन्निगदस्य च । तयोः एकवन्निगदः स्वामिनि प्रयोक्ष्यते येषां समाम्नातः । येषां द्विवन्निगदः समाम्नातः, तेषां स देवते वक्ष्यति । तस्मात् विकृतौ बह्वीषु देवतासु द्विवन्निगदः ऊहेन प्रवर्तिष्यते । बहुयजमानेषु एकवन्निगद ऊहिष्यते । एवं यथासंख्यं प्रयोगो भविष्यति ।

स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् पत्न्या द्वितीयशब्दः स्यात् । ३५ ॥

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति । स्वामिदेवतयोरुभयोर्वाचक इति नैतदेवम् । एक एव मेधपतिशब्दः, यस्मात् द्विवचनम्, अस्मात् एकवचनं स एव न स्वामिदेवतयोर्वाचको भविष्यति । ननु एकोऽपि मेधपतिः अपरोऽपि प्रतीयते, कथमवाचक इति । उच्यते । यदा स्वामिनः, तदा मेधपतये यो मेधः, तं मेध्या दुर उपनयत इति संबन्धः । यदा देवतावचनः, तदा मेधपतये उपनयत मेध्या दुरः इति संबन्धः । स एष सकृदुच्चरितः उभाभ्यां पक्षाभ्यां न संबन्धुमुत्सहते । वचनव्यक्तिभेदात् वाक्यभेदः प्रसज्यते । तस्मात् स्वामिनो वाचक इति अध्यवसीयते । अथ किमर्थं न देवतावचनः कल्प्यते ? तथाहि कल्प्यमाने एकवन्निगद उत्कृष्येत एकदेवत्ये पशौ । तत्र प्रकरणं बाध्येत । यजमानवचने पुनः कल्प्यमाने न द्विवन्निगद उत्कृष्येत । तत्रैव यजमानयोः दम्पत्योः वाचको भविष्यति । तस्मात् प्रकरणानुग्रहाय स्वामिवचनः कल्प्यते । स्वामिपरस्य ऊहो भविष्यतीति ।

देवता तु तदाशीष्ट्वात् संप्रार्थ्यत्वात् स्वामिन्यर्थिका स्यात् । ३६ ॥

भाष्यम्— तुशब्दः पक्षं व्यावर्तयति । न स्वामिवचनः, देवतापरो भविष्यति । कुतः ? तदाशीष्ट्वात् । 'आशासाना मेधपतये मेधम्' इति देवताभ्यो हविराशास्यते, मेधपतिभ्यां मेधमाशासाना उपनयत ताभ्याम् इति । यजमानं प्रति आशासनानुकीर्तनमनर्थकम् अकर्तव्यं च । स प्राप्त एव स्वामिनि मेधः किमर्थमाशास्यते । न च तेन निमित्तेन स्वामिशब्देन प्रयोजनम् । याग एव हि न स्वर्तेत । तस्मात् देवतावचनो मेधपतिशब्द इति ।

टुप्— सिद्धान्तस्तु देवतावादिपक्षः । स्वामिपक्षे वाक्यार्थे एव बाधः स्यात्, आशासानपदानर्थक्यात् । अपि च यजमानाय मेधपतये यो मेधः, तं मेध्या दुरः अपद्वार उपनयत । किमर्थं इति प्रयोजनाभावात् असमर्थो वाक्यार्थः । न च मेधमनूद्य किञ्चित् विधीयते इति । इतरथा ( देवतापक्षे ) मेध्या दुर उपनयत मेधपतये मेधं कर्तुं इत्येवमाशासानाः इत्युपपन्नो वाक्यार्थः । न च पत्नीयो देवतायै कर्तुं शक्यते इत्यर्थात् योऽयं यजमानस्येति ।

उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् । ३७ ॥

भाष्यम्— उत्सृष्ट च यजमानेन नाय ममेति । केवलं पत्नीयो रक्ष्यते । कालेन देवतया समन्वयते इति । कः पुनरस्य देवतया संबन्धः, यत् तामुद्दिश्य परिग्रहोऽस्य त्यज्यते । स च यागः प्राक् कृतः । तस्मात् यागात् परार्थं द्रव्यं नात्मीयम्, परित्यज्य आस्ते । आत्मप्रधानं यत् तदात्मीयम्, न यं प्रति आत्मा गुणभूतः । तादृशे तु भक्त्या पतित्वं भवति । तस्माद्देवतायामेव तत्र मुख्यं मेधपतित्वम्, भाक्तं स्वामिनि इति ।

तत्प्रधानैकसंयुक्तो द्विदेवतेऽसंभवात् । ३८ ॥

भङ्ग एव दूषणतावीजम्। न च तदत्रास्ति। शाखाभेदेन द्विश्रुतस्य एकत्रकृत्स्नग्रहणाभावात् इति वाच्यम्। तथापि लिङ्गकल्पितश्रुतेः अनेकत्वकल्पनागौरवभिया एकस्यैवार्थस्य वाच्यत्वात्। तदिह किंपरत्वमिति चिन्तायाम्, देवतायाः विग्रहाद्यभावेन स्वामित्वाख्यपर्यायपतित्वानुपपत्तेः यजमानपरत्वमेव। न च तस्य एकत्वेन द्विवचनानुपपत्तिः। पाशन्यायेन (९।३।७) तदुपपत्तेः। वस्तुतस्तु दंपत्योर्यज्ञव्यक्तिकर्तृत्वैक्यात् यजेन इतिवत् एकवचनम्, पत्नीयजमानाभिप्रायेण च यजानौ इतिवत् द्विवचनम्। अत एव एकपत्नीकप्रयोगे द्विवचनान्त एव मन्त्रः। अन्यत्र तु एकवचनान्त एव इति नास्मन्मते विकल्पोऽपि, इति प्राप्ते, यजमानपरत्वे फलोपशासनस्य तावत् सिद्धत्वेनैव वैयर्थ्यम्। दक्षिणादीनां च अश्रुतानां कल्पनात्। तदाह्वानमपि संभवति। अतः देवत्वादिव्यवहारसिद्ध्यर्थं देवताया अपि स्वीकाराख्यसंबन्धस्य तृतीये साधितत्वात् तमादाय मेधपतित्वोपपत्तेः देवतापरत्वमेव। वचनं तु लुप्तसंख्यत्वेन देवतात्वस्य अग्नीषोमयोः व्यासज्यवृत्तित्वात् एकत्वोपपत्तेः अभिधानभेदेन च द्वित्वोपपत्तेः सर्वमप्युपपन्नमेव। तन्त्र्य इव च देवतात्वेऽपि मेधपतित्व सामानाधिकरण्यादेव उपपन्न इति न काचित् क्षतिः। एष च विकल्पोऽपि फलमुखत्वात् न दोषाय। प्रयोजनं पूर्वपक्षे सर्वे इयोरपि ऊहः निरूपकं अर्थद्वयानुसंधाने। सिद्धान्ते तु अग्निमाधिकरणे वक्ष्यते।

मण्डन—'स्यादूहन मेधपतेर्विकल्पम्।'

शंकर—'देवतस्वत्वोषपतिः।' ऊद्यः।

॥ मेधपतित्वं स्वामिदेवतस्य समवायात् सर्वत्र च प्रयुक्तत्वात् तस्य चान्यायनिगदत्वात् सर्वत्रैवाविकारः स्यात्। ९।३।१२।३३ ॥

अग्निष्टोमे एकेषां शाखिनाम् 'मेधपतये मेधम्' इति एकवचननिगदः। अन्येषां शाखिनां तु 'मेधपतिभ्यां मेधम्' इति द्विवचननिगदः। अनयोर्मन्त्रयोः पशुगणेषु विकृतिषु अविकारेण प्रयोगः, उत द्विवचनस्य देवतापर ऊहः एकवचनस्य तु यजमानपरः, अथवा उभयोर्यजमानपर एव, अथवा उभयोर्देवतापर ऊहः इति विचारे प्रथम पक्षमाह। सर्वत्रैव विकृतिषु अविकारः स्यात्। मेधो यज्ञः, तत्साधनत्वात् पशुर्मेधः। मेधस्य पतिः मेधपतिः। मेधपतित्वं च स्वामित्वेनैतस्य। स्वामी यजमानश्च अग्नीषोमौ देवता च तत्समाहारत्व स्वामिदेवतस्य। समवायात् संबन्धात्। दातृत्वेन यजमानस्य संबन्धः। ग्राहकत्वेन च अग्नीषोमयोः संबन्धः। सर्वत्र च देशेषु आहिमवतः आ च कुमारीभ्यः पतिशब्दस्य आधिपत्ये प्रयुक्तत्वात्। तस्य च एकवचनान्तमेधपतिशब्दघटितस्य द्विवचनान्तमेधपतिशब्दघटितस्य च मन्त्रस्य प्रकृतौ एव अन्यायनिगदत्वात् एकवचनेन द्विवचनेन वा मन्त्राणां मेधपतीनां वक्तुमशक्यत्वात्। तत्रैवं सति एकत्वं द्वित्वं वा अविवक्षित्वा प्रातिपदिकार्थमात्रेण प्रकृतौ मन्त्रयोः प्रयोगस्य स्वीकृतत्वात् विकृतावपि तथैव प्रयोगात् न दोषः। तस्मात् पशुगणेषु अनूहेनैव मन्त्रयोः प्रयोगः स्यात् इत्येकः पक्षः। पतिशब्दस्य आधिपत्ये सर्वत्र च प्रयुक्तत्वात्, समवायात् स्वामिदेवतस्य मेधपतित्वं स्यात्। एकवचनान्तस्य द्विवचनान्तस्य च मन्त्रस्य अन्यायनिगदत्वात् प्रातिपदिकार्थमात्रविवक्षया च सर्वत्रैव प्रकृतौ विकृतौ च मन्त्रयोरविकारः स्यात्। इति सूत्रपदानामन्वयोऽर्थश्च।

अपि वा द्विसमवायोऽर्थान्यत्वे यथासंख्यं प्रयोगः स्यात्। ३४ ॥

अग्निष्टोमे मेधपतिशब्दः क्वचित् एकवचनान्तः पठितः मेधपतये इति, क्वचित् द्विवचनान्तः मेधपतिभ्याम् इति। तयोरविकारेण पशुगणेषु प्रयोग इति प्रथमः पक्ष उक्तः, तं निराकरोति अपिवाशब्दः। अथ द्वितीयं पक्षमाह। मेधपतिशब्दस्य द्विसमवायो भविष्यति स्वामिनि देवताद्वन्द्वे चेति द्वयोः समवायः। येषामेकवचनान्तो मेधपतिशब्दः तेषां स स्वामिनमभिप्रेत्य स्यात्। येषां तु द्विवचनान्तः तेषाम् अग्नीषोमौ अभिप्रेत्य स्यात्। एवं अर्थान्यत्वे अर्थयोः स्वामिदेवतयोः अन्यत्वे भिन्नत्वे सति यथासंख्यं प्रयोगः स्यात्। प्रकृतौ एकवचनान्तस्य स्वामिनमपेक्ष्य प्रयोगः। द्विबहुयजमानकेषु च ऊहेन प्रयोगः। द्विवचनान्तस्य देवताद्वन्द्वमपेक्ष्य प्रकृतौ प्रयोगः बह्वीषु देवतासु सतीषु ऊहेन प्रयोगः इति यथासंख्य

प्रयोगः स्यात् । स्वाम्यपेक्षया एकवचनान्तः देवतापेक्षया द्विवचनान्तः इति यथासंख्यता । अयं द्वितीयः पूर्वपक्षः ।

**स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् पत्न्या द्वितीयशब्दः स्यात् । ३५ ॥**

वाशब्दो द्वितीयपक्षनिरासार्थः । अग्निगुप्रैषे मेधपतिशब्दः स्वामिनो बोधकः स्यात् । एकवचनान्तः यजमानपरः द्विवचनान्तस्तु देवतापरः इति वैलक्षण्यं तु न युक्तं ऐकशब्द्यात् एकस्य शब्दस्य एकस्मिन्नेव वाक्ये अनेकार्थत्वस्य अन्याय्यत्वात् । ननु द्विविधो अपि मेधपतिशब्दो देवतापर एव किं न स्यात् इति चेत्, एकवचनान्तमेधपतिशब्दस्य एकदेवताके निवेशे उत्कर्षः स्यात्, स च प्रकरणविरुद्धः । तस्मात्र देवतापरः । किन्तु स्वामिपर एव । ननु द्विवचनस्य का गतिः स्वामिपरत्वे । उच्यते । द्वितीयशब्दः द्विवचनं पत्न्या स्यात् पत्नीं अभिप्रेत्य द्विवचनं युज्यते । तथा च यजमानमभिप्रेत्य मेधपत्ये इत्येकवचनं पत्नीयजमानौ अभिप्रेत्य मेधपतिभ्यां इति द्विवचनम् । पशुगणे तु यत्र यजमानविवृद्धिः तत्र ऊहेन तयोः प्रवृत्तिः मेधपतिशब्दः नैव देवतापरः इति तृतीयः पक्षः ।

**देवता तु तदाशीष्ट्वात् संप्रदानत्वात् स्वामिन्यनर्थिका स्यात् । ३६ ॥**

तुशब्देन तृतीयपक्षनिरासः चतुर्थं सिद्धान्तपक्षमाह । देवता मेधपतिशब्दार्थः स्यात् । तदाशीष्ट्वात् ताभ्यां देवताभ्यां आम्नायते इतरेण तु मन्त्र तदाशीः, तस्य भाव. तदाशीष्ट्वं तस्मात् देवतापरत्व मन्त्रगतमेधपतिशब्दस्य । 'आग्रावाणा मेधपतिभ्यां मेधं उपनयत मैप्या दुरः' इति । स्वामिनि [illegible] मेधपतिशब्दस्य स्वामिपरत्वे तु सा आशीः अनर्थिका स्यात्, संप्रदानत्वात् स्वामिनः पशु प्रति एव पूर्वमपि, इति पुनरानयन व्यर्थम् । तस्मात् मेधपतिशब्दः देवतापर एव । तस्मात् देवताप्रकृत्ये एव ऊहः ।

**उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् । ३७ ॥**

अग्निगुप्रैषगतमेधपतिशब्दो देवतापर इति सिद्धान्त उक्त. । यत्तु तस्मिन् यजमाने पतित्व मेधपतित्व तत् भक्त्या गौण्या वृत्त्या । उत्सर्गात् 'अग्नीषोमाभ्यामिदं न मम' इति यजमानेन पशोरुत्सर्गः कृतो भवति इति उत्सर्गकर्तृत्वात् गुणात् यजमानस्य मेधपतित्वं स्यात् । मुख्यं तु मेधपतित्व देवताया एव ।

**वस्तुन्येवैकसंयुक्तो द्विदेवतेऽसंभवात् । ३८ ॥**

अग्निगुप्रैषगतमेधपतिशब्दस्य देवतापरत्वे द्विदेवते द्विदेवताके पशुगणे एकपशुके एकवचनान्तो मेधपतिशब्दः असंभवात् न संभवतीति कृत्वा उत्कृष्येत मेधपतिशब्दस्य एकदेवताके पशौ उत्कर्षः कर्तव्यः स्यात् इति यदुक्तं 'उत्कर्षो देवतायां स्यात्' ( ९।३।१२।१४ ) इत्थं तत् परिहर्तयन् । अनुपपन्नमेतत् ।

**एकस्तु समवायात् तस्य तल्लक्षणत्वात् । ३९ ॥**

अग्निगुप्रैषगतमेधपतिशब्दः एकः सः अग्नीषोमयोर्गणः उदरः । समवायात् तस्मिन् गणे मेधपतिशब्दस्य सामान्यरूपेण सम्बन्धात् । 'आग्रावाणा मेधपतये देवतागणाय मेधं उपनयत' इति कल्पते । तत्र गणस्य च तल्लक्षणत्वात् सः एकत्वरूपः गुणः लक्षणं यस्य तादृशत्वात् । गणस्य एकत्वात् एकवचनान्तमेधपतिशब्दप्रयोगस्य युक्तत्वे इत्यर्थः । गुणशब्दः चार्थः अनुक्तसमुच्चयार्थः । द्विवचनान्तमेधपतिशब्दोऽपि गणगतावयवद्वयपरत्वेन उपपद्यः इति । तस्मात् एकवचनान्तो गणवाची मेधपतिशब्दः एकदेवताके पशौ नोत्कर्षणीयः ।

**संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात् । ४० ॥**

अग्निगुप्रैषगतमेधपतिशब्दः द्विवचनान्तोऽपि क्वचित् पठ्यते मेधपतिभ्यां इति । तस्य देवतापरत्वेऽपि न विरोधः संसर्गित्वात् अग्नीषोमात्मकदेवतागणस्य । संसर्गी अवयवौ देवता नाम । तथा सहितौ कदाचित् एका देवता भवति । द्वौ अर्थौ संसृष्टौ एकता यातः तस्मात् एकवचनान्त. द्विवचनान्तोऽपि [illegible] मेधपतिशब्दः प्रकरणेन अभिनिविशते । तस्मात् विरोधाभावात् तेन द्विवचनान्तेन सह एकवचनान्तस्य विकल्पः स्यात् प्रकृतावेव । विकृतौ [illegible] बहुदेवताके ऊहेन प्रवर्तिष्यते ।

**एकत्वेऽपि गुणत्वपायात् । ४१ ॥**

अग्निगुप्रैषगतमेधपतिशब्दः एकवचनान्त. पठ्यते । तत्र एकवचनेन एकत्वे विवक्षितेऽपि गुणत्वापायात् एकत्वस्य गुणस्य अग्नीषोमरूपदेवतागणे अन्तर्भूते अग्नी

तत्र पशुशब्दवाच्यं मेध्यामपि विद्यते। तस्मात् समर्थो निगदोऽयम्। 'पश्वभिधानाद्वा' इत्यनेन प्रतिपाद्यते।

विशेषो वा तदर्थनिर्देशात्॥ ४७॥

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति। नैतदस्ति प्राप्नुयात् सारस्वत्यध्रिगुवचनमिति। अयमन्यः पक्षः, न प्राप्नुयादिति। कुतः? विशेषो वा तदर्थनिर्देशात्। पुमर्थे ह्येष शब्दो निर्देष्टुं शक्नोति। स्त्रीलिङ्गश्चायमर्थो मेषीति। स्त्रियं पुंशब्दो न शक्नोत्यभिवदितुमिति प्रथम एव पक्षः सङ्कीर्तितः। केवलं परपक्षव्यावर्त्तकस्तिर्विशेषः।

टुप्— 'विशेषो वा तदर्थनिर्देशात्' इति सिद्धान्तसूत्रेण प्रथमसूत्रार्थ एव स्मार्यते।

पश्वर्थं चैकशब्द्यात्॥ ४८॥

भाष्यम्— अथ यदुक्तम्, पशुत्वाभिप्रायमेतद्वचनम्, एको हि शब्दः पशुत्वस्य च पशोश्च, तेन अस्मै पशव इत्यभिसम्बन्धो भविष्यतीति। तत् परिहर्तव्यमिति।

टुप्— 'पश्वर्थं चैकशब्द्यात्' इति पशुशब्दोऽत्र पुंलिङ्गः। अस्मैशब्दोऽपि, तयोर्यत् सामानाधिकरण्यम्, तत् प्रति स्मार्यते।

यथोक्तं वा सन्निधानात्॥ ४९॥

भाष्यम्— यथोक्तं स्यात् अध्रिगुवचनं अप्राप्ता सारस्वती। कुतः? पूर्वस्मादेव कारणाल्लिङ्गविशेषादिति। यदुक्तम्, पशुशब्दसमानाधिकरणः सर्वनामशब्दः प्रयोक्ष्यते इति, तन्न। कुतः? सन्निधानात्। संनिहितवचनो हि सर्वनामशब्दः। उच्चरितमात्रे यः पदार्थः शब्देन सन्निहितः, तेन सम्बध्यते। अथ तस्मिन्नसति लिङ्गादिसर्वविशेषणविशिष्टे रूपेण सन्निहिते प्रयुज्यते। सन्निधाने नैकेन विशेषणेन विशिष्टा व्यक्तिमभिवदितुं शक्नोति। संनिधानात् तत्रैकं सामान्यं व्याश्रीयते, नान्यत् किञ्चित् पशुत्वादि। तस्योच्चार्यमाणे पशुशब्दे, शब्देन व्यक्तेर्निष्कृष्टे पशुत्वे, 'अस्मै पशवे' इति शक्यते संबन्धः कर्तुम्। अनुच्चार्यमाणे तु लिङ्गविशेषवचनः प्राप्नोति। तस्मादप्राप्ता सारस्वत्यध्रिगुवचनमिति। कृत्वा चिन्तेयम्। अत्र प्रयोजनं न वक्तव्यम्। किमग्नीषोमीयार्थाः पशुधर्मा उत साधारणा इत्यस्मिन्नधिकरणे प्रयोजनार्थं विचारोऽयम्। यदि साधारणाः पशुधर्मास्ततः सारस्वत्यध्रिगुवचनमप्राप्ता, अथाग्नीषोमीयधर्मास्ततोऽस्यामध्रिगुवचनमूहेन प्राप्यते। न च प्रयोजनस्य प्रयोजनं वक्तव्यम्।

टुप्— 'यथोक्तं वा सन्निधानात्' इति पूर्वपक्षवादिना यदुक्तं तदेतेन निराक्रियते। सन्निहितवचनत्वं सर्वनामशब्दानां स्वभावः। उच्चरितमात्रः सर्वनामशब्दो यत्पदान्तरेण सन्निधाप्यते, तेन सह शीघ्रं सम्बध्यते। न चेह पशुशब्द उच्चरितः, येन सम्बन्धः स्यात्। तस्मिन्नसति शब्दोपात्ते, संबन्धप्रकारः आश्रीयते प्रकरणालोचनेन। 'लिङ्गादिसर्वविशेषणविशिष्टे रूपेण सन्निहिते प्रयुज्यते' इति कोऽर्थः (आदिशब्दस्य रूपशब्दस्य च कोऽर्थः इति प्रश्नः)। जातिलिङ्गसंख्याविशेषणविशिष्टां व्यक्तिमभिदधाति रूपेण स्वसामर्थ्येनेत्यर्थः। सर्वनाम्नामेतदेव सामर्थ्यम्, यदेतानि विपरिवर्तमानमेवाभिदधति। व्यक्तिस्तु विपरिवर्तते। अथवा, रूपेणेति रूपशब्देन विद्यमानं वस्त्वभिधीयते। तत्र विद्यमाने यदि विपरिवर्तते प्रकरणसंनिहितम्। संनिधाने नैकेन विशेषणेन विशिष्टां व्यक्तिमभिवदितुं शक्नुवन्ति। यद्वत् सन्निधानविशिष्टं तत्तदभिदधति। तस्मात् संनिधानमेषां सामान्यं निमित्तम्। संनिहितं च पुंलिङ्गम्। यद्यपि स्त्रीलिङ्गमपि सन्निहितं तथाप्ययमस्मैशब्दस्तत्र वर्तितुम्, पुंलिङ्गत्वात्। 'तस्योच्चार्यमाणे पशुशब्दे' इति। उच्चार्यमाणः पशुशब्दः 'अस्मै पशवे' इति पुंलिङ्गेन पुंलिङ्गशब्दः शक्यः संबन्धयितुम्। अस्मिन् पक्षे व्यक्तितो निष्कृष्य पशुत्वम्, तेन सह संबध्यते अस्मैशब्दः, न व्यक्त्या। एतदपि पशुशब्दे उच्चार्यमाणे न भवतीत्युक्तमेव।

प्रभा— प्रकरणाविशेषात् 'अस्या अग्निं मरुत' इति च पुंलिङ्गस्य अस्मैशब्दस्य नियतलिङ्गपशुशब्दाभिधेयपशुत्वाभिप्रायेण 'अस्मै पशवे' इत्येवं स्त्रियामपि उपपत्तेर्लिङ्गविरोधाभावात् तस्यामपि स्यादध्रिगुवचनम्। इति प्राप्ते, अभिधीयते। 'पशुशब्दश्रुतावेवं भवेन्न त्विह स श्रुतः। तस्मात् प्रयोगकाले यत् परोक्षतया स्थितम्॥' द्रव्यं, तत्र प्रयुक्तोऽयं पुंलिङ्ग वदितुं क्षमः। न स्त्रीद्रव्यमतो मेध्या-

वरुणीमामिक्षा वशा दक्षिणा ' इतीयं चतुर्थी अवेष्टिः राजसूये । भाट्ट. ११।४।३. * मैत्रावरुण्यामामिक्षाया ' न वाजिनेन प्रचरन्ति ' इति निषेधः । भा. ७।३। १०।२६.

* **मैत्रावरुणादिग्रहेषु** अग्रणायेषु पयआदिषु प्रदेय धर्मा नानुष्ठेयाः । १।४।१२।४५–५०. मीको पृ १८२४ ' ज्योतिष्टोमे मैत्रावरुणादिग्रहेषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* **मैत्रावरुणादिग्रहापेक्षया** ऐन्द्रवायवस्य प्रथमं मनुष्ठान ज्योतिष्टोमे । १०।५।१७।६२–६४, कामसंयोगे ऽपि ऐन्द्रवायवस्य ग्रहस्य पाठक्रमे स्वस्थाने एवानुष्ठानम् । १०।५।१८।६५–६६.

* **मैत्रावरुणग्रहः** चतुर्थो ज्योतिष्टोमे मन्त्रकाण्डविधि-काण्डयोः । नि. १०।५।१७, * मैत्रावरुणग्रहः ज्योति-ष्टोमे प्रातःसवने श्रूयते । ३।३।१.

* **मैत्रावरुणदण्डदानन्यायः** ( ४।२।६ ) । न च प्रागुक्तमपि एकमेव मानवत्वात् भिन्न पात्रमुपादाय तेनैव ग्रहाः उपावहरण ( ग्रहणे ) कर्तव्यमिति वाच्यम्, उपावहरणकाले प्राप्तस्तुते दानविधानात् तस्य च मैत्रावरुणदण्डदानन्यायेन प्रतिपत्तित्वानुपपत्तेः स्तुतोत्पादकत्वेन प्रायश्चित्तत्वाद्यभावात् । भाट्ट. १०।६।१९.

* **मैत्रावरुणपात्रे** पयस्या निदधाति ज्योतिष्टोमे । नियमानामपि एतानि एकदेशप्रयोग. न तु कृत्स्नः । भा. ३।८।१८।३३.

* **मैत्रावरुणप्रैषे** तृतीयसवने ' अयं यजमानः ' इत्यत्र ' अयं सुतासुती यजमानः ' इति पाठविकारः । वि १२।२।१२.

* **मैत्रावरुणसाम** शाक्वरं विश्वजिति सर्वपृष्ठे । भा. १०।६।५।१४.

* **मोक्षः** ज्ञानात् भवति । कथम् ? इत्थम् । यो हि देहात् विविक्तं अनन्तं अजरं अमरं अदुःखमात्मानं जानाति, तस्य देहसंप्रयोगनिरासस्य पूर्वकृतानां कर्मणां फलोपभोगेन क्षयात् तन्निमित्ते शरीरे पतिते अनागतानां च कर्मणामननुष्ठानादेव अभावात् देहान्तरानुत्पत्तेः

अत्यन्तासंबन्धः शरीरेण भवति । ' तत्र ज्ञातात्मतत्त्वानां भोगात् पूर्वक्रियाक्षये । उत्तरप्रचयासत्त्वाद् देहो नोत्पद्यते पुनः ॥ कर्मजन्योपभोगार्थं शरीरं न प्रवर्तते । तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते ॥ मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥ प्रार्थ्यमानं फलं ज्ञातं न चानिष्टोऽभविष्यति । आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपयुज्यते ॥ ' श्लोवा. सम्बन्धाक्षेपपरिहारे १०८–१११, रत्नाकरश्च. * मोक्षः ब्रह्मविषयकर्षकलाप्राज्ञाननिवृत्तिः । रहस्य. पृ. ९. * मोक्षः । शरीरसंबन्धो बन्धः । तदभावो मोक्षः । तेन निष्पन्नानां देहानां यः प्रध्वंसाभावः यश्च अनुत्पन्नानां प्रागभावः स मोक्षः । कर्मनिमित्तश्च बन्धः कर्मक्षयादेव न भवति । रत्नाकरः. संबन्धाक्षेप-परिहारे १०६. * मोक्षस्य धर्मविशेषत्वेऽपि ब्राह्मणपरि-व्राजकवत् पृथगुपादानम् । सु. पृ. १२७.

* ' मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥ ' ( श्लोवा. संबन्धाक्षेपपरिहारः ११० ) इत्यनेन न्यायेन काम्य-निषिद्धवर्जनात् तत्फलोपभोगार्थं शरीरानुत्पत्तिः । सु. पृ. ३२९. * स. स्वर्गं न कामयते बन्धात्मकत्वात्, मोक्षार्थी तस्य कर्मस्वरूपे एव कर्तृता ( न फले ) । टुप्. ६।१। १।२ पृ १४०८, * मोक्षार्थिनाऽपि अवश्यं पापक्षयः एषितव्यः, तस्मिन् ( अ- )सति मोक्षाभावात् । ६।१। १।२.

* **मोक्षवादः** । क पुनरयं मोक्षो नाम । विचित्र-वासनाशतेन विचित्रनीलपीतादिरूपेण प्रवृत्तो ज्ञानसंता-नस्य निःशेषवासनोच्छेदात् नीलपीतादिविनिर्मुक्त विशुद्ध केवल ज्ञानमात्रेणावस्थानं इति केचित् । अपरे तु दीपसंतानस्येव ज्ञानसंतानस्योपरमम् । उभयमप्येतत् बाह्यार्थाभावमूलं इति तत्सद्भावप्रतिपादनेनैव निराकृतम् । अपरे तु प्रपञ्चविलयं अपवर्गमाहुः । अविद्या-निर्मितो हि प्रपञ्चः स्वप्नप्रपञ्चवत् प्रबोधेनैव ब्रह्मविद्यया अविद्यायां विलीनायां स्वयमेव विलीयते । तथाहि श्रुतिः ' यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् ' इति ।

तदिदमपि प्रपञ्चस्य अविद्यानिर्मितत्वनिराकरणेन परमार्थत्वप्रतिपादनात् निरस्तमेवेति । 'आत्मैवेदं सर्वम्' इति सर्वस्यात्मा भोक्ता इत्यर्थः । यथा 'स कामयेत राष्ट्रं स्याम्' इति राष्ट्रस्य भोक्ता इत्यर्थः, यथा 'स कामयेत सर्वमिदं भवेयम्' इति सर्वस्य भोक्ता भवेयमित्यर्थः, तथा 'आत्मा सर्वम्' इति सर्वस्यात्मा भोक्तेत्यर्थः ।

यत्तु 'यत्र हि द्वैतमिव भवति' इति द्वैताभावस्य श्रुतिवचनं तदौपचारिकम् । यथा स्वप्नप्रपञ्च इन्द्रजाल-मृगतोयादि कियन्तंचित् कालं दृष्टिपथमापन्नं पश्चात् विलीनो भोग्यतामतिवर्तते, तथा अयं शरीरेन्द्रियविषयरूपप्रपञ्चोऽपि अस्य आत्मनः कियन्तंचित् कालं उपभोग्यः सन् पश्चात् विनाशात् अनुपभोग्यो भवति इत्यनेन सादृश्येन भ्रान्त इति उपचारेणोच्यते, पुरुषाणां विषयभोगेषु आत्यन्तिकतनेन मुक्तौ अभिरुचिं जनयितुम् । यदपि 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति मुक्तौ आत्मनः अद्वितीयत्ववचनम्, तदपि न प्रपञ्चस्वरूपनिषेधार्थम्, किन्तु सत एव प्रपञ्चस्य आत्मसम्बन्धनिषेधार्थम्, 'अस्य' इति वचनात् । नहि अत्र एतावदुच्यते 'यत्र सर्वं आत्मैवाभूत्' इति, किं तर्हि ! 'यत्र त्वस्य सर्वमात्मैव' इति । तेन अस्यायमर्थः, यत्र यस्यामवस्थायां मुक्तौ इत्यर्थः, अस्य आत्मनः द्रष्टृत्वेन दर्शनसाधनत्वेन दर्शनगतत्वेन वा न किंचित् अन्यत् स्वरूपं विद्यते, किन्तु आत्मैवास्य सर्वं नान्यत् किञ्चित्, तदा केन कं पश्येदिति । यथा लोके यस्य न किंचिदपि साध्यो विद्यते वाऽस्ति स एव वदति 'न मे किञ्चिदस्ति अहमेव सर्वम्' इति तत्र स्वव्यतिरिक्तं न किञ्चिदस्ति इत्येतावद्विवक्षितम्, एवं मुक्तौ आत्मैवात्मनः सर्वं इति स्वव्यतिरिक्तमात्रमात्र विवक्षितम्, न प्रपञ्चस्वरूपाभावः । तस्मात् न प्रपञ्चविलयो मोक्षः, किन्तु प्रपञ्चसम्बन्धविलयः । त्रेधा हि प्रपञ्चः पुरुषं बध्नाति भोगायतनं शरीरम्, भोगसाधनानीन्द्रियाणि, भोग्याः शब्दादयो विषयाः । भोग इति च सुखदुःखविषयः अपरोक्षानुभव उच्यते । तदस्य त्रिविधस्यापि बन्धस्य आत्यन्तिको विलयो मोक्षः । किमिदं आत्यन्तिकत्वम् ? पूर्वोत्पन्नानां शरीरेन्द्रियविषयाणां विनाशः, अनुत्पन्नानां चात्यन्तिकोऽनुत्पादः । कथमस्यानुत्पत्तिः ! तत्कारणयोः धर्माधर्मयोः निःशेषयोः परिक्षयात् । सोऽयं प्रपञ्चसम्बन्धो बन्धः, तद्विलयश्च मोक्षः ।

ननु एवं अशेषधर्मक्षयात् मुक्तस्य न किञ्चित् सुखं स्यात्, तथा अपुरुषार्थो मोक्षः स्यात् । नैष दोषः । नहि धर्मजन्यो मुक्तस्य आनन्दः, तथा सति उत्पत्तिमत्त्वात् विनाशी स्यात् । तत्र अपुनरावृत्तिश्रुतेः विरोधः स्यात् । स्वाभाविकस्तु आत्मानन्दः सदा रेणाभिभूतः सन् निर्मुक्तसंसारस्य अभिव्यक्तो भोग्यो भवति । स्वाभाविकत्वे च आनन्दस्य 'आनन्दं ब्रह्म' इत्यादिश्रुतिसहस्रं प्रमाणम् । ननु सुखाभावेऽपि श्रुतिरस्ति 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति । सत्यम्, विषयसुखाभिप्रायं तु एतद्वचनम्, अन्यथा आनन्दश्रुतिविरोधात् । अथ सुखाभाववचनबलेन आनन्दवचनमेव दुःखाभावाभिप्रायं किमिति न व्याख्यायते सुखाभाववचनानां अल्पत्वात् तेषामेव अन्यथा करणं युक्तम्, न भूयसां आनन्दवचनानाम् । किञ्च, आनन्दशब्दस्य दुःखाभावपरत्वे अत्यन्तस्वार्थहानिः स्यात्, सुखशब्दस्य तु सामान्यवचनस्य विशेषेऽपि व्याख्याने नातीव स्वार्थहानिः इति तदेव युक्तम् ।

ननु विद्यमानोऽपि आनन्दः अननुभूयमानः अकिञ्चित्कर एव । न च मुक्तस्य सर्वकरणहीनस्य आनन्दानुभवः सम्भवति । स्वप्रकाशोऽयमानन्द इति चेन्न, तथात्वेऽपि संसारावस्थायामप्रकाशात् । ननु तथापि आनन्दस्वभाव पुरुष प्रकाशते एव, आत्मनि प्रेमोत्पत्तेः । नहि असुखे प्रेमोत्पत्तिः सम्भवति नाप्यविज्ञाते सुखे । (उत्तरम्-) किमिदानीं अस्माभिः आत्मा सुखरूपोऽनुभूयते ? इत्यपि इति ब्रुवाणस्य अविज्ञातस्वरूपस्य नोत्तरं वाच्यम् । यदि संसारिणोऽपि परमानन्दं अनुभवेयुः, ततो मुक्तस्य न कश्चिद्विशेष इति तदेव अपुरुषार्थत्वं मोक्षस्यापद्येत । अतो बलात् असुखरूपस्यापि आत्मनः प्रेमविषयत्वं इष्टत्वात् अङ्गीकर्तव्यम् । अयं स्वप्रकाशोऽपि आनन्दः संसारावस्थायामभिभूतः न प्रकाशते, (तदा) कोऽयं प्रकाशमानानन्द अभिमतो नाम ? प्रकाशनिवारणं हि

अभिभवः, न च प्रकाशमानस्य अप्रकाशनं सम्भवति । यदि तु नैव प्रकाशते संसारावस्थायाम्, तस्यामवस्थायां छन्नः प्रकाशस्य मुक्तावस्थायां उपलभ्यमानस्य कारणं वक्तव्यम् । विज्ञानमेव च प्रकाशात्मकस्य फलस्य कारणम्, तच्च इन्द्रियाधीनम् । न च मुक्तस्य इन्द्रियाणि सम्भवन्ति, इति कथं आनन्दानुभवः स्यात् । उच्यते । बाह्येन्द्रियाण्येव मुक्तस्य निवर्तन्ते मनस्तु तस्यामवस्थायामनुवर्तते इति आनन्दश्रुतिरस्मादेव अध्यवसीयते, एवं ज्ञानं च, 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुतेः, विज्ञानघनश्रुतेश्च । तस्मात् मुक्तावस्थायां मानसप्रत्यक्षेण परमानन्दमनुभवन् आत्माऽवतिष्ठते । तदुक्तम् 'निजं यत्त्वात्मचैतन्यमानन्दश्चेष्यते च यः । यच्च नित्यविभुत्वादि तैरात्मा नैव मुच्यते ॥' इति ।

यत्तु 'तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यते । न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ॥' इति वार्तिके (श्लोकवा. सम्बन्धाक्षेपपरिहारः १०६–१०७) तत् परमतं इत्येव आनन्दमोक्षवादिनो मतम् ।

अपरे त्वाहुः, अभावात्मकत्वमेव सम्भवि उपपत्त्यभिधानात्, आनन्दवचनं तु उपन्यासमात्रत्वात् परमतम् । नहि मुक्तस्य आनन्दानुभवः संभवति, करणाभावात् । मनः स्यादिति चेत्, न, अमनस्कत्वश्रुतेः 'अमनौनात्' इति ।

यत्तु 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति, तत् ज्ञानशक्त्यभिप्रायम्, अन्यथा हि सुषुप्तावपि ज्ञानानुवृत्तिप्रसक्ता स्यात्, सा च अनिष्टदशा इत्युक्तम् । एवं विज्ञानघन इत्यादीनामपि शक्तिपरत्वं वेदितव्यम् । स्वयमेव श्रुत्या शक्तिपरत्वं व्याख्यातम् 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति' इति भूतेन्द्रियनाशात् आत्माऽपि प्रमाणागोचरत्वमापन्नो विनष्ट इव भवतीति । न तस्य प्रेतस्य मुक्तस्य संज्ञाऽस्तीति । सम्भवति च ज्ञानस्यापि शक्त्याभावः इति नास्ति विशेषः । अनया च श्रुत्या सर्वविज्ञानश्रुतयः शक्त्यभिप्राया व्याख्याताः । (ननु) यदि नश्चिरस्ति ततः तस्यां अवस्थायां केन ज्ञानानुवृत्तिः । ज्ञानसाधनानां इन्द्रियाणां ज्ञेयानां च विषयाणामभावात् । एवं अर्थान्तरज्ञाने साधनाभावादविशिष्टे इति आत्मानमेव मुक्तावस्थायां जानातु इत्याशङ्क्याह 'विज्ञातारमरे केन विजानीयात्' इति । न हि आत्माऽपि विना साधनेन ज्ञातुं शक्यते । मनसा ह्यसौ संसारावस्थायां ज्ञायते । न च मुक्तस्य मनःसम्बन्धोऽस्ति, अतः केनात्मानं जानातु इति व्यक्तं एव मुक्तस्य आत्मज्ञानस्याभावः ज्ञानशक्तिमात्रावस्थानं श्रुत्या दर्शितम् । तस्मात् निःसम्बन्धः निरानन्दश्च मोक्षः । शा. दी. १२५–१२८.

* मोक्षवादः । कः पुनर्मोक्षः । अत्र केचित्, संस्काराजन्यानुभवध्वंसो मुक्तिः इति । केचित्तु दुःखप्रागभावासहवृत्तिदुःखसाधनध्वंसो मुक्तिः इति । दुःखमयसंसारबीजमिथ्याज्ञाननाशः मुक्तिः इत्यपरे । शरीरेन्द्रियबुद्ध्यादितद्विज्ञानधर्माधर्मध्वंसः इत्यन्ये ।

आत्यन्तिकदुःखप्रागभावो मोक्षः इति गुरवः । संस्कारजन्यभोगविषयदुःखध्वंसः इति केचित् । समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसो मुक्तिः इति मणिकृत् ।

प्रपञ्चस्वरूपविलयो मुक्तिः इति वेदान्तिनः । प्रपञ्चसम्बन्धो बन्धः । तस्य आत्यन्तिकविलयो मोक्षः । तथाहि, भोगायतनभोगसाधनभोगविषयाणां शरीरेन्द्रियाणां सम्बन्धात् आत्मा बद्ध इत्युच्यते । एतत्कारणधर्माधर्मपरिक्षयात् एतेषामात्यन्तिको विलयः पूर्वनाशापरानुत्पादस्वरूपः ।

न चैवं अपुरुषार्थत्वापत्तिः । सुखवत् दुःखानुत्पादस्यापि पुरुषार्थत्वात्, तत्स्वरूपचित्सुखरूपेण नित्यानन्दरूपात्माभिव्यक्तेः मुक्तित्वाङ्गीकाराच्च । तस्य सुखस्य नित्यत्वात् धर्मजन्यत्वाभावात् ।

आत्मनश्च सुखात्मकत्वे मुक्तावस्थायां तन्नित्यत्वे च 'आनन्दं ब्रह्मणो रूपम्' 'न स पुनरावर्तते' इत्यादिश्रुतयो मानम् ।

यत्तु 'अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः' इति मुक्तस्य सुखाभावाभिधानम्, तत् प्रपञ्चसुखाभिप्रायम् ।

ननु मनःशरीराद्यभावात् कथं तदानन्दानुभवः । न च तस्यानन्दस्य स्वप्रकाशत्वम्, संसारावस्थायां तादृशस्य

गतिः । तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम् ॥' इति ।

ब्रह्मप्राप्तिर्मुक्तिः इति जीर्णाः ।

नव्यास्तु 'तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्या, 'न कर्मणा न प्रजया' इति श्रुत्या च मोक्षे ज्ञानातिरिक्तसाधननिषेधात् तीर्थस्नानमहादानकाशीमरणादिकर्मणां ज्ञानद्वारैव मोक्षजनकत्वाच्च ज्ञानमेव साक्षात् मोक्षजनकम् । कर्म तु ज्ञानजनकान्तःकरणशुद्धिजनकम् ।

न च 'तमेव' इति आत्मातिरिक्तविषयकज्ञानस्य मोक्षजनकत्वपरिसंख्या इति वाच्यम् । ज्ञानस्य मोक्षजनकत्वेन नियतप्राप्त्यभावात् परिसंख्यानुपपत्तेः । वाक्यान्तरप्राप्तपरिसंख्यायां तत्तद्धानमाना 'नान्यः पन्थाः' इति निषेधस्य चानुपपत्तिः ।

एतेन उपनिषज्जन्यज्ञानातिरिक्तभाषाग्रन्थादिजन्यज्ञानपरिसंख्या इति परास्तम् । अध्ययनविधिनैव तत्सिद्धेः ।

न चैवं उपनिषदध्ययनजन्यतत्त्वज्ञानस्य त्रैवर्णिकेष्वेव संभवात् शूद्रादीनां मुक्तिर्न स्यादिति वाच्यम् । तेषामपि 'श्रावयेच्चतुरो वर्णान्' इति पुराणश्रवणविधिना तज्जन्यार्थज्ञानसत्त्वात् मुक्तिसिद्धेः । अतोऽयं ज्ञानस्य मोक्षसाधनत्वविधिः, 'नान्यः पन्थाः' इति तदतिरिक्तकर्मणः साक्षात्साधनत्वनिषेधः । 'न चतुर्थिकादिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्' इतिवत् । एवंनिषेधवशादेव कर्मणां मोक्षसाधनत्वबोधकश्रुतयः परंपरसाधनत्वपराः । अत एव 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति श्रुतेः अविद्यारूपकर्मणः मृत्युतरणशब्दलक्षितज्ञानसाधनस्य आत्मज्ञानद्वारकत्वबोधकश्रुतिरपि संगच्छते । 'न कर्मणा' इत्यादि श्रुतिरपि परंपरया मोक्षसाधने सन्याससहकारित्वनिषेधनद्वारा सन्यासशास्त्रत्वबोधिका कर्मणा परंपरया साधनत्वं बोधयति, न साक्षात् । एवं 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतिरपि कर्मणा ज्ञानार्थत्वमेव बोधयति, न साक्षात् मोक्षार्थत्वमिति ।

न चैवं ज्ञानेन संचितकर्मविनाशेऽपि शरीरजनककर्मनित्याकरणजन्याधर्मविनाशायोगात् मोक्षो न स्यादिति वाच्यम् । तस्य संचितविनाशकत्ववत् अधर्मानुत्पादकत्वस्यापि अङ्गीकारात्, उत्पन्नानामङ्गीकाराद्वा ।

न चैवं वेदान्ताध्ययनजन्यतत्त्वज्ञानोत्तरं मुक्तिः स्यात् इति वाच्यम् । प्रारब्धस्य प्रतिबन्धकत्वात् ।

न चैवं संचितानां प्रायश्चित्तेन, प्रारब्धानां भोगेन नाशात् निरस्तकर्मविधिश्च अनुवादात् तत्त्वज्ञानस्य अनुपयोग इति वाच्यम् । सुखभोगयोग्यदेहजनककर्मविनाशद्वारा तस्य मोक्षोपयोगित्वात् इति जीर्णाः ।

अन्ये तु तत्त्वज्ञानस्य संचितनाशकत्ववत् प्रारब्धनाशकत्वमपि । तत्त्वज्ञानव्यक्तिविशेषस्यैव मोक्षजनकतया तदुत्तरमेव मुक्तिः । जीवन्मुक्तादिव्यवहारस्तु शरीरस्थत्वेन आत्मनः मोक्षः इत्याहुः । मणि. पृ. ५५–५९.

* मोक्षसंबन्धि यत् तत् वेदप्रभवम् ।– या. १।३।१।२.

* 'मोघमन्नं विन्दते अप्रचेताः' अयं निषेधयुक्तवाक्यान्तरकल्पनात् मन्त्रकल्पः प्रतिषेधः । याज्ञ. पृ. २०.

* मोदकापूपादीनां धानमक्षणादि सदाचारः । शा. १।१।३।७ पृ. २०५.

* 'मौद्गं चरुं निर्वपेत् श्रीकाम' अत्र मुद्गानां श्रपणस्थ. प्रतिनिधिर्न भवन्ति, 'अर्थाशिया वै माषा अमेध्याः माषाः' । वि. ६।३।९. * मौद्गे चरौ प्राकृतबर्हिःखरणमन्त्रे हरितपदस्थाने रक्तपदस्य ऊहः । ९।३।२।३ मीको. पृ. ११२६ 'ऊहः रक्तपदस्य' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* मौनिनां स्वाभिप्रायप्रकाशनद्वारा अर्थज्ञापनं अक्षिनिकोचादिना क्रियमाणं न श्रेयःसाधनम् । सु. पृ. ३१८.

* म्रक्षणशब्दस्य मैथुने प्रयोगो दृश्यते । [illegible] पृ. १०७६.

* म्लेच्छाः. पक्षिणां पोषणे बन्धने च अभियुक्ततराः । भा. २।३।५।१०. * 'येषां दर्शनमात्रेऽपि

वेद एव न पठ्यते । समाम्नायेऽपि च न म्लेच्छैः सहार्यैर्निवासिनाम ॥ तत्र तेषु प्रसिद्धोऽर्थः कथमार्यैः प्रतीयताम् ॥ ' ( इदं पूर्वपक्षे ) । वा. १।३।५।१०.
● म्लेच्छेभ्यः अन्यजनपदवासिभ्यः आर्यावर्तनिवासिनां सर्मीचीनतरः आचारो भवति । भा. २।३।२।२.
● 'तस्मात्पथैव सेवायां यज्ञादिषु च कौशलम् । म्लेच्छानामधिकं तद्वदभिवेदार्थनिर्णये ॥ ' वा. १।३।५।१०,
● यस्तु कश्चनापि अविज्ञात एव शब्दः म्लेच्छानामपि प्रयोगविषयतामापन्नः तस्य च आर्यैरेव अनादिवृद्धव्यवहारपरंपरया अर्थं जानन्ति तत् किं तेषां निराकर्तुं शक्यते । १।३।५।१० पृ. २२८.
● म्लेच्छादीनां दुर्गमदेशान्तरवासिपरम्परा वेदव्यवहाराभावः । ऋजु पृ. १५५. ● यानि पुनः अनुपलब्धवेदमूलानि म्लेच्छादीनां अतीन्द्रियार्थस्मरणानि तेषां मूलकल्पनावेलायामेव चोदना समाम्नानाद नास्ति इति मिथ्याज्ञानहेतुभूतलोभादिकारणान्तरसंभवात् व्याख्यातम् । सर्वानियमात् पुनश्चोदनाया कारणान्तरनिषेधे कृते निर्मूलत्वासंभवात् परिशेषसिद्धं चोदनामूलत्वम् । वा. १।३।१।२.
● म्लेच्छार्थप्रयोगविप्रतिपत्तौ वर्णपदविचारः । वा १।३।८।१ पृ. २१९.
● म्लेच्छदेशा अनन्ताः । 'अनन्तम्लेच्छदेशाश्च कः सर्वानुपलप्स्यते । अनन्तेषु हि देशेषु कः सिद्धं करोति गम्यताम् ॥ ' वा. १।३।५।१० पृ. २२५.
● म्लेच्छप्रयोगः । 'दृष्टार्थेषु तु ( कर्मसु ) तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् । ' वा. १।३।४।९ पृ २१९.
● म्लेच्छप्रसिद्धोऽर्थः पिकनेमादिशब्दानां ग्राह्यः, न तु निगमनिरुक्तादिना कल्पनीयः । पिकनेमाधिकरणम् । १।३।५।१०.
● म्लेच्छप्रसिद्धिः आर्यविरुद्धा नादरणीया । आर्यविरोधे आर्यप्रसिद्धौ न म्लेच्छप्रसिद्धिरपि आदरणीया । पिक– नेम– तामरस– इत्यादिशब्दार्थविषये निर्णयोऽयम् । वि. १।३।६, ● म्लेच्छप्रसिद्ध्या यवादिशब्दस्य कृष्णवर्णादिनिर्णयः, स न ग्राह्यः । आर्यप्रसिद्ध्या तु सूक्तः दृष्टेनार्थो ग्राह्यः । १।३।५.
● म्लेच्छभाषा ' न म्लेच्छभाषा शिक्षेत ' इत्येवमादिस्मृत्यनुसारेण द्रमिडादिभाषान्तरसम्बन्धमूलकवैयाकरणप्रसिद्धवर्णाधिक्यार्थविकारविचारित्वर्त्तव्यविभाषागतस्य म्लेच्छितस्य समानाधिकरणापशब्दव्याख्यानात् तेन भाषण प्रतिषिध्यते । युक्तं च तस्य अशेषवर्णाचरणवत् परिहरणीयत्वम् । वा. १।३।८।२४ पृ २५८.
● 'यथा शास्त्रानुरूपत्वात् प्रमादाशक्तिजेष्वपि । वाच्यते वाचकभ्रान्तिस्तथैव म्लेच्छभाषिते ॥ ' वा. १।३।८।१ पृ. २१९.

# य

● ' यजतिषु द्रव्यस्यैकत्वसंयोगात्०' ( ४।३।५।१४ ) इति न्यायेन याग विना द्रव्यैकत्वान्वयायोगः । सु. पृ. ७४३. ● यजतिः भावनाविधानार्थः ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यादौ । भा. ११।१।१।३, ● यजतिः यत्र श्रूयते स प्रधानभूतस्य द्वादशाहस्य प्रवर्तकः । ८।१।३।२७, ● यजति समुदायवचन ' दर्शपूर्णमासाभ्यां यजेत ' इति । विमर्शे तर्हि दर्शपूर्णमासशब्दः तु नित्यानुवादमात्रम् ( अन्यार्थविधानपक्षे ) । ११।१।१।३, ● यजतेः त्यागार्थत्वम् । ४।२।११. ● यजतेः देवपूजादानात्मकत्वनिरासः । संकर्ष. २।४।१. ● यजतेः न विवक्षा गुणे फलकल्पनायाम् । भा ११।४।२।३ ● यजतेः स्वत्वत्यागफलकत्वानित्यत्वम् । स्वत्वध्वंसफलकोद्देश्यक–देवतोद्देश्यक–द्रव्यत्यागो यजिवाच्यः । भाषि. पृ.१०२. ● ' यजतिषु ये यजामहं करोति नानुयाजेषु ' अयं अदनपः उद्देश्यविशेषणपर्युदासविधिः । बाल. पृ. २०, ● ' यजतिषु ये यजामहं करोति नानुयाजेषु ' अयं पर्युदासविधि. दृष्टार्थ. । पृ २१. ● यजतिषु ' ये यजामहे ' इति मन्त्रः अनारभ्यवादेन प्राप्त । नानुयाजेषु इति च अनुयाजेषु प्रतिषेधः । तत्र अनुयाजवर्जितेषु यजतिषु ' ये यजामहं करोति ' इति पर्युदासः न तु विकल्पः । भा. १०।८।१।१–४.

● यजत्यर्थः । 'इदं द्रव्यं नेतःप्रभृति कस्मिंश्चित् स्वकार्ये विनियोक्ष्यामि' इति संकल्परूपे मानसे त्यागे, वाचिके च ■ ममेतिशब्दोच्चारणरूपे कृतेऽपि हस्तादिना उपादाय क्वचिद्देशे निक्षेपरूपं कायिकं त्यागं विना यागापर्यवसानम् । सु. पृ. १५२७. ● यजत्यर्थस्य यत् कार्यं तत् प्रधानम् । तद्धि कर्मव्यक्तया चोद्यते । भा. ९।१।१।१ वर्णकं ३.

● यजतिचोदनः सोमः, हविर्होमाः पुनः जुहोतिचोदना. । भा. ८।४।२।१२. ● यजतिचोदनाः अहीनाः, आसनोपायिचोदनानि सत्राणि । वि. १०।६।१६. ● यजतिचोदनात् स्वामिना च अरियतपरिमाणत्वात् अहीनत्वम् । भा. १०।६।१७।६१.

■ यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् । ४।२।१२।२७ ॥

अत्र सूत्रे यागलक्षणं उच्यते यागप्रयोगो वा कथ्यते । यजतिचोदना यजति यजेत् यजेत इति यजधातुः द्रव्यं च देवता च 'न मम' इति त्यागरूपा क्रिया च येषां समाहारं द्रव्यदेवताक्रियं ब्रवीति, एतावान् यागपदार्थः । यजतिचोदनायाः समुदाये द्रव्यदेवतात्यागसमुदाये कृतार्थत्वात् अर्थस्य परिपूर्णत्वात् । के.

● 'यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्' इत्यत्र देवतोद्देश्यकस्वत्वत्यागो यागः, स एव प्रक्षेपर्याहतो होम. इति यतते । कु ३।४।१८।४७. ● उत्पन्नविधिगुणविधौ तु उत्पत्तिवाक्यपरियतामिक्षादिपदस्य द्रव्यसामान्यपरत्वे तत्पदवैयर्थ्यापत्तिः तद्विशेषपरत्वेऽपि सर्वनाम्ना 'यजतिचोदना द्रव्यदेवताक्रियं०' इति न्यायेन यागचोदनामात्रेण च द्रव्यसामान्यलाभात् । अद्वैत. २।२९।४०–४१.

■ यजतिचोदनासु प्रक्षेपान्तत्वम् ॥

'आग्नेयोऽष्टाकपालो भवति' 'वैश्वदेव्यामिक्षा' इत्यादौ द्रव्यदेवतात्मकयागस्य श्रवणेन हविरुत्पवनादारभ्योत्सर्गादानेन त्यागमात्रं कर्तव्यं नाहुतिः । इति प्राप्ते, यजतेर्देवपूजादानान्यतरवाचित्वेन देवता गन्धादिभिरिज्यते, विप्राय दीयते इत्यादौ च त्यागानन्तरस्य प्रक्षेपान्तत्वाप्रतीतेर्देवताविग्रहाभावेन परस्वत्वमानत्वानुत्पत्तिप्यस्त्येव प्रक्षेपः । अत एव 'मध्येऽग्नेराज्याहुतीः पश्चाहुतीः पुरोडाशाहुतीश्च जुहोति' इति श्रुतिरुपपद्यते । सकर्ष. २।४।१.

● यजतिचोदनोत्पत्तिषु पुनः सिद्धयोः त्यागदेवतोद्देश्ययोः जुहोतिः प्रवर्तमानः प्रक्षेपमात्रवचनो विज्ञायते । वा. ३।४।१४।४१ पृ. ९८६.

● यजतिचोदनत्वे सति अहर्गणसाध्यत्वमहीनत्वम् । १०।६।१६।६०–६१. 'यजत्यमासनोपायिचोदनत्वम्०' इत्यत्र द्रष्टव्यम् ।

● यजति–जुहोति–इत्यादौ शब्दान्तरं कर्मभेदकं प्रमाणम् । २।२।१।१. 'शब्दान्तराधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● यजति–ददाति–जुहोति–इत्यादिभ्यः यत्यागार्थेन गम्यते भावयेदिति च । भा. २।१।१।१ .

● यजतिपदाभ्यासात् कर्मभेदः 'समिधो यजति, तनूनपातं यजति' इत्यादौ । भा. २।२।२।२.

● द्रव्यदेवताक्रिये यजतिशब्दो वर्तते । भा. ६।१।१।२.

● यजतिशब्दवाच्यमेव धर्मं समामनन्ति 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्' इति । भा. १।१।२।२.

● 'यजनीयेऽह्नि सोममेद् यावण्या दिधि दृश्यते । तत्र श्राद्धनिमिर्हत्वा दण्डं दद्याद् द्विजातये ॥' अयं दण्डकल्पः प्रतिषेधः । यास्त. पृ. ३०.

● यजमानः एक एव ज्योतिष्टोमे । वि. ३।३।१५, ● 'यजमानः एककपालः' इत्यत्र एककपालस्य यजमानशब्देन स्तुतिः, न तु यजमानशब्दो नामधेयं नापि गुणविधिः । १।४।१३. ● यजमान. शब्दप्रतिपत्तिये यज्ञे शुक्रनाम्मार्जिमानमानकर्ता, न य. नोऽपि । १२।४।१३।३४. ● यजमानः द्विपत्नीको बहुपत्नीकश्चास्ति । भा. ६।३।६।२०. ● 'यजमानः प्रस्तर.' इति समाम्नायते । तत्र किमेष गुणविधिः किमर्थवादः इति संदेहे एवंजातीयकः अर्थवादः न विधिः इति सिद्धान्तः ('यजमानः प्रस्तरः' इति यजमानशब्दः प्रस्तरस्य स्तावकः, उभयोः कर्मसाधकत्वात्) । भा. १।४।१२।

यथाकथंचित् प्रातर्होमं कर्तव्य प्रक्रान्ताग्न्यनुपस्थितिनिमित्त दोषपरिहारार्थम्। धा ७।२।५।१६ पृ ५०८.

* यजमानाध्वर्युभ्यामुभाभ्याम् 'वाचस्य मा॰' इति मन्त्रो दर्शपूर्णमासयो पठनीय । चि. ३।८।८

* यजमानाध्वर्यूभयगामि 'मदम्' इति मन्त्रोऽस्य ज्योतिष्टोमे उपरवेषु । चि ३।८।२६

* यजमानाध्वर्यूभयप्रयोज्यो 'वाचस्य मा॰' इति मन्त्र दर्शपूर्णमासयो । चि ३।८।८.

* यजमानानेकत्वे अहीने मुख्यान्वारम्भादीनामेक यजमानकर्तृत्वम् । १२।४।११।२२। स चैक अनियत । १२।४।१२।२३.

* यजमानान्वारम्भ मुख्याधारमुखप्रहाणे । सोम. ३।१।४.

* यजमानार्थे द्विकर्मे साद्गुण्यम्। मा ६।८।१३।२६.

* यजमानावेक्षितेन परावेक्षितेन चाज्येन होम उत्पद्ये । तत्रान्यतराभावे वैगुण्यम् । मा ६।३।१०।४२.

* यजमानाहवनीययो मिथापुनभावस्तत्र च । सकर्प ३।४।१

* यजमान ऋत्विगुभयगामि-फलविधि मन्त्र 'विभम, भद्र तनो सद' इति । वाल पृ ६३

* यजमानैकस्य ज्योतिष्टोमादौ, यजमानद्वित्व कुलाय॰ यज्ञे, यजमानबहुत्व सत्रे । चि ३।३।१४

* यजमानकर्तृकस्य दक्षिणादानस्य। ३।८।१।१-२.

* यजमानकाण्ड यजुर्वेदे अनान्तरकाण्डम् । चि. ३।८।१०

* यजमानगणकर्मे कर्मणि 'यजमानसंमितौदुम्बरी भवति' इति औदुम्बरीसमान एकेनैव यजमानेन न सर्वै । स चैको गृहपतिरेव सत्रे । अहीने च येन चिन्यनमानेन न सर्वै । चि १०।४।११-१२.

* यजमानगतमेव अरत्न्यादिपरिमाण यूपादौ । सकर्प. ३।४।९ 'यूपादौ अरत्न्यादिपरिमाणम्' इत्यत्र अधिकरण द्रष्टव्यम् । * यजमानगत मान अग्निचयने चितिमानेषु प्रमाणम् । सकर्प ३।८।१० मीमो. पृ ३४ 'अग्निचयने चितिमानेषु॰' इत्यत्र अधिकरण द्रष्टव्यम् ।

* यजमानगामिता करणमन्त्रप्रकाशस्यम्य । ३।८।१३।२६-२८

* यजमानगामिफलविधि मन्त्र 'ममाग्ने वर्चो विहवेष्वस्तु॰' इति । वाल पृ ६२.

* यजमानत्वं अधीतवेदस्य विदितवेदार्थस्य च । चि ३।८।१

* यजमानद्वित्वबहुत्वे कुलायादिषु एकाहेषु अहीनेषु च प्रत्यक्षविहिते विधेते, 'राजपुरोहितौ सायुज्यकामौ यजेताम्' 'एतेनैव द्वौ याजयेत्' 'एतेनैव त्रीन् याजयेत्' 'एको द्वौ त्रयो वा अहीनैर्यजेरन्' इति । धा ६।३।१।१७.

* यजमानधर्मप्राप्तिता सत्रे प्रतिनिधेः । ६।३। १०।२६.

* यजमाननामनिर्देश सूक्तवाकनिगदे नित्य, न वैकल्पिक । सकर्प ८।३।२१

* 'यजमानपञ्चमा इडा भक्षयन्ति' इति द्रव्य-सम्बन्धात् यजमानोऽप्राप्तो विधीयते वाक्यप्रकरणसमाख्याभि । टुप् ६।४।३।५ * 'यजमानपञ्चमाः समुपेता भक्षयन्ति' इति यजमानस्यापि भक्षोऽस्ति दर्शादौ । चि १०।३।९

॥ यजमानपत्नीनां सर्वासां सन्नहन दर्शपूर्णमासादौ ॥

पत्न्या सन्नह्य सा कुर्यादिति विधौ एकत्व-स्योपादेयविशेषणत्वेन निर्धारितत्वात् औदुम्बरीसमानय ऐकस्यापि विवक्षितत्वादेकैव या काचिद्यजमानपत्नी सनह्या । इति प्राप्ते, सर्वासामपि सनहनादिसंस्कारा कर्तव्या, कर्तृत्वाविशेषात्, फलभागप्रयुक्तत्वेन संनिधानित्वाच्च । प्रधानसंस्कारार्थत्वाविशेषेण सर्वासां संनिधि-तत्वाच्च । पत्नीप्रातिपदिकस्य यजमानस्वामिनां विवक्षितत्वाच्च । सकर्प. १।२।१ वर्णक २

* यजमानपदमूहितत्व बहुत्वेके निरूढे सूक्तवाके प्रस्तरप्रहरणादौ । ९।१।१४।४०

* यजमानपुरुषेभ्यश्चैव (चमसाध्वर्यव) अन्ये ऋत्विग्भ्यश्च । यजमानेन चमसाध्वर्यवो न वरीतव्या । ऋत्विग्भिर्वरीतव्या । मा ३।७।१०।२५.

● यजमानपूर्वजाः एव ऋषयः 'आर्षेयं वृणीते' इति उक्ताः। संकर्ष. ३।४।१. मीको. पृ. १००४ 'आर्षेयं वृणीते इति०' इत्यत्र द्रष्टव्यम्।

● यजमानफलविघ्नप्रसङ्गनिवृत्त्यर्थत्वेन इष्टेर्यजमानकर्तृत्वाभावात् यत्फलेन च इष्टियजमानयोरेककर्तृकत्वनिर्देशात् यजमानपक्षे एव इष्टया भवितव्यम्। सु. पृ. १५१२.

● यजमानबहुत्वं सत्रलक्षणम्। भा. १०।६।१३। ६०-६१.

● यजमानभक्षा. ज्योतिष्टोमे ऐष्टिकेषु सन्त्येव। वि. १२।१।१५.

● यजमानमिश्रकर्मत्वप्रतिपादनम्। भा. ३।७। ८।१८-२० पृ. १०८९.

● यजमानमरणोत्तरमपि सर्वस्याः कार्त्स्न्यमः समापनीयः। १०।२।२३।५८-६९. 'सर्वस्याः यजमानमरणोत्तरम्०' इत्यत्र द्रष्टव्यम्।

● यजमानशब्दः एकफलप्रयुक्त्यर्थः. 'यजमान एककपालः' इत्यत्र। वि. ११।४।१३. ● यजमानशब्द. एकयजमानवाचिनि समवायाभ्येयवचनमिति कृत्वा द्वियजमानके च प्रयोगे समवायवचनप्रवेशात् ऊह्यते। भा. ९।४।१२।१०.

● यजमानशरीरे अग्नीनां यज्ञपात्राणां च निक्षेपः प्रतिपत्तिः परिधानीये कर्मणि। भा ११।३।१३। ३४-४२,४५

● यजमानसंस्कारः इति दीक्षापदार्थः। भा.१०।६। १५।५२, ● यजमानसंस्काराः ज्योतिष्टोमे 'केशश्मश्रु वपते, दतो धावते, नखानि निकृन्तते, स्नाति' 'तं अभ्यनक्ति, शरेषीकया अनक्ति' इति। ३।८। २।३-८. ● यजमानसंस्कारा वपनादयः प्रधानोपकारका नाङ्गोपकारकाः 'स्वामियुक्ताधिकरणम्' इत्यत्र द्रष्टव्यम्। ३।७।२।६. ● यजमानसंस्काराः सर्वयजमानार्थाः सत्रे। १२।४।१२।३९-४१. 'सत्रे यजमानसंस्काराः०' इत्यत्र द्रष्टव्यम्। ● यजमानसंस्काराणां च यागगुणभूतत्वप्रतिरेकेण फलार्थत्वात्ययोगपुरुषार्थत्वात् भोक्तृत्वप्रतिनाशेऽपि यागाङ्गत्वं यश्वने (३।७।२।६)। वा. ३।१।७।१४ पृ. ७१८. ● यजमानसंस्काराणा लक्षणप्रतिमोक्षात् पूर्वभाविता चयने। ५।२।१२।२३.

● यजिरपूर्वं साधयति, तच्चापूर्वात् कालान्तरे फलं भवतीति उक्तम् 'चोदना पुनरारम्भः' इत्यत्र (२।१।२।५)। भा ७।४।१।१. ● यजि. उद्देश्यविशिष्टत्यागवाची। सु. पृ. ७४९, ● यजिः देवतोद्देशेन त्यागसमुदायवाची। पृ. ७४८. ● यजेः प्रत्यक्षफले गुणभावः इति यत्, ● नाकृत्वा अपूर्वं भवति इति प्राप्यलिङो विज्ञायते। भा ७।१।१।७.

● यज्यर्थः द्रव्यदेवतासम्बन्धः। भा. १०।१।१०। ४२. ● यज्यर्थः मन्त्राकरणक–देवतोद्देश्यक–प्रक्षिप्यमाणद्रव्यत्यागः। कु. ४।१।७।१९.

● यजिमत्कर्मविधानत्वसिद्धिः पशुसोमाधिकरणसिद्धान्तेन। सु. पृ. १२५.

● यजिवाच्यं कर्म। अग्नीषोमीयवाक्येऽपि एतदधिकरण (२।३।९)सिद्धयजिवाच्यकर्मवाचित्वात्मकोपरमेन। पशुसोमाधिकरणे विध्यनुवादविचारः। सु. पृ. १२५

● यजूंषि कानिचित् निष्यपि वेदेषु पठ्यन्ते, तथा ऋचोऽपि। वा ३।३।२।१. ● यजूंषि नान्येन धर्मत्वेन गुणेन व्यपदिश्यन्ते निगदा इति। भा. २।१।१३।४१, ● यजूंषि यानि न परस्परोपमार्गाणि तेषु उपांशुत्वं निवेक्ष्यते। २।१।१३।४२. ● 'यजूंषि वा तद्रूपत्वात्' (२।१।१३।४०) इति निगदा यजुर्भेदा पदेस्युक्तम्। बाल. पृ. ५८.

● यजुरेकत्वम्। यावत्पदजातं यजुर्गुणार्थक यागसाधनं अथ च विभागे साकाङ्क्षं तावदेकं यजुः। कु. २।१।१४।४२.

● यजुषो यज्ञप्रेषप्रायश्चित्तार्थं 'भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्'। वि १२।३।५.

● यजुष्ट्वं निगदानाम्। निगदाधिकरणम्। २।१। १३।३८-४५.

● यजु परिमाणाधिकरणम्। २।१।१४।४६.

● यजुर्भेद परस्परनिराकाङ्क्षत्वेन तुल्येषु। कु. २।१।१५।४३.

- * 'यजुर्युक्तो दक्षिणा' इत्यधिकरणे (१०।३।२१।७४–७५) साम्नदायत् यजुर्युक्तरथयोऽपि अध्वर्युभागस्य निवर्तक इति पूर्वपक्षं कृत्वा साक्षात् अपूर्वौ विधीयमानौ युक्तं कर्तुं अध्वर्युभाग बाधेते (१०।३।१७। ६३–६४)। इह तु समदश सप्तदशकानि पारस्परदक्षिणाभावेन परस्परसहितत्वेन दक्षिणात्वेन विहितानि, तत्र यजुर्युक्तस्यापि प्राप्तेन दानम्, स तु अध्वर्यवे अन्यस्मै वा दातव्यः प्राप्तः अध्वर्यौ उपसंह्रियते इति सिद्धान्तितम्। बाल. पृ. १७.

卐 यजुर्युक्तो दक्षिणा त्वध्वर्योर्विकारः स्यात्। १०।३।२१।७४॥

'वाजपेये रथा, निष्का, इत्यादयः सप्तदशार्थाः सप्तदशसप्तदशसंख्याकाः सप्तदशभ्यः ऋत्विग्भ्यो दीयन्ते। तत्र 'यजुर्युक्तं रथमध्वर्यवे ददाति' इत्याम्नायते। सोऽयं यजुर्युक्तः यजुर्मन्त्रेण युक्तः संयोजितो रथः दक्षिणा अध्वर्योः भागस्य विकारः बाधकः स्यात्। यजुर्युक्तः रथ एव अध्वर्यवे नान्यत् किंचिदिति। इति पूर्वः पक्षः।

अपि वा श्रुतिभूतत्वात् सर्वासां, तस्य भागो नियम्यते। ७५॥

पूर्वपक्षं अपिवाशब्दो व्यावर्तयति। सर्वासां सप्तदशरथादीनां दक्षिणानां श्रुतिमूलत्वात् 'सप्तदश रथाः' इति श्रुत्या विहितत्वात् तन्मिश्रणः अध्वर्योः स्यादेव। तेन तस्य अध्वर्योः भागः नियम्यते यजुर्युक्तो रथः अध्वर्यवे एव नान्यस्मै इति। यथा ऋग्युक्तः होत्रे एव सामयुक्त उद्गात्रे एव इति। यस्मिन् रथे अश्वौ यजुषा मन्त्रेण युक्तौ भवतः, यो रथो यजुषा युक्तः अश्वयुक्तः कृतः स यजुर्युक्तः, एवं ऋग्युक्तः सामयुक्तः इति। तस्मात् अध्वर्योः सर्वस्य दक्षिणाभागस्य रथेन न निवृत्तिः इति सिद्धान्तः। के.

* 'यजुर्युक्तो०' (१०।३।२०।७४–७५) इत्यधिकरणं वाजपेये यजुर्युक्तेन उपदिष्टेन रथेन अतिदिष्टस्य अध्वर्युभागस्य समुच्चयः उक्तः। बाल. पृ. १७७.

* यजुर्युक्तो रथः वाजपेये यजमानरथः 'इन्द्रस्य वज्रोऽसि' इत्यादिमन्त्रैः सज्जीकृतः। मि. १०।३।२०.



* 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति वाजपेये अयं अनियमनः उपसंहारविषये प्राप्तौ अपहाररूपः प्रतिषेधः। बाल पृ १७.

卐 यजुर्युक्ताधिकरणम्। वाजपेये एतेन यजुर्युक्तरथेन अध्वर्योः दास्यादिभागान्तरस्य समुच्चयः॥

यजुर्युक्तो दक्षिणा त्वध्वर्योर्विकारः स्यात्। १०।३।२१।७४॥

भाष्यम्— अस्ति वाजपेयः। तत्रेदं समाम्नायते 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति। तत्रायमर्थः सांशयिकः किं यजुर्युक्तोऽध्वर्योर्भागस्य निवर्तकः, किं भागे नियम इति। किं प्राप्तम्? यजुर्युक्तो (यजुर्युक्ते इति श्रुतिपाठः) दक्षिणा त्वध्वर्योर्विकारः स्यात्। तुशब्दः पक्षव्यावृत्त्यर्थः। न तदु सप्तयोऽस्ति। यजुर्युक्तं रथमध्वर्यवे ददाति, नान्यदिति गम्यते। स रथोऽध्वर्युभागनिवर्तनं कुर्वाणोऽवशिष्टेन चोदकप्राप्तानां निवृत्तिं न शक्नोति कर्तुम्। नैवमभिसम्बन्धः क्रियते यजुर्युक्तं रथं वाजपेये ददातीति, येन क्रतुसंयोगो गम्यते। कुतः? प्रकृतो हि वाजपेयः। अध्वर्युः पुनर्वाक्येन श्रूयते। वाक्यं पुनः प्रकरणाद्बलीयः। तस्मादध्वर्युभागस्य निवर्तको रथ इति।

अपि वा श्रुतिभूतत्वात् सर्वासां, तस्य भागो नियम्यते। ७५॥

भाष्यम्— अपि वेति पक्षव्यावृत्तिः। श्रुतिमूला हि सर्वे रथाः सामान्येन वचनेन 'सप्त सप्तदशानि ददाति' इति। 'सप्तदश रथाः, सप्तदश निष्काः, सप्तदश दास्यः, सप्तदश युग्यानि, सप्तदश गजा शतानि, सप्तदश वयस्याश्च सप्तदश' इति। तेनाविशेषेण सप्तदश रथाः सर्वेषां प्राप्ताः नियन्तव्याः। तत्र न ज्ञायते कस्य को रथः। तत्राध्वर्योर्यजुर्युक्तः पक्षे प्राप्तः स नियम्यते। यजुर्युक्तमध्वर्यवे ददाति, नान्यम्, न चान्यस्मै। एवं ऋग्भिर्युक्तं होत्रे, नान्यम्, न चान्यस्मै। सामभिर्युक्तमुद्गात्रे, नान्यम्, न चान्यस्मै। तत्र पक्षे नियमार्थं यजुर्युक्तग्रहणं नाध्वर्योः भागं निवर्तयितुमुत्सहते। तदनिवृत्तौ चोदकानुग्रहो भविष्यति। तस्मादध्वर्योर्भागे रथो नियम्यते, न तद्भाग निवर्तयतीति।

शा--वाजपेये ' सप्तदश रथा सप्तदश दास्य ' इति दक्षिणा विधाय श्रूयते ' यजुर्युक्तं रथमध्वर्यवे ददाति ' इति। ( यजुर्युक्त ' इन्द्रस्य वज्रोऽसि ' इति यजुर्मन्त्रैः सज्जीकृतमित्यर्थः ) | तत्र संशयः किं यजुर्युक्तो रथोऽध्वर्युभाग निवर्तयेदेति । तत्र ' प्राकाशवद्यजुर्युक्तः स्यात्तद्भागस्य बाधक ।, न स्वयं बाधकत्वस्य प्राप्तस्य नियमो ह्यसौ ॥ '

सोम-- यदि दक्षिणाशब्दे सत्यपि एकवाक्यताया भागबाधपक्षस्तदा तदभावे किं वक्तव्यमित्युरिथतेः संगतिः।

वि— ' यजुर्युक्तोऽध्वर्युभाग बाधते यमवत्पुरा ।, बाध. प्राकाशवत्, नैव पक्षे प्राप्तेर्नियम्यते ॥ '

भाट्ट— वाजपेये ' सप्तदश रथाः सप्तदश दास्यः सप्तदश निष्काः सप्तदश युग्यानि सप्तदश गवां शतानि सप्तदश वयसो वयस्यश्च इति एता सप्तदशकानि ददाति ' इति श्रुतम् । तत्रापि प्राकृतमेव दानं पूर्वप्रकृत्यङ्गीकारेण नियतद्रव्यविशिष्टं विधीयते इति प्राकृतद्रव्यनिवृत्ति । तत्र च ' यजुर्युक्त रथमध्वर्यवे ददाति ' इत्यादि श्रुतम्। तत्रापि ' प्राकाशावध्वर्यवे ददाति ' इतिवत् यजुर्युक्तरथोऽध्वर्युभागान्तरस्य दास्यादेः निवर्तकः, वैकृतद्रव्येण प्राकृतद्रव्यस्येव वैकृतविभागेन प्राकृताध्वर्यादिविभागस्यापि बाधात् । इति प्राप्ते, नात्र प्राकाशवदपूर्वो यजुर्युक्तो रथो विधीयते, येन भागान्तरनिवृत्तिराशङ्क्येत, पूर्ववाक्येन प्राप्त एव तु सप्तदशानां यजुर्युक्तो रथोऽनियमेन यस्मै कस्मैचिदृत्विजे प्राप्तोऽध्वर्यवे नियम्यते । प्राप्तिश्च दास्यादिद्रव्यान्तरसाहित्येनैवेति तादृश एव नियम्यते । अत एवात्र नियमद्वयम् । यथैव हि अनियमेन यस्मै कस्मैचिदृत्विजे प्राप्त इति शेषिरूपाध्वर्युनियमः, तथैवान्यैर्यजुर्युक्तः कदाचित् प्राप्तः कदाचिन्न इति शेषरूपयजुर्युक्तनियमोऽपि । नियमद्वयस्यापि च फलत्वान्न वाक्यभेद । शास्त्रदीपे तु सम्प्रदानत्वोद्देशेनानन्यप्रयोगमते चतुर्थ्या तस्य कर्मतरत्वेनाध्वर्यूद्देशेन यजुर्युक्तो विधीयते । दानं तु सन्निधिप्राप्तमप्राकृत इति प्रकाशवैषम्यम् । अत एव नियमफलकत्वेनैवोपपत्तौ सप्तदशत्वादिभागान्तरपरिसंख्याफलकत्वमपि अनपाकाद्विधेः न्युपमुन-

नियमफलकत्वेनैवोपपत्तौ यवादिपरिसंख्याफलकत्वानङ्गीकारवत् नाङ्गीकर्तुमुचितम् । अतो नात्र भागान्तरनिवृत्ति ।

मण्डन--- ' यजूरथोऽध्वर्युमुपैति नान्यम् । '

शंकर--- ' यजुर्युक्ते रथो न स. । ' सः भागबाधः।

* यजूरूप. ऋग्रूपः सामरूपश्चेति त्रिविधो मन्त्र. । पाल. पृ. ५८.

३ यजुर्लक्षणम् ॥

शेषे यजुःशब्दः । २।१।१२।३७ ॥

भाष्यम्— अथ यजुषः किं लक्षणमिति । यजुषो लक्षण न वक्तव्यम् । ऋग्लक्षणसामलक्षणाभ्यामेव यजुर्विज्ञास्यते वैपरीत्येन, या न गीतिर्न च पादबद्धम्, तत् प्रश्लिष्टपठितं यजुरिति ।

वा--- ' शेषे ब्राह्मणशब्द. ' इतिवत् समस्त व्याख्येयम् ।

वि— ' नवर्गामयजुषा लक्ष्म वाक्यादिति शङ्किते । पादश्च गीति. प्रश्लिष्टपाठ इत्यस्त्वसंकर ॥ ' वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि ।

भाट्ट—ऋक्सामभिन्नमन्त्रत्व यजुष्ट्वम् । स्तोभाक्षरेष्वपि तत्त्वाद्व्याप्तिरिति. ।

मण्डन—' ऋक्सामभिन्नो यजुरेव मन्त्र । '

शंकर—' यजुषां लक्षण तथा । ' ( उक्तमिति शेषः ) । १९.

* यजुर्वेद' आध्वर्यवप्रपञ्चाख्य । सु पृ ७५७. * यजुर्वेदेन यत् किञ्चित् काम्य नैमित्तिक वा चोद्यते तत् सर्वं उपांशु कर्तव्यम् । चा. १।१।२।९ * यजुर्वेदस्य उपांशुत्व स्वर. । भा. ३।३।१।१. * यजुर्वेदे दोहादिनिर्वापादयो धर्मा. पठिताः । वि. ३।३।६ * यजुर्वेदे द्रव्यदेवताक्रिय सकलमाम्नायते । वेदान्तरे तु क्रियामात्रं सकीर्त्य स्तोत्रशस्त्रादीनि पठ्यन्ते । तत्र द्रव्यदेवताकाङ्क्षितमपनीत इत्यशक्य स्ततन्त्रनियमविधानम् । यजुर्वेदे तु समस्तस्वरूपाम्नानात् विनापि स्तोत्रशस्त्रिभिः शक्यते यागो निर्वर्तयितुम् । वा ३।३।४। १० * यजुर्वेदे याजमान अङ्गान्तरकाण्डम्, मन्त्रकाण्डं तु आध्वर्यवेण । वि. ३।८।१०, * यजुर्वेदे सोम-

द्रव्यशायिग्रतिः इन्द्राग्न्यादिदेवताना च इति चोत्र विधिः ज्योतिष्टोमस्य । ३।२।२.

* यजुर्वेदोक्तं वाजपेये हिरण्यमालित्वं सर्वेणामेव ऋत्विजा न तु अध्वर्युणामेव । वि. ३।८।५.

* यजुर्वेदविहितप्रधानविधिविहितत्वाद् आधान-साम्ना उपाकरणम् । था. ३।३।२१९ पृ. ८१३.

* यजेत इत्यत्र अस्ति अंशद्वय यजिधातुः प्रत्ययश्च । प्रत्ययेऽपि अस्ति अंशद्वयं आख्यातत्वं लिङ्त्वं चेति । तत्र लिङ्वाच्या शाब्दीभावना, आख्यातवाच्या च आर्थी-भावना । मीन्या. * यजेत इत्यत्र आख्यातस्य ' भाव-येत् ' इत्यर्थः । भावनायाश्च आकाङ्क्षात्रयं ' किम् ' इति भाव्यस्य साध्यस्य फलस्य, ' केन ' इति करणस्य साधनस्य, ' कथम् ' इति इतिकर्तव्यतायाः—अङ्गसमूहस्य —उपकारकसमूहस्य इति । तत्र अर्थभावनायां भाव्या-काङ्क्षया स्वर्गादिरन्वेति, करणाकाङ्क्षया यागादिरन्वेति, इतिकर्तव्यताकाङ्क्षया च अन्वाधान-प्रयाज-प्रोक्षण-अवघातादियावदङ्गकलाप' अन्वेति । प्रयाजादि कृत्वा यागानुष्ठानेन स्वर्गं भावयेत् इति तात्पर्यम् । वि. २।१।१ वर्णक २, * यजेत इत्यत्र प्रत्ययस्य आख्या-ततत्वाकारेण भावनाभिधायित्वम्, लिङ्प्रत्ययत्वेन विधि-रूपत्वाद् पुरुषप्रवर्तकत्वम् । पुरुषश्च फलमन्तरेण न प्रवर्तते इति कृत्वा पुरुं तत्र भाष्यम् । ६।१।१, * यजेत इत्यत्र निर्मेया यागक्रिया । आख्यातगतं चैकत्वं तस्या विशेषणम् । क्रिया च कर्तारमाक्षिपति इति क्रियाद्वारा कर्ताऽपि विधेयः । विधेयकर्तृगता च संख्या विवक्षिता भवितुमर्हति । ६।१।२. * यजेत इत्यत्र शाब्दीभावना प्रत्ययगतलिङ्त्वांशेन बोध्या । सा च्यंशा, भाव्य करणं इतिकर्तव्यता चेति त्र्यंशा । तत्र भाव्य प्रत्ययगताख्यातत्वांशेन बोध्या अर्थभावना, करणं भावनाभाव्यनिर्वर्तकं लिङ्ज्ञानम्, अर्थवादलक्ष्य प्राशस्त्यं च इतिकर्तव्यता इति । मीन्या. * यजेत इत्यात्मनेपदं विधिप्राप्तानुवादकमेव । सोम. ६।२।२. * यजेत इत्यादौ अंशद्वय धातुः प्रत्ययश्च । प्रत्ययस्य अपूर्वं अर्थः । स च भावना नाम अर्थः । णिजन्तात् भवतेर्भावनाशब्दनिष्पत्तिः । भावनाया करोतिः । करोते' मत्रनिभाकाङ्क्षति । एवं करोत्यर्थद्वारेण सर्वा-ख्यातेषु भावनार्थः सिद्धः । के. ( वा. २।१।१।१ ). * यजेत इत्यनेनाऽऽक्षितः कर्ता । स विशेष्यते स्वर्गकामशब्देन । यथा ' राजा राजसूयेन यजेत ' इति । विशेषणं च कर्मार्हं भवति । ११।३।१।१, यजेत इति भावनावचनः श्रुत्या पुरुषार्थमाक्षिपति । स नाऽऽक्षिप्त' किमंशं प्रथमं पूरयति । द्रव्योपादानेन यागो विधीयते । टुप्. ११।१।१।२, * यजेत इत्यनेन निमयस्य फल-करणेतिकर्तव्यतान्वय कर्तव्यतोच्यते । ५।१।५।८. * यजेत इत्यस्यार्थः. यागं कुर्वीत यागेन वा कुर्यात् इति । तत्राभिव्यक्तिमात्रं गम्यते न फलस्य कर्ता आधारता वा । यज्यर्थः करणं कर्म वा । भा. ६।२।२।६, * यजेत इत्यस्य पूर्वो भागः यजत्यर्थं ब्रवीति, उत्तरो ( भागः ) भावयेदिति, यथा ददातीति पूर्वो भागो ददात्यर्थम्, उत्तर' तमेव भावयेत् इत्यनुवदति । एवं जुहोति इति पूर्वो भाग. जुहोत्यर्थं उत्तरभागेन ( भावयेत् इति ) अनुवदति । परो भागो भावनावचनः सर्वेषु समानः । दद्यात् इति दानेन साधयेत् इति केवलेन दानं करणं भावनाया. प्रतीयते । २।२।१।१, * यजेत इत्यस्य यागेन कुर्यात् इत्यर्थः । करणं हि याग. । १।४।१।२. * यजेत इत्यं तिङन्त-एकपदरूपा विनियोक्त्री श्रुतिः । बाल. पृ. ४२. * यजेत इत्युक्ते किं केन कथं इत्याकाङ्क्षात्रयं भवति । तत्र किं केन इति फलकर-णाभ्यां निराकाङ्क्षीकृते । कथमिति अन्याभूताकाङ्क्षाया सन्निधाने अनाम्नानात् इतिकर्तव्यतायाः तुल्यं वाक्य बुद्धौ सन्निधीयते । तत् सन्निधापितं आत्मीयमर्थं सन्निधापयति । अनेन द्वारेण अन्वाधानादिका इति-कर्तव्यता अनुषज्यते । एवं चेत् यत्र सादृश्य तत्र धर्माः प्राप्यन्ते, असति सादृश्ये नास्ति धर्मप्राप्तिः । टुप्. ८।२।२।२. * यजेत इत्युक्ते जुहोतित्वाविशेषः जायमानयः । था. ३।४।१४।४१ पृ. ६८९. * यजेत इत्युच्चरिते किं केन कथमिति तिस्रः आकाङ्क्षा जायन्ते । तत्र किं इति निरवगेव पुरुषार्थपेक्ष. साक्षात् पारंपर्येण वा । धातुस्तत्र भवति । ओदनं पचेत् इत्यत्रापि तिस्र आकाङ्क्षा विद्यन्ते । तत्र (पाके)

प्रत्यक्षादिना निर्दिश्यते इतिकर्तव्यता । इह ( वैदिके कर्मणि ) शास्त्रेण निर्दिश्यते । आकाङ्क्षात्वं तु तुल्यम्। टुप् ७।४।१।१ * यजेत इत्येवमादय साकाङ्क्षा जायन्ते किं केन कथमिति स्वर्गकाम इत्यनेन प्रयोजनेन निराकाङ्क्षा । भा २।१।१।१, * यजेत कुर्यात् इति धातुना क्रियोच्यते, प्रत्ययेन कर्ता । तयो कर्ता प्रधानभूत उपसर्जनभूता क्रिया । प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत । १०।१।८।२९, * यजेत जुहोति ददाति इति शब्दान्तरं कर्मभेदे । २।२।१।१, * यजेत यागेन स्वर्गं कुर्यात् स्वर्गाय व्याप्रियेत इत्यर्थ । इह तु न ज्ञायते कोऽसौ व्यापार इति । तत्सन्निधौ च अन्याधानादि श्रूयते । तस्मिन् आकाङ्क्षितत्वात् सन्निधानाच्च एतज्जनि अयमस्मिन् व्यापार येन याग स्वर्गं करोति इति । ११।१।२।१० * 'यजेत स्वर्गकाम ' इति । यजेत इत्यस्य उत्तरार्धात् तिस्र आकाङ्क्षा जायन्ते । तत्र प्रथमं तावत् भाव्यमान आकाङ्क्षति भावयेत् किं ' इति । तत् फलपदेन निराकाङ्क्षीक्रियते । तत् भाव्यमान केन भाव्यते इति द्वितीया आकाङ्क्षा पूर्वार्धो निराकाङ्क्षीकरोति । कथ इति तृतीयामाकाङ्क्षा अन्याधानादीनि निराकाङ्क्षी कुर्वन्ति सन्निधानात् । नवेव असम्भवात् यागात् फल श्रूयते न देवतात । टुप् ९।१।४।९ पृ १६९२

* यज्ञश्च त्याग । भा ३।८।३।१०, * यज्ञो हि सैव । ३।८।३।१०, * यज्ञस्योदराणि । ' त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् । अत्र ह्येनार वन्ति अत एवोद्धरन्ति ।' १०।५।६।२२, * यज्ञस्य एतानि पात्राणि ( वारणवैकङ्कतानि ) वाक्येन प्रकरण बाधित्वा भवन्ति । ३।१।१२।२२ * यज्ञानामग्निष्टोमपूर्वकता ( यज्ञेषु अग्निष्टोमस्य प्राथम्यम् ) । ५।३।१३।३७–३८ मीको पृ ७१ अग्निष्टोमस्य यज्ञेषु प्राथम्यम् ' इत्यत्र अधिकरण द्रष्टव्यम् । * यज्ञाना सर्वेषामङ्ग वारणादिकम् । वारणाधिकरणम् । ३।६।१२।२२ * यज्ञे ऋत्विग्भ्यो दक्षिणाया यत्स यानम् भाग आम्नायति स्वयमेव यजमानेन विभज्य तेभ्य दातव्यं इत्यभिप्राय , न परिक्रय । भा १०।३। १२।५०, * यज्ञे च अचितीर्षितो न प्रयोक्तव्य । ९।२।१।१ वर्णक २ * यज्ञे रथन्तरादिशब्दा कृते गानम् । १०।६।१।१–२

* यज्ञावचर यज्ञे अवचर्यते अनुष्ठीयते अनेन इति यज्ञावचरशब्देन यागाङ्गत्वाभिधानम् । सु पृ २०६० * यज्ञावचर यज्ञप्रचारहेतु पात्राणि इत्यर्थ । वि ३।१।१२

* ' यज्ञाङ्गौ साधन ( मास ) स्मृत ' इति स्मृति । सकर्प १।१।१८

* यज्ञायुधानि दश ' स्फ्यश्च, कपालानि च अग्निहोत्रहवणी च शूर्पं च कृष्णाजिन च शम्या च, उलूखल च मुसल च दृषच्च उपला च, एतानि वै दश यज्ञायुधानि दर्शपूर्णमासयो । भा ८।१।४।७

यज्ञायुधानि धारयेत् प्रतिपत्तिविधानादृजीषवत् । ११।३।१३।३६ ॥

यज्ञायुधानि यज्ञपात्राणि यावज्जीव धारयेत् धारयितव्यानि । प्रतिपत्तिविधानात् ' आहिताग्निमग्निभि र्दहन्ति यज्ञपात्रैश्च ' इति तेषां प्रतिपत्ते अन्त्येष्टौ विधानात् । ऋजीषवत् यथा अहरहरे सर्वेषामहा ऋजीष अवभृथे प्रतिपत्त्यर्थं धार्यते तद्वत् । इति सिद्धान्त ।

यजमानसंस्कारो वा तदर्थं श्रूयते तत्र यथा कामी तदर्थत्वात् । ३७ ॥

पूर्वपक्षमाह । ' यज्ञपात्रैर्दहन्ति ' इति यजमान संस्कार श्रूयते, न पात्राणां प्रतिपत्ति । तदर्थं तेषां पात्राणां अर्थं विनियोग श्रूयते, पात्राणां तृतीयया यजमानस्य द्वितीयया च निर्देशात् । तत्र एव सति पात्राणां तदर्थत्वात् अर्थकर्मत्वात् यजमानसंस्कारार्थत्वात् यथाकामी स्यात् तेषामन्येषां वा अन्त्येष्टौ प्रापणम् । इति ।

मुख्यधारणं वा मरणस्यानियतत्वात् । ३८ ॥

सिद्धान्ती पुनराह । मुख्यधारणं मुख्याना आधान कालीनानां आधानानामेव पात्राणां धारणं कर्तव्यम् । मरणस्य अनियतत्वात् । कदाचित् नष्टानि पात्राणि उत्पन्नानि भवेयु मरणं चापतत । तत्र यजमानशरीर संस्कारलोप स्यात् । तस्मात् मुख्यधारणमेव न्याय्यम् ।

**यो वा यजनीयेऽहनि म्रियेत सोऽधिकृत स्यादुपवेषवत् । ३९ ॥**

पूर्वपक्षी पक्षान्तरमाह । यो यजमान यजनीये अहनि यागदिने म्रियेत, ■ अस्मिन् संस्कारे अधिकृत स्यात्, तस्मिन् दिने पात्राणां सन्निहितत्वात् । उपवेष तत् यथा सान्नाय्ययाजिन एव उपवेषेण कपालोपधाने अधिकार उपवेषस्य सन्निहितत्वात् तद्वत् ।

**न शास्त्रलक्षणत्वात् । ४० ॥**

नाय दृष्टान्तोऽत्र समञ्जति । उपवेषस्य शास्त्रलक्षण त्वात् । यथा सान्नाय्ययाजिन एव उपवेषो नान्यस्य इति शास्त्रेण लभ्यते । सान्नाय्यार्थो शाखा तामननिष्पन्न उपवेष । पात्राणां तु आरम्भस्य यजनीये सत्त्व । तस्मा द्विषमो दृष्टान्त ।

**उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् । ४१ ॥**

पूर्वपक्षान्तरमाह । अथवा न मुख्याना धारणम् । किन्तु संस्कारकाले नवाना पात्राणामुत्पत्ति कर्तव्या । संस्कारस्य पात्रप्रयोजकत्वात् । संस्कार पात्राणा प्रयोजक । आशिरवत्, यथा क्रतुपेये तत्रो 'पृषतो भवत' इति वचनात् नवदुह गोरभावे 'श्व श्वा यजमानस्य नवदुग्धामाशिरे दुहन्ति' इति श्रुते आशिरार्थं अन्या गौरुपादीयते तद्वत् ।

**शब्दासामञ्जस्यमिति चेत् । ४२ ॥**

उक्त पक्षे कश्चिदाशङ्कते । संस्कारकाले नवीनोत्पत्ति पक्षे 'यज्ञायुधी' इति यज्ञशब्दस्य असामञ्जस्य प्राप्नोति । नहि नवीनाना पात्राणा यज्ञेन सम्बन्धोऽस्ति । इति चेत् ।

**तथाऽऽशिरेऽपि । ४३ ॥**

नवीनपात्रवादी प्रतिवन्द्या शङ्का प्रतिक्षिपति । तथा पात्रेषु यज्ञशब्दस्येव आशिरेऽपि 'नवदुहा' इति शब्द-स्यापि असामञ्जस्य तुल्यमेव । नहि अन्या गौ अत्रापि नवदुहा ।

**शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतात् ग्रहापूर्वार्थवद् भूतोपदेश । ४४ ॥**

सिद्धान्ती आह । तत्र आशिरविषये शास्त्रादेव विप्रयोग गवादारभ्य भवति । 'पृषतो भवत' इति शास्त्रेणैव नवदुही गो विप्रयोग निवृत्ति कृता । प्रकृतौ ज्योतिष्टोमे एकद्रव्यचिकीर्षा प्रकृत्या गो यत् पयो द्रव्य तस्यैव व्रते आशिरे च चिकीर्षा, तस्मात् 'नवदुग्धामाशिरे दुहन्ति' इति प्रकृतौ श्रुतम् । तस्य च क्रतुपेये विप्रयोग । तस्मात्तत्र न दोष । अथ इह यज्ञपात्रविषये तु अपूर्वार्थवत् अपूर्व अर्थे अस्ति अस्य इति अपूर्वार्थवत् श्रवणम् । नहि यज्ञपात्रैर्दाह अन्यत प्राप्त । तस्मात् यज्ञशब्दासामञ्जस्य अत्र दोष स्यात् । अत्र भूतोपदेश भूताना पूर्वसिद्धाना पात्राणा उपदेशोऽयम् । तस्मात् यज्ञपात्राणा यावज्जीव धारण इति सिद्धान्त ।

**प्रतिपत्तिर्वा यथाऽन्येषाम् । ४७ ॥**

प्रेतस्य यजमानशरीर पात्रावादन नार्थकम किन्तु प्रति पत्ति । यथा अन्येषा सोमलिप्ताना द्रव्याणा अवभृथ गमन प्रतिपत्ति तद्वत् । तस्मात् आधानप्रभृति याव ज्जीव यज्ञपात्रधारण इति सिद्धान्त ।❋

❋ यज्ञायुधानि यज्ञस्थितानि विशिष्टक्रियासु 'स्फ्येनोद्धन्ति कपालेषु श्रपयति, अग्निहोत्रहवण्या हवींषि निर्वपति शूर्पेण विविनक्ति, कृष्णाजिनमधस्ता दुलूखलस्यावस्तृणाति, शम्या दृषदमुपदधाति (शम्यया इति पाठ ), उलूखलमुसलाभ्यामवहन्ति, दृषदुपलाभ्या पिनष्टि' इति । [ते ३।२।५, ⁂ 'यज्ञायुधानि सम्भरति' अत्र यज्ञायुधाना दशाना सम्भरणस्य विधि । ४।१।८

🕉 यज्ञायुधाधिकरणम् । यज्ञायुधवाक्यमनुवाद कम् ॥

**द्रव्याणि त्वविशेषेणाऽऽनर्थक्यात् प्रदीयेरन् । ११।४।७ ॥**

भाष्यम्— स्तो दर्शपूर्णमासौ । तत्राऽऽम्नायते 'स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णा जिन च शम्या चोलूखल च मुसल च दृषच्चोपला चैतानि वै दश यज्ञायुधानि' इति । तत्र संशय किमेतानि द्रव्याणि प्रत्यक्षाणि उत स्वेन स्वेनार्थेन सम्बध्यन्ते- मानि । तदेतत्सिद्धवदर्थानि चिन्तनीय किमेष विधि, उत अनुवाद इति । विधौ सति प्रयोजनम्, अनुवादे सति यथाप्राप्तम् । किं प्राप्तम् ? विधिरिति । तथा हि

प्रवृत्तौ विशेष , इतरथा वादमात्रमनर्थकम् । प्रदाने चैषा यज्ञायुधशब्दोऽनुगृहीत । यज्ञस्य आयुधानि यज्ञस्य साधनानीति । इतरथा उद्धननादीनां आयुधानि भवेयु श्रवणेन, लक्षणया यज्ञस्य । संख्या चैवमनल्पा, वाक्ये नैकेन सम्बन्धात् । इतरथा नानाधसम्बन्धादशेति सख्या नावकल्पते । तस्मात् प्रदीयेरन् । अविशेषेण विहित प्रकरणेन प्रधानस्य भवितुमर्हति ।

टुप्— ( ननु तृतीये एवैषा यथासंयोग विनि योगेन उद्धननाद्यर्थत्व सिद्धम् । अत किमर्थमिहोच्यते इत्यत आह- ) प्रदेयत्वे इह निराकृते तृतीये चिन्ता ( किं सर्वमुद्धननादि सर्वैः कार्यमुत यथासंयोगमिति । इह ) प्रदेयत्वमेवाशङ्क्य निराक्रियते इति । पूर्वपक्ष माह- ) 'एतानि वै दश यज्ञायुधानि ' इति विधि स्वम् ( यागसाधनत्वेन स्फ्यादीनामप्रसक्तानाम् ), न्याय त्वात् ( यज्ञायुधशब्दस्य श्रुत्यर्थलाभात् ) । इतरथा ( यदि उद्धननादिप्राप्तानामनुवाद तदा ) पर्यायता ( लक्षणार्थता ) स्यात् । यदैतानि (स्फ्यादीनि) प्रदीय मानानि याग निर्वर्तयन्ति ततो भवन्ति यज्ञसाधनानि । साधनवचनोऽत्र ( यज्ञायुधशब्द अत ) तत्र ( प्रदेय त्वपक्षे ) यज्ञायुधशब्दो मुख्य । इतरथा ( यदि प्रदेयत्व नोच्यते तदा ) यज्ञाङ्गत्वा ( यज्ञसाधनानुसाधनमिति कृत्वा ) गौण स्यात् । (गौणशब्देन लक्षणैव उच्य ते ) । यागसाधनत्वाविशेषेऽपि ( यागाविशेषेऽपि इति मुद्रितपाठ अयुक्त ) प्रधानयागसाधनत्वेन । कथम् ? 'एतानि वै दश यज्ञायुधानि ' इति ( एतानि पदानि ) ( अत्र 'दर्शपूर्णमासयोराम्नानात् प्रधानस्यैव अङ्ग इति अधिक मुद्रितं । लिखिते तत्पाठे च इद नास्ति ) साकाङ्क्षाणि प्रकरणेन ( प्रकृतेन दर्शपूर्णमासेन सह ) एकवाक्यता यान्ति । अतो नैषा प्रयाजादिभि ( अङ्गै ) एकवाक्यता । अथवा 'एतानि वै दश यज्ञायुधानि ' इति दर्शपूर्णमासयो आम्नानात् प्रधानस्यैवाङ्गम्, न प्रयाजादीनाम् । ( ननु यज्ञशब्दस्य यागमात्र वाचित्वात् तदनुवादेन विधीयमानानि द्रव्याणि प्रकरण बाधेन वाद-तद्धर्मादिकदङ्गप्रधानार्थानि इति युक्तम् । अत आह- ) 'यद्दर्शपूर्णमासाद्यत्ति ' इति अथ प्राप्तमासादनमनूद्य वेदिनियम्यते । अङ्गप्रधानहविरा सादनमथप्राप्तम् । तस्मात् तत्र ( प्रकरणबाधेन ) वाक्यादङ्गप्रधानार्थता ' ( इह तु ) 'एतानि वै दश यज्ञायुधानि ' इति न किञ्चिदनूद्यते ( येन तदनुवादेन विधीयमानानि द्रव्याणि सर्वार्थानि भवेयु ) । न चासु सामान्यशब्दैरेकवाक्यताविशेषस्य बाधक भवितुमर्हति । ( एव सति ) संख्या चैकक्रियायोगादुपपत्स्यते ।

स्वेन त्वर्थेन सम्बन्धो द्रव्याणां पृथगर्थत्वात् तस्माद् यथाश्रुति स्यु ॥८॥

भाष्यम्— न चैतदस्ति विधि प्रदेयानीति । अनुवाद प्रसक्तत्वात् । 'स्फ्येनोद्धन्ति', कपालेषु श्रपयन्ति', 'अग्निहोत्रहवण्या निर्वपति', 'शूर्पेण विविनक्ति', 'कृष्णाजिनमुलूखलस्याधस्तादवस्तृणाति', 'शम्यायां दृषदमुपदधाति', 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति', 'प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि' इत्येवं स्वेन स्वेन वाक्येनोद्धननादिषु प्राप्नुवन्ति । प्राप्तानां वचनमनुवाद । प्रकरणमपि वाक्येन बाध्यते । यज्ञायुधशब्दश्चानुवादपक्षे न्याय्य , न विधिपक्षे । गौणो हि स आयुधशब्द स्फ्यादिषु । संख्याऽपि प्राप्तानि प्राप्ता भविष्यति । विशदं चैतदुद्धननादिभि स्फ्यादीनि प्रयुक्तानीति । भवति हि तत्र विधि 'स्फ्येनोद्धन्ति' इत्येवमादि । न तु यज्ञायुधानि कर्तव्यानीति । तस्मा दुद्धननादिषु वाक्येन प्राप्तानामनुवाद इति ।

टुप्— उत्पत्तिमतस्य स्फ्येन ( स्फ्येन इति मुद्रित पाठ ) किमपि कर्तव्यमिति ( आकाङ्क्षिते ) पदान्तरेण ( उद्धन्ति इत्यनेन ) उद्धनने दत्ते ( प्रयोजन प्रति ) निराकाङ्क्षत्वात् नान्यप्रयोजन आकाङ्क्षति । वाक्येनैषा ( स्फ्यादीनां ) उद्धननादि प्रयोजनम् । प्रकरणेन भवतु सम्बन्धो भवेद्वा न वा । आयुधशब्दोऽप्यायुधेष्वेव ( शक्त्यादिषु ) प्रसिद्धो लक्षणया ( गौण्या वृत्त्या ) स्फ्यादिषु वर्तते । तान्यपि साधनानि यज्ञस्य इति । न च विद्यमाने विधौ लक्षणा न्याय्या । अत स्तुति त्वादनुवादोऽयम् । ( अस्ति हि विधि यज्ञायुधानि सम्भरति इति । तेन स्तावकत्वया एकवाक्यभूतमनूद्यम्

मान न पृथक् विधित्वमर्हन्ति, वाक्यभेदप्रसङ्गात्। सत्त्वा चाऽऽसादनाभिप्रायः।

चोद्यन्ते चार्थकर्मसु ॥ ९ ॥

भाष्यम् — अर्थकर्मसु चोद्यन्ते पुरोडाशादीनि, तान्यपि विकल्पेरन् तत्र पक्षे बाध। न समुच्चय, पुरोडाशादीना निरपेक्षाणां प्रतिपन्नत्वात्, स्फ्यादीनां च।

एवं वा। चोद्यन्ते चार्थकर्मसु। चोद्यन्ते परिधानीये कर्मणि 'आहितानिममिमिर्दहन्ति यज्ञपात्रैश्च' इति। यदि प्रदीयेरंस्तत्र न भवेयुः। तस्मादपि न प्रदानार्थानीति।

टुप् — ( अत्र भाष्यकारेण अर्थकर्मसु आग्नेयाग्नीषोमीयादियागेषु पुरोडाशादीनि चोद्यन्ते तैरेषां न विकल्प पाक्षिकत्वाप्रसङ्गात्, न समुच्चय निरपेक्षविधानात् इत्युक्त्वा पुनः वर्णकान्तरं तत्र परिधानीये कर्मणि पात्राणां दर्शन प्रदेयत्वेन अनुपपद्यते इति। तत्र यदिदं पाक्षिकत्वादि निरपेक्षत्वमुक्तं तत्र शोभन इत्यभिप्रायेण आह—) असुष्ठोऽयं विकल्प, विषमशिष्टत्वात्। द्वितीयेऽपि वर्णके ( अन्येन अनुपपत्ति। कथम्? पूर्वपक्षे ) 'मध्यात् पूर्वार्धाच्च द्विरवद्यति' इति ( वचनेन ) सांनाय्यस्य होमार्थं क्षिप्रं क्रियते। तेन यजमानो धक्ष्यते। नैतदेवम्। ( कुत? ) मरणस्य अनियतत्वात् कदाचित् ( दीर्घकालेऽपि क्रियमाणे सति स्फ्यादीनां ) आसादनार्थत्वात् स्यात्, बहुकालदानोपपन्नत्वात्। तत्र यज्ञपात्रता नोपपद्यते ( स्फ्यादिजातीय हि द्रव्य यज्ञपात्रम्। आत्यगमे तदनुपपत्ति। ) अथवा देवतोद्देशेन द्रव्यपरित्यागात् निरिष्टानि। तस्मात् प्रतिप्रयोगमुत्पत्तेः ( एकप्रयोगोपयुक्तानामन्यप्रयोगेन यजमानेन पुनरुपयोगायोगात् )। तदाऽपि म्रियमाणो न दग्धेत। निरिष्टानामपुनःप्रयोगार्हत्वात्, निरिष्टत्वादेव। ( न हि निरिष्टेन एकस्मिन् कर्मणि उपयुक्तेन शिष्टा कार्यं कुर्वन्ति )। अथवा द्रव्यत्यागे उद्धृते यागस्य ( अविकारी ) सत् ( द्रव्यदानोद्देशात् ) पूर्वं यज्ञसाधनमभूत् मरणमेतावता न तावत् ( निष्क्रान्तम् ) इति यज्ञपात्रता नोपपद्यते। उद्धननार्थत्वे तु न किंचित् विरुद्धम्।

लिङ्गदर्शनाच्च ॥ १० ॥

भाष्यम्— लिङ्गदर्शनेन च, 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्' इति। तस्मादप्यनुवाद इति।

टुप्— [ अस्य सूत्रस्य व्याख्या भाष्यकारेण पूर्वसूत्रे कृता। पर वार्तिककारैः 'लिङ्गदर्शनाच्चेतिसूत्रमाक्षिप्ति' इत्यवतारितत्वात् स अस्मिन् सूत्रे आवश्यक इति प्रतिभाति। ] ( 'लिङ्गदर्शनाच्च' इति सूत्रमाक्षिपति ) चतुर्दश त्रयोदश इति उभयत्र ( पूर्वपक्षे सिद्धान्ते च ) तुल्यम्। ( कुत? ) न हि द्रव्यभेदादाहुतिभेद। एकदेवतात्वात् एकैवाहुति ( कल्प्यते )। तत्र केचिदाहु। उत्पत्तिवाक्यशिष्टेन ( पुरोडाशादि- ) द्रव्येण बाधितत्वात् ( स्फ्यादीनि ) कर्मान्तर ( कल्पयन्ति इत्यस्य वाक्यस्य कर्मान्तरमेव पूर्वपक्षे विधेय ) आपत्ति इति ( लिङ्ग- ) दर्शन ( उपपन्नमिति। तदेतदेकदेशिमत दूषयति- ) इद नोपपद्यते। न हि द्रव्यमयोग माक्षेण ( देवतामन्तरेण ) कर्मान्तर भवति। तस्मात् यथा वर्णितं। 'चतुरवत्तं जुहोति' इति आहवनीयेषु सर्वहोमेषु चतुरवत्तम् ( विहितम् )। तत्रैतानि दश दश द्रव्याणि इतोऽपि तत्सुकानि होमसाधनानि ( न व्रीहियववन्निरपेक्षाणि, सहविधानात् )। तत्रैषां प्रतिद्रव्य दाने गृह्यमाणे बहूनि चतुरवत्तानि भवन्ति। होमे चैकचतुरवत्त श्रुतम्। तद्यदि एकस्माद् गृह्णीत, इतरेषा साधनता हीयेत। ( यदि तदनुरोधेन सर्वेभ्यो गृहीत्वा हूयेत तत्र एकत्व हीयेत )। तस्मात् तदुपपत्तये अन्यस्मिन् याग एकैकेन चतुरवत्तेन। ननु बहूनि गृहीत्वा सकृद्धोष्यन्ति देवतैक्यात्। यथा सान्नाय्ये द्वे चतुरवत्ते ( गृहीत्वा सकृद्धोम )। उच्यते। तत्र कर्मभेदादन्येन सह प्रदाने सकृत् क्रियमाणे, इतरदपि ( प्रदान ) आत्मीय चतुरवत्त विवेकेन गृह्णाति, इतरदपि विवेकेन तत्र चतुरवत्तविघातो नास्ति। इह तु एकत्वात् कर्मण सह क्रियमाणे चतुरवत्तविघातभयादप्यवयुत्ते नोपपद्यत्। तथाहुतिबहुत्वात् दर्शनं नोपपद्यते।

आ— 'स्फ्यश्च कपालानि च' इत्युपक्रम्य 'एतानि वै दश यज्ञायुधानि' इति श्रुतम्। निमग

आतिथ्यायास्तानूनप्त्रमुपसदोऽग्नीषोमीयो वा । इति पूर्वं पक्ष ।

॥ वा कृतत्वात् तदुपदेशो हि । ४४ ॥

प्रोक्षणम्, अग्नाणामुपपायनम्, मूलनामवयेचन इति स्तूनस्य बर्हिष धर्मं आतिथ्यायां उपसत्सु अग्नीषोमीये चेति प्रतिक्रम न कर्तव्य आतिथ्याया कृतत्वात् । पुन क्रियाया हेतुर्नास्ति । साधारण चेद् आतिथ्यादीना बर्हि । कथ ज्ञायते ? ॥ यस्मात् तदुपदेशः 'यदातिथ्याया बर्हि, तदुपसदाम्, तदग्नीषोमीयस्य' इत्यनेन वाक्येन बर्हिष साधारण्यस्योपदेश, न धर्मातिदेश । तस्मात् आतिथ्याया क्रियमाणा बर्हि सस्कारा सर्वार्था एव भवन्ति, तस्मात प्रतिकर्म कर्तव्या । इति सिद्धान्त । के

॥ यज्ञकर्म प्रधान तद्धि चोदनाभूत तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तादर्थ्यात् । ९।१।१।१॥

अग्निहोत्र दर्शपूर्णमासयो ज्योतिष्टोमे च ये पृथक् धर्मा समाम्नाता, ते किं यागप्रयुक्ता अपूर्वप्रयुक्ता वा इति विचारे सिद्धान्तमाह । यज्ञकर्म यज्ञस्य अग्निहोत्र दैर्शादिकस्य कर्म कार्यं अपूर्वं इतिमर्तव्यता प्रति प्रधानम् । हि यस्मात् तत् चोदनाभूत विधिना प्राप्त भवति । अत तस्य अपूर्वस्य द्रव्येषु द्रव्यदेवतादिषु सस्कार, तत्प्रयुक्त अपूर्वप्रयुक्त । तादर्थ्यात् धर्माणा अपूर्वार्थत्वात् । अपूर्वप्रयुक्तत्वे सति तदीयविशेषे विधीयमाना अन्य स्मिन्नपि तदीयविशेषाकाङ्क्षे भविष्यन्ति । तस्मात्तत्र ऊह सिद्धो भवति । के

* 'यज्ञकर्म प्रधान०' (९।१।१।१) इति तस्यैव (अपूर्वस्य) प्रयोजकत्व व मते । या ३।३।७।१८ पृ ८५१ * 'यज्ञकर्म प्रधान०' (९।१।१।१) इति नवमाद्याधिकरणन्यायेन यागसंयुक्ताया एव अत्र धातादिक्रियाया मन्त्रप्रकाश्यत्वम् । कु १।२।४।३८ * 'यज्ञकर्म प्रधान०' देवतावत् । (पौरुषेयत्वे) भागधर्मत्वानुपपत्तेः यागद्वारा अपूर्वधर्म एवाय नवमाद्य न्यायेन निर्णायते । वा ३।३।१५।४४ पृ ८८० * यज्ञकर्मणि कर्मसमवेतार्थ प्रकाशनम्रणे प्रयोग । तान एकश्रुति । भा ९।२।८।२०-२१ वर्णक ३

* यज्ञतन्त्रादिद्रव्योपर्वधिकरण आग्नीध्रीयोऽग्नि । सकर्य ३।३।१४

* यमद्वार चात्वालोत्करयोर्मध्यम् । भाट्ट ९।३। ११

॥ यज्ञपत्यधिकरणम् । इडानिगदस्थयज्ञपति-शब्दस्य असमवेतार्थकत्वात् विकृतौ नोह ॥

चोदितं तु परार्थत्वाद् विधिवदविकार स्यात् । ९।१।१४।४० ॥

भाष्यम्— स्तो दर्शपूर्णमासौ, 'दर्शपूर्णमासाभ्या स्वर्गकामो यजेत' इति । तत्र इडानिगद 'इडोपहूता' इत्येवमादि । तत्रदमाम्नायते 'दैव्या अध्वर्यव उपहूता उपहूता मनुष्या य इम यज्ञमवान् ये च यज्ञपति वर्धान्' इति । तत्र अयमर्थ सांशयिक । किं बहुयजमानके यज्ञपतिशब्द ऊहितव्य, उत अविकारेण प्रयोक्तव्य इति । तत्र तावत् परीक्ष्यते किं समवेतवचनो यज्ञपतिशब्द, उत असमवेतवचन इति । कथ समवेत वचन ? यदि यज्ञपतिर्वृद्धिवचन यज्ञपतेरुपकारकम्, तत समवेतार्थाभिधायी । अथैतस्तुत्यर्थम्, ततो न समवेता भिधायी । किं प्राप्तम् ? ऊहितव्य, समवेताभिधायीति । कथम् ? यज्ञपतिवृद्धिवचनात् यज्ञपतय प्रोत्सहन्ते । इडापदानपेक्षा पदैर्यज्ञपतिवृद्धिरभिधीयते । तस्या स्तुत्यय प्रत्यय, इडस्तुतो जप्य । तस्मादर्थविप्रकर्षात् न इडास्तुति । अतो यज्ञपतिशब्द ऊहितव्य । यस्यैव वृद्धिर्नोच्यते स एवोत्साहसस्कारेण सस्कृतो न स्यात् । तस्मात् सर्वे वृद्धिसस्कारार्थं वदितव्या । सर्वेषु वदितव्येषु बहुवचनम् । एव प्राप्ते, ब्रूम । चोदिते तु परार्थत्वाद्विधिवदविकार स्यात । चोदितमपि यत्, समवेत परार्थं विधीयते न स्वसस्कारार्थम्, तदपि अविकारेण प्रयुज्यते । ततोऽहित न स्यात्, परार्थत्वात् । अत हि यज्ञपतिवचन वृद्धिविशेषणार्थम्, वृद्धिवचन चेडास्तुत्यर्थम् । कथमवगम्यते ? इडोपादानेनैकवाक्यत्वात्, इडाप्रकरणाच्च । अथ यदुक्त गम्यते इडापदानपेक्ष यज्ञपतिवृद्धिवचन तेषामुत्साहकम्, उपहूता मनुष्या ये यज्ञपतिं वर्धयेयुरिति । अत्रोच्यते । 'स यो हैव विद्वा निडया चरति' इति अभिधाय 'अथ प्रतिपद्यते,

प्रयोजनवत्तोत्पत्तेः इति मीमांसकमर्यादा । तत्रापि तु लिङ्गवशात् फलकल्पनस्याङ्गीकारे नातीव काचिदनुपपत्तिः, परन्तु तत्र नियतफलस्य फलस्य लिङ्गवशात् प्रतीयते यथा प्रयतमन्त्रादौ । प्रकृते तु प्रथम तावत् इति-कर्तव्येन किञ्चिदप्रति विनियोगः, 'अथ प्रतिपद्यते इडाह' इत्यादिना मन्त्रोच्चारणस्यैव इडाभक्षणाङ्गत्वेन विधेयत्वात् । अस्तु वा पुनःदेवताद्यादइडशब्दस्य मन्त्रविशेषविशिष्टो-पाह्वानप्रकाशनस्यैव इडाभक्षणाङ्गत्वेन विधिः । सर्वथा नोपाह्वानं नाम किञ्चिदस्ति क्रियाङ्गम्, यस्मिन् यज्ञपति-बुद्धिर्भवेत् । यथाकथंचित् उपाह्वानप्रकाशनस्यैव उच्च-रितमनुष्योपाह्वानस्यैवाङ्गत्वविधानात् ।

वस्तुतस्तु तस्योपाह्वानस्य भक्षाङ्गत्वे न तदन्यस्य यज्ञपतिशब्देन मन्त्रे प्रतीयते, येन मान्त्रवर्णिकफलकल्पना शक्येत । नहि इडाभक्षणार्थं यज्ञपतिबुद्धिकर्तृमनुष्यो-पाह्वानमन्तरेण यज्ञपतिबुद्धिर्भवति इति तदुच्चारणस्य प्रमाणान्तरमन्तरेण प्रतीयते, 'ये यज्ञपतिबुद्धिं कर्तुं समर्थास्ते उपहूता' इति हि तदर्थः । न च यो यस्तत्र समर्थः तदुपाह्वाने तत्प्रयुक्ते इत्यत्र प्रमाणमस्ति, अतो न तावदस्य फलप्रतिपादकत्वम् । अत एव न प्रोत्साहनार्थ-त्वमपि, बुद्धिजनकविधिप्रमाणमन्तरेण प्रेरणाहेतुत्वानुपपत्तेः । अतोऽत्र यज्ञपतिबुद्धेः उपाह्वानविधेयत्वेन व्याख्याया अपार्थत्वात्, अदृष्टार्थप्रकाशनविषयत्वेन अदृष्टार्थत्वाच्च, तत्रैव मन्त्रप्रकृतस्याधीनस्य यज्ञपतिप्रकाशनमात्रेण च तद-दृष्टोपपत्तेरनुद्दः । यत्रापि यजमानः न स्वरूपेणोपयुज्यते पर तु गुणभूतः यथा औदुम्बरीमानादिषु, तत्राप्या-त्रेयीन्यायात् ( ३।२।८ ) मन्त्रग्रहणेऽपि एकस्यैव ग्रहण न सर्वेषाम्, यजमानस्य कारकत्वाभावात् । तत्र का कथा अदृष्टार्थप्रकाशनविषयभूते यज्ञपतावितिति । अत एव यत्र यजमानस्य मन्त्रार्थगतफलसंबन्धित्वेन प्राधान्य यथा सूक्तवाकादौ 'आशास्तेऽयं यजमान' इत्यादौ, यत्र वा प्रोत्साहनार्थत्वेन यजमानविशिष्टाभिधानात् तस्य प्राधान्य यथा 'आयुर्दा अग्ने' 'उरु ते यजमानि प्रथ ताम्' इत्यादौ, तत्रोभयत्रापि बहुत्वे ऊहः । तदिदमुक्त 'निष्कारस्त्वप्रधाने स्यात्' इति मन्त्रोदाहरणमुखेन ।

मण्डन— 'नहि भवेद् यज्ञपतिस्त्विडायाम् ।'

शंकर— 'न यज्ञपतिशब्दोऽसौ ।' २२.

* यज्ञपतिवत् । यथा 'य इमं यज्ञमवान् ये च यज्ञपतिं वर्धान्' इति यज्ञपतिमनुभाषा होतुर्नाम प्रश-सायां न स्वार्थे वीक्ष्यते इति अविशेषेण प्रयुज्यते । न वर्धान् यजमानान् प्रति आह । भा. १०।४। ६५।९१.

* यज्ञपतिशब्दस्य इडोपाह्वानमन्त्रगतस्य बहुयज-मानके विकारे नोहः, अयमेतार्थकत्वात् तस्य । भा. ९।३।१३।४०.

* यज्ञपात्राणि आ अन्तात् ( यावज्जीवं ) धार-यितव्यानि । ११।३।१३।३४–४२, ४५, * यज्ञ-पात्राणि यज्ञसम्बन्धेन हि दाह्याणि भवन्ति । भा ११। ३।१३।४०, * यज्ञपात्रैः 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' । ६।६।६।३४, * यज्ञपात्राणां अग्नीनां च परिधानीये कर्मणि प्रतिपत्तिः यजमानशरीरे निक्षे-पणम् । ११।३।१३।३४. * यज्ञपात्राणां दाहस्य नियम । भाट्ट ११।३।१३.

㉟ यज्ञपात्राणां धारणं आधानमारभ्यैव ॥

प्रकृत्यर्थत्वात् पौर्णमास्याः क्रियेरन् । ११।३। १४।४३ ॥

भाष्यम्—एवं स्थितमपवर्गनिमित्तम् । अनन्तरं चिन्ता-न्तर क्रियते ( सूत्रद्वयेन ) । यज्ञपात्राणि धारयितव्यानि इत्युक्तम् । तत्र चिन्त्यते किं पौर्णमास्याः आरभ्य धारयि-तव्यानि, उत आ अग्न्याधेयात् इति । किं प्राप्तम् ? पौर्णमास्याः आरभ्य धारयितव्यानि इति । कुतः ? प्रकृ-त्यर्थत्वात् । इमानि पात्राणि अनारभ्योक्तत्वात् दर्श-पूर्णमासार्थानि । तेनैषामुत्पत्तिः । उत्पत्तिप्रभृति च धारणम् । तस्मात् पौर्णमास्याः आरभ्य धारयितव्यानि ।

अग्न्याधेये चाऽविप्रतिषेधात् तानि धारये-न्मरणस्यानिमित्तत्वात् । ४४ ॥

भाष्यम्— न वा पौर्णमास्या आरभ्य धारणम् । किं तर्हि ? अग्न्याधेयात् । कुतः ? अविप्रतिषेधात् । यद्यपि पौर्णमास्या विहितानि चोदकेन यजमानहरिषु प्राप्तानि । तत्प्रभृति धार्यमाणेषु विप्रतिषेधो भवति, मरणस्यानिमित्तत्वात् । प्राक् पौर्णमास्या यदि मरण-

मापद्येत, यजमानशरीरसंस्कारलोपो भवति । आधाना-त्प्रारभ्य धार्यमाणेषु अविप्रतिषेधो भवति । तस्मा-दाधानादारभ्य धारणम् ।

वि— ' किं पौर्णमासीमारभ्य यद्वाऽऽधानमिति धृतिः ।, प्रकृत्यर्थतयाऽऽद्यः स्यात्, मरणानियमात् परः ॥ ' परः पक्षः आधानमारभ्य धारणमिति ।

भाट्टदीपिका तु पूर्वाधिकरणे गता । तत्र हि अन्त-रालाभिप्रायेष्टितो कर्मेत्यधिकरणं कृत्वा व्याख्यातम् ।

मण्डन-- ' नेष्टादन्याधानात्ते धारणं स्यात् । '

शंकर-- ' यस्मान्नेष्टिनन्तु मा । ' वा पात्रधृतिः ।

सू यज्ञपात्राणां यावज्जीवं धारणं नियतम् ॥

यज्ञायुधानि धार्येरन्, प्रतिपत्तिविधानादृजीष-वत् । ११।३।१३।३४ ॥

भाष्यम्-- यज्ञपात्राणि तु आ अन्तात् धारयि-तव्यानि । कुतः ? प्रतिपत्तिविधानात् । प्रतिपत्तिरेषां परिधानीये कर्मणि निर्धार्यते, ' आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च ' इति । ऋजीषवत् । तद्यथा, अहर्गणे सर्वे-षामहामृजीषोऽवभृथे प्रतिपत्त्यर्थं धार्यते । ' ऋजीष-मप्सु प्रहरति ' इति श्रूयते ( तद्वत् ) ।

यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथा-कामी तदर्थत्वात् । ३५ ॥

भाष्यम्— न चैष पात्राणां प्रतिपत्तिः । किं तर्हि ? यजमानसंस्कारोऽयम् । तदर्थमेषां पात्राणामर्थः श्रूयते । कथं ज्ञायते ? तेषां तृतीयया निर्देशात्, यजमानस्य द्वितीयया । तत्र यथाकामी स्यात् । तेषामन्येषां वा साधनम् । तदर्थत्वात् अर्थकर्मत्वात्, पात्राणां गे. केषांचि-दन्यार्थं सिध्यतीति ।

मुख्यधारणं वा, मरणस्यानियतत्वात् । ३६ ॥

भाष्यम्-- मुख्यानां वा आद्यानां पात्राणां धारणम्, नानियमः । कुतः ? मरणस्यानियतत्वात् । अनियतकालं मरणम् । कदाचित्तानि पात्राण्युत्सृष्टानि भवेयुः, मरणं चापद्येत । तत्र यजमानशरीरसंस्कारलोपः स्यात् । एवमपि तावद्धारयितव्यानि यावदपरः प्रयोगः, यावत्तदीयैः पात्रैरर्थकर्म भविष्यति । पूर्वेषु विद्यमानेषु पात्रान्तरमन्येषामनर्थकम् । तस्मान्मुख्यधारणमेव न्याय्यम् ।

यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् । ३७ ॥

भाष्यम्--अथवा न मुख्यानां धारणम् । यो यज-नीयेऽहनि म्रियेत यजमानः, सोऽनेन संस्कारेणाधिकृतः स्यात् । तस्य तानि पात्राणि संनिहितानि । उपवेषवत् । यथा सान्नाय्ययाजिनः प्रयोगपर्यवसानेऽधिकारः । तस्यो-पवेष सन्निहितः इति ।

न, शास्त्रलक्षणत्वात् । ३८ ॥

भाष्यम्--नैतदेवमुपपद्यते । किं कारणम् ? शास्त्र-लक्षणं तद्भवति । यथा सान्नाय्ययाजिनः एनोपवेषो नाप्यन्येति । तत्र हि सान्नाय्यार्था शाखा । तामनुनिष्पद्यते उपवेषः । तस्या असान्नाय्ययाजिनः असंभवः । अपे-क्षमनियतं संस्कारविधानम्, यजनीये वाऽहन्यन्यत्र वा, अनारभ्य विधानात् 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति । न चान्यस्मिन्नहनि यज्ञपात्राण्युपयोगसंभवः । शक्यते हि धारणेन संपादयितुम् । तस्मादुपवेषः दृष्टान्तः ।

उत्पत्तिर्वा, प्रयोजकत्वादाशिरवत् । ३९ ॥

भाष्यम्-- अथवा न धारणम् । किं तर्हि ? संस्कारकालेऽन्यानि नवानि पात्राण्युत्पाद्यानि । प्रयोजक-त्वात् संस्कारस्य । आशिरवत् । यथा क्रतुपेये ' धृतव्रतौ भवत ' इति वचनात्प्रमाणे व्रतदुहः, ' अन्या यजमानस्य व्रतमाशिरे दुहन्ति ' इति भुवेऽर्थाशिरर्थमन्या गौरुपा-दीयते, एवम् ।

शब्दासामञ्जस्यमिति चेत् । ४० ॥

भाष्यम्— अथ पश्यसि एवं सति यजमानशब्दः असमञ्जसो भवति । यज्ञसम्बन्धेन हि पात्राणि यज्ञपात्राणि भवन्ति । न च नवानां यज्ञसम्बन्धोऽस्तीति ।

तथाऽऽशिरेऽपि । ४१ ॥

भाष्यम्-- आशिरेऽपि याऽसावन्या गौरुपादीयते, सा यजमानस्य व्रतधुग् न भवति । तत्र शब्दस्यासामञ्ज-स्यमेव । यदि तत्रान्या गौ, इहाप्यन्यानि पात्राणि भविष्यन्ति । वचनयोः ना विशेष इति ।

शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृत्या-वचेष्टापूर्वार्थवद् भूतोपदेशः । ४२ ॥

जुहोति' अथ सामान्यविधिः मन्त्रार्थे. । पू. १५.
● ' यदुत्तमे प्रयाजे देवताः समावपति, प्रयाजभाज एवैनास्तत् करोति ' तत्रया श्रुतिः. सोऽपि भागी भवति एवं तद्विभागे देवताभागिनीः करोति । प्रयाजविषयिका कौषीतकिश्रुतिः । संकर्ष. २।२।२. ● ' यदेकया जुहुयात् दर्विहोमं कुर्यात् ' इत्यत्र दर्विहोम. कर्मनामधेयम् । स्थालीपाक', अग्रया', अग्निहोत्रम्, नारिष्ठहोमाः इत्यादयो दर्विहोमाः । नात्र वाक्ये दर्वीरूपो गुणो विधीयते, 'दर्विहोमो यज्ञाभिधानं होमसंयोगात्' इति । वि. ८।४।१. ● ' यदेवाहः पौर्णमास्या इति. ' इति वाक्ये पौर्णमास इति. उपांशुयाजस्यापि पर उत्पन्नं, अन्येन सोमादुत्कर्षः । उपांशुयाजस्यापि आग्नीषोमीय सोमात् प्राक् न कर्तव्य ब्राह्मणेन, परन्तु प्राजापत्यं वैष्णवं कर्तव्यमेवेति न तयोरुत्कर्षः । दर्शपूर्णमासयोः । भा ५।४। ६।१९-२१. ● ' यदेव तृतीयं ज्योतिस्तदेव तेनाप्यते ' ■ आहवनीय प्रकृत्य श्रुयन्तर इति पूर्व. पक्षः । तृतीयज्योतिःपद औपवेदिकाग्निपर इति सिद्धान्तः । संकर्ष. ३।२।१.

⧗ यत्कार्यं जायते यस्मात्तस्मिंस्तत्प्रविशतीति न्यायः । यथा — ' मृत्तिकाया घटोत्पत्तौ घट. मृदि अङ्गुलीयकम् ' इति वैशेषिकाः प्राहुस्तथा नैयायिका अपि । इति । साहस्री. ९०८.

● ' यत् किंचित् सोमलिप्तं तेनावभृथं यन्ति ' इति-नत् । अत्र यथा प्रतिपत्तिर्न स्वीक्रियते तथा ' स्रुवया पशुमनक्ति ' इति पदाञ्जन प्रतिपत्ति., पूर्वपक्षे । सोमलिप्ते तु आरम्भपदे गौणत्वाद्यनेकदोषभिया तद्वीकरणाभिमुखमेव ( ४।२।८ इत्यत्र ) इत्युक्त. । भाट्ट. ४।४।१०. ● ' यत् मुष्टिभ्यां हरति अधिवृक्षं दारुमयेण होत पशुनिर्वृत्यर्थे ' । शाकप्रस्थायीये इदम् । संकर्ष १।३।२.

⧗ यत्कृतकं तदनित्यमिति न्यायः । कृतकं कार्यम्, जन्यभाव इति यावत् । तथा च कार्यमात्रस्योत्पत्तेः प्रागसत्त्वेन प्रागभावप्रतियोगित्वाच्च प्रागभावप्रतियोगित्वघटितानित्यत्वम् । ध्वंसस्य प्रागभावप्रतियोगित्वेऽपि भावत्वाभावान्न व्यभिचार इति तार्किकाः । वेदान्तिमते तु ध्वंसस्यापि नाशाभ्युपगमेन न भावत्वं निवेशनीयमिति भेदः । साहस्री. ९९१.

● यथार्थात् कृत न तत् चोदकः प्रापयति । भा. १०।७।८।२३. ● यत्र बुद्धौ ( विशेष्यत्वेन ) सन्निहित तद्धितं ( प्रमाणं ) इत्युक्तम् । ८।१।१७।३३-३४. ● यत्र नियमानं न दृश्यते, तद्दर्शनाय यत्नः क्रियते । यथा घटं न पश्यामि इति प्रदीप करोति, न शब्दानिमाण न पश्यामीति । ७।२।१।१०.

⧗ यत्र स्तूयते तद्विधीयते इति न्यायः । अनेन अध्ययनस्यार्थज्ञानस्यापि विधिरभ्युपगन्तव्य इत्युक्त पद्यमाने उपोद्धृते । साहस्री. ७८६.

● ' यत्रास्ति भूतलादौ घटादि तत्राप्रमीयमाणस्य । योऽयो प्रमाणविरह. प्रमाणविषयेऽपि सोऽभावः ॥ ' ऋजु. पृ ९४.

⧗ यद् दृष्टं दृश्यते स्वप्नेऽननुभूतं कदापि नेति न्यायः । स्पष्टोऽयम् । साहस्री. ९७४.

● ' यत्र दुःखेन संभिन्नं, न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत् तत्सुखं स्वःपदास्पदम् ॥ ' इद न लक्षणम्, विशेषणचतुष्टयस्य सार्थक्याभावात् । किन्तु स्वरूपकथनमात्रम् । विशेषणत्रयेणापि हि कारागारमुक्तवैलक्षण्यस्य सुखस्य सुखान्तरस्यापि स्वर्गत्वमाप लभ्यते । तद्धि दुःखमिश्रम्, इदं तु न तथा । एवं सामारिक राज्यादिसुखं वर्षावधिप्रमाणाभावात् सानुकूलापहारादिग्रासावनम् । इद तु अर्थवादादिप्रमाणतो वर्षादियावत्कालभोग्यत्वेन प्रमितम्, न तन्मध्ये अपहारादिग्रसनम् । तथा इह अनन्तर अनभिग्रस्त सतत वर्षादिपर्यन्तम्, इतरत्तु न तथा । किंच सुखं तु गोभगरादिलावण्यया अनवच्छिन्नम् । एतदिदं अभिलाषमात्रेण उपनीत उपस्थितेन सक्चन्दनवनितादिविषयापेक्षम्, इतरत्तु विषयापेक्षमेव । यद्वा, इद प्रयत्नानपेक्षाभिलाषमात्रोपनीतविषयम्, इतरत्तु प्रयत्नोपनीतविषयमिति । अत एव आकृत्यधिकरणे ' जात्यर्थ. सर्वशब्दानामिति प्रत्याख्यलक्षणम् । अपूर्वदेवतास्वर्ग समत्वमाहुर्गवादिषु ॥ ' ( १।३।९।३० पृ. २९७ ) इति, वैयाकरणमतनिरासावसरे तदुक्तदृष्टान्तोपयोगार्थे ' कार्यसामर्थ्यमिन्द्रादि-

निर्मिश्रसुखसततिः.' (ना. पृ. २१९) इति वार्तिके निर्मिश्र-सततिपदाभ्यां आवनृतीयविशेषणार्थौ एव स्वर्गत्वजात्युपलक्षणार्थमुक्तौ । तद्व्याख्याने भट्ट-सोमेश्वरेण तु 'केवलमेव सुखं इत्युक्तेः दुःखामिश्रत्व-मेव स्वर्गत्वसामान्योपलक्षणत्वेनोक्तम्, सततत्वं तु चिर-कालतात्पर्यं दुःखामिश्रत्वेनैव आक्षिप्यते' इति वदता अलौकिकसुखविशेषपरतिसाध्यर्थं तद्ग्रहणं च इत्युक्तमिति । बाल पृ. ४८-४९

■ यन्निवृत्तिमद्वस्तु तदुत्पत्तिमदपीति न्यायः । 'ध्रुवं जन्म मृतस्य च' इति भगवद्वाक्यमस्मिन् न्याये बीजम् । साहस्री. २६२.

* 'यत् पशुर्मायुमकृत॰' इति मन्त्र. निमित्त-विधिस्वरूप. । बाल. पृ. ६५. * 'यत् पूर्णं तन्मनु-ष्याणा॰' इत्यादौ विधिरनुवादो वा इति संशये, अनुवाद इति सिद्धान्त ज्योतिष्टोमे । भा. १।४।३।११

■ यद्यथा वर्तते तस्य तथात्वं भाति मानतः इति न्यायः । यत् शुक्त्यादि यथा येन शुक्तिकादि-रूपेण वर्तते, तस्य तथात्वं शुक्त्यादिरूपत्वं प्रमाणतः स्फुरतीत्यर्थः । उक्तं च- 'यद्यथा वर्तते तस्य तथात्वं भाति मानतः । अन्यथात्वं भ्रमेणेति न्यायोऽयं सार्व-लौकिकः ॥' इति । साहस्री. ५५१.

■ यद्यदा यत्करणसमर्थं तत्तदा तत्करोतीति न्यायः । यथा- 'सामग्री स्वकार्ये (कर्तुं) समर्था' इति । सामग्री कारणसमूह इत्यर्थं इति तत्र बौद्धे । साहस्री ६९६.

■ यद्यदा यन्न करोति तत्तदा तत्राऽसमर्थ-मिति न्यायः । यथा हि- शिलाशकलमङ्कुरे इति सर्वदर्शनसंग्रहे बौद्धे । साहस्री. ६९७

* यत् यस्मात् प्रतीयते तत् तस्य वाच्यम्, यथा गोशब्दस्य गोत्वम् । भीन्या * 'यत्रोन्या तद्गुचर्यो-र्गायति' । इह तत्त्व (ऐ) आयी भवति । सोऽत्र आयीभावरूप ऊहः ऊनपञ्चर्णवशेन कर्तव्य. न तु योनिवशात् । 'कया नश्चित्र' इत्यत्र 'कया' इत्यक्षर-द्वयात्मकः गात्रो भागः । 'नश्चित्र आभुवत्' इति द्वितीयो भागः । तत्र 'श्चि' इत्यक्षरस्थः इकारो वृद्धस्वरत्वात् ऐ भवति, स च सन्ध्यक्षरत्वात् विश्लेषेण 'आइ' भवति । परन्तु 'कस्त्वा सत्यो मदाना' इत्यत्र 'सत्याइ मदाना' इति न कर्तव्यम् । किन्तु 'अथाई तृणाम्' इत्यत्र कर्तव्यम् । वि. ९।२।९.
* 'यद्वैतदविशेषेण स्थितं कृत्यवशादुभौ । प्रत्य-यार्थे सह ब्रूत प्रकृतिप्रत्ययावपि ॥' इति न्यायेन (ना पृ. ९०२) कर्तुः प्राधान्यस्यापि वाच्यत्ववत् आगमिकतया दर्शनीयत्वात् (व्याकरणमते) । सु. पृ. १८१७.

* यद् विधेयमस्मायेवे तदेव स्तोतव्यम् । भा. १।४।१२।२० पृ. ३५९. * 'यत् सहस्रावतीमुप-दधाति॰' इत्यादिश्रुतिः, दानवारणपूर्वकभोजनाचारमूल-भूता । एतेन परिगृह्य इतरेण अत्ति इति अन्वयः । सु. पृ. २१८. * 'यः अमावास्यां पौर्णमासीं वातिपादयेत्, अग्नये पथिकृतेऽष्टाकपालं निर्वपेत्' । अयं विहितारम्भनिमित्तकपुरुषार्थाधिकारविधिः । बाल. पृ. १५ * 'य इष्ट्या पशुना सोमेन वा यजेत, सोऽ-मावास्यायां पौर्णमास्यां वा' इत्यत्र मुख्यैव पर्वणि, दीक्षायास्तु अपकर्षः । न तु दीक्षणीया पर्वणि, सुत्यायाश्चोत्कर्षः इति । प्रधानलोपयो. प्रधानस्य प्राबल्यात् । वि. १२।२।९, 'य इष्ट्या' इति वचनं (यथा) साङ्गानि कर्माणि अमावास्याकाल प्रति उपादत्ते दर्शपूर्णमासयो समग्रत्वं मुक्तं यत् आतिदेशिकं न्याहकालत्वं बाधते, न तथा चातुर्मास्यसाकमेधीयेष्टिषु । इति पूर्वपक्षः । वा. ५।१।११९.
* 'य इष्ट्या' इत्यादिवाक्येन यथा पौर्णमास्यादिकालविधा-नात्, इष्ट्या (विकृतीना) इष्टीनां तत्तत्कालत्व एव प्राप्तत्वादिकालविधानात् तत्तत्कालता किं न स्यात् अत आह पूर्वपक्षी । सोम ५।१।११. 'य इष्ट्या पशुना॰' इति वचनेन विकृतीनां चोदकेन प्राप्त व्यूहकालत्व बाध्यते । वि ५।४।७, * 'य एतेनानिष्ट्वाऽथान्येन यजेत' इत्यत्रान्यशब्देन अग्निष्टोमादयः सैन्या, एकाहाः, अहीनाः, सत्राणि, चेति अशेषाः सोम-विकृतयो गृह्यन्ते । ५।३।१४.

■ य एतेनेत्यग्निष्टोमः, प्रकरणात् । ५।३।१३।३७ ॥

'एष वाव प्रथमो यज्ञो यज्ञानाम्, यद् ज्योतिष्टोमः, य एतेनानिष्ट्वा अथान्येन यजेत गर्तपत्यमेव तज्जायते, प्र वा मीयते' इति श्रुतम्। यज्ञानां मध्ये ज्योतिष्टोमः प्रथमो यज्ञः। यः ज्योतिष्टोमं अकृत्वा अन्यं याग प्रथमतः कुर्यात् तेन तथा कृतेन गर्तपत्यं गर्ते पतनमेव स्यात् अथवा प्रमीयेत मरणं स्यात् इति श्रुत्यर्थः। अत्र श्रुतौ 'य एतेन' इति एतच्छब्देन को यागो गृह्यता इति विचारे सिद्धान्तमेवाह। य एतेन इति एतच्छब्देन अग्निष्टोम एव उक्तः, नान्यः कश्चित्। प्रकरणात्। अग्निष्टोम एव हि प्रकृतः। प्रकृतवाचकं च सर्वनाम। तथा च अग्निष्टोमविषयकमेतद्वचनम्। वाक्यार्थकथनार्थमेव सूत्रम्।

लिङ्गाच्च । ३८ ॥

सिद्धान्ते हेत्वन्तरमाह। चकारः समुच्चये। लिङ्गात् अग्निष्टोमपरः एतच्छब्दः। उक्तवाक्यस्य वाक्यशेषे, नवत्यधिकशतपरिमिताः स्तोत्रीया ऋचः उक्ताः। ताश्च अग्निष्टोमे एव भवन्ति नान्यत्र। वाक्यशेषश्च 'ठस्य नवतिशतं (१९०) स्तोत्रीयाः' इति। तन्त्रवार्तिके भाष्ये एवमुक्ता- त्रिवृद् बहिष्पवमान एव च नव ऋचः, पञ्चदश आज्यानि चत्वारि, ता एकोनसप्ततिः। [ ९+ (१५×४=६०) =६९ ] पञ्चदशो माध्यंदिनः पवमानः, तेन चतुरशीतिः [ ६९ + १५ = ८४ ], पृष्ठ्यानि पृष्ठानि चत्वारि, ता अष्टषष्टिः चतुरशीत्या सह द्विपञ्चाशच्छतम [ ८४ + ( १७ × ४ = ६८ ) १५२ ]। सप्तदश आर्भव पवमानः तेन षष्ठ्यधिकशतं नव च [ १५२ + १७ = १६९ ]। एकविंशं यज्ञायज्ञीयं तदेकत् नवतिशतम् [ १६९ + २१ = १९० ] अग्निष्टोमस्य इति। के.

● 'य एतेनेत्यग्निष्टोमः प्रकरणात्'। ५।३।१३।३७–३८ ॥ 'न प्रथमयज्ञे प्रवृत्त्यात्'– प्रत्येनशब्दस्यैव अर्थबोधोपपत्तौ अतिरिक्तशक्तिकल्पनाया प्रमाणाभावात् प्रथमशब्दस्य च अप्रवृत्तप्रवर्तनविषयवाचित्वात् आद्यप्रयोगपरत्वाक्षमतेः, यज्ञशब्दस्य च लक्षणया प्रयोगपरत्वम्, प्रकरणात् ज्योतिष्टोमरूपयज्ञपरत्वमेव वा अङ्गीकृत्य प्रथमयज्ञपदेन ज्योतिष्टोमप्रथमप्रयोगोऽभिधीयते। स च अग्निष्टोमसंस्थाकज्योतिष्टोमस्य पाठक्रमिकन्यायात् अतिरात्रसंस्थाकस्य च वचनात्। भाट्ट. ३।१।१२. ● 'य एतेन॰' इत्यनेन अग्निष्टोमस्य ज्योतिष्टोमस्य वादः। भा. ५।३।१३।३७–३८. ● 'य एतेन अनिष्ट्वा अथान्येन' इति वाक्यं पूर्वमग्निष्टोमस्य कर्तव्यतामाह पश्चाद् गवादीनाम्। वा. ५।३।१४।२९. ● 'य एवं विद्वानग्निं चिनुते' इति चयन अग्नेश्च संस्कारः। वि. २।३।१०. ● 'य एवं विद्वान् पौर्णमासीं यजते' इत्यादि विद्वद्वाक्यं अनुवादकं न कर्मान्तरविधायकम्। २।२।२. ● 'य एवं विद्वान् वामदेव्यं गायति' इत्यादीनि यजुर्वेदवाक्यान्येव। वा. ३।३।२।९ पृ. ८११. ● 'य एव पदानां प्रतिपत्तौ प्रतिपदं पाठः' इति महाभाष्यकारोक्तन्यायेन साधूनां प्रतिपदं पाठं नाध्येष्यति। सु. पृ. २६३.

■ यः कल्पः स कल्पपूर्वक इति न्यायः। एवं हि संसारस्यानादित्वात् ईश्वरस्य च सर्वज्ञत्वादीश्वरो गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वोपदिशतीति भावः। 'यथापूर्वमकल्पयत्' इति श्रुतेरिति। साहस्री. ४७१.

● 'यः कामयेत, प्रथेय पशुभिः, प्रजया जायेयेति, स एतामवि वशामादित्येभ्यः कामायाऽऽलभेत'। अत्र नहुदैवत्येऽपि एकस्मिन् पशौ गर्भैकत्वात् मेधपतिशब्दे नास्त्यूहः। एकवचनान्तश्च मेधपतिशब्दः (तद्घटितमन्त्रः) द्विवचनान्तेन विकल्प्यते प्रकृतावपि। वि. ९।३।१३. ● 'यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुयात्' अयं विशेषविधिः पुरुषार्थः। बाल पृ. १९.

■ यः कारयति स करोत्येवेति न्यायः। कारयितुः कर्तृत्वमिति। यथा राजादिर्हि भृत्यैः युद्धादिकं कारयन् स्वयं करोतीति प्रसिद्धं तथा प्रकृतेऽपि। साहस्री. ५४.

नियतविशेषणस्य इति निर्णयः । २।२।१३।२८–२९.

☞ यो वै चित्तेन दूरस्थः समीपस्थो हि दूरतः इति न्यायः । साहस्री. ६०९.

● 'यः शिष्यते स लुप्तार्थाभिधायी' इति न्यायः । प्राजापत्यैन्मेता एषा इति विग्रहे प्रजापतिशब्दात् समस्तासु तद्धितेषु कृतेषु, तेषां चैकशेषेण एकशेषे सति 'यः शिष्यते०' इति न्यायेन शिष्यमाणस्य तद्धितस्य समुदायानुवृत्त्या प्रथमं बहुत्वेनान्वितस्य, पश्चात् प्रकृतिभूतप्रजापतिवाचकेन अन्वयः । कु. २।२।७।२१.

● 'यः सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तु प्रतीक्षेत न नक्षत्रम्' इति कालविशेषणाय सोमस्यैव, न व्याघातस्य । भा. ५।४।५।१५–१६. ● यो हि अन्येन सह समनुगुणायते, न तत्समीपगतोऽपि अन्यः तेन सह सम्बन्धुमर्हति । यथा भार्या राज्ञः, पुरुषो देवदत्तस्येति । भार्याविशेषणार्थं उच्चार्यमाणो राजशब्दो न पुरुषेण सम्बध्यते । ३।१।६।१२. ● यो हि अमेध्य द्रव्य उच्छिष्टः शयानो मौनपाठो वा, वामेन हस्तेन वा पादेन वा, यथाकथंचित् देवतायै उत्सृजति, तस्य फलं न भवति इति शिष्टाः स्मरन्ति । यस्तु मेध्यं द्रव्यं शुचौ देशे, प्रयतः, प्राङ्मुखः, दक्षिणेन हस्तेन, समाहितमना, मन्त्रवत् नियमवच्च देवतायै उत्सृजति, तस्य फलं भवति इति स्मरन्ति । ७।४।१।१. ● 'यो हि प्रधानोपकारित्वेन श्रूयते, स तदङ्गेऽपि स्थित उपकरोति इति कल्प्यते' इति औदुम्बराधिकरणोक्तस्य (वा. १।२।२।२२ पृ. १३६) अङ्गायनात्न्यायस्य स्वरूपम् । सु. पृ. ८५५. ● यो हि महतः पापात् रक्षयति, शरणस्थो एकम् । भा. २।२।७।२१

☞ यो हि सुत्वन्तं प्रति ब्रूयादमुत्र अन्यथा इति किं तेन कृतं स्यादिति न्यायः । अयं 'स्थानेऽन्तरतमः' । १।१।५० इतिसूत्रमहाभाष्ये 'अनर्थकं च' इति वार्तिकव्याख्यावसरे उदाहृतः । अन्यथा इति निरनुस्वारपाठ इति बोध्यम् । साहस्री. ४३०.

● 'यो हि यदिच्छति, [illegible] तत् करोति' इति न्यायः । कर्णिका. पृ. ९६. ● 'यो हि यदिच्छति०' इति न्यायश्च प्रवृत्तस्यैव सिध्यति नाप्रवृत्तस्य इति निश्चयरहितविषयः इति भाव. । सोम. ६।२।२. ● 'यो हि यदिच्छति०' इति हि इन्द्रियं भावयितुं स्वरसत एव पुरुषः प्रवर्तते । वा. २।२।११।२६ पृ. ५५१. ● यो हि स्मरति इदं मया कर्तव्यमिति स तत् करोति । भा. १२।३।१६।३७, ● यौ द्वौ गौणौ स एको वाहीकः (इति गौणता)। ८।३।६।२९. ● ये एव लौकिकाः पदार्थाः, ते एव वैदिकाः, लोपागमविकारविशेषास्तु क्वाचित्काः व्याकरणसिद्धाः । वि १।१।१०, ● ये धर्मा यस्मिन् प्रकरणे आम्नाताः, ते तत्रैव व्यवतिष्ठन्ते । अतः अतिदेशनिवारः कर्तव्यः । ७।१।१. ● 'ये पुरोडाशौ दर्भाः' इत्यत्रानुवादता (मैत्राग्निहोत्रे)। भाट्ट. ३।४।४. ● 'ये पुरोडाशो दर्भाः तान् दक्षिणाग्रान् स्तृणीयात्' इति मृताग्निहोत्रे, महापितृयज्ञे वा श्रूयते । तत्र अनुवादः एव, न विधिः । भा. ३।४।१।१–४, ५ पृ. ८९७. ● 'ये वा असौ वैराजस्य स्तोमास्तैरेवैतं सामनन्तः' अत्र सप्तोनत्रयस्त्रिंशत्साम्यप्रतिपादकविषयका गौणसमत्वप्रतिपादनम् । सङ्कर्ष. ३।३।६.

☞ येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थ इति न्यायः । यथा– 'उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥' इत्युक्ततात्पर्यनिर्णायकषड्लिङ्गेषु आद्यौ प्रकरणप्रतिपाद्यस्य अर्थस्य तदाद्यन्तयोरुपपादनरूपावुपक्रमोपसंहारौ स्तः । अयं न्यायः पदार्थोऽनुमाने प्रसिद्धः । साहस्री. १२८.

● येन क्रमेणोपकरणं तेनैव क्रमेण नियोजनादि वाजपेये प्राजापत्यपशुषु । विन्दु. ५।१।५.

☞ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायः । प्राप्तमिति भावे क्तः, येन नाप्राप्ते इत्यस्य यत्कर्तृकावश्यप्राप्तावित्यर्थः, नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । अथ हि विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्न वृत्तिसामान्यधर्मावच्छिन्नोद्देश्यक-

इति (शा पृ २२९)। अनेकार्थविधानकल्पनागौरवं च सुव्यक्तमेवेति।

तथा उपरिलिखितपुंस्त्वावरोधेनापि नाग्नीषोमीये स्त्रीत्वविधानं सम्भवति। न च नित्यपुल्लिङ्गत्वेन साधारणत्वात् पशुशब्दस्य स्त्रीत्वविधानाविरोध इति वक्तव्यम्। शाखान्तरे 'अजोऽग्नीषोमीयः' इत्याम्नानेन साधारणस्यापि पशुशब्दस्य पुल्लिङ्गत्वागमकत्वात्। न च शाखान्तरविधेर्गुणविधायकत्वात् स्त्रीत्वपुंस्त्वयोर्विकल्प इति पूर्वपक्ष्यभिप्रायो वाच्यः। शाखान्तरेऽपि 'अजोऽग्नीषोमीयः' इत्यत्र द्रव्यदेवतासम्बन्धविशेषेणोत्पादकत्वात् 'सर्वशाखाप्रत्ययमेकं कर्म' इत्युपरिलिखितपुंस्त्वावरोधेन स्त्रीत्वानवकाशात्। न च सर्वान्तःपातस्वेऽपि निष्कृष्टानुवादेन गुणान्तरविधिः सम्भवति इति वक्तव्यम्। निष्कृष्टानुवादस्यैवानवकल्पनात्। तदुक्तं 'प्रथमं हि स्ववाक्यस्थैर्गुणैः संबध्यते क्रिया। वाक्यान्तरगतैः पश्चात् शुद्धा सा प्राप्यते॥' (वा पृ २३०) इति। वाजप्रसवीना तु गुणान्तरसम्बन्धेऽपि कर्मागमनति-लक्षणद्वारभेदात् आकाङ्क्षासम्भवात् विधानमुपपद्यत एवेति तत्र न विकल्पः, किन्तु समुच्चय एवेति। तथा पशुकामपदोपात्तफलसम्बन्धनिमित्तोऽपि अयं वाक्यभेदः। यद्यपि फलं न विधीयते, तथापि तत्र कर्मविधानात् कर्मणि च गुणविधानात् सम्बन्धद्वयविधानस्य वाक्यावृत्तिमन्तरेणासम्भवात् वाक्यभेद एव। न च पशुसाधनत्वे कर्मणि अर्थप्राप्तपशुकामनाऽनुवादोऽयमिति वक्तव्यम्। यतः पशुकामपदात् साध्यमानत्वेन प्रधानीभूतफलसम्बन्धितया कामना अवगम्यते। अग्नीषोमीये तु पशुकामनायास्ताद्रूप्याभावान्नानुवादकत्वम् इयतो गुणविध्यभावात् विशिष्टभानाद्व्यक्तप्रकृतप्राजापत्येष्टिनामधेयमेव चित्रापदम्। एवं सति चित्रापदेन प्रकृतकर्मोद्देश्येन पशुरूपफले विधीयते इति। चित्रया इति स्त्रीलिङ्गनिर्देशश्च इष्ट्यभिप्रायेणैवेति न किञ्चिदनुपपन्नम्।

तथा 'पञ्चदशान्याज्यानि' इत्यत्रापि प्राप्ते स्तोत्रे गुणद्वयविधानं नोपपद्यते, वाक्यभेदप्रसङ्गात्। नापि पञ्चदशसङ्ख्याविशिष्टान्याज्यानि विधीयन्ते इति वक्तव्यम्। यतः क्रिया विधीयते, तद्विशेषणं वा, न चाज्यपदवाच्यं द्रव्यं क्रिया, नापि क्रियाविशेषणम्। अतो न विशिष्टद्रव्यविधिः। अथ यत्र अन्यत् क्रियापदं न श्रूयते, तत्र 'अस्तिर्भवन्तीपरः प्रथमपुरुषे अप्रयुज्यमानोऽप्यस्ति' इत्येतद्बलात् अध्याहृता अस्तिक्रिया यद्यपि, सैवोभयविशिष्टा स्तुतिप्रयोगवचनोन्नेयविधिना विधीयते इत्युच्यते, तदप्यसत्। सर्वत्र पुरुषव्यापारो हि विधीयते। अस्तिशब्दवाच्यायास्तु सत्ताया यत्नारम्भमानत्वेन अविधिविषयत्वात्। 'अग्निमुपनिधाय स्तुवीत' इत्युपनिधानस्य पुरुषव्यापाररूपत्वेन भवतु विधानम्। न चात्रापि पात्रभेदोपकल्पितानि पञ्चदशसङ्ख्याकानि आज्यानि उपनिधाय इति कल्पनीयम्, कल्पनागौरवदोषादेव वाक्यस्य चान्वयाऽप्युपपद्यते। तेन उद्भिदधिकरणन्यायेन 'आज्यैः स्तुवते' इति स्तुतिनामधेयत्वे सिद्धे, 'पञ्चदशान्याज्यानि' इत्यनेन आज्यनामकस्तोत्रानुवादेन सङ्ख्यामात्रं विधीयते इति। एवं च सति 'स्तोमे डविधि पञ्चदशाद्यर्थे' इति अनुशासनमपि अर्थवद्भविष्यतीति। प्रवृत्तिनिमित्तं च अर्थवादावगतं एतस्मिन् स्तोत्रे क्रियमाणं देवानामाजिगमनम्। अर्थवादश्च 'यदाजिमीयुः तदाज्यानामाज्यत्वम्' इति।

एवं प्राप्ते स्तोत्रे 'त्रिवृद् बहिष्पवमानम्' इत्यत्र त्रिवृद्विशिष्टपवमानरूपगुणद्वयविधाने, तथा 'सप्तदशानि पृष्ठानि' इत्यत्र सप्तदशसंख्याविशिष्टपृष्ठगुणविधाने वाक्यभेदप्रसङ्गात् न गुणविधित्वम्। अन्यतरविशिष्टान्यतरविधानं च उभयविशिष्टव्याहृतक्रियाविधानं च आज्योदाहरणदूषणेनैव निरस्तम् इति अत्रापि नामधेयत्वमेव। तथा च सति 'बहिष्पवमाने स्तुवते' इत्येतद्वाक्यविहितबहिष्पवमाननामकस्तोत्रानुवादेन त्रिवृत्ताभिधा नवसङ्ख्या स्तोमात्मकत्वेन विधीयते। प्रवृत्तिनिमित्तं च बहिष्पवमानपदव्युत्पत्त्यनिर्वचनीयत्वमेव स्तोत्रस्येति। तथा 'सप्तदशानि पृष्ठानि' इत्यत्रापि 'पृष्ठैः स्तुवते' इत्येतद्वाक्यविहित-पृष्ठनामकस्तोत्रानुवादेन सप्तदशसङ्ख्यामात्रं विधीयते इति। नामप्रवृत्तिनिमित्तं च यथा वायुना पृष्ठे स्पृष्टे रथन्तरादिसामानि जातानि, तस्मात् तत्साधनतापन्नानि स्तोत्राणि

पृष्ठानि । तथा चार्थवादोऽपि 'नाम्ना वायुः पृष्ठे व्यवर्तत' इति । प्रयोजनं तत्तत्र तत्तद्गुणोपादानं पूर्वपक्षे, सिद्धान्ते तु नामधेयपञ्चोक्तानि । सूत्रं तु यस्मिन् गुणविधिनामधेयत्वेन सन्दिग्धे सति वाक्ये गुणान्तरोपदेशः प्रतीयते, तस्मिन् उपपदस्य प्रधानेन कर्मणा नामधेयत्वेनैव सम्बन्धः इति । मीमा.

यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः । १।४।२।३ ॥

'त्रिवृता यजेत पशुकामः' 'त्रिवृद् बहिष्पवमानं' 'पञ्चदशान्याज्यानि', 'सप्तदशानि पृष्ठानि' इति त्रिवृत्–पवमान–आज्य–पृष्ठशब्दाः, किं गुणविधयः, उत कर्मनामधेयानि इति विचारे सिद्धान्तमाह । यस्मिन् वाक्ये गुणोपदेशः, गुणस्य अपरस्य उपदेशो भवति तस्य प्रधानतः प्रधानेन कर्मणा अभिसम्बन्धः परिच्छेदकत्वेन । तद्वाक्यस्थं चित्रादिपदं नामधेयं स्यात् इत्यर्थः ।

किंवा नामधेयं स्यात् इत्यनुवर्तते । प्रधानतः अभिसम्बन्धः इत्यस्य प्रधानद्वारा, अनेकेषां गुणानां अनेकविशेषणविधिप्रसङ्गसमर्थेन एकेन विधिना सम्बन्धो भवति इत्यर्थः (शा. पृ. ४१५)। 'चित्रया यजेत पशुकामः' इति विधावाक्ये 'दधि मधु घृतमापो धानाः तण्डुलाः तत्संसृष्टं प्राजापत्यम्' इत्युत्पत्तिवाक्ये विहितस्य यागस्य नामधेयम् । अग्निष्टोमे सवनत्रये, पवमानदेवतात्वेन स्तूयमानानां स्तोत्रविशेषाणां नामधेयं पवमानपदम् । तत्र प्रातःसवने बहिष्पवमानं नाम, माध्यंदिने सवने माध्यंदिनपवमानं नाम, तृतीयसवने च आर्भवं पवमानं नामेति । प्रातःसवने एव पवमानस्तोत्रोत्तरं गीयमानानि चत्वारि स्तोत्राणि तेषां नामधेयं आज्य (आज्यानि) इति । माध्यंदिने सवने पवमानोत्तरं गीयमानानि स्तोत्राणि चत्वारि, तेषां पृष्ठं (पृष्ठानि) इति नामधेयम् । के.

यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् । ४।१।२।२ ॥

इदं सूत्रं साक्षात् पुरुषार्थस्य लक्षणं प्रतिपादयति, क्रत्वर्थस्य तु अर्थात् । यस्मिन् इति फलपरं करणपरं च । प्रीतिः इत्यत्र 'क्तिन्' भावे करणे च । यस्मिन् फले फलविषया पुरुषस्य प्रीतिः इच्छा भवति स पुरुषार्थः साध्यरूपः । यस्मिंश्च करणरूपे यागादौ कृते सति पुरुषस्य प्रीतिः प्रियं स्वर्गादि भवति, सोऽपि पुरुषार्थः साधनरूपः । तस्य पुरुषार्थस्य उभयविधस्यापि लिप्सा लब्धुमिच्छा अर्थलक्षणा । अर्थेन पुरुषार्थेन लक्ष्यते न शास्त्रेण । शास्त्रं विनैव सिद्धत्वात् । अविभक्तत्वात् । प्रियरूपः प्रियसाधनरूपश्च पुरुषार्थः, प्रीत्या सह स्वरूपेण साधकत्वेन च अविभक्तो भवति । तस्मात् स्वर्गादिः प्रियः साक्षात् पुरुषार्थः, साधनरूपश्च यागादिः साधनतया पुरुषार्थः ।

पुरुषार्थभिन्नः सन् यो विहितः, स क्रत्वर्थः इति तु क्रत्वर्थस्य लक्षणं अर्थात् सिद्धम् ।

किंवा यस्मिन् फले अनुभूयमाने पुरुषस्य प्रीतिः तृप्तिर्भवति, तस्य फलस्य लिप्सा फलविषया प्रवृत्तिः, अर्थलक्षणा रागप्राप्ता, न विध्यधीना । अविभक्तत्वात् फलस्य रागाविनाभूतत्वात् इत्यर्थः ।

किंवा, वर्णकान्तरानुसारेण सूत्रस्य अन्योऽर्थः । यस्मिन् उपात्ते पुरुषस्य प्रीतिः प्रियं पशुलक्षणं फलं भवति, तस्य गोदोहनस्य लिप्सा अनुष्ठितिः अर्थलक्षणा पशुलक्षणफलप्रयुक्ता, न तु क्रतुप्रयुक्ता । विभक्तत्वात् । अत्र पक्षे अकारप्रश्लेषो न कर्तव्यः, गोदोहनस्य प्रयोगविधिपरिग्रहाभावात् । तथा च गोदोहनं पुरुषार्थं न क्रत्वर्थम् ।

किंवा अन्यवर्णकानुसारेण सूत्रस्य अन्योऽर्थः । यस्मिन् द्रव्ये पुरुषस्य प्रीतिः अभिलाषो भवति, तस्य द्रव्यस्य लिप्सा अर्जनं अर्थलक्षणा पुरुषभोग्यरूपप्रयोजननिबन्धना पुरुषार्था इत्यर्थः । अविभक्तत्वात् पुरुषार्थेनाया. इन्द्रियसन्निकृष्टत्वात् । तस्मात्, द्रव्यार्जनं पुरुषार्थमेव सत् क्रतावपि उपकरोति । के.

० 'यस्मिन् प्रीतिः पुरुषस्य' (४।१।१।२) इत्यनेन न्यायेन एकैकस्य फलं प्रार्थ्यमानस्य सन्नकृपणो विधीयते, न सर्वं प्रति ते विधीयन्ते । टुप्. ६।२।१।२ पृ. १३८९. ० 'या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा ।

या ते अग्ने रजाशया, या ते अग्ने हराशया' इत्यत्र मन्त्रे, किं तनूर्वर्षिष्ठा० इति सर्वेषु अनुषक्तव्य आहोस्विन् नैमित्तिको वाक्यशेषोऽध्याहर्तव्य । 'या ते अग्नेऽयाशया०' इत्यादौ अनुषङ्गैकवाक्यत्वं ज्योतिष्टोमे उपसद्धोमेषु । चि. २।१।१६. • 'या ते अग्ने (ऽयाशया)' इति मन्त्रत्रये तनूरित्यादिवाक्यस्य सकृदाम्नातस्यापि आवृत्त्या विनियोगः । संकर्ष. २।८।२७

■ 'या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पतु ॥' इति न्याय । 'इति न्यायेन मर्त्यस्माक्रोग्यजानाद्विरक्तधी. । उपगृह्य तां प्रीतिं भोक्तर्येव बुभुक्षते ॥' अयमर्थः - भोग्येषु प्रेमत्यागपुरःसरमात्मप्रेमकर्तव्यताया दृष्टान्तत्वेन ईश्वरे प्रेमप्रार्थनापुरःसर पुराणवचनरूपन्यायमुदाहरति- या प्रीतिरिति । नास्ति विवेको येषां ते अविवेकाः । अर्थादविवेकिनामल्पमतीनामज्ञानां विषयेष्वनपायिनी दृढा या प्रीतिरस्ति हे नाथ लक्ष्मीपते सा प्रीतिस्त्वामनुस्मरतस्त्वां सदा चिन्तयतो मम हृदयात् मनसः मापसर्पतु अपगच्छतु । मम मनो विषयेषु आसक्तिं परित्यज्य त्वय्येव सदा तिष्ठत्वित्यर्थः । यद्वा- अविवेकिनां विषयेषु दृढा या यादृशी प्रीतिरस्ति सा तादृशी विषयेषु क्रियमाणा प्रीतिस्त्वामनुस्मरतो मे हृदयान्माऽपसर्पतु मा अपगच्छतु सदा तिष्ठत्वित्यर्थः । भक्तेन पुराणे श्रुतो किमायातमित्यत आह - इति न्यायेनेति । इत्यनेन पुराणोक्तन्यायेन सर्वस्मात्क्षोग्यजातात् पत्नीजायादिलक्षणात् विरक्तधीः विरक्ता धीः यस्यासौ विरक्तधीः पुरुषः तां भोग्यगोचरां प्रीतिं भोक्तर्यात्मनि तूपसंहृत्यैकमात्मानं बुभुक्षते भोक्तुमिच्छतीति भावः । उक्तं च कश्चित्त्वचिरोमणियोग्या- 'हृष्टपुष्टिविषय याचेऽस्मि भगवत्कृष्ण किमद्भुतम् । हृदयाद्यदि निर्याति पौरुषं गणयामि ते ॥' इति । साहस्री ४५४

• याः इष्टा देवता सा. (सूक्तान्ते) संकीर्तनेन प्रयत्नेष्यन्ते, इयमपीष्टा, न काचिद्व्यतिरिक्तेति । मा. ६।१।३।३६।५८. • या इमा प्रजा आपः चरन्ति ता वा ऐकादशिनी । संकर्ष. १।८।२७. • 'या वै का च देवतामन्तरियात्, तस्या आहुत्यैव आत्मनैता देवता परिलेख्याय यजेत्' अत्र भावे क्रत्वर्थो विधि. । वाल. १, २०. • यस्यां चितौ ये मन्त्राः प्रकाशाः, तैरेव मन्त्रै. अनुक्ते, आ सा चिति. पूरणीया । इति प्राप्ते । 'यदेवास्योन यच्छिद्र तदेतया पूरयति' इति वचनेन लोकंपृणाया एव एव न्यूनपूरणे विनियोगात्, प्रकान्तनियतमन्त्रकमन्त्रसमाप्तौ अवशिष्टा इष्टकाः, लोकंपृणमन्त्रेणैव उपधेया., पुनः पुनरावर्तमानत्वादेव, 'अथातआम्नी लोकंपृणा' इति स्मृतिरुपपद्यते । संकर्ष. २।१।१६.

■ यद्न्नः पुरुषो लोके तदन्नास्तस्य देवताः इति न्यायः । यथा- विश्वामित्रर्षि., श्वजाघनी श्वपचगृहादाहृत्येन्द्रादिदेवोद्देशेन त्यक्त्वा भोक्ष्यामीति मनसि कृत्वा यदा यथादेवतं तद्भागोत्स्यजत्तु प्रवृत्तस्तदा तुष्टैरिन्द्रादिभिर्वृष्टिः. सुष्टा, तस्य च तत्क्षणमेव प्रभूतममृदिस्थलाभिधा पुराणेषु सर्वत्र इत्यन्यत्र विस्तरः । साहस्री ९३३.

• यदर्थो नियमाश्रय, तदर्थो नियम इति सर्वत्र लक्षणम् । भाट्ट. ४।१।१४ • 'यदर्था क्रिया, तदर्थो नियम' । अवघातादिनियमादृष्टस्यापि 'यदर्था०' इति न्यायेन व्रीह्यर्थत्वावधारणात् व्रीहिनिष्ठत्वमेव । कौ. २।१।३।६ पृ. ५७

• यद्यागमे योऽर्थ. स तस्य । सु पृ. ५६८.

• यत्किंचिच्छब्दस्य पर्याप्तिसम्बन्धेन बुद्धिविषयत्वविशिष्ट–घटत्वानवच्छिन्ने शक्ति. । 'यत्किंचित् प्राचीनमग्नीषोमीयात्' 'यत्किंचित् सोमलिप्त' इत्यादौ तथैव बोधात् । अत एव शक्यतावच्छेदकतावच्छेदकस्य विषयत्वस्य ऐक्यात् न वाक्यभेद. । यत्किंचिदात्र इत्यादौ तु पर्याप्तिसम्बन्धेन उपेतबुद्धिविषयत्वविशिष्टे लक्षणा । केवलकिंचित्पदस्य अज्ञातप्रकारावच्छिन्ने शक्तिः । मणि पृ १६२–६४.

■ यद्ग्रहे यदपेक्षं चक्षुस्तदभावग्रहेऽपि तदपेक्षते इति न्याय । आलोकग्रहे आलोकापेक्षाया अभावेन तदभावग्रहेऽपि तदपेक्षाया अभावादिति । तमोदर्शनग्रहे औलूक्ये विस्तर । साहस्री, ७१६.

● यत्तदोः परस्परापेक्षत्वम्। सु. पृ. ४९१. ● यत्तदोर्नित्यसंबन्धः । 'नहि यच्छब्दतच्छब्दौ वर्तेते भिन्नवस्तुनि' ॥ श्लोवा आक्षेपवादे ५० पृ ७०१. ● 'यद्देवत्यः पशुः तद्देवत्यः पुरोडाशः ' इति न्यायेन पुरोडाशस्य पूषा देवता । वि ३।३।१९.

☒ यत्परः शब्दः स शब्दार्थः इति न्यायः । यः अर्थः परः तात्पर्यविषयो यस्य स यत्परः । स्पष्टमन्यत् । साहस्री. ७८८, मणि. पृ. ८१. ● 'यत्परः शब्दः स शब्दार्थः ' इत्यनेन न्यायेन अभिधेयप्रभिन्नरूपत्वादपि शब्दार्थत्वम् । सु. पृ. ८४८. ● 'यत्परः शब्दः स शब्दार्थः ' इति न्यायेन 'य एवं वेद ' इत्यादिवचनानां स्वार्थे प्रामाण्यं नास्ति इति चेत्, न । महावाक्यस्य विधिपरत्वेऽपि अवान्तरतात्पर्येण स्वार्थनिष्ठत्वानिवारणात् । ततश्च वेदस्य अनुष्ठानवत् स्वतन्त्रफलत्वम् । तैस. उपोद्घात पृ. ९ ( सायणभाष्यम् ).

● 'यत्प्रत्यक्षेण यद् आगत तत्प्रत्यक्षो तद् बुद्धिस्थं जायते ' इति न्यायेन आग्नेयादिकल्पोक्तगुणविधिवे बुद्धिस्थे सति अत्रापि ( वैमृधेऽधिकरणे ) तत्परस्य न्यायाद्येण गुणविधित्वपूर्वपक्षकरणम् । पी १।८।१२। १२.

● यन्मध्यपातिनोऽङ्ग न प्रयुक्तम्, तत्कार्ये तन्निर्णोऽङ्ग प्रवक्ष्ये । भा. १२।१।८।११ । यत् तन्निर्णोऽङ्गमप्यमध्यपातिन, तत्कार्यं तत् प्रयुज्यते । यथा पाशुमा. प्रयाजा. पौरोडाशिकेषु । १२।१।३।८ । यत्र तन्निर्णोऽङ्ग क्रियमाणं इतरस्यापि उपकारं भवति तत्र प्रसङ्ग यथा पाशुकेषु प्रयाजेषु क्रियमाणेषु पौरोडाशिका. । १२।१।४।१२.

● यन्मात्रं तत्र वचनान्तरवदेनापन्नेऽप्यन्ने तन्मात्र'मतिरिक्तं सर्वेण घटेत इति न्याय । वा. २।२।६।१७ पृ ५१२. ● 'यन्मात्रेण विना चोदितस्य वदेत्याकल्पानुपपत्ति, तन्मात्रमेव अदृष्टाश्रुत अर्थापत्त्या कल्पयितुं शक्यते नान्यत् ' इति न्याय. मध्यान्तराधिकरणपूर्वपक्षोक्त. । वा. २।२।७।२१ पृ ५२३.

☒ यद्विवाहस्तद्गीतगानमिति न्याय. । यथा यद्वधूवरयोर्विवाहो भवति लोके गानमपि तत्सबन्धि गीयते, नान्यदिति । तथा वनदेवतापुराणादिषु तत्तद्देवतामाहात्म्यवचनानि समुपपद्यन्ते इति नापि दर्शनीयापि परस्पर विरोध. पुराणानामिति । साहस्री. ४६८.

☒ यद्विशेषयोः कार्यकारणभावोऽस्ति बाधके तत्सामान्ययोरपीति न्याय. । यथा– तार्किकाणां घटत्वकुलालत्वनित्यादिना कार्यकारणभावे सिद्धे, कार्यत्वेन कृतित्वेन च कार्यकारणभाव., न ■ कुलालत्वेऽतिरिक्तेन द्रव्यत्वेन घटादिक प्रति कारणत्वम्, तथात्वे तयोरन्यथासिद्धत्वेन कारणत्वं स्यात्, कारणता प्रत्यन्यथासिद्धेर्बाधकत्वात् । अत एव न द्रव्यत्वेन दण्डादेर्घटादिकं प्रति कारणत्वम्, नापीन्द्रियत्वेन प्रत्यक्षत्वावच्छिन्नं प्रति इन्द्रियत्वस्यैकस्याऽभावादिति । साहस्री. ५००.

● ' यद्वृत्तयोगः प्राथम्यमित्यादुद्देश्यलक्षणम् ' इति न्यायः । सु. पृ ८६२. ● ' यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ' इति न्यायेन प्रथमनिर्दिष्टस्य प्राधान्यमवगम्यते इति भाव. । आमरणम् ८।१।५।६ प्रम. ● 'यद्वृत्तयोगः० ' इति न्यायात् ('वसन्ते आदधीत, उपनयीत' इत्यत्र ) वसन्तादिकालस्य निमित्तता प्राधान्यादुपपन्ना भवति । तत्फलं च वसन्तव्यतिरिक्तहेमन्तादिकालिकस्य आधानस्योपनयनस्य वा आसन्नाऽनियतकर्तृकत्वसिद्धिः । कौ ७।३।१।४ पृ. २८.

● यच्छब्द. एव हि तच्छब्दार्थं स्वाकाङ्क्षापरिस्थित नियोजनापेक्षते, 'येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात् ' इत्यादौ तथैव प्रयुक्तत्वदर्शनात् । न तु तच्छब्दोऽपि । कौ. ३।३।७।१४ प १५८. ● यच्छब्द' कर्तृसमानाधिकरणः, यदिशब्दः, सप्तमी च निमित्तत्वबोधकाः । यथा– 'यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते ' । अत्र अभरणकर्तृत्वनिमित्ता वैश्वानरेष्टि. । यथा वा– 'यो न प्रतितिष्ठति .. स षष्ठीं चितिं चिनुते ' अत्र कर्तृसमानाधिकरणात् यच्छब्दात् षष्ठी चितिनिमित्तिकी । 'यदि रथन्तरसामा सोम. स्यात्, ऐन्द्राग्नमाग्नेयं महान् गृह्णीयात् ' इत्यत्र यदिशब्दः रथन्तरसामकत्व

समवेतत्वात् तद्भेदे (शब्दभेदे) युक्त एव भेदः (तके.)। सु. पृ. २५९. ● 'यत्र नित्यानुवादवचनानि स्युः' ७।४।२।५ इति न्यायेन । कृष्णलनिर्दिष्टप्रयाजान्तरस्यैव सौर्ययागाङ्गतया विध्यङ्गीकारेण, दर्शपौर्णमासिकप्रयाजानुवादेन कृष्णलनिर्दिष्टाङ्गीकारेण वा 'यत्र० स्युः' इति न्यायेन परिहर्तव्यम्। वौ. २।२।३।५. ● 'यत्र नित्या० स्युः' अयं नित्यवत्ताधिकरणोक्तो न्यायः । सु पृ. ४४७. ● यत्र परस्परसामानाधिकरण्यम्, तत्र गुणेन (निमित्तेन) फलाङ्गः परत्र वर्तते । टुप्. ६।१।१६।३६, ● यत्र बहूनामल्पाना च धर्मविरोधः, तत्र भूयोऽनुग्रहः, 'भूयसां स्यात् सधर्मत्वं' (१२।२।७।२२) इति । यत्र तुल्यत्वमानि तत्र 'मुख्यं वा पूर्वचोदनाल्लोकवत्' (१२।२।८।२३) इति । न हि न्यूनसंख्य मुख्यहीनकारणे न भूयांसि समर्थं बाधितुम् । ७।४।३।१९. ● यत्र मन्त्रार्थस्य नानात्वम्, तत्र अस्य (मन्त्रस्य) आवृत्तिर्भवति । यथा अग्नौ (चयने) लोकम्पृणायाः । भा. ११।४।१२।४२. ● यत्रयत्रानूयाजसामान्याभाव, तत्र चतुर्थचतुर्गृहीतनिवृत्तिः । भाट्ट. ५।१।१७. ● यत्र याग, फल श्रुति चोद्यते, तनाङ्गानि प्रकाति । भा. ११।२।१।३६. ● 'यत्र लक्षणमुद्दिश्य लक्ष्ये कार्यं विधीयते । तन्मात्रग्रहणं तस्मिन्' इत्यनेन न्यायेन उद्देश्यापूर्वसाधनागतजनत्वोपस्थीयमानस्य मुख्यत्वरूपस्य उद्देश्यत्वासामान्यात् । सु पृ. १३९५. ● यत्र विशिष्टं नैमित्तिकम्, तत्र विशेषणाभावे विशिष्टमेव बाध्यम् । बाल. पृ. ११६. ● यत्र सूक्ष्ममपि किञ्चित् सामान्यम्, छन्दोऽर्थो वा, इतिदैवतादि, तद्गुणा वा स्मादय उपलभ्येरन्, तत्र तदीयो विधान्तः मन्त्वः । भा. ८।१।२।२.

● 'यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥' इति न्यायेन प्रतियुगमनुवर्तमाना अभ्युदय' प्रत्याहनिशउया चन्द्रमर्यादिवत् वैदिकपदगोचराः सन्त. नैव वेदस्य नियता विरुध्यते । कु. १।२।१।२८ पृ. २६. ● 'यथैव पाठः प्रतिपत्त्युपाय (तथैव सामर्थ्यमपि श्रुतीनाम् । तेनैव चैता न समामनन्ति सहस्रशस्तं तु समामनेषु ॥' वार्तिक १।४।१४।२९ सूत्रे) ननु अध्याहार्यपदस्य यथैव पाठः प्रतिपत्त्युपायः इत्यनेन न्यायेन सामर्थ्यलभ्यतया अनुचार्यमाणत्वात् लौकिकमेयवर्त-पदाभिधान अयुक्त इत्याशङ्क्य । सु. पृ. ६९७. ● यथा 'जातस्य पुनस्य नीडनक' एव चोदितस्य परिपूर्णस्य देशः आम्नायते । इति पूर्वपक्षः । भा. ५।१।९।१७.

यथा नाम तथा गुण इति न्यायः । माहल्ली. ६५.७.

● यथा अग्नौ पुरोडाशस्य कपाले पाक., तथा विकृतौ चरो. इत्येकः पक्षः । उदकधारणयोग्ये कटाहघटादौ वापि पाकः इति द्वितीय. पक्षः । चरो. स्थाल्यामेव पाकः इति सिद्धान्तः । चरौ पेषणादिनिवृत्तिश्च । वि १०।१।११. ● 'यथा शक्त्युपात् तथा आश्रयेत्' इति न्याय. । वा. २।२।१३।२९ पृ. ५६८, सु. पृ. ८७९ ● 'यथा शक्नुयात्तथा कुर्यात्' । द्रव्येन्द्रियवैकल्यादिना स्वतोऽशक्तोऽपि, द्रव्यार्जनादिना यथा शक्तो भवति, तथा यावन्माधाज सर्वधर्मोपेतं कुर्यात् इत्यर्थः । यदि तु न कश्चित् सर्वाङ्गोपसंहारसमर्थः स्यात्, तत. प्रतिपन्नाङ्गोपसंहारेणापि अधिकार. कल्पनेत । सु. पृ. ५३२. ● 'यथा स्यात् सत्त्वदर्शनम्' । युगपत् प्रवृत्तेः 'यथा सत्त्वदर्शने' इत्यनेन न्यायेन तदेव कर्म एकेन इतरेण च प्रतिपाद्यते । न च गम्यते विशेष कारणेन प्रतिपाद्यते कनवत् पौनरुक्त्यादनर्थकमिति । वा. २।३।१४।२८. ● 'अपि नोत्पत्तिसंयोगात् यथा स्यात् सत्त्वदर्शनं तथा भावो विभागे स्यात्' । यथा एकैकस्य सत्त्वस्य हस्तिनोऽश्वस्य वा दर्शनं एकैकेन कृत्स्नमभिनिर्वर्त्यते एवमेव सत्ते तत्त्वभावो भवेत् । सर्वेषा मध्यक कृत्स्नम् । भा. ६।१।१।२

● 'यथोत्तरं मुनीनां प्रामाण्यम्' इति न्यायः । ('उत्तरोत्तर मुनीना प्रामाण्यं' इत्यत्र द्रष्टव्यम्)। कौ. १।३।८।२७ पृ. १२१.

● यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति । ३।२।११।२९ ॥ लिङ्गेन मन्त्रस्य अनैन्द्रहोमभक्षणे विनियोगाभावेऽपि 'इन्द्राय त्वा वसुमते गृह्णामि' इति इन्द्रलिङ्गेन मन्त्रेण होमग्रहणात् इन्द्रलिङ्गेनैव न होम-

प्रदर्शनार्थं इत्यभिप्रायेणाह –) अर्थवादाधिकरणसिद्धान्त जनिताशङ्काया (वृत्ते) उत्तरमधिकरणमारभ्यते 'काम्येषु चैवमर्थित्वात्' इति। (यद्वा, यथा निमित्तबलेन अङ्गत्यागः, तथा स्वर्गकामादिकामस्य अधिकारावगमात्, तद्बलेन काम्यमपि हीनाङ्ग प्रयोक्तव्य इत्येवमाशङ्कमानं प्रति उत्तरमधिकरण सकामविषयमारभ्यते इत्यभिप्रायः)। सर्वाङ्गोपसंहारसमर्थस्य (एव काम्येषु) अधिकारः, तादृशस्य (एव) नित्यमालम्बनात्। न तु नित्ये तादृशोऽस्ति, सर्वदा यः सर्वाङ्गानि उपसंहर्तुं शक्नोति। तस्मात् (तत्र) एकदेशाङ्ग – (उप-संहार–) समर्थोऽपि अधिक्रियते। (एवं अधिकरणानां विषयविभागः कथितः। इदानीं प्रकृतमधिकरणं पूर्वपक्षप्रभृति अभिधीयते–) सर्वैः अङ्गैः क्रतुर्निरा-काङ्क्षीक्रियते। तादृश एव (क्रतुः) कर्तृधर्मत्वेन (यावज्जीवत्वेन) चोद्यते। तदुक्तम् 'तथाभूतोप-देशात्' (इति। योजनान्तरमाह–) अथवा यथा धातो. (धात्वर्थस्य) पूर्वापरीभूतस्य (भावना–) कारणता सर्वैः (अङ्गैः) निराकाङ्क्षीक्रियते काम्ये, तथा नित्येऽपि (विधेस्त्वेकश्रुतित्वात् इत्यस्य न्यायस्य काम्ये नित्ये वा अविशेषात्) इत्यतः तथाभूतोपदेशात् (इत्युक्तम्। यथाभूत काम्यम्, तथाभूतमेव नित्यं मिति)। अथवा नामधेयादिष्ट (दर्शपूर्णमासाख्यं कर्म) सर्वैः (अङ्गैः) निराकाङ्क्षीक्रियते यथा काम्ये तथा नित्येऽपि, तयोस्तुल्यत्वात्। इत्यतः तथा-भूतोपदेशात्। अथवा यथा काम्यस्य सनियी इतिकर्तव्यता (आम्नाता) तथा नित्यस्यापि (द्वयो-रपि) सन्निधानाविशेषात्। इत्यतः तथाभूतोप-देशात् (इत्युक्तम्)। अथवा नामधेयगतेनेतरतत्सम्बन्धित करणविभक्तेः आख्यातपदस्य च ('भावनाऽऽत्मनेपदे-तरत्त्वयोगकरणानाम' इति वार्तिकपाठ लिखितपुस्तकेषु) तुल्यत्वात् तथाभूतोपदेशात्। अथवा पुरुषार्थस्य (भाष्यस्य) उभयत्र (काम्ये नित्ये च) विद्यमानत्वात् तथाभूतोपदेशात् (इत्युक्तम्। अत्र षट् पक्षा उक्ताः)।

अपि वाऽप्येकदेशे स्यात्, प्रधाने ह्यर्थनिर्वृत्ति-र्गुणमात्रमितरत् तदर्थत्वात्। २॥

भाष्यम् — अपि वेति पक्षव्यावृत्तिः। अप्येक देशे अङ्गानां स्यादेव प्रयोगः। यतः साङ्गस्यापि अनङ्ग-स्यापि प्रयुज्यमानस्य प्रधानादेव अयमर्थो निष्पद्यते। गुणमात्रं सर्वाङ्गप्रयोगेण भवति। को गुणः। साङ्गात् स्वर्गमितिनिर्वृत्तिः प्रधानमात्रात् इदमन्यत् फलम्। तस्मात् स्वर्गप्राप्त्यर्थं सपूर्णाङ्गं करिष्यामि इत्यारब्धम्। यदि कानिचिदङ्गानि न शक्नोति कर्तुम्, तथापि अस्मात् एकदेशाङ्गयुक्तात् प्रधानात् फलं भविष्यति। तस्मात् प्रधानमात्रस्य प्रयोगमाह, नाङ्गानाम्। दर्शपूर्णमास-शब्दः अग्निहोत्रशब्दश्च प्रधानपदार्थः। अन्यानि अङ्गानि सर्वाणीति।

टुप्–– (एकदेशिमतेन तावत् सिद्धान्तमाह) नास्ति इतिकर्तव्यता, (अपूर्वाभावात्। अपूर्वप्रयुक्ता हि इतिकर्तव्यता)। कथमपूर्वाभावः? फलाभावात्, (कालान्तरभाविफलसिद्ध्यर्थं हि अपूर्वं कल्प्यते)। कथं फलाभावः? निमित्तफलयोः एकत्र (वाक्ये) असम्भवात्। कथमेवमसम्भवः? निमित्तफलयोः (द्वयो-रपि) अनुपादेयत्वात्, ते प्रति कर्म उपादीयते। ('ते प्रति कर्म उपादीयेते' इति तु आनन्दाश्रमीये पाठः, स च तन्त्रवार्तिकानुसारी न भाति)। तत्र अन्यतरोपादाने (वाक्यस्य) कृतार्थत्वात् एकं (एव) प्रति उपादीयते (कर्म, न द्वे अपि प्रति) उभयोपादाने वाक्यभेदः स्यात्। (फलमेव तु प्रति कस्मात् नोपा-दीयते? अत आह–) निमित्तस्य श्रुतत्वात् तत् प्रति (कर्म) उपादीयते (न फलं प्रति)।

(इतः परं अस्मदीयलिखिते प्राचीनपुस्तके मातृ-कान्तरे ग्रन्थः समाप्तः आनन्दाश्रमीय एव उपलभ्यते, क्वचित्तु पुस्तकान्तरादपि)।

ननु भावनावचनस्य 'किम्' इति आकाङ्क्षा उत्पन्ना न निमित्तेन पूर्यते (निष्फलत्वात्), नापि यागेन (अपुरुषार्थत्वात्)। केन तर्हि? फलेनैव (तेन बलात् फलार्थत्वं युक्तम्)। उच्यते। यदि फलार्थी पुरुषः कर्मणि प्रवर्तेत (ततः) तस्य 'यावज्जीवम्' इत्येतत् अङ्गत्वेन स्यात्, (इतरथा वाक्यभेदात्। किञ्च फलप्रयुक्ते कर्मणि) फले च अनर्थी न प्रवर्तेत

निवर्तते ( नोत्पद्यते )। ननु (एवमपि प्रत्यवायाहेतुभूता) अकरणनिवृत्तिरेव ( करणस्य ) फलं स्यात्। उच्यते, आत्मव्यतिरेकेण क्रियायाः फलम् ( भवति ) । अकरणनिवृत्तिश्च करणमेव । स ( च ) क्रियायाः धर्मः ( सन् ) कथं फलं स्यात् । न च प्रत्यवायाभावः फलं इत्युक्तमेव । यदि च अप्रत्यवायः फलं स्यात्, ( ततः ) फलनिमित्तयोः (द्वयोरपि) एकवाक्यत्वादिदोषः उक्तः ( प्राक् । अतो नित्यस्य कर्मणो निष्फलत्वेन अपूर्वाभावात् इतिकर्तव्यता नास्ति, इति दीक्षाङ्गस्य प्रयोगः– ) इति केचित् एव ( अधिकरणसिद्धान्तम् ) वर्णयन्ति । ( एतदिदानीं दूषयितुमारभते– ) तत् ( एकदेशिमतम् ) नोपपद्यते । कथं भावनातो हि नित्य आकाङ्क्षा उत्पद्यते किं केन कथमिति । ( तत्र–), सन्निहिता चेतिकर्तव्यता । ( मत इति आनन्तर्यात् कथमाकाङ्क्षा प्रत्ययमुद्भवते )। सा च ( आकाङ्क्षा ) इह ( अपि नित्ये कर्मणि ) विद्यते । तस्मात् अस्ति इतिकर्तव्यता । यदि च अस्मिन् ( नित्ये ) यागेन ( क्रियाकाङ्क्षा ) पूर्यते, पश्वङ्गाभ्यादिष्वपि तत् ( अतः इत्यर्थः ) न भावनात्वेन स भविष्यति ( किन्तु साध्यत्वेनैव स्यात् यागः । ततश्च तत्रापि इतिकर्तव्यता न स्यात् । शङ्कते– ) तत्र ( काम्यकर्मसु ) निमित्ताभावात् ( कर्म एव कर्तव्यतया विधीयते इति नेतिकर्तव्यता ) इति चेत्, तन्न । अत्रापि तस्मिन् ( निमित्ते ) किमित्याकाङ्क्षोत्पत्तेः यागेनैव ( च ) परिपूरणात् न फलान्तरम् ( चोदयति– ) । फलनिमित्तयोर्विशेषः इति चेत् । ( उत्तरम्– ) अविशेषः, भिन्नवाक्यत्वात् । ( एकवाक्यसमवायो हि फलनिमित्तयोर्विरुध्येत । वस्तुतस्तु नास्त्येव विशेषो भिन्नवाक्यत्वादनयोरित्याह– ) निमित्तं हि कर्म प्रयुङ्क्ते, न कामार्थेन व्यावर्तयति । ( तदेव व्यनक्ति– ) न हि कर्मणा निमित्तं जन्यते, येन फलोत्पत्तिर्न स्यात् । ( प्रत्युत– ) तस्मिन् निमित्ते, कर्म क्रियमाणं किम्प्रयोजनम् इति फलाभिमुखं भवति ( अतश्च निमित्तवत्त्वेन अपेक्ष्यमाणं फलं कर्म तेन निरुध्येतेति )। फलं न कामयते ( मोक्षार्थी ) इति चेत् । उच्यते । न हि ईदृशः पुरुषोऽस्ति, यः अवश्यकर्तव्ये, फलं न कामयते । मोक्षार्थी ( न कामयेत ) इति चेत्, तन्न । तेनापि अवश्यं पापक्षय एषितव्यः । तस्मिन् सति, मोक्षाभावात् । अमोक्षार्थिना अपि असौ एषितव्यः फलाय । इतरथा ( अप्रक्षीणे पापे ) फलाप्राप्तेः । तस्मात् नित्यानि कर्माणि तस्य ( पापक्षयस्य ) उपायत्वेन चोद्यमानानि इतिकर्तव्यतामपेक्षन्ते । वीतायाः च ( स्वर्ग– ) फलेच्छायाः कर्मणः इदमेव ( पापक्षयः ) फलम् । यदि च नित्ये श्रुत्यनुग्रहात् यागः कर्मभूतः सन्, सर्वथाविशिष्टः श्रुत्यनुग्रहः, इति सर्वत्र ( काम्येऽपि ), कस्मात् न भवति । (चोदयति–) फलपदासमभिव्याहारात्तु ( यागः कर्मभूतः ) न भविष्यति । ( निराकरोति– ) साधनत्वेन ( स्वर्गकामाधिकरणपूर्वपक्षन्यायेन ) तस्य उपनिपातविधिः ( फलपदस्य द्रव्यपरत्वाश्रवणात् इति । किञ्च) यदि च क्रिया स्वभावतया ( स्वतः ) अन्यत् किञ्चिद्भूत्वा दर्शयति, ततः तदेव वेदेन च उच्यते । नहि अशक्यमीदृम् ( वस्तु ) स ( वेद. ) बलात्त्वेन चोदयति, ज्योतिष्टोमस्य सकृत् प्रयोगे सर्वफलप्राप्तिरिति । उच्यते । यज्यादीनां क्रियाणां द्वौ धर्मौ दृष्टौ, एकस्मिन् प्रयोगे एकफलता नियतफलता च । तत्र ज्योतिष्टोमस्य फलचोदनाभिः ( सर्वेभ्यो ज्योतिष्टोमः इत्यादिभिः ) अनियतफलता विहिता । एकस्मिन् प्रयोगे ( तु ) एकफलता ( क्रियास्वभावत्वेन लोके दृष्टा ) येन बाध्यते । यदि च फलं नास्ति ( तत. 'दर्शपूर्णमासाभ्यां यजेत ' इत्यत्र ) करणविभक्तेरितरेतरयोगस्य सर्वेपदानां ( करणविभक्तेः, इतरेतरयोगस्य द्विवचनस्य, आत्मनेपदस्य च) अभावप्रसङ्ग. । (यदि न नैमित्तिके, कर्मभूत. एव धात्वर्थो न फलमपेक्षते, तत. ) 'भिन्ने जुहोति ' इति ( होमस्य ) निराकाङ्क्षत्वात्, अनुमत्यो न स्यात् । आकाङ्क्षोत्तरकालं हि फलार्थता, पुरुषार्थता वा । न च भवत्पक्षे ( भेदनहोमस्य प्रयोजनविषयिणी ) आकाङ्क्षाऽस्ति, निमित्ते श्रुतत्वात् । नहि आकाङ्क्षा जन्यते क्रतुना ( तस्मात् भेदनहोमस्य न क्रत्वर्थतासिद्धिः । किञ्च ) यदुक्तम् ( भवता ) फलनिमित्तयोः अनुपादानात् ( अनुपादेयत्वात् नैकत्र

चोदनायाम्, यागगतफलवत्त्वज्ञानार्थं यामयावत्त्वीन-वाक्याभ्या एकवाक्यताङ्गीकारेण निमित्तपापक्षयान्वयो-त्तरेण, ऽन्यस्य यथाहुतानोषेन प्रमाणादिवत् तत्रापि यथाशक्त्युपबन्धोपपत्तेः । ६।३।४, ॰ चतुरा-त्मनृहीनः अप्रतिसमाधेयाङ्गवैगुण्ये नु काम्ये नाधि-क्रियते । नित्ये तु यथाशक्तिन्यायात् अधिक्रियते एव । ६।१।९, ॰ 'युवं हि स्थः' इति द्वयोः यजमानयोः प्रतिपदं कुर्यात् । 'एते असृग्र॰' इति बहुभ्यो यजमानेभ्यः । पाक्षिकेणासामर्थ्येन एकस्य यज-मानस्य कदाचित् दक्षिणादिसम्पादनपुरःसरं अशक्तो गत्या यथाशक्तिन्यायानुसारेण एकस्यापि अपि अर्थात् प्राप्तस्य द्विकर्तृकत्वज्ञापकस्य प्रकृते ज्योतिष्टोमे ममत्व इति चेत्, न, निखिलसोमप्रकृतेर्ज्योतिष्टोमस्य एकेनैव कर्ता सम्बन्धात्, सोमेन यजेत इति उत्पत्तिविधौ, कर्तु रेकत्वस्य न बाधः । एकरस्य अननुप्रेयतया अनुप्रेयगत विषय-यथाशक्तिन्यायविषयताऽपि नास्ति । कस्तूरि. ३।३।११८-१९ ॰ अग्न्येऽपि होमाधिकरणस्य न प्रतिनिधिः । तत्राहवनीयादेराधान विधिसिद्धत्वा-देव, क्रतुप्रयोगविध्यविषयत्वात् तेषामधिकारिविशेषण-त्वमतीतेः यथाशक्तिन्यायाविषयत्वात् एव न प्रति-निध्याशङ्का । भाट्ट. ६।१।५, ॰ नित्यत्वेऽपि ज्योति-ष्टोमस्य नैकर्थे यथाशक्तिन्यायविषयता, तत्पत्न्यादि-वाक्येषु समानाभिधानश्रुत्या भावनाश्रामाण्यितस्य तस्य (एकस्य) अन्तरङ्गत्वेन अशक्तौ दक्षिणापरिमाणा-न्यङ्गान्तरबाधेन असैकान्तुग्राहकत्वात् । ३।३।९.

॰ यथाशक्तिप्रयोगे कपालोपेऽपि नैकहायनीप्रवृत्तिः, होमस्तु आहवनीये निरधिकरणक एव वा । भाट्ट. ४।१।१०.

॰ यथाशक्तिप्रयोगाङ्गी (पशौ) यूपाभावेऽपि स्वर्वर्धमेव वनाश्मनादिसिद्धिः । यूपच्छेदनादेस्तु तत्र निवृत्तिः । भाट्ट ८।४।१.

॰ 'यथाशिष्टम्' इति सूत्रांशः (५।१।११।१९), यथा शिष्टं विहितं प्रकृतौ व्याहनान्त्वम्, तथा अत्रापि (चातुर्मास्यसाकमेधीयानीकवत्यादीष्टिषु)। यद्वा, यथा शिष्टं शेषान्तरवत्प्रकृतः प्राकृतः तथा कालोऽपि । पूर्वपक्षः । वृ. ५।१।११।१९.

यथाश्रुतीति चेत् । १०।७।२०।७२ ॥

अग्नीषोमीये पशौ 'यदपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' इति श्रूयते । इदं श्रूयमाणं पञ्चावत्तं यथाश्रुति श्रुतिमनतिक्रम्य कार्यम् । वपायां पञ्चावत्तं श्रुतं नाङ्गेषु इति वपायामेव कार्यं नाङ्गेषु । इति पूर्वः पक्षः ।

न, चोदनैकत्वात् । ७३ ॥

अग्नीषोमीये पशौ वपायां श्रुतं पञ्चावत्तं वपायामेव स्यात् नाङ्गेषु इति पूर्वपक्षं निरस्य सिद्धान्तमाह । न वपायामेव पञ्चावत्तं किंतु अङ्गेष्वपि तत् । चोदनैक-त्वात् । अङ्गयागाना वपायागस्य च 'अग्नीषोमीयं पशुमालभेत' इत्येकैव चोदना । तत्र वपायागेन चेत् पञ्चावत्तं सम्बध्यते, तदा अङ्गेष्वपि भवितुमर्हति । तस्मात् अङ्गेष्वपि पञ्चावत्तमेवेति सिद्धान्तः । चोदनाया एकत्वात् इति समासः । के.

यथाश्रुतीति चेत् । ६।४।६।२२ ॥

दर्शपूर्णमासप्रकरणे 'यस्योभयं हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इति श्रुतः पञ्चशरावः यथाश्रुति उभयश्रुतिमनतिक्रम्य स्यात् । उभयस्य सायं-प्रातःकालीनस्य हविषः आर्तौ सत्यामेव, प्रायश्चित्त पञ्चशराव. न तु एकहविरार्तौ । 'भिन्ने जुहोति' इत्यत्र 'पुरोडाशो क्षामन' इत्यत्र च न यथाश्रुति अर्थः स्वीकृतः कारणान्तरात् । 'उभयं हविः' इत्यत्र तु तथा कारणाभावात् यथाश्रुत्येव अर्थः स्वीकार्यः । तस्मात् उभयोर्हविषोरार्तौ एव प्रायश्चित्तं इति चेत् पूर्वपक्षी ब्रूयात् ।

न, तल्लक्षणत्वादुपपातो हि कारणम् । २३ ॥

'यस्योभयं हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्र सायंप्रातरुभयहविरार्तौ एव प्रायश्चित्तम्, नैकहविरार्तौ इति पूर्वपक्षं नाना निषिध्य सिद्धान्तमाह । न यथाश्रुति वाक्यार्थो ग्रहीतु शक्यः । उभयस्य तल्लक्षणत्वात् प्रायश्चित्तनिमित्तविशेषणत्वात् निमित्त-स्वरूपान्तर्गतत्वाभावात् । उभयपदेन निमित्तं लक्षितम् ।

निनतिलोकगुणानामपि अग्निचित्कर्तृकसोमे समुच्चयः सोमानन्तर्येऽपि यद्धा । एकनिनतिलोकगुणाऽभाव इति अन्यत्र चिन्ता । १।२।१०.

**सू यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्याद् यथेतरस्मिन् । ६।५।२०।५५॥**

ज्योतिष्टोमे प्रातःसवने प्रत्यग्रहणानन्तरं बहिष्पवमानार्थं अध्वर्यु, उद्गाता, प्रस्तोता, प्रतिहर्ता, यजमान., ब्रह्मा च पिपीलिकापङ्क्तिवत् अन्वारभ्य गच्छन्ति । तत्र दैवात् यदि उद्गातुः अध्वर्युणा सह अपच्छेदः नाम अन्वारम्भभङ्गः स्यात्, तदा आरब्धो यज्ञ अदक्षिणक एव समापनीय । समाप्य च स एव यागः पुनः कर्तव्यः । पूर्वयागे अन्यतरा दक्षिणा अस्मिन् पुनर्यागे दातव्या । इति उद्गात्रपच्छेदे प्रायश्चित्तम् । अथ यदि प्रतिहर्तुः प्रस्तोतुः वा अपच्छेदः स्यात्, तदा न्यारब्धे एव प्रतिहर्त्रपच्छेदवति यागे सर्वस्वदक्षिणा देया इति प्रायश्चित्तम् । यत्र तु एकस्मिन्नेव प्रयोगे अपच्छेदद्वयं क्रमेण सञ्जातम्, पूर्वं प्रतिहर्त्रपच्छेद, अपरं उद्गात्रपच्छेदः, तत्र 'पौर्वापर्ये पूर्वदौर्बल्यम्' ( ६।५।१९।५४ ) इति न्यायेन अपरापच्छेदनिमित्तक अर्थात् उद्गात्रपच्छेदनिमित्तक प्रायश्चित्तं कर्तव्यं भवति । तदुद्दिशति सूत्रकारः— यदि उद्गाता जघन्यः स्यात् यदि उद्गात्रा कृतोऽपच्छेदः पाश्चात्यः स्यात्, तदा आरब्ध यागं अदक्षिणं समाप्य पुनर्यागः कर्तव्यः, तस्मिन् पुनर्यज्ञे द्वादशशतरूपा दक्षिणा न दद्यात् किंतु सर्ववेदसं दद्यात् । यथा इतरस्मिन् । यथा प्रतिहर्त्रपच्छेदवति सर्वस्वं दीयते तथा अत्रापि सर्वस्वं देयम् । तथा सति पौर्वापर्यन्यायोऽपि अनुगृह्यते, निमित्तसमुच्चयप्रयुक्तप्रायश्चित्तसमुच्चयोऽपि अनुगृह्यते । न च विरोधः प्राप्नोति । तस्मादेतदुद्गात्रपच्छेदे एव कर्तव्यम् । के.

● 'यद्यूक्तो यज्ञमार्तिमियात्, भूः स्वाहेति गार्हपत्ये जुहुयात्' । अयं निहितातिक्रमनिमित्तकः, नैमित्तिक. दोषनिर्घातार्थः फलार्थः अधिकारविधिः । बाल. पृ. १४. ● 'यदि ऋक्तो यज्ञमार्तिमियात्, भू. स्वाहेति जुहुयात्' इत्यादिषु दोषनिर्घातार्थेषु प्रायश्चित्तेषु विकल्पः न तु समुच्चयः । भा. १२।३।५।१६ ● 'यद्येकं यूपमुपस्पृशेत्, एष ते वायो इति ब्रूयात्' 'यूपो वै यज्ञस्य दुरिष्टमामुच्यते । यद्यूपमुपस्पृशेत् यज्ञस्य दुरिष्टमामुञ्चेत् । तस्माद्यूपो नोपस्पृश्यः' इदं प्रायश्चित्त लौकिके यूपस्पर्शे, न तु उच्छ्रयणकालीने वैदिके । वि. ९।३।३. ● 'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्' अयं निषिद्धाचरणनिमित्तकदोषनाशफलकपरिलिप्तपुरुषार्थाधिकारविधिः । बाल. पृ. १५. ● 'यदि कामयेत वर्षुकः पर्जन्यः स्यात् इति, नीचैः सदो मिनुयात्' इति वृष्टिफलं यजमानस्यैव । 'यजमानकामिता वृष्टिं पर्जन्यः सम्पादयतु' इत्येव योऽध्वर्युः कामयते, स नीचैः मिनुयात् इति व्याख्येयम् । तादृशी तु कामना ऋत्विजाम् । क्वचित्तु 'एवंविदुद्गाताऽऽत्मने वा यजमानाय वा' इत्यादौ ( बृह. ३।१।१८ ) वाचनिकं फलमृत्विजाम् । वि. ३।८।९. ● 'यदि कामयेत वर्षुकः पर्जन्यः स्यात्, नीचैः सदो मिनुयात्' अयं गुणस्य अपूर्वविधिः । बाल. पृ. २२, ● 'यदि कामयेत वर्षुकः पर्जन्यः स्यात्, नीचैः सदो मिनुयात्' परस्मैपद ( रूपा ) विनियोक्त्री श्रुतिः । पृ. ४१, ● 'यदि कृष्णसारङ्ग न विन्देत् अथो अपि लोहितसारङ्ग. स्यात्' ( शतपथे ) । अयं गुणप्रतिनिधिनियमविधिः । पृ. २३. ● 'यदि च हेतुरवतिष्ठेत' १।२।३।२० इति न्यायात्, शूर्पस्य कार्यसमवायिनोऽन्नकरणानान्तरसामान्यस्य होमसाधनत्वहेतुत्वान्यथानुपपत्त्या अन्यविधिः कल्प्यमानः शूर्पविषय एव कल्प्यते । सु. पृ. १२९३. ● यस्माद्य देशाचारः अयं वा मुख्यादिरूप, अन्यथा नोपपद्यते यदि श्रुतिमूलकत्व नास्ति इत्यनयोपपत्त्या मूलकल्पना । तस्माद् व्यवस्थितविषयैव वाऽव्यवस्थितैव वा । तथा चोक्तं 'यदि च हेतुरवतिष्ठेत निर्देशात्' इति । वा. १।३।७।१५ पृ २४४. ● दर्व्यादेरपि होमसाधनत्वस्य हेत्वधिकरणपूर्वपक्षप्रयोजनस्य 'यदि च०' इत्यनेन निरासः । सु. पृ. ९९२. ● 'यदि जगत्यामा आग्रयणाग्रान्' इति आग्रयणाग्रत्ववचनं सोमयागे गुणविधायकं न कर्मान्तरविधायकम् । भा. २।३।१।१–२.

वाचकभावोऽवमक्षपादादिशब्दवत् ॥ विभीतकेऽक्षशब्दो हि यद्यप्यल्पैः प्रयुज्यते । तथापि वाचकत्वस्य ज्ञायते शकटाक्षवत् ॥' तथा चोक्तं शवतिर्गतिकर्मा कम्बोजेष्वेव दृष्टो विकारमस्यार्येषु प्रयुञ्जते शवमिति मृतशरीराभिधानादित्यादि । (" शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते विकारमस्यार्येषु भाषन्ते 'शव' इति " इति निरुक्ते २।२ ) । महत एव हि भारतो नामशब्दाश्च प्रतिदेशं अर्थभेदेषु व्यवस्थिता दृश्यन्ते तस्मात् तत्रापि इव अभिधाने विप्रतिपत्तिः स्यात् । एवं च निरुक्तिषु येषांचिदर्थानां साधारणशब्दवाच्यत्वात् प्रकृतावपि अविकृतप्रयोगार्थं चोदकोऽनुमीयते । 'तेष्वदर्शनाद्विरोधस्य' इत्यनेन चैतत् व्याख्येयम् । इतरत्र विप्रतिपत्त्यविरोधयोरुपलभ्यमानत्वात् । तस्मात् चातुर्विप्रतिपत्तौ समत्वात् विकल्प । इति प्राप्तेऽभिधीयते ।

शास्त्रस्था वा तन्निमित्तत्वात् । ९ ॥

भाष्यम्— वाशब्द पक्षं व्यावर्तयति । यवशब्दो यदि दीर्घशूकेषु, शास्त्रकात् प्रियङ्गुषु भविष्यति, यदि प्रियङ्गुषु, शास्त्रत्वाद् यवेषु । किं शास्त्रम् ? पूर्वतरत्वे क्षीणे भवति दीर्घशूकाः प्रियङ्गवश्च एतत्तयोः शास्त्रम् । क पुनरत्र निश्चयः ? ये शास्त्रस्थास्ते शब्दार्थाः । के शास्त्रस्थाः ? शिष्टाः । तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च । तेन शिष्टा निमित्तं श्रुतिस्मृत्यवधारणे । ते ह्यत्र समामनन्ति यवमयेषु करम्भपात्रेषु विहितेषु वाक्यशेष 'यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्ति' इति । दीर्घशूकान् यवान् दर्शयति वेदः । वेदे दर्शनाद् विच्छिन्नपारम्पर्यो दीर्घशूकेषु यवशब्द इति गम्यते । तस्मात् प्रियङ्गुषु गौणः । तस्मात् दीर्घशूकाना पुरोडाशः कर्तव्यः । 'वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः' इति सूत्रे दर्शयति । 'जम्बुरो वेतसः' इति वञ्जुले वेतसशब्दम् । सूत्रे हि 'गावोऽनुधावन्ति' । वञ्जुलेऽप्सु जायते । जम्बुश्च स्यन्दते गिरिनदीषु वा ।

वा— 'शास्त्रस्था तन्निमित्तत्वात् प्रतिपत्तिर्बलीयसी । लौकिकी प्रतिपत्तिर्हि गौणत्वेनापि नीयते ॥ नानाविप्रतिपत्तौ हि न लोकस्येद्गत्वता । या शास्त्रानुगुणा सैव प्रामाण्येनावधार्यते ॥ लौकिकत्वे समानेऽपि शास्त्रेणाभ्यधिका हि सा । शास्त्रस्थाः पुरुषा ये वा प्रतिपत्तिस्तदाश्रया ॥ प्रमाणत्वेन मन्तव्या सप्रत्ययतरा हि ते । शास्त्रार्थेष्वभियुक्तानां पुरुषाणां हि सर्वदा ॥ लोकेनाप्यन्यथात्वेन शास्त्रार्थो निष्फलो भवेत् । लौकिकस्यान्यथात्वेऽपि नार्थोऽस्तीव विरुध्यते ॥ रसवीर्यविपाकानां भेदाद्वैद्यैर्यथाद्य । निर्धार्या स्वार्थतत्त्वेन, धर्मसिद्ध्यर्थं याज्ञिकैः ॥ तस्माद्ये याज्ञिकैर्येषां नैर्धार्योऽर्था निरूपिताः । तेषां तत्र शब्दानामर्थाः मुख्या हि सेतरे ॥ अनवस्थितशब्दार्थसम्बन्धे सति सम्भवे । विकल्पस्याष्टदोषत्वान्न कथंचन युज्यते ॥ अविप्लुतश्च शब्दार्थो यो वेदेषूपलभ्यते । मन्त्रस्य निर्णयात् तस्माल्लोके भवति निर्णयः ॥' यवमतीभिरद्भिः औदुम्बर्यां प्रोक्षणे विधीयमाने वाक्यशेषोऽत्र 'यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति' इति बह्वीषु शाखासु श्रूयते, अन्यत्रापि ब्राह्मणप्रावादिकयवमयकरम्भपात्रवाक्योपात्तेनोपलभ्यो य स मन्त्रपरो जनत्वात् तथा नामास्तु । 'फाल्गुनेऽन्यौषधीनां तु जायते पत्रशातनम् । मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥ प्रियङ्गवः शरत्पकास्ताबद्गच्छन्ति हि क्षयम् । यदा वर्षासु मोदन्ते सस्यानानां प्रियङ्गवः ॥ तदा नान्यौषधिम्लानिं सर्वासामेव मोदनात् ।' एवं वराहवेतसशब्दा अपि शास्त्रप्रयोगादेव निश्चीयन्ते । तस्मात् उदाहरणानि लोकप्रसिद्धरेव व्यवस्थितत्वात् तानि । तथाहि 'मेध्योऽयमाम्ले क्वचिद्देशे यवभुक्ताः प्रियङ्गवः । जम्बु न वेतसं प्राहुर्वराहं नापि वायसम् ॥ अध्यारोप्य विचारेण किं मुधा क्रियते मनः । सन्दिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयम् ॥ वक्ष्यत्येव च तेनापि पृथक्कार्या विचारणा ।' यत्रापि तत्राभिधेयसंदेहमनुदाहृत्य तथाप्यसन्देहनिर्णयोपाय शास्त्रेण करिष्यति, वाक्यशेषेणैव स निर्णयो नायम । अत्र तु अभिधेयनिर्णय एकत्र च कृत , सर्वत्र च कृत एव भविष्यति इत्येवमपुनरुक्तत्व

मापद्यते । ' तथापि न्यायतुल्यत्वाद्यथा धूर्तपरिग्रहः । वाक्यशेषात् तथैव स्यात् यथावदर्थविनिर्णयः ॥ ' तत्सिद्धिसूत्रे च शाम्याहीना गौणवृत्तिनिमित्तानामनुक्रमणात् वेतसमण्डूकजम्बूप्रभृतयस्सिद्धिशब्दार्थभेदेऽपि निर्णीयन्ते एवेति नेहोदाहृतेन कार्यम् ।

( आर्यम्लेच्छप्रयोगविप्रतिपत्तिबलाबलत्वम् । ) ' तस्मादन्यद्‌द्वाहृत्य विचार्यमिदमीदृशम् । यत्र विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगजा ॥ तत्र किं तुल्यता युक्ता किमेकैव बलीयसी । ( पूर्वपक्षमाह- ) समा विप्रतिपत्तिः स्याद् दृष्टार्थव्यवहारिणाम् । आर्यास्तावद्विशिष्यन्तेऽदृष्टार्थेषु कर्मसु । दृष्टार्थेषु तु तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् ॥ ' सर्वो हि शब्दः अर्थप्रत्यायनार्थं प्रयुज्यते । अर्थश्च व्यवहारप्रसिद्धपर्यन्तमिष्यते ।

' तत्र यस्य विशिष्टस्य म्लेच्छैरप्यर्थान्तराभिधा । तत्रापि तस्य सामर्थ्यमनालोच्य प्रतीयते ॥ यथैव ह्यार्यगम्येऽर्थे संनत्यानादिका मतिः । म्लेच्छगम्ये तथैव स्यादविशिष्टं हि कारणम् ॥ न प्रयोगानवित्तस्य म्लेच्छैस्स्यापि हि दृश्यते । अनाद्योरर्थशक्त्योश्च विशेषो गम्यतां कथम् ॥ यथा च म्लेच्छदेशेऽपि धूमोऽग्नेरवबोधकः । एवं स्वार्थे प्रयोगात् तैरिष्टः शब्दोऽपि वाचकः ॥ तस्मात् पील्वादिशब्दानां वृक्षहस्त्यादिबोधने । समा विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगतः ॥ ' इति प्राप्तेऽभिधीयते । शास्त्रस्था वेति पूर्वादेव सूत्राच्छास्त्रस्था योजनीया । किंच, ' यथा साध्वनुरूपत्वात् प्रमादाशक्तिजेष्वपि । जायते वाचकभ्रान्तिस्तथैव म्लेच्छभाषिते ॥ ' अन्यायप्रसादादेव गौणलक्षणादिप्रयोगनिमित्ता अर्थापभ्रंशा भवन्ति ते शास्त्रस्थैरेवाविच्छिन्नार्थक्रियानिमित्तगुणाभिमिः शक्यन्ते साध्वसाधुकार्षापणमध्यादिव तत्परीक्षिभिर्विवेक्तुम् । अभियुक्तानभियुक्तजनयोश्चाभियुक्तज्ञानं तदवधिरत्वेनावधारणादरात् । ' अतः शास्त्राभियुक्तत्वादार्यावर्तनिवासिनाम् । या मतिः सैव धर्माङ्गशब्दार्थत्वप्रमा मता ॥ ' एतेन आर्यावर्तनिवासिमध्येऽपि ' अभियुक्ततरा येये बहुशास्त्रार्थवेदिनः । तेते यत्र प्रयुञ्जीरन् सोऽर्थस्तत्त्वतो भवेत् ॥ '

( स्मृत्याचारविरोधे बलाबलविचारः ) ' स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये । समा विप्रतिपत्तिः स्यान्मूलसाम्याद् द्वयोरपि ॥ यथैव श्रुतिमूलत्वात् स्मरणानां प्रमाणता । आचाराणां तथैवेति न विशेषो वक्ष्यते ॥ यद्वाऽऽचारबलीयस्त्वं फलवत्त्वात् प्रतीयते । फलाद्‌दृश्यमानं हि प्रमाणं दुर्बलीभवेत् ॥ श्रुतिराचारमूलं या फलस्था सोपलभ्यते । यावद्धि स्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते ॥ तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति । प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम् ॥ तेनाऽऽचारबलीयस्त्वं समत्वं वेह युज्यते । स्मृतीनां वा बलीयस्त्वं शास्त्रस्था वेति वर्ण्यते ॥ उभयोः श्रुतिमूलत्वं न स्मृत्याचारयोः समम् ॥ सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना । तथा श्रुत्यनुमानं हि निर्विघ्नमुपजायते ॥ आचारात् स्मृतिं प्राप्य श्रुतिर्निर्ज्ञायते ततः । तेन द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते ॥ न ह्येकैव श्रुतिः काचिदाचाराणां प्रवर्तिका । भिन्नाभिर्विप्रकीर्णाभिस्त्वाम्नातैस्श्रुताभिः प्रवर्तनम् ॥ नैकत्र पाठकैनैव ह्याचाराणां विधिश्रुतिः । क्वचित्प्रकरणे काश्चित् कथंचिदुपलभ्यते ॥ ' तद्यथाऽग्निप्रकरणे ' यत् सत्वदानतीमुपदधात्यत्रमेवास्मिन् दधाति, तस्माद्‌द्वाभ्यां हस्ताभ्यां परिगृह्य पुरुषोऽन्नमत्ति ' इति । सत्यपि हेतुवन्निगदत्वे प्रसिद्धिवदिते हेतुसमवात् । ' विधास्यते तु येन येन ' इत्यनेन न्यायेन विध्यनुमानम् । न चैतन्नियोगतोऽर्थेन प्राप्तम्, येन ' तस्मात्प्रजा दश मासान् गर्भं भृत्वा, एकादशमनु प्रजायन्ते, तस्माद्‌दक्षनवं प्रजाः ' इतिवत् स्वभावप्राप्तत्वेनार्थप्राप्तत्वेन वा ' तस्मादुत्तरे वयसि पुत्रान् पित्रोपजीवन्ति ' इतिवदनूद्येत इत्यतो न्यायात् पुरुषधर्मविधिः । एवम् ' अग्नेः तद्दक्षिणतो दधाति, तस्माद्दक्षिणेन हस्तेन पुरुषोऽन्नमत्ति ' इति । तथा ' दीक्षितो नवनीतं दक्षिणं प्रथममङ्क्ते, सर्वं हि मनुष्या. पूर्वमङ्क्ते निकृत्यै ' इति । तथा यूपैकादशिन्याम् ' द्वे द्वे रशने यूपमुन्मुञ्चत.,

केचित् जम्ब्वाम् । क्षौमप्रथा पदार्थान्तरमाहित्कल्पः (श्लोक ५३:) । यः शास्त्रस्थाना स शब्दार्थः । के शास्त्रस्थाः ? शिष्टाः । तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च । तस्मात् दीर्घशूकाना पुरोडाशः कर्तव्यः । सूकरो वराहशब्द. । वञ्जुले वेतसशब्द इति सिद्धान्तः । १।३।८।८–९. ● यववराहाधिकरणे तु वाक्यशेषात् प्राक् संदेह एव, यवादिशब्दाना प्रियङ्ग्वादिषु सार्वनिकप्रसिद्धेरभावात् । न तु विपरीतनिश्चयः । कु. १।२।५।८ पृ ६६ वार्तिकमतेन वर्णकं ३. ● यववराहाधिकरणे शास्त्रप्रयोगारम्भे लौकिकप्रयोगबाध. उक्त. । सु पृ. २५१.

● अनेकार्थकल्पना–व्यवहारानुपपत्ति विकल्पापत्ति –नियमभङ्गापत्तिश्चेति दोषचतुष्टय यववराहाधिकरणोक्तम् । कौ. १।४।१३।२६ पृ. २७३. ● एकस्यैव शब्दस्य वाचकत्वनियमात् एकस्यैव चार्थस्य वाच्यत्वनियमात् इति यववराहाधिकरणोक्तः वाच्यैकत्वनियम, दृष्टान्तत्वेन दीपिकया उक्तः । सु. पृ ३०७.

● यथैव मङ्गलाना प्रियङ्गुदीर्घशूकादीना एकाभिधानेनैव प्रतीतिसिद्धेः, यवादिशब्दाना अनेकार्थत्व नेष्टं तथैव सतन्यानामपि एकाभिधानेनैव इतरत्र प्रतीतिसिद्धेः अन्याय्या अनेकार्थता । इति यववराहाधिकरणोक्तन्यायपरामर्शः । सु. पृ. २५६.

● यववराहाधिकरणन्यायेन लोकप्रसिद्धिः शास्त्रप्रसिद्ध्या बाध्या । न्यायनि. २।३।१७।४५ अमृ.

● यववराहाधिकरणप्रयोजनकथनारम्भे 'त्रिवृति सप्तमात्रेण०' (१०।६।७।१९–२१) इत्यधिकरणम् । कौ. १।३।८।५.

● अर्थवादानामपार्थपराभावे यववराहाधिकरणविरोध । कु. १।२।१।१८.

● यववराहवेतसशब्दानां लोकप्रसिद्धोऽर्थो ग्राह्यः उत शिष्टप्रसिद्धोऽर्थोऽथवा विकल्पः इति संदेहे, शिष्टप्रसिद्ध एवार्थो ग्राह्य. इति सिद्धान्तः । भा. १।३।४।८–९

● यवविधिः 'यवमयश्चरुर्भवति ' इति । वि. १।३।५.



● यवविध्यर्थवाद. 'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति ' इति । अयमर्थवादः 'यवमयीभिरद्भिरौदुम्बरी प्रोक्षति ' इत्यस्य विधेर्वाक्यशेष' नहीषु शाखासु उपलभ्यः । भाष्ये तु यावणमाषाविक्रयप्रयत्रकम्प्रमाणविधिलोपलोनोदाहृतः (' यवमयेषु करम्भपात्रेषु विहितेषु वाक्यशेषं ... ' इति भाष्यम् ) । कौ. १।३।८।९ पृ. ५७.

● यवव्रीह्योरेकस्मिन् कर्मणि विकल्प., एकार्थत्वात् । भा. १२।३।८।१०–१५.

● यवव्रीह्यन्यतरनियमस्य विशेषो तण्डुलेषु बाध.। भा. १०।२।२३।७०.

● यवशब्दः वेदे दर्शनात् अविच्छिन्नपारम्पर्यः दीर्घशूकेषु इति गम्यते । भा. १।३।८।९.

● यवमध्या गायत्री । पादेषु अक्षराणि ७।१०।७। उदा० 'स सुन्वे यो वसूनां' (ऋसं. ९।१०८।१३) । के. ● यवमध्या त्रिष्टुप् । पादेषु अक्षराणि ८।८।१२। ८।८ । उदा० 'स मा तपन्त्यभितः' (ऋसं. १।१०५। ८) । के.

● यवागूः एकपरिमाणात्तण्डुलात् षोडशपरिमाणे जले विपाच्य जायमानं द्रव्यम् । इद राजन्यस्य यज्ञे व्रतम् । के. (भा. ४।३।४।८). ● 'यवागूः राजन्यस्य' ज्योतिष्टोमे व्रतं कल्पयेत् । भा ४।३।४।८–९, ६।१। ७।२८, १०।८।१।१९, १२।१।१४।१०. ● 'यवाग्वा जुहोति ' इत्र कर्मणि तृतीया कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । बाल. पृ. ४४.

● यवागूपाकस्य पश्चात्त्व अग्निहोत्रहोमस्य पूर्वत्वं च पाठात् प्राप्तम्, अर्थानुसारेण प्रयोजनानुसारेण बाध्यते । अर्थक्रमः पाठक्रमाद् बलवान् 'अग्निहोत्रं जुहोति यवागूं पचति ' । भा. ५।४।१।१.

● यश' । ' माथयशःश्रीकामाना पुनराद्धीत ' । भा. १०।३।५।३०.

● ' यष्टी प्रवेशय ' यष्टिग्रहणपुरुषान् इत्यर्थः गौणी वृत्तिः लक्षणा वा । वा- १।४।१२।२३ पृ. ३५४, सु. पृ. ४३८.

निरूपणम् । ३।१।३।६ पृ ६६८. * यागस्य न स्वरूपेण श्रेयःसाधनत्वं किंतु विहितत्वेन स्वरूपेण (विहिततद्विशिष्टस्वरूपेण) । सु. पृ. ३१. * यागस्य यागान्तरं रूपं न भवति । भा. २।२।१।६. * यागस्य रूप – प्रयोगेण यागान्तराद् व्यवच्छिन्नो यागो निरूप्यते तदेव रूपम् । भा २।२।४।९. * यागस्य स्वर्गाङ्गत्वम् । भाट्ट. ३।१।३ * शब्देन प्रत्यक्षजन्य यागस्य फलसाधनत्वात् प्राधान्यम्, देवतायाश्च गुणत्वं निरूप्यते । टुप् १।१।८।५.

❀ यागानां द्वैरूप्ये चेतरेऽपीति न्यायः । साहस्री ८५५.

* यागानां प्रायेण दर्शपूर्णमासतन्त्रत्वम् । भा. ७।३।१।१२. * यागे अङ्गहीनस्याप्यधिकारः । ६।१।९।४१. मीको. पृ. २८२ 'अधिकारे अग्निहोत्रादौ प्रतिसमाधेयाङ्गवैकल्यस्यापि' इत्यत्र द्रष्टव्यम् । * यागे दम्पत्योः सहाधिकारः । ६।१।४।१७-१८. 'सहाधिकाराधिकरणम्' इत्यत्र द्रष्टव्यम् । * यागे निर्धनस्याप्यधिकारः । ६।१।८।३९-४०. मीको पृ. २८५ 'अधिकारे कर्मसु द्रव्यरहितस्यापि' इत्यत्र अधिकरणं द्रष्टव्यम् । * यागे शूद्रस्यानधिकारः । ६।१।७।२५-३८. मीको पृ ५०४ 'अपशूद्राधिकरणम्' इत्यत्र द्रष्टव्यम् । * यागे स्वर्गकामस्याधिकारः । ६।१।१।१-३. 'स्वर्गकामाधिकरणम्' इत्यत्र द्रष्टव्यम् । * यागे हि द्रव्यं गुणभूतं चोद्यते । भा १०।८।१७।६५. * यागेषु कर्तॄणां कर्मतारतम्येन भागतारतम्यं नास्ति । १०।३।७।५०-५१.

* यागाङ्गं कर्तृत्वादिना पुरुषः । भाट्ट. ३।१।३. * यागाङ्गं गुणः । चि. ३।१।३. * यागाङ्गं देशः । भाट्ट. ३।१।२.

* यागाख्यामात्रस्य ज्योतिष्टोमस्य निष्पादनसामर्थ्यस्य शब्दैकसमधिगम्यत्वम् । सु पृ. ८००.

* यागाख्यामात्रात् ज्योतिष्टोमयाजि 'उक्तेऽन्यत् कर्मणोऽन्याय' (२।३।६।१९) इति न्यायात् । सु. पृ १४८.

* यागात्मकस्य क्रियाविशेषस्य द्रव्यदेवतासम्बन्धाभिधानं । सु पृ. ४६३.

* यागादौ विधिगतशब्देनैव देवतासम्प्रदानकारकम् । १०।४।१२।२३-२८. 'विधिशब्दाधिकरणम्' इत्यत्र द्रष्टव्यम् । * यागादिषु मनुष्याणामेवाधिकारः, न तिरश्चां देवानामृषीणां वनस्पतीनां च । ६।१।२।४-५. मीको. पृ. १९५० 'तिर्यगधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* यागादिकर्मणां स्वर्गादिफलसाधनता । स्वर्गकामाधिकरणम् । भा ६।१।१।१-३.

* यागादिक्रियायां कार्यत्वान्वये नियोगान्वयो हेतुः । नियोगविशिष्टतयैव पाकादिक्रियायाः कार्यत्वान्वयदर्शनात् । (इति गुरवः) । मणि. पृ. ८४.

* यागगतेन व्यापारेण गृहीतेन, आत्मनिष्ठयर्थं नियमादृष्टाद्भूतानि दृष्टानि अदृष्टानि च प्रयोजनानि गम्यन्ते । तानि च निर्वाणपरिमाणान्येव प्राप्नुवन्ति । तैरात्मनिष्ठयर्थं पदार्थाः प्राप्यमाणाः स्वात्मनिष्ठा एव प्राप्यन्ते । वा. ३।८।१९।३१.

* यागचोदना रूपवती भवति 'माध्वी बर्हिषि अस्मिन् निवारे आसादयेत्' 'सौर्यं चरुं निर्वपेत्' 'सौम्यं बभ्रुमालभेत' इति । भा. १२।२।९।१९.

* यागत्वं प्रत्येकं समवेतम्, तद्वाचिना च धातुना एकैकस्य द्रव्यत्यागदेशस्य यागत्वाभिधानमेव । ननु समुदायस्यापि नाममात्रेणाभिधानात् धातुना समुदायलक्षणार्थं भवेत् । न, तस्य पदार्थान्तरत्वेन प्रत्येकवृत्ति स्यात् । तदुक्तं पौर्णमास्यधिकरणे (२।२।३) । वा. २।२।३।९ पृ ७६७. * यागत्वं विद्वत्त्व कर्तुः अनात्मलाभकस्य यागत्वाभावम् । सु पृ ३४३.

* यागदेवतायै संकल्पिते द्रव्ये स्वत्वमत्यजमानो यजमानो न तेन ऋत्विजः क्रेतुं शक्नोति । चि. १०।२।९. * यागदेवतयोः विधि विना न संबन्धः । १०।४।१४.

* यागद्रव्यं भक्षयितव्यं चोद्येन भवति । भा. ३।५।१९।४८.

विधेः शेषावसानता ॥ स्वीयं द्रव्यं परित्यज्य परकीयं यथा भवेत् । तथा सम्पादनं दानं त्यागोऽप्येषामियं भिदा ॥'

भाट्ट — प्रसङ्गात् यागादिपदार्थाः किंरूपाः के इति विचार्यन्ते । यत्र प्रक्षेपाङ्गको देवतोद्देशपूर्वको द्रव्यत्यागो विधीयते स यागपदार्थः । प्रयाजादिषु प्रक्षेपसिद्ध्यर्थमपि विशेषणं तत्र यागस्यैव प्रक्षेपसिद्धेः । शाक्यतावच्छेदकं चोक्तविधत्यागत्वसमव्यापकं वासिद्धाग- न्तोपाधिरूपं वा सामान्यमित्युक्तमेव । प्रक्षेपप्रधानक उक्तविधत्यागो होमपदार्थः । परस्वत्वापादनपूर्वको द्रव्यत्यागो दानपदार्थः । तत्रापि तत्तच्छक्यतावच्छेदकं तत्तद्धर्मसमव्यापकं पूर्ववदेव सामान्यम् । एतल्लक्षणव्याख्यानान्तराणि तत्तद्ग्रन्थेषु लिखितानि ।

मण्डन— 'त्यागः श्रुतोद्देशगुणो यजिः स्यात् ।'

शंकर— 'यागस्य लक्षणं प्रोक्तम् ।'

● यागपचनः स्वाहाकारशब्दो यथा अग्निहोत्रे । भा. १०।८।७।१४.

● यागविधायकत्वं नास्ति देवताद्रव्यसंयोगाभावे । अतः 'अग्निमालभेत' इत्यत्र स्वर्गकामविधिः अग्निहोत्राद्यधिकारे । भा. २।३।६।१६–१७.

● यागविधिः अत्र द्रव्यदेवतासंयोगात् । 'आग्नेय-मष्टाकपालं', 'सौर्यं चरुं निर्वपेत्' । भा. २।३। ५।१४.

● यागविधिप्रकारश्चास्माभिः अनायासेनापत्त्ययेन आग्नेयाधिकरणे एव प्रदर्शितः । कौ. २।३।५।१४.

● यागरूपं द्रव्यदेवतम् । शु. पृ. ७६१.

● यागशेषः कर्ता । भाट्ट. ३।१।२, ● यागशेषः कालः । ३।१।२.

● यागशेषत्वं द्रव्यस्य । भाट्ट ३।१।३.

● यागसाधनानि । अवदानानि हवींषि याग- साधनानि पत्न्याकृतिः । भा. २।१।७।२१.

● यागहोमौ । 'पत्न्यावेक्षणं यागेष्वेव सम्भवति श्रूयते स्रुचः । तत्संनिधौ समाम्नानात् जुहोतिरङ्गमिष्यते' ॥ वा. २।४।१४।४१ पृ. ९८२, ● 'अथवा नैव भिद्येते यागहोमौ परस्परम् । पूर्वापरौ हि भदन्तौ तद्भागौ नरसिंहवत् ॥' २।४।१४।४१ पृ. ९८३.

● यागहोमादौ त्यागांशः आरादुपकारकः । भाट्ट. ४।१।७.

● याच्ञा ज्योतिष्टोमे नित्या धनवतोऽपि । वि. ६।८।६.

सू. याच्ञाक्रयणमविद्यमाने लोकवत् । ६।८। ७।२६ ॥

ज्योतिष्टोमे 'द्वादश वानीर्दीक्षितो भृतिं वन्वीत' इति श्रुतेर्वननं नाम द्रव्यस्य याचनम्, 'सोमं क्रीणाति' इति सोमस्य च क्रयणं तत्रत्यम् । याच्ञा च क्रयणं च अनयोः समाहारः याच्ञाक्रयणम्, स्वीये धने स्वीये च सोमे अविद्यमाने सति कर्तव्यम् । यः स्वयं धनवानेव तेन धनयाचनं न कर्तव्यम् । यस्य च स्वीये अरण्ये सोमः स्यात् तेन सोमक्रयणं न कर्तव्यम् । लोकवत् । लोके यथा दरिद्रो याचते, यस्य च यः पदार्थः स्वीयो न भवति स तं क्रीणाति तद्वत् । इति पूर्वः पक्षः ।

नियतं वाऽर्थवत्त्वात् स्यात् । २७ ॥

अविद्यमाने स्वीये धने सोमे च याचना क्रयश्च स्यात् इति पूर्वपक्ष सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । याचना क्रयणं च नियतं नित्यं स्यात् । अर्थवत्त्वात् अदृष्टार्थत्वात् । तदकरणे क्रतोर्वैगुण्यं स्यात् । तस्मात् विद्यमानेऽपि कर्तव्यम् । के.

● याजकत्वम् गुणभूतः अध्यापकः । रत्न. ६। २।६।२४ वर्णक २.

● याजनाध्यापनादीनां धनार्जनार्थं विषयो नियमार्थः । अनेनैवोपायेन धनमर्जनीयं नान्येनेति । वि. ६।२।८.

● याजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव वृत्त्युपायाः स्मृत्युक्ताः । भा. १२।४।१५।४३.

● याजमानं अध्वर्युपठ्यमानकर्ममन्त्रोक्तं फलम् । याजमानफलकामना ऋत्विजा कर्तव्या । वि. ३।८।१४.

● याजमानमिति समाख्यातया कर्मणा पत्नीकर्तृकत्वाभावः । ६।१।६।२४. मीको. पृ. १४८९ 'पैतृकमधु-

न्याय ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● याजमान तप उपवासरूप ज्योतिष्टोमे, नार्त्विजम् । ३।८।३।१९–२१ मीको पृ १९८४ 'तपोऽधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । ● याजमानं प्रत्यगाशीर्भिर्नोक्तफलम् । चिं ३।८।१८, ● याजमान यागसमानियम्य फलम्भ्येन परतया, साक्षात् दर्शपूर्णमासयो आधारकरणमनोरु संनापनाभाव । ३।८।१५, ● याजमान धृष्ण्यादिफल ज्योतिष्टोमे सदस नीचत्वेन नियामस्य, गाढयी कामना तु ऋत्विजाम् । क्वचित्तु याजमानिक ऋत्विजा कर्म । ३।८।९ ● याजमाना 'आयुर्दा अग्नेऽसि, आयुर्मे देहि' इत्याद्या आशीर्मन्त्रा, नार्त्विजा । ३।८।६।१७–१८ मीको पृ १०२२ 'आशीरधिकरणम्' इत्यत्र द्रष्टव्यम् । ● याजमाना गुणकामा । ३।८।५।१३–१४ मीको पृ १४३५ 'कामाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ● 'याजमानास्तु तत्प्रधानत्वात् कर्मवत्' ( ३।८।२।४ ) इत्येतेनाधिकरणेन समिदादय, तत्त्वत्कृता स्तोभकाल वपादयश्च पूर्वपक्षवादिना पुरुषसंस्कारा याजमाना स्यु । शा ३।४।४।१३ पृ ९८२, ● 'याजमानास्तु०' इत्यनेनैव तत्कर्तृकता ( यजमानकर्तृकता सोमक्रयणस्य ) । ३।४।१३।३० पृ ९७३ । सोमक्रयणस्य मुख्यिकत्वं अध्वर्युकर्तृकत्वं सिद्धं इति न पुन साधनीयम् । तस्मात् च 'याजमानास्तु०' इत्यत्र न योग्यतया यजमानेन कर्तव्यमिति । ३।७।१६।३३ पृ १०९८ ● 'याजमानास्तु तत्प्रधानत्वात् कर्मवत्' (३।८।२।४) इत्यनेन न्यायेन फलप्रतिग्रहणयोग्य साधनार्थं तत् (अपूर्व) आभिमतमेव विज्ञायते । शा १।३।८।२७ पृ २८४ । अत्र सुधा– कर्तृगुणपुरुषसंस्कारत्वासिद्धावपि क्रतौ साधनार्थ संस्कारोपपत्तेः कथं यजमानसंस्कारत्वाधारणा स्यात् इत्याह ( याजमानास्तु० इति ) न्यायात् तदुक्तम् इति । पृ ३२० ● अनुक्तोपनिषिद्धादेस्तु श्रुतोपपुरुषधर्मत्वे, 'याजमानास्तु०' इत्यनेन न्यायेन अनूद्यमानानि साधने, साधनान्यपि अध्वर्यो मनुष्यमनभूतपुरुषगामित्वात्, प्रकरणमध्य तदर्थत्व सिध्येत ( यागार्थत्व ) । सु पृ ११९०, ● कर्मयुक्तमनुष्याङ्गत्वे 'याजमानास्तु०' इत्यनेन न्यायेन याजमानत्वापत्ति । पृ १३४८ ● याजमाना वपनादिसंस्कारा ज्योतिष्टोमे । वपनाधिकरणम् । ३।८।२।१–८ ● याजमानस्य आर्त्विज्येन बाध क्वचित् ( यथा अग्ने ) । वि १२।४।१९ ● याजमानाना प्रयाजानुमन्त्रणमन्त्राणां न कश्चित् क्रम दर्शपूर्णमासयो । भा ५।१।३।२ ● याजमाने काण्डे पठित गणनवती दक्षिणमार्ज मध्यवर्तिन उपांशुयाजत्वाद्धमम् । वि ३।३।८

सू याजमाने समाख्यानात् कर्माणि याजमानं स्यु । ३।८।९।१९ ॥

दर्शपूर्णमासयो पञ्च 'वत्स चोपावसृजति, उखां चाधिश्रयति' इत्यादीनि सप्त द्वन्द्वानि, अपरं च 'कपाल कपालानि' इत्यादीनि पञ्च द्वन्द्वानि इति द्वादश द्वन्द्वानि आम्नातानि । तानि द्वन्द्वरूपाणि कर्माणि याजमाने काण्डे समाख्यानात् आम्नातत्वात्, याजमानं स्यु कर्माणि । वेदा प्रमाणं इतिवत् कर्माणि याजमानं इति प्रयोग । कर्मणा याजमानत्व प्रयर्थं । याजमान इति विशेषणमाख्यानात् एतेषां कर्मणां याजमानत्व इति पूर्व पक्ष । याजमानं इत्यत्र याजमानानि इत्यपि पाठ क्वचित् दृश्यते ।

अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् । २० ॥

दर्शपूर्णमासयो 'वत्स चोपावसृजति' इत्यादीनि सप्त, 'उपस्था कपालानि' इत्यादीनि च पञ्च इति द्वादश द्वन्द्वरूपाणि कर्माणि याजमानकाण्डे समाम्नातानि याजमान इति विशेषसमाख्यया याजमानानि इति पूर्व सूत्रेण पूर्वपक्षे प्राप्ते, सिद्धान्तसूत्रमिदम् । अध्वर्युरेतानि कर्माणि कुर्यात् न यजमान । तदर्थो हि कर्मकरणार्थो हि यस्मात् अध्वर्यु परिक्रीत । तस्मात् स एव कुर्यात् । याजमानसमाख्या यद्यपि विशेषसमाख्या तथापि सा न न्यायपूर्वा । आध्वर्यव इति समाख्यान सामान्यमपि न्यायपूर्वं 'अन्यगुणविरोधे च तादर्थ्यात्' इति न्यायानुगृहीत इति प्रबलम् । यजमानस्तु 'इदं मेऽध्वर्यो संपादय' इति ब्रूयात्, येषु चिन्त्य कर्मसु तथा तुल्यत्वमपि भावि । तेन याजमानसमाख्या कृतार्था

भविष्यति । तस्मात् आध्वर्यवाणि द्वन्द्वानि इति सिद्धान्तः ।

अपूर्वे त्वपकृष्येत । २१ ॥

दर्शपूर्णमासयो याजमानकाण्डे 'वत्सं चोपावसृजति उखां चाधिश्रयति' इत्यादीनि द्वादश कर्माणि आम्नातानि । तानि याजमानानि यथा पौष्णेय इति पौष्णं कर्म, नैष्टीय इति नेष्टुः कर्म, तद्वत् इति पूर्वपक्षः । तत्र व्यावर्तनिरासार्थं तु-शब्दः । पौष्णेय नैष्टीय इत्यादि तु अपूर्वं कर्म, विशेषसमाख्यानात्, न तत्र अध्वर्युः कर्ता स्यात् तत्र अध्वर्युः अपकृष्येत निवर्तेत । द्वादशसु कर्मसु तु अध्वर्युरेव कर्ता परिकीर्तनात् । अत्र तुप्टीका- 'यत्र याजमानत्वाध्वर्युकर्तृत्व योगेन अपूर्वं पौष्णेयादिसमाख्यानं भवति तत्राध्वर्युः अपकृष्येत इत्येतमर्थमनेन स्पष्टतया नेदं सूत्रं (वार्तिककारेण) व्याख्यातम्' इति । के

* याजमाने समाख्यानात् कर्माणि याजमान स्युः । ३।८।९।१९ ॥

भौ दर्शपूर्णमासौ । तत्र याजमाने कर्माण्याम्नातानि द्वादश द्वन्द्वानि- 'वत्सं चोपावसृजति, उखां चाधिश्रयति, अव च हन्ति, दृषदौ च समाहन्ति, अधि च वपते, कपालानि चोपदधाति, पुरोडाशं चाधिश्रयति आज्यं च, स्तम्बयजुश्च हरति, अभि च गृह्णाति, वेदिं च परिगृह्णाति, पत्नीं सन्नह्यति, प्रोक्षणीश्चासादयति, आज्यं चैव एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोः' इति । तत्र एतेषु किमेतान्यध्वर्योः कर्माणि, उत यजमानस्येति । इदानीं सामान्यसमाख्यया विशेषसमाख्याया बाध प्रसङ्गात् प्रतिपाद्यते । अत्राह पूर्वपक्ष— वत्साधिश्रयणावहननादीनि द्वादशकर्मद्वन्द्वानि अध्वर्युवेदे याजमाने काण्डे समाम्नातानि । न च तानि याजमान- मन्त्रेण तदुभाभ्यां कर्तुं शक्यन्ते । तत्र हि मन्त्रैस्तदेऽपि पाठस्य स्यात् ( १ ) दानविधिसमर्पितस्य विधि- योगस्य सामर्थ्ये प्रयोग । तयोश्च प्रयोगविधिपरिगृहीत- त्वात् कर्तृत्व साधकत्वम् । उत्ताधिश्रयणादिकर्मणां तु उद्गातृत्वेन केनचित् समर्पितमिति बहुदेव प्रयोग- वचनाद्गृहीतानि कर्तृदेव कर्तव्यानि । न च द्वादशकर्मणा द्वन्द्वभूतानां स्वरूपमात्रेणाध्वर्युवेदाम्नानं द्वन्द्वरूपेण याजमानकाण्डे समाख्यातसामर्थ्यरूप द्वन्द्व यजमानेन कर्तव्यम्, कर्माणि चाध्वर्योरेव भवति, सामीप्यस्याकर्मत्वेन कर्तृभेदासंभवात् । तेनैवच्छूयमाणया कर्मणा न समाख्या- सामान्येन कर्मान्तरश्रुतिः । तेनैव कर्तृत्वे सति आध्वर्यु- वेदसमाख्यातो याजमानकाण्डसमाख्याया विशेषरूपत्वेन बलीयस्त्वात् विशेषसमाख्यानात् सामान्यसमाख्या बाधित्वा यजमानेनैव कर्माणि कर्तव्यानि । आम्नानं चोत्पत्तिविनियोगाभ्यासेनैव उपपन्नमिति । एवं प्राप्ते, अभिधीयते ।

अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् । २० ॥

अयमभिप्रायः । यद्येवं यदि कर्मणा विधानं याजमानकाण्डे भवेत् । किन्तु अध्वर्युवेदविहितानामेव कर्मणां द्वन्द्वतामात्रं याजमाने विधीयते, 'एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोः' इति याजमानकाण्डे श्रवणात् । न तु द्वन्द्वताख्यगुणसम्बन्धेन कर्मणामपि प्रधानभूतानां याजमानत्वं भवति । अङ्गगुणविरोधन्यायविरोधात् । तेन कर्मणामाध्वर्यवसमाख्यया अध्वर्युकर्तृकत्वात् तदनुरोधेन द्वन्द्वानामपि कर्मणामन्योन्यसामीप्यरूपतयाध्वर्युकर्तृकत्वमेव । याजमानकाण्डे तु द्वन्द्वताविधानं न्यायानुसारेण याजमानस्य स्मारकमेवेति सिद्धम् ।

प्रयोजनम्— पूर्वोक्तम् । सूत्रं तु- अध्वर्युरेव द्वन्द्वेषु कर्मसु कर्ता समार्पणेन तस्यानुवादकत्वात् याजमानसमाख्यानं तत्स्मृतिमात्रप्रयोजनं न्यायवशादिति । शेषा

* याजमानार्त्विज्ययोः आर्त्विज्यस्यैव प्राबल्यम् । वि १०।४।१८

* याजमानकाण्डं याजुर्वेदिकम् । वि ३।८।१०,

* याजमानफलं स्वस्वधनसम्पदवे श्रुतम् । भा ३।८।१।२३

* याजमानमन्त्राणां न सर्वित्वम् ज्योतिष्टोमे । सप्त ३।२।८ मीको. पृ. १८३६ 'ज्योतिष्टोमे

क्षप्रदायात् वेदार्थापरमेऽपि, विरोधे त्वाचारस्य निर्विशब्दशक्त्यनुसारेणैव याज्ञिकैरपि न्याय्येयम् । सु. पृ. १००७. * 'वेदाहतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिका '। वा. १।३।६।११ पृ. २३२. * याज्ञिकैः केश्चित् पात्रात् उद्धृत्य सोमभक्षणमुक्तम्, तत् मन्त्य- ( ३।५।९ ) माम्नानाईत्वविरोधादुपेक्ष्यम् । मोम. ३।५।६. * याज्ञिकैः त्रिविक्रमवीरा मखाः पुरस्कृत्य इत्युक्तम् । वा. ६।८।२।५. * याज्ञिकानां अग्न्यन्वाधानादिकर्मणि प्रथमपदार्थे दर्शपूर्णमासारम्भत्वप्रसिद्धिः । भाट्ट. ५।१।११, * याज्ञिकानां अहर्गणपदस्य उपांशुमहाग्रहादारभ्य हारियोजनग्रहाभ्यासपर्यन्ते प्रयोगे लक्षणया प्रसिद्धिः । १।१।९. * याज्ञिकानां गुणशब्देषु द्वयी प्रतिपत्तिः । केषाञ्चित् मीमांसकवदेव गुणत्वम् । अपरेषां तु गुणः कर्म, एवं तद्रूपस्तु गुणः फलान्तरसम्बन्धः । वा. २।२।१२।२७ पृ. ५६१, * याज्ञिकानां व्यवहारेषु 'सोमः' इति 'ज्योतिष्टोमः' इति नामद्वयमुपलभामहे । २।२।६।१७ पृ. ५११.

* याज्ञिकाचारविरोधापत्तेरपि व्यक्तिशक्तिपक्षस्य निरासो न युक्तः । सु. १।७ पृ. ३९

* याज्ञिकप्रयोगरूपाचारप्रामाण्याक्षेपसमाधानार्थत्वेन गुणविधिनामधेयविचारः । कौ. १।४।११२ पृ.१५२.

* याज्य° । ऋत्विग्याज्ययोश्च आनतिचारो धर्मः । भा. ११।४।२।५.

* अध्याप्य एव तु माणवकः प्रधानम्, याज्यवत् । अध्यापकस्तु याजकवत् गुणभूतः । रत्न. ९।१।६।२४ वर्णक २.

* याज्या देवतोपलक्षणार्था । भा. १२।३।१५।३५, * याज्या पात्नीवतग्रहस्य 'येभिर्वो सरथं यादृङ्° ' इति । ३।१।१५।३७, * याज्या प्रदानार्था । ५।१।२।२. * याज्या । यया हूयते सा याज्या । वा ३।२।५।१२ पृ. ७६०, * प्राज्यस्य यागस्यमग्यास्ति तस्य साधन पश्चाच्चोत्प्रमान याज्या इत्यवगम्यते । वा. ३।२।५।१२ पृ. ७६१. * याज्यां नानुवाक्यां चान्तरा न व्यपवदेत् यद्यपवदेत्, यज्ञं विच्छिन्द्यात् पुरोऽनूच्य यज्ञस्य सन्तत्यै । संकर्ष. ४।२।९ * निश्चन् याज्यामन्वाह । भा. १०।८।२०।८९. * याज्यया यजति । संकर्ष. ४।३।३. * 'याज्यायाः अधिवषट्करोति' इति याज्याधर्मः । वा ३।२।५।१२ पृ. ७६०.

* याज्यानुवाक्ये व्यत्यस्यतः, 'वार्त्रघ्नी पौर्णमास्यामनूच्येते ', 'वृधन्वती अमावास्यायाम्' । वा. २।२।३।३ पृ ६७५. * याज्यानुवाक्ये विपर्ययेणाम्नाते विपर्ययेण कर्तव्ये ( पूर्वमनुवाक्या पश्चात् याज्या इति आर्थः क्रम. ) । भा. ५।१।२।२. * याज्यानुवाक्याः । ऐन्द्राग्न्यः पड्युगा आम्नाताः, याज्यानुवाक्यायुगलं तु द्वे आम्नायेते । तत्र प्रथमस्य आद्यं युगलं अन्त्यस्य तु अन्त्यं युगलं इति स्वस्थाननिवृद्धिः क्रमं स्यादिति न्यायात् । संकर्ष. १।२।३, * याज्यानुवाक्ययोः गायत्रीत्रपुरस्ताद्बृहत्यादिधर्माणां निवृत्तौ यथायथं समुच्चयः । ४।३।१२. * याज्यानुवाक्यानां बाह्मानां आग्नेययागाङ्गता । वि ३।२.७.

## याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् । १२।४।२।३ ॥

ऐन्द्राग्नेऽष्टाकपाले कर्मणि अनेका याज्यानुवाक्यायुगलमाम्नातम् । तासु याज्यानुवाक्यासु याज्यानुवाक्यायुगलेषु विकल्पः स्यात् । देवतोपलक्षणार्थत्वात् देवताया उपलक्षण-स्मरण अर्थः- प्रयोजन तासां याज्यानुवाक्यानाम् । तत्र एकेन युगलेन कृते भवत्यर्थम् । अपरं युगलं तु प्रयोगान्तरे भविष्यति । तस्मात् विकल्पः ।

## लिङ्गदर्शनाच्च । ४ ॥

'ऊरू वै देवानां याज्यानुवाक्ये एकया प्रत्यागच्छति तामथत्वन्यथा अथान त्रिस्रः कार्याः ' इति लिङ्गं याज्यानुवाक्यान्यविधानपरे वाक्ये तयोर्द्वित्वं दर्शयति । तस्माद्विकल्पः । याज्यानुवाक्ययोस्तु समुच्चय एव । के.

* याज्यानुवाक्यादीनां तानेन ( एकश्रुत्या ) प्रयोगः । वि. ९।२।८.

* याज्यानुवाक्यादिमन्त्रपाठक्रमात् आग्नेयस्य प्रथमानुष्ठानं पश्चाच्चोपांशुयाजोत्तरमग्नीषोमीयस्य, न तु ब्राह्मणपाठात् अग्नीषोमीयस्य प्रथमं पश्चादुपांशुयाजोत्तरमाग्नेयस्य दर्शपूर्णमासयोः । भाट्ट. ५।१।२.

ॐ यादृशी शीतला देवी तादृशं खरवाहनमिति न्यायः । अयं तुल्यस्वरूपनिरूपणायामवतरतीति । साहस्री १४५.

ॐ यावत् तैलं तावद्व्याख्यानमिति न्यायः । साहस्री ८०७.

० 'यावद्यावद्विषयादाय सुखकं धीयते मनः । अनवस्थादिदोषेण तावत्तावद्विहन्यते ॥' इत्यनेन न्यायेन विषयिणामिव नादिलक्षणस्य सुखवर्गस्य अप्रतिहितत्वेन निरङ्कुशस्यापि पुनः पुनरन्यत्वेन सदा वक्तुमशक्यत्वात् । सु. पृ. ३५०

ॐ यावन्ति इस्तावत्ती शिरोऽन्ययेति न्यायः । साहस्री. २७९.

ॐ यावत्स्नानं तावत्पुण्यमिति न्यायः । साहस्री ४०८.

० माह यावन्तीर्द न शक्नोति कश्चिदपि कर्तुमिति कृत्वा यावत् शक्नुयात् इत्युपनिबध्यते । वा. ३।३।१।२.

० यावन्ति काम्यकर्माणि सौर्यचिमादीन्यनुतिष्ठति तावत् फलं प्राप्नोति । वि ११।१।१. ० यावन्ति नाना- मन्त्राभ्युपधानानि, तावत्त्वानामेव दानयीनः प्राप्त मन नाधिकानाम् । 'गायत्रीषु स्तुवते' इत्यादौ स्तोम- परिमितानामेव ऋचां आगमनस्य दर्शनात् । आगम- नस्य कार्यार्थत्वेन, कार्यक्रमो अधिकाना प्रयोजना- भावात् । इति प्राप्ते, सर्वासामपि आवेशाना 'गायत्रीषु' इत्युद्देश्यकोटौ निर्देशेन विनियोगात् सर्वासामेवागमन 'सर्वे तु वेदसंयोगात् कारणादेकदेशस्य' (जैसू. ३।५।८) इति न्यायात् । संकर्ष. २।१।३८. ० 'यावतो- ऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणाश्चतुष्कपालान्, निर्वपेत्' अत्र वाक्यार्थस्य अन्यथात्वस्यापि (प्रति- गृह्णीयात्—प्रतिग्राहयेत इति) ध्यनाधारणत्वानादोपः । वाल पृ. ८ ० 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्निर्वपेत्' इत्यत्र प्रतिगृह्णीयादित्यस्य निहितदानस्थलार्थत्वे निर्वपेदित्यस्य च यागविध्यर्थत्व भेदोपादानात् युक्तम् । सु. पृ. ९२८. ० 'यावतो- ऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्' इति इष्टि. प्रतिग्रहीतुः दातुर्वा इति संशये, दातुरिति सिद्धान्तः । अश्वप्रतिग्रहेष्ट्यधिकरणम् । मीको. पृ. ७३६। ३।४।११।३०–३१. ० 'यावतोऽश्वान् प्रति- गृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्' इति इष्टि. लौकिके अश्वप्रतिग्रहे वैदिके वेति संशये, वैदिके इति सिद्धान्तः । अश्वदानन्याय. । मीको. पृ. ७३० । ३।४।१०।२८–२९. ० यावन्तः दुग्धः स्युः, तावन्ति दारुपात्राणि उपात्तानि स्युः, तावन्तो ब्राह्मणाः दक्षिणत उपवीतिनः ज्योतिष्टेषु अग्नीनाहुतिमुद्धुः । साकप्रस्थायीये इदम् । संकर्ष. १।३।७

० यावदुक्तं आर्षी. महान्तं च सर्वेन पत्न्या अधि कारः । भा. ६।१।६।२८, ० यावदुक्तं कर्मीयं (यानु- मांस्येषु) गृहमेधीये, स्विष्टकृदादिकमप्यनुष्ठेयम् । १०।७। १०।२४.

० 'यावज्जीवमग्निहोत्रं जुहुयात्' अयं नित्य- निमित्तक नैमित्तिकपुरुषार्थाधिकारविधि । पाल पृ. १४. ० 'यावज्जीवमग्निहोत्रं जुहोति' इत्यत्र किं कर्म- धर्म अभ्यास. यावज्जीविकता, उत कर्तृधर्मो नियम- श्चोच्यते यावज्जीविकता । किं जुहोतिरनुवादः, यावज्जीव इति विधिः उत जुहोति इति विधिः यावज्जीवमिति अनु- वाद इति विचारे, कर्तृधर्मो नियमश्चोच्यते जुहोति इति च विधि. इति निर्णय । भा २।४।१।१–७. ० 'याव- ज्जीवमग्निहोत्रं जुहोति' इति जीवन निमित्तीकृत्य नित्योऽग्निहोत्रप्रयोगो विधीयते न तु काम्ये कालरूपगुणः । वि २।४।१, ० 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यनेन दर्शपूर्णमासकर्मणा सह निमित्तसम्बन्धो विधीयते । २।१।१३. ० यावज्जीवं यज्ञपात्राणां धारणीयम । भा ११।३।१३।३८–४२, ४५ । तत्र च अग्न्याधेयप्रभृति । ११।३।१३।४३–४४.

ॐ यावज्जीवाधिकरणम् । यावज्जीविकाधिकरणम् । यावज्जीविकता कर्तृधर्मो न कर्मधर्मः ॥

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् । २।४।१।१ ॥

भाष्यम्— बह्वृचब्राह्मणे श्रूयते 'यावज्जीवमग्निहोत्रं जुहोति' इति । 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति । तत्र सन्देहः, किं कर्मधर्मोऽभ्यासो यावज्जीविकता

स तत्रापि दोष एव, तत्को वा विशेष । उच्यते । 'मम प्रतिदिनं सर्वश्चोदनार्थं समाप्यते । काम्यवच्च पृथक्त्वेष्टा नव त्वन्ते समाप्यते ॥' मम जीवनमहितसायंप्रातःकालोपजने हि सकृत् कर्म कृत्वा निराकाङ्क्षे पुरुषे सति, पुनरपि तादृङ्निमित्तसमवायात् द्वितीयादिष्वह स्वनुष्ठानम् । तत्र च प्रतिदिनं कर्मसमाप्तं भूयात् इति शक्यं वदितुम् । तथा काम्ये य फलभूमार्थी पुनः पुनः प्रवर्त्तते न तस्य अभ्यस्तस्यैव कर्मण इयं बुद्धिर्जायते, तथाऽत्रेति । न च पुनर्जीवित परिमितकालविधानात् कर्मणोऽपरिसमाप्तस्यैव ऐन्द्रवाय वादिग्रहाभ्यासवदुत्तरमनुष्ठानम् । तथैवयावज्जीवचोदना कर्मसिद्धापरमभ्यासविधानम् । ननु अर्थादभ्यास इति, सत्यमेतत्तेनैव तु लक्षणा अन्यथा श्रुतिरेव स्यात् । तदु-भयत्र श्रुत्यनुरोधेन प्रकरणं बाधित्वा जीवनमुद्दिश्य होमयागविधानात् कर्तृकर्मविधिरित्युपपन्नम् ।

**लिङ्गदर्शनाच्च, कर्मधर्मे हि प्रक्रमेण नियम्येत, तत्रानर्थकमन्यत् स्यात् । ३ ॥**

**भाष्यम्**—लिङ्गं च भवति 'अपि ह वा एष स्वर्गाल्लोकाच्छिद्यते, यो दर्शपूर्णमासयाजी पौर्णमासीममा-वास्यां वाऽतिपादयेत्' इति । कथं लिङ्गम् । कर्मधर्मे हि प्रक्रान्ते सति यावज्जीवनकालेन परिसमाप्येत, न च कालातिपातः स्यात् । तत्र चानर्थकमेव तत् स्यात् प्राय-श्चित्तादि निर्दिश्यमानम् ।

**वा**— अतिपत्तिरिति स्वधर्मातिक्रमोऽभिधीयते । जीवनपरिमितश्च दर्शपूर्णमासयोः कालः । न च तदति-क्रमः कथञ्चिदपि सम्भवति । प्रक्रमेण हि कर्मकालः सम्भृतात् (जीवन) अनतिक्रान्तमित्यभिधीयते । न च कश्चि-दपि दर्शपूर्णमासयाजी सन् अप्रक्रममाणः पर जीवन-मतिलङ्घयति । नहि असौ दर्शपूर्णमासयाजी स्यात् । अथ स्वकालापरिसमापनम् उच्येत, तथा मृतस्य तत् भवति, इत्यनर्थकमेव प्रायश्चित्तविधानम् । मत्पक्षे हि प्रतिमासं दर्शपूर्णमासप्रक्रमसमाप्त्योः जीवन-निमित्ते विधानात् सम्भवत्यतिक्रमः, तदुत्तरकालस्य प्रायश्चित्तविषयत्वेन । ननु पूर्वपक्षेऽपि प्रतिमाससमाप्त्य-भ्युपगमात् तदतिक्रमनिमित्तप्रायश्चित्तविधानं भवि-ष्यति । न शक्यमेव वदितुम् । यत्र हि निमित्ते यत् चोदितम्, तेन तत्र भवितव्यम्, न यथेष्टम् । इह च पौर्णमास्यमावास्यातिपत्तिनिमित्तत्वेन श्रुता, न चाभ्यासस्तच्छब्दवाच्य । यथा न प्रहाभ्यास इति ज्योतिष्टोमशब्दवाच्य । तेन जीवितपरिमिताभ्या-समनुष्ठयोरेव पौर्णमास्यमावास्याशब्दवाच्यत्वमिष्टम्, इति तादृश्यानामतिपातेन निमित्तं स्यात् । ननु च पौर्णमास्यमावास्याशब्देनात कालोऽभिधीयते, स चावयव-विषय एवेत्यवयवातिक्रमो निमित्तं स्यात् । नैतदेवम् । अतिपादनं नाम अतिपद्यमानस्य भवति । न च काल-स्यातिपत्तिः धर्मानतिपत्तिविधानात् । यस्य हि यावान् विषयोऽनतिक्रमणीयत्वेन चोदितस्तस्य तदति-लङ्घनमतिपत्तिरित्युच्यते । न च कालस्य कर्म अनति-क्रमणीयत्वेन चोदितम्, किं तर्हि, कर्मणः कालः । तस्य हि सोऽङ्गम् न तस्य कर्म । तेनैव च तत्कृताव-सद्भावयोः सगुणं निर्गुणं च भवति, न कालः । तेन चानुष्ठानात्कालस्यातिक्रमानतिक्रमौ प्रतिपद्यते, न काल-स्य स्वभावसिद्धत्वात् । तस्मात् य पौर्णमासी स्व-कालमतिपद्यमानामतिपातयेदित्यवधारणात् कर्मण एव निमित्तत्वम् । न च आवयवस्तच्छब्दवाच्य इत्युक्तम् ।

**व्यपवर्गं च दर्शयति कालश्चेत्कर्मभेदः स्यात् । ४ ॥**

**भाष्यम्**— व्यपवर्गस्य समापनस्य दर्शनं भवति 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति । यदि दर्शपूर्णमासाभ्यामिष्ट्वा सोमस्य कालोऽस्ति, तत्त न यावज्जीवनकालेन तौ परिसमाप्येते । अथ जीवन निमित्तम्, उपपद्यते कर्मभेद । दर्शपूर्णमासौ परि-समाप्य सोम कर्मान्तरं कुर्यादिति । अपिच, 'आहि-ताग्निर्वा एष योऽग्निहोत्रं जुहोति, न दर्शपूर्णमासौ यजेत, या आहुतिभाजो देवतास्ता अनुध्यायिनी करोति' इत्यनुध्यायिनीवचनं भवति । नियतो य आहुतिभाग-स्तस्मिन् अदीयमाने अनुध्यायिनीवचनं भवति, यस्त्व-नियत आहुतिभागो न तमनुध्यायन्ति इदं नो भविष्य-तीति । नियतश्च भागो नियमपक्षे भवति, न काम्य-पक्षे । कर्मधर्मे च काम्यमग्निहोत्रं च दर्शपूर्णमासौ च ।

व्यतिरेकानुविधायकस्यानुष्ठानं यत्र स्नानस्य तदत्र यद्रूपात्ते । अत्र च व्यतिरेकानुविधानस्य सर्वत्र ज्ञापकप्रमाणाभावादेव सिद्धेऽन्वयानुविधाने एव विधेस्तात्पर्यम् । अतश्च निमित्तसत्त्वे नैमित्तिकस्याभस्यानुष्ठानबोधनात् प्रकरणे प्रत्यवायोऽनुमीयते । श्रुतौ च 'धर्मेण पापमपनुदति' इत्यादिवाक्यबोधात् , 'नैमित्तकयायेन' ( ४।३।८ ) पापक्षयः एवानुग्राहित्यो नित्यनैमित्तिकस्यले फलम् । यत्र तु रथन्तरसामरादिनिमित्तसत्त्वे नैमित्तिकस्य पाठादेव प्राप्तिरन्वयानुविधानस्य प्रमाणान्तरेण प्राप्तिः, तत्र व्यतिरेकानुविधाने एव विधेस्तात्पर्यम् । अत एव रथन्तराभावे पैठनाधगाम नस्याभावः । अतश्च यावज्जीवपदे त्यपनात्पनुरोधेन जीवनस्य निमित्तत्वागतेः तदनुरोधेन पापक्षयाय नियोगान्तरमेवेदमिति सिद्धम् ।

मण्डन— 'न निहित इति यावज्जीवनाग्निहोत्रे ।'

शंकर— 'यावज्जीवे कर्मविधिः ।'

■ यावज्जीवाधिकरणे नियतनिमित्तकं नैमित्तकं कर्म उक्तं अग्निहोत्रादि । धाल पृ. ८५., * यावज्जीवाधिकरणे यावज्जीविको नियमः सन् पुरुषार्थः, न तु अभ्यासः सन् क्रत्वर्थः इति स्थितम् । सोम. ८।१।१३, * जीवनस्य निमित्तत्वं यावज्जीवाधिकरणे उक्तम् । ६।२।७. * नित्यनैमित्तिकानां पापक्षयहेतुत्वं न्यायसुधाकृतः न सम्मतम् । यथोक्तं यावज्जीवाधिकरणे तेन— 'उक्तोपायक्रमाभावादि सर्वपापक्षये सति । अग्निहोत्राद्यनुष्ठाने कः प्रवर्तेत बुद्धिमान् ॥' इत्यादि । भाट्टालंकार. १२ * निमित्तस्य नियोगान्यथित्वस्यैव यावज्जीवाधिकरणे स्थापितत्वेन अत्र ( अभ्युदयेष्टौ चन्द्रस्य ) प्रयोगान्वयित्वाभावेन काञ्जनादेव तच्छेदानुपपत्तेः । इद पूर्वपक्षे उक्तम् । भाट्ट. ६।५।१, * यथा नैमित्तिकस्थले पापक्षयमात्रफलं तथा यावज्जीवाधिकरणे निरूपितम् । ६।१।१. 'वसन्ते वसन्ते ज्योतिष्टोमेन यजेत' इति ज्योतिष्टोमस्य नित्यप्रयोगविधिः । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति काम्यप्रयोगविधिः इति द्वितीयस्य नतुर्थे यावज्जीवाधिकरणे निरूपितम् । कु. ३।३।१८।१७.

* निमित्तद्वयसत्त्वेऽपि यावज्जीवाधिकरणन्यायेन निमित्तस्य फलद्वयाक्षेपकत्वात् वाक्यभेदापत्तिर्द्रष्टव्या । भाट्ट. २।१।७

* यावज्जीवाधिकरणपूर्वपक्षन्यायेन तावन्तं कालं ( पञ्चदशवर्षपर्यन्तं ) दर्शपूर्णमासावृत्तिरेव धर्माङ्गत्वेन विधीयते इति चेत्र । कौ. २।३।४।९.

* फलापेक्षया यावज्जीवाधिकरणवक्ष्यमाणरीत्या पापक्षयार्थं विनियोग. कल्प्यते । कौ. २।३।१३।२६.

* यावज्जीवाधिकरणसिद्धान्तन्यायेन निमित्तपरत्वस्यैवोपपत्तेः नावृत्तेः कर्माङ्गत्वेन विधिः । कौ. २।३।४।९.

* यावज्जीवादिप्रयोगविधि. निमित्तभूतयावज्जीवनकर्तव्यताऽनुरोधेन अवयमानाङ्गविषयतया सकृत्प्रयोगत्वं मुक्तम् । सु. पृ. ५३२.

* यावज्जीवकर्मणां अग्निहोत्रादीनां स्वफलकामनानपेक्षता । चि. ६।२।७, * यावज्जीवकर्मणामग्निहोत्रादीनां स्वकर्मगुणाः आवृत्तिः । ६।२।८.

* यावज्जीवकालः न प्रहृत्वे. शेषभूत., कर्तृधर्मोऽसौ इत्युक्तं 'कर्तुर्वा श्रुतिसंयोगात्' ( ३।८।१।२ ) इत्यत्र । भा. १२।२।६।२०.

* यावज्जीवदर्शपूर्णमासयोरारम्भणीयायाः सकृदेवानुष्ठानम् । बिन्दु. ९।१।१०.

* यावज्जीवपक्षोऽपि चातुर्मास्येषु विद्यते । संकर्ष ३।१।२०. मीको पृ. १६९१ 'चातुर्मास्येषु पाञ्चवात्सरिकपक्षे०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

X यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् । २।४।१।१ ॥

बह्वृचब्राह्मणे श्रूयते— 'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति । तत्र सन्देहः किं कर्मधर्मोऽभ्यासो यावज्जीवत्वा, उत कर्तृधर्मनियमो वा यावज्जीवेति । अग्निहोत्रं— 'अग्निहोत्रं जुहोति' इत्युदाहृत्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति फले विनियोगः श्रूयते । पुनरपि 'यावज्जीवमग्निहोत्रं जुहोति'

इति श्रूयते । तत्र किं काम्ये एव प्रयोगे यावज्जीवपद जीवनावच्छिन्न कालोऽङ्गतया विधीयते । ततश्च 'सायं जुहोति' 'प्रातर्जुहोति' इत्यनेन विहित एक एव काम्यः प्रयोगो यावज्जीवमभ्यसितव्यः । अथ यावज्जीव पदघटितेनान्य एव प्रयोगो नैमित्तिको विधीयते । ततश्च 'सायं जुहोति' 'प्रातर्जुहोति' इत्येतद्वाक्यद्वयबलात् सायं प्रातः समाम्नातयोः उभयत्र कृतित्वपक्षे, अक्रिया निमित्तप्रत्यवायपरिहारप्रयोजनो वा यत्र निमित्तमनुष्ठेय इति । पूर्वत्र शब्दान्तरादिसहायोत्पत्तिविधिप्रमाणके कर्मभेदे पर्यवसिते सति इदानीं शब्दान्तरादिसहाय प्रयोगविधिप्रमाणकः प्रयोगभेदो निरूप्यते । न च प्रयोगविधिव्यापारस्य चतुर्थाध्यायविषयत्वात् इहानिरूप णीयमिति वाच्यम् । यतोऽनुष्ठानगताङ्गपरिमाणादिविषय प्रयुक्तिलक्षणो व्यापारस्तत्र निरूपणीयः, प्रयोगभेदनिरू पणं तु द्वितीयाध्यायविषय एवेति न विरोधः ।

अत्राय पूर्वपक्षिणोऽभिसन्धिः । जीवनावच्छिन्ने हि काले विधीयमाने प्रकृतस्य कर्मणः कथमनावृत्त्या तत्र प्रकरणमनुपपन्नते, कालस्याङ्गत्वेन ग्रहणात् । दृष्टं च इष्ट्य याऽपि यावज्जीवपदस्य कालपरत्वं 'यावद्दोहं स्वपिति' इत्यादिषु । तदुक्तम् 'कर्मस्थो हि कथंभावाकाङ्क्षा मभिवाञ्छति । कालोपदेशपक्षे च तत्तथैवोप पद्यते ॥' इति (का पृ ६९८) । एवं सति कल्पना लाघवं भवति । अन्यथा प्रयोगान्तरमपूर्वान्तरं च कल्प्येत । न च यावज्जीवं दर्शपूर्णमासिकप्रयोगत्वे सति 'दर्शपूर्ण मासाभ्यामिष्ट्वा सोमेन यजेत' इति विरोधः । अस्य सामि प्रायेणैव इष्टत्वेति । न चायतनमध्ये कथमयमस्यानु ष्ठानमिति । वचनबलादेवा यथागममस्यानुष्ठानाविरोधात् । न च यावज्जीवपदस्य कालपरत्वेन दोषः । सिद्धान्तेऽपि निमित्तत्वलक्षणाया अविशिष्टत्वात् । न च कालस्य निमित्तत्वमभिधीयते, 'अभिक्रम्य जुहोति' इत्यत्र व्यभिचारात् । नापि जुहोतेरभ्यासलक्षणादोषः, जीव नावच्छिन्नकालविधिसामर्थ्यादेवाभ्यासावसिद्धेः श्रुत्यैव प्राप्तेः । न च कालत्वेन अग्निहोत्रसहायस्याऽप्यभि धानात् यावज्जीवं च सर्वाग्निहोत्रसहायस्य काल्पर्यायोपदेश इति वाच्यम् । अग्निहोत्रोपदेशत्वेन तद्भूतकालस्यैवाधिकार त्वात् । तेन यावज्जीवं कालपरत्वाद्भूतकालिकानग्नि होत्रादिकामनाय । तस्मात् यावज्जीवं काम्य एक एव काम्याग्नोऽयमग्निहोत्रप्रयोगो दर्शपूर्णमासप्रयोगश्च, न तु प्रयोगान्तरं विधीयते इति । एवं प्राप्ते, अभिधीयते ।

**कर्तुर्वा श्रुतिसंयोगात् । २ ॥**

अयमभिप्रायः—यद्येवं यदि कालविधौ यावज्जीव जुहोतिपदयोर्लक्षणापत्तेश्च दोषो न भवेत् । तथाहि न तावद्यावज्जीवशब्देन कालोऽभिधीयते भावस्य विशिष्टजीवनमात्राभिधायित्वात् । नापि जुहोतिशब्देन अभ्यास अभिधीयते, होमावच्छिन्नभावनामात्राभिधा यित्वात् । नापि जीवनावच्छिन्नकालविधिसामर्थ्यादेवा भ्यासाक्षेपसिद्धिः, विकल्पासहत्वात् । स किमाक्षिप्य माणः अनाख्यः, शाब्दो वा । न तावदशाब्द शास्त्रार्थो भवति । शाब्दत्वे च जुहोतेस्तत्परत्वात् दुर्वारैव लक्षणेति । तेन लक्षणापरित्यागेन यावज्जीव जीवितावच्छिन्नाभ्यां कालाभ्यामावेव लक्षितो विधातव्या विति विधेयैव लक्षणा प्रसज्येत । 'यावद्दोहं स्वपिति' इत्यादिषु वर्तमानापदेशत्वेन यथाप्राप्तानुवादत्वेनैव गत्य न्तराभावात् दोषायेति । तेन यावत्क्रतुभाविजीवनमेव निमित्तभूतं यावज्जीवशब्देन प्रतिपाद्यते ।

ननु एवमपि निमित्तस्याभिधानात् निमित्तपक्षेऽपि लक्षणादोषोऽभिहित । नैवम् । श्रौतत्वात् निमित्त भावस्य । तथाहि, समानकर्तृकत्वात्परत्वेन गम्योऽसु शासनात् । यथा 'कार संहरति' इति । जीवनक्रियाया होमक्रियासमभव्याप्तावदभिधानात प्रतीयते । न च जीव नस्य होमसमय साध्यत्वेन, साध्यत्वाप्रतिपादकश्रुत्यभा वात् । नापि साधनत्वेन, यावच्छब्दोपलक्षणं जीव नस्य सामर्थ्याभावेन साधनत्वार्थत्वात् । न चैवमेव काम्यप्रयोगस्य यावज्जीवमाम्नायमानत्वात् पर्यायेणैव जीवनाख्य प्रत्ययस्यासमन्वयो भविष्यतीति वाच्यम् । तथा सति विधानवाक्यासलक्षणादोषस्य दुष्परिहरत्वात् । निमित्तस्य तु साध्यसाधनभावव्यतिरेकेण निमित्तत्वेने वान्वयोपपत्तेः यावज्जीवपदस्य जीवनस्य निमित्तत्वमेव युक्तम् । तेन यद्यपि यावज्जीवपदस्य जीवनस्य जीवनमभि

व्याहृतक्रियासंबन्धमात्रमभिहितम्, तथापि क्रियान्वयार्थे-च्चारणस्य क्रियान्वयस्य च निमित्ततान्यति-रेकेणासंभवात् निमित्ततारूपसम्बन्धविशेषप्रतिपादनार्थमेव पुनः समुच्चारणेऽप्यन्यविशेषस्याप्यनुमीयते । तेन यथा 'गौर्गच्छति' इत्यत्र गवादिशब्दानामेकव्यक्त्यभिधानेऽपि गभिधानस्य क्रियासम्बन्धार्थत्वात् क्रियासंबन्धस्य च व्यक्तिव्यतिरेकेणासंभवादभिधानस्य व्यक्तिपर्यन्तत्वा-द्व्यक्तेरपि श्रौतत्वम्, तथा अत्रापि संबन्धमात्राभिधा-नस्य निमित्तपर्यन्तत्वान्निमित्तमपि श्रौतमेव । एतच्चाकृत्य-धिकरणे विस्तरेण प्रतिपादितम् । कान्त्या तु मतिशब्दा-भिधेयसामान्यव्यक्तिपरत्वाभावात् अर्थान्तरत्वेन लक्षण-यैवगम्यमेवेति लक्षणादोषो दुष्परिहर एव । तथा जुहो-तिशब्दे चाभ्यासलक्षणा प्रागुक्तैवेति । निमित्तपक्षे तु प्रतिनिमित्तं कृत्स्नशास्त्रार्थसमाप्तेः प्रयोगभेदादभ्यासा-भावेन नाभ्यासलक्षणादोषः । किं तर्हि ? इयमेव श्रुतिवृत्तत्वमिति । तदुक्तम् । 'यावज्जीवपदात्स्यात-श्रुतिवृत्तत्वसम्भवः । मत्पक्षे भवतस्त्वत्र लक्षणा-वृत्तता भवेत् ॥' इति (वा. पृ. ६२४)।

तेन 'अग्निकामं जुहोति' इत्यादिषु सम्बन्धान्तर-प्रतिक्षेपकस्य यावच्छब्दस्य सम्बन्धाभावादिति साध्यसाधन-लक्षणोऽपि संबन्धोऽविरुद्ध एव । ननु यावच्छब्दोपबन्धो-ऽपि गमुष्णो निमित्तार्थत्वं व्यभिचरत्येव । यथा 'याव-ज्जीवं सुहृत्स्य' इति । सत्यमेवम्, किन्तु निष्प्रयोजनत्व-समभिव्याहृतस्य यावदुपबन्धस्य तमुष्णो निमित्तत्वाव्यभि-चारित्वोक्तत्वात् तथाभूतस्यैव निमित्तार्थत्वम् । तत्र निमित्तत्वं न धात्वर्थे, न च भावनायाम्, नापि फले, मानान्तरविरोधेन तेषु निमित्तत्वासम्भवात् । निमित्ते सत्यपि तेषामनिष्पत्तेः । किन्तु विधेः शब्दव्यापारात्मनः कर्तव्यताया धात्वर्थसम्बन्धे सति, तस्यैवावश्यकर्तव्यतावगमात् । न चैवं सत्याहारविरो-धादावश्यानुष्ठेयत्वम्, 'सायं जुहोति प्रातर्जुहोति' इति सायंप्रातःकालावच्छिन्नस्यैव जीवनस्यापेक्षायत्तेन निमित्तत्वाभ्युपगमात् । तदुक्तमाचार्येण । 'जीवना-देर्निमित्तस्य साम्यात् कालो विशेषकः । निमि-त्तार्थस्तत्र जातिकर्मणोऽवश्यकार्यता ॥' इति ।

तेनायं वाक्यार्थः — यावत् प्रातर्जीवनवानग्निहोत्रं जुहुयादेवेत्यवश्यकर्तव्यता होमस्य प्रतीयते । तदेवावश्य-कर्तव्यं लोकेऽवगतम्, यस्याकरणे प्रत्यवायो भवति । तत्राप्यभावस्य भावोत्पत्तिहेतुत्वाभावात् तत्कालीनान्य-क्रियाकरणस्यैव प्रत्यवायोत्पत्तिहेतुत्वम् । न च प्रत्यवायनिवृत्तिः फलम्, प्रागभावरूपत्वेन साध्यत्वा-भावात् । किन्तु प्रयोजनमात्र तु अत्र विध्यवरुद्धमान-नायाः पुरुषसमीहितसाध्याकाङ्क्षाया बुभुक्षुमुमुक्षुसाधा-रण्यात् नैमित्तिकविधेः उभयसाधारणमुपात्तदुरितक्षय-रूपमङ्गीक्रियते ।

न चैवं काम्यभेदाद्भावनाभेद इति वाच्यम् । अग्नि-होत्रस्य काम्यप्रयोगे स्वर्गः फलम्, इह दुरितक्षय इति । 'गुणिधौ स्वविभागात्' इत्यनेन न्यायेनोत्पत्तिविस्तरत्वा-भावात् पुनःश्रुतेस्तु प्रयोगान्तरविधानेनैवार्थवत्त्वात् । ...

... स्येऽग्निहोत्रस्य दर्शपूर्णमासयोश्चैकः काम्यप्रयोगः । अपरस्तु यावज्जीवप्रयोगावस्थानुष्ठेयः । अत एव किञ्चिद्-ङ्गहानेऽपि न वैगुण्यम् । यावज्जीवमनदर्य कर्तव्यं सर्वा-ङ्गोपेतं च इति नियमेन किञ्चिदङ्गाभावस्यापि विघ्नसु-मतत्वात् । तेन श्रुत्यनुरोधेन जीवननिमित्तः प्रयोग-भेदोऽत्र विधीयते इति सिद्धम् ।

प्रयोजनम् — पूर्वपक्षे जीवनलक्षितकाम्यस्याङ्गत्वे-नाग्निहोत्रदर्शपूर्णमासविकृतावतिदेशः । सिद्धान्ते तन्नेति ।

सूत्र तु — कर्तृधर्मः प्रयोगो निधीयते 'यावज्जीवं जुहोति' इति श्रुतिसंयोगात् श्रुतिवृत्तत्वादित्यर्थः । नीता।

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् । २।४।१।१ ॥

'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्ण-मासाभ्यां यजेत' इति श्रूयते । इह यावज्जीविकत्वं कर्मधर्मः अभ्यासः, जुहोतिस्तत्पराः, यावज्जीवमिति विधिः, प्रकरणात् । एवं सति प्रकरणमनुगृह्यते । इति पूर्वपक्षः ।

कर्तुर्वा श्रुतिसंयोगात् । २ ॥

'यावज्जीवमग्निहोत्रं जुहोति' इति यावज्जीविकः अभ्यासः कर्तृधर्मः, न तु कर्मणो धर्मः । जीवने

निमित्ते नियमेन अग्निहोत्रहोमस्य नित्य प्रयोग, पुरुष धर्मतया विधीयते। श्रुतिसंयोगात् यावज्जीव इतिपदश्रुते समवयसभवात्। यावच्छब्दो हि जीवनावधिकालस्य वाची, धातुश्च जीवनवाची। अमुष्य स्वप्रकृत्यर्थस्य जीवनस्य यावदर्थे सम्बन्धगमनाति। तथ यावदवधिविशेष जिज्ञासा यावच्छब्दस्य तात्पर्यग्राहस्य सत्वात् निमित्तत्व रूपमेव आश्रीयते। कालविधिपरत्वे तु तद्धातलस्य यावज्जीवपदे कालरूपता स्यात्। सा न श्रुत्यथ सम्बन्धेन न युक्ता। तस्मात् यावज्जीविकोऽभ्यास कर्तृधर्म इति सिद्धान्त।

लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत् स्यात्। ३॥

'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति यावज्जीविकोऽभ्यास कर्तृधर्म इति सिद्धान्ते हेतुमाह। 'अग्नये पथिकृते पुरोडाश-मष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपादयेत्' इति दर्शपूर्णमासयो स्वकालातिक्रमे प्रायश्चित्तस्य पथिकृतेष्टे विधानरूपस्य लिङ्गस्य दर्शनात् यावज्जीविकोऽभ्यास न कर्मधर्म, किन्तु कर्तृधर्म। कथम्? कर्मधर्म हि यस्मात् काम्यप्रयोगस्य हेतुतया यावज्जीवनकाले विधीयमाने प्रक्रमेण प्रक्रान्तेन यावज्जीवनकालेन काम्यप्रयोगो नियम्येत। यस्य उपरम। समाप्यत। एवं च कर्मधर्मपक्षे यावज्जीव अभ्यासस्य एकस्य प्रयोगस्य व्याप्ततया मध्ये समाप्त्यभावेन जीवनदशायां न कोऽपि दर्शपूर्णमासाभ्याम् इष्टवान् भवति, इति यावज्जीवनकालोपचरमेव दर्शपूर्णमासौ इति वक्तव्यम्। तथापि सत्येव च दर्शपूर्णमासयो मध्ये तत्र तस्मिन् जीवन समाप्ते सति अयत् स्वकालाति-क्रमप्रायश्चित्ततया पथिकृदिष्टिविधान अनर्थक अलगस-र्थक स्यात्। तस्मात् अभ्यास कर्तृधर्म।

व्यपवर्गं च दर्शयति कालश्चेत् कर्मभेद स्यात्। ४॥

यावज्जीविकोऽभ्यास कर्तृधर्म न कर्मणो धर्म इति सिद्धान्त हेत्वन्तरमाह। 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति सोमात् प्राक् दर्शपूर्णमासयो व्यपवर्ग समाप्तिं दर्शयति। कालश्चेत् यदि हि यावज्जीवनकाल कर्मणोध स्यात् तर्हि दर्शपूर्णमासप्रयोगस्य मध्ये एव सोमे कृते प्रकान्तस्य दर्शपूर्णमासकर्मण भेद नाम स्यात्। कर्तृधर्मत्वे तु प्रतिमास दर्शपूर्णमासप्रयोगस्य समापनात् नाय दोष स्यात्। अथवा कालश्चेत् दर्शपूर्णमासविनिर्मुक्त सोमकाल तर्हि यथोक्त एव कर्म भेद स्यात् कर्मप्रयोगभेद स्यात्। इति।

अनित्यत्वात्तु नैव स्यात्। ५॥

यदि च यावज्जीवनकाल कर्मधर्म स्यात् तर्हि 'जरामर्यं वा एतत् सत्र यदग्निहोत्रं यद्दर्शपूर्णमासौ, जरया ह वा एष एताभ्यां निर्मुच्यते मृत्युना च' इति वचनम् एव न स्यात्। कर्मधर्मे हि वचनमिदं निरर्थकं अनित्यत्वात्। काम्यप्रयोगधर्मे हि यावज्जीवनकाले विधीयमाने नित्यप्रयोगस्य अभावात् काम्यप्रयोगस्य च अनित्यत्वात्, अन्यानुष्ठेयस्वरूपकथनपर्यंत्वयवचन विरोध। तुशब्द हेतुसमुच्चये। तस्मात् यावज्जीविको-ऽभ्यास कर्तृधर्म।

विरोधश्चापि पूर्ववत्। ६॥

'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यादिना यावज्जीवकालाभ्यासे कर्मधर्मतया विधीयमाने, स निरूढिष्वपि अभिनिविश्येत। तथा सति येऽमुष्य प्रकृत्य 'यदि निर्वपत् अथैव निर्वपत्' इति वचन व्यर्थं सत् विरुध्येत। 'प्रजापतिः पुरुषमसृजत' इत्युपक्रम्य तैत्तिरीयके अग्निहोत्रदर्शपूर्णमासपशुबन्धादीनां केषां चिदेव नित्यतया परिगणनं विरुध्येत। पूर्ववत् पूर्व सूत्रोक्तजरामर्यवाक्यविरोधवत् विरोध। सिद्धान्ते तु जीवनस्य निमित्तत्वेन निमित्तस्य यावत्कृतया अनति देशात् नास्ति विरोध।

कर्तुस्तु धर्मनियमात् कालशास्त्रं निमित्त स्यात्। ७॥

यावज्जीविकोऽभ्यास कर्तुं धर्मस्य नियम। तस्मात् पूर्वपक्षाभिमत यावज्जीवमिति कालशास्त्र निमित्त स्यात्। अथवा कर्तु धर्मनियमात् उक्तन्यायेन कर्तृ-धर्मत्वस्य सिद्ध सति कालशास्त्र कालवाचकतया मान यावज्जीवपद च तत्तो निमित्तवाचकमेव स्यात्।

अथवा । ननु एवं अग्निहोत्रस्य दर्शपूर्णमासयोश्च नित्यत्वमिदानीमपि पशुनानुमीयकत्वोमितिप्रयोगेषु का गतिः ? तत्र यावज्जीवत्वाभावात् इत्यत आह— कर्तुः धर्मनियमात् काम्यप्रयोगात्मकस्य प्रयोगस्य ज्योतिष्टोमादौ पुरुषार्थतया नियमेन विधानात् 'वसन्तेवसन्ते ज्योतिषा यजेत' इति वीप्सायुक्त कालस्यान्य वसन्तस्य निमित्तार्थं निमित्तनानोपनार्थं स्यात् । इति सिद्धो ज्योतिष्टोमादेः नैमित्तिकः प्रयोगः । तस्मात् न काम्यप्रयोगस्य एकस्य यावज्जीवकाल अभ्यासो विधीयते, किन्तु जीवने निमित्ते अग्निहोत्रादेः बहुना प्रयोगाणां विधिः इति सिद्धान्तः । के.

* 'यावज्जीविकोऽभ्यासः' । (२।४।१।१) इत्यत्र कालाभ्यासयोः अन्योन्यविधिहेतुत्वं यावज्जीवम् । वा. ३।१।३।६. * यावज्जीविको नियमः कर्तृधर्मः, स पुरुषार्थत्वात् नातिदिश्यते । टुप्. ८।१।१।३।२०. * यावज्जीविके प्रयोगे एकदेशोपसंहारकर्मणोऽपि पुरुषोऽभिधिय्यते । यथावस्थ्यधिकरणम् । ६।३।३।१—७.

* यावन्निमित्तं नैमित्तिकस्य अनुष्ठेयत्वम् । सु. पृ ९६९.

☒ यावद्वचनं वाचनिकमिति न्यायः । यथा— महापोतसातभयोः वध्यमानपर्यन्तं निषेधस्तत्रेऽपि यावद्वचिता पुरस्ता न स्यत्तं यावत्प्रजेदित्युक्तं नन्वेति । अन्यत्रापि— यथा न धर्मोऽधर्मयोर्मनुष्यामित्वकालेन चातीतात्पण्डे पिशाचमोचनाख्याने पिशाचस्यापि तत्स्नानादिपापक्षयनाशोक्तिर्निपादस्थपतीष्टिन्यायेन तन्मात्रविषयतेति गोप्यमिति । साहस्री. ५७३. * यावद्वचनं वाचनिकं न तत्र न्यायः क्रमते । बा. ५।८।४।११, * यावद्वचनं वाचनिकं न सहमुपसङ्क्रामति । ५। ३।८।१२, * यावद्वचनं वाचनिकं भवत्येव । ३।५।१८। ४४, ॥ यावद्वचनं वाचनिकम्, 'यावति वचनं तावत्येव तद् भवितुमर्हति' । १०।२।१७।४८.

* यावच्छब्दो व्याप्तिवाची । सु पृ ९६८.

☒ यावत्संपातमुपिन्वेति न्यायः । यावत्पुण्यफलानुभूतिनिर्णयस्तावत्पर्यन्तं स्वर्गभोगाननुभवन्ति मुरर्मिण इति । साहस्री ५४२.

* यावत्स्वं नानाग्ने उत्तरासु गोदोहनम् । ११।१। ५।८०—५३. मीको. पृ. १०९८ 'उत्तरागोदोहाधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* युक्तिमात्वेऽर्थे पुरुषविशेषस्य अनादरणीयत्वात् युक्तियुक्तं कद् बृहस्पत्यादिभिः उक्तम्, तत् 'मूर्खप्रलापत्वात् न ग्राह्यम्' इति अवसरमहो न कार्यः । एवमेव वार्तिककाराद्युक्तमपि युक्तिमात्रानुसारत्वमानेन अग्राह्यं न भवति । एव मूलग्रन्थानुक्तमपि अर्थस्य युक्तिशास्त्रयुक्तस्य ग्राह्यत्वम् । सु पृ. ९३२.

* युगादिकालपरिमाणं ज्योतिःशास्त्रे यत्सहस्रसिद्धयर्थं गणितविशेषप्रदर्शनेनाप्यनुमानपूर्वकम् । सु पृ १२८.

☒ युगपदेव विशेष्ये विशेषणं सर्वत्र च विशेषणान्तरमिति न्यायः । यथा– 'हरति शोकमारमवित्' इत्यादौ प्राचीनतार्किकमतमाश्रित्यादसिलपदार्थस्मरणम् प्रतिसंस्कारेण सर्वपदार्थानामन्वयेन क्रियाकर्मभावेनान्वयरूपः शाब्दबोधो भवतीति संक्षेपः । साहस्री. १८०.

* युगपदधिकरणवचने द्वन्द्वो भवति । अधिकरण शब्दस्य निपातोऽर्थः, स च अनेको युगपदेकेन पदेन त्रोच्यते तत्र द्वंद्वः यथा च धवरवदिरौ इत्यत्र धवपद उक्तवन्न खदिरसहितधवपरम्, इतरसहितधवपर वा । इतस्तु खदिरपदान्निर्दिश्यते । एवं खदिरपदमपि । भैरं युगपदधिकरणता । भाट्ट ६।१।५.

* युगपदधिकरणवचनता । अधिकरण द्रव्य अर्थविशेषमिति यावत् । तस्य युगपदभिधानम् । सोम. ६।६।१. * युगपदधिकरणवचनतायां द्वन्द्वस्मृतेर्द्विवचनबहुवचनोपपत्तेश्च । 'अग्नीषोमीयमेषयोः' इति दर्शनात् यथेष्ट खदिरो च पत्नी चेति निर्दर्शनं निर्वक्ते । भा. ६।१।८।१२७ * युगपदधिकरणवचनताया द्वन्द्वस्मृते । यत्र द्वौ बहवो वा युगपदभिधातुं इष्यन्ते, तत्र द्वन्द्वसमासो भवति । बा. ३।१।६।१२४ पृ १३७२.

* युगपदनेकामेध्यदर्शने प्रायश्चित्तं मन्त्रावृत्तिर्न कर्तव्या किंतु सकृदेव मन्त्रपाठः । भा ११।४।१७।५०.

* युगपदनेककपालभेदने होमसंस्कारवत् वाक्यभेदस्तन्त्रकप्रसक्तिः . . । भाट्ट. ५।२।१२.

'यत्र ग्राम' इत्यत्र 'स च अहं च त्वं च वयं' इत्याद्येकशेषात् अन्यतात्पर्यकेऽपि भर्गेषु आरोपित स्वातन्त्र्यप्रतीतिः। मणि पृ. १६३.

■ युष्मत्पदार्थः। सन्निहितश्रोत्राभिमुख्यस्य युष्मदर्थत्वात्। शु. पृ. ११९९.

* युष्मत्पदशक्यतावच्छेदकं प्रकृतशाब्दबोधाश्रयत्वप्रकारकवक्तृमिन्नविशेष्यकत्वनिरूपित-विषयीभूतशाब्दज्ञानत्वम्, प्रकृतशाब्दबोधनिष्ठविषयतानिरूपितवक्तृमिन्ननिष्ठवक्तृमिच्छाविषयतावत्त्वं वा। रहस्य. पृ. ५८

* यूथः। भवन्ति हि बहूना एकवचनान्ताः शब्दाः समुदायापेक्षाः। यथा यूथं वनं कुलं परिषत् इति। भा ७।२।१।३ पृ. ४८० अपेक्षामात्रमेव समुदायस्य ब्रवीति, नाभिधेयत्वम्। यूथवनशब्दावपि यदा समुदायोपसर्जनसमुदायिवचनौ तदा साधकत्वेन दृष्टान्तौ। यदा तु समुदायमेव ब्रूतः, तदा निमित्तैकवचनत्वसामान्येन दृष्टान्तत्वम्। बा.

¶ यूकाभिया कन्थाऽनाश्रयणन्यायः। उक्तं च 'काव्ये शुभे विरचिते खलु नो खलेभ्यः कश्चिद्गुणो भवति यद्यपि सन्तीह। कुर्मो तथापि सुजनार्थमिदं यतः किं यूकाभयेन परिधानविमोक्षणं स्यात्॥' इति। साहस्री. ३५५.

* यूपः अग्नीषोमीये पशौ छेद्यः. अहःस्वर्वसत्त्रागेन कर्तव्यः। भा ३।६।३।१०, * यूपः उपशय. नाम एकादशिन्याम्। तत्र तोपणादयः संस्कारा न क्रियन्ते। छेदनाद्यस्तु तूष्णीं क्रियन्ते, नात्र पशुर्बध्यते। दक्षिणतस्तु भूमौ उपशेते। ७।३।१२।२२-२८, * यूपः ऐकादशिनेषु प्रतिपशु भिन्नः। ८।१।८।१५. * यूपः खलेवाली नाम शाखाभेदः। खले कृषीकर्मभिर्बलीवर्दबन्धनाय निखातो मेढि., स एव यूपत्वेन ग्राह्यः। वि. १०।१।५, * यूपः खलेवाली साधस्के। तत्र छेदन-तक्षलोपात् यूपाहुतिर्लुप्यते। १०।१।५., * यूपः खलेवाली साधस्के। तत्र पर्यूहण परिव्याण परिवेषः अञ्जनं प्रोक्षण इत्यादयो धर्माः कर्तव्याः, सार्थकत्वात्, अविरुद्धत्वात्, अदृष्टार्थत्वाच्च। तोपण-तक्षण-उच्छ्रयणानि तु न कर्तव्यानि। १०।२।२२-२३, * यूपः खलेवाली साधस्के, तत्र स्थाण्वाहुतिर्नास्ति, अयूपात्मकत्वात् यूपीयाग्रावनस्थाणोरभावात्। १०।१।६, * यूपः खलेवाली साधस्के। ■ च न खादिर एव, किन्तु यत्किञ्चिद्वृक्षजन्य.। १०।२।२१. * यूपः खादिर एव वाजपेये। भा १०।७।१६।५१, १२।३।८।१८, * यूपः खादिरः नित्यश्च नैमित्तिकश्च अग्नीषोमीये पशौ। ४।३।३।५-७, * यूपः खादिरः पालाशो रौहितको वा ज्योतिष्टोमे पशुनयार्थं नव्यम्। ११।३।१।११, * 'यूपः खादिरो वीर्यकामस्य' इति फलविधिः। ४।३।१।१, * यूपः 'खादिरे बध्नाति, पालाशे बध्नाति, रौहितके बध्नाति' एकार्थाः मन्त्रो विकल्पन्ते व्रीह्यादिवत्। २।२।६।१७.

¶ यूपश्चाकर्मकालत्वात्। ११।३।२।३॥

(ज्योतिष्टोमे पशुनयार्थं किं भिन्ना यूपाः उत एक एवेति विचारे) सिद्धान्तमाह। यूपः तन्त्रेण पशुनयार्थं एक एव स्यात्। अकर्मकालत्वात् पशुकर्मणः काले नासौ भवति, 'दीक्षासु यूपं छिनत्ति, क्रीते वा राजनि' इति अन्यस्मिन्नेव काले विधानात्। तस्मात् ज्योतिष्टोमे पशुनयार्थं यूप एक एव।

एकयूपं च दर्शयति। ४॥

ज्योतिष्टोमे पशुनयार्थं एकयूपं एकत्वेन यूपं दर्शयति। सवनीये पशौ 'निवृत्ता यूपं परिवीय' इति परिव्याणं विदधाति। यूपभेदे तु चोदकेनैव परिव्याणस्य प्राप्तत्वात् न विधातव्यम्। के.

* यूपः छेदनस्य प्रयोजकः, स्वरुस्तु अनुनिष्पादी। 'यूपस्य स्वरुं करोति'। वि ४।२।१. * यूपस्त्वेक ज्योतिष्टोमे पशुनयार्थम्। अग्नीषोमीय-सवनीय-अनुबन्ध्या पशवः। यूपन्याय. ११।३।३।२-८. * यूपः 'दृष्टादृष्टसम्भवात्.' इति साम्प्रदायिकाः। अत एव खादिरस्य कदर प्रतिनिधिः सम्भवति। भाट्ट. १०।१।५., * यूपः न केवलेन छेदनेन भवति, किन्तु प्रोक्षणादिभिः संस्कारैर्भवति। 'यूपं छिनत्ति' इति तु छेदनग्रहणं च मुख्यत्वात् प्रदर्शनार्थम्। भा. ११।३।४।६. * यूपः परिधिश्च. पशुमत्सु चातुर्मास्येषु 'परिधौ पशुं नियुञ्जीत'। वि. ५।३।१२, १०।१।३. * यूपः

अनुवादे च गौणी न दोषः । प्रतिषेधश्च यूपसामान्यस्यैव । अप्राकृतो वा यूपो विधीयते इति न यूपशरीरघटनातिरिक्ता धर्मा भवन्ति । इति प्राप्ते, यदङ्गाचिन्त्यत्वेन नियेवस्यैव तत्र मिलुशादित्यशेन विवेगपि प्रतीते- र्मीचाभावयोरेकस्मिन् प्रयोगे असम्भवाचदुभयसमाधित्स्यैव प्रवर्तमानो विधिरन्यानेव यूपानुद्दिश्य सकृशमानयिकृतं विदधाति । ' एका सामिधेनीमन्वाह ' इतिवत् । अत एव नैनयिति सानयदने नोभयसमाभिर्युज्यते । संकर्षे. १।४।१६

* यूपे- एकयूपे एकादश पशवो यदा नियुज्यन्ते तदा एकस्येव पशो, रशनया पूर्वस्मिन् पक्षे, सर्वेषा सिद्धान्ते । भा. ४।४।१०।२८, * यूपे नियोजनं पशुधर्मः । ३।६।७।१८. * यूपे परिधिरूपे, ' परिधौ पशु नियुञ्जीत ' इति गुणविधिरयं न कर्मान्तरम् । वि. १०। ३।१, * यूपे परिधिरूपे परिधिधर्मा अविरुद्धा. यूपधर्माश्च कर्तव्याः न केवल परिधिधर्मा एव । १२।२। १०-११, * यूपे परिधिरूपे पशुनियोजन पशुमत्सु चातुर्मास्येषु । १२।२।१२, * यूपे परिधिरूपे ' यूपाय आज्यमानाय ' इत्याञ्जनप्रैषे ' परिधयेऽज्यमानाय ' इत्यूहो न कर्तव्यः । १२।२।१३, * यूपे परिधिरूपे, स्वरुपरिवासनावटस्तरणादयो न कर्तव्याः । अञ्जनादयश्च कर्तव्याः । १२।२।११.

यूपे विशाखेऽपि यूपधर्मा शाखयोर्भेदेन कार्याः ॥

शाखायामेव नियोजनप्रानात् गलेष्वालीवत् तस्या अयूपत्वान्न तत्र यूपधर्माः कर्तव्याः । इति प्राप्ते, धर्माणां पशुनियोजनरूपकार्यार्थत्वात् शाखेवात्मा अपि स्वरूपाविधायकत्वमनालीनाभिव्यक्तस्य यूपस्यैव धर्मा । संकर्षे. १।४।५

यूपे विशाखे ' दिवमग्रेण ' इत्यत्र ' दिवमग्राभ्या ' इत्यूहः कार्यः ॥

' दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिंसी ' इति मन्त्रस्य द्युलोकान्तरिक्षयोरसंभवेन असमवेतार्थत्वात् विद्यान्त ऊहः । इति प्राप्ते, अग्रमध्यशब्दयोरसमवेतार्थत्वाभावाद् अग्राभ्यामित्यादिरूहः कार्य एव । संकर्षे. १।४।७.

यूपे विशाखे नियोजनस्थानस्यैव भेदः ॥

' मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च समाश्रयकामः ' इति प्रक्रम्य श्रुते ' विशाखो यूपो भवति ' इति वाक्ये विशाखत्वस्य शकलाद्यवादिवदृष्टार्थत्वादग्रभागे द्वे शाखे यूपस्य स्याताम् । इति प्राप्ते, वारुणप्राप्तिकानिहाय्यवत् कार्यार्थत्वे सम्भवत्यदृष्टार्थत्वायोगात् पशुनियोजनस्थाने एव शाखाद्वयात् यूपः स्यात् । अत एव ' द्वे एते देवते समृध्यै ' इति वाक्यशेषे देवताभेदेन यूपद्विशाखतोक्तिः कार्यार्थत्वे एव युज्यते । ' विशाखे यूपे मैत्रा आलभ्यन्ते ' इत्येतद्वाक्यशेषे ' मैत्राना प्रथममाश्विन कालाय मध्यम ' इत्यादिना शाखाभेदे पशुबन्धनोक्तिरपि युज्यते । संकर्षे. १।४।४.

यूपे विशाखता उपरावूर्ध्वं कतिपयाङ्गुलपरिमितभागे एव न तु नाभिदघ्नादूर्ध्वम् ॥

रशनापरिव्याणार्थं नाभिदघ्नं स्थलमवशेष्य तदूर्ध्वमेव शाखाभेदः कार्यः । इति प्राप्ते, शाखाभेदेन परिव्याणस्यावश्यकत्वात् उपरप्रदेशे कतिपयाङ्गुलोर्ध्वमेव विशाखता । संकर्षे. १।८।६

* यूपे स्वाष्टाहुतिः । अग्नीषोमीयपशुप्रकरणे ' स्वाष्टाहुतिं जुहोति ' ' वनस्पते शतवल्शो विरोह इत्यावश्चने जुहोति ' । यूपे वृक्णे सति अवशिष्टे वृक्षमूले स्थाणु तत्र आहुतिः । इयं यूपसंस्कारार्था स्वाष्टाहुतिः अधूपारिमकया गलेनात्मा न भवति । वि. १०।१।६

* यूपाङ्गं रशना ज्योतिष्टोमे । रशनाऽधिकरणम् । ४।४।१।२२-२४. * ' यूपाङ्ग वा तत्संस्कारात् ' ( ४।४।१।२३ ) । नहि एषा ( रशना ) साक्षात् पशुसम्बन्धिनी, किं तर्हि ' यूपाङ्ग वा तत्संस्कारात् ' इति वक्ष्यति । वा ३।६।१०।३१. * यूपाङ्गस्य परिव्याणस्य अपि छेदनकालिकस्य पशुकाले अकर्ष । संकर्षे. १।८।२१.

* यूपाञ्जनं अग्नीषोमीयपशौ ' आज्येन यूपमनक्ति ' आज्यसंस्कृतत्वम्, आज्यशब्दस्य जातिवाचक-

* यूपैकादशिन्यां अञ्जनादिपदार्थेषु प्राप्तेषु अञ्जनादिना परिव्याणान्तेन अनुसमयः, न तु अञ्जनादीनामेकैकेन । ' अञ्जनादि यजमानो यूपं नावसृजेत् आपरिव्याणात् ' इति वचनात् । भा. ५।२।५।७–९.
* यूपैकादशिन्या अञ्जनादिपरिव्याणान्तानुसमयः कर्तव्यः । एकस्मिन् यूपे समुदायं कृत्वा द्वितीये यूपे समुदायः कर्तव्यः इति । वि. ५।२।५.

**यूपैकादशिन्यामपि रशनाद्वयेन युगपत् परिव्याणम् ॥**

वैरूप्यद्विरशनायाः एकस्याः विहितत्वात् परिवीयैतया यथाऽनुक्रमम् । इति प्राप्ते, युगपदुभाभ्यां परिव्याणं प्रकृतिवत् । संकर्ष. ११४।१४

**यूपैकादशिन्यां उपराणां दैर्घ्येण साम्यम्, न तिर्यक्त्वेन ।**

' उपरसंमिता मिनुयात् पितृलोककामस्य, मध्येन संमिता रशनासंमिता च मनुष्यलोककामस्य, चषालसंमितामिन्द्रियकामस्य ' इत्यादिभिर्वचनैः कामनाभेदेन एकादशानामुपरादीनां मिनीयमानं साम्यं परस्परमाम्नायपाठात् एकविधमेव स्यात् । इति प्राप्ते, वचनसार्थक्याय साम्यपाठमनादृत्यापि, अन्योन्यविलक्षणमेव स्वीकार्यम् । यूपपरिमाणसूत्रांशेन दैर्घ्यमुपरस्य विहितमस्ति । यूपस्य तु एकादिपञ्चत्रिंशदरत्नयो विकल्पिताः । तेन तद्भेदेन उपराणां परिमाणवैषम्ये प्राप्ते दैर्घ्येण साम्यं कृत्वा मिनीयते, न तिर्यक्त्वेन । भवटान्तर्निखेयो यूपाश्रीमाग उपरम् । तस्य हि ' अतृण्णमुपरं भवति ' इति तक्षणनिषेधेन तवराभवात् । मध्यभागस्य निम्नमध्यवाचेन परिमितत्वेन दैर्घ्यतः ऐकरूप्यस्य सत्त्वादेव तस्य रशनया पृथुत्वेनैव साम्यविधिः । एवं चषालेऽपि । संकर्ष. १।४।२४.

* यूपैकादशिन्या एकादशो यूपः उपशयो नाम, नासौ उच्छ्रीयते, किंतु स भूमावेव शेते दक्षिणतः । अमन्त्रकच्छेदनादिभिर्विकृतयूपधर्मकत्वेन तत्र यूपशब्दो गौण. । वि. ७।३।१३ .

**यूपैकादशिन्यां एकादशपशुयोजनं क्रमपेक्ष्या पद्धत्या अहीनेषु चक्रप्यते, इतरा पद्धतिस्तु प्रकृतौ ॥**

आग्नेयसारस्वतसौम्यपौष्णबार्हस्पत्यवैश्वदेवैन्द्रामारुत – ऐन्द्राग्नसावित्रवारुणान् एकादश पशून् विधाय ' यामिमा प्रजा आपश्च चरन्ति सा वा एषैकादशिनी ' इत्युक्त्वा ततो व्यत्यस्तक्रमान् प्रकृत्य ' आग्नेयमग्निष्टोमेऽभित ऐन्द्रमैन्द्राग्नं सारस्वतं सौम्यं वैश्वदेवं पौष्णं मारुतं बार्हस्पत्यं वारुणं च ' विधाय श्रुत ' तामेतां क्रमेणैव विदुस्तामेतामतिरात्रपरम आलेत ? ' इति । अत्रातिरात्रपरमशब्दोऽहीनपर. । तस्यान्तरतोऽतिरात्रत्वात् । न तूभयतोऽतिरात्रपरः । द्विविधामेकादशिनीं प्रकृत्य, ' तामेताम् ' इत्याम्नानात् उभयोरप्यहीन उत्कर्षः । इति प्राप्ते, यामिमामित्यनेन प्रकृतिगामितया बहुकर्तृकत्वेन पूर्वस्या निर्देशानुसरणाच्च क्रमेणैवेन कतिपयक्रमनरूपणेन, तामेतामित्यनेनापि सन्निहितया एव यागमध्यादिक्रमेणैव एवाहीनेषूत्कर्षः । यत्तु कल्पसूत्रं ' आग्नेयमभित ऐन्द्रो ' इति, तदैन्द्राग्नोभयस्य नामैकदेशमेलनेन निर्देशमित्यनिरुद्धम् । संकर्ष. १।४।२५.

* यूपैकादशिन्यां चोदकप्राप्ता यूपाहुतिः ज्योतिष्टोमे तन्त्रम् । ११।२।७।२६–२९

**यूपैकादशिन्या दक्षिणोत्तरयोर्व्यत्ययः अग्निकोणे दशमः, ऐशानकोणे एकादशः इति ॥**

यूपेषूदगपवर्गत्वविधानादैरे, आग्नेयकोणमारभ्य ऐशानान्ता यूपा अग्निष्ठादेः स्युः क्रमशः । तत्र अग्निष्ठादक्षिणस्य मुख्यत्वेऽप्यवसाने तदुभयवर्तिनैकपरित्यागे मानाभावात्, तदाद्यदेशस्य प्रधानपशुकर्मणोऽपरिहार्यत्वाविरोधाय द्वितीयं यूपमग्निष्ठादक्षिणतो नीत्वा, तृतीयमग्निष्ठादुत्तरतो मिनुयात् । एवं चतुर्थपञ्चमादियुगलानि दक्षिणोत्तरयोर्मातव्यानि । ' उदगपवर्गा यूपा भवन्ति ' इति वचनस्यैवमप्युपपत्तेः । एतेन 'यदाग्नेयश्च बार्हस्पत्यश्च सौम्यमभितो भवतः' इति लिङ्गमप्युपपद्यते । इति प्राप्ते, 'दक्षिणापवर्गाः यवाचो भवन्ति ' इत्यादन्यविधानेनैशानाग्नेयान्तक्रमेण पशुनियोजने सिद्धे, तद्देषु यूपेष्वपि प्रधानसंनिकर्षक्रमेण तथैव संमाने प्रसक्ते,

न तस्य च्छेदनादेरिह निरूप्यते । विकृतावपि नयेनोत्कृष्ट समान तन्त्रमेव । संकर्ष. १।४।१८

● यूपकरणार्थाः यूपाहुत्यादयः मेखलान्त., अर्थ-न्येषामिविर्तितुमर्हन्ति न्यायेबलात्वाम् । भा. १०।१।५।९.

■ यूपकर्मन्यायः । अग्नीषोमीये पशौ दीक्षासु आकृष्यमाणं यूपच्छेदनं अग्नीषोमप्रणयनादीनि नाप कर्षति ।।

असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत । ५।१।१४।२७ ॥

भाष्यम्— अस्ति दर्शपूर्णमासप्रकृतिके पशौ अग्नीषोमीये वैकृतं यूपकर्म । तत् प्रतिकृष्यते ' दीक्षासु यूपं छिनत्ति' इति । तत् प्रतिकृष्यमाणं अर्वाचीनान्यपि अग्नीषोमप्रणयनादीनि प्रतिकर्षति उत नेति संशये, प्रतिकर्षति संनत्यादिति । तथा प्राप्ते, ब्रूमः । विकृतौ अभ्यधिकम् यत्, तत् प्रतिकृष्यमाणं तानोऽर्वाचीनान्यपि अग्नीषोमप्रणयनादीनि न प्रतिनेतुमर्हति । कथम् ? असंयोगात् । पाशुकं यूपकर्म । ततः प्राचीनं सौमिकम् । न तयोः परस्परेण सम्बन्धः । न सौमिकः पदार्थः पाशुकस्योपकारकः पशोर्वा । यदि हि तयोरुपकारकः स्यात्, ततः तस्योपकुर्वतः क्रमोऽप्यस्य कारणं कुर्वन् गुणभूतः स्यात् । न त्वेतदस्ति । तस्मान्नैषां परस्परेण क्रमे नियमः । अतो यूपमात्रं प्रतिकृष्यते । अपि च यूपमात्रे प्रतिकृष्य कृतार्थे शब्दे शेषेकाना संनिकर्षो न भविष्यति इति ।

टुप्.— अग्नीषोमप्रणयनोत्तरकालं यूपस्य छेदनादयः पदार्थानाः पकनेनापकृष्यमाणाः सौमिकान् नापकर्षन्ति । कुतः ? भिन्नप्रयोगवचनपरिगृहीतत्वात् । अभिन्नप्रयोगवचनपरिगृहीतेषु हि क्रम आकाङ्क्ष्यते । तस्माच्च पूर्वं पदार्थ उत्तरमुपस्थापयति । तस्मात् पूर्वः पदार्थः योऽपकृष्यते सोऽन्यमनपकर्षति । पाठस्यानङ्गत्वात् ।

शा— यूपच्छेदनं दीक्षासु अपकृष्यमाणं प्रयाजवत् प्रणयनादीन् आकर्षति । इति प्राप्ते, उच्यते । ' सौमिकेन पदार्थेन पाशुकस्य न हि क्रमः । अतः तदपकर्षेण सौमिको नापकृष्यते ॥ ' इति ।

सोम— पूर्वत्रेहापि पूर्वपदार्थस्य उत्तरपदार्थोपस्थापकस्य पाठतः क्रमे सति बद्धक्रमत्वाविशेषात् इति प्रत्यवस्थानात् संगतिः ।

वि— ज्योतिष्टोमे वैसर्जनहोमादूर्ध्वं प्राचीनवंशगतो वह्निः आग्नीध्रीये प्रणेतव्यः । सोऽयं प्राचीनवंशे पूर्वमवस्थापितः इदानीं हविर्धाने प्रणेतव्यः । तयोरुभयोः प्रणयनादूर्ध्वं यूपच्छेद आम्नातः । तदेतत् सर्वं सुत्यादिनात् प्राचीने औपवसथ्ये दिने प्राप्तम् । तत्र यूपच्छेदः दिनत्रयात् पूर्वं दीक्षाकाले अपकृष्टः । तस्मिन् अपकृष्टे प्रयाजन्यायेन (५।१।१२) तदन्ताङ्गगृहस्य अपकर्षणात्, प्रणयनमपि अपकृष्यता इति पूर्वः पक्षः । ' यूपच्छेदाकर्षः किं तदन्ते युत यत्र वा । प्रयाजवत् तदन्तत्वाच्चयन चापकृष्यताम् ॥ अग्नीषोमप्रणयनं सौमिकं पाशुकी छिदा । प्रयोगवाक्यवैषम्यात् श्रुतमात्रापकर्षणम् ॥ '

भाट्ट— सौमिकाग्नीषोमप्रणयनानन्तरं ' पश्वङ्गतया यूपं छिनत्ति ' इत्युत्पन्नं यूपच्छेदनं ' दीक्षासु यूपं छिनत्ति ' इत्यनेनापकृष्टं प्रयाजन्यायेन (५।१।१२) प्राचोऽपि पदार्थान् अग्नीषोमप्रणयनादीन् अपकर्षति । इति प्राप्ते, भिन्नप्रयोगविधिपरिगृहीतत्वेन अत्र पाठस्य क्रमानियामकत्वात् महाप्रयोगविध्यैक्येऽपि वा उत्पत्तिविधिभेदेन प्रयोगवचनभेदेन क्रमानाकाङ्क्षत्वात् पाठस्य क्रमापादकत्वेन बद्धक्रमत्वाभावात् दीक्षाकालविधानेऽपि च प्रयोगवचनभेदेन तत्रैव क्रमापेक्षतया भिन्नप्रयोगविधिपरिगृहीतेऽपि सोमाङ्गदीक्षाकालीनपदार्थपाठेन क्रमकल्पनात् तत्रैव समहोतृहोमानन्तरं यूपच्छेदनमात्रं यूपीत्यादरणमात्रं वा अपकृष्य कार्यम् । न तु तदन्तापकर्षः । एतेन यूपच्छेदनस्य दीक्षाते करणं इति केषाञ्चिदुक्तं अपास्तम् । ' दीक्षासु यूपं छिनत्ति ' इत्यस्य सप्तहोतृहोमानन्तरं पठितत्वात् ।

मण्डन— ' यूप एवापकृष्यते । ' १६.

शंकर— ' यूपे सुतापकर्षः स्यात् । ' १८.

● यूपकर्ममात्रं दीक्षासु ' यूपं छिनत्ति ' इति प्रतिकर्षविधानात् प्रतिकृष्यते, न तु अग्नीषोमीयप्रणयनादीनि । भा. ५।१।१४।२७.

तस्मात् इयति गमयामहे इत्यपि आमायमात्र यूपविषयमेवोपछ्हृत्य वेदे यूपार्थत्व प्रतिपन्नम् । अथवा पूर्वेणाधिकरणेन स्थिते नाङ्गज्योतिष्टोमार्थत्वे किं यूपार्थत्वमप्यस्ति नास्तीति विचार्यते । ननु सर्वार्थत्वादेव सिद्ध यूपार्थत्वमिति न विचारणीयम् । न तेन सिद्ध यूपस्य पश्वङ्गत्वात् । ज्योतिष्टोमस्य हि साङ्गस्य वेदिर्न पशो । ननु च पशुरपि स्वाङ्गभूताङ्गिभ्यो शास्त्रति । तस्मात् यदि तस्य स्वमहिम्ना वेदिर्भवेत् । प्रधानद्वारेण त्वनन्तरस्नी तन्नस्पमाने एवावतिष्ठते । प्राप्ते च वेदि कार्ये अतिदेशेन प्रस्तुतौ दार्शपौर्णमासिकी वेदि जिता इत्य पश्वादिषु सौमिकी निविशते । सा प्राकृतेष्वेव वेदिकार्येषु विनियोक्तव्या । न चेद यूपमान प्राकृत यतो वेदिं लभेत । तस्मादप्राप्तयूपस्य लौकिकयैव देशबुद्ध्या अन्तर्बहिर्वा माने प्राप्ते अनेन वचनेनार्धस्यान्तर्वेदि नियम्यते । इति प्राप्तेऽभिधीयते ।

देशमात्र वाऽशिष्येणैकवाक्यत्वात् । १४ ॥

भाष्यम्-- देशमात्र वा वेदिशब्देन लक्ष्यते, न वेदिर्यूपाङ्गम् । कुतः ? अशिष्येणैकवाक्यत्वात् । अथ मन्तर्वेदि मिनोत्यर्धं बहिर्वेदि ' इत्येतेनैकवाक्यता या, सा शासिता भवेत् यदि देशलक्षणा । अथ यूपाङ्गभावेन यथा निर्देश, ततो न शासितो बहिर्वेदिदेशो भवति । वेदा यूपस्याङ्गभावेन उपदिश्यमानायाम् अर्धं बहिर्वेदीत्येतद् दुरुपार्थमाथ न कस्मिंश्चिदुपकारे वर्तते । अथ बहिर्वेदि देशमपि यूपाङ्गभावेनोपदिशेत् वाक्य भिद्येत । तस्मा यूपाङ्गभावेन वेदा निर्देशे बहिर्वेदिशब्द सर्वथा न शासितः । यदि तु देशलक्षणा, ततो विशिष्टे देशे लक्ष्यमाणे अवश्यवक्तव्यो बहिर्वेदिशब्दो भवति । अनुच्यमाने, वेदमध्ये तदैकस्मिन् कस्मिंश्च प्रदेशे यूप इति गम्यते । अथ पुनर्बहिर्वेदिशब्दे श्रूयमाणे यतरस्मिन् देशे मीयमानस्यार्धमन्तर्वेदि अर्धं बहिर्वेदि, स देशो लक्षयितुमिष्टो भवति । [illegible] च बहिर्वेदिशब्देन विना [illegible] शक्यते लक्षयितुमित्यवश्य शासितो भवति । तस्माद्देशलक्षणेति ।

या-- उभाभ्यामन्तर्वेदिबहिर्वेदिशब्दाभ्या मध्यदेशो लक्ष्यते नाङ्गाङ्गिभावो विधीयते । ' कुत ? कृतार्थसंयोगे देशकालोपलक्षणम् । सर्नेष्विष्ट, कृतार्थौ च वेदियूपाविहान्यत ॥ ' अङ्गाङ्गिभावे हि यूपो वा वेद्यङ्ग भवेद्वेदिर्वा यूपाङ्गम्, न चैकमप्युपपद्यते, निराकाङ्क्षत्वाद् दृष्टकल्पनाद्वाक्यभेदप्रसङ्गाच्च । न तावत् पशु बन्धयायुक्तस्य यूपस्य वेदिं प्रति अपेक्षाऽस्ति । नापि कर्तृहविस्तदुपकरणधारणयाकृतार्था वेदे सहसभागाय तत्र्यदपि यूपे अपेक्षा । न चा भवत्ययं दृष्टोपकारित्व प्रत्यक्षमेव । किं चार्धं बहिर्वेदीत्यशिष्यम्, निष्पत्रप्रयोजनत्वात् । मत्पक्षे तु द्वाभ्यां विना देशविशेषो पलक्षयितुमशक्यत्वाद् शासितमेवैतत् । कथ उभयत्र यूपस्यान्तर्बहिर्वा माने प्राप्त ' अर्धमन्तर्वेदि ' इति नियम्यते, द्वितीयस्य अर्धस्य पुनरन्यनियमप्रसक्तौ ' अर्धं बहिर्वेदि ' इत्यपि नियमनम् । तत्र प्राधान्यपारार्थ्याभ्यां वाक्यभेद, मिनोत्यावृत्तिप्रसङ्गश्च प्रसज्यते । नापि तस्य च नित्यवदनुवादोऽनर्थक कल्पित एव । नत्वर्धमन्तर्वेदिश्च ये विहिते विध्यभावादर्धं तत बहिर्वेदि भविष्यति । मन्येदेवम्, यदि नियमतोऽन्तर्वेदि बहिर्वा वा यूपमान प्रसक्त स्यात् । समस्तान्तर्वेदिमाने हि सति अर्धपुनर्वचनसामर्थ्यात् परिसङ्ख्यायेतस्य बहिर्मान गम्येत । समस्तस्य वा बहिरेव प्रसक्ते अर्धस्याविहितमिति तदवस्थमपान्तरमन्यतरस्मीयेत । न त्वेतदुभयमप्यस्ति । अत एवेदमगत्यार्धमन्तर्वेदि न स्वर्धमेवान्तर्वेदीति । तथा सति चार्धं तत्रानियतत्वात् कदाचिदन्तरपि मामोतीति न बहिर्भाव सिध्यतीति । ननु च यदि समस्त मन्तर्वेदि मिनोति, अथोऽधमन्तर्वेदीत्येव विधिनैव कुर्यात् । कथ न करोति, यद्यपि तथापि नियमतोऽन्तर्मिनोति एकस्य नियत नेतरत् प्रतिषिद्धम् । तस्मादुभाभ्या विशिष्ट एको देशोऽभिधीयते इत्येकमवाक्यमेव ।

अ्र अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदि इत्यनेन यत्र मीयमानस्य यूपस्य अर्धमन्तर्वेदि भवति अर्धं च बहिर्वेदि, तत्र मिनुयात् इति लौकिक एव देशविशेषो विधीयते, न यूपाङ्गो वेदिदेश ।

सोम—प्रयोजन अध्ययनादिर्वस्तुतवेदे अङ्गाङ्गमावात् तीर्थपुनात्व्ये ऽवश्ये ज्योतिष्टोमविकृतिभूते अभिउ यूपमात्रस्य पूर्वोक्तशिष्या प्राचीनवश मीयमानायां

तदङ्गतया यावद्यूप वेद्युद्धननादिकं न कर्तव्य मिति सिद्धान्ते । पूर्वपक्षे तु संस्कार्याया वेदेः यूपमानाङ्गत्वात् यावद्यूप उद्धननादिक मनंपर्यवस्यतीति । सूत्रार्थस्तु यथा दीक्षादक्षिण वचनात् प्रधानार्थं तथा वेदिरपि वचनात् यूपार्था इति । अत्र च पूर्ववत् प्रत्याख्यानात् संगतिर्बोध्या ।

वि— ' अन्तर्वेदि मिनोत्यर्धं यूपाद्यमुत लक्षयेत् । वेदेर्यूपाङ्गमावेन वेदिभागोऽत्र चोद्यते ॥, बहिर्वेदर्ध-निक्षेपवद् वाक्य भिन्नेन तद्विधौ । मीयमानस्य यूपस्य तावान् देशोऽत्र लक्ष्यते ॥ '

भाट्ट— दर्शपूर्णमासयो. ' होतु अन्तर्वेदि पादो भवति बहिर्वेद्येक ' इति श्रुतम् । तथा सोमे अग्नीषोमीयपशुप्रमाने श्रूयते ' अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि ' इति । तत्र अन्तर्वेदिदेशः एव तत्तद्वाक्येन विधीयते, उत अन्तर्वेदिबहिर्वेदिशब्दलक्षितदेशविशेषो वा इति चिन्तायाम्, लक्षणायां प्रमाणाभावात् अन्तर्वेदिदेश एव एकपादोद्देशेन यूपार्धोद्देशेन च विधीयते, तद्विधौ पादार्धान्तरयोर्बहिर्वेदिदेश. प्राप्त एवानूद्यते । इति प्राप्ते, आद्योदाहरणे तावद्वितानाद्यर्थाया दार्शिक्या वेदे. एक पादोद्देशेन विधौ एकस्यामेवोद्देश्यविशेषणस्याविवक्षाऽऽपत्तेः ' बहिर्वेद्येक. ' इत्यस्यानुवादायोगात् विधाने वाक्यभेदापत्तेरगत्या देशविशेष एव लक्षणया होतृस्थानोद्देशेन निर्धार्यते । न च देशविशेषलक्षणापेक्षया लाघवादन्तर्वेदिपरिमितत्वमहिर्वेदित्वमेव लक्षणया विधीयतामिति वाच्यम्, विधेयविशेषणमात्रे विधिगमनाविरहात् । द्वितीयोदाहरणेऽपि सौमिक्या वेदेर्दर्शनेनाङ्गप्रधानार्थत्वस्य स्थापितत्वात् ( ३।७।१ ) यूपार्धदृशेऽपि वेदे. प्राप्तत्वादर्धोद्देशेन तद्विधाने परिसंख्यापत्तिः । न च अग्नीषोमीयादिपशुपाङ्गत्वेऽपि वेदेस्तदङ्गभूतयूपमानाङ्गत्वे प्रमाणाभाव., प्रयोगविधिना साङ्गानामेवाङ्गानां प्रयोगविधानात् । अन्यथा तदङ्गप्रयाजपशुपुरोडाशादिहविरासादनादौ वेद्यादेरनापत्ते । न च वाक्येन वेदेर्यूपार्धाङ्गत्वेन विधानात् प्रकरणगम्यसर्वार्थत्वस्य बाधोपपत्ते परिसंख्यानापत्ति, ' सर्वार्थत्वप्रकरणस्य प्रमाणार्थवादस्य ' इति वक्ष्यामहे ' इत्यत्र सार्वभौमार्थत्वे अनुपपद्यमानत्वेन सर्वार्थत्वबाधानुपपत्ते । न चैवमपि फलत परिसंख्यानाद् त्रैदोष्या-पत्तिः, प्राप्तप्रमाणप्रतिबन्धाभावेन शास्त्रपरिसंख्याया-पत्त्या त्रैदोष्यावश्यकत्वात् । अतो वर देशविशेषलक्षणैव युक्ता । न च अर्धोद्देशेन बहिर्वेदिमात्रविधानात्, अर्धान्तरे च अन्तर्वेदेरेव प्राप्तत्वेन अनुवादोपपत्तेर्न लक्षणाऽपीति वाच्यम् । अनुवादवैयर्थ्यभियैव लक्षणाङ्गीकारात्, तथापि अन्तर्वेदिपदे एव लक्षणाङ्गीकारे बहिर्वेदेरपि विधेयत्वेन वाक्यभेदापत्ते. । ' अर्धमन्तर्वेदि अर्धं बहिर्वेदि ' इति पदद्वयसमभिव्याहृतपदार्थविशिष्टमानस्यैव यूपोद्देशेन विधानम् । तत्प्रयोजनं तु यूपैकादशिन्या वेदेरविवृद्धि. । वस्तुतस्तु देशविशेषलक्षणायामपि सामान्यतः प्राप्ते निहिताया वेदेर्विशेषेण अर्धप्राप्त्युपपत्तेः यूपैकादशिन्यामपि तदर्थं वेदिविवृद्धिरावश्यकी । अत एव ' यावद्यूप वेदिमुद्धन्ति ' इति कल्पसूत्रकारवचनमपि संगच्छते । अतोऽन्यतरोवत्र सुगमम् । देशविशेषलक्षणैव वा आश्रयणीया इति ध्येयम् ।

मण्डन— ' वेदिर्यूपगुणो नहि । '

शंकर— ' वेदेर्यूपाङ्गता न च । '

* यूपशब्द. एकादशिनीगते उपशये सम्प्रदायविदेशो न भाति । भा. ७।३।१२।३१–३४. * यूपशब्दः कर्माभिधानवचन' । शा. १।२।१।२२ पृ ११६. * यूपशब्द. औपणादिक्रियानिमित्त. । स यत्र श्रूयते तत्र औपणादय. क्रिया प्राप्यन्ते । भा. ७।३।११।२८. * यूपशब्दस्य पश्चात् श्रुतत्वेन वाजपेयशब्द प्रति गुणत्वमनुपपद्यते । सु पृ. १०४९. * यूपशब्दस्य शास्त्रीयच्छेदनादिक्रिया प्रवृत्तिनिमित्तम् । वि. ७।३।११. * यूपशब्दे तु ( औपणादि ) क्रियानाशोत्तर प्रयोगेऽपि तत्क्रियाजन्यविशिष्टसंस्कारवाचित्वात् न शुद्धजातिवाचित्वं इति शुद्ध एव तत्र संस्कारविशेष. । वस्तुतस्तु यूपकार्ये गत्यन्तराभावात् यूपशब्दस्य न संस्कारादिप्रवृत्तत्वम् । भाट्ट ७।३।९.

* यूपसंस्कार. अथ ' अग्निं वैकादशिना रशना परिवीय वासयति ' इति वाक्योक्त., इति पूर्वपक्ष । अग्निसंनिधिप्रकरणेन परिव्याणलक्षणेन वाक्येन रशना, संस्कुर्यात् इति वाक्यार्थ. येन रशनासंस्कारोऽयम् । संकर्ष. २।४।१२, १७ * यूपसंस्कारा' । तत्र पशुसमुच्चये

ज्योतिष्टोमे । भा. ११।३।४।५–७, * यूपसंस्काराः प्रोक्षणं अञ्जनं उच्छ्रयणं परिव्याणं च । ११।३।४।५, * यूपसंस्काराणां यूपनाम्ना यूपैकादशिनीगते अपवादेनातिदेशः । ७।३।१३।३३–३४.

* यूपसंस्कारकर्म खलेवाल्यां न कर्तव्यम् । भा. १०।१।६।१३.

* यूपस्तुत्यर्थः आदित्यशब्दः 'आदित्यो यूपः' इति । वि. १।४।१५, * यूपस्तुत्यर्थः यजमानशब्दः 'यजमानो यूपः' इति । १।४।१५.

* यूपस्थापने अग्नीषोमीयपशौ 'अर्धमन्तर्वेदि, अर्धं बहिर्वेदि' इति लौकिकदेश एव विधीयते न तु संस्कृतवेदिभागो विधीयते । वि. ३।७।६ .

* यूपस्पर्शे लौकिके अग्नीषोमीये पशौ यागप्रयुक्तं प्रायश्चित्तम् । ९।१।३।९. मीको. पृ ११८ 'अग्नीषोमीये पशौ यागसमाप्त्युत्तर०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* 'यूपहस्तिनो दानमाचरन्ति' इति स्मृतिः प्रमाणम्, इति प्राप्ते, अप्रमाणं स्मृतिः, (हेतुदर्शनात्) अशक्यं न्मूलम् । लोभादाचरितवन्तः केचित्, तत एषा स्मृतिः । भा. १।३।२।४ ('यूपहस्तिशब्देन यूपपरिमाणमादर्श (उच्यते)' । वा पृ. १८६

* यूपीयवृक्षधर्माः 'समे जातमग्राग्यत बहुपर्णं शाखमप्रतिशुष्कमप्रमसुषिरं' इत्यापस्तम्ब । वि १०।२।३२.

* येयजामहं विशिष्टर्तमानं अनूद्य, पर्युदासार्थो विधीयते । नानुयाजेषु इति । अथवा येयजामहः सामान्येन प्राप्यमाण एव अनुयाजवाक्येन विशेष्यते, अनुयाजवर्जं येयजामहं करोति इति । टुप्. १०।८।२।४. * येयजामहस्य नानुयाजेषु इति पर्युदासः । येयजामहन्यायः । १०।८।११–८ मीको पृ. २४०४ 'पर्युदासन्याय' इत्यत्र द्रष्टव्यम् ।

* 'योक्त्रेण पत्नीं सन्नह्यति' दर्शपूर्णमासयोः । तत् ज्योतिष्टोमे सौमिकेन प्रसङ्गसिद्धम् । भा. १२।१।१३।२९.

* योगः अग्निचयने । 'अग्नि युनज्मि शवसा घृतेनेति जुहोति । अग्निमेवैतद्युनक्ति' इति मन्त्रेण होमो योगः । स च सर्वान्ते वार्तिककारमतेन, प्रधानान्ते भाष्यमतेन । वि. ११।३।९. * योगः कल्पना रूढ्या बाध्यते । यथा रथकार इति । बाल. पृ. १४५. * योगरूढिः । कल्पनाऽवयवार्थपदाभिधाने समुदायशक्तिकल्पनाऽयोग । सु. पृ. १२००. * योगेन कल्पना रूढिः बाध्यते । यथा प्रोक्षणीशब्दे । बाल. पृ. १४५

* योगाद्रूढिर्बलीयसीति न्यायः । योगादित्यस्य यौगिकात्प्रकृतिप्रत्ययोगलभ्यार्थबोधकादित्यर्थः । रूढिस्तु प्रकृतिप्रत्ययार्थमनपेक्ष्य शाब्दबोधजनकशक्त्यात्मिका इति । भाट्टदी ६५९.

* योगजधर्मप्रत्यासत्तिं तृतीयामाहुः न्यायविदः । तत् योगिषु मानाभावेन असुन्दरम् । न च इतिहासपुराणादि मानम्, तस्य अन्यतात्पर्यकत्वात् । मणि. पृ. २९

* योगजन्यानि अणिमाद्यष्टैश्वर्यफलानि वर्णितानि । न तत्यार्थवादत्वम् । वा १।३।८।२७ पृ. २८८.

* योगरूढः निर्मन्थ्यशब्दः, पङ्कजादिशब्दवत् । अग्निचयने 'निर्मन्थ्येनेष्टकाः पचन्ति' इति । वि. १।४।१०. * योगरूढानां पङ्कजादिशब्दानां निघन्टुः पद्मादिः अर्थे । वा. १।४।०।१३ पृ ९३३ टिप्पण्याम् ।

* योगरूढत्वं (पदस्य) समुदायशक्त्या अवयवशक्त्या च पदार्थप्रत्यायकत्वं पङ्कज इत्यादौ । मणि पृ ३८

* योगविमोकौ (होमविशेषौ) अग्निचयने प्रधानादौ प्रधानापवर्गे च, न तु सर्वादौ सर्वान्ते चेति । भा. ११।३।९।१८ । (योगविमोकौ प्रधानार्थौ इति प्रधानार्थे विमोक इति भाष्यमतम् । अङ्गप्रधानार्थौ योगविमोकौ इति वर्णिते विमोकः इति वार्तिककारमतम्) । * योगविमोकौ द्वादशाहे अहर्गणे प्रत्यहं दर्शयति 'स वा अहरहर्युनक्ति अहरहर्विमुञ्चति' इति । भा. ११।३।९।२०. * योगविमोकौ सौमिकौ अङ्गप्रधानार्थौ । रत्न. ११।३।१।१८.

* योगसिद्धिः नाम पर्यायः 'पर्यायो योगसिद्धिः' । भा. ४।३।११।२८. * 'योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात्' (४।३।११।२८)। अत्र 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यविशेषश्रुतेः, एकस्मिन् प्रयोगे सर्वफलोत्पत्तिः पूर्वपक्षयित्वा, अर्थस्य फलरूपस्य तत्परया प्रयोगे ऽपादानलक्षणयोगाभावात् (अत्र उत्पत्त्ययोगात् इति पाठः सूत्रे सिध्यति) अनुपादेयस्य चाधिकारिविशेषणत्वात्, सर्वशब्दस्य च प्रकृतार्थत्वात्, प्रकृताना च इष्टिसाध्याना पश्वग्रामादीना अन्योन्यनिरपेक्षणाभत्वावगतेः, एकमेव फलं एकस्मिन् प्रयोगे भवति इति योगेन पर्यायेण फलसिद्धिः इति सिद्धान्तयिष्यते । सु. पृ. ८७३. * 'योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात्' (४।३।११।२८) यान्यपि तथा विकल्पेन एतानि (द्रीपादीनि) अस्य फलानि भवन्तीति । वा. २।२।१३।२८ पृ ५६३.

* योगसिद्ध्यधिकरणम् । दर्शपूर्णमासादीनां सर्वफलत्वेऽपि प्रतिफलं पृथगनुष्ठानम् ॥

तत्र सर्वेऽविशेषात् । ४।३।११।२७ ॥

भाष्यम्—एवं सर्वेष्वपि उदाहरणेषु एतदुक्तम्, प्रधाने सर्वकामाना निधिरिति । इदमिदानीं संदिह्यते। किं सकृत्प्रयोगे सर्वे कामाः, उत पर्यायेणेति । किं प्राप्तम्? सकृत्प्रयोगे सर्वे कामा इति । कथम्? सर्वेषा कामाना दर्शपूर्णमासौ निमित्तम्, ज्योतिष्टोमश्चेति । निमित्तं चेत् सर्वेषा कामानाम्, कोऽत्र ग्रहः कामो न भविष्यतीति । तस्मात् यौगपद्येन सर्वे कामा इति ।

योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात् । २८ ॥

भाष्यम्—नैतदस्ति सर्वे युगपत्कामा इति । पर्यायो योगसिद्धिः । पर्यायेण भवेयुः कामा इति । कुतः? अर्थस्य उत्पत्त्यसंयोगित्वात् । अर्थो ह्यो कामा नाम, न सर्वे एव युगपदुत्पद्यन्ते । असंभवो युगपदुत्पत्तेः सर्वेषाम्, विरोधात् । अथवा, उत्पत्त्यसंयोगित्वादिति । न कामानामेवदुत्पत्तिवचनम् । उत्पन्नाना लक्षणत्वेन वचनम् । ये सर्वे कामास्तेभ्यो दर्शपूर्णमासौ ज्योतिष्टोमश्चेति । न सर्वे कामाः कर्मणः श्रूयन्ते, ये सर्वे कामास्तेभ्यो हि कर्म विधीयते । तस्मात् कामाना साहित्यं गम्यते इति ।

टुप्—कामानामुद्दिश्यमानत्वात् इतरेतरयोगाविवक्षा । तदुद्देशेन ज्योतिष्टोमो विधीयमानः एकमेव फलमेकस्मिन् प्रयोगे साधयति । न तु यौगपद्येन सर्वाणि, अनुपादेयत्वाच्चेषाम् । न चायमाधिकारविशेषणत्वम्, कामनया विशेष्यमाणम् । यद्यपि कामना अनेकविषया उत्पन्ना तथाऽप्येकमेवोद्दिश्य कर्मानुष्ठानम्, कर्मणस्तथा सामर्थ्यात् । अथवा कामोत्पत्तौ निमित्ते ज्योतिष्टोमो विधीयते । कामाश्च भेदेनैवोत्पद्यन्ते । अतो निमित्तभेदान्नैमित्तिकस्याप्यावृत्तिः ।

शा—किमेकस्मिन्नेव प्रयोगे सर्वे कामा भवन्ति, उत प्रयोगभेदेन इति संशये 'सर्वे युगपदेव स्युर्निमित्तस्याविशेषतः । यादृङ् निमित्तमेकस्य तादृगेवापरस्य हि ॥' कामनायमात् विशेषः, यदेव यदा काम्यते तदेव तदा भवति, नान्यत्, इति चेत्, न, असङ्गत्वात् । नहि कामना कर्मणः करणम् अङ्गम्, येन तदभावे फलानुत्पत्तिः स्यात् । ननु उपादेयस्य कर्तुः विशेषणभूता कामना कर्माङ्गमेव, न कामिन उपादानम् । उद्दिश्य हि कामिनं कर्म उपदिश्यते इति षष्ठे वक्ष्यते । अत एव लिङ्गस्याविवक्षा ।

[ प्राभाकरास्तु, यद्यपि कर्मणि उपादेयस्य कर्तुः कामना न विशेषणम्, तथापि नियोज्यस्य विशेषणं कामना । नियोगश्च नियोज्यगमनावी, नियोज्यो नियोगं प्रति गुणभूतः । ततश्च नियोज्यविशेषणं कामनाऽपि नियोगाङ्गम्, इति कामनाविरहे तत्कामनियोज्यत्वाभावात् नियोगस्य तत्फलसाधनत्वमेव न स्यात् । नहि नियोगस्य स्वत फलापेक्षया स्वर्गादेर्नियोगफलत्वम्, किन्तु तत्साधनत्वं विना तत्कामनियोज्यत्वानुपपत्त्या स्वर्गादेर्नियोगफलत्वम् । ततश्च कामनाविरहे तत्फलनियोगासिद्धेः सर्व( फल- )यौगपद्यं इत्याहुः । तदयुक्तम् । स्वर्गकामस्य नियोगं प्रति गुणत्वे तद्विशेषणस्याविनश्यमानत्वमापद्येत । अतः कामनायाः तद्विशेषणत्वमादाय फलानामयौगपद्यं दुर्वचं इत्याह ] योऽपि कर्मणि अनुपादेयस्यापि कामिनः अपूर्वं प्रति गुणभूत-

* यौगिकशब्दद्रव्यवचनतावादार्थः 'अरुणा-न्यायः' इति भाष्यीयाधिकरणे मीको. पृ. ६०५ द्रष्टव्यः।

* यौगिकश्रुतिजनितविशेषग्रहणेन सन्निविष्टस्य लौकिकप्रकरणस्य बाध्यमानत्वम्। वा. ३।२।८।२१ पृ. ७७४.

* यौधाजयं साम बार्हते तृचे भवति पूर्वा बृहती 'पुनानः सोम धारयापो वसानो०'। उत्तरा विष्टार-पङ्क्तिः 'दुहान ऊधर्दिव्यं०'। प्रग्रथनेन तिस्रो बृहत्यः। भा. ९।२।६।२५ वर्णकं २. * यौधाजयं साम माध्यं-दिने गीयते। तदाधारश्च प्रगाथो बार्हतः। 'पुनानः सोम०' इति बृहती 'दुहान ऊधर्०' इति सतो-बृहती। प्रग्रथनेन च तिस्रो बृहत्यो भवन्ति, तासु यौधाजयं गेयम्। वि. ९।२।६ वर्णकं २. * यौधा-जयस्य रौरवस्य च साम्नोर्गानं बृहतीविष्टारपङ्क्तिभ्यां प्रग्रथनेन संपादिते बार्हते तृचे कार्यं ज्योतिष्टोमे। ९।२। ६।२५-२८ वर्णकं २. मीको. पृ. १८१९ 'ज्योति-ष्टोमे बृहतीविष्टारपङ्क्तिभ्यां०' इत्यत्र द्रष्टव्यम्।

* यौप्यस्तु विरोधे स्यात् मुख्यानन्तर्यात्। १२।२।११।२७॥

पशुमत्सु चातुर्मास्येषु 'परिधौ पशुं नियुञ्जन्ति' इति श्रुतम्। अस्मिन् परिधौ परिधिधर्मा यूपधर्माश्च प्राप्ताः। तत्र विरोधे सति यौप्यः यूपधर्मः स्यात् कर्तव्यः मुख्या-नन्तर्यात्। मुख्यः पशुः तस्यानन्तर्ये यूपः, सन्निपाति-त्वात्। परिधिस्तु बहिरङ्गः। तस्मात् धर्मविरोधे परिधौ यूपधर्मः तक्षणं उच्छ्रयणं निखननं इति कर्तव्यः स्यात् इति पूर्वः पक्षः।

तूपरो वा तस्य तत्र विधानात्। २८॥

चातुर्मास्येषु पशुमत्सु 'परिधौ पशुं नियुञ्जन्ति' इति श्रुतम्। तेन परिधिरेव यूपार्थं भवति। तत्र परिधौ विरोधप्रसङ्गे यूपधर्माः कर्तव्याः इति पूर्वपक्षे सति सिद्धान्तसूत्रम्। वा-शब्दः पूर्वपक्षव्यावृत्त्यर्थः। इतरः परिधित्वेन साकं अविरोधी एव यूपधर्मः कर्तव्यः, तस्य यूपस्थाने, तत्र परिधौ विधानात् 'परिधौ पशुं नियुञ्जन्ति' इति। तस्मात् तत्र तक्षणं उच्छ्रयणं निखननं च न कर्तव्यम्।

उभयोश्चाङ्गसंयोगः। २९॥

पशुमत्सु चातुर्मास्येषु 'परिधौ पशुं नियुञ्जन्ति' इति श्रुतम्। परिधिधर्मा यूपधर्माश्च कर्तव्याः। धर्मविरोधे तु परिधिधर्म एव कर्तव्यो न यूपधर्मः तक्षणादिः। यतः उभयोः वस्तुनोः अङ्गेन धर्मस्य सम्बन्धो न प्रधानेन। ततश्च नात्र अन्तरङ्गबहिरङ्गभावस्योपयोगः। तस्मात् धर्मविरोधे परिधिधर्म एव कर्तव्यो न यूपधर्म इति सिद्धान्तः। कें.

—◆—

## र

* रक्तपटन्यायः। यदा तु निराकाङ्क्षेऽपि वाक्ये आकाङ्क्षामुत्थाप्य एकवाक्यता क्रियते, तदा रक्तपट-न्यायप्रवृत्तिः। यथा श्वेतोऽधावीति वाक्यस्य निराकाङ्क्ष-स्यापि कीदृशः इत्याकाङ्क्षामुत्थाप्य 'रक्तः' इत्यने-नैकवाक्यता क्रियते, तथा प्रकृतीनां दर्शपूर्णमासादीनां स्वप्रकरणस्थाङ्गैः निवृत्तोपकारकाङ्क्षाणामनारभ्याधीनाङ्गैः विकृतीनां चातिदिष्टाङ्गैः परिपूर्णानां सत्प्रथादिभिः सहो-त्थितकाङ्क्षाविरहेऽप्युत्थापिताकाङ्क्षयान्वयः, इत्येव विधेरस्य प्रकारः। साहस्री ५०१.

* रक्षोघ्नीतिनिर्गमकाम 'अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत्' 'अमावास्यया निशि यजेत' इति। निशीथिन्यायः। मीको. पृ. ११८५। भा. १२।२। ५।१४.

* 'रक्षोहणो वलगहनो वैष्णवान् खनामि' इति उपरवमन्त्रः प्रत्युपरवं आवर्तते ज्योतिष्टोमे। 'उपरव-न्यायः' मीको. पृ. ११६०। भा. ११।४।१९। ५२-५३.

* रक्षितवन्तौ आज्यभागौ स्वस्त्ययन्या इष्टौ 'अग्ने रक्षाणो अंहसः०' 'रक्षा नः सोम विभतः०' इति। आश्वश्रौ. २।१०।५.

* रजस्वलाव्रतानां भूमिशयन-अस्नान-अमांस-भक्षण-अनभ्यङ्ग-अनञ्जन- अनिर्देशन अकर्तन-अदन्त-

धनन-अनवच्छेदन-भरज्जुसमर्जनादीना नियमविधयाणां दर्शपूर्णमासप्रकरणनिविष्टानां वर्णनम् । वा १।३।४।९ पृ. २२१.

● रज्जू द्वे प्रेङ्खफलकसमे महाव्रते । दार्भ्यौ त्रिगुणे स्याताम् । पश्च व्यायामे । सव्यावृता एका दक्षिणावृता चान्या । ताभ्यां प्रेङ्खाच्छिद्रेषु कुर्यात् दक्षिणावृतया दक्षिणतः, सव्यावृतया उत्तरतः, द्विगुणे प्रोते कुर्यात् रज्ज्वोः अन्ताश्च बीचयान्तयोः त्रिः प्रदक्षिण पर्यस्य ऊर्ध्वौ ग्रन्थि निरूकर्यं बध्नाति । ऐआ. ५।१।३ (सायणभाष्यम्).

🙏 रज्जुसर्पन्यायः । यथा रज्ज्वोरज्ञानतया. सर्पात्मना भानम्, ज्ञानात्तु स्वरूपेण, तथा ब्रह्मणोऽनन्तबुद्धस्य मायाकार्यत्वेन, बुद्धस्य च निष्प्रपञ्चत्वेन भान न मतान्तरविरुद्धमित्यर्थः । माहली. १६४.

● रत्नपरीक्षायाम् । ‘यथा रत्नपरीक्षाया साध्वसाध्वभ्युपगम् । तथा व्याकरणादिमिदं साधुशब्दनिरूपणम् ॥’ मा. १।३।८।२७ पृ. २८२.

● रत्निनां हवींषि राजसूये इष्टिनिवृत्तिः । तैसं. १।८।९ इत्यत्र एकादश हवींषि उक्तानि तैब्रा. १।७।३ इत्यत्र ‘द्वादशैतानि हवींषि भवन्ति’ इत्युक्तम्, ‘त्रयोदश रत्निनां हवींषि’ इति मत्स्यपाठः ( १३।८।१ )। नि. १०।१।१७, ● रत्निना हवि पु मैत्रायाण्यस्ये ‘स्वयकृता वेदिर्भवति, स्वयदिन बर्हिः, स्वयकृत इध्मः’ (तैब्र. १।८।९ ) इति । तत्र इष्टोपकाराणां अङ्गानां अननुष्ठान अदृष्टोपकाराणां तु अनुष्ठानम्, तक्षणादीनि न कर्तव्यानि, बर्हिः स्तरणादीनि कर्तव्यानि । १०।१।११.

● ‘रथ गच्छति’ इति वाक्यार्थविचार मीको. पृ १००० ‘अर्थी मानना’ इति विन्दी, मीन्या. समद्दे च द्रष्टव्य । ● वाजपेये ‘यजुर्युक्त रथमध्वर्यवे ददाति, ऋग्युक्तं होत्रे, साममियुक्तमुद्गात्रे’। मा १०। ३।१२।३५, ● रथेन यजुर्युक्तेन वाजपेये निर्दिष्टेन, अध्वर्योरश्वादिमिमान्तरस्य न निवृत्तिः । १०।३।१२। ३४–३५.

● रथाक्षमात्राणि अन्तरालानि यूपैकादशिन्यादौ । मंकपे. १।४।२१. मीको पृ. ३२६७ ‘यूपैकादशिन्यादौ रथाक्षमात्राणि यूपान्तरालानि’ इत्यत्र द्रष्टव्यम् ।

● रथाक्षमात्रान्तरालता च यत्रैकादशिनी विहिता तत्र भविष्यति । बा. २।४।२।२६.

● ‘रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति’ इत्यत्र समाहारद्वंद्वः पूर्वपक्षे, तत्पुरुषः सिद्धान्ते । बाल. पृ. १४३.

🙏 रथघोषाधिकरणम् । वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितेन रथदुन्दुभिघोषेण प्राकृतदर्भमन्त्रयोर्बाधः ॥

प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् । १०।४।११ ॥

भाष्यम्— एव वा । अस्ति वाजपेयः, ‘शरदि वाजपेयेन स्वाराज्यकामो यजेत’ इति । तत्र श्रूयते ‘रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति, दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति’ इति । अस्ति च प्रकृतौ ‘उपावर्तध्वमिति दर्भाभ्या स्तोत्रमुपाकरोति’ इति । तदिह चोदकेन प्राप्तम् । तत्र संशय किं रथघोषेण दुन्दुभिघोषेण (च) यो नाद, स मन्त्रस्य निवर्तक, यद् द्रव्य तत् दर्भयो, उतोभयमुभयस्य निवर्तकमिति । किं प्राप्तम् ? शब्दत्वेन सामान्येन नादो मन्त्रस्य निवर्तक, द्रव्यत्वेन द्रव्ये दर्भयो । ननु तत्पुरुषनिर्देशोऽयम् । तेन परार्थेन रथस्य घोषविशेषणत्वेनोच्चारणम्, न स्वार्थेन निर्देश । अथोच्यते । द्वन्द्वनिर्देशोऽप्ययमो भवति । तदा यथायथं, न रथ परार्थ उच्चरिष्यते । श्रुतिर्हि तथा हीयेत, लक्षणा च स्यात् । चोदनालिङ्गसंयोगश्च बाध्येत । तस्मात् घोषो मन्त्रस्य निवर्तक, द्रव्य दर्भयोरिति ।

टुप्— ‘रथघोषेण’ इति द्वयो दर्भयोर्निवर्तक, घोषो मन्त्रस्य । कुतः ? एवम् (रथश्च घोषश्च इति द्वन्द्वसमासपक्षे) स्वार्थो रथशब्दो भविष्यति । इतरथा (रथस्य घोष. इति षष्ठीतत्पुरुषपक्षे) षष्ठीदोषम इति लक्षणा भवति, श्रुति स्वार्थः । रथशब्दो रथमेव ब्रवीति, घोषशब्दोऽपि घोषमेव । तत्पुरुषे तु रथ. परार्थ स्यात् । तस्मात् द्वन्द्वोऽयम् । ननु द्वन्द्वे द्विवचनं प्राप्नोति । उच्यते ।

'शर्मौ द्वौ विभाषया एकवत् भवति' इत्येकवचन (द्वे) भवत्येव।

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत, प्रकृतिसन्निधानात्। २॥**

**भाष्यम्**—एवं प्राप्ते, ब्रूमः। चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत। उभयस्य चोदनालिङ्गसंयोगो नैकैकस्य। रथघोषेणेति श्रूयते, न रथेन घोषेण चेति। रथविशिष्टो घोषो लक्षणं स्तोत्रोपाकरणस्य। प्रकृतौ दर्भौ लक्षणम्, मन्त्रश्च। नचेदानीमेवोक्तं द्वन्द्वनिर्देशो भविष्यतीति। नैतदेवम्। द्विवचनं हि तथा स्यात्। एकवचनेन च निर्देशः। तेनैको लक्षणम्, स च घोषः। तेन हि समभिव्याहारस्तृतीयया। ननु समुदायेन समभिव्याहारो भविष्यति। नहि, समुदायस्याशब्दार्थत्वात्। अथ समुदायो निर्दिश्येत, ततोऽभ्युपगतमुभयस्य निवर्तकमिति। ननु मन्त्रो वाचक एव, उपावर्तध्वमिति। नेत्युच्यते। उपावर्तनमात्रस्याभिधायको मन्त्रः। न चोपावर्तनमात्रं स्तोत्रोपाकरणम्। अथापि अभिधानं स्यात्, तथापि तस्य निवर्तनं। लक्षणेनोपाकर्तव्यमिति प्रत्यक्षा श्रुतिः। अभिधानेनोपाकर्तव्यमिति चोदनं। श्रुतिश्च चोदकाद्बलीयसी। तस्मादुभयस्य निवर्तको रथघोषो दुन्दुभिघोषश्चेति। किं भविष्यति प्रयोजनम्। यदि रथो न घोषविशेषणम्, अरथविशिष्टोऽपि घोषः स्तोत्रोपाकरणं लक्षयेदिति।

**टुप्**—(सिद्धान्तमाह—) एवं तर्हि (यदि समाहारसमासोऽयम्, तत) तत्पुरुषादपि पापीयान् अत्र समासः प्राप्नोति। कथम्। अत्र (समाहारसमासे) चकारादिस्तौर्व समाहारः, स प्रधानभूतः, तं प्रति चकारादिवे अन्यत्र गुणभूतौ स्याताम्। स च समुदायः (चशब्दो हेतौ; अनेकार्थसमुदायो हि समाहारः। अतोऽसौ) न केनचित् शब्देनोच्यते। तत्र द्वावपि रथघोषौ परार्थौ भवेताम्। तस्मात् तत्पुरुष एव दोषात्। प्रयोजनम्, यदि रथो घोषविशेषणम्, एव नियमो भवति (रथस्यैव घोषः, नान्यस्य)। ननु पूर्वपक्षेऽपि नियम एव (स्यात्)। (अरुणावत् एकार्थीन्)। उच्यते। असाधारणगुणवचनोऽयं शब्द एव (रथघोषमात्र एव) उपपद्यते। अरुणगुणस्तु साधारणोऽपि भवति। तत्र वाक्येन (एकहायनी–) इत्यनियमो भवति।

**शा**—वाजपेये श्रूयते 'रथघोषेण माहेन्द्रस्तोत्रमुपाकरोति' इति। प्रकृतौ 'उपावर्तध्वम्' इति मन्त्रेण दर्भाभ्यां स्तोत्रोपाकरणम्। तदिह, किं रथः दर्भयोर्निवर्तकः, घोषश्च मन्त्रस्य उत रथस्य घोषः उभयोर्निवर्तक इति संशयः। तदर्थं च किं अयं समाहारद्वन्द्वो रथेन घोषेण च इति किंवा षष्ठीतत्पुरुषः। तत्र षष्ठीसमासपक्षे पूर्वपदस्य लक्षणा स्यात्। अतः समाहारद्वन्द्वः। तेन रथो घोषश्च द्वयमुपाकरणसाधनम्। तत्र रथो द्रव्यत्वसामान्याद् दर्भयोर्निवर्तकः, घोषस्तु मन्त्रस्य शब्दत्वसामान्यात्। एवं च सं भवस्य रथस्यैव घोषः आदर्तव्यः। घोषस्य अविशेषणात् येन केनचिदपि घोषेण कार्यसिद्धेः। इति प्राप्ते, ब्रूमः। इतरेतरयोगद्वन्द्वे पदद्वयमपि मुख्यवृत्तं स्यात् तथा तु रथघोषाभ्यामिति द्विवचनं स्यात्। समाहाराश्रयणे तु द्वे अपि पदे लक्षणार्थे स्याताम्, तत्पूर्वपदमात्रे लक्षणाङ्गीकारादित्य षष्ठीसमासाश्रयणम्। तस्मात् रथस्य घोषः उपाकरणस्य साधनम्, स च प्राकृतं साधनं मन्त्रमात्रं निवर्तयति।

**सोम**—यदि कार्ये विधानात् भवेत् कुशवाधः, तर्हि रथस्यापि दर्भकार्ये विधानात् तद्बाधकत्वं स्यादित्युच्यते सङ्गतिः।

**नि**—'रथदुन्दुभितद्घोषौ किं बाधकौ दर्भमन्त्रयोः क्रमात्। बाधकावुत तद्घोषः एक एव हि बाधकः॥, रथघोषेत्यस्य द्वन्द्वत्वेनैतौ बाधकौ, न तत्। घोषाभ्यामिति था घोषे लक्षणा न प्रसज्यते। पूर्वपक्षेऽन्यतरोऽपि शब्दोऽत्रास्तु रथे सति। सत्यां ते रथदुन्दुभ्योरेव घोषः प्रयोजकः॥'

**भाट्ट**—एवं वा। वाजपेये 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इति श्रुतम्। तत्र अतिदेशप्राप्ते पूर्वप्रवृत्तेनानेन रथघोषकरणकमुपाकरणमेव माहेन्द्रोद्देशेन विधीयते। प्राकृतोपाकरणस्य च स्तोत्रद्वारकत्वमेव बलात् इति नान्यद्वारकत्वप्रसङ्गः। अस्तु वा पदत्रयेण लक्षणया माहेन्द्रस्तोत्रपूर्वसाधनीभूतोपाकरणानुवादेन रथघोषमात्र

विधि, प्रकृतौ च आज्ञादानास्योपाकरणे दर्भौ उपाद तव्यम्' इति मन्त्रस्य साधनम्। तदनौपदेशिकेन रथघोषेणातिदेशिकस्य बाधे अवश्यमाविनि, किं रथो द्वन्द्वसमासात् दर्भयोर्निवर्तकः, घोषश्च शब्दत्वसामान्यात् मन्त्रस्य, किं वा रथस्य घोष एव दर्भयोर्निवर्तक, इति चिन्तायाम्, पूर्वपक्षे लक्षणाप्रसङ्गेन तत्पुरुषसमासानुपपत्तेर्द्वन्द्व एवायम्। न च द्वन्द्वेऽपि इतरेतरयोगद्वन्द्वाश्रयणे द्विवचनापत्तेरेकवचनानुरोधेन समाहारद्वन्द्वो वाच्य। तत्र च बहुव्रीहिवत् समाहारे पदद्वयस्य लक्षणापत्तेर्वरं तत्पुरुषाङ्गीकरणमेवेति वाच्यम्। समाहारद्वन्द्वेऽपि पदद्वये लक्षणानङ्गीकारात्। नहि 'पाणिपादं वादय (श्रावय)' इत्यादौ समाहारो नाम विशेष्यतया कश्चित् प्रतीयते, अन्यथा पाणिपादयो समाहारविशेषणत्वे वादन(श्रावण)कर्तृत्वानुपपत्ते। अत एव एकविध एव द्वन्द्व। तत्र च 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति वचनेनैकवचनं वैकल्पिकम्। अत एव, एकवचनान्तद्वन्द्व 'समाहारद्वन्द्व' इति महाभाष्यस्थापि परिभाषामात्रमेव। अतश्च द्वन्द्वे कस्यापि लक्षणीयत्वाभावात् तत्पुरुषापेक्षया द्वन्द्व प्रबल एव। यदि परमेकवचनस्य द्वित्वादौ लक्षणा उद्भाव्येत तथापि तस्या अन्यैकवचन निद्ध यात् पादाधिकरणन्यायेन अदोषतया तत्पुरुषापेक्षया प्रबलत्वमेव। न चोभयविधाने वाक्यभेद, द्वन्द्वेन परस्परसाहित्येन करणत्वविधानात्। न च तथापि इतरेतरयोगद्वन्द्वे पारस्परसाहित्यरूपे पदद्वयलक्षणाया आवश्यकत्वात् कथं तदस्वीकार, तत्र तस्य धवखदिरसर्वविषयेऽपि नाधोपपत्तौ लक्षणाया प्रमाणाभावात्। धवस्य हि खदिरसाहित्यं खदिरसमभिव्याहारेण कर्मत्वेन वा, खदिरस्यापि धवसाहित्यमन्तर्भूतिरसमभिव्याहारेणेति न लक्षणा। अतश्च रथो दर्भनिवर्तक घोषश्च मन्त्रनिवर्तक इति सिद्धम्। एवं च घोषो नावश्यं रथस्यैवेति प्रयोजनम्। न च द्वन्द्वेन तयो परस्परसाहित्यावगते अरुणैकहायनी-न्यायेन परस्परनियमात् कथं न घोषो रथस्यैवेति वाच्यम्। शब्दयोपदद्वयसमभिव्याहारे हि आरुणैकहायन्यर्थयो शाब्दबोधे व्युत्पत्त्यनुरोधात् तदर्थयोरभेदान्वयस्य वाक्यसामर्थ्यतः प्राप्तत्वात् पार्ष्ठिकबोधविषयत्वम्। अत्र

एव अरुणैकहायनीस्थले परिच्छेद्यपरिच्छेदकभाव एव पार्ष्ठिकबोधविषय। 'अग्नये कृत्तिकाभ्य' इत्यादौ समुच्चय एव। अत एव 'पाणिपाद पश्य' इत्यादौ सिद्धान्ते द्वन्द्वे इतरेतरयोगस्य परस्परसापेक्षत्वेन एकावयवरूपस्य शाब्दबोधे एव भासमानत्वात् नैव कश्चित् पार्ष्ठिकबोधः, न वा निरूप्यनिरूपकभावस्य बोधविषयता। अतो यत्किञ्चिद्घोष एव मन्त्रनिवर्तक। इति प्राप्ते, नायं द्वन्द्व, स हि न तावदितरेतरयोग, तथात्वे द्विवचनापत्ते। नापि समाहारद्वन्द्व, तस्य वाचकपदाभावेन पदद्वयस्यापि समाहारे लक्षणाऽऽपत्ते। न च इतरेतरयोगद्वन्द्व एव 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्यनेन वचनेन एकवचनस्य वैकल्पिकत्वविधानात् समाहारद्वन्द्व प्रमाणाभाव इति वाच्यम्। 'द्वन्द्वैकवद्भावो न पठितव्यो भवति समाहारैकत्वादेव तत्सिद्ध' इति महाभाष्येण ज्ञापकविधया प्रमाणत्वात्। इदं माष्यम् 'सर्वो द्वन्द्व' इत्यस्य प्रत्याख्यानार्थं सत् समाहारस्य एकवचनान्तद्वन्द्वसमासेऽभिधानं समर्थयति। अतश्च अनुशासनबलादेव समाहारस्य समुदायापरपर्यायस्य पदद्वये लक्षणा बहुव्रीहिवत्। न च तत्र क्रियान्वयानुपपत्ति, 'पाणिपाद पश्य' इत्यादौ तदुपपत्ते। 'पाणिपाद वादय (श्रावय)' इत्यादौ तु समाहारे एव सामानाधिकरण्येन अन्वय समाहिसमाहार्ययोर्वा पुनर्लक्षणेति ध्येयम्। अतश्च समाहारद्वन्द्वस्याल्पवचनत्वात् तत्पुरुषस्य लक्षणाङ्गीकारेण तत्पुरुषाश्रयणात् रथस्यैव घोष। वस्तुतस्तु यद्यपि इतरेतरयोगद्वन्द्व एव एकवचनस्य वैकल्पिकता, न तु क्वापि द्वन्द्वे समाहारस्य भानमित्याश्रीयते तथापि प्रकृते न द्वन्द्व, एकवचनस्य द्वित्वादौ लक्षणाया द्वन्द्वपक्षेऽपि तुल्यत्वात्। न च बधयश्रुतित्वात् तस्या अदोषत्वम्, घोषस्य निष्पादकरूपेण अपेक्षितविधानलाभाय मुख्यलक्षणा पादक्रमतत्पुरुषस्यैवाश्रयणीयत्वात्। यदा हि श्रौतार्थत्यागेऽपि अपेक्षितविधानलाभाय प्रयाजशेषादावद्गीकृत, तदा किमु वक्तव्यमुभयतो लक्षणासत्त्वे अपेक्षितविधानानुग्रह इति। किञ्च इतरेतरयोगद्वन्द्वेऽपि साहित्यलक्षणाया पदद्वयेऽपि आवश्यकत्वात् तत्पुरुष एव युक्त। न च तस्य सर्वानिधया भानम्, तथा वे

अनुगमनवैयर्थ्यापत्तेः। इतरथा कर्मान्तादीनामपि तत्त्वेन गोचापत्तेः। अतश्च रथस्य घोषः उभयोर्दर्भमन्त्रयोर्निवर्तकः। न च शब्दत्वसामान्यात् मन्त्रस्यैव निवर्तकोऽस्त्विति वाच्यम्। सादृश्यस्य हि नियामकापेक्षायामेव नियामकता, प्रकृते चोपक्रमसमन्ध्याज्ञापनरूपकार्यजनकत्वेन विहितो रथघोषो गर्भेरार्थाभिधानद्वारा ज्ञापकस्य मन्त्रस्य निवर्तकः, तथैव करणत्वात् ज्ञापकस्य दर्भस्यापि निवर्तकः ज्ञापनरूपस्य कार्यस्य औपदेशिकजनकत्वे जनकान्तरातिदेशस्यैव व्यर्थत्वात्। अत एव 'धेनुर्दक्षिणा' इत्यादावपि न सादृश्यस्य नियामकता। तस्मादुभयस्य घोषेणोभयोर्बाध।

मण्डन— 'दर्भमन्त्रार्थघोषोऽपि.।' भाघऊ.। ३.

शङ्कर— 'रथघोषात् मन्त्रदर्भौ।' खचौ। १.

* यत्तु केचित् बहुव्रीहौ अन्यपदार्थे निरूढलक्षणाम्, पङ्कजपदेऽपि पद्मादौ निरूढलक्षणापरो. योगरूढिमवादोच्छेदापादनात् बहुव्रीहावपि तदेव अन्यपदार्थे शक्ति' इत्युपपादितम् (अरुणान्याये), तत् पङ्कजपदप्रतिबन्ध्या शक्त्यङ्गीकारे समाहारद्वन्द्वेऽपि समाहारे शक्त्यङ्गीकारापत्तौ रथघोपाधिकरणसिद्धान्तानुपपत्तिप्रसङ्गात् नवीनतम्। भौ ३।१।६।१२.

* रथमुखे 'सुजनस्य पते' इत्यादय. इत्याहुतयः स्युः। संकर्ष २।८।२८. मीको. पृ. २०६१ "सुजनस्य पते' इत्यादयो दशाहुतय. रथमुखे स्यु." इत्यत्र द्रष्टव्यम्।

𝕿 रथचक्रयान्याय:। यथा- रथे नियुक्ते मद्ये, ते मिलित्वैव रथं वहत:, वियुक्ते तु न शक्नुतो वोढुम्, परस्परस्नेहातिशयाद्दृढत्वश्च हेतुः तथा प्रकृतेऽपि। साहस्री. २९३.

* रथयत् (मुनस्यैतत्पदम्)। यथा 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति रथस्य वाक्यान्तरेण प्राप्तत्वात् अपरप्रधानाच्च अध्वर्युभागे नियम. (एवमिहापि)। भा. १०।३।४।१३.

* रथकार: अनैवर्णिक त्रैवर्णिको वा इति मतभेद.। तत्र किंचित् त्रैवर्णिकेभ्यो भिन्न जात्यन्तरम्, न तु शूद्रा. न वैश्या क्षत्रियाः। भा. ६।१।१२।४४-५०.

* रथकार: 'माहिष्येण करण्या तु रथकारः प्रजायते'। क्षत्रियात् वैश्यायां जातो माहिष्य —माहिषो वा उच्यते। 'माहिष्योऽर्या-क्षत्रिययो.' इत्यमर.। 'शूद्राविशोस्तु करण.' इत्यमरः। वैश्यात् शूद्रायां करण, करणी। वि ६।१।१२. * रथकार' सौधन्वनापरपर्याय: वर्णविशेषः। रूढे. प्राबल्यात् 'रथं करोति' इति योगस्य दौर्बल्यात् न द्विजाति:। 'वर्षासु रथकारोऽग्नीनादधीत'। मीन्या * रथकारस्यापि आर्षेयवरणमस्ति। संकर्ष. ३।८।६. मीको. पृ २३८८ 'निषादरथकारयोरपि आर्षेयवरणमस्ति' इत्यत्र द्रष्टव्यम्। * रथकारस्य आधानमात्रेऽधिकारेऽपि नोत्तरकर्मसु अधिकार., निधाऽभावात्। तदाधान च नाग्निसंस्कारार्थं किन्तु लौकिकाग्निगुणक स्वर्गफलं स्वतन्त्रमेव प्रधानकर्म। ('निषादरथकारयोराधानादग्निहोत्र दर्शपूर्णमासौ च नियम्येते' इति सत्याषाढश्रौतसूत्रम्। ३।१।१९)। मीन्या. * रथकारस्य कर्मोः सौधन्वनस्य नाम अनैवर्णिकस्य आधाने अधिकार·। ६।१।१२।४४-५०. * रथकारस्य सङ्कीर्णजातिविशेषस्य आधानकाले वर्षर्तु.। वि. ६।१।१२.

𝕿 रथकाराधिकरणम्। रथकाराधानाधिकरणम्। रथकारस्य सौधन्वनापरपर्यायस्य आधाने अधिकार.॥

वचनाद् रथकारस्याऽऽधानेऽस्य सर्वशेषत्वात्। ६।१।१२।४४॥

भाष्यम्— आधाने श्रूयते। 'वर्षासु रथकार आदधीत' इति। तत्र संदेहः किं त्रैवर्णिकानां अन्यतमो रथकारः, आहोस्वित् अनैवर्णिक इति। किं प्राप्तम्? रथकारस्य अनैवर्णिकस्य आधानमेवन्। कुत? वचनात्। वचनमिदं भवति 'वर्षासु रथकार आदधीत' इति। नहि वचनस्य किंचिदलभ्य नाम। सर्वशेषश्च अनैवर्णिकस्याधाने। ब्राह्मणराजन्यविशां वसन्तादिषु आधानम्। परिशेषात् अनैवर्णिको रथकार स्यात्।

न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात्। ४५॥

भाष्यम्— न्याय्यो वा स्यात् त्रैवर्णिको रथकारः रथकर्मणा विशेषेणोच्यते। शूद्रो हि असमर्थत्वात् प्रतिषिद्ध.। तस्मात् त्रैवर्णिको रथकार· स्यात्।

* रथकाराधान अदृष्टार्थम् । भाट्ट. ५।४।३

* रथकारशब्दस्य रथकारिणि अवयवप्रसिद्धिसंभवात् 'माहिष्येण करिण्यां च रथकारः प्रजायते' इति स्मृतेश्च अनुलोमविशेषे 'सौधन्वनास्तु हीनत्वात् मन्त्रवर्णात् प्रतीयेरन्' इत्यनेन वा न्यायेन (६।१।५०) 'ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्याऽऽदध्यात्' इत्याधानमन्त्रवर्णात् 'सौधन्वना ऋभवः' इति च सौधन्वनशब्दसमानाधिकरणस्य ऋभुशब्दस्य 'तं नेमिमृभवो यथा' इति मन्त्रवर्णात् रथकारविषयत्वप्रसिद्धेः 'मात्यात्तु जायते वैश्यात् सुधन्वाचार्य एव च । मारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥' इति सात्वतान्तपर्यायेषु सौधन्वनाख्ये जातिविशेषे, समुदायप्रसिद्धिसंभवात् 'रथकार आदधीत' इत्यत्र समुदायप्रसिद्धिबलीयस्त्वाभिधानं युक्तम् । सु पृ ४६७

* 'रथंतरं उत्तरयोर्गायति' इत्यत्रोत्तरावर्णवशेन गानम् । बिन्दु ५।२।८ * रथंतरं पवमाने भवेति विश्वजिति सर्वपृष्ठे । भा १०।६।५।१४, * रथंतरं पृष्ठ्यं बहिष्पवमाने विश्वजिति सर्वपृष्ठे । ७।३।६।८ * रथंतरसाम 'अभि त्वा शूर नोनुम०' इत्यस्यां ऋचि गातव्यम् । 'अभि त्वा शूर' इति बृहती योनिः, 'न त्वावां अन्यो०' इति सतोबृहती, तयोः प्रग्रथनेन ऋक्त्रयं भवति तत्र रथंतरं गातव्यम् । वि ९।२।६, * रथंतरसाम 'अभि त्वा शूर नोनुम०' इत्यस्यां योनौ उत्पन्नम् । २।२।१, * रथंतरसाम 'अभि त्वा शूर नोनुम' इति ऋचि गीयते । परन्तु 'कवतीषु रथंतरं गायति' इति विधिना 'कया नश्चित्र आ भुवत्' इत्यादिषु कवतीषु ऋक्षु गीयते । ७।२।१, * रथंतरसाम 'अभि त्वा शूर नोनुम०' इति तृचे गीयते । ९।४।३, * रथंतरसाम एकच्छन्दस्कं न भवति । उत्तरायाः तदाधारस्य पाठात् (उत्तरा ६८०–८१) तत्र प्रथमा बृहती द्वितीया च सतोबृहती । द्वयोरेव च प्रग्रथनेन ऋक्त्रित्वं संपाद्यते । तदानीं उत्तरे ककुभौ भवतः । न तु तत्र तस्मात्तयोरेव उत्तराद्विककुभौ समानेतव्ये । ९।२।६, * रथंतरसाम । 'कवतीषु रथंतरं गायति' । स्वरादिविशेषानुपूर्वीमानस्वरूपं ऋगक्षरव्यतिरिक्तं यद् गानम्, तस्यैव रथंतरशब्दार्थस्य अतिदेशः, न तु ऋच अतिदेशः । ७।२।१, * रथंतरसाम ज्योतिष्टोमे पृष्ठस्तोत्रे बृहता सह विकल्पितम् । ७।३।२, * रथंतरसाम ज्योतिष्टोमे माध्यंदिने सवने पृष्ठस्तोत्रेषु प्रथमम् । ९।२।६ वर्णक २, * रथंतरं साम विश्वजिति षडहात् प्राप्तम् । ७।३।२, * रथंतरं साम षडहे प्रथमेऽह्नि पृष्ठनिष्पादकम् । ७।३।३ * नहि कण्वरथंतरादयो रथंतरं इति निर्णीयन्ते । वा २।२।८।२२ पृ ५३१

* रथंतरस्य बृहतश्च धर्माणां अविरुद्धानां समुच्चयो मैत्रावरुणस्तोत्रे कण्वरथंतरे । ९।२।१६।४७ मीको पृ २३०१ 'कण्वरथन्तरे अविरुद्धानां०' इत्यत्र द्रष्टव्यम् । * रथंतरस्य बृहतश्च धर्माणां व्यवस्था तत्तत्सामगानकालेऽनुष्ठानम् । ९।२।१५।४५–४६ मीको पृ २१७७ 'बृहद्रथंतरधर्माणां व्यवस्था०' इत्यत्र द्रष्टव्यम् । * रथंतरस्य बृहतश्च स्वयोन्युत्तराप्रग्रथनेन समापितयोः ककुभोरेव गानं ज्योतिष्टोमे । ९।२।६।१५–१८ मीको पृ १८२२ 'ज्योतिष्टोमे बृहद्रथंतरयो०' इत्यत्र द्रष्टव्यम् । * रथंतरस्य योनिः बृहती, 'अभि त्वा शूर०' इति । उत्तरा पङ्क्तिः 'न त्वावां अन्यो०' इति । भा ९।२।६।१५ * रथंतरस्य साम्नो योनिः 'अभि त्वा शूर०' (योनि २३३, उत्तरा ६८०) इति ऋक् । वि १०।४।१४

* रथंतरे गीयमाने 'अभि त्वा शूर ... ईशानमस्य जगतः स्वर्दृशम्' इति स्वर्दृक्शब्दोच्चारणकाले एव नीणम्, तत्पूर्वभागोच्चारणकाले तु समीक्षणं कर्तव्यं इति पूर्वपक्षः । स्वर्दृक् इति शब्दोच्चारणात् प्रागेव समीक्षणम्, न तु सर्वोपरमसमये समीक्षणम्, इति सिद्धान्तः । वि १०।८।२ * 'रथंतरे प्रस्तूयमाने संमीलयेत्, बृहति समुद्रं मनसा ध्यायेत्' अत्र श्रौत वाक्यनिष्ठ यत्सर्वविधि श्रौत । बाल पृ १०. * 'रथंतरे प्रस्तूयमाने समीक्षेत् । (तदुद्गा) स्वर्दृशं प्रति वीक्षेत' । अत्र स्वर्दृशं प्रति वीक्षणं कालार्थं संयोगः । न तु स्वर्दृक्शब्दवीक्षणयोः अङ्गाङ्गिभावसंबन्धः । प्रस्तावकाले यच्चक्षुः संमीलितं तत् स्वर्दृक्शब्दोच्चारणकाले उन्मीलयेत् । भा १०।८।२।३ * 'रथंतरे प्रस्तूयमाने संमीलयेत्,

सन्निधिसामान्तरविरोधात् । इदं हि क्रतुसम्बन्धेन श्रुतम् 'आनर्थक्यात्तदङ्गेषु' इत्यनेन न्यायेन स्तोत्रेष्वन्तरति, गायत्र्यादीनि तु स्तोत्रेषु साक्षात् विधीयन्ते तस्मात् बलवन्ति । प्रकृत्यन्तरे तु प्रत्यक्षशिष्टं रथंतरं तेभ्यश्चोदकप्राप्तेभ्यो बलवत्तरं भवतीत्यदोषः । एवं च सम्प्रदायार्थविधानात् तत्प्रधानो बहूनीहिरनुग्रहीष्यते । अन्यथा हि उपसर्जनपदस्य लोहितोष्णीषादिवाक्यवत् अगत्या परिग्रहेत । यदि च महाव्रतविधानेन सह एकदेश वाक्यम्, ततस्तथापि रथंतरविधानं च, अनेकत्वादपूर्वभागताविधिनेव निस्तीर्यते । भोमः स्यादिति च आनन्तर्यात् तत्कर्तव्यतैव निराकृते, रथंतरसामत्वानन्तरता तु व्यवहितकल्पनैव स्यात् । सोमशब्देन च प्रकृतिलिङ्गेन ज्योतिष्टोमप्रकृतिरियायं भविष्यति । तस्मात् कर्मविधिः । इदमेव भाष्यकारो दर्शयति–'यदि रथंतरसामैतस्य कोऽर्थ ?' इत्यादिना । महाव्रतविशेषश्च तस्य एव तयोः वाक्येन अनागतप्रकरणेन वा भविष्यति ।

यद्यपि महावाक्येषु अवान्तरवाक्यानि अप्रमाणम्, तथापि अर्थसंभवात् अनिराकृते महावाक्ये अवान्तरवाक्याश्रयणात् विधिविशेषः अभाव. । ( यदिशब्द ) परित्यागात् वर अध्याहृत्य पूरणम्, इति मत्वा 'अथवा यदि गेयेन' इति दर्शयति । तत्रैतमनाऽऽश्रितायाश्च रुचेः प्रमाणत्वेन अध्याहारः, इति न स्वमनीषिकामात्र अभिहितम् । अध्याहारादपि स्वपदवृत्तिरेव व्यवहितकल्पनया ज्यायसी धर्मान्तराबाधात् इति मत्वा 'यदि शार्कं भुञ्जीत' इत्युदाहृत्य पक्षान्तरं कल्पयति । परस्तु दृष्टान्तस्यैव असिद्धेः 'कथ पुन.' इति पृच्छति । 'स्वर्थेन सम्बन्ध.' ( कल्प्येत यदि दध्युपसेचन इत्यादि भाष्यम् ) 'कामप्रवेदने हि' लिङ् इच्छा प्रत्याययति इति सिद्धान्तविवरणम् । तत्र एव वाक्यार्थो भवति 'यदि ऐन्द्रवायवाग्रान् ग्रहान् ग्रहीतुमिच्छेत्, रथंतरसामानं क्रतु कुर्यादिति ।' तत्र यदिशब्दरहितम् 'सोम स्यात्' इति पदद्वय निरायकम् । 'महान् गृह्णीयात्' इत्येतत्तु यद्यपि अविधायकम्, तथापि इच्छार्थत्वात् 'यो हि यदिच्छति, स तत् करोति' इत्येव निविषय लभ्यते । अथवा इच्छामप्युक्त्वा उपात्तं ग्रहाग्रत्वं 'स्यात्' इति एतेन लिङ् विधास्यति । किमेव व्यवहितकल्पनयाऽपि अयं पक्षो भवत् बलवत्तरः इति मन्वानः 'अथवाहेतुहेतुमतोर्लिङ्' इत्युपन्यस्यति । तत्र 'सोम. स्यात्' इति हेतौ लिङ्, 'गृह्णीयात्' इति विधाने । तेन एतदुक्तं भवति, रथंतरसाम सोमहेतुकान् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् इति । न च अक्रियमाणोऽसौ हेतुत्वं प्रतिपद्यते, इति अर्थात् विहितो भविष्यति इति । अथवा हेतुमति 'गृह्णीयात्' इति लिङ् । 'सोम. स्यात्' इति विधौ अनुक्तमपि च सोमस्य हेतुत्वं हेतुमदाक्षेपात् सन्निधेश्च भविष्यति । तथापि एषोऽर्थः 'महाव्रतविशेषकारणभूतः सोमयाग. कर्तव्य.' इति । 'यदिशब्दपरित्यागो, रूढ्यध्याहारकल्पना । , व्यवधानेन संबन्धो, हेतुहेतुमतोश्च लिङ् ॥' इति पक्षत्रिकलक्षणश्लोकः । सर्व चैतत् अवेष्ट्यधिकरणसिद्धान्ते एव उपयोक्ष्यते इति अत्र प्रपञ्चितम् । 'निष्पन्नेन निमित्तेन निष्पाद्यं प्रतिभूयते । न रथंतरसत्ता च निष्पन्ना क्रतुमन्तरा ॥' प्रातःसवने हि ग्रहाग्रता भवति, माध्यंदिने रथंतरम्, न चानिष्पन्नस्य निमित्तता युक्ता । कारणपर्यायत्वात् निमित्तशब्दस्य, मम तु नैव किञ्चित् निमित्तम् । अथवा नतु । स च आदित एव विद्यते । जगत्साम्ना च न ज्योतिष्टोमः, इति 'जगत्साम्नि सामाभावात्' इति वक्ष्यते । अतश्च 'तत्सामान्यादितरेषु तथात्वम्' इति कर्मान्तरत्वमिति ।

एकस्य तु लिङ्गभेदात् प्रयोजनार्थमुच्येतैकत्वं, गुणवाक्यत्वात् । २ ॥

भाष्यम्—तुशब्दात् पक्षः अन्यथा भवति । नैतदस्ति यदुक्तं कर्मान्तरमिति । कथं तर्हि ? ज्योतिष्टोमस्यैव ग्रहाग्रताविशेष इति । कुतः ? प्रकरणसामर्थ्यात् । नन्वेतदुक्तं वाक्यसामर्थ्यात् कर्मान्तरस्य रथंतरसाम्नो ग्रहाग्रप्राप्तेति । परिहृतमेतत् ज्योतिष्टोम एव रथंतरसामा बृहत्सामा चेति । पुनर्दूषितं अनेकसामत्वात् ज्योतिष्टोमस्य, विशेषण रथंतरेण बृहता वा न प्रकल्पते इति । तदुच्यते । प्रकल्पते विशेषणम् । बृहद्रथन्तरयोरेकस्मिन्स्वात् ।

भवति स प्रयोगो यत्र रथन्तरं नास्ति। भवति च स प्रयोगः, विद्यमानरथन्तरसामकः । तदेतद्रथन्तरं सत्तयैव असाधारणं स्यात् विशेषकम् । तस्मात् ज्योतिष्टोम एव रथन्तरसामा बृहत्सामा चेति । अथ यदुक्तं पूर्वेण निमित्तेन भवित व्यम्, उत्तरेण नैमित्तिकेनेति । नैतद्वियोगात् । भवति हि भविष्यदपि निमित्तं यथा वर्षिष्यति इति कृषिगृहकर्मा नुष्ठानम् । अपि च तत् दृष्टम्, इदं च वाचनिकं निमित्तम्, तत् यथावचनं भवितुमर्हति । 'स्यात्' इति चैव लिङ् त्रिष्वपि कालेषु भवति । तस्मात् भविष्यदपि निमित्तम्। यत्तु जगत्सामा इति कर्मान्तरम्, तस्सामान्यात् रथन्तरसामाऽपि कर्मान्तरमिति, (उच्यते) जगत्साम, श्रवणात् कर्मान्तरं सम्भवति । रथन्तरसामो बृहत्सामश्च ज्योतिष्टोमस्य अभिधानम् । तस्मान्न कर्मान्तरमिति ।

वा— पूर्वोक्तैरेव हेतुभिर्ज्योतिष्टोमस्य गुणविधिरयं न कर्मान्तरम्। एतस्यैव हि तेन लिङ्गेन रथन्तरसामत्वेन बृहत्सामत्वेन च सहायतावैधिविधियोजनार्थमुच्चारणं क्रियते । गुणवाक्यस्य च अपर्यायत्वे सति एकत्वं निश्चीयते। अथवा रथन्तरादिविधानात् ज्योतिष्टोमस्य गुणवाक्ये एवमात्मकत्वं चोदितमिति नार्थान्तरत्वं प्रतीयते। ततश्च धर्मैक्यम्। यत्तु विशेषणाभावात् सामान्यतापेक्षं विशेषणत्वाद्वा रथन्तरसामेति समासो नावकल्पते इति । तत्र ब्रूमः । 'इष्यते पाक्षिकं वस्तु सत्तयैव विशेषणम् । विग्रहे यद्विशेष्यस्य तस्य चेह निमित्तता ॥' यदि हि रथन्तरं नित्यं ज्योतिष्टोमे अव्यवहितं वा स्यात्, ततो न व्यवच्छिन्द्यादपि । यतस्तु अवस्थतोऽपि ज्योतिष्टोमप्रयोग अन्येन । तत्र तद्व्यवच्छेदमुखेन अस्ति विशेषणफलम्। यदि च एवकारं विना विशेषणबुद्धिर्न भवति, तत एवमसौ दर्शयितव्यो 'यदि रथन्तरं साम अस्य अस्त्येव' इति। बहुव्रीहेश्च मत्वर्थवर्तित्वात् मतुपश्च अस्तित्वयोगविषयत्वात् एवकारस्य अश्रुतस्यापि अध्याहारकल्पना । यद्वा 'यदि रथन्तरं सामैव अस्य भवति' इति तत्र कोऽर्थ एवशब्दस्य । नहि रथन्तरं यद्यपि सर्वदा साम, तथापि यदा तदा न भवति, तदा तु प्रति सामकार्यान्तरत्वात् असामैव इति । सत्तापक्षे रथन्तरं सामेति कथ्यते । अवश्यं च क्रत्वर्थेन मेनैकात्मतया वक्तव्यम्, रथन्तरस्वरूपे सामत्वस्य नित्यपौनरुक्त्यात् । न च रथन्तरस्य सापेक्षत्वं ज्योतिष्टोमे, येन समासो न स्यात्। एकनिर्दिष्टेषु हि एकस्तोत्रविषयेषु च एतद्भवति । वैकल्पिकेषु तु भिन्नस्तोत्रविषयसाधनेषु प्रत्येकनिरपेक्षमेव साधनत्वमिति सामर्थ्यं न विहन्यते । यद्वा पौनरुक्त्यादेव सामशब्दं तत्साध्यस्तोत्रलक्षणार्थं तत् रथन्तरपृष्ठस्तोत्रमिति पृष्ठं लक्षयति । अथवा बृहद्रथन्तरे सामान्यवत्त्वात् अनन्तरकार्ययोगाच्च विरोधिनी श्रूयमाणे यथाऽवस्थितानुवादत्वात् सामान्तराणि अनपेक्ष्य परस्परव्यवच्छेदेनैव विशेषणत्वसिद्धिः । तेनोक्तम् रथन्तरविशिष्टस्य क्रतो र्निमित्तत्वम् । अथवा अस्तु रथन्तरं क्रतुनिरपेक्षं निमित्तमिति । ननु च तदेव न प्रतीयते । उच्यते । सत्यं न प्रतीयते, किन्तु यदा समस्तक्रतुसंयोगाभावात् रथन्तरविशिष्टं क्रतुं गृहीत, तदा विग्रह्यमाणे समासे यो विपरीतो विशेषणविशेष्यभावः प्रतीयते, रथन्तरमस्य सामेति स प्रतीयते । षष्ठ्यन्तत्वाच्च क्रतुर्विशेषणमेव समासेऽपि स्वगुणविशेष्यत्वगमनात् तथा विवक्षिष्यते । यद्यपि च क्रत्वन्तरेष्वपि वस्तुस्वरूपेण रथन्तरमस्ति, तथापि तदविद्यते, तावन्मात्रेण च विशेषणत्वोपपत्तिः । स्वधर्मे च असाधारणत्वं विशेषणकारणं न वस्तुलक्षणम्, मा भूत् नीलमुत्पलं', 'देवदत्तस्य गौः' इत्येवमादीनां विशेषणत्वोच्छेदः । तथाहि, 'न लोके देवदत्तस्य गोस्सम्बन्धोऽस्ति केवलम् । उत्पलस्य च नीलत्वं सर्वैर्योऽन्येन येन तत् ॥' यदि च वस्तुत एव असाधारणत्वं भवेत् नैव शब्देन विशेषणमुपादीयेत। न हि अत्र विशेषणफलमस्ति 'अग्निरुष्णः' इति । तस्मात् अवश्यं वाक्यगम्यमेव असाधारणत्वमाश्रयितव्यम् । अस्ति च अत्रापि तत्, ज्योतिष्टोमयागस्यैव रथन्तरस्य निमित्तत्वम्त्वात् । प्रथममप्रतीतं च रथन्तरं निमित्तत्वेन उत्सृज्य, न निमित्तान्तरकल्पनायां प्रमाणं विद्यते । तस्मात् उभयथा अपि अदोषात् निमित्तम्, इति न यदिशब्दपरित्यागप्रदीनामाश्रयणं युक्तम् । न च यागप्रवेदनहेतुभूतप्रतीतिसाधकम् भवति, यावत् निमित्त

त्वेन न प्रतीतम् । तत्संभवे च नाप्रतीतग्रहणं युक्तम् । भूतभविष्यद्वर्तमानानां च अनियमेन लोके वेदे च निमित्तत्वं दृष्टम्, इति रथंतरभविष्यत्त्वमचोद्यम् । यदपि च यत् एकान्तेन अवधारितम्, तत् निष्पन्नमेव । ज्योतिष्टोमप्रक्रमे च अवधारितमेकान्तेन रथंतरं प्रयोक्ष्येत, इति सर्वैकल्पिकानां क्रतुप्रक्रमे एव अवधारणात् भविष्यत्त्वित्यवगमाभिः 'एवमिदं कर्तव्यम्' इत्यवधार्य प्रवर्तितव्यम्, तद्वशेन प्रयोगसौष्ठवमभ्यासादिसिद्धेः । न च निमित्तं नैमित्तिकस्य स्वसंनिधानेन उपकरोति, कथं तर्हि ? ज्ञायमानत्वेन । तस्मात् अप्रयुक्तमपि मनस्यवसित-त्वात् रथंतरं निमित्तम् । यदा तु एकदेशाप्येनापि तेन विशेषितः क्रतुः निमित्तम्, तदा असौ वर्तते एवेति अविरोधः । न च क्वचित्, कालविशेषसंबन्धेन उत्पत्तिः, येन अन्यतरविषयमेव निमित्तं ब्रूयात् । सर्वथा हि शक्यं दर्शयितुम् 'यदि रथंतरसामा सोमः भूतो भवति भवि-ष्यति च' इति । तत्र इह अर्थवशेन एव विज्ञायते 'यदि रथंतरं भविष्यति' इति । यत्तु जगत्साम सामान्यतो दृष्टमुक्तम्, तदयुक्तम्, तस्य एवंजातीयकेषु अप्रमाणत्वात् । अथवा प्रकरणे क्रियमाणत्वयुक्तप्रति-पत्तिविधानादिव जगत्सामत्वसंभवात् तत् इति वैषम्यम् । अपि च तथापि नैव अपूर्वकर्मोत्पत्तिः, किं तर्हि ? अप्रकृतस्य निमित्ते निमित्तत्वेन ग्रहणम् । तस्मात् निमित्तार्थानि सर्वाणि श्रवणानीति ।

शा— किं ज्योतिष्टोमात् कर्मान्तरं रथंतरसामा वृहत्सामा इति विधीयते, किंवा ज्योतिष्टोम एव रथ-तरेण बृहता वा अवच्छिन्नो ग्रहाग्रताविशेषं प्रति निमि-त्तत्वेन अनुकीर्त्यते इति । तत्रेयमिह चिन्त्यते किमयं कृत्स्नक्रतुसंयोगो रथंतरादेः, उत अकृत्स्नक्रतुसंयोगः इति । तदयमपि किं रथंतरविशिष्टः क्रतुः इह निमित्तम्, उत क्रतुविशिष्टं रथंतरमिति । 'तत्रान्यार्थप्राधान्यत्वाद् बहुव्रीहेर्निमित्तता । रथंतरविशिष्टस्य क्रतोरेवाव-गम्यते ॥ विशेषणं व्यवच्छेत्तृ विशेष्यस्यापि चोच्यते । ज्योतिष्टोमे च नान्येषां व्यवच्छेदस्य संभवः ॥ रथंतरेण कृत्स्नस्य क्रतोर्व्याप्तिश्च नैव हि । सन्त्यन्यान्यपि सामानि गायत्रादीनि तत्र हि ॥' तस्मात् रथंतरसामत्वं गुणः कर्मान्तरं कल्पयति इति पूर्वः पक्षः । न कर्मान्तरमिति सिद्धान्तः ।

सोम— पूर्वस्मिन् पादे कर्मभेदः प्रतिपादितः । अस्मिन् पादे तदपवादः प्राधान्येन प्रतिपाद्यते इति पादान्तरत्वं आनन्तर्यं च ( संगतिः विशेषा ) । प्रयो-जनम्– कर्मान्तरत्वे तस्य फलान्तरकल्पनेन ज्योति-ष्टोमाङ्गत्वात् ज्योतिष्टोमाङ्गत्वेन केवलरथंतरसामकं कर्मा-न्तरमनुष्ठेयम् । सिद्धान्ते तु नैमित्तिकग्रहाग्रतामात्रानुष्ठानम् । 'यदि बृहत्सामा' इतिवाक्यविहितशुक्राग्रताया प्रकृतौ निवेशानिवेशादिकं च प्रयोजनम् । सूत्रार्थस्तु— रथंतर-सामेति सामसंयोगस्य अशेषे कृत्स्नक्रतौ भूतत्वात् रथंतरसामेति शब्दस्य अपूर्वक्रतुसंयोगात् रथंतरसामादि-गुणं कर्मान्तरमाश्रयेत् इति ।

वि— 'रथंतरं साम सोमे भवेत् तद्वद् बृहज्ज-गत् । ऐन्द्रवायवशुक्राग्रयणाग्रा ग्रहाः श्रुताः ॥ रथं-तरादियुक्तमन्यत् कर्मायत्ता गुणाः, गायनादियुतात् पूर्वान्मन्दाश्रविणो गुणैः ॥, सोमशब्दप्रकरणे ज्योति-ष्टोमसमर्पके । ग्रहाग्रं गुणस्तत्र व्याहृतिस्तु परस्परम् ॥' आपन्नापन्नवाक्यं न कर्मान्तरविधायकम्, किंतु अन्येन विहिते सोमयागे यत्र यत्साम संभवति तत्र गुणविधा-यकम्, इत्येतावन्मात्रमत्र प्रतिपाद्यम् ।

भाट्ट— ज्योतिष्टोमे 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्रा-ग्रान्' इति श्रुतम् । तत्र यदिशब्दोपात्तस्य निमित्तस्य न तावत् रथंतरं बृहत् वा अन्वयः, तस्य विशेषणत्वेन श्रुतत्वहेतुत्वात् । नाप्यन्यपदार्थे, तस्य कादाचित्कत्वा-भावात् । नापि विशिष्टे ज्योतिष्टोमे, सामान्तराणामपि नियतत्वेन बृहद्रथंतरयोरन्ययोग व्यावृत्त्या विशेषणत्वा-संभवात्, ज्योतिष्टोमत्वावच्छेदेन अयोगस्यापि व्यावर्त-यितुमशक्यत्वाच्च । अतः समासार्थस्य केवलरथंतरसाम-कत्वस्य प्रकृते कर्मणि ग्रहाग्रतानिमित्तत्वेन निवेशायोगात् उभयविशिष्टं कर्मान्तरमेव विधीयते । यदिशब्दस्तु अवि-वक्षितार्थः । इति प्राप्ते, बृहद्रथंतरयोर्ज्योतिष्टोमे पाक्षि-कत्वात् अयोगव्यावृत्त्या परस्परयोगव्यावृत्त्या वा विशे-षणत्वोपपत्तिः । न च ज्योतिष्टोमत्वावच्छेदेन तदभाव-,

स्वाभाविकार्थप्रयुक्तोऽनवस्थानच्छेदेन तदुपपद्यते । अन्यथा तत्रापि प्राप्त्याभावे प्रोक्षणाभावादौ तत्सम्भावनाया अभावात् । अतो युक्तैव रथन्तरयुक्तस्य कर्मोऽनिमित्तता । वस्तुतस्तु न कर्मोऽनिमित्तता तस्य, प्रयोजनाभावात् । प्रकरणात्तत्र कर्माङ्गत्वेन अपूर्वार्थसाधनस्य अनुसन्धानम्, अथवा ज्योतिष्टोमरूपान्यपदार्थस्य विकृतावभावेन प्रकृतावदे वतापत्ते । अतो रक्षणादपि रथन्तरमेव निमित्तम्, नैमित्तिकं तु आधानविशेष अङ्गापूर्वसाधनीभूतमहोद्देशेन विधीयते । न च पाठादेव ऐन्द्रवायवाग्रत्वनियमस्य प्राप्तेः तद्विधिवैयर्थ्यम्, तत्र पूर्वमेव नैमित्तिकतया विधानात् । तदनोन्न च निमित्ताभावे प्रकृतौ विकृतौ च लोपः । यद्यपि च सर्वत्र निमित्तस्य सत्त्वे नैमित्तिकापरपर्यायस्य प्राप्तेयम्, तथापि तत्रान पाठादेव सिद्धे तदभावे तदभाव एव प्राप्ते नोभयम् । तस्मात् कर्मान्तरविधि ।

मण्डन— 'ज्योतिष्टोमे प्रहाग्र्यम् ।'

शंकर— 'बृहत्सामाग्निमानयम् ।' बृहत्सामादि ज्योतिष्टोम एव, न कर्मान्तरं तथा ।

रथंतराधिकरणम् (द्वितीयम्) । रथन्तरादिशब्दानां गीतिविशेषवाचित्वम् ॥

**साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् । ७।२।१।१ ॥**

**भाष्यम्**— इदं श्रूयते, 'रथन्तरमुत्तरयोर्गायति' 'कवतीषु रथन्तरं गायति' इत्येवमादीनि समाम्नायन्ते । तत्र चिन्ता, किमिह अतिदिश्यते इति । ननु यत् रथन्तरादिभिः शब्दैरुच्यते तदतिदिश्यते । बाढम् । तदेव तु न ज्ञायते किमेभिः शब्दैरुच्यते इति । ननु सिद्धमेतत् 'गीतिषु सामाख्या' (२।१।१।३६) इति । तथासिद्धस्य आक्षेपं करिष्यते । स एव तु निर्णयो भविष्यति । यदि स एव निर्णयः, किमर्थं आक्षेपः ? दार्ढ्यार्थं, स्थूणानिखननवत् । तत्र किं प्राप्तम् ? तदुच्यते । स्तोभस्वरकालाभ्यासविकारा हिंकार-प्रणव-प्रस्ताव-उद्गीथ-प्रतिहार-उपद्रव-निधनवत्या ऋचि सामशब्दमभियुक्ता उपचरन्ति । तस्मात् तैरुच्यते । ननु गीतौ कस्या भावात् तानाख्यस्य संस्कारकर्मणो वाचका एते शब्दा इत्युक्तम् । तदेव इदमत्र आक्षिप्यते । नेमे संस्कारस्य वाचकाः । किं कारणम् ? अकर्मकाले प्रयोगात् । अकर्मकाले साम प्रयुज्यते । न च संस्कारकर्माणि प्रोक्षण-अवेक्षण-पर्यग्निकरणादीनि अकर्मकाले प्रयुज्यन्ते, प्रयोजनाभावात् । अथ तु मन्ता एवं, तत्र अपि ह 'स्वाध्यायोऽध्येतव्य' इति नियमात् अकर्मकाले प्रयोगो युज्यते । तस्मात् ऋचां नामानि । किंच संज्ञाभेदात् । संज्ञाभेदश्च भवति रथन्तरं बृहत् इत्येवमादि । न एकत्वात् संस्कारकर्मणः अनर्थकः । एकेनैव हि तत्र पर्याप्तम्, यथा गीतिरिति । अथ ऋचां नामानि, तत्र तासां भेदात् संज्ञापृथक्त्वं युक्तम् । अपि च यदि गानं रथन्तरम्, गानं च बृहत्, इदं रथन्तरम् इदं बृहत् इति पृथक्त्वेन संज्ञानिवेशो नोपपद्यते । ऋङ्नामत्वे तु उपपद्यते । किंच विकारपृथक्त्वात् । प्रतिसाम च विकारपृथक्त्वात् । प्रतिसाम च विकारपृथक्त्वं दृश्यते । सर्वेश्वरत्वात् गानस्य अनुपपन्नम् । संस्कारभेदे हि विकारपृथक्त्वं दृष्टम् । तद्यथा अवहन्तेस्तण्डुलीभावः, पिषेश्चूर्णत्वम् । न एकस्य तण्डुलीभावश्चूर्णत्वं च । अथ ऋङ्नामान्येतानि, तत ऋचां भेदात् विकारपृथक्त्वं युज्यते । तस्मात् ऋङ्नामानीति । अत उत्तरं पठति । साम्नः अभिधानशब्देन प्रवृत्तिः स्यात् यथाशिष्टमिति । साम्नः अभिधानशब्देन यथाशिष्टं प्रवृत्तिः स्यात् । यत् शिष्टं प्रवक्तृभिः शिष्येभ्यः । किंच शिष्टम् ? स्तोभादिविशिष्टा ऋक् साम । सा गीतिः । तत् कारणम् । तस्या रथन्तरादि नामधेयमिति ।

**शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिः स्यात् पृथग्भावात् क्रियाया ह्यभिसम्बन्धः ।२॥**

**भाष्यम्**— तुशब्दः पक्षनिवृत्तौ । न तु एवं स्यात् ऋक्षु प्रवृत्तिरिति । कथम् ? इह 'कवतीषु रथन्तरं गायति' इति कवतीनां वा कार्ये अभिवत्य अतिदिश्येरन्, कवतीनां वा उपरि आधेयभावेन । तत्र कार्ये तावत् अतिदेशो न घटते । कुतः ? शब्दैरर्थविधित्वात् । शब्दानाम् अर्थविधानं कार्यम् । न च कवतीषु रथन्तरं गायति इति कवतीभिः सोऽर्थोऽभिधीयते, यं अभिवत्य शक्नुवन्ति वक्तुम् । तस्मात् कार्यातिदेशः । आधेय-

नेऽपि न समवति, पृथग्भावात् । नहि शब्दः शब्दे समवैति, पृथगेवासौ दृश्यते अपि च, यथा नः इति । क्रियाया हि गानक्रियायाः शब्देन अभिसम्बन्धो भवेत्, न शब्दस्य । तस्मात् आनर्थक्येनापि नातिदेशः । अतो नायं क्वचः प्रदेश इति ।

स्वार्थे वा स्यात् प्रयोजनं क्रियायास्तदङ्ग-भावेनोपदिश्येरन् ॥ ३ ॥

भाष्यम्— स्वार्थे वा प्रवर्तमाना अभिसम्बध्येरन् अङ्गभावेन उपदिश्येरन् । कथं पुनः 'कवतीषु गायति' इति अङ्गभावः स्वर उपदेष्टुम् ? शक्यः । यथा 'येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात्' इति । किं पुनः प्रयोजनं कवतीनां अभिसम्बन्धो निर्वर्तयन्तीति । उच्यते । प्रयोजनमदृष्टं कल्प्यम् । कुतः ? क्रियायाः यस्मात् क्रिया श्रूयते, कवतीषु रथंतरं गायतीति । यथा प्रयाजादीनां प्रयोजनं क्रियायाः । उच्यते । अयमेव अस्मिन् पक्षे दोषः, यत् प्रयोजनं क्रियायाः कल्पयितव्यम् । तस्मादयमपि पक्षो दुष्टः ।

शब्दमात्रमिति चेत् ॥ ४ ॥

भाष्यम्— इति चेत् पश्यसि शब्दमात्रेण अभिवर्तमानस्यैषो तु भिन्नः इति । तेन तर्हि शब्दमात्रं प्रदिश्यताम्, रथंतरशब्दं कवतीषु प्रयुञ्जीत, कवतीः रथंतरशब्देन अभिदध्यात् इति । किं कारणम् ? शब्दे उच्चरिते तत्र तावन्मुख्या प्रतिपत्तिः । शब्दे कार्यस्यासम्भवात् अर्थे कार्यं विज्ञायते, यथा गामानय इति । इह तु शब्दे एव कार्यं सम्भवति, नार्थे । अतोऽत्र शब्द विज्ञायते ।

नौत्पत्तिकत्वात् ॥ ५ ॥

भाष्यम्— पूर्वस्मादेष वादः पापीयान् । कस्मात् ? औत्पत्तिकत्वात् । औत्पत्तिको हि नामिनाम्नोः सम्बन्धः । यः शब्दो यस्मिन्नर्थे औत्पत्तिकेन सम्बन्धेन प्रसिद्धो न स ततोऽन्यं प्रत्याययितुं शक्नोति । न हि गोशब्देन अश्वोऽभिधातुं शक्यते ।

शास्त्रं चैवमनर्थकं स्यात् ॥ ६ ॥

भाष्यम्— एवं च सति अतिदेशशास्त्रमनर्थकं स्यात् । असामर्थ्यात् । तस्मात्र शब्दस्यापि प्रदेशो युक्तः । वृत्तिकारस्तु मेने 'गानमात्रं यौक्तिकस्य अनर्थकं स्यात्' इति । तस्यायमभिप्रायः, यथा गतौ नैतावान् प्रयासः विज्ञानामफलोऽभ्युपगन्तुं न्याय्य इति ।

स्वरस्येति चेत् ॥ ७ ॥

भाष्यम्— इति चेत् पश्यसि, नाम्नोऽतिदेशः अयुक्त इति । तेन तर्हि स्वरस्यातिदेशो भवतु । स्वरः सामशब्देन लोके अभिधीयते सुसामा देवदत्त इति— सुस्वरो देवदत्त इति । स्वरः, घोषः, नादः इति समानार्थाः । स सामशब्देनोच्यते । साम च रथंतरम्, तस्मात् तस्य अतिदेशः ।

नार्थाभावाच्छ्रुतेरसंबन्धः ॥ ८ ॥

भाष्यम्— नैतदेवम्, स्वरस्यातिदेश इति । कुतः ? अर्थाभावात् । अर्थस्य अभिव्रतीस्वरस्य कवतीषु अभावात् । ननु भक्त्येतस्मी अतिदेशेन भाव्यते । उच्यते । भावयितुमपि न शक्यते । नहि अभिवत्यक्षराणां अभिव्यञ्जको नादः कवतीषु भावयितुं शक्यः । यदि भाव्येत न कवत्यो भवेयुः । न चेत् भाव्येत, न भूतः । 'कवतीषु रथंतरं गायति' इत्येतस्याः श्रुतेः पदानां परस्परेण अभिसम्बन्धो न स्यात् । तस्मान्न स्वरस्यातिदेशः ।

स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥ ९ ॥

भाष्यम्— तुशब्दः पक्षान्तरपरिग्रहे । यदि अभिवतीस्वरस्य कवतीषु प्रदेशो नोपपद्यते, अनुवादो भवतु कवतीषु रथंतरं गायतीति । कथम् ? तदुच्यते । इह 'कवतीषु रथंतरं गायति' इत्यस्य वाक्यस्य द्वे वचनव्यक्ती भवतः । कवतीषु यद्रथंतरम्, तत् गायति इत्येका । रथंतरं यत्, तत् कवतीषु गायति इत्यपरा । तयोरेषा द्वितीया रथंतरं यत्, तत् कवतीषु गायतीति । सा स्वरस्य सामत्वे न समभवदित्युक्तम् । न हि अभिवतीस्वरः कवतीषु समावेशयितुं शक्य इति । प्रथमा तु सम्भवति, कवतीषु यद्रथंतरं तत् गायति इति । ननु साऽपि न सम्भवति, न हि कवतीषु रथंतरमस्ति । अतः एवमुच्यते, स्वरस्तु उत्पत्तिषु स्यात् । स्वरस्तु अभिवतीस्वरः कवतीनां उत्पत्तिषु उच्चारणेषु स्यात् । कथम् ? मात्रावर्णाविभक्तत्वात् । यदि मात्रा वर्णाश्च अभिवतीना

कवतीना च अविभक्ता अभिगतीष्वपि विद्यते कवती-ष्वपि । सोऽसौ अभिनतीस्वर कवतीषु साधारणत्वेन समवेतो विद्यते । तस्यानुवादोऽयं भवते, कवतीषु रथतरं गायतीति । तस्मात् स्वरस्यानुवाद ।

लिङ्गदर्शनाच्च । १० ॥

भाष्यम्— लिङ्गं च दृश्यते एतस्मिन्नर्थे अस्ति रथतरं उत्तरयोरिति । किं तत् लिङ्गं भवति ? एवमाह, 'रथतरमुत्तरयोर्न पश्यामि इति विश्वामित्रस्तपस्यते, बृहदुत्तरयोर्न पश्यामि' इति वसिष्ठ इति । यच्च विद्यमानं न दृश्यते तद्दर्शनाय यत्नः क्रियते, यथा घटं न पश्यामीति प्रदीपं करोति, न शशविषाणं न पश्यामीति । तस्मादस्ति उत्तरयो रथतरं बृहच्च । तयोरनुवाद इति ।

अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति । ११ ॥

भाष्यम्— तुशब्दः पक्षं व्यावर्तयति । नैतदेव स्वरस्यानुवाद इति । कुतः ? एवं सति उत्तरासु विकारो न कश्चित् श्रुतो भवति । तदा उत्तरा यथाश्रुताः प्रयो-क्तव्याः । यथा स्वाध्यायकाले श्रुताः । तत्र रथतरमुत्तर-योर्गायति' इत्येतदनुवादमात्रं अप्रवृत्तिविशेषकरं अनर्थ-कमेव आपद्यत । अतो न स्वरस्यानुवादो युक्तः ।

शब्दानां चासामञ्जस्यम् । १२ ॥

भाष्यम्— रथतरादीनां च सामशब्दानां असाम-ञ्जस्यं स्यात् 'रथतरमुत्तरयो, बृहदुत्तरयो ' इति । कथम् ? तदुच्यते । अत्र रथतरशब्दो बृहच्छब्दो वा स्वरस्य सामशब्दत्वे स्वरसमुदाये आनुपूर्व्या अवस्थिते स्वरविशेषे प्रयुक्तः । स एकदेशो भिन्नानुपूर्व्ये न अस-मञ्जसो भवति । तस्मान्नैतद् युक्तम्, स्वरश्च सामशब्द, तस्य चानुवाद इति । अत्राह, एवं सत्यपि सर्वे पक्षा निवृत्ता, तत्र किं अप्रवृत्तिरेवेति । उच्यते । अथ पर प्रदेशो भवतु । ननु उक्तं न शक्या ऋच ऋगन्तरे प्रदेष्टुं इति । बाढम्, देशलक्षणा भविष्यति । 'कवतीषु रथतरं गायति' इत्युच्यते, न च शक्यते कवतीषु रथ-तरं गातुम्, तत्र देशलक्षणा भवति, कवतीदेशे इति । यथा अग्नौ तिष्ठति, कूपे तिष्ठति इति । धर्मलक्षणा वा स्यात् । रथतरधर्मो वा कवतीषु रथतरशब्देन अति-दिश्यते । यथा 'रथतरं प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्' इत्येवमादय । यथा आचार्ये प्रोषिते आचा-र्यानी भवतामाचार्य इति आचार्यशुश्रूषा आचार्यां या मतिदिश्यते ।

अपितु कर्मशब्द स्याद्भावोऽर्थे प्रसिद्धग्रहण-त्वाद् विकारो ह्यविशिष्टोऽन्यैः । १३ ॥

भाष्यम्— अपितु नैव स्यात् ऋच सामशब्द-तस्याश्च प्रदेश इति, तथा देशलक्षणा धर्मलक्षणा वा आश्रयणीया । अगतिश्चैषा यत् लक्षणापरिग्रह । किं तर्हि ? कर्मशब्द स्यात् । रथतरादि गानाख्यस्य संस्कारकर्मणो वाचक । कुत ? उक्तो ह्यत्र 'गीतिषु सामाख्या' (२।१।११।३६) इत्यत्र । तत्र गीति-विशिष्टाया ऋचि एव शब्दो दृष्ट । न चागृहीतविशेषण विशेष्ये बुद्धिरुपजायते । तस्मात् विशेषणं तावत् अभि-धीयते । विशेषणप्रत्ययाच्च सहचरिते विशिष्टे प्रत्यय । अतो नास्ति ऋच शब्देन स्पर्श इति । तेनैव शब्देन गीतिनामधेय इति ब्रूम । किंच प्रसिद्धग्रहणत्वात् । अय-श्च गायतीति शब्दो गानक्रियायां प्रसिद्ध । का पुनरसौ ? शब्दस्य उच्चारणविशेष, गायति गानं करोति इति । तद्ग्रहणश्च रथतरादिशब्द तद्वचन इत्यत । तेन समु-च्चारणात् द्वितीयासामर्थ्याच्च । यथा आसारितक गायतीति यथमानक गायति इति । ननु शब्दवचनेनापि समुच्चारण भवति गाथां गायति, ऋचं गायति इति । सत्यम् । विपरिणयन्तु शब्दम्, गानेन ऋचं संस्करोति इति । यथा निपतितेन अर्थेन न तत्र गते गानं करोति ऋचमिति । तस्मात् गीतिवचन । इतश्च गीतिवचन । कुत ? विकारो हि अविशिष्ट अन्यै । विकारश्चात्र ऋगन्तरस्य दृश्यते । ह्रस्वानामक्षराणां दीर्घता, दीर्घाणां च ह्रस्वत्वम् । विवृतानां संवृतत्वम्, संवृतानां विवृतत्वम् । स अविशिष्ट अन्यै संस्कारकर्मभि । यथा अवहन्तिना व्रीहीणां तण्डुलीभाव, पिंषता तण्डुलानां पिष्टीभाव । तस्मात् शब्दानां संस्कारो गानाख्यो रथतरादिभि शब्दै-रुच्यते । तस्यायं प्रदेश रथतरमुत्तरयोर्गायति' इत्येव-मादि ।

अद्रव्यं चापि दृश्यते । १४ ॥

भाष्यम्— अपि च अद्रव्यं साम दृश्यते । इत्य

तयोदृष्टत्वानि कानिचिल्लिङ्गदर्शनानुपपत्तिरिति द्रष्टव्यम् । न च 'यज्ञायज्ञीयं गायति' इत्यादौ योनिसम्बन्धित्वेन रूपेण निषेधनात् अतिदेशाप्रसक्तौ अपि 'कवतीषु रथन्तरं गायति' इत्यादौ रथन्तरस्यैव निवेशात् तदुच्छेदकत्वात् अतिदेशस्यानुपपत्तिः इति वाच्यम् । तत्रापि धर्मग्राहकप्रमाणोपकारलाभार्थं अभिवर्तीषु अधिकस्यैव विधेयतावच्छेदकत्वात् । वस्तुतस्तु गृहमेधीये आज्यभागविधेः अतिदेशाप्रापकत्ववत् अस्यापि अतिदेशकत्वाभावे न काचित् क्षतिः । रथन्तरत्वेन अभिवर्तीषु येन रूपेण उपकारकता तेनैव कवतीषु उपकारकत्वमतिदेशेन उपपद्यते ।

मण्डन— 'गीतिरित्यातिदिदेशेह ।'

शङ्कर— 'गीति साम तु नर्दं मता ।' न मृक् मता ।

* रथंतराधिकरणे अनेनाधिकरणेन आपवादिकी सङ्गतिः । कौ १।१।४।२ * रथन्तराधिकरणे निमित्तादिषु सत्स्वपि विशेषभावेन निमित्ताभावात् न नैमित्तिका धर्मा इति कौस्तुभे निरूपितम् । अतश्च तत्र नियता प्राप्तिः, अनियता च वा काचित् प्रतिपत् । भाट्ट १०।७।१६

* सोमस्य भाष्यमतीय एव रथन्तराधिकरणन्यायेन आवेदयधिकरणात् मानदप्रमाणस्य अभिमर्शे निषेधस्थापनया प्रमुख्यवाक्यमत्र निवृत्यादयश्च सिध्यन्ति । सोम ८।१।१८

* रथन्तरादिगीतीनां नियतानुपीकारः । मणि. पृ १७०,

* रथन्तरादिशब्दा अभ्यासश्च गीतिवाचकाः । ५।२।१।१–२ 'सामशब्दो रथन्तरादिशब्दाश्च गीति वाचकाः' इत्यत्र द्रष्टव्यम् । * रथन्तरादिशब्दस्य गायनविशेषत्वेन प्रसिद्धमानताधिनत्यम् । सु पृ ८०२

* रथन्तरादिशब्दानां गीतिविशेषवाचित्वम् । रथन्तराधिकरणम् । ७।२।१।१–२१

§ रथन्तरादिसाम्नां तृचे गानम् ॥

एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत् । १०।६।१।१ ॥

भाष्यम्— सामान्युदाहरणम्, रथन्तरं बृहत् वैरूपं वैराजं शाक्वरं रैवतमिति । तत्र संशयः किमेकस्यामृचि गानं कर्तव्यमुत तृचे इति । किं प्राप्तम् । एकर्चस्थानि यज्ञे स्युः । एकस्यामृचि गातव्यानि । एवं स्वाध्याये गीतानि । यथा स्वाध्याये गीतानि, तथा कर्मणि गातव्यानि । कर्मणि स्वाध्याये चावैलक्षण्यं न्याय्यम् । कर्माणि कर्तुं स्वाध्यायमध्यैषन्त । अतो यथाऽभ्यस्तं तत्र प्रयोक्तव्यम् । तस्मादेकस्यामृचि गेयम् । एकर्चोत्पत्तीन्युदाहरणम्, न तृचोत्पत्तीनि । यथाऽऽह, सिमा–सतति–पतर–एलगायर–शाक्वराणीमिति ।

तृचे वा लिङ्गदर्शनात् । २ ॥

भाष्यम्— न चैतदस्ति, एकस्यामेव गातव्यानीति । तृचे ? लिङ्गदर्शनात् । लिङ्गं भवति । एवमाह, अक्षरेण प्रथमाया ऋचः प्रस्तौति, द्व्यक्षरेणोत्तरयोरिति । न ह्येकस्यामृचि प्रथमोत्तरासम्भवो भवति । तस्मात् तृचे गातव्यानीति । अथेदमपरं लिङ्गम् 'ऋक् सामोवाच, मिथुनं सम्भवावेति । सोऽब्रवीत्, न वै त्वं समालमसि चासर्वे नेयो मे महिमेति । ते द्वे भूत्वोचतुः, सोऽब्रवीत् नैव वा समाप्तौ स्थो आयामे वेदो मे महिमेति । तास्तिस्रो भूत्वोचतुः, सोऽब्रवीत् समनामेति । तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इति ।

आह । लिङ्गमिदम्, अविशिष्टत्वात् प्रसिद्धवचनमिति । तदभिधीयते । छन्दोऽपि ऋग्वेदे न प्रथमा नाम काचित् ऋगस्ति, तथा उत्तरे इति । अक्षरेण प्रथमायाम्, उत्तरयोरिति प्रथमायाः ऋचोऽक्षरेण प्रस्तोतव्यम्, द्व्यक्षरेण चोत्तरयोरिति । तस्मिन् वचने सति अत्र क्रियमाणत्वात् । यथा यद्यप्यनुवादरूपोऽयं छन्दः, तस्मादेकं साम तृचे क्रियते स्तोत्रीयमिति, तथापि ऋक् सामोवाच–इति पुरस्तादर्थवादप्रलोचनश विद्यमानीति गम्यते । तदुक्त वचनानि तत्पूर्वकानीति ।

आ— सन्ति ज्योतिष्टोमे रथन्तरादीनि स्तोत्रीयाणि सामानि, तानि किं एकैकस्यामृचि गेयानि, उत तृचे इति संशये स्वाध्यायवेलायां एकस्यां ऋचि गीतत्वात् तन्मन्त्रायां यज्ञे अपि एकस्यां भवेयुः, 'एकं साम तृचे क्रियते' इति कर्मानानिर्देशस्य न विधित्वमित्ये-

निरूप्येते । अत्र यद्यपि साक्षान्न रशना श्रूयते, किन्तु 'यूपं परिव्ययति' इति यूपपरिव्याणादेव लभ्यते, तथापि दर्भमय्यादिशब्दानां यौगिकत्वेन परिव्याणाश्रितरशनाविशेषवचनत्वात् भाष्ये रशना श्रूयते इत्युक्तम् । यूपपरिव्याणं 'यूपं परिव्ययति' इत्यनेन यथा अग्नीषोमीये विधीयते, तथा 'आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति' इत्यनेन सवनीयेऽपि विहितम् । तेन यूपपरिव्याणांशे पादेन उभयत्रैव रशनायाः प्राप्तत्वात् रशनाधर्माः श्रूयमाणाः किमग्नीषोमीयरशनार्थाः एव उत अग्नीषोमीयसवनीयरशनार्था इति भवति संदेहः ।

अत्राय पूर्वपक्षः— अग्नीषोमीयस्य क्रमे चतुर्दश्या रशनाधर्मा दर्भमय्यादयः श्रूयन्ते न सवनीयस्य । तेन पशुधर्मवत् अग्नीषोमीययूपपरिव्याणार्था एव रशनाधर्माः । ननु श्रुत्या रशनामात्रार्थाः प्रतीयन्ते । श्रुतिश्च वाक्यात् बलीयसी । सत्यम् । किन्तु यूपस्वरूपसंबन्ध. आनर्थक्यात् अपूर्वसाधनलक्षणया श्रुत्या विनियोगो वक्तव्यः । तेन यथा श्रुत्या प्रकरणसहायभूतया बर्हिर्धर्माः प्रकरणवर्तिबर्हिर्मात्रार्था., एवं श्रुतिसाधारण्येऽपि न पिण्डपितृयज्ञबर्हिरर्थाः तथा रशनाधर्मा अपि क्रमसहायया श्रुत्या क्रमोपस्थिताग्नीषोमीययूपपरिव्याणरशनार्था एवेति । एवं प्राप्ते, अभिधीयते । यद्येवं अग्नीषोमीयक्रमश्रुतस्य 'यूपं परिव्ययति' इति परिव्याणस्य प्रीतिप्रोक्षणवत्, यूपद्वारेण प्रधानापूर्वनिर्वृत्त्युपयोगो भवेत् । किन्तु यूपस्य अलौकिकत्वेन अनिर्ज्ञातोपायपरिमाणस्य साधनापेक्षया 'यूपं परिव्ययति' इति द्वितीयाश्रुत्या यूपनिर्वृत्त्युपयोगित्वेनैव परिव्याणस्य यूपाङ्गत्वं विधीयते । एवं सवनीयेऽपि 'उपनिष्क्रम्य यूपं परिव्ययति' इति द्वितीयाश्रुत्या यूपाङ्गतया परिव्याणं श्रूयमाणं साधारणस्य यूपस्याग्नीषोमीय एव निष्पन्नत्वात् । यद्यपि न यूपस्वरूपनिर्वृत्त्युपयुक्तम्, तथापि स्वरूपे कार्ये चोपयोग्यङ्ग भवतीति न्यायेन यूपकार्यपशुनियोजनोपयुक्तसदर्थातिशयवचनेनैवाङ्ग भवति । एतच्च यूपाङ्ग परिव्याणरशनात्वाविशेषात् उभयरशनासाधारणा एव भवन्ति । न चैव सति अग्नीषोमीययूपस्यैव क्रमेण अभिधानितत्वात् क्रमसहायया श्रुत्या तत्परिव्याणरशनार्था एव विधीयन्ते । प्रकरणसहाययैव श्रुत्या बर्हिर्धर्मा दर्शपूर्णमासीयबर्हिरर्था इति वाच्यम् । यतो य एव अग्नीषोमीयस्य यूपः, स एव सवनीयस्यापि । तेन अग्नीषोमीययूपपरिव्याणरशनाङ्गत्वेन विधीयमाना धर्माः सवनीये यूपपरिव्याणरशनाङ्गत्वेनापि विहिता भवन्ति । पिण्डपितृयज्ञबर्हिषो न दर्शपूर्णमासबर्हिर्ष्योऽन्यत्वादुक्तम् । यद्यसाधारणा धर्मा इति तथापि सवनीयोत्पत्तिवाक्ये 'त्रिवृता यूपं परिवीय' इत्यनुवादो रशनाधर्मसाधारण्याद्विनाऽनुपपद्यमानो लिङ्गं भवति । तेन लिङ्गदर्शनादपि साधारणा रशनाधर्मा इति सिद्धम् ।

प्रयोजनम्— पूर्वपक्षे सवनीयरशनाया दर्भमयादिनियमः । सिद्धान्तेऽग्नीषोमीय एव दर्भमयादिधर्मनियम इति । सूत्रं तु-रशनेति रशनाधर्मोपलक्षणार्थम् । तेनाय मर्थः, यद्वत् ग्रहधर्माः सवनयागादिग्रहसाधारणाः, तद्वत् रशनाधर्मा अपि साधारणाः । लिङ्गदर्शनं चोपकर्मेवेति । वौवा

● 'रशना च लिङ्गदर्शनात्' इत्यत्र सिद्धान्तवादिना उभयोः परिव्याणयोः साधारणी रशना इति परिहारो वक्तव्यः । शा. ३।६।७।२२ पृ. १०४९. ● 'रशना च लिङ्गदर्शनात्' । ( अष्टादशात् सूत्रात् तुल्य-शब्दो ऽनुवर्तते ) रशना च अग्नीषोमीयसवनीययोः पश्वोः तुल्या । लिङ्गस्य दर्शनात् । एवमाह 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति सवनीयपरिव्याणे रशनां दर्शयति । सा यदि साधारणी तत एतद्दर्शनमवकल्पते । भा ३।६।१०।२१. ● रशना तद्धर्माश्चाग्नीषोमीयपश्वनुगता., सर्वेषु पशुषु अतिदिश्यन्ते । ३।६।१०।३१. ● रशना तद्धर्माश्च क्रमात् अग्नीषोमीयाङ्गम् । इति प्राप्ते, श्रुत्या यूपाङ्ग इति सिध्यति । 'उच्यते रशनाधर्मा दर्भमय्यादयः क्रमात् । अग्नीषोमीयशेषाः स्युः, श्रुत्या यूपाङ्गतां गताः ॥ एकयूपपरिव्याणशेषो हि रशना श्रुता । तद्धर्मैस्ता यान्ति क्रमेण पशुशेषताम् ॥' श्रुतिः क्रमात् बलवती । वा. ३।३।७।१४ पृ. ८३६. ● रशना तद्धर्माश्च यूपधर्मा एव, न पशुधर्मा., 'त्रिवृता यूपं

परिवीय ' इति तृतीयाश्रुत्या वाक्येन च । वि. ३।६।१०. ● रशना ( द्वितीया ) न पशुबन्धनार्था किंतु यूपसंस्कारार्था । ९।४।१।२२–२४. ● रशना यूपपरिव्याणार्था, त्रिवृत् प्रतिष्ठिता दर्भमयी । भा. ३।६।१०।२१. ● रशनाः । अग्निष्टोमे ( द्वे ) पशुयूपरशनाश्च, अहर्गणे तन्त्रेण एव उपकुर्वन्ति । संकर्ष. १।४।२१. ● रशनाः पृथक्कार्या. ' अग्निष्टं परिवीय यानि परिवीयते ' इति रशनासंस्कारविशेषः । संकर्ष. १।४।२२. मीको. पृ. ७८ " अग्निष्टं रशना बध्नाति ' इति रशनासंस्कार. " इत्यत्र द्रष्टव्यम् । ● रशनया यूपपरिव्याणं ( यूपपरिवेष्टनं ) ' परिवीरसि ' इत्यादिमन्त्रेण अध्वर्युः करोति । वि ३।८।११. ● रशनायाः यूपाङ्गत्वं ज्योतिष्टोमे । ४।१।१।२२–२४. ● रशनायाः यूपार्थता. भवति समुच्चयः । वा ४।४।१।२२ पृ. १२०१. ● अग्निकमणो एकयूपे एकादशपशून् नियोजने यूपसंस्कारार्थाया रशनायाः भेदहेत्वभावात् ऐकतन्त्र्यमेव । भा. ४।४।१। २२–२४.

■ रशनाधिकरणम् । अग्नीषोमीये पशौ रशनाधर्मा अग्नीषोमीय–सवनीयोभयसाधारणा ॥

रशना च लिङ्गदर्शनात् । ३।६।१०।२१ ॥

भाष्यम्— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति । तत्र रशना श्रूयते रशनाधर्माश्च ' त्रिवृद् भवति, दर्भमयी भवति, प्रतिष्ठिता कर्तव्या च ' इति । तत्र संदेहः किमेते धर्माः अग्नीषोमीयरशनायाः सवनीयरशनायाश्च साधारणा, उत अग्नीषोमीयरशनाया एवेति । किं प्राप्तम्? प्रकरणात् अग्नीषोमीयरशनाया. इति । एवं प्राप्ते, ब्रूम. । उभयोः साधारणा इति । कुत. । लिङ्गदर्शनात् । लिङ्गं भवति । एवमाह ' आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति ' इति सवनीयपरिव्याणे रशनां दर्शयति । सा यदि साधारणी, तत एतद्दर्शनमवकल्पते । यदि अग्नीषोमीयस्य., ततः अप्राकृतात् सवनीयपरिव्याणात् निवर्तेत । सवनीये च परिव्याणान्तरमप्राकृतम्, यच्च निवृतं दृश्यते । कथम्? ' स वै आश्विनं ग्रहं गृहीत्वा उपनिष्क्रम्य यूपं परिव्ययति ' इति । तत्र यदि न साधारणी रशना, वाससा परिव्याणं प्राप्नोति । रशनां तु दर्शयति । तस्मात् साधारणी रशना । तत्साधारण्याच्च तद्धर्मा अपि साधारणाः । तदेतल्लिङ्गात् रशनासाधारण्यम् । कोऽत्र पुनर्न्याय इति? उच्यते । प्रकरणादग्नीषोमीयस्य, वाक्यात् यूपमात्रस्येति ।

वा— अग्नीषोमीये यूपपरिव्याणमाम्नाय पुनः सवनीये ' स आश्विनं ग्रहं गृहीत्वा ' इत्याम्नातम्, तच्च निर्गुणपुनःश्रवणात् कर्मान्तरम् । उभयोश्च केनचित् द्रव्येण भवितव्यम् । यच्च परिव्याणद्रव्यम्, सा रशना लोके वेदे च प्रसिद्धा । तेन उभयत्र तादर्थ्यादेव रशना प्राप्ता । सा च किंमयी किंधर्मा च इत्यपेक्षिते अग्नीषोमीयस्य स्थानानुक्रमे प्रकरणे ' त्रिवृत् दर्भमयी प्रतिष्ठिता कर्तव्या ' इत्याम्नानात् विशेषः प्रतीयते, न सवनीयपरिव्याणस्य । तस्मात् इतरपशुधर्मवदेव रशनेतिकर्तव्यता अग्नीषोमीयार्थैवेति । तथा प्राप्ते, लिङ्गदर्शनात् साधारणी इत्याह । नहि सवनीयोपदर्शनवाक्ये त्रिवृत्त्वानुवादो रशनाधर्मसाधारण्याद्विना उपपद्यते । अतः प्रमितिरिति चेत्तामाह– वाक्यसंयोगात् रशनामात्रस्य, स्थानादग्नीषोमीयस्य । वाक्यं च तस्मात् बलवत्तरं इति । ननु ' न तद्वाक्यं हि तदर्थत्वात् ' ( ३।३।१।८ ) इत्युत्तरं वक्ष्यति । तेन अग्नीषोमीयापूर्वप्रयुक्तत्वात् व्यवस्था स्यादिति । नैतदेवम् । न ह्येषा साक्षात् पशुसंनिधनी । किं तर्हि ' यूपाङ्ग या तदाश्रया ( ४।१।१।२३ ) इति वक्ष्यति । तेन दैक्षमेक वाक्यमेतत् । यूपपरिव्याणव्यापारसाधनस्य एते धर्मा इति । तथा न अग्नीषोमीयस्य एतद् यूपपरिव्याणमेव च यूपैकदेशत्वात् सवनीयस्य यूपपरिव्याणम् । इयमपि च अपूर्वसाधनमिह प्रतीयते, न ■ दर्शपूर्णमासवद्बर्हिरिव लिङ्गविनियुक्ते भविष्यति । तस्मात् बर्हिर्धर्मविशेषाभावात् साधारणा रशनाधर्मा. ।

शा— रशनाधर्मा. क्रमात् अग्नीषोमीयार्थाः । इति प्राप्ते, ब्रूम । ( श्लोकौ ) ' श्रुत्यैतद्यूपसंनिधिपरिव्याणाङ्गता गताः । चाग्नीषोमीयधर्माः स्युस्तावतार्थत्वतः ॥ सवनीयपरिव्याणमप्येतद् यूपसंस्कारम् । तस्मात्तत्रापि रशना सहधर्मैः प्रपद्यते ॥ ' इति ।

-साधारण्यसिद्ध्यर्थमनुवादत्वं तृतीये स्थितम् । भाट्ट. ३।६।१०.

* रशनापरिव्याणं विधायि द्वे आग्नेयीरेव । संकर्ष. २।८।८.

卐 रश्मितृणादिन्यायः । यथाऽऽदित्यरश्मयः स्वभावतस्तृणादेर्भासका अपि, सूर्यकान्तमण्यादिद्वारा दाहका भवन्ति, तथा प्रकृतेऽपि । साहस्री. ८०२.

* रश्मितृणादिन्याय । रश्मितृणयोः स्वभावतो विरोधाभावेऽपि सूर्यकान्तरश्मिभिः तृणं दाह्यते । इति औपाधिको विरोधः । फे.

* रस. मधुर. स्निग्ध शीतो गुरुश्च इति । अत्र मधुररसस्य गुणत्वात् गुणान्तरैः शीतादिभिः सम्बन्धो नावकल्पते इति एतप्रतिपादितं उपपद्यते । न च कथंचिदपि रसशब्दस्य द्रव्यवचनत्वम् । वा. ३।४।४।१३ पृ ९४० .

* रसभोजनं (मध्वशन) गवामयनादौ पृष्ठ्यषडहस्थानीयषडहान्ते कुर्यादेव, न तु प्रथमषडहान्तम् । १०।६।१०।२९-३०. मीको. पृ १५५८ 'गवामयनादौ पृष्ठ्यषडहावृत्तौ०' इत्यत्र द्रष्टव्यम् । * रसभोजनस्य ( मध्वशनादेः ) गवामयने विजातीयषडहव्यवधानेन पृष्ठ्यषडहावृत्तौ आवृत्ति कर्तव्या । १०।६। १।१३१. मीको. पृ. १५६१ 'गवामयने विजातीयषडहव्यवधानेन०' इत्यत्र द्रष्टव्यम् ।

* 'रसवीर्यविपाकानां भेदात् नैयैर्यवादिषु । निर्णीयं स्वार्थतत्त्वेन, धर्मसिद्ध्यैव गम्यते. ॥ तस्माद् ये यागिनैर्यैर्वा वैशेषांऽशो विकल्पिता.। तेषां च एव सम्बन्धा अर्था मुख्या हि नेतरे ॥' वा १।३।८।९ पृ. २१७.

* रसनं इन्द्रियं रसमात्राभिव्यञ्जकतया रसनत्वानुमानेन अप्-प्रकृतिकम् । मणि. पृ. १९.

* रसायन नायुर्हेतु , किंतु आरोग्यपुष्ट्यादिहेतु । रसायन दीर्घायुर्हेतुरिति केचित् । वि. ६।७।१२. * न रसायनानां एतावत् सामर्थ्यं दृष्टम्, येन सहस्रसंवत्सरं जीवेयुः । एतानि हि अरोग्यकारीणि, वलीपलितस्य नाशकानि स्वरवर्णप्रसादकानि, मेधाजननानि । नैतावदायुषो दातॄणि दृश्यन्ते । भा. ६।७।१।३१३२.

* रसायनादि वैद्यके आयुरायुर्हेतुत्वमङ्गीक्रियते । इति चेत्, श्रुतिविरोधात् तत्कीर्तनमर्थवादमात्रम् । सोम. ६।७।१३.

* रसायनवैगुण्येन इन्द्रियहीनत्वान्न्यो दोषः सम्भवति । सु पृ. १५०७.

* रसालाशब्दः रूढोऽपि न जातिवचनः । किंतु 'सिता-चतुर्जातमधूपलाढ्यं दधिप्रयुक्तं सरसं रसाला' इति उपाधिपुरस्कारेण द्रव्यवचन । बाल पृ १७२.

* राक्षोघ्नन्याय । प्रयोगान्तरवैरूप्यात् गीर्यादीः ( आत्मगीता ) कर्तव्या । न यानक्षीणपाल्पः प्रकृत्यादम्, कर्तृधर्मत्वेन द्वितीये ( २।८।१ ) निर्णीतत्वात् । अतो न उत्कर्षोऽप्यत्र अत्र प्रसरति । वि. १२।२।२६

* राक्षोघ्नीष्टि. निवियउ. । 'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत्, यो रक्षोभ्यो बिभीयात्' । इति विधाय 'अमावास्याया निशि यजेत' इत्याम्नातम् । अस्याः दर्शवत्समयसाम्यात् अग्न्योपायन- अभिगमनवेदयजनाद्यङ्गजाते प्रसङ्गसिद्धिः । सन्ति तु इध्माबर्हिःप्रभृतीनि अनावश्यकानि तानि तु आवर्तन्ते एव । वि. १२।१।५. * राक्षोघ्नीष्टि. मन्यमानागन्तुकोत्पत्तिनिमित्तकी । सु पृ. ८९५.

* राग. प्रीति. । सु पृ. १३०. * नहीच्छामात्रं रागः, अपितु चित्तमग्नत्वम्, आत्मनो दर्शनावरणम्, अभूतगुणाभिनन्दनं रागमात्रक्षते । कणिका. पृ ११३. * रागाः मृद्वाद्यादिरसा काव्यग्राहीता. नवीवधि- युक्ता । ( हेमाद्रि ) । बाल पृ ११८.

* रागाक्षिप्तप्रवृत्तिलाभे पुरुषाणां फलत एव प्रवृत्तिसिद्धिः । ऋजु पृ. २९.

* 'रागद्वेषमदोन्मादप्रमादालस्यदुःखिताः । यत्र या नोल्लेखिनु पक्ष्या. स्मृत्यन्तरमाप्नुवन्तर. ' ॥ वा. १।३। ७।१ पृ १७१ .

* रागप्राप्तं न विधीयते, आनर्थक्यात् । वि. ११।३।१० .

* रागप्राप्तपुरुषार्थमात्रविषयक मरणं. श्रौते निषेधो यथा- 'स्नुषागमनमात्रमुपरिपुरुषार्थमपि धिक् ।

प्रयुज्यमाने राजपुरुष इत्यत्र उपकारकत्वस्य शेषत्वमेव विवक्षितमिति गम्यते। यद्यपि गोगर्भदासादिस्वामिनि अत्यन्ताविद्यमानगोत्र शेषत्वम्, तथापि उपकारकत्वसम्बन्धात् उपचरितमिति ज्ञेयम्। वा ३।८।८।१२ पृ ९०२, ९०८–९०५ ● राजपुरुष राजा चासौ पुरुष इत्येव विग्रह। राज पुरुष इति व्याख्यातॄणा विग्रहप्रदर्शन तु अर्थविस्पष्टीकरणार्थम्। सोम ६।१।१३ ● 'राजपुरुष शोभन ' इत्यत्र शेषभूतस्यापि पुरुषस्य विशेषणस्य शोभनपदाऽपेक्षायामपि समासो भवति। रत्नाकर, पृ ३१७ ● राजपुरुषे राज पुरुषोपसर्जनीभूतस्य पदान्तरेण विशेषण न भवति। नहि भवति ऋद्धस्य राजपुरुष इति। ( न्युपसर्जन पद पदान्तरेण सम्बध्यते राजपुरुषवत् – बृहती. )। ऋजु पृ ७०

● 'राजपुरोहितौ सायुज्यकामौ यजेयाताम्' कुलायक्रतौ राजपुरोहितयो सहाधिकारो मिथस्सम्बन्धेऽपि। द्वितीयप्रयाजविषये तु, उभयो समप्रधानत्वेन सहाधिकारनवती विरस्यैते। वि ६।६।२ ● 'राजपुरोहितौ सायुज्यकामौ यजेयाताम्' यागे चैतत् पदद्वितय श्रूयते। भा १०।२।१३।८१, ● 'एतेन (कुलायेन नाम यागेन) राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति अत्र द्वौ यजमानौ। ३।१।९।१७

■ राजशब्द क्षत्रियजातौ रूढ, न तु राज्ययोग शब्द प्रवृत्तिनिमित्तम्। प्रत्युत राज्यशब्दस्य राजयोग प्रवृत्तिनिमित्तम्। राज्ञ कर्म राज्य इति राजन्यधिकार क्षत्रियस्य ■ राज्यकर्तृरेव नेतव्य। वि २।३।२ ● राजशब्द क्षत्रियजातेरेव वाचक, न तु प्रजापालनात्मकसत्कर्तृमात्रस्य। भा २।३।२।३ ● राजशब्द क्षत्रियवचन एव, न यौगिक। तथा अनभिषिक्ते जनपदपरिपालनव्यापृतेऽपि आयुक्ते। पाणिनेरपि केषुचित् सूत्रेषु राजाभिषिक्तेष्वपि माण्डलिकेष्वपि प्रयोगदर्शनात्। दृष्टश्च अनभिषिक्तेऽपि, अपालयति च जनपदम्, क्षत्रिये राजशब्दप्रयोग। तद्यथा या अत्र तृतीये अनभिषिक्त इतिहासम्। तस्मादपि न यौगिको राजा। या २।३।२।३ पृ ५८२–५८३ ● 'राजानम् अभिषिञ्चेत्' इति राजशब्देन राजशब्दवाच्यतया प्रसिद्धस्य क्षत्रियस्यैव अभिषेकविधानात् विधिवेलायाम् राजशब्दप्रयोगात् राजशब्दार्थस्य उद्देश्यत्वेन प्राक् प्रसिद्ध्यपेक्षत्वात् म्लेच्छप्रसिद्धेरपि आदरणीयतया जातिवाचित्वावगते अभिषेकनिमित्तत्व न सम्भवति। सु पृ ९०२–०३, ● राजशब्दस्य, जनपदस्य सर्वतो रक्षणे, चौरादीना च जनपदपुरेभ्यो निष्कासने च रूढि। पृ ८९९.

● राजशब्दार्थविचार 'अवेष्ट्यधिकरणे' २।३।२ मीरो पृ ७१८ भाष्ये वार्तिके च द्रष्टव्य।

● राजशब्दप्रयोग राज्यरहितेऽपि क्षत्रिये जातिनिमित्तत्वेन। सु पृ ९००.

● राजशब्दवाच्य साधुपालनासाधुनिग्रहकारी मनुपाणि यादिभि अवधारित। सु पृ ८९९

● राजसौवर्णब्रह्मवर्चसश्रमेयोपविद्याभ्या अति दिष्टेन्द्रकामादिसंज्ञका समुदाय। १०।४।६।२–५ मीरो पृ १६८८ 'ब्रह्मसमुदाय' इत्यत्र द्रष्टव्यम्।

● राजन्य ग्रीष्मे अग्निमादधीत। भा ६।१।७।२६, १०।३।५।२, ● एकादशसु मासेषु राजन्य अग्निमादधीत। ६।१।७।२८ ● 'ऐन्द्रो राजन्य' इत्यत्रादेश राजन्य ऐन्द्रदेवत्य स्तूयते। वि ।४।१४ ● तत्रापि राजन्य विशराजन्यौ न वैश्यस्तोम कुर्यात्। वा ३।३।७।१८ पृ ८४३ ● राजन्य ग्रीष्मे उपनयीत। भा. ६।१।७।३३ ■ राजन्य जिनाति' अत्राग रूप राजसूयाद्गमेतत्। न प्रधानम्। अन्य राजन्य अश्वस्य अभिषेचनीययागे अपकर्षणानुष्ठानेऽपि महापकर्षणात् राजसूयाङ्गत्वमेव न तु अभिषेचनीयाङ्गत्वम्। वि ४।४।९ ● राजन्यस्य अग्निष्टोमे षोडशी ग्रहो। भा १०।५।१९।३८, ● राजन्यस्य अग्निष्टोमे षोडशी सतुराम एवमुक्थ्ये। १०।५।१२।८९–९२, ● राजन्यस्यैव राजसूय। न च तत्र क्रतौ ब्राह्मणवैश्यौ ■ 'राजा राजसूयेन' इति वचनात्। ११।८।३।१०- ● राजन्यस्य ज्योतिष्टोमे फलचमस इत्यादिविचार (यज्ञमानस्तु हविष्टपान् स्वयमेव) न भक्षविचारमात्रम्। ३।५।१०।७–५१. ● राजन्यस्य ज्योतिष्टोमे फलचमस। न सोमचमस। भा ३।५।१३।३५, ● राजन्यस्य

ज्योतिष्टोमे त्र्यसाम पार्थंदमम् । नैमित्तिकमेव तत्, नित्यम् । ८।३।२।४. * राजन्यस्य ज्योतिष्टोमे यज्ञायज्ञीयं त्र्यर्थम् । ४।३।४।८–९. * राजन्यस्य दीक्षितस्य यज्ञागुः व्रतम् ( मीअन्दयम् ) । ज्योतिष्टोमे । वि. ४।३।४, १०।४।१, * राजन्यस्य कृत्यासेने नमादिकगुणाय. । इषामान्तयच्च गन्यागः । ४।१।२ वर्णक ४. * राजन्यस्य नित्याग्निष्टोमसंस्थायाः क्षेप एव । राजन्यस्य अग्निष्टोमे मुनप्राक्तसहितस्य षोडशिनो विधानात् । तत्र अग्निष्टोमसंस्थोत्तर षोडशी एव कर्तव्यः । य एवान्यग्निष्टोम इत्युच्यते । एव उक्स्य सत्यामपि । तत्रापि राजन्यस्य षोडशिनो विधानात्, उक्थ्यमस्यालोप एव सिध्यति । माऽस्तु वा काम्योक्थ्यसंस्थाया निवृत्तिः । भाट्ट १०।७।१९. * राजन्यस्य पार्थुरश्म ब्रह्मसाम यने । भा. ८।६।३।१७, * राजन्यस्य नीरसत्वान्नः फलेन सत्कोऽनूयते । ६।६।२।१८, * राजन्यानां नागवतो द्वितीयः प्रयाजः । ६।८।१।१. * राजन्याना सत्राधिकारो नास्ति । वि. ६।६।३.

* राजन्यकर्तृका अवेष्टिः । ' यदि राजन्यः ( यजेत ) ऐन्द्रं मध्ये निधाय आहुतिमाहुतिं हुत्वाऽभिघारयेत् ' इति । भा. ११।४।३।८.

* राजन्यचमसं ब्राह्मणा एव प्रभवेयुः न राजन्या. राजसूये दशपेये । ३।५।२०।५१–५३.

* राजन्यचमसभक्षणं ब्राह्मणानामेव राजसूये दशपेये । ३।५।२०।५१–५३. मीको. पृ २०८० ' दशपेयन्याय. ' इत्यत्र द्रष्टव्यम् ।

* राजन्यवैश्ययो. आर्त्विज्यं प्रतिषिद्धम् । भा. ६।६।२।१८. * राजन्यवैश्ययो. आर्त्विज्यं नास्ति किंतु ब्राह्मणानामेव । १२।४।१७।४२–४७. मीको. पृ. २८४ ' अधिकार. आर्त्विज्ये ब्राह्मणस्यैव ' इत्यत्र द्रष्टव्यम् । * राजन्यवैश्ययो. ज्योतिष्टोमे न्यग्रोधफलचमस, न तु सोमभक्ष । च सोमाधिकारः । वि. ३।५।१९, * राजन्यवैश्ययोः विहिते फलचमसे यागद्रव्यसंस्कारविषय. ' श्रीणाति, अभिषुणोति ' इत्यादय न प्रवर्तन्ते, परन्तु चोदकेनातिदिश्यन्ते । ३।६।१३. * राजन्यवैश्ययोः सामाख्यभक्षः प्रतिषिद्ध. । ' न राजन्यो न वैश्यो वा सामान्य पिबेत् अभोमपीयो ह्येष. ' । भा. १२।४।१५।४५, * राजन्यवैश्यानां ज्योतिष्टोमे फलचमसो विधीयते ' स यदि राजन्य वैश्यं वा याजयेत्० ' इत्यादिना । १२।४।१५।४४. * राजन्यवैश्यानां प्रवरवरणे मनुवत् कार्यः इति पूर्वपक्षः । न्यायेन मनुपलरूपौ नैर्वणिकाना तुल्यतया विकल्पितौ इति सिद्धान्तः । संकर्ष. १।८।५.

* राजन्यशब्दः पर्याय एव हि राजशब्दस्य । भा. २।३।२।३ पृ. ५८३.

* राजन्यस्तुत्यर्थः ऐन्द्रशब्द ' ऐन्द्रो राजन्यः ' । वि. १।४।१४.

* राजसं तामसं चैव दूरतः परिवर्जयेदिति न्यायः । साहस्री. १०२.

* राजसूय. क्षत्रियमात्राधिकारः । मु पृ. ८९७. * राजसूयः बहुयागात्मकः । वि. ३।३।१०. * राजसूय. । राजा तत्र सूयते, राज्ञो वा यज्ञ. राजसूयः । भा. ४।४।१।१. * राजत्वानिविशिष्टेन राजसूयः कार्यो नातद्विशिष्टेन । वा. ५।१।३।२ पृ. १३४७. * ' राजसूयेन स्वाराज्यकामो यजेत ' इति । अत्र अनुमत्यादीनामिष्टीनाम्, पवित्रादीनां सोमानाम्, केषाञ्चित् होमानां च समुदितानां एक फलं श्रूयते । भा. ११।२।३।१२. * ' राजसूयाय हेना ज्युहोति ', ' राजसूयेनेनान सर्वंमाप्नुरेति ' इत्र शब्देन निकृतौ महाप्रकरणम् । बाल. पृ ९. * राजसूयात् भिन्नत्वात् ब्राह्मणादिकर्तृकाया अवेष्टेः । ११।४।३।९–१२. मीको. पृ ७१३ ' अवेष्टे ब्राह्मणादिकर्तृकायाः० ' इत्यत्र द्रष्टव्यम् । * राजसूयस्य कृत्स्नस्यैव विदेवनादय. अङ्गम्, न अभिषेचनीयस्याङ्गम् । ' अक्षैर्दीव्यति, राजन्यं जिनाति, शौनःशेपमाख्यापयति, अभिषिच्यते ' इत्यादयः । विदेवनाधिकरणम् । ४।४।२।३–४. * राजसूये अङ्गाना तन्त्र न । ११।२।३।१३–१९. मीको. पृ. १०७० ' इष्टि-

तथा चान्यार्थदर्शनम् । ३ ॥

भाष्यम्— अन्यार्थोऽप्येनमर्थं दर्शयति । पूर्वं नियुक्त उत्तरं नियुक्तमिति । तन्त्रभेदे हि पौर्वापर्यं स्यात् । नन्वेकतन्त्रत्वेऽपि प्रधानापेक्षं पौर्वापर्यं भवेत् । नैवमेतत् । वाक्यशेषेण तु विज्ञायते, साङ्गयोः प्रधानयोः पौर्वापर्यमिति । एवं ह्याह यत्पूर्वं नियुक्तं क्षीरमनन तत्, यदुत्तरं नियुक्तं पशुजननं तदिति । पशुजननञ्च साङ्गयोर्भवति, न केवलयोः । तस्माद्दर्शनमेवैतत् ।

शा— 'देशकालकल्पभेदादङ्गानां तन्त्रता भवेत् । कर्तृभेदोऽपि नैवास्ति दक्षिणामात्रभेदतः ॥ उच्यते दक्षिणाभेदात् कर्तृत्वमपि भिद्यते । तदानतानां कर्तॄणां दानतोऽस्य पृथक्त्वतः ॥' तस्मात् प्रतिदक्षिणं तन्त्रभेदः ।

सोम—सूत्रार्थस्तु— राजसूये अभिन्नदेशकालाना कर्मणां 'राजसूयेन यजेत' इति चोदनैकत्वेन युगपत् प्रयोगप्राप्तत्वात् तन्त्रमङ्गानि प्राप्त ।

वि— 'सौमापौष्णादिके तन्त्रमङ्गानामुत भिन्नता ।, तन्त्र फलैक्यतो, भेद दक्षिणाकर्तृभेदतः ॥'

भाट्ट— सर्वैकफलसाधनानामनेकेषां कर्मणां फलसाहित्यावगमेऽपि देशकालकर्तृभेदे प्रयोगभेदात् अङ्गावृत्तिरित्युक्तम् । तदिह यत्र देशादिभेदो नाम्नातः, दक्षिणाभेदमात्रं श्रुतम्, यथा राजसूये 'आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा, सौमापौष्णं चरुं निर्वपति श्यामो दक्षिणा' इत्यादौ तत्र किं दक्षिणाभेदात् कर्तृभेदस्ततश्च प्रयोगभेदादावृत्तिः, किं वा नेति चिन्तायाम्, सत्यपि दक्षिणाभेदे, कर्तृभेदे प्रमाणाभावः । न ह्यत्र अभिधानभेदस्तावदीयः तदेकस्य उपरिष्टाधिकरणे स्थापयिष्यमाणत्वात् । कर्तृत्वभेदस्तु न दक्षिणाभेदव्यापकः, प्रमाणाभावात्, दर्शपूर्णमासे च अन्वाहार्यदक्षिणाद्वत्त्वेऽपि कर्तृभेदाभावाच्च । 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' इत्यनेन पश्चा सहितानामेको व्यापककर्तृप्रयोगः 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यत्र दैनिकप्रयोग इव विधीयते । अतश्च सत्यपि कालिकप्रयोगभेदे कर्तृप्रयोगस्यैकत्वात् कर्त्रैक्यमवगम्यते । वस्तुतस्तु नात्र दक्षिणाभेदोऽपि, द्वादशाहवदेकफलसाधनत्वेनैकप्रयोगत्वावगमे वामनश्यामयोर्मिलितयोरेव दक्षिणात्वात् । अत एव 'अश्वं द्वादशशतं ददाति' इत्यनेन प्रत्यहं विभज्य दानेऽपि न तत्र दक्षिणाभेद इत्युक्तम् । अतश्च तत्तत्प्रधानाङ्गत्वेन व्यवस्थितयोरपि वामनश्यामयोरेकप्रयोगत्वात् मिलितयोरेव दक्षिणात्वम् । आवश्यकश्चायं न्यायो ब्राह्मणकर्तृकबार्हस्पत्यप्रयोगे, व्रीहिश्यामाकाग्रयणयोः समानतन्त्रत्वे च । इति प्राप्ते, दक्षिणायाः कर्तृपरिक्रयार्थतया उद्देश्यप्रयोगान्यविधानात् पृथग्दानेन क्षेपकत्वम् । न ह्यन्यथा तत्प्रधानानां व्यवस्थितदक्षिणात्वात् कथमपि सम्पद्यते । न चात्र द्वादशाहवत् मिलितयोर्दक्षिणात्वम्, प्रत्येकं दक्षिणापदश्रवणेन भेदावगते । द्वादशाहे तु प्रत्येकदक्षिणापदाश्रवणात् तदैक्यमिति विशेषः । न च दर्शपूर्णमासे च दक्षिणाभेदसत्त्वेऽपि कर्तृत्वभेदाभावः, आध्वर्यवादिसमाख्यया तेषां तेषां कर्तॄणां प्रतिपदार्थं भेदेनैव विहिततया 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' इत्यस्य 'सोमे सप्तदशर्त्विजः' इत्येवद्धिसङ्ख्याकथनपरतया तदर्थवादत्वेन कर्तृप्रयोगविधायकत्वाभावात् । अत एव दर्शपूर्णमासे च पृथगनुष्ठान याज्ञिकानाम् । एवं च दक्षिणाया कर्तृत्वभेदाय प्रयोगभेदावश्यकत्वे राजसूयान्तर्गतेष्ट्यादौ प्रयोगभेदिकाया अपि तस्या अप्राप्तस्य ब्राह्मणादिकर्तृकाष्ट्यादिप्रयोगे दक्षिणापेक्षाया सति सम्भवे तत्तत्प्रधानाङ्गत्वेनावगतायास्तस्या प्रयोगविधिनिस्त्वात् आग्नेयीन्यायेन ग्रहणम्, न तु अन्यक्रतुप्रयोगे बाधिताया अन्वाहार्यदक्षिणायाः, इति वक्ष्यते । अस्तु वा तत्रापि सा । सर्वथा दक्षिणाभेदे प्रयोगभेद इति सिद्धम् ।

मण्डन— 'भृतिभेदे तन्त्रभेदः ।'

शंकर— 'कर्तुर्दक्षिणया भेदः ।'

* राजसूये प्रक्रमे ये कर्तार, ते एव आसमाप्ते इति न नियम दक्षिणाभेदात् इति पक्षः । कर्त्रैक्येऽपि दक्षिणाकल्पधर्मभेदः समर्थ्यते । पूर्वकर्तार एव वामनेन क्रीता आग्नावैष्णवादिकं किं कुर्युः । अयुतेन क्रीताः अभिषेचनीयं इति धर्मभेदः । तथा च राजसूयस्यैककल्पात् कर्त्रैक्यनियमः । वि. ११।४।२, * राजसूये ब्राह्मणवैश्ययोरनधिकारः । ११।४।३ * राजसूये 'यः

धामपेव राष्ट्रमस्य प्रजाये स्यादिति, तस्मौत्रमने प्रतिहित-मालभ्य कुर्यात्' इति श्रोत्रसनाजिन्द्रियमुच्यते। भा. १२।२।२।१४. ● राजसूये यागाश्रकर्माणि सर्वाण्येव न स्वातन्त्र्येण फलवन्ति किंतु यागा एव स्वातन्त्र्येण फलवन्तः। सोम. ४।४।१, ● राजसूये यागायाग-रूपाणि कर्माणि सर्वाण्येव न समप्रधानानि किंतु यागा एव प्रधान अयागास्तु अङ्गम्। ४।४।१, ● राज-सूये नागम्पात्येन अनुमत्यादीनि कर्माणि कर्मप्रयोगा-रम्भे 'अस्मै फलाय इमानि कर्माणि करिष्ये' इति फलोद्देशेन संकल्प्यानि न तु अयागरूपाणि। ४।४।१. ● राजसूये दविना हवींषि दर्शपूर्णमासविकृति-रूपाणि। तेषु गैनानार्हस्थाये हविषि 'स्वयंकृता वेदिर्भवति, स्वयंदिनं बर्हिः, स्वयंकृत इध्मः' इति। तथा च प्रकृतौ अवतोक्षणानामुद्दननादीना विकृतौ प्राप्तौ बाध उच्यते। बर्हिस्तरणादिप्राप्तत्वादयः वेदिधर्मा विकृ-तावपि अनुमार्थाः। तस्मात् उद्धननादीनि नानुष्ठेयानि। बर्हिस्तरणादीनि त्वनुष्ठेयानि। उत्सेकाणां अननुष्ठा-नम्, अन्येषां तु अनुष्ठानम्। वि. १०।१।१, ● राजसूये 'वल्मीकवपायामवस्थाय जुहोति' इति श्रूयते। अनारभ्य 'यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतः' इति। अत्र आहवनीयवल्मीकवपयोः विकल्प इति पक्षः। वल्मीकवपया आहवनीयस्य बाध इति सिद्धान्तः। १०।८।८. ● राजसूये निर्देनादी-नामभिषेकात् प्राक्कर्षः। ५।२।१०।२१. 'निर्देनादी-नामभिषेकात् प्राक्कर्षः' इत्यत्र अधिकरणं द्रष्टव्यम्। ● राजसूये निर्देशविहितया वल्मीकवपया सामान्यविहि-ताहवनीयस्य बाधः। भा. १०।८।८।१६. ● राजसूये मरुत्प नाम हवयो दश। मरुत्स्वा हवींषि इति भाट्ट-, मरुत्पाः हवींषि इति शा, मरुत्पाः भाष्य. इति निर्णयः। वि. ११।२।१४, ● राजसूये मरुत् (प्) शब्दवाच्यानि आग्नेयाष्टाकपालादीनि दश हवींषि आम्नातानि। [illegible] 'पुरस्तादुपसदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद्वैष्णवेन' इति अष्टम-नवम-दशमहर्निर्णये उक्तम्। अनेन वाक्येन उपसदां आतिथ्यास्थानेषु सौम्यादीनां मध्ये अनुष्ठान विहितम्, तथापि सौम्यादय-

नोपसदामङ्गानि किंतु प्रधानान्येव। कालविशेषसम्बन्धपर तु वाक्यम्। ४।४।३, ● राजसूये सर्वारम्भार्थोऽग्नि-ष्टोमः 'अग्निष्टोममग्रे ज्योतिष्टोममाहरति'। यथा दर्श-पूर्णमासारम्भार्था आरम्भणीया इष्टिः तद्वत् राजसूये अग्नि-ष्टोमः। १०।१।३. ● राजसूये 'सोमापौष्ण एकादश-कपाल., ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः, श्यामो दक्षिणा' इत्येकं त्रिकम्। 'आग्नावैष्णव एकादशकपालः, ऐन्द्रा-वैष्णवश्चरुः, वैष्णवस्त्रिकपालः, वामनो दक्षिणा' इत्य-न्यत् त्रिकम्। एतयोस्त्रिकयोः क्रमेणानुष्ठान इति पक्षः। दक्षिणाभेदेन कर्मभेदात् अक्रमेवः इति सिद्धान्तः। वि. ११।४।१. 'सोमापौष्ण एकादश कपालः, ऐन्द्रपौष्णश्चरुः, पौष्णश्चरुः, श्यामो दक्षिणा'। 'आग्नावैष्णव एकादशकपाल, ऐन्द्रावैष्णवश्चरुः, वैष्णव-स्त्रिकपालः, वामनो दक्षिणा' इति विस्तरे पाठः। द्वितीयत्रिकः आदौ, प्रथमः त्रिकः पश्चात् इति त्रिक-द्वयस्य वैपरीत्येन पाठो भाष्ये। 'आग्नावैष्णवमेका-दशकपालं निर्वपति वामनो दक्षिणा'। 'सोमापौष्णं चरुं निर्वपति श्यामो दक्षिणा' इति एतादृशः एता-वाश्च पाठः शास्त्रदीपिकायाम्। 'वामनानवैहि पूर्वं कर्म कर्तव्यम्, श्यामलनैवत्तरम्' इति च तत्र स्पष्टी-करणम्। शास्त्रदीपिकानुरोधेन वाक्यपाठो भाट्टदीपिका-याम्। तैत्तिरीयसंहितायां तु १।८।८ इत्यनेन पाठः 'आग्नावैष्णवमेकादशकपालं निर्वपति, ऐन्द्रावैष्णवमेका-दशकपालम्, वैष्णवं त्रिकपालं वामनो वही दक्षिणा... सोमापौष्णं चरुं निर्वपति, ऐन्द्रापौष्णं चरुम्, पौष्णं चरुम्, श्यामो दक्षिणा' इति। परन्तु तै.संहितायां त्रिहविष्काणि त्रीणि कर्माण्युक्तानि, तथा च तत्र न त्रिक-द्वय किंतु त्रिकत्रयम्, तत्र आग्नावैष्णवादित्रिकं प्रथमम्, 'अग्नीषोमीयमेकादशकपालं निर्वपति, इन्द्रासोमीयमेका-दशकपालम्, सौम्यं चरुम्, बभ्रुर्दक्षिणा' इति द्वितीयं त्रिक सोमापौष्णादि तृतीयं त्रिक इति विशेषः। इति अत्र विषये भूयो वैचित्र्यम्। ● राजसूये सोमापौष्णादि-चरौ द्विदैवत्ये न पेषण किंतु पूर्वदैवत्ये एव। त्रि. ३।३।२०. ● राजसूये सौम्यश्चरुः नोपसदामङ्गं 'पुरस्ता-

द्रुपदस्य सौम्येन प्रचरति ' इति तु वाक्यार्थं संयोग इति फलार्थं सौम्य । भा ४।४।३।५–६.

* राजसूयाङ्ग विदेवनादय प्रकरणान्तरात् । वि ३।३।१०

* राजसूयान्तर्गत– अनुमत्यादीष्टौ अन्वारम्भणीयाया बाध । १०।११।३।५. मीको पृ ९७७ ' आरम्भणीयाया राजसूयगतानुमत्यादीष्टौ बाध ' इत्यत्र अधिकरण द्रष्टव्यम् ।

* राजसूयान्तर्गताभिषेचनीये अयुत दक्षिणा । वि ११।४।२

* राजसूयान्तर्गतदशपेये यजमानचमसेषु ब्राह्मणा एव भक्षा । भा ३।०।२०।५२–५३

* राजसूयादौ तत्तद्‌गाम्भ्योमानुसारेणाङ्गानामा वृत्ति ।१६।२।३।१२–१९

## राजसूयोपक्रमे वृतानामेव ऋत्विजां समाप्तिपर्यन्तता ॥

**अनियम स्यादिति चेत् । ११।४।२।४ ॥**

भाष्यम्— तत्रैव विचार्यते, किमुपक्रमे ये कर्तार ते एवाऽऽ ता ऽऽ वा अनियम, ते वाऽन्य वेति । कि प्राप्तम् ? अनियम स्यादिति चेत् । इति चेत्पश्यसि, प्रतिदक्षिण वर्तुलश्च इति अनियम । पवित्रदक्षिणाभिर्हि परिक्रीता पवित्रार्थास्ते भवन्ति । पवित्राते तेषामपवर्ग । उत्तरे कर्मणि यथाकामी, ते वाऽन्ये वा स्यु । तस्मात् अनियम ।

टुप्— पवित्रस्य दक्षिणाम्नानात् पवित्रस्य ये कर्तार ते पवित्रापवर्गादीयन्ते । ते द्वितीयस्य सोमस्य नाङ्गम् । कथम् ? अनियमेन वर्तृणामुपादाने प्राप्ते वचनान्नियम्यते । तत्र नियमवचन यस्यैवार्थेनोपादीयते तस्यैव तेऽङ्गम् । द्वितीयस्य पुनरसौ उपादाननियमो न भवति । यथाऽन्ये पदार्था भेदेन क्रियन्ते, एव वरणमपि भेदेन प्राप्नोति । तत्र यदि वा ■ एव वरीतव्या , अथवाऽन्ये । एव ऐष्टिकेष्वपि भेदेनैव ।

**नोपदिष्टत्वात् । ५ ॥**

भाष्यम्— नैतदेव युक्तम्, अनियम इति । किं तर्हि ? य एव प्रथमे त एवाऽऽन्तात् स्यु । कस्मात् ? उपदिष्टत्वात् । आद्यावेव वरणकाले यजमानेन तेषामुपदिष्टम्, अनेन मां राजसूयसंज्ञकेन कर्मसमुदायेन याजयत इति । वरण च प्राक् कर्मप्रवृत्ते । तद्गृह्यमाण विशेषत्वात् तन्त्रम् । तेनाऽऽनवा सर्वार्था भवन्ति । आह । यदि समुदायमुद्दिश्य व्रियन्ते तत एवम् । अथ पुनरवयव पवित्रमुद्दिश्य ततो न सर्वार्था , तदर्था एव भवन्ति । किं पुनस्तत्र युक्तम् ? समुदायमुद्दिश्येति । तथा सन्यविशेषेण कर्तुं कर्म निर्वर्त्यते । इतरथा पवित्रान्ते, उत्तरस्मिन् कर्मणि स एव कामतो न प्रवर्तेरन् । अन्ये च कस्माद् नोपपद्येरन् । कर्मविघ्न स्यात् । प्रायश्चित्तं च । एव च सति लाघव भवति । इतरथा प्रतिकर्मगौरवात् तद्गुरु स्यात् । ऋत्विग्भ्यामयोऽभ्यासविचारो धर्म । तस्मात्समुदायमुद्दिश्य व्रियन्ते । तथा च तन्त्रम् ।

टुप्— स्वाराज्यकामस्य राजसूयस्तत्तो याग उपायभेन चोद्यते । स उपाये प्रवर्तमान आदावेव ऋत्विजो वृणीते, राजसूयसंज्ञकेन यागेन याजयतेति । तस्यायमप्रमाणनिर्णयपरता समर्थैषा कृत भवतीति । अपि च समुदायमुद्दिश्य व्रियमाणेषु यो यत्काले निर्वर्तिस तत्काल एव वरिष्यते । अनियमेनोपादाने पूर्ववृता नैच्छेयुरपि । कदाचिदन्ये न लभेरन् । तत्र योऽसौ काल उपदिष्ट स बाध्यते । तत्र कर्मवैगुण्यात् फलाभावो भवेत् । तस्मात् प्रतिकर्म वरण कर्तव्यमिति । अयुक्तमिद व्याख्यानम् । य कर्माणि जानाति, तस्य राजसूयनाधिकार । स एव जानाति, ऐष्टिक वरण सिद्धिविशेषकरोति, न सौमिकेषु । अत्र सौमिक वरण न तदैष्टिकेष्विति । यथा आदाधाने कृते कश्चिदेव वरण कुर्यात्, अह कर्माणि करिष्ये, तत्र मे भवन्त ऋत्विजो भवतेति । यथैतदप्रमाणकम्, एवमिदमपि । न कश्चिदनर्थो निर्देश । न च पवित्रस्याङ्ग सोम इष्टिर्वा, येन प्रासङ्गिकेन वरणेन निवृत्ति । यथा दीक्षणीयादीनां ज्योतिष्टोमिकेन वरणेन । यदप्युच्यते समुदायमुद्दिश्य व्रियन्ते इति । तदयुक्तम् । न हि समुदाय फले चोद्यते । येन तदर्थं वरण स्यात् । कतरो वा शब्द समुदायवाचक ? राजसूयशब्द इति चेत् । न । सोमपविष्टिदर्विहोमा-

'राजसूयेन यजेत'। मीन्या. • राजसूयपदं अनुरूपत्र अश्वकर्णादिशब्दवत् इति साम्प्रदायिकाः। मीन्या.

• राजसूयप्रकरणे 'अक्षैर्दीव्यति, राजन्यं जिनाति' इति देवनादीनां अभिषेचनीयप्रयोगान्तःपातित्वात् अभिषेचनीयाङ्गत्वम्, इति पूर्वः पक्षः। सनिधेः, अवान्तरप्रकरणाद्वा महाप्रकरणस्य प्रबलत्वात् राजसूयाङ्गत्वमेव देवनादीनाम्, अनुष्ठानं तु अभिषेचनीयानन्तरमाहेन्द्रस्तोत्रकाले इति विशेषः। वि ३।३।१०, ४।८।१२.

• राजसूयवत् राजसूये यथा यजिना (यागैः) फलसम्बन्धः तथा दर्शपूर्णमासयोः प्रयाजादिसाधारण्येनाप्यु फलसम्बन्धः इति पूर्वपक्षः। भाट्ट ४।४।११, • राजसूयवत् राजसूये सर्वेषां यागानां यथा फलसम्बन्धः प्राधान्यं च तथा ज्योतिष्टोमेऽपि आग्नेयीयादीनां सर्वेषां फलसम्बन्धात् सर्वेषां प्राधान्यम्। पूर्वपक्षः। ४।४।१२.

• प्रधानानामपि कर्मणां राजकर्तृकत्वविशिष्टफलोद्देशेन राजसूयवाक्ये विधानात् प्रधानकर्मानुवादेन गुणसम्बन्धे फलसम्बन्धे चापि न वाक्यभेदः। भाट्ट. २।३।११.

• राजसूयशब्दः इष्टि–पशु–सोम–दर्विहोमरूपाणामनेकेषां प्रधानानां रूपस्य नामधेयम्। वि. १०। १।३, • राजसूयशब्दः यागनामधेयम्, अप्रसिद्धार्थत्वे सति यागसामानाधिकरण्यात्। ४।४।१, • राजसूयशब्दः 'राजा स्वाराज्यकामो राजसूयेन यजेत' इत्यत्र राजसम्बन्धात् प्रवर्तमानो राजकर्तृकाणां एकप्रकरणपठितानां सर्वेषां यागानां नामधेयं भवति। ४।८।११.

• राजसूयशब्दवाच्यानां यागानामेव फलार्थत्वं न तु अनिरूपभूतानां विदेवनादीनाम्। ४।४।१।१–२

• राजसूयसंकल्पे एव सौम्यचर्वादि. परिगणन (समूपामारम्भे वा) न तु उपसत्संकल्पे। सोम. ४।४।३

• राजसूयसंज्ञको याग स्वाराज्यकामस्य उपायत्वेन चोद्यते। 'राजसूयेन स्वाराज्यकामो यजेत' इति। टुप्. ११।४।२५.

• राज्यं चत्वारोऽपि वर्णाः कुर्वाणा दृश्यन्ते। तस्मात् सर्वे राजानः। ननु च क्षत्रियसम्बन्धेन राज्यं विहितम्, अन्यायेन इतरे कुर्वाणो न राजानौ स्याताम्। नैष दोषः, सर्वेषां तावत् राज्यकरणात् तेषामपि राजत्वं राज्यम्। वा. २।३।२।३ पृ. ५८०, • जनपदरक्षणं हि असाधारणं राजकर्म तेन तत् राज्यं इत्युच्यते। २।३।२।३ पृ. ५८६, • राज्ञः कर्म राज्यम्, न तु आर्यापत्यं राज्यस्य कर्ता राजा इति कल्पनीयम्, देशान्तरे विज्ञानत्वाद्राज्ञः (द्रविडेषु)। २।३।२।३ पृ. ५८९.

• राज्यशब्दः। नित्ययौगिकशब्दार्थयो. नित्य एव सम्बन्धे शास्त्रतः प्रतीयमाने, साधुत्वप्रतिपत्तिवेलाया राजशब्दमन्वाख्याय राजशब्दोऽन्वाख्यायमानो यौगिक. सनिमित्तत्वेऽप्यमानोऽपि नित्यनिमित्तत्वात् न आदिमत्त्वं प्रतिपद्यते। वा. १।३।१९।२० पृ. ११०५. • राज्यशब्दं जनपदपुरपरिरक्षणे, तत्प्रोद्धरणे (कण्टकाना) आर्यावर्तनिवासिनः प्रयुञ्जते। राज्ञः कर्म राज्यं इति च अभियुक्ता उपादिशन्ति। भा. २।३।२।३. • राज्यशब्दस्यापि नहि आदिमती प्रवृत्तिः इत्युक्त (२।३।२) इत्यत्र। या २।१।६।१२ पृ. ८२१.

• राज्यशब्दाभिधेयं परिपालनादि कर्म क्षत्रियस्य इति मन्वादयः स्मरन्ति। या २।३।२।३ पृ.५८४.

卐 'रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति' इति न्यायः। यथा सूर्योदये दीपशिखा न शोभते, तथा गुणवत्तरसन्निधाने गुणवानाद्रियते इत्यर्थविवक्षायामस्य प्रचार इति। साहस्री. ७९८.

• रात्र्यधिकरणम्। पौर्णमास्याः द्व्यहकालत्वे पूर्वेद्युरुपवासः, परेद्युर्यागः। परेद्युरपि रात्रौ एव याग इति पूर्वपक्ष। दिवसे एव इति सिद्धान्तः। संकर्ष. ३।१।३.

• रात्रिपर्यायेषु ग्रहचमसानां समुच्चय एव न विकल्पः। संकर्ष ३।३।१६.

• रात्रिविषये एकदेशवचनं 'द्विरात्रेण यजेत, त्रिरात्रेण यजेत, चतूरात्रेण यजेत, पञ्चरात्रेण यजेत, षड्रात्रेण यजेत, सप्तरात्रेण यजेत, अष्टरात्रेण यजेत, नवरात्रेण यजेत, दशरात्रेण यजेत, एकादशरात्रेण यजेत' इति। समस्तग्रहणं यथा– 'द्वादशाहेन प्रजाकामं याजयेत्' इति। भा. १०।५।११.

■ राष्ट्रभृद्धोमेषु 'ताभ्यः स्वाहा' इत्येव द्वितीयोद्वितीयो मन्त्रः ॥

'ऋताषाड् ऋतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्मक्षत्रं पातु, ता इदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा' इति मन्त्रे स्त्रीपुंस्त्वलिङ्गकपदाना व्यतिषङ्गात्। यथार्थं विनिकृष्य मन्त्रद्वयीकृत्य ('ऋताषाड् ऋतधामा गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा' इति प्रथमो मन्त्रः । 'ता इदं ब्रह्म क्षत्र पान्तु ताभ्य स्वाहा' इति द्वितीय इति ) होमद्वये विनियोगः । 'या ते अग्ने' इति मन्त्रत्रये 'तनूः' इत्यार्थस्य समुदायस्यापि आवृत्त्या विनियोगदर्शनात् । 'नमो रुद्रेभ्यो ये पृथिव्या येऽन्तरिक्षे ये दिवि' इति मन्त्रस्य होमे विनियोगे पृथिव्यन्तरिक्षद्युपदाना असमानार्थपदैः व्यतिषक्तानामपि विभजनदर्शनात् । इति प्राप्ते, स्वाहापदस्य समुदाम्नाना-न्यनान्तराभ्यां मन्त्रान्तरयोराकाङ्क्षावशेन होमबहुत्वावशेन च तन्मन्त्र विनियोगेऽपि द्वितीयताभ्यः स्वाहा इत्यतया 'ताभ्यः स्वाहा' इति मन्त्रस्य निराकाङ्क्षतया च तावानेव भिन्नो मन्त्रः । तच्छब्दबलेन 'ता इदं' इत्यादेरपकर्षे तत्पच्छब्दवशेन सर्वांशस्यापकर्षापत्त्या 'तस्मै ताभ्यः स्वाहा' इति पाठेनैव तादृशमन्त्रद्वयसिद्ध्या स्वाहाकारा-न्तरनैयर्थ्यापत्त्यैव तावन्मात्रस्य भिन्नमन्त्रत्वानुमानात् । ( केचिदाशिषस्तु नैतदेवेच्छन्ति ) । संकर्ष. २।४।२६.

■ रासभरभन्यायः । यथा गर्दभमल्ल. आदावत्युच्चैःशब्द्यते, पश्चात् मन्दतां प्राप्नुवन् क्रमेण परिक्षीयते, तथा नीचशीलोऽपि पुरः वृद्धिं प्राप्य पश्चात् क्रमेण क्षीयते इति भावः । साहस्री ३३०

■ राहोः शिर इति न्यायः । अयं न्यायो भाष्यप्रदीपभाष्यप्रदीपोद्योतयोः कैयटनागोजिभट्टाभ्यामुदाहृत । अत्र कैयटः— 'यथा राहोः शिर इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदात् भेदव्यवहारः, एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायाः करणरूपत्वमुच्यते । सूत्रशब्देन तु समुदायरूपतेति भेदव्यवहार उपपद्यते' इति । अत्र शब्दार्थभेदादिति प्रतीकमादाय नागेशः— 'अनेकावयवयुक्तं शिरो राहुशब्दार्थः, यदि कश्चिदेकावयवयुक्तं शिरःशब्दार्थः, राहुशब्दार्थस्य तादृशशिरःपदार्थोऽवयव' इति पष्ठ्यर्थोपपत्तिरिति भावः । साहस्री. ४६०.

■ रुक्काम 'अग्नये वैश्वानराय द्वादशकपालं निर्वपेत्' । मा. ३।२।७।२०.

■ रुक्कामेष्टिः— तेजस्कामेष्टिः— आग्नेयेष्टिः इत्येव । 'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' इति । रुक्काम. तेजस्काम. । वि. २।३।१२.

■ रुक्मधारणं अग्निचयने । कण्ठे धृतः सन् दीप्यमानः सौवर्णः आभरणविशेषो रुक्म नाम । उखायामग्निः शिक्ये निहितः, तस्मिन् कण्ठे धार्यमाणः उर-प्रदेशं यथा न दहेत् तथा व्यवधायकत्वेन यद्धारणं तद् रुक्मधारणम् । तत्र यजमानसंस्कारोत्तरं कार्यम् । वि. ५।२।१२, ■ रुक्मधारणं अग्निचयने दीक्षणीयादेरूर्ध्वमाम्नानम् । दीक्षणीयानन्तरभाविनश्च वपनादयः संस्काराः चोदकप्राप्ताः । तत्र आदौ संस्काराः पश्चात् रुक्मधारणं कार्यम् । ५।२।१२

■ रुक्मप्रतिमोचनं चयने उख्याग्नेः शिक्ये आसक्तस्य कण्ठे धारणे क्रियमाणे उरःप्रदेशदाहाभावाय व्यवधानार्थम् 'रुक्ममन्तरं प्रतिमुञ्चते' इति विहितं एकविंशतिनिर्बाधसौवर्णाभरणविशेषधारणं रुक्मप्रतिमोचनशब्दार्थः । सोम. ५।२।११.

■ रुक्मप्रतिमोचनादि अग्निचयने दीक्षितसंस्कारेभ्यः परस्तात् कर्तव्यम् । ५।२।१२।१३. मीको. पृ ४६ 'अग्निचयने रुक्मप्रतिमोचनादि०' इत्यत्र द्रष्टव्यम् ।

■ रुक्मिणीपरिणयनं सुभद्रापरिणयेन व्याख्यातम् । वा १।३।३।७ पृ. २१०.

■ रुचिः— उत्कटा इच्छा । सोम. १।२।१ पृ. ७

■ रुद्रः अग्निः । 'त्वमग्ने रुद्रो असुरो महो दिवः' इत्यादौ अग्नौ प्रयोगदर्शनात् 'रुद्रो वा एष यदग्निः' इति चार्थवाददर्शनात्, 'रुद्रमपि द्विजाः प्राहुः' इति च आरण्यके पर्वणि कुमारसम्भवोपाख्याने दर्शनात् । मु. पृ. ५६–५७. ■ रुद्र. इति रोदननिमित्तस्य शब्दस्य दर्शनात् 'यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इत्युच्यते । मा. १।२।१।१०.

■ 'रुद्रायैकां गां दद्यात्' इत्यादौ यथा— गवानुवादेन

संख्यामात्रविधिः, एवं 'चतुरो मुष्टीन् निर्वपति' इत्यत्र मुष्टयनुवादेन संख्याया विधानं संख्यानुवादेन मुष्टेर्वा विधानं इति पूर्वः पक्षः । सोम. ५।२।२.

● रुद्र-शब्दः रोदितेः रोदनार्थत्वात्, रक्प्रत्ययस्य च कर्त्रर्थत्वात्, रोदनकर्तृवाची व्याकरणादवगम्यते । सु. पृ. ५६.

● रूढ' शब्दः – रुग्णः, प्रवीणः, अभ्यर्णः, अपरिमितः । भा. ६।७।१०।२२.

● रूढत्वं (पदस्य) समुदायशक्त्या अर्थप्रत्यायकत्वम् । यथा 'घट.' इत्यादौ । मणि. पृ. ७८.

● रूढिः अक्लृप्ता योगेन बाध्यते । यथा प्रोक्षणी-शब्दे । बाल. पृ. १४९.

☞ रूढिर्योगमपहरतीति न्यायः । यथा– मना-ऽप्यनतिप्रसक्तादवयवार्थालोचने सव्यपेक्षात् योगात्समु-दायशक्तेः प्राबल्यं निरूप्यते, तन्नायं प्रवर्तते । यथा गौरित्यत्रानन्यभाऽतिप्रसक्तप्रकृतिप्रत्ययार्थालोचनसव्यपेक्षा-गमनकर्तृत्वादिरूपयोगार्थयोगेन रूढ्या सास्नालाङ्गूलकक-ुदखुरविषाणादिमती व्यक्तिर्गृह्यते, तथा– 'वर्षासु रथकारोऽग्नीनादधीत' इत्यत्र रथकारशब्देन त्रैवर्णिकेभ्यो न्यूनो वर्णविशेष उच्यते, न तु रथं करोतीति व्युत्पत्त्या द्विजातिरिति संक्षेपः । रूढिस्तु– स्वरूपेण, जात्या, गुणेन वा निर्देशार्हे वस्तुनि शक्तिसम्बन्धेन प्रवर्तते । यथा–डित्थ., डवित्थः, गौः, शुक्ल इति । 'डित्थः काष्ठमयो हस्ती डवित्थः काष्ठमयो मृगः' इति । योगस्तु प्रकृतिप्रत्ययोगात्स्वार्थं गमयते– यौगिक इत्यस्यपर्याय-लभ्दे । यथा– आदितेयादिशब्दा यौगिका इति । अत्रा-ऽदित्या अपत्यमिति 'कृदिकारादक्तिनः' इति ङीष् न्तात् 'स्त्रीभ्यो ढक्' इति ढक्प्रत्ययेन केवलं योगार्थं एवेति । साहस्री. २३३.

● 'रूढिर्योगमपहरति' इति न्यायात् एक एव उद्गाता तेन च बहुवचनोपपत्तये प्रस्तोत्रादय उपलक्ष्यन्ते । वि ३।५।८. ● रूढिः योगाद्बलवती, योगस्यावयवार्था-लोचनसव्यपेक्षत्वात् । मीन्या. ● रूढिः योगाच्छीघ्र-बुद्धिहेतुः । वि. ३।३।१३. ● रूढ्या रूढया योगो बाध्यते, यथा रथकारः । बाल. पृ. १४५.

● रूढि-योग-विचारः । रूढ्यावयवार्थप्रत्यभिज्ञाने समुदायशक्तिकल्पनाऽयोगः । सु. पृ. १२००.

● रूढिशब्दानां सर्वत्र जातिवचनत्वम् । शा. ३।१।६।१२ पृ. ६७८.

● रूढिशब्दलक्षणायाः समाम्नायात् विनियोज-कत्वं नाभ्युपगम्यते । सु. पृ. ११९३.

● रूढिसादृश्यादेतुकस्य उपस्थापनस्य आति-देशिकधर्मान्वयासमर्थता । सु. पृ. १२०२.

● 'रूपं वाऽशेषभूतत्वात्' । (७।३।११।१९) इति (जासनी) यथाकथंचिद्रूपसत्त्वे येनकेनचिद्रूपादाय शक्त्या अनुष्ठानम् । वा. ३।२।१०।२३, 'रूपं वा०' इत्याहवनीयादिस्वरूप अभिदिश्यते स दृष्टः । १।६। ६।१७. ● 'रूप वाऽशेषभूतत्वात् ...' यथा कर्मणे अनसि शकटे वा अनोवाहरूपमेव प्राप्यते न तदु-त्पादकं कर्म, अनोवाससम्बन्धयोः संस्कारनिमित्तत्वाभावेन कर्मणः अशेषत्वात् (शेषत्वाभावात्) तथा आहवनी-यादिशब्दानां संस्कारवचनस्य आधानस्य अग्निहोत्रा-द्यशेषत्वात् आहवनीयादिश्रुत्या कर्मजेऽपि आहवनीयादौ विहिते, तस्य आहवनीयादिरूपेणैव आप्यते नोत्पादक-माधानम् । इति न्यायसारम् । सु. पृ. ९१७, ● केवले-नापि स्रुवेण अवदानोपपत्तेः आयसस्य अनुग्राहकत्व-कल्पनाऽयोगात् स्वधितेश्च 'रूपं वा०' इत्यनेन न्यायेन बाधोऽवत् लोकसिद्धस्य नोपादेयत्वात् कोटरकरणेन (स्वधितौ) सामर्थ्याधीनकल्पनानुपपत्तेः, सामर्थ्यात् व्यवस्थितविकल्पकल्पना युक्ता । पृ ५३०. ● तेषां तु (अग्निहोत्रादिकर्मणा) 'रूप वा०' इत्यने-नैव न्यायेन आहवनीयादिग्रहणमात्रपर्यवसानात् न कश्चिदपि आधानाङ्गत्वप्रतिपादने हेतुरस्ति । शा. २।३। ३।८ पृ. ५९०. ● '**रूपादुत्तरकाले हि विनियोग-प्रयोजने**' इत्यनेन न्यायेन अदृष्टप्रयोजनभेदा-भेदयोर्मन्त्रभेदाभेदपूर्वकत्ववत् कर्मभेदाभेदपूर्वकत्वावगतेः, नापूर्वैक्येन एकार्थेऽपि एकत्वावयवस्पना युक्ता । सु. पृ ७०५. ● 'रूपात् प्रायात्' (१।२।१।११) इति अर्थवादनिर्दिष्टं कथितम् । वा. १।८।१२।२३–१ पृ. ३५४ । यथासंभव गुणवादनिमित्ताभिधानम् ।

■ पृ. ४९२, रूपप्रत्येति पञ्चम्ये विभक्तिनिर्देशः प्रदेशविशेषज्ञापनार्थं । पृ. ४९३.

* 'रूपाभेदेऽपि हिंसादेर्भेद अङ्गानङ्गकारिन'। रूपभेदाभावेऽपि चोदितचोदितत्वादुपाधिभेदसद्भावात् 'रूपा०' इति न्यायेन निमित्तत्वव्यवस्था युक्ता । सु पृ. १५०३.

* न च रूपादिप्रत्ययेन न द्रव्यं प्रत्याय्यते । गम्यते हि धूमादिनेव अग्निः, अविनाभावाद् द्रव्यम् । वा ३।१।६।१२ पृ ६८४.

* रूपग्रहणशक्तिः चक्षुषो न विरुध्यते सामान्यमनित्यत्वमगृह्णतोऽपि । वा ३।४।४।१३ पृ. ९४०.

* रूपस्य विशेषग्रहण – (द्रव्यदेवतात्यरूपस्य) पृथगाग्नेयत्वमनैरुपावैः येनाग्नेयत्वस्य णामनुयाजाना पौर्णमासिकाना प्रसङ्गसिद्धौ । बाल. पृ १४७

* रूपभेदात् द्रव्यदेवतालक्षणात् आमिक्षावाजिनयागयोर्भेदः । भा २।३।९।२३

* रूपरसादिशब्दा येऽन्ये गुणवचनाः । यदा तेषां द्रव्येषु प्रयोग, तदा न मत्वर्थीयेन विना प्रवर्तन्ते । वा ३।१।६।१२ पृ ६८१.

* रूपवता सन्निधौ अरूप दिप्यमाण प्रकृतमाह । टुप् ७।१।१।२

* ०रूपशब्दाविभागाच्च० (६।३।३।१२) । नहि कर्मणो रूपमुपलभामहे न्ययुक्त 'रूप०' इत्यत्र प्रत्यक्षोपलब्ध्यभिधानात् । वा. २।१।२।५ पृ ४००

■ रूपसामान्यन्याय । तद्यथा– तानेव शाटकान् आच्छादयामो ये मथुरायाम्, तानेव शालीन् भुञ्ज्महे ये मगधेषु, तदेवेदं भवत कार्षापणं यन्मथुरायां गृहीतमित्यादि । अन्यस्मिंश्चान्यस्मिंश्च रूपसामान्यात्तदेवेदमिति भवतीति 'अइउण्' इति सूत्रमहाभाष्ये उक्त. । साहस्री. ६०२.

● 'रूपस्पर्शादयो येऽमी महाभूतगुणा स्थिता । प्रत्यक्षमात्मना तेऽपि देहा. सम्भोगहेतव ॥' वा. ३।१ ७।१३ पृ ७०२–०३

■ रैगागवयन्याय. । यथा केनचित् ग्रामीणेन पृष्टो कस्मो हि कीदृशो गवय इति । स [illegible] दर्शयामास, अय गवयो भवतीति । स च तदनुसारेण रैगागवयमेव गवय मेने । पश्चाद्वने गत्वा गवय दृष्ट्वा रैगाया. तद्बुद्धि तत्याजेति लौकिकी गाथा । तथा 'एष पुरुष' इत्यादिश्रुते पूर्वोक्तकार्याभिज्ञो ऽनात्मानमेवात्मतया जानीते, श्रीसद्गुरुशास्त्रोपदेशेन आत्मनि ज्ञाते तदात्मबुद्धिमपजहातीति । साहस्री. ४८

* रैगागवयन्याय (अथवा लैरागवयन्याय)। रैगागवयन्यायेन अनुशासनाय कल्पिते प्रक्रियावाक्ये एव विभक्तिलोप इति समासे तनविभक्तेरभावान्न तस्य सम्बन्धोपस्थापकत्वम् । सोम. ६।१।१३

* रैवतीषु वारवन्तीयम् । भावनाविच्छेदकधात्वर्थान्वय विना रैवतीवारवन्तीयान्वयस्य भावनाविशेष्यत्वायोगात् साम्नश्च यागसाधनत्वागमते, प्रधानभूतयागस्य तात्पर्यान्वयायोगात् 'रैवतीषु वारवन्तीयं यागसाधनं कृत्वा' इति यागस्य कृत्वाशब्दोपभावनानवच्छेदकत्वानुपपत्ते, तदवच्छेदकधात्वर्थापेक्षायां वारवन्तीयस्य अति देशतः अग्निष्टोमस्तोत्रभावनाविशेषणत्वावगते, वारवन्तीयान्वितानां रैवतीनामपि नाङ्गोपकारत्वावगमात् रैवत्या धारस्य वारवन्तीयस्यापि अग्निष्टोमसामत्वानुवादोपपत्ति । सु पृ ८६०–६१.

■ रैवत्यधिकरणम् । रैवतीवारवन्तीयाधिकरणम् । वारवन्तीयाधिकरणम् ॥

समेषु कर्मयुक्त स्यात् । २।२।१२।२७ ॥

भाष्यम्— 'त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेतेति । एतस्यैव रैवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति । अत्रायमर्थः सांशयिकः किं तस्यैवाग्निष्टुतोऽग्निष्टोमस्य गुणाद्वारवन्तीयात् पशव फलम् । एतेन यजेतेत्यनुवाद । अथ किम् । एतेन यजेतेति कर्मान्तरमिति । किं प्राप्तम् ? न कर्मान्तरं गुणात्फलमिति । कुत ? एतेन यजेतेति विदितस्य पुनर्वचनम्, नाविदितस्य । अतो न विध्यन्तरम् । पशुकाम एव यजेतेत्युच्यते, न यजेतेति । कथं कृत्वा ? वारवन्तीयं कृत्वेति । अपि च एतस्यैवेति स्पष्टमकर्मान्तरवचनम् । तस्मात् गुणात् फलमित्येवं प्राप्तम् । एवं प्राप्ते,

ब्रूमः । सर्वेष्वेवकार्यीयवेषु विधानवाक्येषु कर्मयुक्तं फलं भवेत् । एतस्यैव रेवतीषु वारवन्तीय कृत्वेति । नह्येतस्य रेवत्यः सन्ति, यासु अस्य वारवन्तीयं भवेत् । तत्र रेवत्यो भवन्ति, तासु च वारवन्तीयं विधी-येतेति वाक्यं भिद्येत । अथोच्येत—अस्य पूर्वा रेवती-रुपादाय तासु च वारवन्तीयं कृत्वा, एतेन यजेतेत्यनुव दतीति । तथाऽग्निष्टोमसामेति वाक्यस्यैव । अथ अग्नि-ष्टोमसामकार्ये भवति वारवन्तीयं । एवमेवैतदपि विवक्षित स्यात् । उभयस्मिन् विवक्ष्यमाणे भिद्येत वाक्यम् । तस्मात् कर्मान्तरम् । अथ कर्मान्तरे कथमवाक्यभेदः ? रेवतीषु वारवन्तीयं साम कृत्वा पशुकामो यजेतेत्यपूर्वो यागः सर्वविशेषणविशिष्टो विधीयते । तेन एकार्थत्वम्, विभागे च साकाङ्क्षत्वमित्येकवाक्यत्वमुपपद्यते । ननु अयंभेदो यागश्चेत् स्यात्पूर्वः कर्मान्तः । रेवतीषु वारवन्ती-यमपूर्वमिति । नेति ब्रूमः । निर्वृत्तवारवन्तीयरेवती-गुणको यागो विधीयते, न वारवन्तीयनिर्वृत्तिः ।

अर्थात् रेवतीषु वारवन्तीयमभिनिर्वर्त्स्यति । शक्यते च तन्निर्वर्तयितुम् । उच्यते । रेवतीनां वारवन्तीयस्य च सम्बन्धो न विहितः स्यात् । तत्र च रेवतीषु अन्या-न्यपि सामानि गेयेरन् । वारवन्तीयं चान्यास्वपि भवेत् । नैष दोषः । कृत्वेत्यभिनिर्वृत्य सम्बन्धो यागाय उच्यते तेन सम्बन्धो गम्यते । क्त्वाप्रत्ययेनैतावर्थौ शक्नोति वदितुं अभिनिर्वृत्तिं पूर्वकालतां च । यथा 'गोणमानय' इति एकगुणसम्बन्धोऽन्यः शब्देनैवाऽऽन-यतौ विधीयते इति न वाक्यभेदो भवति, एवमत्रापि द्रष्टव्यम् । ननु एवमपि यद्योऽयं रेवत्यो वारवन्तीयं तत्सम्बन्धो यागः पशुकामस्येति । नैष दोषः । बहव-श्रूयन्ते । एकोऽत्र विधीयते यागो विशिष्टः । ननु रेवत्योऽपि विधीयन्ते वारवन्तीयमपि । यदि न विधी-येरन् नैव तद्विशिष्टो यागः स्यादेव । न ह्यविधाय विशेषणं शक्यते विशिष्टं विधातुम् । तस्मात् बहुषु विधीयमानेषु नैकार्थ्यम् । उच्यते । अर्थ इति प्रयो-जनमभिधीयते । सन्ति पदान्येक प्रयोजनमभिनिर्वर्त-यन्ति, तान्येकं वाक्यम् । न चात्र बहूनि प्रयोजनानि । इह अनेकस्य अभिप्रेतस्य अनेकं पदं विधायकमिति । रेवतीष्विति नैकमेव रेवतीनां विधायकम् । रेवतीषु वारवन्तीयमित्यत्रापि पदद्वये वारवन्तीयशब्दो द्वितीयान्तः । तस्मात् सम्बन्धोऽभिप्रेतो गम्यते । प्रातिपदिकार्थेऽस्य व्यतिरेकात् । कृत्वेत्यपि करोतिना सम्बध्यमाने पर्यव-सितः प्रयोजनसम्बन्धमाह । एवं विशिष्टस्तु यजतिना पदार्थः । तदेकमेषां पदार्थानां प्रयोजनम् । तस्मात् एकवाक्यत्वम् । गुणे पुनः फले प्रकल्प्यमानेऽग्निष्टोम-साम्नः कार्ये वारवन्तीयम् । एतस्य च यदग्निष्टोमसाम्नेति वाक्यभेदः स्यात् । अपोच्येत, रेवत्यादिसर्वविशेषण विशिष्टो याग एतस्याग्निष्टुतो विधीयेत । तथाऽपि पशुकामसम्बन्धात् भिद्येत वाक्यम् । अथ एवमुच्येत । रेवतीषु कृतेन वारवन्तीयेन पशुकामो यजेतेति । नैवं शक्यम् । क्रत्वन्तरप्रमाणाद्विशेषदानाद्वैगुण्यं स्यात् । ननु इदानीमेवोक्तं शक्यते हि रेवतीषु वारवन्तीयं कर्तु-मिति । सति वचने शक्यम् । असति वचने न वार-वन्तीयग्रहणेन शक्यते । वचनं तर्हि भविष्यति । पशु-कामो रेवतीषु वारवन्तीयमभिनिर्वर्तयेत् । तथो यजेतेति यजतिरनुवादः । यदि वचनं रेवतीषु वारवन्तीय-सम्बन्धस्य, सिद्धं कर्मान्तरम्, नाग्निष्टुतो गुणविधिः । ननु तथा यजेतेति यागानुवादात् यागेनास्या-ऽप्रयोजनसम्बन्धो भविष्यति । नैव शक्यम् । याग-प्रसङ्गभावे विधीयमाने पशुकाम सम्बन्धः । उभय-सम्बन्धे वाक्यं भिद्येत । अथ यत्सम्बन्धोऽनुवादः प्रकरणेन बाध्यते । नेदमुपपद्यते । प्रकरणाद्धि वाक्यं बलवत्तरम् । तस्मात् कर्मान्तरं यागगुणको वा रेवतीषु वारवन्तीयम्, तद्गुणको वा यागः । तत्र यागपशुकामयोः सम्बन्धस्य विधाने यजतेरपरितनी विभक्तिरुपलभ्य-मान इष्टम् । न तु रेवतीवारवन्तीयसम्बन्धस्य विधायकं साक्षात् किञ्चिदुपलभ्यते । तस्मात् सर्वविशेषणविशिष्टो यागः पशुकामस्य विधीयते इति सिद्धम् । अथ पुन-र्विशिष्टे यागे विधीयमाने तदेव तीषु वारवन्तीयं प्रथम-ग्निष्टोमसाम भवतीति । उच्यते । वचनादग्निष्टोमसाम्नः कार्ये भविष्यतीति । किमिव हि वचनं न कुर्यात् । नास्ति वचनस्यातिभारः । अथ यदुक्तमेतस्यैवेति । अनन्तरमेवं वचनमिति । तथापि अविशेषादेतद्धर्मक-

न्यायेन अङ्गभूतस्तोत्रद्वारेण आश्रयाश्रयिसंबन्धः सेत्स्यतीति । तदनुपपन्नम् । उक्तं ह्येतत् । 'तन्त्रमात्राङ्गेषु कल्प्येत यदङ्गत्वेन चोदितम् । प्राधान्यादश्रितं यत्तु तदङ्गं नोपसर्पति ॥' 'षोडशारत्निर्वाजपेयस्य यूपः' इति षोडशारत्नित्वं गुणत्वेन चोद्यमानं साक्षात् वाजपेयस्यासंभवात् यथा शक्नोति तदुपकारिण्यतीत्यध्ययनानात् तदङ्गपशुयूपाङ्गत्वेनाश्रयितुं । यदि तथैव वारवन्तीयमपि यागाङ्गत्वेन चोद्येत तदसंभवात् तदङ्गानि स्तोत्राण्युपसर्पेत् । इह पुनः फले विहितं गुणभूता क्रियामाश्रयत्वेनापेक्षमाणं यदि योग्या लभते ततो गृह्णाति । अथ न लभते ततो वाक्यादर्थान्तरं प्रतिपद्यते । न च एतदन्यथाऽनर्थकं भवति । फलान्तरविधाने सुतरामर्थवत्त्वात् । अत्यन्तभेदाच्च यागस्तोत्रयोः न स्तोत्रे साधिते यागः साधितः इति शक्यं वक्तुम् । तत्र यथैव क्रत्वन्तरे श्रुतम्, क्रत्वन्तरे ऽन्वेति तादृगेव एतत्स्यात् । वाजपेयस्येति तु सामान्यसंबन्धमात्राभिधायिनी षष्ठी पारम्पर्यसंबन्धेऽप्यविरुद्धेति वैषम्यम् । यद्यपि स्तोत्रद्वारेण क्रतोराश्रयत्वं स्यात् तथापि सर्वस्तोत्रेषु प्रसज्यमानेऽग्निष्टोमसामेत्यनर्थकं भवेत् । तत्र अग्निष्टोमसाम्नि वाक्येनैव आश्रये लभ्यमाने वाक्यभेदः, पुनरपि च वाक्येन अग्निष्टोमनामसामसंबन्धेऽपगम्यमाने यज्ञायज्ञीयेनेति विशेषणे सोऽपि वाक्यभेदः । एतस्यैवेति च पूर्वं संबन्धे तथैव सर्वतदीयस्तोत्रसंबन्धापत्तेरग्निष्टोमसामेति विशेषणात् स एव वाक्यभेदः । क्रतुसामसंबन्धकरणकृतं चातिगौरवं स्थितमेव । ननु चास्मिन् अग्निष्टुत्यप्रकरणत्वेन स्थिते पूर्वविधिनैव सोमयागाप्यते । वारवन्तीयं हि क्रतुमाश्रयत्त्वात् स्थाने स्थितं बाधमानं तत् न नित्योऽन्यत् भविष्यति । क्रतुरपि च यज्ञान्यस्तोत्रगामित्वेनापेक्षिष्यते । प्रकृतक्रत्वग्निष्टोमसामसंबन्धि वारवन्तीयानिकर्मकारणामात्राच्च न क्रत्वन्तरस्तोत्रान्तरसंबन्धाशङ्का । नैतदेवम् । यदि हि वारवन्तीयाग्निष्टोमसामविधिवाक्यं रैवतीवाक्येन अपेक्ष्येत तत एवं विज्ञायेत । न तु तदपेक्षाऽस्ति । गुणादिवाक्यानां परस्परसंबन्धाभावादित्युक्तं प्राक् । पूर्वसंबन्धविलक्षणश्चायं क्रतोः वारवन्तीयेन संबन्धो न तत्कल्पितरथानविषयत्वं प्रतिपत्स्यते । कर्माङ्गभूतस्य हि तस्यै-

तत्फलमग्निष्टोमसामत्वं विज्ञातम् । इदानीं पुरुषार्थभूतत्वात् वेदस्तावद्य तदेव स्थानं कल्पयति । सामान्यतो दृष्टकल्पनायाश्चैवंजातीयकेष्वप्रमाणत्वमुक्तम् । आह च । 'फलाय विहितं साम स्वतन्त्रं रूपमात्रितः । वेदस्वाध्यायमेवैकमुत्पत्त्यर्थमपेक्षते ॥' इति वारवन्तीयमग्निष्टुत्येव प्रथममुत्पन्नेन ततो गत्यन्तराभावादनुक्तमपि तादृगेव विज्ञायेत । पुनः समाम्नायमात्राधीनोत्पत्ति तत एव गृहीत्वा फलाय चोद्यते । तत्र क्रत्वन्तरस्तोत्रान्तरैः एतत्क्रत्वग्निष्टोमसाम्नो न कश्चिद्विशेषः । यदि च वारवन्तीयमसंस्कारः कश्चित् विधीयेत, ततः कथंचिद्व्रीहिप्रोक्षणादिवच्च प्रकृतप्रत्ययो भवेत् । न चैवमस्ति । तस्मान्नाग्निष्टोमक्रमसंबन्धसिद्धिः । ननु च पुरुषार्थमपि सदेतत्क्रतुमसाधयत् शक्नोति पुरुषार्थं भवितुमिति प्रासङ्गिक्या क्रतुसिद्धौ पूर्वस्थानं स्थानं लप्स्यते । यथेन्द्रियार्थं दधिपयसी प्रणीताधर्माननुपलभेते । तथैव एतद्भवति यत्र गुणभूता धर्मा भवन्ति । न चेहाग्निष्टोमसामत्वं नाम वारवन्तीयस्य गुणः । प्रकरणग्रहणे हि तानि गुणत्वमपि स्यात् । यदेव तु अत्रात्यन्तसिद्धावस्थम् । यदि तु केनचित् प्रकारेणाग्निष्टोमसामसंबन्धोऽवगम्यते, ततस्तद्धर्मान् तस्य प्रणीताधर्मवत्त्वेव कश्चित् वारयिष्यति । तस्मात् नैषोऽपि परिहारो भवतीत्यपूर्वकर्मविधिनैव एकवाक्यत्वमुपपादनीयम् । तथा सति हि यद्यपि सर्वमप्राप्तं तथाऽपि विशिष्टविधिना शक्यं विधातुम् । किं पुनर्यदा निकाशिनात् पूर्वाग्निष्टुद्योगेषु अनादिश्यमानेषु यद्देव प्राप्तम् । एतच्छब्दस्तावत् धर्मलक्षणया अनुवादो भविष्यति । न चानुवादे लक्षणादोषः । प्रकृतप्रयमानकर्मवचनत्वेन वा 'अथैष ज्योतिः' इत्यादिवत् मुख्यत्वेनैव वर्तिष्यते । तदा वारवन्तीयं स्तुत्यर्थभूतमतिदेशेनैव प्राप्नोतीति तदनुवदिष्यते । कृत्वाश्वस्तवसिद्धरेवतीवारवन्तीयसंबन्धविशिष्टयागमात्रविधानात् लघवः विधिः । ननु अग्निष्टोमसाम्नो रेवतीवारवन्तीयसंबन्धो यागश्चात्र विधीयते इत्यनेकविशिष्टविधिभिर्गौरवं विधायकस्य स्यात् । तथा हि । 'नैकप्रयत्नसाध्यत्वं क्रियान्तरविशेषणे । तेन क्रियां विधायान्यस्तत्र कार्यः पुनर्विधिः ॥' यानि एकक्रियाविशेषणानि भवन्ति तानि तया विधीयमानया

तथात्वेऽपि तृतीयान्तैतच्छब्दस्य धातुपारार्थ्यभयेन याग-परामर्शित्वस्यैवोपपत्तौ रेवत्यादिपरामर्शकत्वे एव प्रमाणा-भावात्। अतः तदपेक्षया लघुभूतकर्मान्तरविधानमेव ज्यायः। तथा हि निवायित्वेनाप्रिद्धयागविकारत्वात् वारवन्तीय प्रापणेवानूद्यते केवल रेवतीविशिष्टस्तोत्र-भावनोत्तरकालविशिष्टरेवतीकरणकयागान्तरभावनैव फलो-द्देशेन विधीयते। पशुफन्तैतच्छब्दः प्रकृतिविकारभावानु वादकः। तृतीयान्तैतच्छब्द प्रस्नोध्यमाणकर्मवचनो न कुर्यात्। उत्तरकालत्वगो गुणश्च प्रयोगान्वयित्वात् अवेद्दिश्यमपि कर्मभेदमेनापादयेत्। तथाऽपि काल-स्यात्र समवप्राप्तिकस्य वाक्यभेदपरिहारार्थं विधेयत्वेऽपि तात्पर्यगत्या यागे पदश्रावणेन विधेयस्य रेवत्याख्यस्य गुणस्य उत्पत्त्यन्वयित्वात् कर्मभेदकोपपत्त्याविघातः।

मण्डन– 'मिथो पशो फलविधि. सह रेव-तीभिः।'

शंकर– 'कर्मान्यद्रेवतीश्रुतौ।'

* रेवत्यधिकरणस्य (२।२।१२।२७) अपवादः सौभराधिकरण (२।२।१३।२८–२९)। कौ. २।२।११।१७, * इन्द्रियकामाधिकरण–(२।२।११) रेव-त्यधिकरणयोरपवादः सौभराधिकरणम्। २।२।१३।२७ पृ. २९४. * रेवत्यधिकरणे वारवन्तीयस्य रेवती सम्बन्धे, अग्निष्टोमसम्बन्धे, फलसम्बन्धे च विधीयमाने वाक्यभेदात् मानमोपपत्तेन भावनान्तर विधीयते इत्यु क्तम्। मीमांसा. * विशिष्टविधेः, विशेष्यविशेषणोभय-परत्वे, वाक्यभेदापत्ता विशिष्टमानपरत्व, विशेषणेऽपि प्रामाण्यमित्यन्ते एव इति रेवत्यधिकरणे वक्ष्यते। कु. ११।१।८।१२.

* न चैवं प्रकरणाभावे तासां (सामिधेनीनां) आश्रयत्वानुपपत्तेः. अथ कामश्रवणे तदाश्रितस्य गुणस्य फलार्थत्वेन विधानोपपत्तिरिति वाच्यम्। आश्रया-भावेन तदनुपपत्त्यन्तरस्यैव रात्र्यादिविशिष्टस्य रेव-त्यधिकरणन्यायेन गुणात् भिन्नस्य, फले विध्यङ्गीकारात्। कौ २।१।१।२१ पृ. २०१, * 'हीष् इति वृष्टिकामाय निधनं कुर्यात्' (अत्र) निध-नानुपादोपपत्तेः रेवत्यधिकरणन्यायेन हीषादिविशिष्ट-निधनान्तरविध्याशङ्कानुपपत्तेः। २।२।१३।२७ पृ. २९५. * सौभरे–'हीष् इति वृष्टिकामाय निधनं कुर्यात्' इति। रेवत्यधिकरणन्यायेन हीषादिविशिष्टनिधनान्तर फलार्थं विधीयते। यदि तु प्रकरणात् सौभरस्याश्रयता अन्वयसम्भवात् रेवत्यधिकरणनयासंभवः, तदा इन्द्रिय-कामाधिकरणनयेन सौभरसम्बन्धिनिधनस्य हीषादेः फलयोग आस्ताम्। इति पूर्वपक्षः। कम्फूर्ति ७।१।१३।२७–२८

* रेवत्यधिकरणसिद्धान्तः 'वाक्यभेदप्रसङ्गेन प्रकृते अग्निष्टुति फलस्य गुणविध्यधभयात्, गुणविशिष्ट कर्मान्तरविधि' इति। सोम ३।२।२.

* रेवतीवारवन्तीयान्वयेन विशेषिताया कृत्वा-मन्दोक्ताया भावनाया फलसाधनयोर्नियमः। पृ. ८६७. * रेवतीवारवन्तीयान्वयस्य विधेययागभावना विशेषणान्तर्भावाभ्युपगमेन टिप्पणे विधेयत्वम्। पृ. ८६९, * द्रव्यस्य अविशेषितस्यापि स्वरूपमात्रेण विशेष-णत्वोपपत्तेः तद्विशेषणस्यानन्तर्भावात् अविधेयत्वेऽपि फलोत्पत्त्यविशेषितस्य निरूपणाशक्तेः विशेषणत्वा-योगात् विधेयविशेषणान्तर्गतत्वात् रेवतीवारवन्तीया-न्वयस्य विशेषणविशेषणत्वेऽपि विधेयता युक्ता। पृ. ८६९

* रेवतीवारवन्तीयाविधानेन विशिष्टं कर्म विधीयते। धा. ३।१।११।२१ पृ. ७३५.

* रेवतीवारवन्तीयत्वसंबन्धयागपशुभियाश यज-मानःभावयागभावनान्तरत्वावारत्वावबोधात् ततः प्राङ् विधेयपर्यवसानापत्ते., नानेकस्य प्राधान्येन विधिः सम वति। मु. पृ. ८६८.

* गोऽपि अदाभ्याग्रहे ('योऽदाभ्यं गृहीत्वा सोमाय यजते') यजति., सोऽपि रेवतीवारवन्तीय-पूर्वपक्षन्यायेन स्वान्तरविधिरहितेन प्रत्ययेन विधी-यते। धा २।३।९।२० पृ ६१०.

* रैवतं अच्छावाकसाम विश्वजिति सर्वपृष्ठे। मा. १०।६।५।१४, * रैवत अच्छावाकसाम साम १५

विश्वजिति । ७।३।३।८. ● **रैवतं** साम पदहे पष्ठेऽहनि पृष्ठनिष्पादकं विश्वजिति च पष्ठहात् प्राप्तम् । वि. ७।३।३.

● **रोगाः** । नियतकाल्या अपि रोगा भवन्ति । यथा तृतीयकाश्चातुर्थकाश्चेति । भा. ६।२।२।५. ● **रोगेण** अङ्गविकल्यापि, औषधादिना वैकल्ये परिहृते अधिकारोऽस्त्येव । वि. ६।१।९

● रोगवत्वात् भक्तं अपजीवनः रौद्रम् । भा. ३।४।३।११.

● ‘**रोगी** हीनातिरिक्ताङ्गः काण. पौनर्भवस्तथा ।’ श्रियादे वर्ज्यः । अयं वल्यर्थ. व्यक्तिविषयकः स्मृतिकल्पः प्रतिषेधः । वाल. पृ. ११.

■ **रोगिन्यायः** । यथा रोगिनाशो रोगस्याऽपि नाशस्तथा मङ्गलेऽपि । माहसी. ३१५.

● **रोदनम्** । इष्टवियोगेन अभिघातेन वा यत् वाष्पनिर्मोचनम्, तत् रोदनमित्युच्यते । न च तदिच्छातो भवति । भा. १।२।१।१२ पृ. १०७. ● **रोदनस्य** मङ्गलाचारशास्त्रविरोधः । सु. पृ. ४.

● निरयूचेऽनियोगपानादिना रोदनादिप्रसक्तता० । सु. पृ. ४.

● **रोहिणी** नक्षत्रस्य । बा. ३।४।२।९.

● **रोहिणिकाशब्दस्य** मोरीकार्मस्तनाविरक्तापान्तरजातिवाचिता । सु. पृ. १८१०.

● ‘**रोहितके** श्यामानि, गवादिरे बलानि, पालाशे चमसानि’ । एकार्थाः सन्तो विकल्प्यन्ते रोहितादयः । भा. २।२।६।१७.

● **रौद्र**. चरु. रौद्रेष्टिः । ‘वास्तुमध्ये रौद्रं चरुं निर्वपेत्’ इति प्रकृत्य ‘एतया निषादस्थपतिं याजयेत्’ इत्युक्तम् । अस्मिन् रौद्रयागे निषादजातीयस्थपतेरपि अधिकारोऽस्ति । वि. ६।१।१२. ● **रौद्रे** गावीधुके चरौ चयने समाप्ते, उपधेये इष्टकाधर्मा न कर्तव्याः । संकर्ष २।१।१०.

● **रौद्रेष्टि**. ‘एतया निषादस्थपतिं याजयेत्’ इति वाक्येन निषादस्थपतेर्विहिता । सा लौकिकेऽग्नौ (लौकिकेषु अग्निषु—इति भाष्यम्) । वि. ६।८।३. ● **रौद्रेष्ट्यां** निषादस्य अधिकारः । ६।१।१३।५१—५२. मीको. पृ. २३९१ ‘निषादस्थपतिन्याय.’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

■ **रौमकभाषा** । था. १।३।५।१० पृ. २२६. (यदा द्राविडादिभाषाया ईदृशी स्वच्छन्दकल्पना तदा पारसी-बर्बर-यवन-रौमकादिभाषासु किं निरूप्य किं प्रतिपत्स्यन्ते इति न विद्मः ।)

● **रौरवं** नाम आर्हते तृचे भवति । ‘पुनानः सोम धारयापो वसानो०’ इति बृहती । उत्तरा विष्टारपङ्क्तिः ‘दुहान ऊधर्दिव्यं०’ । प्रगाथनेन तिस्रो बृहत्यः । भा. ९।२।६।२५ वर्णकं २.

● ‘**रौरवयौधाजये** आर्हते तृचे भवतः’ इति श्रूयते । उत्तराग्रन्थे तु रौरवयौधाजययोराधारः एकः प्रगाथ. । तत्र ■ प्रथमा ‘पुनानः सोम०’ इति बृहती ‘दुहान ऊधर्०’ इति द्वितीया सतोबृहती । तत्र प्रगथनविशेषेण द्वे बृहत्यौ उत्तरे निष्पादितव्ये. न तु अन्यत्र. काचिद्बृहत्यौ आनेतव्ये । वि ९।२।६ वर्णकं २, ● रौरवयौधाजये सामनी माध्यंदिने सवने गीयेते । ९।२।६ वर्णकं २.

● **रौरवयौधाजयसाम्नोः**यान बृहतीविष्टारपङ्क्त्योरेव प्रगथनेन संपादिते आर्हते तृचे कार्यं ज्योतिष्टोमे । ९।२।६।२५—२८ वर्णक २. मीको. पृ. १८१९ ‘ज्योतिष्टोमे बृहतीविष्टारपङ्क्त्योरेव०’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

● **रौहितकः** । गवादिः पालाशो रौहितको वा यूपः तत्र, ज्योतिष्टोमे पशुबन्धार्थम् । भा. ११।३।३।१.

---

## ल

* लकारेषु सर्वेषु शास्त्रानन्देक तन्ढकारदम् । वक्ष्यमाणरीत्या वा तत्तदादेशविशेषस्तु बोध्यम् । सर्वथा तादथ्यस्य भावनात्मव आश्रय इति सिद्धम् । रहस्य पृ ६८

* लकारार्थाः । लिङ्लोट्तु यथाक्रमं प्रार्थना विधि-र्वाच्य । तेषामेव नञ्युक्ता निषेध । लङ्लुङ्लिटा भूतकाल । लृट्लुटोर्भविष्य काल । लटो वर्तमानकाल । क्रियातिपत्तिर्लृङ्वाच्या । आशीरादीनामपि लिङादिवाच्यत्वम् । सु पृ ६०

* लक्षणम् । इतरव्यावृत्त्या बोधक आकार लक्षणम् । वि १।१।२ * लक्षणम् । सजातीयविजातीयव्यावर्तक लक्ष्यगत कश्चित् लोकप्रसिद्ध आकार लक्षणम् । १।१।१ * लक्षण अनुपलब्धे – अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्य असंनिकृष्टस्य । भा १।१।५।५ पृ ३९, ( मीको पृ १८६ 'अनुपलब्धि'शब्दे द्रष्टव्यम् । ) * लक्षण अनुमानस्य–अनुमानं ज्ञातसम्बन्धस्य एकदेशदर्शनात् एकदेशान्तरे असंनिकृष्टेऽर्थे बुद्धि । भा १।१।५ पृ ३६ ( मीको पृ ३०८ अनुमानशब्दे च सविस्तर द्रष्टव्यम्) । * लक्षण अर्थापत्ते । अर्थापत्तिरपि दृष्ट श्रुतो वाऽर्थ अन्यथा नोपपद्यते इत्यर्थकल्पना । यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्य अदृष्टस्य कल्पना । भा १।१।५ पृ ३८ ( मीको पृ ९५३ अर्थापत्तिशब्दे च सविस्तर द्रष्टव्यम् । ) * लक्षण अहीनस्य यत्रानिर्देशादहीनत्व स्यादिना चास्थितपरिमाणत्वात् ' १०।६।१६।५१ इति सूत्र द्रष्टव्यम् । * लक्षण आख्यातस्य यथा नूतनार्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि० ' २।१।१।८ इति सूत्र द्रष्टव्यम् । * लक्षण उपमानस्य– उपमानमपि सादृश्य असंनिकृष्टेऽर्थे बुद्धिमुत्पादयति । यथा गवय दर्शन गोस्मरणस्य । भा १।१।५ पृ ३७ * लक्षण ऋच – तेषामृक् यत्रार्थवशेन पादव्यवस्था ' २।१।१०।३ इति सूत्र द्रष्टव्यम् । * लक्षण एकवाक्यत्वस्य– ' अर्थैकत्वादेक वाक्य साकाङ्क्ष चेद् विभागे स्यात् ' २।१।१४।४६ इति सूत्रे द्रष्टव्यम् । * लक्षण कर्मण - यत् आश्रय देशान्तर प्रापयति, तत् कर्म इत्युच्यते । भा २।१।२।५ पृ ४०० * लक्षण क्रत्वर्थस्य– शृङ्गादिभिर्यत् अयगुण फलवता च क्रतुना प्रकरणेन गम्यते तत् क्रत्वर्थम् । था ५।१। १।१ पृ ११८७ * लक्षण क्रत्वर्थपुरुषार्थयो 'यस्मिन् प्रीति पुरुषस्य० ' ४।१।२।२ इति सूत्रे द्रष्टव्यम् । * लक्षण गुणकर्मण – ' यैस्तु द्रव्य चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात् ' २।१।१।८ इति सूत्रे द्रष्टव्यम् । * लक्षण दानस्य स्वद्रव्यत्यागपूर्वक परस्वत्वेन संबन्ध । भा ४।२।११।२८ * लक्षण धर्मस्य 'चोदनालक्षणोऽर्थो धर्म ' १।१।२।२ इति सूत्र द्रष्टव्यम् । अर्थत्वे सति चोदनागम्यत्वम्, नैत्यन्दनादौ यागादौ च अतिव्याप्तिनिरासार्थ चोदनागम्यत्व इति । श्येनादौ अति व्याप्तिनिरासार्थं अर्थत्व सति इति । वि १।१।२ * लक्षण नाम्न ' नामलक्षणम् ' इति शब्दे ( मीको पृ २३२८ ) ' येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि० ' २।१।१।३ इति सूत्र च द्रष्टव्यम् । * लक्षण निगदस्य– निगदाधिकरणे २।१।१३ निगदो वा चतुर्थ० इति सूत्रे द्रष्टव्यम् । निगदा नाम अयाज्या परसंबोधनार्था मन्त्रा । कौ २।१। १३।३९ पृ ११५ * लक्षण प्रत्यक्षस्य–' सत्संप्रयोगे पुरुषस्येन्द्रियाणा बुद्धिजन्म तत् प्रत्यक्षम् १।१।४।४ इति सूत्र प्रत्यक्ष प्रमाण इति शब्दे च ( मीको पृ. २७८१ ) द्रष्टव्यम् । * लक्षण प्रधानकर्मण – ' द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात् २।१।३।७ इति सूत्रे द्रष्टव्यम् । * लक्षण प्रैषस्य– प्राप्ते प्रवर्तनम् । 'प्रवर्तनस्मृति प्राप्त प्रैष इत्यभिधीयते । वा ११।१।१ पृ ३८२ * लक्षण ब्राह्मणस्य– ' शेषे ब्राह्मणशब्द २।१।८।३३ इति सूत्रे द्रष्टव्यम् । * लक्षण मन्त्रस्य 'तच्चोदकेषु मन्त्राख्या ' २।१। ७।३२ इति सूत्रे द्रष्टव्यम् । * लक्षण यजुष – ' शेषे

यनुःशब्दः' २।१।१२।३० इति सूत्रे द्रष्टव्यम् । ● लक्षणं यागस्य– 'यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्' ४।२।१२।२७ इति सूत्रे द्रष्टव्यम् । ● लक्षण लक्षणस्य– तन्नाम लक्षणमुच्यते येन तद्व्यतिरिक्तेभ्यः तस्य स्वरूपं व्यावृत्ताकारं निरूप्यते । वा. २।१।१।१ पृ. ३७०, ● लक्षणं विधे.– अप्राप्तार्पणम् । 'अप्राप्तप्रेरणं सर्वं विधित्वं प्रतिपद्यते' । २।१।२।१ पृ. १८७. ● लक्षणं विशेषातिदेशस्य– 'अथ विशेषलक्षणम्' ८।१।१।१ इति सूत्रे द्रष्टव्यम् । ● लक्षणं व्याकरणस्य– साधुशब्दविज्ञानात् अर्थनिरुक्तेऽर्थे विज्ञानम् । भा. १।१।५।५ पृ. ६७ 'व्याकरणस्य लक्षणं' इति टिप्पणी च द्रष्टव्यम् । ● लक्षणं शेषत्वस्य– परार्थत्वम् । 'शेषः परार्थत्वात्' ३।१।२।२ इति सूत्रे उक्तम् । ● लक्षण सकर्मकाकर्मकयोः– 'धात्वर्थव्यभिचारेण धात्वर्थो यत्र कर्मभाक् । सकर्मकः स धातुः स्यात्, धात्वर्थे त्वकर्मकः ॥' पचिगम्यादयः, आसनशयनादयः । था. २।१।१।१ पृ. ३८५. ● लक्षणं समस्य– 'आवयाज्ञस्य समञ्चनानोपायिचोदनेन यजमानबहुत्वेन च समशब्दाभियोगात्' १०।६।१६।६० इति सूत्रे उक्तम् । ● लक्षणं सत्रस्य– आसनचोदनात्वं उपायिचोदनात्वं यजमानबहुत्वं वा । भा. १०।६।१६।६०. ● लक्षण साम्नः– 'गीतिषु सामाख्या' २।१।११।३६. इति सूत्रे द्रष्टव्यम् । ● लक्षण स्तोमस्य– 'अधिकं च विवर्णं च०' (९।२।१०।२९) इति सूत्रे द्रष्टव्यम् । ● लक्षण होमस्य– 'तद्युक्ते अपकर्षात् जुहोतिरासेचनाधिकः स्यात्' ८।४।१।१।२८ । तद्युक्ते यजतिना उक्तेऽर्थे, जुहोतिः अपकर्षात् आसेचनाधिकः यजत्यर्थः जुहोतिः स्यात् । ● 'ज्ञान च लक्षणं नाम लक्ष्य लक्षयितुं क्षमम्' । वा. ३।१।५।२ पृ. ६५७, ● न सकृत् पुरस्तात्रैव तत्तत्रोपदेष्टुर्गैनि लक्षणमुक्तम् । 'पदार्थाना नास्ति यान्ति पृथक्त्वशः । (कपयोऽपि हि पदार्थाना– इति वार्तिके) लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥' भा. ३।१।७।१२ ● 'निराकाङ्क्षी भवेल्लक्ष्यं येन तन्नाम लक्षणम्' । वा. १।१।८।२४ पृ. २६२ ● लक्ष्यते येन तत् लक्षणम्, धूमो लक्षणमग्नेः इति हि वदन्ति । भा. १।१।२।२ पृ. १२. ● 'सर्वथा लक्षणं नाम यद्व्यवच्छेदकारणम्' । वा. ३।२।१।१ पृ. ७८६. ● लक्षणेन लक्ष्ये वस्तुनि सम्भावनाबुद्धिर्जायते । वि. १।१।२. ● लक्षणेन लघीयसी प्रतिपत्तिः । भा. २।१।७।३२. ● सर्वलक्षणेषु प्रतीतिमात्रोपयिकत्वादनुष्ठानानङ्गत्वम् । यथा 'योऽयं शुक्लवासाः दृश्यते तमानय' इत्यादिषु वासःप्रभृतीनाम् । वा. ३।१।७।१४ पृ. ७२३.

☞ लक्षणाश्रया लक्ष्यस्य व्यवस्था न्याय्येति न्यायः । साहस्री. ६८८.

● लक्षणोपयोगः गुर्वाचार्यैर्दर्शितः– 'कल्पकोटिरपि पदार्थाना नान्त यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानामन्त यान्ति विपश्चितः ॥' इति । वि. २।१।७.

● लक्षणकर्मणि प्रयोजनं प्रसिद्धत्वात् न वक्तव्यम् । लघीयसी प्रतिपत्तिर्लक्षणेन । भा. २।१।७।३१, लक्षणकर्मणः प्रयोजनं न वक्तव्यम् । ज्ञानमेवात्र प्रयोजनमिति । ४।२।१२।२७, लक्षणकर्मणः प्रयोजनं न वक्तव्यम् । लक्षणकर्मणो हि तदेव प्रयोजनं यत् लक्षितो भविष्यतीति । ९।२।११।३९.

● लक्षणक्रियानाम ज्ञानक्रिया । सोम. ३।२।५.

● लक्षणत्वं उदासीनस्य न सम्भवति । सोम. ६।५।३. ● लक्षणस्य व्यापिनो धर्मस्य अन्यतो व्यावर्तकत्वम् । सु. पृ १०८०

☞ लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायः । लक्ष्यते ज्ञायते पदार्थोऽनेन 'लक्ष दर्शनाङ्कनयोः' करणे ल्युट् । असाधारणो धर्मः । तद्द्विविधम्– इतरभेदानुमापकं व्यवहारप्रयोजकं चेति नैयायिकाः । सजातीयविजातीयव्यावर्तको लक्षणस्तु । कश्चिल्लोके वेदे वा प्रसिद्धो धर्मो लक्षणमिति मीमांसकाः । प्रमाता येनार्थं प्रमिणोति तत्प्रमाणम् । येन लक्ष्ये वस्तुनि सम्भावनामात्रं जातायां प्रमातुर्बुभुत्सुः प्रमाणेन तत्त्वं गच्छति । तथा च– यथा गन्धवत्त्वादिलक्षणेन प्रत्यक्षादिप्रमाणेन च पृथिव्यादिसिद्धिस्तथा यत्र विवक्षा तत्रास्य प्रवृत्तिरिति । एवं च क्षीणत्वादिन्येश्वरवादे नत्तदृष्टाः

सर्गादिहेतुस्वरूपेश्वरलक्षणं श्रुत्यादिप्रमाणं च तत्र तत्र दर्शयता ईश्वरस्य साधयतीति । साहस्री ७२

* लक्षणशब्दः मीमांसाशास्त्रे प्रमाणाध्याययोर्दृष्टः 'चोदनालक्षणोऽर्थो धर्मः', 'अथातः शेषलक्षणम्' इति । बाल पृ १ * लक्षणशब्दः, सजातीयविजातीयव्यावृत्त्यसाधारणधर्मप्रतिपादकः कथ्यते । मु पृ ७३६

* लक्षणा शब्दकल्पनायाः ज्यायसी । भा ३। १।१।२, ९।१।२५।८२, टुप् १०।८।१।८, सु पृ ५४६ (लक्षणाविषयको विचारः प्राधान्येन मीवके पृ २२२० 'द्वितीयार्थे' (माङ्गल्यगता) इति भिन्दौ द्रष्टव्यः) । * लक्षणा– अपरा पदवृत्तिः । सादृश्याद्यन्यसम्बन्धेन अन्यस्योपस्थितिर्लक्षणा ।

स्वशक्यसम्बन्धश्च लक्षणा । तस्याश्च पदनिष्ठत्वं स्वाश्रयसंनिधानात् सम्बन्धेन । यथा 'गङ्गायां घोषः' इत्यादौ गङ्गापदशक्यप्रवाहसम्बन्धो लक्षणा । तज्ज्ञानप्रयोजकश्च तीरत्वं च गङ्गासम्बन्धतीरत्वप्रकारकतीरविशेष्यकज्ञानं स्वरूपम् । गङ्गासम्बन्धस्य संयोगत्वेन ज्ञानं संयोगादिना वा 'गङ्गासंनिहिततीरे घोषः', 'गङ्गासंयुक्ततीरे घोषः' इत्युभयविधानुभवात् । एवं 'सिंहो देवदत्तः' इत्यत्रापि परम्परासम्बन्धेन 'सिंहसम्बन्धी देवदत्तः' इति बोधे लक्षणैव । 'अभिधेयाविनाभूते' इत्यस्यापि अभिधेयसम्बन्धेन यत्र प्रतीतिः तत्र वृत्तिर्लक्षणा इत्यर्थः ।

न चैवं तीरत्वप्रकारकः बोधः कथं स्यादिति वाच्यम् । नदीतीरे समुद्रतीरे वा इति संदेहापत्ता तादृशबोधस्य अस्वीकारात् ।

न चैवं सर्वत्र गङ्गासम्बन्धिनी इति बोधात् अजहल्लक्षणापत्तिः । गङ्गास्वरूपबोधस्य विधानाद्विरते अजहल्लक्षणानङ्गीकारात् इति सम्प्रदायः ।

वस्तुतो गङ्गापदात् तीरत्वमात्रप्रकारको बोधः । तीरत्वनिष्ठ-प्रकारतानिरूपित विशेष्यतासम्बन्धेन गङ्गापदजन्यशाब्दे, समवायेन गङ्गापदजन्यज्ञानस्य हेतुत्वकल्पनया शक्यार्थापत्तिः इति युक्तम् ।

सा च लक्षणा द्वेधा । अजहत्स्वार्था जहत्स्वार्था च । स्वशक्यार्थ-विशेष्यकान्वयबोधप्रयोजिका अजहत्स्वार्था । यथा 'यष्टीः प्रवेशय' इत्यादौ । अत्र यष्टिधरस्यापि क्रियाश्रयत्वात् । इयमेव उपादानलक्षणा इत्यालङ्कारिकाः ।

स्वशक्यार्थाविशेष्यकान्वयप्रयोजिका जहत्स्वार्था 'गङ्गायां घोषः' इत्यादौ ।

लक्षितलक्षणाऽपि अत्रैवान्तर्भूता । शक्याव्यपदिष्टवर्णद्वयघटितपदवाच्यत्वरूपसम्बन्धस्यैव द्विरेफादिपदे लक्षितलक्षणात्वात् । एतेन, द्विरेफपदेन भ्रमरपदं लक्ष्यते । तेन च शक्त्या भ्रमरबोधः इत्यपास्तम् । द्विरेफपदोच्चारणस्य शक्तत्वभ्रमस्य तत्र वक्तव्यत्वात् ।

'तत्त्वमसि' इत्यादौ जहदजहल्लक्षणा च तृतीया इति वेदान्तिनः ।

लक्ष्यतावच्छेदके न लक्षणा इति प्राञ्चः । गौरविशिष्टशाब्दे गोत्वविशिष्टशक्तिग्रहस्य हेतुत्ववत् तद्विशिष्टशाब्दे तद्विशिष्टवृत्तिज्ञानस्य हेतुत्वात् तत्रापि लक्षणा युक्ता इति नव्याः ।

लक्षणाबीजं शक्यार्थान्वयानुपपत्तिः, न तु तात्पर्यानुपपत्तिः, वेदे तदभावात् । 'यष्टीः प्रवेशय' इत्यत्र प्रवेशनपदस्य भोजनप्रवेशनकर्मप्रवेशनपरत्वात्स्वात् शब्दार्थानुपपत्तिरेव । वस्तुतः मुख्यार्थानुपपत्तिज्ञानं मुख्यार्थबोधप्रतिबन्धकं न लक्ष्यार्थबोधकारणम् ।

लाक्षणिकस्थले गङ्गापदेन तीरपदस्मृतिः, तेन तीरस्मृतिः इति प्राञ्चः । तन्न । गङ्गापदात् तीरानुपस्थितौ तत्र विभक्त्यर्थान्वयो न स्यात् । अत तीरोपस्थापनेऽपि नानुभावकत्वम्, तीरादिपदस्मरणे तीराद्यपस्थितिजन्यत्वेन हेतुनाङ्गीकारात् । शक्यपदाभावेन नीत्यादिपदमात्रस्य युक्तत्वात् । सर्वलाक्षणिकस्थले तु न बोध इति दिक् । मञ्जि पृ ७५-७६ * लक्षणाऽपि च या दृष्टपूर्वा तस्यामेव शक्तिमन्तः बुद्धिमीतानि । या ३।३।१।३ पृ ८०७ * लक्षणाऽपि शब्दवृत्तिप्रकार एव । मु पृ ७२३ * लक्षणाऽपि हि प्रवृत्तिविशेषकरत्वात् कथ्यते । यथा 'अग्नौ तिष्ठति', 'अग्रे तिष्ठति' इति । भा १०।२।१७।६४, * लक्षणाऽपि हि लौकिकी । १।२।२।२२, २।२।३।९ * लक्षणा च लौकिकी प्रयोगतो अनुगम्या । टुप् ६।७।१।११ * लक्षणा न श्रुत्या

माप्येत । भा. १०।८।८।१६ पृ. २०७३ ● लक्षणा न पदार्थधर्मो न पदधर्मः । तदुक्तम् 'तेन तद्धितयत्नेः क्रियासम्बन्धचोदना ' इति । तच्छब्देन आकृतिः परामृश्यते ।

तथा न्यायसुधाकृताऽपि सर्वशाखाधिकरणे लिङ्. प्रकरणसामान्ये गतिसुत्राण प्रकरणसामान्यस्य वाच्यत्वे अवगते तद्विशेषाकाङ्क्षायां प्रैयादीनां पुरुषधर्माणां वेदेऽनुपपत्तेः तद्विलक्षणं विशेषान्तरं अभिधेयेन सामान्येन निधिप्रत्ययानियोगाख्यं लक्ष्यते इति । अत्र वाच्यधर्मोनासामान्यधर्म एव लक्षणा इत्युक्तं न शब्दधर्म इति । बाल पृ. ७८. ● लक्षणा निर्निमित्ता नाश्रयणीया । भा. ३।५।८।२५, पृ. १००२. ● लक्षणा प्रयत्ना सा अदृष्टकल्पनाया ज्यायसी । भा. ९।१।२।३. ● लक्षणा गौणसम्बन्धः, न तु वाक्यधर्मस्य । मणि. पृ. ८२. ● लक्षणा लक्षितलक्षणापेक्षया गरीयसी । टुप्. ५।१। ५।३ वर्णक २ पृ. १६४६. ● लक्षणा । लाक्षणिकगङ्गादिपदस्यापि अनुभावकत्वस्वीकारात् तत्रापि वाक्यार्थद्वारम् । यदि च लाक्षणिकस्य नानुभावकत्वम्, तदा तीरोपस्थापक-पदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वरूपाकाङ्क्षा अत्रापि ग्राहीकार्या । तत्र सर्वाणि पदानि लाक्षणिकानि वाक्यवाक्यात् न बोध. इति केचित् । मणि. पृ. ६५-६६. ● अदृष्टार्थात् दृष्टार्था लक्षणा ज्यायसी । भा. ११।१।१।४९, ● अनुवादे हि लक्षणा न्याय्या न विधौ । ४।८।८।१९. ● 'अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते ।' वा. १।४।१२।२३ पृ. ३५८. ● असम्भवे हि लक्षणा आश्रीयते । भा. १०।६।१७।६७. ● असाधारण्येन हि लक्षणा भवति । टुप्. ६।१।५।२३ पृ. १३६१. ● न च श्रुतिसम्भवे लक्षणा न्याय्या । भा. ९।२।१५।४०. ● न हामति विरोधे लक्षणा युक्ता । वा. २।२।७।२१ पृ. ५२६ ● निरूढलक्षणा शक्तितुल्या । भाट्ट ७।३।१ ● निरूढलक्षणया अनिरूढलक्षणा बाध्यते । उदाहरणं मृग्यम् । बाल पृ. १४३, ● न्यूनस्य अधिकार्थविषयत्वकल्पने लक्षणा, यथोदाहरणम् 'सोमेन यजेत ' इत्यादौ मत्वर्थलक्षणा । पृ. ३. ● प्रमाणान्तरानुसारित्वात् अनुवादे प्रसज्यमानाऽपि लक्षणा न दोषः । सु. पृ. ८१३. ● भूतभविष्यतोर्भूते लक्षणा । भविष्यति नास्ति लक्षणा । टुप्. ४।१।११। २६. ● (लक्षणा) मत्वर्थलक्षणा श्रुत्या (अभिधया) बाध्यते । बाल. पृ. १८१. ● मन्त्रलिङ्गविरोधात् अगत्या विधावपि लक्षणा स्वीकार्या । अनियुक्तत्वात् 'अग्नीदग्नीन् विहर ' इत्यादौ । मोम. ३।२।४. ● मुख्यार्थोपपत्तौ लक्षणानुपपत्तेः । वा. ७।३। १३।२६ पृ ६२०. ● वचनानर्थक्यात् तत्र वर्तमानस्य लक्षणा । मोम. ७।३।८. ● वरं लक्षणा कल्पिता । लौकिकी हि लक्षणा इष्टा अप्रसिद्धकल्पना । भा. १।८।१।२, ● वरं लक्षणा, न एकशब्दस्यानेकार्थत्वम् । अनेकार्थत्वे अगमकत्वम् । लक्षणा तु गमिका, लौकिकत्वात् । ११।२।१।२. ● वाक्यस्य वाक्यार्थे लक्षणा । 'घटमानय ' इत्यादिवाक्ये घटानयनसामान्यबोधेऽपि तद्विशेषबोधस्य लक्षणा विना अनुपपत्तेः । वाक्यसम्बन्धस्यैव लक्षणात्वम् । मणि. पृ. ८२-८३. ● विवक्षितार्थेऽपि तत्र न्यूनताभ्युपगमे लक्षणा । यथा – 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ' इत्यत्र विवक्षितोऽर्थः उत्तरकालविधिविशिष्टबृहस्पतिसवान्तरात् स्वर्ग वाजपेयस्य । तदपेक्षया न्यूनोऽर्थः प्रसिद्धयैव बृहस्पतिसवस्य वाजपेयोत्तरत्वम्, तदभ्युपगमे वाजपेयश्रुतौ काललक्षणा इति । बाल पृ. ३. ● व्यवधानाल्लक्षणाऽपि ज्यायसी । प्रत्यक्ष हि लक्षणायाम्, परोक्ष व्यवधाने वाक्यम् । भा. १०।२।३१।७०, ● श्रुतिश्च बलीयसी न लक्षणा । ३।३।१२।१३, ● श्रुत्यसम्भवे लक्षणाऽपि न्याय्यैव । ४।४।९।२२ ● श्रुतिलक्षणाविशये च श्रुतिः न्याय्या न लक्षणा । भा. १।८।१।२, २।३।१३।२८, ३।२।९।२५, ३।७।६।१३, ६।१।११।११, ९।१।६। २१, ९।२।८।३१ वर्णक २, ९।४।२।२०, १०।४। १६।३३. ● साक्षात् स्वार्थसद्भावकत्वसाधारण्येन स्वनिष्ठप्रकारतया स्वप्रतिपाद्यसम्बन्ध एव लक्षणा, न तु साक्षाद्वेत स्वनिष्ठप्रकारतया स्वप्रतिपाद्यतरसम्बन्ध गौरवात् । कु १।२।१।७. ● 'निरूढा लक्षणा काश्चित् सामर्थ्यादभिधानवत् । क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः ॥' इह केषुचिदर्थेषु अभिधानवदेव लक्षणा-

२।१।८।१२ पृ. ४११, * न चैकत्र लक्षणाश्रयणं इति सर्वत्रैव सा आश्रयितव्या इति। २।३।१०।२३ पृ. ६१२.

* लक्षणातः वाक्यभेदः अतिदुष्टः, लक्षणायाः पद दोषत्वात् वाक्यभेदस्य च वाक्यदोषत्वात्। मीन्या. * लक्षणातः श्रुतिर्ज्यायसी। भा. १२।२।०।२४

* लक्षणादोषः। अधिकस्य सतः न्यूनत्वे यथा 'चतुरवत्तं जुहोति' इति। अत्र जुहोतिः देवतोद्देशत्याग-विशिष्टप्रक्षेपवचनत्वे आग्नेयादिचोदनयैव इतरयोः अंशयोः (देवतोद्देशत्यागयोः) प्राप्तेः, प्रक्षेपमात्रपरत्वेन न्यूनत्वे लक्षणा। बाल. पृ. ४. * लक्षणादोषः अनुवादे नास्ति। वा. २।२।१२।२७ पृ ५५५.

* लक्षणापरिग्रहः अगतिकगतिः। भा. ७।२।१। १३.

* लक्षणाप्रयोगो न शब्दार्थशङ्का भवति। भा. ११।१।८।४९.

* 'श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने। लक्षणावाक्यभेदादिदोषो नानुमिते क्रमौ॥' वा. १।८।२।१ पृ. १२९.

* (क्षौमे वसानौ) अत्रापि च एकशेषः 'पुमान् स्त्रिया' इति अमानपि लक्षणाशब्द एव। भा ३।३। ९।१९, * भुक्तपदाने अदृष्टं कल्पयितव्य इति लक्षणा-मात्रः परिकल्प्यते। यथा ग्रामेषु शालयो भुज्यन्ते (तण्डुलाः) गावः (पयः) पीयन्ते इति। भा. ९।१। १९।३९.

* लक्षणासिद्धिः तात्पर्यात्। भा १।२।१ पृ. ६.

* लक्षितलक्षणा मार्गलक्षणातो दुर्लभा। वा. १।८।३।३ पृ. १२७, सु. पृ. ८११. * लक्षितलक्षणया लक्षणया बाध्यते। बाल पृ. १५६ * रथंतरसामनि अध्यासीयमाने ऋचा पदं लक्ष्यते, पदेन साम। सैषा लक्षितलक्षणा। भा १०।५।१५।५८ वर्णक १, * शब्दः अर्थप्रत्यायनार्थमुच्चारितः। स चार्थः पुनः शब्दं प्रत्याययेत इति लक्षितलक्षणा हि तथा स्यात्। १०।४।१२।२३. * लक्षितलक्षणया द्विरेफपदेन भ्रमर-पदं लक्ष्यते, तेन तदर्थो भ्रमरबोध. इति केचित्। मणि. पृ. ७६ * दीक्षणीया आत्मीयमपूर्वं लक्षयति, तेन धर्मेण सम्बन्धः। अस्मिन् पक्षे लक्षणा। यदा तु दीक्षणीयापूर्वं परमापूर्वं लक्षयति तदा लक्षितलक्षणया धर्मेण सम्बन्धः। टुप्. ९।१।२।३ वर्णक २.

* लक्षितलक्षणापेक्षया लक्षणा बलवती। टुप्. ९।१।२।३ वर्णक २ पृ. १६८६

* लक्ष्यानपायन्याय. । मीको. पृ. ११९४ 'उपलक्षणापायेऽपि उपलक्ष्यानपाय.' इतिन्याये द्रष्टव्यम्। * लक्ष्यानपायन्याय. । उपलक्ष्यानपायन्यायः। लक्षणापाये-ऽपि लक्ष्यस्य नापायः। यथा 'नागवेलायामागन्तव्यम्, शङ्खवेलायामागन्तव्यम्, पटहवेलायामागन्तव्यं इति। यस्मिन् ग्रामे न नागाः, न शङ्खाः, न पटहस्तस्मिन्नपि स एव कालः, तत्र आगमनं क्रियते'। इति १०।८। १८।७० सूत्रे भाष्यम्। ग्रामे नागादिरूपस्य काल-लक्षणस्याभावेऽपि कालस्य लक्ष्यस्यापायो न भवति महत्। के. न्यायनाम रत्नाकरे पृ. २२.

* लक्ष्यार्थता न न्याय्या, मुख्यार्थता च न्याय्या। भा. ३।२।९।२६.

* लक्ष्याश्रयेण तु लक्षणव्यवस्थापनं गत्यन्त-राभावादिति न्याय। साहस्री ६८५

* लक्ष्यलक्षणयोः अनुमीयमानयोः संबन्धः नहि अवगम्यते। भा १०।६।०।३ पृ. १९८७.

* लक्ष्यलक्षणाभावः ज्ञाप्यज्ञापकभावात्मकः। सोम. ३।२।५.

* लक्ष्यतावच्छेदके न लक्षणा इति प्राञ्चः। तद्वि-शिष्टशक्त्ये तद्विशिष्टविशालस्य हेतुत्वात् तत्रापि लक्षणा युक्ता इति नव्याः। मणि पृ ७६.

* 'लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता' इति वार्तिके लक्ष्यमाणशब्दस्य लक्षणामूलकमिति विषयद्वा-र्यैक्यत्वेन उपपत्तिः। सोम. १।४।२६।७६.

* लङ्। लङर्थस्तु अनद्यतनभूतत्वम्। 'अपचत्' इत्यत्र 'भूते' इत्यनुवृत्तौ (पा ३।२।८४) 'अनद्य-तने लङ्' (पा ३।२।१११) इति सूत्रात्। रहस्य. ६४, मणि. पृ ११७.

* लवने प्रयोजनं नैदिक्षाणगोण्यस्य बर्हिष उपमादनम्। भा. ११।८।१४।४४.

* लवनादेः प्रकृतावपि न सर्वार्थता। भा. ३।८।१७।३२, था. पृ. ११६५.

* लवनप्रकाशकमन्त्रस्य मुख्ये बर्हिषि विनियोगः। भा. ३।२।१।१-२.

* लवनमन्त्रस्य दर्शऽयने प्रतिलवनं आवृत्तिर्दर्शपूर्णमासयोः। भा. ११।४।१८।४४-४५.

* लशुनं न भक्षयितव्यम्। भा. ६।२।५।१९.

* लाक्षणिकानि सर्वाणि पदानि यत्र, तद्वाक्यं मूकमेव। मणि पृ. ७१. * लाक्षणिकं शब्दं नेदं आभ्यपति। 'सोमेन यजेत' इत्यत्र मत्वर्थलक्षणा। याक्ष. पृ. ११४. * लाक्षणिकस्य पदस्य शक्यपदस्मृतिहेतुसंस्कारोद्बोधकतया स्वार्थोपस्थितिद्वारा शाब्दबोधकता। मणि. पृ. ७१.

* लाक्षणिकपदस्य अनुभावकत्वाभावात् तत्स्मृतशक्यपदस्यैव शाब्दबोधहेतुत्वं इति केचित्। लाक्षणिकस्यापि अनुभावकत्वं युक्तम्। मणि. पृ. ७१.

* लाक्षणिकशब्दप्रवृत्तिः, तात्पर्यावधारणं विना न युक्ता। [illegible]. पृ. ७३७.

💢 लाक्षारसानुसिक्तकार्पासबीजन्यायः। यथा लाक्षारसावसिक्तकार्पासबीजानां अङ्कुरादिपारम्पर्येण कार्पासादौ रक्तिमनियम इति। यथोक्तम्- 'यस्मिन्नेव हि संताने आहिता कर्मवासना। फले तत्रैव बध्नाति कार्पासे रक्तता यथा॥' इत्यादि सर्वदर्शनसङ्ग्रहे आर्हतनये। साहस्री ७००

* लाक्षारसोपसिक्तात् बीजपूरकुसुमात् तद्रूपतापन्नं फलं तदाश्रितमिवोत्पद्यते। रत्नाकरः पृ.२६२.

* लाघवं अपि निश्चयकारणम्। सु. पृ २२.

* लाघवमपि प्राधान्यविरोधित्वे अप्रयोजकम्। मणि. पृ. ११४.

* लाघवन्यायः ( अयमेव आग्नेयीन्यायः ३।२।८।२१-२४ )। लाघवन्यायस्य नियामकता युक्ता। स हि प्रकृतिनः परपक्षनिष्पत्तेः कल्पनागौरवं एवं कल्पयति। यद्यपि क्वचिद्गुरुत्वस्य विशिष्टेऽप्यन्वयो दृश्यतो भवेत् तथापि विशेष्यमात्रेऽपि अन्वयदर्शनात् उभयथाप्युत्पत्तिमत्त्वे, पूर्वोक्तविधया अन्योन्यव्याप्युपपत्तौ लाघवस्यैव नियामकत्वात् युक्त एकत्वकल्पनम्। कौ. २।२।७।२० पृ. २३८, * द्रव्यदेवतासम्बन्धस्य एकत्वे लाघवन्यायस्य एव नियामकत्वात् युक्तं वार्तिककृतम्। २।२।७।२० पृ. २४०. * सवनीयपश्वादिषु आतिदेशिकप्राप्तानां आग्नेयादीनामेवोपास्त्येन लाघवन्यायस्याप्यभावात् नात्र प्रसङ्गसिद्धिः। भाट्ट. १९।१।८.

💢 लाङ्गलं जीवनमिति न्यायः। लाङ्गलं हलं जीवनस्य निमित्तमिति गम्यते। साहस्री.१९२.

* लिखितपाठेनापि अध्ययनं अर्थज्ञानं च सम्भवति तथापि न तत्पूर्वकत्वम् इति ध्येयम्। वि. १।१।१

* लिङ् प्रतिषेधे श्रौतो यथा- न चतुष्कमवदिति ब्रूयात्। याक्ष. पृ ४०. * लिङ् विधायी श्रुतिः। था. १।१।७।१२ पृ. ७००. * लिङ् विधौ स्मार्तो यथा-मनुः ' अग्निहोत्रं तु जुहुयादाद्यन्ते द्युनिशोः सदा।' (मनुस्मृ.)। याक्ष. पृ. ४०. * लिङ् शब्दभावनावाचनी लिङ्त्वेन। वि २।१।१ वर्णकं २. * लिङा तावत् धात्वर्थविधानं स्वपदेनोपात्तत्वात् श्रौतम्। था. २।३।३।८ पृ. ५९३. * लिङः प्रवर्तनायां शक्तिग्रहः न्यायसुधायां अन्यथा उक्तः। शुश्रूषितस्य बालस्य गोदानेन स्तनपाने प्रवर्तनां ज्ञात्वा स्तनदाने माता प्रवर्तते। तदा असौ तस्या मातुः प्रवृत्तेः कारणं जिज्ञासमानः कारणान्तरानुपलब्ध्या स्वप्रवर्तनायां कारणत्वं प्रकल्प्य, सामान्यतः इति वाक्यश्रवणानन्तरं प्रयोज्यप्रवृत्तिं दृष्ट्वा मातृप्रवृत्तिदृष्टान्तेन तस्यापि प्रवर्तनाज्ञानस्य कारणत्वमनुमाय तत्कारणजिज्ञासायां लिङादिशब्दश्रवणमन्वर्थं तस्यैव शब्दस्य अन्वयव्यतिरेकाभ्यां प्रवर्तनाभिधानशक्तिं कल्पयति इति। याक्ष पृ. ७६.

* लिङर्थः इष्टसाधनत्वं इति मतम्। लिङर्थेष्टसाधनताप्रकारको धात्वर्थविशेष्यको बोधः इति च मतम्। मीन्या. * लिङर्थः प्रवर्तना इति केचित्। इष्टसाधनत्वं इत्यन्ये। मीन्या. * लिङर्थः। विध्यादिकं लिङर्थः। ' विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ' ( पा.

सम्प्रेऽपि प्रेरणात्मकत्वेन लिङादेः वेदे प्रवर्तकत्वं सिद्धम्। मु. पृ ३०—३१. ● लिङादेः कार्याभिधायकत्वं अपौरुषेये वेदे आस्थीयते। ऋजु. पृ. ३५. ● लिङादेः वक्तृइच्छानुविधायित्वे, कृतिसाध्यत्वे, इष्टसाधनत्वे च प्रत्येकं शक्तिः। इति नार्किकाः। तन्मण्डनं 'विध्यर्थः (रहस्यम्)' इति विन्दौ द्रष्टव्यम्। ● लिङादीनां विधायकानां प्रयोज्यगतचेतनव्यापारेण प्रयोजकता। वा. १।२।१।७ पृ. ११८.

● लिङाद्यर्थः लोके पुरुषाशयः। वेदे च तदभावात् लिङादिनिष्ठ एव कश्चिद्धर्मः। वाच्यतावच्छेदक च सम्प्रदायेन व्यापारत्वम्। न तु प्रवृत्तिनिवृत्तिप्रयोजकत्वमपि, तस्य अन्यत्रव्याप्तत्वात्। तत्र नञ्, अभावे आप्तशब्दार्थप्रवृत्तिप्रयोजकत्वम्, तत्पादे तु तदर्थप्रवृत्त्याप्रयोजकत्वं एवम्, इति विवेकः। प्रयोजकत्वं चात्र प्रवृत्तिमात्रकारणीभूतेष्टसाधनताज्ञानजनकत्वमात्रविवक्षयम्। अभावात्मकता च योगक्षेमसाधारणी। नञ्च प्रवृत्तिसामग्रीनिवर्तकत्वं इत्यन्यत्र विस्तरः।

स च लिङाद्यर्थः विधिवाक्ये प्रवर्तना-प्रेरणा-विध्य-पर्यायः। निषेधवाक्ये निवर्तना-निवारणा-निषेध-प्रतिषेधपर्यायः। इयं च द्विविधाऽपि शाब्दी भावना। तस्याश्च भाव्ये यथायोगं प्रवृत्तिनिवृत्ती। शब्दभावनाज्ञानं करणम्। इतिकर्तव्यतात्र भावनाया अनिश्चयकारणम्। इतिकर्तव्यता च यथायोगं स्तुतिनिन्दे। स्तुतिनिन्दाज्ञानस्य हि प्रवृत्तिनिवृत्तिप्रयोजकत्वं स्पष्टमेवानुभवसिद्धम्। लोकसिद्धम्। स्तुतिनिन्दावचनान्ये अर्थवादा प्राशस्त्यापरपर्यायं स्तुत्यादिनिन्दानुगुण्यं विधिनिषेधयोर्विधत्तयोः। तौ [illegible] यथायोगं विधिनिषेधापेक्षितत्वात् तदर्थतामपि वाक्यार्थैकवाक्यतया प्रतिपाद्यते। भाट्ट. १।२।१. ● उपनिषदादिमात्रगम्यपरमात्मतत्त्वस्य विधिवत्तेन तत्तदाकारेण वेदे लिङाद्यर्थं तात्पर्यकथा च। रहस्य. पृ १५, ● प्रवर्तना-प्रेरणा-विधि-अपरपर्याया भावना तत्प्रतिपादकवाक्ये लिङाद्यर्थः। पृ. १९.

● लिङादिप्रत्ययाः प्रवर्तनायां विहिताः। प्रवर्तयितुर्व्यापारः प्रेरणारूपः प्रवर्तना। आचार्यो हि 'ग्रामानयतु देवदत्तः' इति वदति। ततो ग्रामानयन् देवदत्तो ब्रवीति 'आचार्यप्रेरितोऽहं ग्राममानयामि' इति। स च प्रेरणात्मको व्यापारः नियोजयितृपुरुषनिष्ठः अभिप्रायविशेषो लोके। वेदे तु अपौरुषेयत्वादे लिङादिनिष्ठः धर्मविशेषः कल्प्यः। सेश्वरवादे तु ईश्वरेच्छैव प्रवर्तना। सा च लिङादिशब्दनिष्ठत्वात् ततः प्राधान्येन गम्यमानत्वाच्च शब्दभावना इत्युच्यते। तया च किं केन कथं इत्येवं भावयन्ती पुरुषप्रवृत्तिर्भाव्यते। सेयं प्रवृत्तिः शब्दभावनाभाव्यत्वात् फलोत्पादनव्यापारात्मकत्वाच्च अर्थभावना इत्युच्यते फलभावना इति च। इमां च अर्थभावनां प्रति गृहीतसम्बन्धलिङादिनिष्ठा सा शब्दभावना प्रयोजिका। तत्र लिङादिशक्तिग्रहः शब्दभावनाज्ञानद्वारा शब्दभावनाया अर्थभावनानिर्वर्तकत्वात् शब्दभावनां प्रति करणम्। इष्टसाधनताज्ञानमपि करणम्, तस्य शब्दभावनाया प्रवृत्तिं प्रति कारणत्वात्। अर्थवादलभ्यप्राशस्त्यं तु तत्र आङ्गत्वेन अन्वेति। तथापि, लोके इष्टसाधनत्वज्ञानम्, प्रेरणातः प्रवृत्तेरभावात् इष्टकृतिसाधनेऽपि विषयवत्त्वात् अनिष्टानुबन्धीष्टसाधनतामपि अर्थात् विधिप्रत्ययो गमयति तज्ज्ञानस्य प्रवर्तकत्वात्। मलेच्छादि शैक्षिके दिव्यत्वेन, क्वचिद्बाधाभावसाधनस्य बलवदनिष्टसाधनताया अपि सत्वात्, प्रवृत्तिनिवृत्त्योः औदासीन्यापत्तेः बलवत्त्वेन अनिष्ट विशेषणीयम्। तत्प्रवर्तनिष्ठानुबन्धीष्टसाधनताज्ञान प्रवर्तकमिति। मोक्षनाशकस्य च अनिष्टस्य इष्टतृप्त्यपेक्षया न प्रवर्तकत्वम्। तृप्त्यादिफलोत्कर्षस्य तत्र अनुभवसिद्धत्वात्। कु. १।२।१।४.

● लिङादियुक्तवाक्यश्रवणानन्तरं तदर्थज्ञानवान् प्रयोज्यवृद्धस्य प्रवृत्तिं प्रयुक्त्या अनुमाय पार्श्वस्थः प्रवृत्तिहेतुभूतोऽर्थः अनेन वाक्यशब्दात् प्रतीतः इति कल्पयति। प्रवृत्तिहेतुभावश्च कार्यत्वेनैव। यतो हि यावत् ममेदं कार्यं इति नावगम्यते, तावत् न प्रवर्तते।

ननु अपेक्षितोपायावगमात् प्रवृत्तिः। नैवम्। अपेक्षितोपायेऽपि यावत् कार्यतया नावधीयते तावन्न प्रवर्तते।

ननु अपेक्षितोपायतैव कार्यता। न; कार्यता कृतिसाध्यता, उपायता तु साधनता। अन्या हि साधनता

पूर्णमाससम्बन्धि किंचित् अनेन प्रकाशयेत्' इत्यवगते 'किं तत्' इत्यपेक्षायां 'स्तरणं' इति मन्त्रलिङ्गतः अवगम्यते। अतो मन्त्रलिङ्गप्रमेयदर्शपूर्णमासापूर्वसम्बन्धि-त्वप्रकारकदर्शपूर्णमासापूर्वसम्बन्धित्वावच्छिन्ननिरूपित-मन्त्रनिष्ठसम्बन्धबोधकप्रमाणसापेक्षत्वात् अस्य लिङ्गस्य सामान्यसम्बन्धबोधकप्रमाणसापेक्षत्वम्। एवं पूषानुमन्त्रणमन्त्रे यागानुमन्त्रणविशिष्टसमाख्यया 'यागसामान्यापूर्वसम्बन्धि किंचित् अनेन मन्त्रेण प्रकाशयेत्' इत्यवगते 'किं तत्' इति अपेक्षायां 'पूषा' इति मन्त्रलिङ्गादवगम्यते। अतो लिङ्गप्रमेयपूषनिष्ठविजातीययागापूर्वसाधनत्व-रूपोद्देश्यताऽवच्छेदक-यागसामान्यापूर्वसाधनत्वावच्छिन्ननिरूपितमन्त्रनिष्ठ-सम्बन्धबोधकसमाख्यासापेक्षत्वात् लिङ्गस्य निरुक्तप्रमाणसापेक्षत्वम्। यत्र तु उद्देश्यस्वरूपे आनर्थक्याभावेन अपूर्वसाधनत्वादिबोधार्थं न प्रकरणाद्यपेक्षा यथा अर्थज्ञानस्य सामर्थ्यात् कर्मानुष्ठानाङ्गत्वे, तत्र लिङ्गस्य सामान्यसम्बन्धबोधकप्रमाणानपेक्षत्वम्।

लिङ्गस्य च अशब्दत्वेन अविधायकत्वात् विहितत्व-घटितनिरुक्ताङ्गत्वे साक्षात्प्रमाणत्वासम्भवेन विधायकश्रुतिकल्पनाऽन्तरितप्रामाण्यस्य अनन्तरितप्रामाण्यश्रुतितो दौर्बल्यम्। अत एव 'कदाचन स्तरीरसि' इति इन्द्रप्रकाशिकायाः ऋचः यावत् लिङ्गात् इन्द्रोपस्थानार्थत्वं कल्प्यते, तावत् 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रुत्या गार्हपत्योपस्थानार्थत्वं ऐन्द्र्यधिकरणे (३।३।२) निरूपितम्। न च उपक्रमस्थगन्दिश्रुत्या इन्द्राङ्गत्वावगमात् न गार्हपत्योपस्थानाङ्गत्वं इति वाच्यम्। साधनत्व-स्वप्रधानकर्मोद्देश्यत्व-समनियतकारकोपाधिरूपदेवतात्व-शक्तस्य तद्धितस्य प्राधान्येन प्रतिपाद्यतत्पराकोपाधिरूपदेवतात्वे लक्षणाऽङ्गीकारेण प्रकृते तद्धितस्य श्रुतित्वाभावात् इन्द्रोद्देशेन विधौ एकप्रसरताभङ्गापत्तेश्च, चयनप्रकरणपठितेन 'ऐन्द्र्या' इति वचनेन चयनानुपयोगीन्द्रप्रकाशकत्वेन विधानानुपपत्तेश्च। गार्हपत्यस्य तु साधनत्वेन चयनासन्निहितत्वेऽपि चयनसंस्कार्यत्वोपपत्तिः। अतश्च शक्त्या उप-(अपरयुग-) स्थितेन्द्र-प्रकाशनस्वभावाया 'ऐन्द्र्या' इति गौणमुख्याया गौण-सामर्थ्यसहकृततृतीयाश्रुत्या गार्हपत्यप्रकाशकत्वमेव अस्या ऋचः इति ध्येयम्। मुख्यसामर्थ्यरूपलिङ्गविरोधिगौणसामर्थ्यस्य श्रुतिसहायत्वेऽपि न स्वतो विनियोजकत्वम्। अत एव दर्शपूर्णमासप्रकरणपठितस्य 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य शक्त्या बर्हिर्लवनाङ्गत्वम्, न तु गौण्या उलपराजिलवनाङ्गत्वं इत्युक्तं तृतीये (लिङ्गाधिकरणे ३।१।१)। इति लिङ्गनिरूपणम्। मुरारि. पृ. ११७१-७५.

॰ लिङ्गं प्रकरण वा अनुप्रवीनत्व इति न व्यावृ-च्छिन्ने प्रवृत्तिर्भवति। यदवगम्यते 'एतत् करवत्' इति तत्र प्रवर्तते। शा. ३।२।८।२३ पृ ७७८. ॰ लिङ्गं प्रकरणात् बलवत्। शा. ३।३।७।१४ पृ ८३६. ॰ लिङ्गं प्रकरणाद् बलवत्। पूषानुमन्त्रणमन्त्रस्य प्रकरणात् प्राप्तं दर्शपूर्णमासार्थत्वं लैङ्गिकेन पूषाङ्गत्वेन बाध्यते। मीन्या. ॰ लिङ्गं प्रमाणं भवति, (यत्र) प्रकरणवतोऽर्थस्य संनिधाने तमर्थमामनन्ति, 'स तस्य साधनभूतः' इत्येव गम्यते। कथं नाम उपकरिष्यति इति सविशयाने सामर्थ्यात् परिनिश्चयः। यस्मात् समर्थः तत्र तस्यो विनियोगमुपैति। शा. ३।३।७।१४ पृ. ८४३. ॰ लिङ्गं प्रमाणान्तरसिद्धसामान्यसम्बन्धस्य पदार्थस्य विनियोजकम्। मीन्या ॰ लिङ्गं मन्त्रेषु वचनसामर्थ्यं 'बर्हिर्देवसदनं दामि' इति विनियोगकारणमुक्तम्। भा. ३।३।८।११. ॰ लिङ्गं मन्त्रविनियोजकम्, मुख्ये पदार्थे विनियोजक न गौणे। 'बर्हिर्देवसदनं दामि' इति मन्त्र-कुशच्छेदनाङ्गं न उलपराजि-लवनाङ्गम्। मीन्या ॰ लिङ्गं वाक्यात् बलवत् तेन 'स्योन ते०' इति मन्त्रार्धयोः क्रमेण भवते सादने चाङ्गत्वं दर्शपूर्णमासयोः। भा. ३।१।७।१८, वि. ३।३।८. ॰ लिङ्गं वाक्यात् बलवत्। वाक्यस्य लिङ्गं श्रुतिं च कल्पयित्वा विनियोजकत्वात् लिङ्गस्य च श्रुतिमात्रकल्पनेन विनियोजकत्वात्। 'स्योनं ते सदनं०' इति पूर्वार्धस्य लिङ्गात् सदनाङ्गत्वं न तु वाक्यात् सादनाङ्गत्वम्। मीन्या. ॰ लिङ्गं विनियोगविषयत्वस्य सामर्थ्यम्। मु. पृ. ११९१ ॰ लिङ्गं विलम्बितत्वात् श्रुत्यपेक्षया दुर्बलम्। वि. १०।८।१८. ॰ लिङ्गं विवक्षित 'नमस्ते अस्तयोर्यो कृष्णग्रीवायात्मने' इत्यादौ 'गभिन्द्रो

इति यावन्ति आग्नेयानि सूक्तानि दाशतयानि तैः सर्वैः इष्टका उपधीयन्ते तद्वत् । इति पूर्व. पक्षः ।

**यावदर्थं वाऽर्थशेषत्वादल्पेन परिमाणं स्यात् तस्मिंश्च लिङ्गसामर्थ्यम् । ७४ ॥**

' सप्तदशैताः सामिधेन्यो भवन्ति ' इति न दाशतयी-गताः सर्वा एव मानस्य ऋचो ग्राह्याः किंतु अर्थशेष-त्वात् अग्निसमिन्धनरूपकार्यशेषत्वात् यावदर्थं अपेक्षा-नुसारेण पञ्चदश सप्तदश वेति अल्पेन परिमाणं स्यात् । अल्पा एव मानस्य ऋचो ग्राह्याः न सर्वा इत्यर्थः । तस्मिन् च अल्पपरिमाणे ऋक्समुदाये लिङ्गस्य मन्त्र-शब्दरूपस्य सामर्थ्यं समर्थस्य सत्त्वम् आस्थेयं । समुदायऋक्कोऽपि मानस्य एव न अग्रानस्यः । इति लिङ्गसद्भावस्य समानः । तस्मात् यावदर्थमेव ग्राह्याः, न सर्वाः ( ५९ ) इति सिद्धान्तः ।

**आग्नेये सूक्तविधिः । ७५ ॥**

पूर्वपक्षप्रदर्शितस्य आग्नेयदृष्टान्तस्य ( १०।८।२९। ७३ ) वैषम्यं दर्शयति सिद्धान्ती । आग्नेये दृष्टान्ते कृत्स्नविधि कृत्स्नानां सूक्तानां विधिः युक्तः । आग्नेयैः सूक्तैः इत्युक्तत्वात् । सामिधेनीनां तु परिमितत्वात् न सर्वासामेव मानवीनामृचां ग्रहणं युक्तम् ।

**ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् । ७६ ॥**

ननु यथा अहर्गणे 'ऋजीषमप्सु प्रास्यति' इति सर्वेषा-मह्नां यदृजीषं तत्सर्वं अविशेषात् प्रास्यते तथा सर्वासां मानवीनां ऋचां सामिधेनीत्वेन ग्रहणं स्यात् इति चेत्, तत्राह सिद्धान्ती । ऋजीषस्य निष्पीडितरसस्य सोमशेषस्य प्रधानत्वात् अहर्गणे सर्वस्यैव प्रतिपत्तिः अवभृथे अप्सु प्रासनं स्यात् । मानवीषु सामिधेनीषु तु अग्निसमिन्धन-रूपकार्यशेषत्वात् न सर्वासां ग्रहणं इति सिद्धान्तः । के.

* लिङ्गेन ये मन्त्रा विनियुज्यन्ते ते यादृशा एव निर्णीतास्तादृशा एव कर्मणि प्रयोक्तव्या., तत्र ब्राह्मणस्य व्यापार एव नास्ति । टुप्. १२।३।८। २१. * लिङ्गेन ये संयुक्ताः ते अपूर्वार्थां न भवन्ति इति मन्त्रमात्रस्य पूर्वार्थः । ' कस्मैदेवतयोम ' इत्यत्र ( ६।२।३।८ ) । तन्त्र. ९।१।२।२ * लिङ्गेन लिङ्गं

बाध्यते यथा–'स्योनं ते सदनं कृणोमि' इति मन्त्रे उभयो-रर्थयोः कर्मसमवेतस्वार्थप्रकाशनसामर्थ्येन ' तस्मिन् सीद ' इत्येकवाक्यतोपगमसामर्थ्यात्मकं लिङ्गम् । बाल. पृ. १३५. * लिङ्गेन वाक्यं अर्थविप्रकर्षात् बाध्यते । वा. ३।८।१०।२१ पृ. ११२६. * लिङ्गेन विध्यन्त-नियमो भवतीत्युक्तम् । भा. ८।१।२।२, ८।१।१६। २८, * लिङ्गेन भवति बाधितव्या । ७।१।२४।११. *लिङ्गेन श्रुतिबाधो यथा – ' स्रुवेणावद्यति ' ' स्वधि-तिनावद्यति ' इति स्रुवादिः एकः शेषः श्रुत्या द्रव्या-वदाने स्वरावदाने वाऽनेकत्र शेषित्वेन प्राप्तः, लिङ्गेन द्रवावदाने एव नियमनात् शेष्यन्तरे बाध्यते । तथा एकस्मिन् शेषिणि द्रवावदानादौ श्रुत्यैव स्रुवा, करणान्तरं चानेकः शेषः प्राप्तः तत्राल्लिङ्गेन स्रुवमेव निय-मयन् करणान्तरं मौनमपि बाध्यते । बाल. पृ. १०५. * सर्वो वाक्यव्यवायो बाध्यमानेन अर्थं विधत्ते, लिङ्गेन वा केनचिदव्यभिचारिणा । वा. ३।८।८।२४ पृ. ९५८. * लिङ्गात् एतावद्गम्यते, ' समर्थमेतत् इममर्थमभिनिर्वर्तयितुम् ' इति । भा ३।३।७।१४ पृ. ८४१. * लिङ्गात् सविचिकित्सो भवति प्रत्ययः, निर्विचिकित्सः श्रुतेः । ३।३।७।१४ पृ. ८४२, * लिङ्गात् केवलात् लिङ्गक्रमसमाख्यानसमुदायो बल-वान् । ३।२।७।२०, * लिङ्गात् प्रकरणं दुर्बलम् । ३।३।१४।५२. * लिङ्गात् प्रत्यक्षादपि आनुमानिकी श्रुतिः बलवती । वा. ३।३।७।१४ पृ ८४१. * लिङ्गात् श्रुतिर्बलवती । भा. ३।३।७।१४ पृ. ८३२, ९।१।३।११२७, * लिङ्गात् समाख्यासापेक्षात् समाख्या बलवती । ३।३।७।२०, * लिङ्गस्य अर्थविप्रकर्षः एव, प्रथमं तावत् लिङ्गज्ञानम्, ततः सामर्थ्यात् शब्देन अयमर्थो-ऽभिहितो भवति । भा. ३।३।७।१४ पृ. ८४५–४६. * लिङ्गस्य अर्थविप्रकर्षः ऐन्द्रीविनियोगं प्रति श्रुति-लिङ्गयोः सह प्रस्थितयो. यदा श्रुतेर्विनियोजकानि अक्ष-राणि दृश्यन्ते, तदा लिङ्गं स्वरसमर्थानि, ततो यावत् तेषां प्रकरणान्तरान्यथानुपपत्त्या विनियोजकानि वस्तु-विशेषाख्यानि तावदितरैः प्रत्यक्षैर्विनियोगः प्रदर्शितः । तस्मिंश्च प्रतीते मन्त्रोऽपि प्रकरणेन प्रति नियोगादृष्टी-

भूतः । प्रकरणी अपि मन्त्र इति । तथा सति प्रकरणाम्नातस्य अन्यथाप्युपपन्नमानत्वात् न इन्द्राभिधानश्रुतिकल्पनाया अर्थापत्ति. प्रभवति, न च श्रुतिमन्तरेण विनियोगः सिध्यति । तस्मात् श्रुतिर्बलीयसी । वा ३।३।७।१४ पृ. ८३०. ● लिङ्गस्य उहः यथा– 'अग्नये, स्वाहा' इति एकहायन्याम् । माण्डे च 'वसुरसि, स्तोऽसि' इति । बाल. पृ. १२६ ● लिङ्गस्य दाधादिप्रत्ययार्थ. (भवति) । सु पृ ७३९. ● लिङ्गस्य दुर्बलप्रमाणोपजीवित्वम् (अत्र अधिकरणार्थः) । भा. ३।२।७।२०. ● लिङ्गस्य पदमात्रे पर्यवसानायोगात् वाक्यविनियोगपर्यन्तत्वम् । सु पृ. ११६२. ● लिङ्गस्य प्राप्ति. अनन्यथार्थमतः इत्यादि । वा. ३।३।७।१४ पृ. ८८१. ● लिङ्गस्य वाक्येन बाध. । बाल पृ. १४६. ● लिङ्गस्य वाक्यात् बलीयस्त्वम् । तथा च मन्त्रानुवादे (३।२।१।१९–२६) दर्शितम् । वा ३।३।७।१४ पृ ८२३. ● लिङ्गस्य विनियोगमात्रसामर्थ्यस्य ऐकपद्यप्रयोगाभावात् पदान्तरसन्निधे. अवगन्तव्यत्वात् वाक्य पश्चाद्भावित्वेन । ३।३।८।११ पृ. ८१७. ● लिङ्गस्य श्रुतिमात्रानुमानान्तरित अर्थश्च । वाक्यस्य पुनः लिङ्गश्रुत्यनुमानव्यवहित । ३।३।७।१४ पृ. ८२१ ● लिङ्गस्य श्रुतिबाध्यत्ववैशेषिको विरोध. । इन्द्रोपस्थानमन्त्रे 'य इम समभरन् ये च यज्ञपति वर्धान्' इत्यत्र पृथक् कर्तव्यः अभिवृद्धयर्थे सर्वे विनियोक्तव्याः इति पक्ष । श्रुत्या, एकवाक्यत्वेन, प्रकरणेन च लिङ्गस्य बाधात् तथा कर्तुं न शक्यते । इति सिद्धान्तः । वि. ३।३।१४. ● लिङ्गस्य श्रुतिविरोधात् क्वचित् बाधेऽपि न सर्वत्र बाधो युक्तः । सु ३।८।१२ पृ. ५४, ● लिङ्गस्य सामर्थ्यात्मकस्य सामर्थ्यस्य च सन्दिग्धार्थनिर्णयमात्रे व्यापारमित्याहम् । पृ ११९७. ● लिङ्गाना नानुमानविषया निश्चयकरत्वं किंतु विध्यवधिकरणोक्तरीत्या (७।४।२) टस्मानविषय । सोम. ८।१।१. ● लिङ्गयो विरोधे यथाभिमानशक्तिस्य लिङ्गम्, परस्परैकवाक्यतासमर्थ्यप्रकाशात् लिङ्गात् बलीयः । वा. ३।३।७।१८ पृ. ८४०. ● लिङ्गयोः विरोधे मन्त्रस्य गौणसामर्थ्येन गौणत्वादुत्तरे प्रमाणे, मुख्य सामर्थ्येन मुख्यार्थाङ्गत्वम् । शेषानेकत्वे तु एकस्मिन् शेषिणि गौणमुख्यसामर्थ्येन मन्त्रद्वयमुदाहार्यम् । कौ. ३।३।७।१४ पृ ३५७.

● **लिङ्गातिदेशात्** नामातिदेशः प्रबल., शीघ्रबुद्धिहेतुत्वात् । लिङ्गातिदेशश्च धर्मप्राप्तिदेशात् प्रबल । वि. १२।१।६.

● **लिङ्गानुमिता** श्रुतिः आकाङ्क्षावशेन विधाप्रकाशनमात्रविनियोगार्थेव ज्ञायते । बा. १।२।४।१५ पृ १५३.

■ **लिङ्गाधिकरणम्** । पशौ पुस्त्वादि लिङ्ग विवक्षितम् ॥

तथा च लिङ्गम् । ४।१।६।१७ ॥

**भाष्यम्**— अधिकरणान्तर वा । तथा च लिङ्गमिति । पशावधिकरण लिङ्गाधिकरणे अतिदिश्यते । लिङ्गमविवक्षितम्, श्रुत्या वाक्यस्य बाधितत्वात् । न च विवक्षितमिव श्रूयते इति भवति लिङ्गम् । 'स्त्री गौ सोमक्रयणी' इति स्त्रीवचनात् सोमक्रयणी इत्यविवक्षितमेव लिङ्गं प्रतीयते । ननु कथ 'मृगीमानय' इति न मृगा आनीयन्ते ? नैतत् । अशक्य तु तत् । 'पूर्वे धावन्ति' इति यथा । लिङ्ग विवक्षितम्, वाक्यार्थस्य श्रुत्या अप्रतिषिद्धत्वात् । तथा च लिङ्ग 'गर्भिण्यो भवन्ति' इति । तथा च 'मुष्का भवन्ति' इति । यदुक्तं 'स्त्री गौ सोमक्रयणी' इति । तत्र स्त्री इत्यविवक्षितम् । तथा 'प्रजापतये पुरुषान् हस्तिन आलभते' इति पुरुषग्रहणमविवक्षितम् । विपर्यये हि स्यात. उक्तो लिङ्गविवक्षायाम् । तस्मात् विवक्षितं लिङ्गमिति ।

**वा**— लिङ्ग तु अलिङ्गो निपातलिङ्गो इत्यादौ अधिकादौ च शब्दप्रयोगात् अस्वन्द्वार्थे इति अविवक्षितत्वाशङ्का । स्त्रिः स्त्री इत्यादौ अनन्यथासिद्धलिङ्गप्रतीतिः शब्दस्य वाचकत्वं कल्पयति इति शब्दार्थत्वात् प्रत्ययवत् लिङ्गं विवक्षितम् ।

**वि**— 'न पुल्लिङ्गे विवक्षा वा विवक्षा, ऽनुपयोगत. । आद्यो, ऽनुप्रियपेक्षत्वात् सत्प्यावत् तद् विवक्षणाम् ॥'

भाट्ट— भवतु सङ्ख्या शब्दार्थत्वात् विवक्षिता। लिङ्गं तु उपादेयगतमपि अशब्दार्थत्वादविवक्षितम्। नहि तत् प्रातिपदिकार्थः, शिखादिपदात् तदप्रतीतेः, तस्य लिङ्गवद्द्रव्यमात्रत्वेन लिङ्गविशेषव्यभिचारात्। नापि प्रत्ययार्थः व्यभिचारादेव। नापि टाबादीनाम्, सुब्विकाराणां 'तस्माच्छसो नः पुंसि' इत्यादीनाम्, त्रिलिङ्गे वृक्षादौ विपरीतलिङ्गे भक्षिकादौ च प्रयोगेण व्यभिचारादेव। अतः शब्दानुशासनमात्रमेवेदम्, न लिङ्गं नाम कस्यचित् शब्दस्य अर्थः, इति अविवक्षितम्। इति प्राप्ते, सिंहः सिंही इत्यादौ अनन्यथासिद्धलिङ्गप्रतीतेः लिङ्गमपि क्वचित् टाबादीनां सुब्विकाराणां च क्वचिच्च निमित्तत्वादिप्रातिपदिकविकाराणां वाच्यम्। अतश्च तत् क्वचित् सङ्ख्यावत् कथितञ्च प्रातिपदिकार्थत्वेनैव विवक्षितम्। यत्र तु बाधः तत्र साधुत्वार्थं तच्छब्दप्रयोगः।

मण्डन— 'पशोर्लिङ्गं विवक्ष्यते।'

शंकर— 'लिङ्गमप्येवमिष्यते।' एव सङ्ग्रहः।

* लिङ्गाधिकरणम् (लिङ्गेन बर्हिर्दोहनमन्त्रस्य मुष्टौ विनियोगः)। ३।१।११-९. मीको. पृ. २११३ 'बर्हिन्याय.' इत्यत्र द्रष्टव्यम्।

* लिङ्गानुसारेण मन्त्रानुक्रमस्य ग्रहणादौ विभज्य विनियोगो ज्योतिष्टोमे। वि. ३।२।९.

* 'लिङ्गाभावाच्च नित्यस्य' (१।२।८।१८)। श्यामादिचिह्नविशेषस्याप्युपपदानुमानाद्गाविषयार्थं एतत् सूत्रम्। नियतस्य स्वस्तिकाभावात् नियतस्य सर्तुः तपलक्षणभूतस्य लिङ्गस्य अभावात् (कर्तुः उपलक्षणभूतं यत् लिङ्गं तस्य अभावात्) उपाध्युपपदानुमानानुपपत्तेः इत्यर्थः। सु. पृ. २५१.

* लिङ्गादिभिः प्रत्यक्ष- आनुमानिकाना श्रुत्यादीनां बाधः— यथा कृष्णलेषु सामर्थ्येन व्रीहीनवहन्ति इत्यतिदेशानुमितश्रुतेः। बाल पृ. १४६, वा. ३।३।७।१४ पृ. ८४१. * लिङ्गादेः श्रुतिमनपेक्ष्य स्वातन्त्र्येण प्रामाण्यं नास्ति। वा. १।२।८।३४. * लिङ्गादीनां श्रुत्यादिभिर्बाधयोग्यता। वि. ३।३।१२. * 'प्रमाणत्वाप्रमाणत्वे लिङ्गादीनां व्यवस्थिते। पूर्वं सह विरुद्धत्वानिरूपणे॥' वा. ३।३।२।३ पृ. १८०.

* लिङ्गादिप्रभवा अर्थवादप्रभवा च स्मृतिः श्रुतिप्रभवा स्मृत्या बाध्यते। अप्रामाण्यः। वा. ३।३।७।१४ पृ. ८६०.

* 'लिङ्गोपदेशश्च तदर्थवत्'। (१।२।४) तेषां मन्त्राणां अर्थः यथा अस्ति तथा लिङ्गोपदेशो भवति इति सूत्रव्याख्यानम्। सु पृ. ११२.

* लिङ्गक्रमयोः उपदेशप्रमाणत्वात् अत्यन्तानर्थक्य प्रसङ्गाच्च चोदनात् प्राबल्यम्। सोम. १०।७।२५. * लिङ्गक्रमयोः विरोधे स्तुतशस्त्राधिकरणे बाधितः 'अर्थेन त्वपकृष्येत' इति। विपरीतोदाहरणमपि यथा अभ्यनुज्ञापनाभ्यनुज्ञयोः प्रश्नकमयोः 'उपहूत उपहृयस्व' इत्येव मन्त्री आम्नातौ। तौ देवतासामान्यात् तथैव अन्वयः प्राप्नुतः 'उपहूतः' इत्यनुज्ञापने 'उपह्वयस्व' इत्यनुज्ञापाम्। न तु तथा सामर्थ्यमस्ति इति विपरीत शेषत्वम्। यावद्धि स्थानेन प्रकरणमुत्पाद्य एकवाक्यत्वं कल्प्यते तावल्लिङ्गेन श्रुतिं कल्पयित्वा साधितो विनियोगः इत्यकल्पितलिङ्गश्रुतिपदस्यैव क्रमस्य बाधः। तथा परिव्याणकरणभ्रियमाणानुवादिनो 'परिवीरसि' 'युवा सुवासाः' इति वा अग्नीषोमीयपरिव्याणाङ्गत्वे प्राप्ते लिङ्गात्सबलीयार्थद्वितीयपरिव्याणाङ्गत्वमपि। कथं न मनोतामग्नीषोमीयपशुमनावपनसमर्थेन लिङ्गेन आग्नेयपशुयागाङ्ग इति चेत्। न। 'वचनात्त्वयथार्थमैन्द्री स्यात्' इतिवत् तदवान्तरश्रुतिकृतविनियोगकल्पिकल्पनाद्वारेण अग्नीषोमीयाङ्गत्वात्। एव हि आह 'यत्रान्यदेवत्यः पशुराग्नेय्येव मनोता कार्या' इति। अनया हि अग्रतः लिङ्गेन उत्कृष्यमाणा मनोता बाधिता। द्विदेवत्येऽपि एकदेवत्यैव न वेचागिदेवत्येन अग्नीषोमीयाद् उत्कर्षणीयेत्यर्थः। यद्वा एवकारं स्वयमनादृत्यैव यथाक्रमं कार्या एव इत्यत्र सयोजना कार्या इति अवधार्यते। वा. ३।३।७।१४ पृ. ८३६-८३७. * लिङ्गक्रमयोर्विरोधे '"उपहूतः उपह्वयस्व' इत्यनयोः यथाक्रमं पाठात् प्रश्नप्रतिवचनशेषत्वे क्रमेण अवगते लिङ्गात् वैपरीत्यम्। एवं प्रमाणान्तरविरोधेऽपि द्रष्टव्यम्। शेषानेकत्वे तु अन्यदेवत्यनिवृत्तिर्गृहीतौ

अयदेवत्यानुमन्त्रणस्य आम्नातस्य तद्देवत्यानुमन्त्रणेन बाध । कौ ३।३।७।१४ पृ ३६०

* लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम्' इत्यत्र इन्द्राग्नीना कर्मणो बहिरपि सद्भाव प्रतिपादित । कु ३।३।१४।३९

ॐ लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम् । ३।२।७।२०॥

इह काम्ययाज्यानुवाक्याकाण्डमुदाहरणम् । 'इन्द्राग्नी रोचना दिव ' 'प्रचर्षणिभ्य ' 'इन्द्राग्नी नवतिं पुर ' 'श्नथद्वृत्रम्' इत्याद्या पठ्य । ब्राह्मणे च काम्या इष्टय श्रूयते- 'ऐन्द्राग्नमेकादशकपाल निर्वपेत्स्व प्रजाया निगाय ' 'ऐन्द्राग्नमेकादशकपाल निर्वपेद् भ्रातृव्यवान्' 'अग्नये वैश्वानराय द्वादशकपाल निर्वपेत्सुकाम ' 'अग्नये वैश्वानराय द्वादशकपाल निर्वपेत् अपरूममभियोक्ष्यन्' इत्येवमादय । तदेता याज्यानुवाक्या प्रति सदेह, किं यानि कानिचिदैन्द्राग्न कर्म तत्र सर्वत्रानेन ऐन्द्राग्नेन याज्यानुवाक्यायुगलेन भवितव्यम्, उत एतस्यामेव ऐन्द्राग्न्यामिष्टौ काम्यायामिति । एव वैश्वानर्यो याज्यानुवाक्या । एव सर्वत्रोपयोगिवाक्याभ्या लिङ्गस्य विनियोजकस्य निरूप्य इदानीं लिङ्गस्यैव विनियोजकस्यानुप्रमाणान्तरमापन्नस्येति तद्गत एव विशेषोऽभिधीयते ।

अत्राय पूर्वपक्ष — यद्यपि येनैव क्रमेण ऐन्द्राग्नादीनि कर्माणि समाम्नातानि तेनैव क्रमेण तद्देवत्यानि काम्यसमाख्यायुक्तानि याज्यापुरोनुवाक्यायुगलानि अपि श्रूयन्ते । तथा च अति क्रमेण समाख्यया च तद्युगलस्यैव या यानुवाक्याविनियोगो युक्त । तथापि लिङ्गस्य क्रमात् समाख्यातश्च बलीयस्त्वात् इन्द्राग्न्यादिप्रकाशन-सामर्थ्यात्मकेन लिङ्गेन क्रमसमाख्ययोर्बाधितत्वात् इन्द्राग्न्यादिदेवताककर्ममात्राङ्गत्वमेव याज्यानुवाक्ययो युक्तमिति । एव प्राप्ते, अभिधीयते । सत्यमेव यदि सामान्य-सम्बन्धनिरपेक्ष लिङ्ग विनियोजक भवेत् । अग्न्यादिप्रकाशनसामर्थ्य हि लिङ्गम् । न चाग्न्यादिस्वरूपे विनियोग सम्भवति, वैयर्थ्यप्रसङ्गात् । सम्भवति तु तेषा यागपूर्वीयरूपे । न च सामान्यसम्बन्धमन्तरेण यागापूर्वीयत्व लभ्यते । तेन तत्र सामान्यसम्बन्धाद्वा वाक्य प्रकरण वा समस्ति, तत्र तदपेक्षयैव लिङ्गस्य विनियोजकत्वम् । अत्र तु वाक्यप्रकरणयोरभावादपि क्रमसमाख्यापेक्षा न भवेत्, तदा लिङ्गस्य विनियोजकत्वमेव न स्यात् । तेनात्र क्रमेण या यानुवाक्यामैन्द्राग्न्यादि काम्येष्टिभि सामान्यसम्बन्धो गम्यते । तत्र किं कुर्वतोऽस्याङ्गमिति विशेषापेक्षाया स्वाभिधेयसमवेतार्थप्रकाशने विनियुज्यते । यत्र पुन क्रमेण सामान्यसम्बन्धे जातेऽन्यापेक्षा, कार्यद्वयसाधारण हि लिङ्ग सन्निधानात् केवल न विनियोगसमर्थम्, तत्र विनिगमनासिद्ध्यर्थं समाख्याऽप्याश्रीयते । यथा केवलाग्निदेवत्यस्य कर्मण क्रम आग्नेयी ऋक् गम्यते । तस्याश्च लिङ्गेन कार्यद्वयमवगम्यते क्रियमाणाग्निप्रकाशन इज्यमानाग्निप्रकाशन च । तत्र यदि याज्यासमाख्या नाश्रीयेत, तदा प्रथम स्यात् क्रियमाणाग्निप्रकाशनार्थत्वमेव स्यात् । याज्यासमाख्यया तु इज्यते अनया इज्यमानदेवताप्रकाशन सामर्थ्य मन्त्रस्य कल्प्यते । यद्यपि अभिधानसामर्थ्य न देवतार्थं, किन्तु यागयन्तिसाधारणाग्निस्वरूपमात्रे । तथाहि, समाख्याकल्पितयागविषयसामर्थ्यानुरोधेन इज्यमानदेवताप्रकाशन एव लिङ्गेन विनियुज्यते । तदुक्तम्-

'नास्ति क्रतुसम्बन्धे सामर्थ्यं विनियोजकम् । येन च क्रतुसम्बन्धस्तेन काम्यार्थता स्फुटा ॥' इति ( वा पृ ७७१ ) । अत सर्वत्र सामान्यसम्बन्धपूर्वक एव लिङ्गविनियोग इति । प्रयोजनम्-पदीकम् । सूत्र तु लिङ्गक्रमसमाख्याभि काम्येष्टिसम्बद्धमेव मन्त्रसमाम्नान न सर्वत्र यातीत्यर्थं । तौत्त

ॐ लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम् । ३।२।७।२० ॥

'ऐन्द्राग्नमेकादशकपाल निर्वपेत् प्रजाकाम ' 'ऐन्द्राग्नमेकादशकपाल निर्वपेद् यस्य सजाता वीयु ' इत्याद्या काम्येष्टयो विहिता । एव काम्ययाज्यानुवाक्याकाण्डे 'इन्द्राग्नी रोचना दिव ० श्नथद्वृत्र०' इति ऐन्द्राग्न याज्यापुरोनुवाक्यायुगल चाम्नातम् । तत्र किं यावत् किञ्चिद् ऐन्द्राग्न कर्म तत्र सर्वेन अनेनैव याज्यानुवाक्यायुगलेन ऐन्द्राग्नेन भवितव्य उत उक्तायामेव प्रथमायामेव ऐन्द्राग्न्यामिष्टौ इद युगल अयत्र तु अन्यत् इति

* लिङ्गस्य अनन्यगतिकत्वात् अन्यार्थदर्शनाना अभिधास्यते। वा. ३।३।७।१४ पृ. ८४१.

* लिङ्गदर्शनाच्च। ३।४।१३।४०॥

सोमभक्षणस्य पुरोडाशादिभक्षणवत् ऋत्विक्षु अवशिष्टकर्मानुष्ठानसामर्थ्याधानार्थत्वे. तद्वैगुण्येऽपि च दक्षिणाशाभावस्यफलाविघातात् स्वामिन एव पानात् प्रधानफलभोक्तृयजमानशक्त्याधानात्मा समृद्धिः तद्वैगुण्याच्च भोक्तृशक्तिनाशात् अथा व्यृद्धिः। तस्मात् तस्यैव भक्षे इति। [illegible] पृ. १५१४.

* लिङ्गप्रकरणाभ्यां क्रमबाध.। यथा– दर्शपूर्णमासप्रकरणे 'हस्तावनेनिक्ते' 'उलूखले रत्नानि'। अत्र क्रमेण आस्तरणमात्रस्याङ्ग हस्तावनेजनम्, लिङ्गप्रकरणाभ्यां तु हस्तावनेजन सर्वशेष.। वि. ३।१।१४.

* लिङ्गप्रकरणविरोधे पूषानुमन्त्रणानि उदाहर्तव्यानि। दोष्यनेकत्वे इदम्। नेपानेकत्वे तु निर्वापादिषु लिङ्गेन 'देवस्य त्वा' इत्यादिना प्रकरणाम्नातमन्त्रान्तरबाध.। वा. ३।१।७।१८ पृ ८३९. * लिङ्गप्रकरणविरोधे दोष्यनेकत्वे पूषानुमन्त्रणमन्त्रस्य प्रकरणेन दर्शपूर्णमासयोर्विनियोगे प्राप्ते समाख्याबलात्लिङ्गात् पूषदेवत्यकर्माङ्गत्वम्। इत्युदाहरणेन च सिद्धत्वात् मन्त्रस्य अविनाभावप्रकरणविरोधे ज्ञेयम्। मुख्यप्रकरणविरोधे तु अन्यत्रैवम्। दोपानेकत्वे तु पूषानुमन्त्रणमन्त्रे प्रकरणात् आग्नेये प्राप्ते मुख्यलिङ्गेन अनुमन्त्रणेन बाध.। की. ३।३।७।१४ पृ ३६०.

* लिङ्गबलेन आकाशश्रुतेरन्यथानयन 'आकाशस्तल्लिङ्गात्' इत्यत्र। ब्रह्मसू. ६।२।१–२ * लिङ्गबलेन सूक्तवाकमन्त्र दर्शे पूर्णमासे च विभज्य विनियोक्तव्य। वि. ३।२।६.

* लिङ्गबाधा प्रकरणादीन न युक्त। टुप्. ९।१।३।४

* लिङ्गसामान्य ऊह यथा– 'धत्स्यसि स्वाहा' इति प्रकृतावन्वयाम्, साण्डे च 'धत्स्यसि स्वोऽसि' इति। माल पृ १२६.

* लिङ्गवचनयोरेव ऊह क्वचित्– यथा 'प्राग्मा अग्निं भरत' इत्यत्र अग्नये इति पदं पुलिङ्गैकवचनम् (प्रकृतौ)। 'मह्ला आलभेत' इत्यादिषु (विकृतौ) 'प्राग्यः' इत्येवं स्त्रीलिङ्गबहुवचनरूपेण 'प्राग्योऽग्नि भरत' इति ऊहः। माल पृ. १२७.

* 'स्वर्गकामः' इत्यत्र लिङ्गवत् सङ्ख्याया अपि उद्देश्यविशेषणत्वेन अविवक्षितत्वम्। सोम. ३।१।१४.

* लिङ्गवाक्ययोः लिङ्ग बलीय.। कुतः? अर्थविप्रकर्षात्। यत् 'स्योन ते' इत्यस्य मन्त्रस्य सदनकरणे अभिधानसामर्थ्यं तन्मुख्यम्, 'तस्मिन् सीद' इत्यस्य पुनः पूर्वेण सह एकवाक्यतामुपगतस्य भवति जघन्यम्। तदथ पूर्वस्य मन्त्रस्याभिधानसामर्थ्यात् उपस्तरणे विनियोगः उक्तो भवति इति संनिकृष्टो लिङ्गस्य मुख्यर्थ.। उत्तरस्य तु आयनिते अभिधानसामर्थ्ये तत. श्रुत्यर्थः इति लिङ्गान्तरित विप्रकृष्टो भवति इति। भा. ३।३।७।१४ पृ. ८४९–५०. * लिङ्गवाक्ययोर्विरोधे दोपानेकत्वे 'स्योनादेरपि दोषाय वाक्येन सदन प्रति। सीदेत्यस्यैव लिङ्गेन तेनाय पूर्वबाधन॥' वा. ३।३।७।१४ पृ. ८३८ * लिङ्गवाक्ययो.– समुदायावयवविनियोगाय वाक्यसामर्थ्ये. सहप्रस्थितयो असमर्थविनियोगाप्रमयात् यावत् वाक्येन पूर्वो भाग. उत्तरार्थाभिधानसमर्थ, (स्योन ते सदन०) उत्तरो वा पूर्वसमर्थ (तस्मिन् सीद०) इत्यनुसीयते, तावत् प्रत्येकभागवर्तिना सामर्थ्येन पूर्वस्यापि स्वार्थे परस्यापि स्वार्थे श्रुतिस्तुमिता। ततश्च यावत् इतरत्र विनियोजकश्रुत्यनुमानाय प्रवर्त्यते तावदिह विनियोगे सिद्धे निराकाङ्क्षत्वात् प्रकरणाम्नानस्य न कश्चिदपि हेतु श्रुत्यनुमाने इत्यनुपजातमूले विनियोगो बाध्यते। मन्त्रस्यापि हि पूर्वस्य पूर्वार्थे शीघ्र विनियोगः उत्तरस्य चिरेण। तथोत्तरोत्तरस्य शीघ्र पूर्वस्य तत्र चिरेण। शीघ्रविनियुक्तस्य मन्त्र चिरविनियोगो नाद्रियते। तथा अर्थोऽपि प्रथमावगतमन्त्रावरुद्धो नेतर गृह्णाति। स्वप्राधान्ये च संभवति न परोपसर्जनत्वं प्रतिपद्यते। तस्मात् लिङ्ग बलीय. इति मिश्रा वाक्य विनियोग इति। वा. ३।३।७।१४ पृ. ८३२.

पुरोडाशादियागप्रणालिकया अपूर्वसाधनत्वम् । तथा-विधाश्चोद्दिश्य विधीयमानं प्रोक्षणं सर्वस्य द्वारद्वारिभावावस्थितत्वादङ्गं भवति । कथं चोपादानेन क्रत्वर्थत्वं प्रोक्षणादेः ? यदि मतं नियोगैदमर्थ्ये तावद् ग्राहकग्रहणेनैव प्रोक्षणादेरङ्गत्वं स्वरूपतया न सम्भवति पारिशेष्यात् करणोपकारकत्वेनैव तादर्थ्यं निर्वहतीति नियोग एव तदन्वितः प्रतिपन्नस्तस्य करणोपकारकतां कल्पयन् करणैदमर्थ्यमाक्षिपतीति । यथोक्तं प्रकरणमेवेदमभिधानान्तरेणोक्तम् । तस्यापि हेतुनैव रूपं प्रयत्नपक्षे प्रयाजादीनां ग्राहकग्रहणापादितपूर्वैदमर्थ्यनिर्वाहार्थं करणतदनन्वयात् करणोपकारद्वारकल्पनमिति उपकारस्वरूपमेव प्राकरणिकम् । तत्तत्कर्त्वं तु प्रयाजादीनामपि औपादानिकमेवेति चेत् । तर्हि प्रयाजादेः विनियोगः प्राकरणिकः स्यात् । न हि प्रकरणकल्पितोपकारजननमात्रेण प्रकरणविनियोगः सिध्यति । सर्वेषामेव सन्निपातिनामनारभ्याधीतानां च अङ्गानां तज्जनकत्वेन प्रकरणविनियोगप्रसङ्गात् । अतः प्राकरणिकमेव प्रोक्षणादेरङ्गत्वम् । ननु असंयुक्तं प्रकरणेन विनियुज्यते, संयुक्तं च प्रोक्षणमिति । नैष दोषः । संयुक्तानामपि द्वारापेक्षत्वात् तन्निबन्धनत्वाच्च करणोपकारद्वारपरिकल्पनस्य प्रयाजादिष्विव । तदेवं प्रमाणशरीरविशेषेऽपि संयुक्तानां द्वारपरिकल्पकमुपादानम् । असंयुक्तानां च प्रकरणमिति समधिगतम् । पदैकत्वादीनामपि श्रुत्यैव विनियोगो ज्योतिष्टोमादीनामपि फलार्थत्वं वाक्यादिभिरिति प्रागेव चर्चितम् । तस्माद्युक्तान्येवाङ्गत्वे प्रमाणानीति । रत्नमाला. ( अङ्गनिर्णयपरिच्छेदः ) ।

• लिङ्गवाक्यविरोधाधिकरणम् । अत्र सामर्थ्यशालिमन्त्रस्य एकवाक्यतोपगमनसामर्थ्यस्य शब्दसामर्थ्यरूपलिङ्गं व्यवहृतं पूर्वोलिङ्गशब्दस्य च अस्योक्ता । बाल.पृ ९.

• लिङ्गवाक्यविरोधोदाहरणे 'स्योनं ते सदनं॰' इत्यत्र सदा स्वसमानैकवाक्यतामेव्यतो. पृथक् पृथक् प्रकाशयितव्यार्थौ कर्मसमवेतौ दृश्येते तदा उभयोरपि भेदेन प्रकाशकापेक्षणात् प्रकाशकयोश्च प्रकाश्यापेक्षणात् विनियोगाय प्रसिद्धे सति यस्य यत्र कृत्स्नं सामर्थ्यं स तत्र सौभरं प्राप्नुवन् नान्यत्र एकवाक्यतया नेतुं शक्यते, नापि अन्येभ्यस्तत्रागच्छद्भ्यः सोऽवकाशं ददाति । शा. ३।३।७।१४ पृ. ८३२.

• लिङ्गविनियोगः इदानीं प्रस्तूयते तृतीयस्य द्वितीये पादे । वा. ३।२।१।१ पृ. ७४५, • लिङ्गविनियोगः तृतीयस्य द्वितीये अवर्णितः । ३।३।१।१ पृ. ८०३.

• लिङ्गविनियोगाधिकरणम् । ३।२।१।१-२. मीको. पृ. २९१३ 'बर्हिर्न्यायः' इत्यत्र द्रष्टव्यम् ।

• लिङ्गविनियोज्यत्वं नास्ति वैदिकस्य मन्त्रव्यतिरिक्तस्य शब्दस्य । सु. पृ. १२०९ .

• लिङ्गविनियोज्यमन्त्रप्रकाश्यस्य यज्ञपतिप्रथनस्य पुरोडाशप्रथनफलत्वं निराकृतं मन्त्राधिकरणे भाष्ये । पराक्रमः . ४८।२.

सू लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः । ६।१।३।६ ॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ लिङ्गविशेषस्य पुंलिङ्गरूपस्य निर्देशात् पुंयुक्तं यजमानत्वं ऐतिशायनः इतिसंज्ञ पूर्वपक्षं आचार्यः मेने । पुंस एव कर्माधिकारो न स्त्रियाः इति ऐतिशायनस्य मतम् । इति पूर्वः पक्षः ।

तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते । ७ ॥

पुंस एव कर्माधिकारो न स्त्रियाः इति पूर्वपक्षे हेत्वन्तरं सूत्रम् । तदुक्तित्वात्, पुंस्त्वस्य उक्तेः, पुंस्त्वस्य विवक्षितत्वादित्यर्थः । पुंस्त्वस्य विवक्षितत्वादेव अविज्ञाते गर्भे हते दोषश्रुतिः उपपद्यते । पुंस्त्वस्य अविवक्षितत्वे तु नोपपद्येत । 'गर्भेणाविज्ञातेन हतेन भ्रूणहा भवति' इति श्रुतिः । पुंस्त्वेन विशिष्य अनिर्धारिते गर्भे हते सति हन्ता भ्रूणहा भवति । भ्रूणो यज्ञः । पुमांश्च यज्ञकर्ता । पुंसो वधे यज्ञनाश एव भवति इति अविज्ञातगर्भहन्तुः भ्रूणहत्यादोषः श्रूयते । यदि स्त्रिया अपि यज्ञाधिकारः स्यात् तदा स्त्रीगर्भे हतेऽपि भ्रूणहत्या स्यात् । तत्र अविज्ञातग्रहणमनर्थकं स्यात् । तस्मात् 'स्वर्गकामः' इत्यत्र पुंस्त्वं विवक्षितम् । पुंस एव च कर्माधिकारः । इति पूर्वः पक्षः ।

**जातिं तु बादरायणोऽविशेषात्, तस्मात् स्त्र्यपि प्रतीयेत, जात्यर्थस्य अविशिष्टत्वात् । ८ ॥**

पुंस एव कर्माधिकारो न स्त्रिया इति पूर्वपक्ष सूत्राभ्यां प्राप्त तुशब्देन निरस्यन् सिद्धान्तमाह । बादरायण आचार्य जातिं कर्मणि अधिकृतां मन्यते स्म । अविशेषात् मनुष्यजातौ पुंसीव स्त्रियामपि विशेषाभावात् । तस्मात् स्वर्गकामपदेन पुमानिव स्त्री अपि प्रतीयेत । जाते मनुष्यत्वजाते अर्थ अभिलष्यमाण स्वर्गं स्वर्गेच्छा वा । तस्य जात्यर्थस्य पुंसीव स्त्रियामपि अविशिष्टत्वात् स्वर्गकामनाया उभयोर विशिष्टत्वात् च स्त्री अपि प्रतीयेत । तस्मात् स्त्रिया अपि कर्माधिकार इति सिद्धान्त ।

**चोदितत्वाद्यथाश्रुति । ९॥**

'तद्युक्तित्वाच्च दोषश्रुतिरविज्ञाते' इति सूत्रोक्तस्य हेतोर्निरासार्थं सूत्रम् । चोदितत्वात् स्त्रीपुंससाधारण्येन कर्मणा विहितत्वात् यथाश्रुति स्वर्गकामपदानुसारेण स्त्रीत्वेन पुंस्त्वेन वा अविज्ञाते गर्भे हते यथाश्रुतत्वे पुत्रवधात् भ्रूणहत्या भवति इति अनुवाद निन्दार्थ यथार्थ । 'गर्भो न हन्तव्य' इति यो वदे । तस्मात् स्त्री अपि कर्माधिकारिणी । इति कुतूहलानुसारी सूत्रार्थ ।

**अथ भाष्यानुसारी ।** ननु 'पशुमालभेत' इत्यत्र यथा पुंस्त्व एकत्व च विवक्ष्यते तथा 'स्वर्गकामो यजेत' इत्यत्रापि पुंस्त्व विवक्षित स्यात् इति चेत्, उच्यते 'पशु' इत्यत्र यथाश्रुति श्रुतिमनतिक्रम्य पुंस्त्वादि विवक्ष्येत चोदितत्वात् उपादेयत्वेन विहितत्वात् । प्रकृते तु मनुष्यत्वजाते स्वर्गकामनायाश्च पुंसीव स्त्रियामपि अविशिष्टत्वात् स्वर्गकाम इत्यत्र पुंस्त्व विवक्षितु न शक्यत । अविज्ञातगर्भहननदोषश्रुतिस्तु यथार्थोऽनुवाद इति तत्सूत्रमेव पूर्वपक्षनिरास । इति ।

**वृत्तौ तु** 'विभक्त्येति चेत्' ६।१।३।८ इति पूर्वपक्षिण शङ्कासूत्रम् । 'पशुना यजेत' इत्यत्र तृतीयया यथा एकत्वस्य पुंस्त्वस्य च विवक्षितत्व तथा स्वर्गकामपदेऽपि पुंस्त्व विवक्षणीय इति । तदुत्तर सिद्धान्तिन 'चोदितत्वाद्यथाश्रुति' इति । अन्यदर्थस्तु भाष्यवदेव । इति ।

**द्रव्यवत्त्वात्तु पुंसां स्याद् द्रव्यसंयुक्तं, क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणां, द्रव्यैः समानयोगित्वात् । १० ॥**

कर्मणा द्रव्यसाध्यत्वात् स्त्रीणां च द्रव्यशून्यत्वात् न तासां कर्माधिकार, इति पुन पूर्वपक्षोपन्यासार्थं सूत्रम् । तुशब्द सिद्धान्तपक्ष व्यावर्तयति । स्त्रीणां नास्ति कर्म । कर्म हि द्रव्यसंयुक्तं श्रूयते 'व्रीहिभिर्यजेत' 'तस्य द्वादशशत दक्षिणा' इत्यादि । पुंसां च द्रव्यवत्त्वम् । पुंसां द्रव्यवत्त्वात् द्रव्यसंयुक्तं कर्म पुंसामेव स्यात् । स्त्रीणां तु अद्रव्यत्वं द्रव्यशून्यत्वम् । तस्मात् न तासां कर्म । स्त्रीणां द्रव्यशून्यत्व तु क्रयविक्रयाभ्यां हेतुभ्यां सिध्यति । स्त्रियो हि पित्रा विक्रीयन्ते भर्त्रा च क्रीयन्ते । विक्रीतत्वाच्च पितृधनानामनीशि ता क्रीतत्वाच्च भर्तृधनानाम् । विक्रयश्च श्रूयते 'शतमतिरथ दुहितृमते दद्यात् (भर्ता)' 'आर्षे (विवाहे) गोमिथुन (दुहितृमते दद्यात्)' इति । यथा च वस्त्रादिद्रव्याणि क्रयविक्रयसंयुक्तानि तथा स्त्रियोऽपि द्रव्यै समानयोगिन्य । वस्त्रादिद्रव्याणामिव स्त्रीणामपि क्रयविक्रयाभ्यां समानो योग । तथा च स्त्रीणां क्रयविक्रयविषयत्वात्, द्रव्यै समानयोगित्वाच्च अद्रव्यत्वम् । अद्रव्यत्वाच्च स्त्रीणां न कर्म । किंतु पुंसामेव । इति पूर्वपक्ष ।

**तथा चान्यार्थदर्शनम् । ११ ॥**

क्रयविक्रयविषयत्वात् स्त्रीणां द्रव्यशून्यत्वेन न तासां कर्म इति पूर्वपक्ष लिङ्गप्रतिपादनार्थं सूत्रम् । 'या पत्या क्रीता सती अथान्यैश्चरति' इत्यत्र अन्यार्थे अर्थवादे क्रीतत्वस्य दर्शनं स्त्रीणां क्रयविषयत्वे लिङ्गम् । क्रयविषयत्वाच्च अद्रव्यत्वम्, अद्रव्यत्वाच्च स्त्रीणां न कर्म ।

**तादर्थ्यात् कर्मतादर्थ्यम् । १२ ॥**

स्त्रीणामद्रव्यत्वात् न कर्माधिकार इति पूर्वपक्षे शङ्का निरासार्थं सूत्रम् । तत्र शङ्का इत्थम् । ननु स्त्रीणां द्रव्यवत्त्व नास्ति, भर्त्रोत्सर्पणेन वा कर्तनादिना वा यत् धन तया उपार्ज्यते तेन तस्या द्रव्यवत्त्वम्, द्रव्यवत्त्वाच्च कर्माधिकार इति । अत्राह पूर्वपक्षी । सर्वा

नीतत्वात् स्त्रीणां तादर्थ्यं मर्थ्यत्वम् । तादर्थ्यात् स्त्रीणां कर्तनादिकर्मणोऽपि तादर्थ्यं भर्तर्थत्वम् । स्त्रीभिः कर्तनादिना यत् द्रव्यं उत्पद्यते तदपि भर्तुरेव । अत एव 'भार्या दासश्च पुत्रश्च निर्धनाः सर्व एव ते । यत्ते समधिगच्छन्ति यस्य ते तस्य तद् धनम् ॥' इति स्मृतिः संगच्छते । तस्मात् स्त्रीणामद्रव्यत्वात् कर्माधिकारः इति पूर्वपक्षः ।

फलोत्साहाविशेषात्तु । १३ ॥

स्त्रीणां द्रव्यरहितत्वात् न कर्माधिकारः इति गुरुः पूर्वपक्षे प्राप्ते, सिद्धान्तमाह । तुशब्दः स्त्रीणां द्रव्यशून्यत्वपक्षं वारयति । न स्त्रीणां निर्धनत्वम् । द्रव्यवत्यः स्त्रियः, ताश्च कर्माधिकारिण्यः, फलोत्साहाविशेषात् । फलविषयकः उत्साहः फलोत्साहः फलेच्छा । पुंस इव स्त्रिया अपि फलोत्साहस्य अविशेषात् वैलक्षण्याभावात् । तस्मात् स्त्री फलार्थिनी सती स्मृतिप्रमाणोक्तं द्रव्यं परिगृह्णीयात् यजेत चेति ।

अर्थेन च समवेतत्वात् । १४ ॥

स्त्रीणामपि कर्माधिकारः इति सिद्धान्तः । न च धनशून्यत्वेन तासां नास्त्यधिकार इति वाच्यम् । तासां अर्थेन धनेन समवायात् संबन्धात् । तासां धनवत्तादिरर्थः । कन्यादानकाले तथा संवादः क्रियते 'धर्मे चार्थे च कामे च नातिचरितव्या' इति ।

क्रयस्य धर्ममात्रत्वम् । १५ ॥

पूर्वपक्षे यदुक्तम् 'क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणाम्' इति तत्र सिद्धान्ती उत्तरमाह । क्रयस्य धर्ममात्रत्वमेतत् । धर्ममात्रोऽयं क्रयः न वास्तविकः । नत्वो हि उभयनिष्ठो भवति । नियतं तु इदं दानं 'शतमतिरथं' शोभनामधोम्दा च कन्या इति । विक्रयमपि स्मार्तं श्रुतिविरुद्धत्वात् नानुमन्यन्ते । तस्मान्नैतौ क्रयविक्रयौ ।

स्ववत्तामपि दर्शयति । १६ ॥

स्त्रीणां न कर्माधिकारः अद्रव्यत्वात् इति पूर्वपक्षे उत्तरमाह सिद्धान्ती । स्त्री द्रव्यवती न अद्रव्या । यतः श्रुतिरेव स्त्रियाः स्ववत्तामपि दर्शयति न केवलं क्रयविक्रयाभावम् । 'पत्नी वै पारिणह्यस्येष्टे' इति पारिणह्यं नाम गृहगताः पीठपिठरादयः पदार्थाः । तेषां स्वामिनी पत्नी इति श्रुत्यर्थः । 'आघ्नन्ति पत्नीः संयाजयन्ति । भगदीर्यां हि पत्न्यः । भसदा वा एताः परगृह्णाणामैश्वर्यम् अवरुन्धते' इति च । दर्शादौ पत्नीसंयाजेषु पशुनाघ्नी द्रव्यम् । कुतः ? पत्नीनां वीर्यं भसत् योनिरेव । तया भसदा योन्या स्त्रियः पतिगृहेषु ऐश्वर्यं लभन्ते इत्यर्थः । तस्मात् द्रव्यवन्त्यः स्त्रियः । द्रव्यवत्त्वात् तासां कर्मण्यधिकारः इति सिद्धान्तः ।

स्त्रीवत्त्वात्तु भक्त्या स्वामित्वमुच्यते । १९ ॥

पत्नी नापि द्रव्यवती इति सिद्धान्ते शङ्कां पुनः शङ्कते । तुशब्दः सिद्धान्तव्यावृत्त्यर्थः । न स्ववत्ता द्रव्यवत्ता स्त्रीणाम् । पत्या स्त्रीवत्त्वात् 'शतमतिरथं दुहितृमते दद्यात्' इति श्रुत्युक्तस्य अतिरथशतदानस्य दृष्टार्थत्वात् । यत्तु 'पत्नी हि पारिणह्यस्येष्टे' इति श्रुत्या पारिणह्यस्य गृहगतस्य पीठपिठरादेः पदार्थजातस्य यत् स्वामित्वमुच्यते तत् भक्त्या । गौणमित्यर्थः । तस्मात्ताभिः स्त्रीणां द्रव्याभावात् च न कर्माधिकार इति ।

फलार्थित्वात्तु स्वामित्वेनाभिसंबन्धः । २० ॥

स्त्रीणां धनस्वामित्वं गौणं न मुख्यं इति पूर्वपक्षिणः शङ्कां तुशब्देन निरस्यन् उत्तरमाह सिद्धान्ती । 'उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो, भूयसि हविष्करण इद् मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूता' इति मन्त्रेण स्त्रिया अपि स्वामित्वमुक्तम् । कर्मफलमर्थयते इति फलार्थिनी स्त्री । फलार्थित्वाच्च 'पत्नी हि पारिणह्यस्येष्टे' इति श्रुतौ पत्न्याः स्वामित्वेन मुख्येनैव अभिसंबन्धः । पत्न्याः स्वामित्वं न गौणं किंतु मुख्यमेव । तस्मात् धनवती स्त्री ।

फलवत्तां च दर्शयति । २१ ॥

पुंस इव स्त्रिया अपि कर्माधिकार इति सिद्धान्ते हेत्वन्तरमाह । 'स पत्नी पत्या सुकृतेन गच्छताम्, यज्ञस्य युक्तौ धुर्यावभूताम् । संजानानौ विजहितामरातीर्दिवि ज्योतिरजरमारभेताम् ॥' इति श्रुतिः पत्युरिव पत्न्या अपि फलवत्तां दर्शयति । तस्मात् पुमान् पत्नी च उभौ कर्मणि अधिकृतौ इति सिद्धान्तः । के.

हवनीये जुहोति' इत्यनेन अनारभ्यवादेन सर्वहोमार्थस्य नैमित्तिकस्य होमनियामकत्वम्, आहवनीय-व्यतिरेकेण होमासम्भवात् तस्य च नैमित्तिकमात्रपरत्वासिद्धेः स्यात्। न च अस्य तद्वत् सोमार्थत्वम्, येन मन्त्रेण विना अस्य सोमो ग्रहीतुमेव न शक्यते, किन्तु लिङ्ग-प्रकरणाभ्याम् ऐन्द्रसोमार्थत्वमेव मन्त्रस्य। तेन ऐन्द्र एव सोमो मन्त्रेण गृह्यते। इतरेषां च अमन्त्रकं ग्रहणमिति प्रथम एव पूर्वपक्षः सम्पद्यत इति।

सूत्रं तु– पूर्वोक्तलिङ्गदर्शनसमाधानार्थत्वाच्च भाष्य-वार्तिकयोः सुयुक्तमिति।

सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि। ४४॥

यदुक्तमनैन्द्राणाम् अमन्त्रकं भक्षणमिति, नैतत्, सर्वेषां समन्त्रकमिति। यथासमाम्नातश्च मन्त्रः स्यात्। एवं तावत् तृतीयातत्पुरुषसमासाश्रयणेन इन्द्रपदसामानाधि-करण्य इति कृत्वा ऐन्द्राणां समन्त्रकं भक्षणम् अनैन्द्राणाम् अमन्त्रकमिति प्रथमपूर्वपक्षनिरासेन पारमार्थिकः सिद्धान्तोऽभिधीयते। अयमभिप्रायः। अनेनैव यदि इन्द्रपीतस्येति पदं तृतीयासमासेन सोमसमानाधिकरणं भवेत्। किं तर्हि? बहुव्रीहिसमासाश्रयणेन सवनसमाना-धिकरणमिदम्। इन्द्रेण पीतः सोमो यस्मिन् सवने तद् भवति इन्द्रपीतं सवनम्। तस्य सवनस्य य सम्बन्धी सोमः सोऽनिन्द्रपीतोऽपि सवनस्य एव इन्द्रपीतस्येति व्यपदेष्टुं शक्यते। इत्यभिप्राय एव मन्त्रः सर्वे शेषभक्षणे प्रयो-क्तव्यः। तदुक्तम्–– 'इन्द्रेण यस्मिन् सवने पीतः सोमो निरूप्यते। तस्य योऽन्योऽपि संबन्धी स एवं व्यपदिश्यते॥' इति (भा. पृ. ७०२)। ननु बहुव्रीहिसमासस्य अनेकपदार्थाश्रितत्वात् तृतीयासमासाश्रयणम् दुर्बलमित्युक्तम्। अत्र सवनसमानाधिकरणमिति। उच्यते। इन्द्रपीतस्य सोमस्येति षष्ठ्यन्तस्य भक्षणक्रिया-सम्बन्धानुपपत्तेः अन्यपदार्थोपदेशाय इन्द्रपीतस्य सोमस्य अवयवं भक्षयामि इत्यवयवपदं अध्याहर्तव्यम्। न च भक्षणीयो विद्यमानः सोमः इन्द्रेण पीत, इन्द्राय वा दत्तः। तेन विद्यमानत्वात् सोमो नेन्द्रपीतशब्दार्थः। न च इन्द्रोद्देशत्यक्तस्य भागस्य इन्द्रपीतत्वात् विद्य-मानस्य च तदेकदेशत्वात् अविद्यमान एव इन्द्रपीत-शब्देन अभिधीयते इति वाच्यम्। यतः सम्बन्धसामान्ये सोमस्येति षष्ठी। न च अविद्यमानस्य सम्बन्धोऽत्र उप-लक्षणत्वेन आश्रयणीयः। न विद्यमानसंबन्धे सम्भवति भूतपूर्वसम्बन्धाश्रयणम्।

किञ्च यत्रासौ कृत्स्न एवैकेन भक्ष्यते (?) इन्द्र-पीतावयवत्वात्। न हि कपालावयवो घटावयवो भवति। तेन औपचारिक एवायं तदवयवव्यपदेशः। न च मुख्ये सम्भवति औपचारिकाश्रयणं युक्तम्। यदा इन्द्रेण पीत यस्मिन् सवने तस्य सवनस्य यः सोमः इति व्युत्पत्त्या विद्यमानसोम एवाभिधीयते, तदा तदवयव-भक्षणे सति नानीतसम्बन्धोपलक्षणत्वम्। नाप्यनवयवे-अवयवशब्द इति बहुव्रीहिसमास एव युक्तः। ननु बहु-व्रीहिसमासेऽपि मुख्यपीतशब्देन इन्द्रोद्देशेन त्यागो लक्षणीय, तदत्र इन्द्रोद्देशेन ग्रहणमेव लक्ष्यताम्। तथा च सति विद्यमानस्यापि सोमस्य इन्द्रोद्देशेन गृहीतत्वात् न पूर्वोक्तदोषप्रसङ्ग इति। नैवम्। लक्षितलक्षणादोषात्। तथाहि, पानेन त्यागो लक्षणीयः। त्यागेन च तदुद्देशेन ग्रहणम्। बहुव्रीहिपक्षे तु त्यागमात्रलक्षणम्। किञ्च, अपेक्षाभावात् प्रकरणविशेषाच्च एतदेवोचितम्। तथाहि, धर्मप्रवृत्त्यान्येन शेषभक्षणं तत्प्रकाशकं मन्त्रमपेक्षन्ते। प्रकरणं च ज्योतिष्टोमस्य अविशिष्टमेव। बहुव्रीहिसमासा-श्रयणेन सर्वेषामेव समन्त्रकं भक्षणमिति सिद्धम्।

प्रयोजनम्– पूर्वोक्तम्। सूत्रं तु– ऐन्द्राणां ग्रहणं सर्वेषां चैकमन्त्र्यमिति ऐतिशायनस्य आचार्यस्य मतम्। यत सवननिर्देशोऽयं इन्द्रपीतस्येति। अन्यथापीत एव सोमः पीतशब्दप्रयोग उपपद्येतेति। सौत्रा

५ लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्रा-णाममन्त्रत्वम्। ३।२।११।२८॥

ज्योतिष्टोमे सोमप्रदानानि ऐन्द्राणि अनैन्द्राणि च विद्यन्ते। कानिचित् सोमाहुतयः इन्द्रदेवताकाः, कानिचिद् इन्द्रभिन्नदेवताकाः। तेषां च सर्वेषामपि भक्षणानि सन्ति। तानि च मन्त्रमन्तरेण क्रियन्ते। तत्र समानविधानेषु तुल्य-प्रमाणप्रतिपादितकर्मसु अत एव प्रकृतिविकारभावरहितेषु ऐन्द्रानैन्द्रमहायागेषु मध्ये अनैन्द्राणाम् ऐन्द्रभिन्नानां सोमा-

चमसादिग्रहयागानां सर्वेष्वपि भक्षणे अमन्त्रकं भक्षणमन्त्ररहितत्वं स्यात्। लिङ्गविशेषनिर्देशात् भक्षमन्त्रे इन्द्रपीतस्य इति सोमविशेषणस्य निर्देशात्। तस्य च अनैन्द्रेषु असम्भवात्। इत्येकः पूर्वपक्षः। इदं सूत्रं एकादशाधिकरणस्थम्। एतस्मात् उत्तरं सूत्रं एतदधिकरणस्थमूलं 'छन्दःप्रतिषेधस्तु। ३।२।११।३९' इति स्यात्। मध्ये तु अन्तरागतान्यधिकरणानि भवन्ति। इति ज्ञेयम्।

यथादेवतं वा, तत्प्रकृतित्वं हि दर्शयति। २९॥

वाशब्दः पक्षान्तरं सूचयति। ऐन्द्रानैन्द्रसोमग्रहयागेषु अनैन्द्राणां सोमग्रहाणां भक्षणं अमन्त्रकं कर्तव्यं इति प्रथमः पूर्वपक्षः पूर्वमुक्तः। अथ द्वितीयं पूर्वपक्षमाह। अनैन्द्राणां अमन्त्रकं भक्षणं न किंतु मित्रावरुणपीतस्य इतिरीत्या ऊहेन समन्त्रकत्वं स्यात्। यथादेवतं देवताम् अनतिक्रम्य ऊहः कर्तव्यः। हि यस्मात् तत्प्रकृतित्वं ऐन्द्रप्रदानप्रकृतिकत्वं अनैन्द्रप्रदानानां दर्शयति। तस्मात् ऊहेन समन्त्रकत्वं इति द्वितीयः पूर्वपक्षः।

छन्दःप्रतिषेधस्तु सर्वगामित्वात्। ३९॥

ज्योतिष्टोमे ऐन्द्रानैन्द्रसोमग्रहयागेषु मध्ये अनैन्द्राणां ग्रहयागेषु भक्षमन्त्रः मित्रावरुणपीतस्य इतिरीत्या ऊहेन प्रवर्तते इति द्वितीयः पूर्वपक्षः पूर्वमुक्तः। ■ पक्षे अनैन्द्राणां भक्षणं अमन्त्रकं इति वदन् प्रथमपूर्वपक्षी तुशब्देन व्यावर्तयन् पुनः प्रथमपक्षमाह। यः स्तुतशस्त्रोऽहवति अन्यिपान्ने च पितृदेवत्ये 'तृतीयस्य सवनस्य जगतीछन्दस' इति मन्त्रे 'अनुष्टुप्छन्दस इति भक्षमन्त्रं सवनमति' इति छन्दःप्रतिषेधः अनुष्टुप्छन्दःपदेऽहरूपः जगतीछन्दःपदप्रतिषेधः ऊहपक्षस्याभावतया अभिमतः स तु अनैन्द्रेषु ऊहाभावेऽपि उपपन्नः। अप्राप्तस्येव अनुष्टुप्छन्दःपदविशिष्टेऽहस्य नव विधानोपपत्तेः। अतः अभिषवादीनां धर्माणां सर्वगामित्वात् ऐन्द्रानैन्द्रसाधारणत्वात् प्रकृतिविकारभावाभावेन अनैन्द्रेषु अनूहात् अमन्त्रकमेव भक्षणं इति पुनः प्रथमः पूर्वपक्षः।

सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि। ४४॥

ज्योतिष्टोमे ऐन्द्रानैन्द्रसोमग्रहयागेषु मध्ये अनैन्द्राणां भक्षणं अमन्त्रकं इति यदुक्तं तत् व्यावर्तयति वाशब्दः। सर्वेषां ऐन्द्राणां अनैन्द्राणां च यागानां ऐकमन्त्र्यं एकरूपः अविकृतः यो भक्षमन्त्रः तद्युक्तत्वम्। न अमन्त्रकत्वम्, नापि यथादेवतमूहः। तदेतत् ऐतिशायनस्य महर्षेः अनुमतम्। हि यस्मात् इन्द्रपीतस्य सवनाधिकारः, इन्द्रेण पीतं यस्मिन्, पीतमस्य अस्तीति पीतः इन्द्रः पीतो यस्मिन् सवने इत्येवं बहुव्रीहिः सन् गायत्रच्छन्दसः इत्यादिवत् सवनबोधकः। अन्यथा इन्द्रेण पीत इति तृतीयातत्पुरुषस्वीकारे भक्तिपानत्वात् भक्तिपानत्वप्रसङ्गात् भक्तिः लक्षणा पाने यत्र तस्मात् पानस्य भाक्तत्वप्रसङ्गादित्यर्थः। तस्मात् अनैन्द्राणां ऐन्द्राणां च सोमग्रहाणां भक्षणं अविकृतमन्त्रयुक्तम्, न अमन्त्रकम् नापि यथादेवतमूहः इति सिद्धान्तः। के.

● लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणाममन्त्रत्वम्। ३।२।११।२८॥ लिङ्गविशेषनिर्देशात् अनैन्द्राणाममन्त्रत्वं इत्येतावत् सूत्रं अन्यपदार्थप्रधानबहुव्रीह्यपेक्षया स्वपदार्थे प्राधान्यात् तत्पुरुषस्य झटिति प्रतीतेः, विशेषतश्च अस्य अधिकरणत्वेन बहुव्रीहित्वायोगात्। (इन्द्रेण पीत यस्मिन् इति) इन्द्रपीतस्य इति इन्द्रलिङ्गनिर्देशात् अनैन्द्रसोमभक्षणानां लिङ्गविनियोगत्वप्रयुक्तविनियोगाभावात् इत्येव पूर्वपक्षार्थम्। 'समानविधानेषु अनैन्द्राणाममन्त्रत्वम्' इत्येतावत्तु भाष्यकारेण ऐन्द्राणां च प्रधानानां धर्मभाक्त्वेन ज्योतिष्टोमाङ्गत्वेन समानविधाने प्रकृतिविकारभावाभावेन ऊहायोगात् अनैन्द्रसोमभक्षणानां तस्य इत्येव पूर्वपक्षप्रयोजनोपवर्णनम्। सु. पृ. ११४१.

■ लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात्। ९।१।१७।४५॥

ज्योतिष्टोमे क्रतुपशवः समाम्नाताः। 'आग्नेयः पशुः' अग्निष्टोमे आलब्धव्यः, ऐन्द्राग्नः पशुरुक्थ्ये द्वितीयः, ऐन्द्रो वृष्णिः षोडशिनि तृतीयः, सारस्वती मेष्यतिरात्रे चतुर्थी' इति। चत्वारोऽपि एते पशवः समानविधाना इति एकः पक्षः, अग्नीषोमीये पशौ एव धर्मविधानं इतरेषु तु चोदकेन प्राप्तिः इति अन्यः पक्षः। अग्नीषोमीये च अस्ति अभिप्रायः। तत्र 'उपनयन मेध्या तु आग्ना-

तद्विवक्षित क्रियाङ्गत्वात् । टुप् १०।२।१७।६३ पृ १८९८, * लिङ्गसत्ये सर्वत्रैव लक्षणया प्रवर्तेत । १२।१।१।१ पृ २२१०

* लिङ्गसत्यायाधिन्या सुप प्रातिपदिकपरत्व स्मृति । सु पृ ३५८

* लिङ्गसमवाय गौण्या वृत्ते अन्यतमो हेतु । 'प्राणभृत उपदधाति' इत्यत्र लिङ्गवत्तामत्सत्वात् तत्सम वायमात्रेण शब्दप्रवृत्ति । यद्यपि आद्यमन्त्र एव प्राण शब्दमन्त् नान्ये, तथापि प्राणभृत्– अप्राणभृत्– सम वाये अत्र दृश्यते । शा १।४।१८

※ लिङ्गसमवाय । ( लिङ्गसमवाया इति गुणाश्रया )। १।४।१२।२३–६ ॥

'प्राणभृत उपदधाति' इति श्रूयते । अग्निचयन उपधेया काश्चिदिष्टका प्राणभृत नाम । तत्करण मन्त्रेषु 'अयं पुरोभुवस्तस्य प्राणो भौवायन' इति प्राणशब्द पठित । द्वितीय तृतीय पञ्चमादिषु मन्त्रेषु तु प्राणशब्दो नास्ति । तथापि द्वितीयतृतीयपञ्चमेषु मन्त्रेषु प्राणशब्दाभावात् तत्सहचरिता सर्वे मन्त्रा तदुप धेया इष्टकाश्च प्राणभृच्छब्देन लक्ष्यन्ते । तथाच प्राणभृच्छब्द इष्टकासमुदाये गौण । गुणश्चात्र लिङ्ग समवाय लिङ्गसम्बन्ध । अत्र पठ्यते सूत्रम् । 'तत्सिद्धि–जाति–सारूप्य–प्रशंसा – भूम – लिङ्ग समवाया इति गुणाश्रया' इति एकं सूत्रम् । भाष्यकारैस्तु व्याख्यानौकर्यार्थं भित्त्वा उपन्यस्तम् । तत्सिद्धयाद्य लिङ्गसमवायान्ता षट् गुणाश्रया गौण्या वृत्तेः निमित्तानि । इति सूत्रार्थ । तत्र अस्मिन्नधिकरणे लिङ्गसमवाय गौणनिमित्तमुक्तम् । के

* लिङ्गसमवाय । श्रीमानाने 'दशा स्वर्णोरथा मद्दीन्' इत्यत्र स्वस्मृत स्वमृतत्वेन लिङ्गसमवायेन गौण इत्यत्र व्याख्यात श्रीधराचार्ये । कौ १।८।१८।२८

※ लिङ्गसमवायन्याय । प्राणभृदादिशब्दे प्राणा दिलिङ्गदर्शनाधान् तत्सम्बन्धेऽपि येषा इष्टका लक्ष्यन्ते ॥

लिङ्गसमवाया इति गुणाश्रया । १।४।१२। २३–६ ॥

भाष्यम् — 'प्राणभृत उपदधाति', 'अज्यानी रुपदधाति' इति । निधित्वे प्राणभृन्मन्त्रासु उपधीय मानासु निरिङ्गना मन्त्राणामानर्थक्यम् । तस्मादनुवाद । लिङ्गसमवायात् पञ्चब्द परत्र वर्तते । यथा 'छत्रिणो गच्छन्ति' इत्यच्छत्रिणोऽपि छत्रिणा सर्वे लक्ष्यन्ते । न चात्र प्राणभृच्छब्द छत्रिशब्दश्च सहत्वार्थं मत्वर्थ लक्षयेत्, यत्रैव च छत्रिप्राणभृच्छब्दौ समवेतौ तावपि परिहृतवे । यथा छत्रिशब्देन सार्थलक्षणार्थेन सोऽपि छत्री गम्यते इति ।

वा — छत्रिवदेव प्राणभृदादिषु योगपरिहारौ । अन्ये त्व लिङ्गे भूयसा अनेकलिङ्गाना लक्षण इत्युदाहरण भेद । स्वार्थापरित्यागाच्च उभयत्र लक्षणस्यापि ग्रहण उपादीयमानत्वादिति । आह च, 'यत्र लक्षणमुद्दिश्य लक्ष्ये कार्यं नियुज्यते । तन्मात्रग्रहणं तत्रिन्दुपा दानं द्वयोरपि ॥

शा — 'प्राणभृत उपदधाति' इत्यत्रापि पूर्ववदेव मन्त्रोपादान अथवाद्यार्थं विध्यर्थं वा इति विवेक्तव्यम् । ( गौण्या इव ) निमित्तान्तरकथनार्थं सूत्रान्तरम् । पूर्वत्र हि भूम्ना शब्दप्रयोग, इह तु लिङ्गवत्ता अन्य त्वात् तत्समवायमात्रेण शब्दप्रवृत्ति । प्राणभृत्वे हि प्राणभृत्सम्बन्धोऽस्ति, प्राणभृत्समानकरणेऽपि प्राणभृत्सम वायोऽस्ति, इत्यनेन सादृश्येन प्राणभृच्छब्द ।

दि — 'तत्रिवत् प्राणभृत् तत्र, सादृश्य लिङ्ग भूमत । अनेकमन्त्रयो लिङ्गसमवायो निरिष्यते ॥' 'प्राणान् एव प्राणान् दधाति' इत्यस्य अथवादस्योप पत्तये प्राणभृच्छब्देन मन्त्रानुवाद । पूर्वत्र द्वितीयादि मन्त्रेषु सृष्टिलिङ्गाना बाहुल्यम् । इह तु प्रथममन्त्रे एव प्राणशब्दलिङ्गमाम्नातम् 'अयं पुरोभुवस्तस्य प्राणो भौवा यन' इति । एतस्मिन्न मन्त्रस्य प्राणभृत्त्वेऽपि 'छत्रिणो गच्छन्ति' इतिवत् तत्सहचरिता सर्वे मन्त्रा प्राणभृ च्छब्देन लक्ष्यन्ते ।

भाट्ट— 'प्राणभृत उपदधाति' इत्यादौ अस्यार्थ निरूपितम् ।

मण्डन—'प्राणभृत् प्राणभृद्योगात् ।'

शङ्कर— 'सा लिङ्गसमवायात् ।' सा वृत्ति ।

॰ 'पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्' इत्यत्र पितृशब्दः **लिङ्गसमवायन्यायात्** पितृपितामहप्रपितामहपरः । श्राद्धमयूखः पृ. १ घारपुरेसम्पादितः.

॰ **लिङ्गसमवायमूलकगौण्या**, इतरा गौणी बाध्यते । बाल. पृ. १८३.

॰ *लिङ्गसमवायमूलिका गौणी*, समशून्यगौण्या बाध्यते । बाल पृ १८३.

॰ **लिङ्गसमाख्याभ्यां** भक्षार्थतानुवाकस्य (३।२।९। २५-२६) इत्यधिकरणे 'अधिनोस्त्वा बाहुभ्या॰' इत्यादयः ग्रहणवीक्षणाभ्यवहरणप्रकाशका मन्त्राः प्रकरणेन विनियुक्ताः ग्रहणादीनां अनुष्ठानयोग्यानां स्वाङ्गत्वसिद्धौ विधि कल्पयन्ति इत्युक्तम् । बाल. पृ. ६४.

॰ **लिङ्गसमाख्याविरोधे** भक्षानुवाके ग्रहणादिवाक्यानि समाख्यानात् भक्षाङ्गत्वेन सकलपक्षसामान्यादिकल्पनया भक्षाङ्गत्वविनियोगाय प्रस्थितानि, लिङ्गेन ग्रहणवीक्षणाभ्यवहरणेषु विनियुज्यन्ते इति स्थितम् । याज्याश्वमाख्यानाधीन च मनोतांचा पुरुषानुवाक्योश्च लिङ्गेन सामिधेनीत्वेन विनियोगः इत्युक्तम् । (सोमप्रकरणे इदम्)। शा. ३।३।७।१४ पृ. ८३७, (शेषानेकत्वे तु) समाख्यया मनोतांचा सौमारौद्रीयेषु याज्यानुवाक्यात्वेन प्राप्तानां सोमरुद्रलिङ्गानि याज्यानुवाक्याभिर्योगः । पृ ८३९ ॰ लिङ्गसमाख्याविरोधे (शेषानेकत्वे) मनोतांचा पुरुषानुवाक्ययोश्च क्रमसंकृष्टयाज्यासमाख्यया सोमारौद्रयागे याज्यात्वे प्राप्ते अग्निप्रकाशनलिङ्गात् क्रमबहुकृतात् तदीये सामिधेनीकार्ये निवेशः । शेषानेकत्वे तु मनोतांचाभिन सौमारौद्रयागे यजमानप्रक्षत्वे देवताप्रकाशकयोः याज्यानुवाक्यायोः लिङ्गप्राप्ताभ्यां बाधः । कौ. ३।३।७। १४ पृ ३६०-६१.

**लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य । ३।२।९।२५ ॥**

ज्योतिष्टोमे सोमशेषभक्षणे 'भक्षेहि माऽऽविश' इत्यादिः महान् मन्त्र विनियुक्तः । तत्रापि 'भक्षेहि' इत्यारभ्य 'शुभ्राजन्ताय' इत्यन्त, 'वसुमद्गणस्य' इत्यादिः 'उपहूतो भक्षयामि' इत्यन्तश्च भाग. भक्षण प्रकाशकः । 'एहि वसो' इत्यारभ्य 'बाहुभ्यां सख्याम' इत्यन्तो भागः ग्रहणप्रकाशकः । 'नृचक्षस त्वा देव सोम सुचक्षा अवख्येषम्' इति भागः अवेक्षणं प्रकाशयति । 'हिन्व मे गात्रा' इत्यादिः 'मा मेऽवाङ् नाभिमति गाः' इत्यन्तः सम्यग् जरणं प्रकाशयति । अस्य सर्वस्यापि मन्त्रस्य भक्षानुवाकः इति समाख्या । सोऽयं सर्वोऽनुवाकः किं भक्षणे विनियोक्तव्यः उत कश्चित् कश्चित् भागः अन्यत्रापि ग्रहणादौ प्रयोक्तव्य इति विचारे पूर्वपक्षमाह । लिङ्गसमाख्यानाभ्यां लिङ्गात् समाख्यानाच्च सर्वस्यापि अनुवाकस्य भक्षार्थता अवगम्यते । तस्मात् सर्वोऽनुवाको भक्षणे विनियोक्तव्य ।

**तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् । २६ ॥**

ज्योतिष्टोमे सोमशेषभक्षणे भक्षानुवाको नाम मन्त्रसमुदायो विनियुक्तः । स सर्वोऽपि सोमभक्षणे एव विनियोक्तव्य इति पूर्वपक्षे सूत्रेण प्राप्ते सिद्धान्त उच्यते । तस्य भक्षानुवाकस्य भागशः ग्रहणादौ विभज्य विनियोगः कर्तव्यः । रूपोपदेशाभ्या रूपात् शुद्धसामर्थ्यरूपात्, उपदेशात् समाख्यानरूपवचनात् प्रमाणाच्च । अर्थस्य चोदितत्वात्, यावता विना विवेदोऽर्थो न सिध्यति तावतोऽर्थस्य चोदनापरिगृहीतत्वेन ग्रहणमवेक्षण च विना अन्यूनानतिरेकेण भक्षयितुमिः सद्भक्षणानुपपत्त्या ग्रहणादेरपि भक्षयतिचोदनाचोदिततया अपूर्वसाधने तत्र विनियोगसम्भवेन वैयर्थ्याभावात् इत्यर्थ. । के.

'तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात्' । ३।२।१०।२६ ॥

लिङ्गविनियोगाधिकरणात् उपदेशस्य च सन्दाजरणेऽपि क्लेशोपपन्नत्वात् उपदेशग्रहणस्य मभ्युच्चयमात्रार्थत्वमित्यक्तीने मन्त्रानुवाकस्य धर्मतात्ता वैपश्चित् लिङ्गेन मन्त्राद्यपकर्ष. इति 'तस्य रूपादपकर्षः' इत्यस्यार्थ । भक्षनिष्पत्त्यन्यथाऽनुपपत्तिकल्पितविधिना 'एहि वसो' इत्यादिवाक्यार्थस्य ग्रहणादेश्चोदितत्वात् अपूर्वसाधनत्वेन अपूर्वसाधनीभूत मन्त्र प्रति द्वारत्वोपपत्तेः मन्त्रग्रहणादस्यार्थ युक्ता इति 'अर्थस्य चोदितत्वात्' इत्यस्यार्थ. । भक्षणस्य स्तुत्यर्थग्रहणादिवैशिष्ट्यप्रकाशने श्रुते. अचोदितत्वेन अदृष्टार्थत्वापत्ते दृष्टसंभवे च

अदृष्टार्थत्वायोगात् एकवाक्यत्वोपगमनसामर्थ्यस्य श्रुतिकल्पकत्वानुपपत्ते घचिन्न्यायेन च कृत्स्नस्य भक्षार्थत्वाभावेऽपि भक्षानुवाकसमाख्योपपत्ते ग्रहणाद्यभिधानसामर्थ्यस्यापि समाख्याविरोधाभावात् श्रुतिकल्पना युक्ता इति ग्रहणार्थस्यैव अनुष्ठेयत्वेन प्रकाशनतया अपेक्षितत्वात् तद्दृष्टार्थत्वोपपत्ते अनपेक्षितप्रकाशत्वार्थत्वे सति अदृष्टार्थतापत्ते इति 'अर्थस्य चोदितत्वात्' इतिसूत्रावयवस्य आशुरम व्याख्याऽन्तरम् । सु ११३७-११३९

लिङ्गसमाख्यानाभ्यां भक्षार्थतानुवाकस्य । ३।२।९।२५ ॥

भक्षमन्त्र श्रूयते– 'भक्षेहि माऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय, एहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सध्यासम्, नृचक्षसं त्वा देव सोम सुचक्षा अव ख्येषम्, हिन्व मे गात्रा हरिवो गणान्मे मा वि तीतृष, शिवो मे सप्तर्षीनुपतिष्ठस्व मा मेऽवाङ्नाभिमति गा, मन्द्राभिभूति केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु, वसुमद्गणस्य रुद्रवद्गणस्य आदित्यवद्गणस्य सोम देव ते मतिविद प्रातःसवनस्य, माध्यन्दिनस्य सवनस्य, तृतीयस्य सवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगतीच्छन्दसोऽग्निष्टुत इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' (तैस ३।२।५) इत्येवमादि । तत्र सदेह कृत्स्न एवानुवाको भक्षणे विनियोजनीय, उत कश्चिदस्य अवयवोऽन्यत्रापि इति । लिङ्गस्य विनियोजकत्वं सामान्य संबन्धसापेक्षमिति प्रतिपादनप्रसङ्गेन श्रुतेरपि सामान्य संबन्धसापेक्षविनियोजकत्वमिति प्रतिपादितम् । इदानीं लिङ्गगत एव विशेष किं साक्षाच्चोदितेषु अर्थाक्षिप्तेषु लिङ्गस्य विनियोजकत्वं न वेति निरूप्यते ।

अत्राय पूर्वपक्ष, यद्यपि 'भक्षेहि' इत्युपक्रमस्य 'सध्यासम्' इत्यन्तस्य ग्रहणार्थत्वम्, 'नृचक्षसम्' इत्युपक्रमस्य 'अवख्येषम्' इत्यन्तस्य अवेक्षणार्थत्वम्, 'हिन्व मे गात्रा' इत्युपक्रमस्य 'मा मेऽवाङ्नाभिमति गा' इत्यन्तस्य सम्यग् जरणार्थत्वम्, 'मन्द्राभिभूति' इत्युपक्रमस्य 'भक्षयामि' इत्यन्तस्य भक्षणार्थत्वं प्रतीयते, तथापि सोमरसभक्षणस्यैव विहितत्वात् लिङ्गस्य विहितविषयत्वे विनियोजकत्वात् ग्रहण–अवेक्षण–सम्यग्जरणानां च भक्षणाक्षेपलब्धत्वेन लैङ्गिकविनियोगायोग्यत्वात् कृत्स्न एवायं मन्त्रो भक्षणे विनियुज्यते । किञ्च उपक्रमे 'भक्षेहि' इति श्रूयते । उपसंहारे च 'भक्षयामि' इति । तेन उपक्रमोपसंहारयो भक्षणकीर्तनात् वैश्वानरवाक्यवत् कृत्स्नस्यैव अनुवाकस्य एकवाक्यत्वात् भक्षानुवाकसमाख्योपपनाच्च कृत्स्नस्यैव भक्षणार्थत्वम् । किञ्च ग्रहणादीनामर्थतो लोकदृष्ट्या प्राप्तत्वात् लौकिकत्वेनैवाभिलापो यथा युक्ता । तेन लौकिकपदेनापि तत्प्रकाशनसिद्धेर्न वैदिकमन्त्रापेक्षा । तेन ग्रहणावेक्षणसम्यग्जरणादिपदानामपि निमित्तभक्षणप्रकाशनार्थं यत्नेन । अतश्च एकवाक्यता, एकोपक्रमोपसंहारभक्षणकीर्तनलिङ्गात् भक्षानुवाकसमाख्यानाच्च कृत्स्न एव मन्त्रो भक्षणार्थ इति । एवं प्राप्ते, अभिधीयते—

तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् । २६ ॥

अयमभिप्राय – भवेदेव यदि अर्थमात्रविषये लैङ्गिकविनियोगो मन्त्रस्य न भवेत् । यथाहि यद्यप्यत्र ग्रहणादयो न विधीयन्ते, तथापि भक्षणस्य ग्रहणादिना विना असम्भवात् भक्षणविध्याक्षिप्तमेव ग्रहणमवेक्षणं च अनुष्ठेयम् । रूपाख्यानेन च भक्षणस्येव प्रतिपत्तिरूपस्य ग्रहणादेरप्यनुष्ठानस्य विधानात् भक्षणविधिविहितमेव तन्नान्तरीयकत्वात् पृथगनुष्ठेयम् । तेषां च अस्मृतानामनुष्ठानासंभवात् तेषामपि वैदिकभक्षणविध्यर्थत्वेनानुष्ठेयत्वेन नास्ति स्मृतिहेतुवैदिकोपायापेक्षा । शक्नोति च भक्षेत्यय मन्त्रो ग्रहणादीन् प्रकाशयितुम् । तेन सूत्रकारवत् यथालिङ्गं ग्रहणादिषु विभज्यैव मन्त्र प्रयोक्तव्य इति ।

यत्तु उपक्रमोपसंहारयो भक्षणकीर्तनादेकवाक्यत्वात् कृत्स्नस्यैव भक्षणार्थत्वमित्युक्तम् । तदयुक्तम् । निमित्तत्वात् । नहि उपक्रमोपसंहारैकरूप्यादेकवाक्यत्वम्, तदनुरोधाच्चासमर्थस्य वाक्यस्य लाक्षणिकसामर्थ्यस्य लिङ्ग कल्पनीयम्, यतोऽपि श्रुतिरिति विप्रकर्ष । ग्रहणाद्यभिधानसामर्थ्यात् साक्षादेव श्रुतिकल्पनमिति संनिकर्षात्प्रभिधानसामर्थ्यादेव विभज्य विनियोग इति ।

समाख्या न लिङ्गात् दुर्बला लौकिकी च एकदेशद्वारेणा प्युपपद्यते न किञ्चिदनुपपन्नम् ।

प्रयोजनम्— पूर्वोक्तम् । सूत्र तु— तस्य मन्त्रस्य भागशो भक्षादपकर्षरूपात् लिङ्गात् अङ्गादेरुपादिष्टत्वाच्च कथमश्रुतस्योपदिष्टत्वम् । तथाहि अयस्य भक्षाक्षपस्य चोदित इति । सौत्रा

३१ लिङ्गसमाख्यानाधिकरणम् । मन्त्राधिकरणम् । ज्योतिष्टोमे भक्षानुवाकस्य यथालिङ्गं विभज्य मन्त्रादौ विनियोग ॥

लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य ।
३।२।९।२५ ॥

भाष्यम्— भक्षस्य भक्षणे भवति भक्षेऽहिन दीक्षानुवाय एतदुक्तम् वाक्यशेषाय वचने मुख्यास्त्वाय । एहि वसो पुरोवसो प्रियो न हृदोऽस्यश्विनोस्त्वा बाहुभ्या सध्यासम् । नृचक्षस त्वा देव सोम सुचक्षा अव रव्येषम् । हिन्व मे गात्रा हरिवो गणान् मे मा वि तीतृषः । शिवो मे सप्तर्षीनुप तिष्ठस्व मा मेऽवाङ्नाभिमति गाः । मन्द्राभिभूति केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु । वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इत्येवमादि । तत्र सन्देहः किं कृत्स्न एषोऽनुवाको भक्षणे विनियोक्तव्य उत कश्चिदत्र अवयवः अन्यत्रापीति । किं प्राप्तम् । लिङ्गसमाख्यानाभ्यां भक्षार्थता अनुवाकस्य । सर्वोऽनुवाको भक्षणे विनियोक्तव्य । उत ? भक्षयामीत्येष शब्दो यत्र भक्षणे विनियोक्तव्य, भक्षणमेव शक्नोति वदितुं नान्यत् किंचित् । अन्यानि त्वस्य पदानि भक्षणविशेषणवचनान्येव । यथा भक्षयामीति तत्तत्र प्रभु मन्त्र । ननु ' एहि वसो ' इत्येवमादि ' सध्यासम् ' इत्येवमन्त ग्रहणार्थं गतेन पदसमूहेन परस्परकाङ्क्षिणा एकार्थं निमित्त मन्त्रवाक्यात् । ' नृचक्षसम् ' इत्येवमादि, ' अवख्येषम् ' इत्येवमन्त अवेक्षणवचनम् । ' हिन्व मे गात्रा हरिवः ' इत्येवमादि च ' मा मेऽवाङ्नाभिमति गाः ' इत्येवमन्त

सम्यग्जरणार्थम् । तत्र तदनादयानां त्रीणि वाक्यानि । कथमेतत् वाक्य वक्तुं शक्यमेकं वाक्यं भक्षणे विनियुज्यते इति । उच्यते । सर्वाण्येतानि भक्षणविशेषणानीत्युक्तम् । आह । एवमपि भिन्नैव वाक्यम्, विशेषणविशेष्याणां युगपद्वचनासम्भवात् । उच्यते । न विशेषणानि विवक्षिष्याम । विशेष्ये भक्षणे ग्रहणावेक्षणादिभिर्विशिष्टे एकोऽर्थो विवक्ष्यते । नैव सम्यक् भवति । विशेषणवचनानां अविवक्षितस्वार्थवचनता, भक्षणविशेषणपरता चेति लक्षणया तु गम्यते । श्रुतिलक्षणाविशये च श्रुतिर्ज्यायसी न लक्षणा । तस्मान्नैकं वाक्यमिति । अत्रोच्यते । यद्यपि अमी ग्रहणादयो बह्वोऽर्था गम्यन्ते न तु सर्वे इष्यन्ते इति । भक्षणमेव प्रत्याययितव्यम् । तद्विभुतम् । विशेषणान्यश्रुतानि । न वै प्रतीतेः प्रयोजनम् । प्रयोजनं च यावत पदसमूहस्यैकम्, तावदेव वाक्यम् । तस्मात् त्रिष्वप्यनुवाकेष्वेतदेव वाक्यमिति भक्षणे विनियोगः । समाख्यानं च भवति भक्षानुवाक इति । कृत्स्नश्चानुवाको नामधेय । ननु च समाख्या लौकिकः शब्द, कथं वैदिकमर्थं नियच्छतीति । यद्यपि लौकिक तथापि अनादि तस्यानुशासनं च समाख्या । किमतो यद्येवम् । एकदेशो भवति । भक्षणसमभिव्याहृतमनुवाक्यं बूत । समभिव्याहारश्च एतत्सत्य भवति । यथा पाचको ब्राह्मण इति । समभिव्याहारात् भक्षणमनुमास्यामहे । आह । नानुमानगम्य एवंजातीयकेषु अनुमानं । विधानादेव अवगम्यते नान्यथा । न च समाख्या विधात्री । अभ्योच्यते । समाख्या सन्निधिनो बुद्धौ सन्निधिमुपनयति प्रयोगवचनो विधास्यतीति । तस्मात् कृत्स्नोऽनुवाको भक्षणे विनियोक्तव्य इति ।

वा— सन्नत्यानुवाकोदाहरणे यानि पदानि ह समर्पणीयत्वेन प्रमाणविनियोगविनिवेशनम् । अत्र सूक्ताव पदेन प्रातःसवनादिशब्दाः तत्समानाधिकरणश्च स्तुताश्च वसुमद्गणान्यौ गायत्रच्छन्दःप्रभृतय इन्द्रपीतादयश्च क्रमेण यथासवनं निष्कृष्य प्रयोक्तव्याः । इदं ■ विचार्यते किं समस्तोऽनुवाको भक्षणे एव विनियोक्तव्य, उत ग्रहणावेक्षणाभ्यवहरणेष्वपि यथालिङ्गमिति । तत्र भक्षस्य

श्रुतिविप्रकर्षाद्दौर्बल्यम् । ग्रहणाद्यभिधानसामर्थ्येन हि श्रुतिमनुमाय शीघ्रं विनियोगः क्रियते । इतरेण पुनरेकवाक्यता । ततो लक्षणाद्वारेण भक्षं प्रति सामर्थ्यम् , ततः श्रुत्यनुमानमिति विप्रकर्षः । तेन भक्षस्य प्रत्यासन्नतरेण मन्त्रादिना अवरुद्धत्वात् एतेषामपि च स्वप्रधानप्रकाशनवृत्तेः अपवर्गः । ननु अर्थप्रकाशनं प्रकाशनं निष्प्रयोजनम् । कथं निष्प्रयोजनम् । यदा तानि अप्यप्रकाशितानि नैव शक्यन्ते अनुष्ठातुम् । तन्नाम अर्थमात्रं न प्रकाश्यते, यदेवमेव विना प्रयत्नेन निष्पद्यते । ग्रहणादीनि तु सर्वाणि पृथक्प्रयत्नसाध्यानि तान्यस्मृतानि न शक्यन्ते कर्तुमिति अवश्यं स्मर्तव्यानि । अर्थाच्चोदितान्यपि तानि अचोदयिता न शक्नोति स्वार्थमुपस्थापयितुमिति तान्यपि चोदयति । अतो मन्त्रस्वरूपान्नेषां चोपदेशात् सम्यग्जरणतन्मन्त्रयोश्च उपदेशादेव अपवर्गः, अर्थस्यैव चोदितत्वात् । तेन यद्यपि अनुवादकत्वात् मन्त्रोपदेशोऽत्र न शक्यो वक्तुं तथापि अदोषः । सम्यग्जरणं तु वमनविरेचनयोः ( ' वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः सोमं वमिति । एतस्मात्सोमेन्द्रं चरु निर्वपेत्सोमवामिनः ' इत्यादिना ) प्रायश्चित्ताम्नानात् प्रत्यक्षोपदिष्टमेव द्रष्टव्यम् ।

भा— ' सर्वस्य भक्षणाङ्गत्वं ग्रहणादेरचोदनात् । अनन्यार्थो न मन्त्रस्य द्वारीभवितुमर्हति ॥ भक्षानुवाकसंज्ञा च भक्षणाङ्गत्वयोगिनी । सामर्थ्यमस्ति मन्त्रस्य भक्षणे वह्निरोपणात् ॥' तस्मात् सर्वोऽनुवाको भक्षणाङ्गमेकं वाक्यम् । इति प्राप्ते ब्रूमः । 'ग्रहणादौ विभागेन विनियोगोऽस्य लिङ्गतः । वाक्यमत्र हि नेशाते कर्तुं लिङ्गस्य बाधनम् ॥ ग्रहणादि च शास्त्रेण साक्षाद् यद्यप्यचोदितम् । तथापि चोदितार्थेन कर्तव्यत्वात् प्रकाश्यते ॥' तस्माद् विभज्य विनियोगः ।

सोम— पूर्वेण सामान्यसम्बन्धबोधकप्रकरणेन श्रुतिस्वारस्यभङ्गवत् , इहापि सामान्यसम्बन्धबोधकसमाख्यया लिङ्गस्वारस्यभङ्ग आश्रयणीयः इति प्रत्यवस्थानात् संगतिः । सूत्रे लिङ्गशब्दः विशिष्टभक्षणसामर्थ्यपरः ।

वि— ' भक्षेहीत्यनुवाकोऽयं सर्वो भक्षणयोग्युत (नो वा ) । ग्रहणादौ यथालिङ्गं विभज्य व्यवस्थितो ॥ ,

अभिक्षेपहरणादीनां भक्षणे नियतस्तु सः । , अर्थाक्षिप्तेषु तेष्वेव यथालिङ्गं विभज्यते ॥' ( तैसंसा. ३।२।५ स्थितः पाठो गृहीतोऽत्र ) ।

भाट्ट— सोमे ' भक्षेहि माऽऽविश ' इत्यादिभक्षानुवाक इत्येवं समाख्यातो मन्त्रः श्रुतः । तत्र यथाक्रमं भक्षणमेव प्रतिपादयति स तत्रैव विनियुज्यते । ग्रहणावेक्षणसम्यग्जरणप्रतिपादकानां तदंशानां किं ग्रहणादावेव विनियोगः, अथवा भक्षणमन्त्रैकवाक्यतया भक्षण एव इति चिन्तायाम् , ग्रहणादेरविहितत्वेन अपूर्वप्रयुक्तत्वस्य जनकत्वस्यापि अभावात् , ग्रहणस्य अर्थात् भक्षसाधनत्वेन प्राप्तावपि ' बाहुभ्यां गृह्णामि ' इत्यनेनोक्तस्य बाहुद्वयकरणकस्य ग्रहणस्य कथमप्यप्राप्तेः, अवेक्षणस्य च भक्षसाधनत्वेनैव अप्राप्तेः, सम्यग्जरणस्य तदनुकूलव्यापारस्य वा भक्षोत्तरभाविनया भक्षसाधनत्वेन तेषामपूर्वप्रयोजकत्वस्यापि अभावात् ग्रहणाद्यर्थत्वे आनर्थक्यापत्तेः , भक्षमन्त्रैकवाक्यतया भक्षार्थत्वमेवैषाम् । एवं च समाख्याऽपि उपपन्ना भवति । इति प्राप्ते, ग्रहणादिप्रत्यक्षविधित्वाभावेऽपि समाख्यातदङ्गत्वप्राप्तप्रकरणेन भक्षसम्बन्धे तत्तन्मन्त्राणामवगते लिङ्गबलेन मान्त्रवर्णिकग्रहणादिविधिकल्पनया तत्साध्यत्वोपपत्तेः तदर्थत्वेनैव मन्त्रविनियोगोपपत्तौ, न स्वतो निराकाङ्क्षयोर्द्वयोः आख्यातपदयोः कथंचिदेकवाक्यतां परिकल्प्य गौण्या भक्षार्थत्वकल्पनम् , शक्त्यैव वा भक्षविशेषणत्वेन ग्रहणादिप्रकाशनस्य कल्पनानुपपत्तिमत् । न चैवमपि सम्यग्जरणस्य कृत्यसाध्यत्वात् विधिसंभवः, सम्यग्जरणानुकूलव्यापारस्य आसनविशेषस्यैव अनुष्ठेयस्य विधेयत्वात् । वमनविरेकनिमित्तप्रायश्चित्ताम्नानाच्च सम्यग्जरणपर्यन्तमेव भक्षणे प्रतिपत्तिरिति तस्य भक्षोपयोगिता ।

मण्डन— ' सम्यागमन्त्रो ग्रहणस्य मन्त्रः । '

शंकर— ' भक्षमन्त्रे विभागः स्यात् । ' १०.

लिङ्गसाधारण्यात् विकल्पः स्यात् । ८।१।१६।२७ ॥

सौर्ये कर्मणि दर्शपौर्णमासिको विधिरन्त इत्युक्तम् । दर्शपूर्णमासयोस्तु अनेकानि प्रधानानि । तत्र कस्य

अदृष्टार्थाः संस्काराः आचाराद्गम्यन्ते यथा ग्रामान्तरादागतानां बान्धवैः अभिवादकस्यानामकस्य शिरस उपरि ग्रामण शुचिदेशप्रतिष्ठापनं च। न चास्यानुपपत्तिः, आचारप्रामाण्यात्। १।३।४।१२ पृ. ४१२, ● लोकेऽपि च यत् प्रधानं गजप्रभृति क्रियते, तद् आत्मना अविनाभूतानि अमात्यादीन्यङ्गान्यपि क्रीणाति आविशति। यदा तु कश्चित् महात्मा क्वचित् गच्छति, तदा तत्सम्बन्धीनि भृत्यान्तराणि पश्यति न चाश्नन्ति। तथा यदयं प्रकरणान्तरमात्स्येयम्, न च तदेकव्यापारत्वात्॥ ३।३।३।६ पृ. ८८६. ● लोकेऽपि रोगिणः स्वामिनः औषधानयनम् एव भृत्यो भृतिदानेन परिक्रीयते। न तु तदौषधं भृत्यः सेवते। तस्मात् कर्मक्रियार्थिन्यम्, संस्कारस्तु यजमानस्य। वि. ३।८।१३. ● लोके अर्थसूना विवक्षा भवति वेदे तु शब्दसूता। टुप्. ९।३। ४।९ पृ. १६९४. ● लोके अर्थलक्षणः व्यवहारः। येन येनार्थः सम्पद्यते, उक्तोऽनुक्तो वा, स सम्पद्यते। भा. ३।१।८।१६. ● 'लोके कर्मार्थलक्षणम्' (९।१। १।४।२९) इति अशब्दार्थेनापि व्यवहारः। वा. २।४। ९।१२ पृ. ३४५। 'सर्वं हि दक्षिणादि लोके कर्मार्थलक्षणम्। तद्वशात् नियमाणे तु न चिन्त्यं श्रुतिलक्षणे॥' १।३।९।३० पृ. २१०. ● 'लोके कर्मार्थलक्षणम्' इति न्यायेन विवक्षितार्थस्य तात्पर्यादेव सिद्धेः। की. १।३।९।३० पृ. २३७. ● 'लोके कर्मार्थलक्षणम्' । यथ लौकवत् इति, (११।१।४।२२ इत्यत्र पू. पूर्वपक्षः सूत्र० तत्रोच्यते) लोके कर्म अर्थलक्षणम्। कार्यान्यप सकृदपि उक्तः असकृदाहरति, असकृदपि उक्तः सकृदाहरति नाहरति वा। (इति उत्तरः पक्षः)। भा. ११।१।४।२६, ● लोके कर्म अर्थलक्षणम्, शब्दलक्षणं पुनर्वेदे। ३।१।८।१७.

☐ लोके कर्माणि वेदवत् ततोऽधिपुरुषज्ञानम्। ६।२।४।१७॥

गृहकर्म, शकटकर्म, रथकर्म इति लोके कर्माणि लौकिकानि कर्माणि वेदवत् वेदोक्तकर्मवत् आरभ्य समापनीयानि, न मध्ये त्यक्तव्यानि। कुत? ततोऽधिपुरुषज्ञानं पुरुषज्ञानं गृहकर्मादिविषयकं पुरुषनिष्ठं ज्ञानं ततोऽपि कर्मवेदात् वचनात्मात् भाति। तदपि शास्त्रीयं कर्म। तदपि आरभ्य समापनीयमेव इति पूर्वः पक्षः।

अधिपुरुषज्ञानं ततः। पुरुषं अधिकरोति इति व्युत्पत्त्या लौकिकं गृहादि कर्म अधिपुरुषमुच्यते। तस्य ज्ञानं शिष्यशास्त्रात् भाति इति सूत्रार्थम्।

अपराधेऽपि च तैः शास्त्रम्। १८॥

गृहकर्म रथकर्म इत्यादीनां लौकिकानां कर्मणां यथा तच्छास्त्रं ज्ञापकं तथा अपराधेऽपि तेषु कर्मसु कस्मिंश्चित् अपराधे जाते तैः आचार्यैः शास्त्रं आम्नायते 'आरे मेऽर्थ क्लृप्तादुर्नेष्यः, पाथम च ब्राह्मणो भीष्मित्यः' इति। यथा गृहादिकर्मज्ञापकं शास्त्रं तथा अपराधे प्रायश्चित्तज्ञापकमपि तच्छास्त्रं विद्यते एव। तस्मादपि लौकिकमपि कर्म आरभ्य समापनीयमेव इति पूर्वपक्षसाधकं हेत्वन्तरमुक्तम्। हेत्वन्तरसमुच्चयार्थश्चकारः। अपिशब्दो दृष्टान्तार्थः।

आरे भङ्गे। आरः आर एव स्वार्थेऽण्प्रत्ययः प्रसिद्धः।

अशास्त्रा तूपसंप्राप्तिः, शास्त्रं स्यात् प्रवृत्तत्वं, तस्मादर्थेन गम्येताप्राप्ते वा शास्त्रमर्थवत्। १९॥

लौकिकानि गृहशकटरथादिकर्माणि आरब्धानि सन्ति समापयितव्यान्येव इति पूर्वपक्षे सिद्धान्तसूत्रमिदम्। तु-शब्दः पूर्वपक्षव्यावृत्त्यर्थः। गृहशकटादिकर्मणां या उपसंप्राप्तिः ज्ञानं भवति सा अशास्त्रा। नास्ति वैदिकं शास्त्रं तत्र मूलम्। न च तत्स्मृत्या वेदानुमानं भविष्यतीति वाच्यम्। स्मर्त्रे स्यात् प्रवृत्तत्वं तत्स्मृत्या प्रोक्ताया गृहादिरचनायाश्च रमणीयतायाश्च वेदरूप शास्त्रं न प्रकल्पकम्। तत्स्मृत्या वेदानुमानं कर्तुं न शक्यते इत्यर्थः। यतः, तस्मादर्थेन गम्येत तत्प्रकाशात् रचनादि च रमणीयतादि च अर्थेन लोकसिद्धेन प्रयोजनेनैव गम्येत नात्र वेदापेक्षा। तस्मात् तच्छास्त्रात् न वेदमूलकत्वानुमानम्। लोकेन अप्राप्ते शास्त्रं आम्नायः अर्थवत् अर्थवत्त्वं सफलम्। प्रमाणान्तरेण प्राप्तेऽपि तदर्थविधायकस्य आम्नायस्य आनर्थक्यापत्तिः। तस्मात् लौकिककर्मणां समाप्तिनियमो नास्ति। वाशब्दः अविवक्षितः।

• लोकवेदाधिकरणम् । उत्सन्नम् । १।३।९।३० वर्णकं १ ॥

भाष्यम् — 'अथ गौः इत्येवमादयः शब्दाः किं आकृतेः प्रमाणं उत व्यक्तेः इति संदेहः । उच्यते । इदं तावत् परीक्ष्यताम्, किं य एव लौकिकाः शब्दाः त एव वैदिकाः उत अन्ये इति । यदा त एव तदापि किं ते एवैषामर्थाः ये लोके उतान्ये इति संशयः । तत्रान्ये लौकिकाः शब्दाः अन्ये वैदिकाः, अन्ये चैषामर्थाः इति ब्रूमः । कुतः ? व्यपदेशभेदात् रूपभेदाच्च । इमे लौकिकाः इमे वैदिकाः इति व्यपदेशभेदः । 'अग्निर्मूर्धा दिवः ककुत्' इति अन्यदिदं रूपं लौकिकादग्निशब्दात् । शब्दान्यत्वात् न त एवार्थाः । अपि च समामनन्ति 'उत्ताना वै देवगवा वहन्ति' इति । ये दैवाना गावः ते उत्ताना वहन्ति इत्युक्तं गम्यत एव, ये उत्ताना वहन्ति ते गोशब्देनोच्यन्ते इति । तस्मादन्यो वैदिकगोशब्दस्य अर्थः । तथा 'देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम्' इति हिरण्यपर्णो वै देववनस्पतिर्वेदे । 'एतद्वै दैव्यं मधु यद् घृतम्' इति वेदे घृते मधुशब्दः । तस्मात् अमीषामन्ये अर्थाः । इति प्राप्ते, ब्रूमः । य एव लौकिकाः शब्दाः त एव वैदिकाः, त एवैषां अर्थाः इति । कुतः ? प्रयोगचोदनाभावात् । एवं प्रयोगचोदना संभवति, यदि त एव शब्दाः ते एवार्थाः । इतरथा शब्दप्रत्यये अर्थो न प्रतीयेत । तस्मादेकशब्दत्वमिति । उच्यते । प्रयोजनमिदम् । हेतुर्व्यपदिश्यतामिति । ततो हेतुरुच्यते अविभागादिति । न तेषामेषां च विभागमुपलभामहे । अत एव एकशब्दत्वं तांश्च तांश्च अर्थानवगच्छामः, अतो नान्यत्वं च वदामः ।

यच्चोक्तं 'ये उत्ताना वहन्ति ते देवगवाः, यद् घृतं तन्मधु, यो हिरण्यपर्णः स वनस्पतिः' इति । नास्मिन् वचने यत् उत्तानानां वहतां गोत्वं ब्रूयात् । ये गावस्ते उत्ताना वहन्ति इत्येतं तत् । यदि च अनेन वचनेन गोत्वं विधीयते, उत्ताना वहन्ति इत्यनुवादः स्यात् । न चोत्ताना वहन्तः प्रसिद्धाः केचित् । ते विशेषणत्वे विधातव्याः । तेषु विधीयमानेषु न शक्यं गोत्वं विधातुम् । विधाने हि तथा वाक्यम् । यदि चान्ये वैदिकाः, ततः उत्तानादीनामर्थो न गम्येत, तत्र नतरां शक्येत अविज्ञातलक्षणं गोत्वं विज्ञातुम् । न च उत्तानवहनवचनमपि अनर्थकम्, स्तुत्यर्थेन अर्थवत् भविष्यतीति । एवं घृतस्य मधुत्वम्, हिरण्यपर्णता च वनस्पतेः । तस्मात् त एव शब्दा अर्थाश्च ।



प्रभा— इह नाम-आख्यात-उपसर्ग-निपातानां मध्यात् नामानि परिगृह्यन्ते । तेषामपि जाति-गुण-क्रिया-द्रव्य-यदृच्छा-सर्वनाम- शब्दानां मध्यात् जातिशब्दा विवक्ष्यन्ते । तेषामप्येकं गोशब्दमुदाहृत्य विचार्यते किं पुनरयं आकृतेर्वाचकः अथ व्यक्तेः इति । तत्र 'एतत् सांन्यासिकं कृत्वा वक्ष्यमाणं तु, सांप्रतम् । उपायफलसिद्ध्यर्थमिदं तावद्विचार्यते ॥' [वक्ष्यमाण आकृत्यधिकरणं सांन्यासिकं निक्षेपत्वेन स्थापनत्वेन गुप्तत्वेन कृत्वा, सांप्रतं आदौ, उपायसिद्ध्यर्थं फलसिद्ध्यर्थं च अन्यत् विचार्यते इत्यर्थः । सुधायां तु 'वक्ष्यमाणं पूर्वपक्षादि सांन्यासिकं त्यागार्हं कृत्वा सम्प्रति इदं तावत् विचार्यते इत्यन्वयः । त्यागार्थात् संन्यासप्रातिपदिकात् 'तदर्हति' (पा० ५।१।६३) इत्यस्मिन्नर्थे (तदर्हति योग्यो भवति इत्यर्थे इति सिद्धान्तकौमुदी) ठञ्प्रत्यये सांन्यासिकपदव्युत्पत्तिः । इत्युक्तम् ] किं य एव लौकिकाः शब्दाः त एव वैदिकाः त एव चैषामर्थाः उतान्ये इति । आह 'किं लोकवेदशब्दानामैकत्वप्रतिपादने । प्रयोजनं, यतः पूर्वं तावत् तत् प्रतिपाद्यते ॥' उच्यते— 'फलमस्य विचारस्य वैदिकेषु भविष्यति । लोके च निर्णयोपायस्तेनैकत्वाय यत्यते ॥' यदि शब्दार्थानामन्यत्वं लोकवेदयोर्भवेत्, तत एतस्या व्यवस्थाकृतायां विधानचिन्तायां शब्दव्यवहारस्य अनेकप्रयोगानुसरणद्वारेण अभिधेयाभिधेयत्वनिर्णयः शक्यते कर्तुम् । 'प्रयोजनं तु लोकस्य न किंचिदपि सिध्यति । आकृतिव्यक्तिवाच्यत्वपरमार्थनिरूपणात् ॥' यथोक्तानेकार्थसंनिधाने हि शब्दः प्रयुक्तः कियत्यपि अर्थजाते प्रत्ययं करोति । तेन न अविविक्ताभिधेयत्वमात्रलोकेनापि समस्तधर्मोपेतेन कार्यसिद्धौ क्रियमाणायां प्रयुक्तः । 'प्रयुज्यमानया

कार्यं यदि वा जातिगम्यया । समस्त नियते व्यस्तया को विवेकधियो गुण ॥' यदि उच्येत इहापि वेदवत् सामान्यविशेषलक्षणनाधसिद्धिरेव प्रयोजनमिति । तदुच्यते– "मा हि दधिदानादि 'लोके कर्मार्थलक्षणम्' ( १।३।१।४।२६ ) । तद्वशात् क्रियमाणे तु न चिन्त्ये श्रुतिलक्षणे ।। तेन लोके विचारोऽयं जायते निष्प्रयोजन । स्यात् प्रयोजनवान् वेदे ज्ञानोपायस्तु दुर्लभ ॥ तेन शब्दार्थ मिद्धत्वे व्यवस्थाहृतिविचारणा । वाच्यावाच्यविशेषाय न कर्तव्या कथंचन ।। अभेदे सति लोकस्थे कृत शब्दार्थनिर्णय । तस्मिन्ननुपयुक्तोऽपि कस्य वेदेषु बाध्यति ॥' तेन लौकिकवैदिकशब्दार्थैक्यस्य सति आज्यभिकाम उपपत्तिमत्वात् प्रयोजनवत्त्वाच्च आरब्धव्यम् । भेदपक्षे तु अनागत इत्यत्र धुस्य भेदपक्षावत् प्रतिपाद्यते । नियतानियतस्वर व्यञ्जनद्वयपरिपठ्यतलोपागमवर्णविकार–स्वच्छन्दावकृतत्वभेदात् अध्यायानध्याय–उपनीतानुपनीत– त्रैवर्णिकचातुर्वर्ण्यप्रयोज्याप्रयोज्य–गुरुशुश्रूषाविधितगुरुसम्प्रदाय–यदृच्छाप्रयुक्तवाक्यतदयोर्वत् यदि पदपदार्थयोर्यत्र लोकवेदयो तयो लौकिकानामेव सम्बन्धोऽवसिद्धत्वात् अर्थवत्ता । वेदे तु आनर्थक्यात् न चोदनालक्षणो धर्म । स्वरेण रूपभेद मन्यते । अध्यायानध्यायतया शूद्रहननानन्वययोगेन च अनिदंप्रथमत्वात् उत्तानशब्दवाक्यभङ्ग । तथैव च वैदिकानां अर्थानां न तेऽपि पौरुषेयाणामपि । आम्नायादिधर्मभेदनियतानियतपदवाक्यरचना द्वारा व्यपदेशरूपभेदाभ्यां शब्दानां अर्थानां लौकिकानां वैदिकानां च भेद । इति प्राप्ते, अभिधीयते । 'प्रयोगचोदनाऽभावादेकत्वं तेषु गम्यते । नाम्नां सिद्धि फलत्वाद् वेदविभागाद् मति स्यति ॥' भेदे सति अपूर्वात् कर्मवैदिकपदानां अनवगतसम्बन्धेन अपशूद्यगात् क्रियाकारकसम्बन्धात्मक प्रयोगचोदनानां अभाव एव स्यात् । 'एकत्वे सति सद्भावादिति वा हेतुवर्णना । अर्थैकत्व प्रधानत्वात् धात्वभेदोऽयमोच्यते ॥' शब्दार्थैकत्व इति वक्तव्ये अर्थैकत्वस्य प्राधान्येन शब्दैकत्वोक्तिरिति मता एवमुक्तम् । अथवा वस्तुमात्रपर्यालोचनात् उभयसाधारण्याभिप्रायेणैव अर्थैकत्वोक्ति । प्रयोगचोदनाऽभावशब्द परपक्षे स्वपक्षे वा तद्भावसिद्धि वेदवादिनैव सह विवादे अवकल्पते नान्येन इत्यत आह– 'प्रश्नोत्तरमिद' वक्ष्यमाणमभिधीयत इति । तदुच्यते । प्रत्यभिज्ञारूपप्रत्ययाविभागात्, ज्ञायमानोभयधर्मस्वरूपाविभागाद्वा, वाक्यतत्समूहमानविनिर्माणपदवर्णविषयकव्यपदेशाविभागाद्वा, तथा उच्चारयितृणां स्थानकरणप्रयत्नाविभागाद्वा, तद्गतविशेषानुगमनाविभागात् इति हेतवविकल्पा । 'प्रत्यक्षप्रत्यभिज्ञानात्तद्वैकत्वं प्रतिष्ठितम् । एकशब्दोदितज्ञानग्राह्यत्वाच्चैकवाक्यता ॥ यथा सुवर्णादीनां याऽपि वाच्यान्तरे श्रुति । अर्थैकत्वाविरोधेन गुणमात्रान्यता परा ॥ यथा हि वामना गावो नराश्चिपिटनासिका । पर्णशाखरणाश्चान्ये नरार्थत्वाच्च न च्युता ॥ एवं सत्येव गोत्वादौ धर्मो यदि विलक्षण । नैतावताऽर्थभेदोऽस्ति विशेषानभिधानत ॥' न च या एव देवानां गाव ता एवं अवश्य सर्वेत्र वैदिकस्य गोशब्दस्य वाच्या भवन्ति । मनुष्यगवीषु दक्षिणादिसाधनेषु सुतरां प्रयुक्तत्वात् । 'एव हिरण्यपर्णस्य मेरौ यदि वनस्पते । देवलोके, तत शब्द किमर्थान्तरवाचकम ॥ यद्येतद् घृतमस्माक देवानां मधु यदि । रसनीयोऽभिन्नत्व न शब्दार्थोऽन्यथा भवेत् ॥ न च सर्वाप्रसिद्धत्वे गम्यतैकोऽपि कश्चन । तेनासिद्धप्रसिद्धानां नास्त्यन्यत्वनिरूपणम् ॥' अत आनर्थक्यमेतेषामेव गवादीनां देवशब्दानां उत्तानशब्दप्रतिपादन इति वक्तव्यम् । अथवा भूमिष्ठानामेव सतां केनापि गुणवादेन पृथिवीगोलकस्योर्ध्वभ्रमणादिना वा युगभेदेन दर्शितत्वात् यथैव वय उपरि देवान् पश्याम, एवमधोदेशस्य उपरिवर्तनात् अयमपि लोको द्यौरुपरि दृश्यते इति उत्तानवचनमपि । तस्मात् लोकवेदयो अभिन्ना शब्दार्था इति सिद्धम् ।

भा-- आकृत्यधिकरणोपोद्घाततया लोकवेदयो पदपदार्थानां अपरत्वम् यत्ने विचार्यते । तत्र सिद्धान्त 'प्रत्यक्षप्रत्यभिज्ञानाद् वर्णैकत्व प्रतिष्ठितम् ।

यत्रैव विवक्षया प्रवर्तते । अत एव लोष्टप्रस्तारन्यायेनाऽनन्तरैर्विघ्नमुक्तमित्युक्तं दुर्गाचार्येण । माहशी. ६७४.

☞ लोष्टलगुडन्यायः । यथा लोष्टघ्नोपमर्दको लगुडस्तथोपमर्द्योपमर्दकयोः साधिकविवक्षया अस्य प्रवृत्तिरिति । लोष्टो मृत्पिण्डः, लगुडो दण्डः । माहशी. ५०१.

☞ लोहाग्निन्यायः । अयं परस्परधर्माध्यासतादात्म्याध्यासयोर्विवक्षया प्रवर्तते । माहशी. ३७४.

☞ लोहचुम्बकन्यायः । यथा चुम्बकमणिर्निष्क्रियोऽपि सन्निधिमात्रेण स्वयमप्रवर्तमानोऽपि लोहमाकृष्य प्रवर्तयति, प्रतिबन्धहेतुश्च भवति, तथा पुरुषः प्रधानं प्रवर्तयतीति सांख्याः । माहशी. १८०.

० ' लोहितोष्णीषा ऋत्विजः प्रचरन्ति ' इति निर्दिष्टे लोहितोष्णीषविधानार्थं तत्पदमुच्चार्यते । अत्र उपसर्जनीभूतोऽर्थो विधित्सितः प्रधानीभूतश्च अनुवादः । भा ३।१।१।१२ पृ. ६८७, ० ' लोहितोष्णीषाः प्रचरन्ति ' अत्र लोहितोष्णीषत्वं प्रधानत्वेनोपदिश्यते । ११।१।१।१.

☞ लोहितोष्णीषाधिकरणम् । लोहितोष्णीषन्यायः । श्येने लोहितोष्णीषत्वादिकं सर्वेणापि ऋत्विजा कर्तव्यं, नोद्गातृगणेनैव ॥

गुणत्वाच्च वेदेन न व्यवस्था स्यात् । ३।८।४।१२ ॥

भाष्यम्— स्त्र वा । श्येने श्रूयते ' लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति ' इति । तथा वाजपेये श्रूयते ' हिरण्यमालिन ऋत्विजः प्रचरन्ति ' इति । तत्र सन्देहः किं श्येने उद्गातृभिर्लोहितोष्णीषता कर्तव्या, वाजपेये चाध्वर्युभिर्हिरण्यमालित्वम्, उत उभयमपि सर्वैर्ऋत्विग्भिरिति । किं तावत् प्राप्तम् ? समाख्यानात् श्येने उद्गातृभिः वाजपेयेऽध्वर्युभिरिति । एवं प्राप्ते, ब्रूमः । गुणत्वाच्च वेदेन न व्यवस्था स्यात् । गुणो लोहितोष्णीषता हिरण्यमालित्वं च । पुरुषः प्रधानम् । अतो लोहितोष्णीषा हिरण्यमाला च पुरुषविशेषणत्वेन श्रूयते, न कर्मतया । तस्मात् पुरुषप्राधान्यम् । विशतो श्रयेम्, पुरुषाणां प्रधानभावे समाख्या न नियामिका इत्येतदुक्तम्

( तृतीयेऽधिकरणे १२ सूत्रे ) । अपि च गुणत्वश्रवणात् सर्वपुरुषाणामेतद्विधानमिति गम्यते । प्रधानसंनिधौ हि गुणः क्रियमाणः प्रतिप्रधानमुपदिष्टो भवति । तत्र वचनेन प्राप्तं कथं समाख्यया विषमानपाऽपि नियन्तुं शक्येत । तस्मात् उभयत्र सर्वैर्ऋत्विग्भिः एवंजातीयको धर्मः क्रियेतेति ।

वा— ' गुणत्वे तस्य निर्देश. ' ( ३।८।२।६ ) इत्यनेन गतार्थं ( प्रकृतब्राह्मणस्य प्रथमं भाष्यव्याख्यानं ) इत्यन्यथा व्याचष्टे । ये संस्काराः सन्तो वचनादृत्विजामाम्नायन्ते किं समाख्यया नियम्यन्ते नेति । लोहितोष्णीषादयो हि औद्गात्रादिषु पठ्यमानाः सन्तोऽपि तत्संस्कारत्वे वचनादृत्विजां क्रियमाणाः समाख्याविषयता प्रतिपद्यन्ते । इति प्राप्ते, ब्रूमः । ' संस्कारत्वाभ्युपगतो समाख्यागोचरे सति । वचनेनर्त्विजां येन तेनैवान्येऽपि स्थिताः ॥ ' ऋत्विगुद्देशेन श्येने विधीयमानाः प्रतिप्रधानावृत्तिन्यायात् सर्वेषां भवन्तो न शक्याः समाख्यया बाधितुम् । तस्मादिह न व्यवस्था स्यादिति ।

सोम— अस्तु अत्र समाख्यया व्यवस्था इति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु— संस्काराणां ऋत्विगपेक्षया गुणत्वात् तत्तद्वेदसमाख्यया न व्यवस्था स्यात् इति ।

वि— ' हिरण्यमालिताऽऽद्यास्तु संस्कारा वचनागताः । ऋत्विजः ते यथाऽऽम्नात कर्तव्या नियतिलेदत ॥, अत्र आम्नावशात् , मैव सर्वसंनिधिपाठतः । अविशुद्ध्य गुणावृत्तेः कर्तव्या निखिलैरपि ॥ ' ५.

भाट्ट— ये ऋत्विक्संस्काराः हिरण्यमालित्वादयः तत्तद्वेदपठितास्ते समाख्यानादध्वर्य्वादिना कर्तव्याः, नतु तत्र ऋत्विक्त्वेन उद्देश्यगतत्वेनाविवक्षितत्वात् । अथाप्यनुवादापेक्षा, तदा तत्पुरुषैः कार्या । इति प्राप्ते, अनियतकर्तृप्राप्तौ समाख्यया वचनेनापेक्षितनियमलाभस्थान, प्रकृते च संस्कारस्य प्रतिप्रधानावृत्तिन्यायेन सर्वस्यैव नियतप्राप्ततया नियमानपेक्षत्वात् न समाख्यायास्तन्नियामकत्वम् । कर्मान्तरपरिग्रहपक्षस्तु वैरूप्यापत्तेरयुक्तम् । यदि तु समाख्यायाः तत्तत्कार्यवाचित्वेन भेदेन तत्तः हिरण्यमालित्वविषयत्वेन परिसंख्याकल्पनमेवेत्यापद्येत, तथापि समाख्याया तत्राप्य संकोचायोगादेव सर्वविषयत्वनिश्चयः ।

मण्डन— 'हिरण्यमाला ऋत्विजामृत्विजाम् ।' ५.

शंकर— 'ऋत्विजां हेममाला ।' ७.

* लोहितोष्णीषादिवत् । यथा श्येने अतिदेशप्राप्तऋत्विजः अनूद्य लोहितोष्णीषादिरूपगुणमात्रविधान तथा आख्याततद्धितकर्तृत्वेन पुरुषस्य प्राप्तत्वात् पुरुषस्यानुवादः स्वर्गमात्र साध्यत्वेन विधीयते । सु. ६।१।१।१. * लोहितोष्णीषादिवत् स्वर्गकामादिशब्दाः क्रिया सम्बन्धानुवादेन लोहितोष्णीषादिवत् विशेषणपराः । रत्न. ६।१।१।१.

* लोहितोष्णीषत्वादिभिः श्येने उपदिष्टैः आतिदेशिकस्योपवीतस्य न बाधः, किंतु समुच्चयः । भा. १०।४।१।१–२

* लोहितनिरसनं पशालम्भस्य न प्रयोजकं किन्तु प्रतिपत्तिः अग्नीषोमीये पशौ । वि ४।१।१२.

* लोहितशकृतोः पशुप्रयोजकत्वं नास्ति अग्नीषोमीये पशौ । भा ४।१।१२।२७.

* 'लौकायतिकमूर्खाणां नैवास्त्यत्र धर्मे विचारः । यत्किंचिददृष्टार्थं तद् दृष्टार्थं हि कुर्वते ॥ वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः । अल्पेनापि निमित्तेन विरोधं योजयन्ति च ॥ नेत्यश्चेत् प्रमाणे नाम दत्तो मीमांसके क्वचित् । न च कश्चन मूर्खेषु धर्ममर्मा हि ते सदा ॥ प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः । नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे ॥ कश्चिद्धेतोऽपवादो हि लोकेऽस्मात्स्वधर्मभिः । जीवितु लभते कस्तैः सन्मार्गपतितः स्वयम् ॥ तस्माल्लोकायतत्वानां धर्मनाशनशालिनाम् । एवं मीमांसकैः कार्यं न मनोरथपूरणम् ॥ मयाऽऽदौ अन्यथा सिद्धं पुनर्न्यायेन बाधितम् । आशासिद्धप्रमाण्ड्यं पुराणादिचतुष्टयम् ॥ तच्चैवानुमन्तव्यं कर्तव्यं नान्यथा क्वचित् । सर्वे लयमतः सीदेद् दुर्नेद्धारादिवत् ॥ यश्चो योऽद्यीनो येन तमत्रस्थन् स निर्दिशेत् । हास्येदन्यथा सम्यक् श्रीतोपदेशकारिभिः ॥' वा १।१।२।२ पृ. १७१.

* लौकिकं कर्म अवश्यं समापनीयं इति नास्ति नियमः । वि. ६।२।४. * लौकिकं वचनं प्रमाणान्तरसापेक्षम् । पुरुषाणां हि वाक्यप्रयोगः प्रतीतार्थप्रत्यायनार्थः । स च प्रतीताव्यभिचारी इति प्रमाणान्तरप्रतीतिपर्युपस्थापकेन तेन भवितव्यम् । तथा च प्रतीत्युपस्थापकत्वात् अनुमानतैव गम्यते । तेन विपर्ययोऽपि अनुमानस्यैव, न शब्दस्येति । यत् पुरुषेण वाक्यं प्रयुज्यते तत् प्रतीतार्थप्रतिपादनाय । न च प्रमाणान्तरं विना प्रतीतिरस्ति । तस्मात् प्रमाणान्तरसापेक्षं लौकिकं वचनमिति । ऋजु. पृ. २२. * लौकिकं वस्तु 'यथेष्टविनियोगार्हं सर्वार्थं वस्तु लौकिकम्' । वा. २।१।१६।४८ पृ. ५११ * लौकिकं सोमपानं यत् असवनेषु दशापवित्रेषु च वायव्यार्थमासिच्यमाने सोमे (सोमरसे) । भा १।४।१३।१२. * लौकिकान्यपि यानि कृषि-पुत्रपानअध्ययनप्रभृतीनि कर्माणि कालान्तरफलत्वेन इष्यन्ते । तेषामपि स्वरूपावस्थानासंभवात् संस्कारैरेव विप्रकर्षेणफलसिद्धिः । ते तु अवैदिकत्वात् संस्कारा न अपूर्वशब्दाभिधेयत्वेन प्रसिद्धाः । वा २।१।२।५ पृ. ११०

* लौकिकान्येव प्रत्यक्षानुमानोपमानार्थापत्त्याख्यानि प्रमाणानि । बाल. पृ. ८ * लौकिकानि कर्माणि अष्टकादीनि स्मार्तानि । भा. ८।४।२।२, * लौकिकानि कर्माणि पार्वणस्थालीपाकादीनि । तेषामायतनं औपासनोऽग्निः । तस्मात्तान्याहवनीये प्रसज्येरन् । भा. १२।२।१।१–१ * लौकिकानि प्रमाणानि प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्याख्यानि षट् । मणि पृ. ११. * लौकिकानि वचनानि उपपन्नार्थानि अनुपपन्नार्थानि च दृश्यन्ते— यथा देवदत्त गामभ्याज शुक्लां दण्डेनेति, दश दाडिमानि षडपूपा इत्येवमादीनि च । भा १।१।५।५ पृ. ४७, * लौकिकानि वाक्यानि भवन्त्येव विराकुर्वन्तु, तद्यथा— श्वेतं गौः नैनव्या, देवदत्तीया, एषा हि बहुक्षीरा दध्यात्या ब्रह्मणया चेति । १।२।२।२०. * लौकिकेऽपि लौकिककार्येष्विव वैदिककार्येष्वपि दोषमात्रं भजते, सर्वकार्यसमर्थत्वात् । अग्निचयने इष्टकापाकः लौकिके निर्मन्थ्ये यथा । वि. ७।३।७, १२. * लौकिक, अप्रातसाध. (२५) पर्यायनिरूपणविषय. । प्रत्यक्षेण अनुमानादीनि पञ्च बाध्यन्ते इति ते पञ्च बाधाः । प्रत्यक्षप्रतीतानां मध्ये यदेव प्रथमं प्रवृत्तं तेन उत्तरस्य उत्पत्ति-

मोऽन्योपादान उच्येत । नापि अध्याहारेण, अ येरपि हि शक्यते प्रयोग कर्तुम् । तस्मादनियम इति सिद्धान्त । के

* ननु च यद्यपि नाप्तवाक्ये लौकिकेषु वाक्येषु शब्दादेव ज्ञानमुत्पद्यते निमित्तभावात्, 'अङ्गुल्यग्रे हस्तियूथशत' इति । तत् अद्धाऽपरिहृतेन अर्थामस्य शिताशङ्का । नैतम् । अनभिज्ञो भवान् वाक्यज्ञापक भावस्य । अङ्गुल्यग्रे हस्तियूथशतमिति, प्रमाणान्तर दर्शनमत्र नाप्यते, न पुन हस्तियूथशतमिति । बृहती पृ २१. * लौकिकी (स्मार्ता) इतिकर्तव्यता आचारात् औपासने कर्तव्या । शा ७।४।१ * लौकिकी इति कर्तव्यता पार्वणस्थालीपाके, अष्टकासु, आग्रहायणे कर्मणि । भा ७।४।२।२ * 'लौकिका प्रतिपत्तिर्हि गौणत्वेनापि नीयते । नानाविप्रतिपत्तौ हि न लोकस्येह सत्यता । लौकिकस्त्वन्यथात्वेऽपि नार्थोऽतीव निरूप्यते ॥' वा १।३।४।९ पृ २१७ * लौकिकी वैदिकी च इति गुणार्थवादिभिरपि द्विविधा । बाल पृ ८, * लौकिकी वैदिकी च इति समाख्या द्विविधा । पृ १२

* लौकिकाग्नौ उपनिधान गर्भनिरासे आग्नेयदोहस्तोत्र पाठे । ७।३।१२।३०–३२ मीको पृ १५४३ 'गर्भनिरासे आग्नेयदोहस्तोत्रनाशे०' इत्यत्र अधिकरण द्रष्टव्यम् ।

* लौकिकेऽग्नौ यस्यादिप्रत्यर्पणीयानां क्रतुषु विनियोग । वि ३।६।५

* लौकिककर्मणि आरभ्यमाणेऽपि समर्पितं नियता । ६।२।८।१७–१९, मीको पृ १८५० 'तदधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम् । * लौकिककर्मणा गार्हपत्याद्यग्निषु नानुष्ठानम् । भा १२।२।१।१–७ 'विहाराधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम् ।

* लौकिककर्माङ्गाना अन्यथा प्रत्यक्षेण निश्चीयन्, वैदिककर्माङ्गाना तु श्रुत्या । वि ८।१।१ वर्णक १

* लौकिकयूपस्पर्शे पुरुषार्थतया प्रायश्चित्तविधानम् । ९।३।३।९, मीको पृ ११८ 'अग्नीषोमीये पशौ यागसमाप्त्युत्तर०' इत्यत्र द्रष्टव्यम् ।

* लौकिकवाक्याना प्रमाणान्तरापेक्षत्वात् प्रमाणान्तरवशेन अर्थप्रत्यायकत्वम् । ऋजु पृ १२

* 'लौकिकसाधारण्येनाकारेण शब्दसमर्पिते एव पूर्वोक्तपदार्थे संस्कारकर्मा वाक्यबोधने सति तदनन्तर तस्य पूर्वोक्तत्वानगतो अपात संस्कारस्य अपूर्वविषयत्वनिर्णय वान' इत्यत्र 'यस्य पयसि दध्यानयति' इत्यत्र द्रष्टव्यम् । रसायनम् पृ १७०

* ल्यप्—परादेशः विनियोक्त्री श्रुति सोमेश्वर मतेन यथा– 'तस्याग्नारमाधायं' इत्यादि । बाल पृ ६०

* ल्यवादे एककर्तृकत्व–पूर्वकालत्वयोः वक्तव्यौ अङ्गाङ्गिभावगौणत्वा न सिध्यति । निमित्तनैमित्तिकभाव नापि एककर्तृकत्वादेरुपपत्ते । यथा 'सनादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेत' इत्यत्र । नि १०।२।१२

व

* यथानुक्रमण ब्राह्मणनिरुक्तादिगोचरज्ञानार्थं द्रष्टान स्मरणमूलम् । वा १।३।१।२ पृ १६७

* वक्तृणा प्रत्यक्षमनर्गो नाक्यप्रयोग । वा ३।१।१४।४६ पृ ४४४

* वक्तृक्रमविपर्ययेण श्रोतृक्रम पदार्थवाक्यार्थ इष्ट । सर्वत्र हि वक्तृक्रमविपर्ययेण श्रोतु क्रमो भाति । हि प्रथम तावत् किञ्चित् विशेष्य विवक्षति तत्स्तस्य केनचित् विशेषणेन विना अभिधानुमशक्ते निरूपणमनवस्था करोति तत सम्बोधारणम् । श्रोता पुन प्रथम तावत् शब्द शृणोति, ततो विशेषणम्, ततो विशेष्यम् तत तदुपपत्त्यर्थानि वस्त्वन्तराणि वदे । तेन यद्यपि वक्त्रा पूर्वं समग्र आलोचित तथापि श्रोता पश्चादेवैन प्रतीप्यति । वा ३।१६।१२ पृ ६७६

* वक्तृज्ञानानुमानम् । सम्प्रति पौरुषेयवाक्याना वक्तृज्ञानानुमानसमर्थनेनैव अर्थप्रतिपादकत्व इति प्रति पाद्यते । पुरुषशब्दश्रूयमाणात् अर्थप्रतीति त्रिविधि

जायते इति चेन्न, प्रयुक्तशब्दोच्चारणेऽपि वक्तुरभिप्राय-निश्चयेऽर्थाभिधानादर्शनात् तात्पर्यज्ञानमपि सामग्रीत्वेन कल्प्यते । तात्पर्यज्ञानं च इममर्थमनयाभ्येदप्रतिपादनायेदं वाक्यमुच्चारित इत्यनुमानम् । भवश्च प्रमाणान्तरान्त र्भावः ।

ननु अस्तु वाक्यमानादनभिधानम्, आप्तवाक्यस्य दोषरहितस्यार्थानुरोधकत्वं किमिति नाश्रीयते ? नैवम्, आशयादिदोषराहित्येऽप्यात्तस्य तथाभूतस्यापि अन्यपर प्रयोगो दृश्यते, यथा– ' विषं भुङ्क्ष्व ' इत्यादौ भोजन निवृत्तिपरे वाक्ये । अतः प्रमाणान्तरेणावगते तात्पर्येऽर्थ-निश्चयः तात्पर्यनिश्चयात् अर्थनिश्चयः, तात्पर्यनिश्चयश्च वक्तृज्ञानानुमानद्वारेणैव भवतीति व्यवहारपरस्यैव स्थितत्वमुपपन्नम्, विप्रलम्भकवाक्येऽपि योग्यार्थज्ञानपूर्वं कत्वाद्यभिचारात् ।

ननु कथं ज्ञानमनुमीयते ? न तावत् ज्ञानमात्रस्या-नुमानम्, ज्ञानमात्रविशेषनिश्चयाभावादेव अनुमानवैयर्थ्यं स्यात्, न तावत् विशिष्टज्ञानानुमानम्, अर्थेनैव ज्ञानस्य विशेषः नान्येन, अतोऽर्थनिश्चयेन विशिष्टज्ञानानुमानं निश्चये च अनुमानवैयर्थ्यमेवेति कथं वक्तृज्ञानानुमा-नम् ? नैवम्, वाक्यश्रवणे सति अभिधानात् प्रागेव पदैः पदार्था स्मर्यन्ते, स्मृताना न पदार्थाना परस्प-रमेतु योग्यं नैव इति विमर्शः उत्पद्यते, अतो न्याय-सम्पादितेन विमर्शेन विशिष्टोऽर्थो बुद्धिस्थः, तेनैव विशिष्टज्ञानानुमानम् । ननु विमर्शो नाम कीदृशः ? स च प्रमाणमप्रमाणं वेति अपि न विद्मः । उच्यते— विमर्शस्तावत् अभिधानात् प्रागेव भवद्भिरप्यङ्गीकृतः, इतरथा अभिहितैः पदार्थैः विशिष्टोऽर्थो जातु न शक्यते, पदार्थानामनेकार्थसाधारणत्वात् कस्य विशिष्टार्थस्य गमकता भवेयुः ? आकाङ्क्षासंनिधियोग्यतायुक्तार्थस्य गमका इति चेत्, तर्हि स एव विमर्शशब्दार्थो युष्माभिरप्य-ङ्गीकृतः । स च प्रमाणेतिकर्तव्यतारूपः न प्रमाणमानम्, न च स्मृतिमात्रं वा, विमर्शानङ्गीकारे च प्रत्यधिकरण पूर्वपक्षसिद्धान्तरचना दृत्तिविमर्शो न स्यात् ।

केचित्तु विप्रलम्भशङ्कया निरोहितत्वादर्थनिश्चयो न जायते । ' पुरस्तात्तु विप्रलम्भशङ्कया स्या निरोहिता '

इत्युक्तत्वादित्याहुः । तदयुक्तम्, अभिधानसामग्रीसम्भवे सति संशयस्याप्रतिबन्धकत्वात् । इतरथा फलनिर्णयसद्भावे-ऽपि प्रतिबन्धकत्वप्रसङ्गः, अनुमाननिश्चये च प्रसङ्ग-स्तुल्यः । अतः सामग्र्यभावादेवानभिधानम् ।

ननु एवं व्यवहारप्रसिद्धिशक्तिग्राह., पौरुषेयवाक्येभ्यो हि व्युत्पत्तिः, वाक्यं च नाभिधायकम्, लिङ्गमेवेत्यु-क्तम् । नैवम्, शक्तिनिर्णये व्यभिचाराशङ्का । लिङ्गेन च उत्तरकालेऽर्थनिश्चयश्च । अतो वक्तृज्ञानानुमान-द्वारेणैव अर्थनिश्चय इति सिद्धम् । प्रचि. पृ. ७–११.

**बहु** वर्त्मनि बहवो गुणा इति न्यायः । अत्र वर्त्मनि अङ्गो इत्यर्थः । यथा बलेन्दु शिवेन शिरसा धार्यते, लोकैश्च नमस्यते इति सर्वत्र ज्ञेयमिति । साहस्री. ८८१

● बहुनिः एक पार्श्वेऽस्य । तत्र अश्वस्य एक-स्मिन् पार्श्वे सप्तदश, एकस्मिन्नपरपार्श्वे । इतरेषा पशूना तु त्रयोदश त्रयोदश एकैकस्मिन् पार्श्वे । मि. ९।४।१–२. ● बहून्यः अश्वस्य चतुस्त्रिंशत् । भा. ९।४।२।१७, ● बहुक्यः गोमृगस्य षड्विंशतिः । अथ अश्वमेधे सवनीयः पशुस्तृतीयः । ९।४।१।१७, ● बहुनमः तूपरस्य षड्विंशतिः । अथ अश्वमेधे सवनीयः पशुः द्वितीयः । ९।४।१।१७, ● बहुकिमि. गणितामिदं प्रयोजनम्, कृत्स्न पार्श्वमुद्धरिष्यत इति । ९।४।१।७.

● बहुनीयत्ताप्रकाशनार्थं अश्वमेधे अग्निष्टोमे अश्वतूपरगोमृगाणामर्थे वैशेषिकप्रकरणपक्षे ' षड्-विंशतिरस्य वङ्क्रय ' इति समानवचनम् । ९।४।२।१७ –२१. मीको. पृ ७४१ ' अश्वमेधे अग्निष्टोमे अश्वतूपरगोमृगाणामर्थे० ' इत्यत्र अधिकरणं द्रष्ट-व्यम् । ● बहुनीयत्ताप्रकाशनार्थं अग्निष्टोमे पशुगणे समस्य सङ्ख्यावचनं कार्यं ' द्विपञ्चाशदस्य वङ्क्रय ' इत्यादि । ९।४।२।१–१६. मीको. पृ. ३४६ ' अग्नि-ष्टोमे पशुगणे० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● वचसैव धारयति इत्यादिवत् । न च प्रथमा-क्रमप्रयोजक यागार्थत्वमेव ' वचसैव धारयति ' इत्या-दिवत्, तर्हि अस्तु इति वाच्यम् । भाट्ट ५।१।११.

* **वचन** अविदेशे प्रमाणम् । गणि पृ १३ * वचन न प्रमाणम् । अत 'वचनात्' तृतीयसवने षोडशिग्रहणम् । भा १०।५।११।४४ * वचन यावान् क्लीय । सर्वपृष्ठे पञ्चा पृश्नया देवा यजसा वचनात्, न तु याषात् प्रकृतावित । वि १०।६।५ * वचन लौकिक 'नद्यास्तीरे फलानि सन्ति' इति, तत् तथ्य मपि भवति वितथमपि भवतीति । भा १।१।२।२ पृ १३ । यत्तु लौकिक वचन गच्छेत् प्रत्ययितात् पुरुषात् इन्द्रियविषय वा, अवितथमेव तत् । अथ अप्रत्ययितात् अनिन्द्रियविषय वा अवत् पुरुषबुद्धिप्रभव मप्रमाण अशक्य हि तत् पुरुषेण ज्ञातु ऋते वचनात् । १।१।२।२ पृ १५, * वचन लौकिक वैदिक च । पौरुषेय अपौरुषेय चेत्यर्थ । तत्र पौरुषेयाद् वचनात् 'एवमय पुरुषो वेद' इति भवति प्रत्यय न 'एवमयमर्थ' इति । विप्रलभ्यते हि एवमपि कश्चित् पुरुषकृतात् वचनात् प्रत्यय । न तु वेदवचनस्य मिथ्यात्वे किंचन प्रमाणमस्ति । १।१।२।२ पृ १६ १७, * असति अवकाशे वचन बाधक भवति । ३।५।७।२२, * किमिव वचन न कुर्यात् । नास्ति वचनस्यातिभार । २।२।१३।२७ ३।२।२।३, ५।४।४।१०, ६।६।७।११, १०।८।११।४२, १०।५। २५।८६, ११।४।४।१३, १२।४।७।११, ८ न च शक्यते वचनेन परो बधिरम्, क्रिमत्र वचन करिष्यति । ३।२।२।४, * न्यायपूर्वक हि वचन साधक भवति । ७।४।२।५, * प्रत्यक्षविरुद्ध वचन न प्रमाण भवति । यथा अम्बुनि मज्जन्त्यलाबूनि, शिला प्लवन्ते, पावक शीत इति । ४।३।५।१० * वचनानि प्रमाणानि । 'वदैनैवाभ्यनुज्ञाता येषामेव प्रवर्तना । नित्यानामभिधेयाना म व तद्युगादिषु ॥ तेषा विपरि यस्तु कुर्वता धर्मसंहिता । वचनानि प्रमाणानि नायेषा (बौद्धादीना) इति निश्चय ॥ तथा च प्रायश्चित्त दानकाले यो वाक्यमाभीयम, अयुक्तविरुद्ध वा श्लोकम्, सूत्र वा उपाय मानवादिप्रायश्चित्त दद्यात्, न कश्चिदपि धर्मार्थ प्रतिपद्येत । वा १।३।२।७ पृ २०२ * वचनेन अङ्गप्रधानयोभिन्नकालकर्तृत्वाधिकरणम् । ११।३।३।१२ मीको पृ १०७ 'अङ्गप्रधानयो वचनबलात् भिन्नदेशकालकर्तृकत्वमपि' इत्यत्र अधिकरणमुदाहरणम् ।

**वचनादनुज्ञातभक्षणम् । ३।५।१३।४०॥**

अथ एकपात्रे सोमोऽनेकेन भक्ष्यते । किं तत्र अनुज्ञाप्य अननुज्ञाप्य वा भक्षयितव्यम् उत अनुज्ञाप्यैवेति । अय च संदेहो भाष्यकारेण 'तस्मात्सोमो नानुपहूतेन पेय' इत्यस्य वचनस्य विषयप्रदर्शनार्थं प्रदर्शित, न तु विचारार्थम् । प्रत्यक्षे वचने सति संदेहाभावात् । तेन सूत्रेऽपि वचनगतस्य उपहूतपदस्य अनुज्ञारूपार्थकथनार्थं उक्तविचारनिर्णयप्रदर्शनार्थं चेति बोध्यम् । दीपा

**वचनादनुज्ञानभक्षणम् । ३।५।१४।४०॥**

ज्योतिष्टोमे सोमभक्ष यदा एकपात्रे अनेकै क्रमेण क्रियते तदा किं भक्षयिता आज्ञया अनुज्ञाय भक्षयेत् अनुज्ञा अगृहीत्वैव वा भक्षयेत् इति संदेहे लाघवात् अनियमे प्राप्ते सिद्धान्त उच्यते । एकपात्रे इति पद पूर्वाधिकरणसूत्रादनुवर्तते । एकपात्रे भक्षणे कर्तव्ये अनुज्ञातस्यैव सोमस्य भक्षण कर्तव्य न तु अनुज्ञाप्य एव । कुत । 'तस्मात् सोमो नानुपहूतेन पेय' इति वचनात् । उपहान च अनुज्ञापनम् । के

* वचनादयथाकालत्व कृत सर्वाधानानामपि अङ्गानाम् । यथा 'आग्निमारुतादूर्ध्वं अनुयाजैश्चरन्ति' इति । भा ११।३।४।६, * वचनात् अयथेष्टकाल कालत्वमङ्गानाम् । ११।३।१।१ * 'वचनात्' इत्युक्ते प्राप्तोत्येव कार्येऽर्थे वचनस्य प्रमाणत्वम् । अतः पुरुष परपराणामपि न प्रमाणा तद्गोचरो धर्म इति सिद्धम् । बृहती पृ २१

**वचनादिष्टिपूर्वत्वम् । ५।४।३।५ ॥**

आधान कृत्वा तत पूर्वं दर्शपूर्णमासेष्टिर्वा कर्तव्या तत सोम, अथवा आधान कृत्वा तत पूर्वं सोम कर्तव्य ततो दर्शपूर्णमासौ इति इष्टिपूर्वत्व सोमपूर्वत्व चेति विचारे पूर्वपक्षमाह । आधानस्य इष्टिपूर्वत्व स्यात्, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति वचनात् । के

**वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य । ६।३।१३।३१ ॥**

ज्योतिष्टोमे, अभावे सोमस्य अभावे अलाभे, अन्यस्य च अशास्त्रीयमपि सुगमलाभात् सह्ययितुमयोग्य

मपि पूतीकद्रूपं 'यदि सोमं न विन्देत पूतीकान-भिषुणुयात्' इति वचनात् प्रतिनिधिः स्यात्। तत्सा-मान्येन गुणद्वारकाभावेऽपि मन्दसदृशस्वरूपेण तत्सामा-न्येन सोमसादृश्येन हेतुना पूतीकद्रव्यं प्रतिनिधिः स्यात्। इतरथा मुख्यस्य सोमस्य अभावात् यागस्य च अकर्तव्यत्वं स्यात्। के.

ॐ वचनात्त्वयथार्थमैन्द्री स्यात्। ३।२।२।३ ॥

अग्नौ श्रूयते— 'निवेशनः सङ्गमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इति। तत्र सन्देहः किं इन्द्रस्योप-स्थानम्, उत गार्हपत्यस्य इति। इदानीं पूर्वाधि-करणापवादः क्रियते। अत्र 'निवेशनः सङ्गमनो वसूनाम्' इति मन्त्रेण इन्द्रस्य देवताभूतस्य वसुनिवेशन-सङ्गमनकर्तृत्वेन यथा इन्द्रोऽभिधातुं शक्यते, तथा 'ध्रुवोऽध्वरश्च सोमश्च विष्णुश्चाग्निरेतेऽनल' इति वेदे पशुरूपस्याग्नेः 'वसुना वायव्यास्मि' इति श्रेष्ठ-त्वकीर्तनात् वसुनिवेशनसङ्गमनकर्तृत्वेन अग्निरप्यभि-धातुं शक्यते एव। तथापि 'ऐन्द्र्या' इति तद्धित-श्रुत्या इन्द्रस्यैव प्राधान्येनाभिधानं वेदानुमतमिति मन्त्रेद-मुदाहृतम्। अत एव वार्तिके स्फुटोदाहरणप्रतिपादकैन्द्र-पदस्थानेऽयं मन्त्रोऽस्य शाखान्तरे पठ्यते इति निर्दिशति।— 'कदाचन स्तरीरसि नेन्द्र सश्चसि' इति। अस्य पूर्वपक्षिणो-ऽभिसन्धिः। यद्यप्यस्य मन्त्रस्य श्रुत्या गार्हपत्यस्य प्रतीयते। श्रुतिश्च लिङ्गात् बलीयसी, तथापि अग्नेरिव मैन्द्रत्वान्न श्रुतिबलेनापि विनियोक्तुमशक्यत्वात् न गार्हपत्येऽस्य विनियोगः सम्भवति। यतो नानेन इन्द्रा-भिधायकेन मन्त्रेण कथञ्चिदपि गार्हपत्यो ऽभिधातुं शक्यते। न चाभिधानं विना प्रकारान्तरेण अस्य मन्त्रस्य गार्हपत्यो-पस्थानेन सम्बन्धेन प्रतिपाद्यते इति वाच्यम्। उपतिष्ठते इत्यात्मनेपदविरोधात्। 'उपान्मन्त्रकरणे' (पा. १। ३।२५) इत्युपपूर्वात् तिष्ठतेर्मन्त्रकरणेऽर्थे आत्मनेपदं विधीयते। कथं गार्हपत्यमिति द्वितीयेति चेत्, उच्यते। वचनं तावद्देशनिर्धारणार्थमेव। द्वितीया च तदनुबद्धेन क्तिचेप्सिततार्थो कारकसामान्यलक्षणद्वारेणाभिकरणमाचष्टे। तेनायमर्थः— गार्हपत्यदेशे स्थित्वा ऐन्द्र्या इन्द्रोपस्थानं कर्तव्यमिति। एवं प्राप्ते, अभिधीयते। मन्त्रेणैव यदि

प्रत्यक्षश्रुतिविरोधेऽपि मन्त्राणां मुख्यार्थत्वमुपपद्येत तथापि अवश्यं तावदत्र एकस्यामुख्यार्थत्वं वक्तव्यम्। तत्र हि मन्त्रानुरोधेन ब्राह्मणवाक्यगतगार्हपत्यपदे वृत्त्य-न्तरमाश्रीयताम्, ब्राह्मणानुरोधेन वा मन्त्रगतेन्द्रपदे, तत्र ब्राह्मणस्याप्रातिविधित्वेन स्वतःप्रत्वात् प्रथमप्रवृत्तेश्चा-नन्यप्रमाणत्वेऽर्थे गौणत्वमयुक्तम्। मन्त्रस्य तु ब्राह्मण-विहितार्थप्रतिपादकत्वेन तत्परतन्त्रप्रवृत्तेः ब्राह्मणप्रतिपादि-तार्थानुरोधेन गौणत्वमेव युक्तम्। तदुक्तम्— 'गौणत्वं यत्र नाम स्यात्कयोश्चिद् ब्राह्मणमन्त्रयोः। तत्रानुवाद-रूपत्वान्मन्त्राणां गौणतेष्यते ॥' इति (वा. पृ. ७५२)। तेन मन्त्रगत एवेन्द्रशब्दो गमकसाधनत्वगुणयोगाद्गार्हपत्यं प्रकाशयति। अथवा 'इदि परमैश्वर्ये' इति धातोरयं इन्द्रशब्दो व्युत्पन्नः। अग्नेश्च यद्यपि परमैश्वर्यं नास्ति, तथापि स्वकार्ये तावत् तत्पोषकादौ ऐश्वर्यमस्ति। तेन ऐश्वर्यगुणयोगाद्वा अयमिन्द्रशब्दो गार्हपत्ये गौणः। तदुक्तम्— 'स्यादग्नेर्गौणमिन्द्रत्वं यज्ञसंयन्धकारि-तम्। इन्द्रत्वयथानुमापद्वा स्वकार्ये सोऽपि हीश्वरः ॥' इति (वा. पृ. ७५५)। तस्मात् इन्द्रशब्द एव गार्हपत्ये गौण इति सिद्धम्। यत्तु बलाबलाधिकरणेनैव गतत्वात् इदं अनर्थकमिति केचित् चोदयन्ति। तदयुक्तम्। श्रुतिलिङ्गबलाबलनिर्णयस्यैव तदधिकरणार्थत्वात्। तथाहि श्रुतिविरोधे गौणानामपि मन्त्राणां मन्त्रत्वं प्रवृत्तीनां तदधिकरणसिद्धं भवति यदा, तदा तत्र श्रुतेर्नैव बलं भवितुमर्हति, अन्यथा अध्याहारार्थे विनियोगागमनात् 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन श्रुतिरेवान्यथा नीयेतेति न किञ्चिदनुपपन्नमिति।

प्रयोजनम्— पूर्वोक्तम्। सूत्रं तु— वचनादैन्द्री अयथार्थां गौणार्थेत्यर्थः। तौता.

ॐ वचनात् त्वयथार्थमैन्द्री स्यात्। ३।२।२। ३ ॥

'कदाचन स्तरीरसि इत्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रूयते। अनया किं इन्द्रस्योपस्थानं कर्तव्यं लिङ्गात् उत तृतीयाश्रुत्या गार्हपत्योपस्थानम् इति विचारे सिद्धान्तमाह। वचनात् 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते'

इति वचनात् तृतीयाश्रुतिबाधिनात् ऐन्द्री इन्द्रपदघटिता ऋक् अयथार्थे यथार्थं मुख्यार्थं अतिक्रम्य गौणार्थेणेन भूता स्यात् । लिङ्गात् श्रुतेर्बलीयस्त्वात् । तुशब्द पक्षा दरयावृत्यर्थ ।

**गुणाद्वाऽप्यभिधानं स्यात् सम्बन्धस्याशास्त्रहेतुत्वात् । ४ ॥**

ननु ऐन्द्र्या ऋचा गार्हपत्योपस्थानं 'अग्निना सिञ्चति' इत्यादिवत् अनयथार्थविधानमनुपपन्न इति चेत्, तत्राह । नाऽपि अयथा इतिशब्द शङ्कानिवृत्तौ । न अयथार्थ विधानम् । यत गुणात् अभिधानं स्यात् । इन्द्रि अपणे-श्चित्-वगुणयोगात् इन्द्रशब्देन गार्हपत्याभिधानं सम्भवति । सम्बन्धस्य वाच्यवाचकभावस्य अनादित्वात् अशास्त्र हेतुत्वात् शास्त्रकार्यत्वाभावात् । लोकसिद्धगौणवृत्त्याऽपि उपपद्यते । तस्मात् ऐन्द्र्या ऋचा गार्हपत्यो पस्थाने विनियोग इति सिद्धान्त । के

* 'वचनात्त्वयथार्थमैन्द्री स्यात्' इत्यधिकरणे 'गुणाद्वाऽप्यभिधानं०' इति गुणसूत्रेण म न्यायेन्द्रशब्द इति अपणेशितृत्वादिगुणयोगेन गार्हपत्य अभिधत्ते इत्येव गौणसामर्थ्येन श्रौतविनियोगनिर्वाहस्योक्तत्वात् । इदमेव ऐन्द्र्यधिकरणम् । कु ३।२।७।१३ * 'वचनात् त्वयथार्थमैन्द्री स्यात्' ( ३।२।२।३ ) इति न्याय । अयमेव ऐन्द्रीन्याय । ननु 'यदग्नये च' इति वाक्ये अग्निर्देवता न विधीयते, तदा वचनस्य झगिति प्रवृत्ते केवलप्रजापतिरेव देवता स्यात् । एवं च 'अग्नि श्चौति' इति मन्त्रस्य वचनविनियुक्तस्य 'वचनात् त्वयथार्थ०' इति न्यायेन गौण्या प्रजापतिप्रकाशकत्वमेव स्यात् इत्यतो देवतात्व मन्त्रवर्णतो न न्यायु गतम इति चेत् । सोम ३।४।१८ पृ ६६, * वचनात् त्वय थार्थ०' इति न्यायेन गौणेऽर्थे विनियोग अग्नीद ग्नीन्०' 'नत ऊणु' इति मन्त्रो । ३।२।४ * 'वचनात्त्वयथार्थमैन्द्री स्यात्' इति यत् सिद्धवत् गार्हपत्यापगाम्त्रीत्यारेण उक्तम्, तत् इह स्यापयिष्यमाण श्रुतिबलीयस्त्वाभिप्रायेण । चा ३।३।७।१४ पृ ८२०, * 'वचनात् त्वयथार्थमैन्द्री स्यात्' ( ३।२।२।३ ) इति विनियोगदर्शनादेवानुमीयते इति इत्युक्तम् ।३।३। ७।१४ पृ ८३१, 'वचनात्त्वयथार्थ०' इतिवत् बलवत्तर श्रुतिकृतविनियोगकल्पितलक्षणाद्वारेण । पृ ८३७. * 'वचनात्त्वयथार्थमैन्द्री स्यात्' ( ३।२।२।३ ) इति सूत्रेण 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इतिश्रुतिबलेन एन्द्र्या गार्हपत्योपस्थानाङ्गत्व विहितम् । श्रुत्याऽपि अन्याङ्गेति योगासंभवात् कथं इन्द्रशब्देन गार्हपत्याभिधानम् ? इत्य पेक्षया गुणयोगेन इति पूर्वान्वयेन ( गुणाद्वाऽप्यभिधानं स्यात् इत्यनेन ) उक्तम् । ननु इन्द्रशब्दस्य गार्हपत्याभि धानशक्तिप्रदर्शनार्थमेव एतद्वचन तस्मात् भवति इत्याशङ्क्य, सम्बन्धस्य सम्बन्धस्य मुख्यव्यवहारावसयत्व शास्त्रहेतुकत्वाभावात् इति 'सम्बन्धस्य अशास्त्रहेतुत्वात्' इत्यनेनोक्तम् । सु पृ ३१३ * 'वचनात् त्वयथार्थ मैन्द्री स्यात्' ( ३।२।२।३ ) । 'वचनादयथार्थमैन्द्री स्यात्' ( अन्यथा पाठोऽयम् ) इति तार्तीयीकाधिकरण न्यायेन वाचनिकविनियोगबलेन ( अग्निपूर्वप्रकाशनसमर्थे योर्थ मन्त्रो ) प्रकाशनसामर्थ्योपपत्ति । पूर्वपक्षो ऽयम् । कु १।४।४।४ पृ ९२

**⁕ वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणिवत् । ६।६।२।१२ ॥**

तुल्यं नाम याग प्रकृत्य श्रुत 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति । तुशब्द एवकारार्थ । वचनात्त राजपुरोहितौ इति वचनादेव एकस्य राज द्विसंयोग पुरोहिताभ्या द्वाभ्या संयोग स्यात् । यद्यपि व्यवहारे एकस्य राज्ञ पुरोहितद्वय न संभवति तथापि वचनात् एकस्य द्विसंयोग पुरोहितद्वयसंयोग स्यात् । पाणिवत् । दक्षिणाचारेण कर्तव्य इति नियमात् सव्यहस्तो न प्राप्नोति, तथापि 'अञ्जलिना जुहोति' इति वचनात् एकस्य सव्यदक्षिणौ द्वौ पाणी भवत तद्वत् । पाणी इव पाणिवत् । तथा च राजपुरोहितौ इत्यत्र पुरो हितश्च पुरोहितश्च पुरोहितौ, राज्ञ पुरोहितौ राजपुरोहितौ इति समास । तुल्यन्याये एकस्य राज्ञ द्वयो पुरोहितयो अधिकार इति पूर्व पक्ष । तस्मात् इति सूत्रस्य पद तु कापि नास्ति । न च केनापि व्याख्यातम् । सर्वत्र पाठस्तु गृहीतोऽस्माभि ।

अपच्छेदाभावः अन्वारम्भः उक्तः सः कारणात् स्यात् अध्वर्योः साहाय्यार्थं स्यात् । यूपान्तरे उच्छ्रयितव्ये सति अवसृजेत् उच्छ्रयणेन कारणेन । न तु तेन परिव्याणान्तता सिध्यति । यथा पशौ 'पृषदाज्येन अनुयाजान् यजति' इति पृषदाज्यधारणार्थं पात्रस्य विशुद्धिर्भवति पात्रभेदो भवति अर्थात् तथा प्रकृतेऽपि अर्थात् अनवसर्गः न तु असौ नियामकः ।

वृत्तौ तु कारणात् अध्वर्योः सहायापेक्षारूपकारणात् अवसर्गः यजमानातिरिक्तकल्पना स्यात् । यजमानकार्ये अन्वारम्भे अन्यः कल्प्यः स्यात् इति व्याख्यातम् । अवसर्गः इत्येव च पाठो गृहीतः । कुतूहलेऽपि पदार्थानुसमयभङ्गात् कारणात् अत्र अवसर्गः स्यात् इति व्याख्यातम् । परंतु 'अवसर्गः अन्वारम्भः स्यात्' इति तत्र केचित् । स च न युज्यते । अवसर्गः अवसर्जनं त्यागः अपच्छेदः इत्यर्थः । अन्वारम्भस्तु अनवसर्गः ।

॥ या शब्दकृतत्वान्न्यायमात्रमितरदर्थात् पात्रविवृद्धिः । ९ ॥

यूपैकादशिन्या अञ्जनादिपरिव्याणान्तेन गुणकाण्डेन अनुसमयः इति सिद्धान्ते उक्ते पूर्वपक्षिणा 'कारणाद्वाऽनवसर्गः०' इति सूत्रेण कृता शङ्कां सिद्धान्ती निरस्यति । वाशब्दो निरासद्योतकः । न पदार्थानुसमयः किन्तु परिव्याणान्तेन पदार्थकाण्डेन अनुसमयः स्यात् । अनवसर्गो अन्वारम्भस्तु न कारणात् किंतु शब्दकृतत्वात् 'यूपं नारभेत आ यूपपरिव्याणात्' इति वचनादेव । शक्नोति हि कर्तुमपि यजमानात् अध्वर्युः यूपमुच्छ्रयितुम् । इतरत् यूपसहस्रस्थापकं प्रयोगवचनं तु न्यायमात्रम् । प्रयोगवचनात् चोदनं स्यात् । पशौ पृषदाज्यपात्रविशुद्धिस्तु अर्थात् उपभृतः आज्यग्रहणे न्यग्भूतत्वात् पृषदाज्यधारणानुपपत्तेः । के

* 'वचनात्तु समुच्चयः' (३।६।१६।४५) इति सिद्धान्तेऽपि दर्शनमेव अगत्या वचनीकृत्य समुच्चयं वक्ष्यति । वा. ३।६।१६।४२ पृ. १०६४. * वचनात् यातयामविधानात् । 'कुशा दर्भादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः । न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः ॥' इति स्मृतेः । (वा. ३।२।८।२४) । सु. पृ. ११२१.

■ वचनाद्रथकारस्याऽऽधानेऽस्य सर्वशेषत्वात् । ६।१।१२।४४ ॥

रथकारस्य त्रैवर्णिकभिन्नस्य जातिविशेषस्य आधाने अग्न्याधेये अधिकारः प्रत्येतव्यः, 'वर्षासु रथकार आदधीत' इति वचनात् । अस्य रथकारकर्तृकाधानस्य सर्वशेषत्वात् सर्वेषां त्रैवर्णिकानां आधानेभ्यः अवशिष्टत्वात् । अथवा अस्य रथकारस्य सर्वेभ्यः त्रैवर्णिकेभ्य अवशिष्टत्वात् । इति पूर्वपक्षः । अत्र रथकारः अत्रैवर्णिक एव इति पूर्वपक्षाशयः । त्रैवर्णिकेभ्यः किंचित् हीनः न तु सर्वथा अत्रैवर्णिकः इति तु सिद्धान्ते भविष्यति ।

न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात् । ४५ ॥

'वर्षासु रथकार आदधीत' इति आधानाधिकारी रथकारः अत्रैवर्णिकः इति पक्षे सूत्रेण प्राप्ते इत्थमाह । न्याय्यः न्यायादनपेतः धर्माधिकारन्यायसम्पन्नः त्रैवर्णिक एव रथकारः स्यात् । न अत्रैवर्णिकः इति वाशब्दार्थः । त्रैवर्णिकस्यापि रथकारशब्दस्तु कर्मसंयोगात् रथनिर्माणरूपकर्मणा संयोगात् स्यात् । शूद्रस्य तु धर्मेषु प्रतिषिद्धत्वात् न शूद्रो रथकारः । तस्मात् त्रैवर्णिकः कदाचित् रथकर्मकर्ता रथकारः स्यात् । तस्य वर्षासु आधानं इति कश्चित् ।

'न्याय्यो वा स्यात्' इति पाठः कुतूहले । नीयते इति न्याय्यः । धर्मेषु यत् । रथकर्मसंयोग प्रवृत्तिनिमित्त आश्रित्य रथकारशब्दः अत्र त्रैवर्णिकेष्वेव नेतव्यः इति तदर्थः । शेषं समानम् ।

अकर्मत्वात्तु नैवं स्यात् । ४६ ॥

पूर्वसूत्रोक्तपक्षनिवारणार्थः तुशब्दः । 'वर्षासु रथकार आदधीत' इत्युक्तो रथकारः एवं त्रैवर्णिक न स्यात् । अकर्मत्वात् त्रैवर्णिकस्य शिल्पकर्मशून्यत्वात्, 'न जीवियुर्द्विजाः शिल्पैः' इति निषेधात् ।

आनर्थक्यं च संयोगात् । ४७ ॥

'वर्षासु रथकार आदधीत' इत्युक्तो रथकारः त्रैव

* वचने प्रत्यक्षे सति न आनुमानिकम्। १।२।४।३४. * प्रत्यक्षवचने सति सामर्थ्यं अप्रापकम्। वा. २।३।३।८. पृ. ५८९

* वचनातिदेशः इत्यत्र वचनं द्विविधं प्रत्यक्षश्रुतं आनुमानिकं चेति। बाल ॥ ११८.

* वचनानर्थक्यात् वरं पदमात्रस्य लक्षणा। सोम ७।१।८.

* वचनतः श्रुतिः (त्रिभिः प्रकारैः श्रुतिर्भवति, व्यापारतः, फलतो वचनतः इति)। आर्तिवंभवाया आधिक्यं वचनस्य विषयः। आर्तिवंभवं यद् द्रव्य सा भृतिः, सा दक्षिणा। ततोऽधिकं दक्षिणात्वे सिद्धं वचनप्रामाण्यात् भवति। विकृतौ कल्पेपे वचनप्रामाण्यात् अल्पमलकरणमपि दक्षिणायाः स्थाने विधीयते सोमचमसः। भा. १०।३।११।४५.

* वचनप्रामाण्यात् प्रतिषेधो विधिं बाधित्वा भविष्यति। विधिरपि प्रतिषेधम्। नान्या गतिरस्ति इति पक्षे मिथ्याप्रत्ययः भविष्यते। यदा विधि, यदा न प्रतिषेधः। तदा प्रतिषेधो यदा न विधिरिति। भा. १०।८।३।६.

* वचनमात्रस्य ऊहो यथा–'छागस्य वपाया मेदस' इति प्रकृतौ। आज्यापन्येषु तु 'छागानां वपानां मेदसां' इति। बाल. पृ. १२७.

* वचनविभक्तयोर्विभक्तिः प्रधानम्, कारकवाचित्वात्। वचनं तु गुणः, कारकसंख्याभिधायित्वात्। वि. ५।३।५

* वचनव्यक्तिः। अन्या हि वचनव्यक्तिः विधीयमानस्य, अन्या गुणेन उपन्यस्यमानस्य। अज्ञातम् ज्ञाप्यते विधीयमानोऽर्थः, ज्ञातमनूद्यते गुणस्त्वन्यार्थम्। न च सकृदुच्चार्यमाणः ज्ञातम् अज्ञातञ्च भवितुमर्हति। भा. ३।१।६।१२ पृ. ६९०.

* वचनशतेनापि अशक्यविनियोगत्वात्। मु. पृ. १०८९. * वचनशतेनापि नहि इन्द्रशब्दः शक्तो गार्हपत्याभिधानसमर्थः कर्तुम्। वा ३।२।२।८ पृ ७५४. * न वचनशतेनापि शक्यमेतत्। इन्द्रशब्देन अग्निं प्रत्याययेदिति ब्रुवन् विहन्येत। यथा अग्निना सिञ्चेत्, उदकेन दीपयेदिति। भा. ३।२।२।८, * नहि वचनशतेनापि अनारभ्योऽर्थः शक्यते विधातुम्। यो हि ब्रूयात् 'उदकेन दग्धव्यम्, अग्निना क्लेदयितव्यम्' इति किं स वचनप्रयोजनसामर्थ्यमनुवीत। ३।१।६।१२ पृ. ६९१.

* वचाभक्षणादिक्रियाफलं मेधादिप्राप्तिः। सु पृ. ५९.

¤ वज्रलेपन्यायः। अयं वस्तुनः सुदृढमुद्धिकारविवक्षाया प्रवर्तते। साहसी. ७७५.

* वज्रिणी नाम इष्टकाः अग्निशेषः, न तु चितिशेषः। तेन ताः ऋत्वुपधातव्याः न तु प्रतिचिति। प्रदेशकाधिकरणम्। भा. ५।३।६।१५–१६, * वज्रिणी नाम इष्टकाः अप्रकरणे समाम्नाताः। तासामपि अन्यथेत्यात् अरत्निदरत्नम्, अकृष्णत्वम्, अश्मसंयोगः, इति धर्माः कर्तव्याः प्रकरणात् वाक्यस्य बलवत्त्वात्। ३।६।१२।१९, * वज्रिणीनां इष्टकानां मध्यमचितौ उपधानम्। ५।३।७।१७–१९, तच प्राक् लोकंपृणायाः स्यात्। ५।३।८।२०.

* वञ्जुले अप्सु जायते। 'अप्सुजो वेतस' इति वञ्जुले वेतसशब्दं दर्शयति। भा. १।३।४।९

¤ वटे यक्षन्यायः। यदि वक्तृपरम्परोपदेशस्य मूलभूतोऽनुभवो नास्ति तत्र सोऽप्यैतिह्यः, सत्ये तु विलक्षण इति बोध्यम्। इममेवैतिह्यप्रमाणविशेषं वदन्तीति केचित्। साहसी. ७७

* 'वत्सः प्रथमजो दक्षिणा' आग्रयणे। स अन्वाहार्यधर्मकः स्यात्। भा १०।३।७।३५। वत्से पाशो न कार्यः। १०।३।८।३६। तत्र अभिघारणमपि न स्यात्। १०।३।१०।३८. * वत्साः (वत्सगोत्र) पञ्चावत्तिनः। वि १०।७।२०. * 'वत्सं आलभेत' अत्र साक्षाद्विनियुक्तदोहाङ्गदोहोपकारकतया वत्सस्य आलम्भसंस्कार्यत्वम्, तेन आलम्भन साक्षाद् विनियुक्तोपकारकभाव्युपयोगद्वयसंस्कारार्थं दृष्टार्थं स्तनिपल्लोपकारक मरार्थं प्रवृत्तिरूपं वैदिक कर्म इह च पशुलोपावकरणे भवतेव। बाल. पृ. ८२. * 'वत्समालभेत' इति अग्निहोत्रे धेनुदोहाधिकारे श्रूयते। तत्र वत्सस्पर्श-

मान्त्रविधिरयं न पाशविधिः। वत्सालम्भाधिकरणम्। ७।३। ६।१६–१७. ● वत्सेन बर्हिषा न उपस्तिरतस्य वत्सस्य विधानं प्रयार्थं दर्शपूर्णमासयोः। ६।४।१२। ३४–४०. ■ वत्से अन्वाहार्यस्थानापन्नेऽपि अभिघारणं नानुष्ठेयमाग्रयणे। १०।३।१०।२८. मीको. पृ. ८५५ ' आग्रयणे पाशोपशयोः अन्वाहार्यस्थानापन्नयोः अपि अभिघारणस्य बाधः ' इत्यत्र अधिकरणं द्रष्टव्यम्। ● वत्से अन्वाहार्यस्थानापन्नेऽपि पात्रानुष्ठानमाग्रयणे। १०।३।८।१६. मीको. पृ. ८५३ ' आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वत्से पात्रस्य बाधः ' इत्यत्र अधिकरणं द्रष्टव्यम्। ● वत्से आग्रयणदक्षिणारूपे प्राकृतान्वाहार्यधर्मानुष्ठानम्। १०।३।७।१५. मीको. पृ. ८५५ ' आग्रयणे दक्षिणारूपयोर्गोवत्सयोः प्राकृतान्वाहार्यधर्माः कर्तव्याः ' इत्यत्र अधिकरणं द्रष्टव्यम्।

● वत्साधिकरणम्। ३।३।६।१६–१७। इदमेव वत्सालम्भाधिकरणम्।

● वत्सापाकरणमेव शाखाच्छेदनादेः प्रयोजकं न कपालोपधानम्। ४।२।१।८–९ मीको. पृ. ११७४ ' उपवेषाधिकरणम् ' इत्यत्र द्रष्टव्यम्। ● वत्सापाकरणं दोहधर्मः। स च सान्नाय्यप्रयोजकः। वि. ३।६।८, ● वत्सापाकरणं पलाशशाखाच्छेदनस्य प्रयोजकम्, न तु प्रस्तरेण सह प्रकृतिः प्रयोजिका। ५।१।१ मन्त्रार्थे, ● वत्सापाकरणं शाखया ' यत् पलाशशाखया वत्सानपाकरोति ' ' शाखया वत्सानपाकरोति '। ४।२।२, ३, ● वत्सापाकरणं सान्नाय्यदोहसाधनम्, तदङ्गं च पलाशशाखाऽऽहरणम्। ४।३।१०.

● वत्सापाकरणकालेन क्रमयोगो दर्शे असन्नयतोऽपि। ६।८।१३।४१–४६. मीको. पृ. २०२२ ' दर्शे वत्सापाकरणकालेन क्रमयोगः असन्नयतोऽपि ' इत्यत्र अधिकरणं द्रष्टव्यम्। ● वत्सापाकरणकालस्य सन्नयदर्शनप्रयुक्तता। वि. ६।८।१३. ● वत्सापाकरणकाले क्रमुपेयात् दर्शे। ६।४।१२।३४–४०. मीको. पृ. २०६० ' दर्शपूर्णमासयोः क्रमे वत्सानुपरुद्धितकालस्य विधानम् ' इत्यत्र अधिकरणं द्रष्टव्यम्।

● वत्सापाकरणदोहनादयः सान्नाय्यधर्माः। वि. ५।४।२.

■ वत्सालम्भाधिकरणम्। वत्साधिकरणम्। अग्निहोत्रदोहार्थवत्सालम्भः स्पर्शमात्ररूपसंस्कारः॥

विभये प्रायदर्शनात्। २।३।६।१६॥

भाष्यम्— किमिहोदाहरणम्। न तावत् सूत्रेणैव परिगृहीतम्, यथा ' अग्नेर्वा धर्मयोगात् क्रतुप्रधानमुच्यते ' ( २।३।२।३ ) इति। नापि च भाष्ये प्रतिज्ञातं यथा ' अयनेषु चोदनान्तरम् ' ( २।३।८।५ ) इति। केवलं विभये प्रायदर्शनं हेतुः इति निर्दिश्यते। कस्यायं हेतुः इति न विजानीमः। प्रकृतं यजिमतेतत् धर्मं इति तदपि न समनन्तरमिव पश्यामः। तदेतदगमकं सूत्रेण तावत् अनर्थकम्। अथ माऽनर्थकम्, कथं यदेह इति वक्तव्यम्। वृत्तिकारवचनात् प्रतिज्ञां संशयं चावगच्छामः। अत्र भगवानाचार्यः इत्युदाहृत्य ' वत्समालभेत वत्सनिकान्ता हि पशवः ' इति। इमं संशयमुपन्यस्यति स्म, किं यजिमदभिधान एव आलम्भतिः, उत आलम्भमात्रवचन इति। उपन्यस्ते चैतदुदाहरणं संशयश्च। तत्र च पूर्वपक्षं प्रतिजानीते स्म, यजिमदभिधान इति। इदं तु प्रत्युदाहरणम् पूर्वस्याधिकरणस्य। नात्र पूर्वस्मात् अतीव प्रयोजनम्। तथापि पुरुषाणां उपायचतुर्विधविशेषानालोक्य भवति मन्दानां सामान्यतो दृष्टेनापि आशङ्का। साऽपि निवर्तनीया। न हि मन्दधियां शुभिक्षेणापि दृष्टो भिनेव, न जानुचित् कदाऽपि तत्र चिकित्सा नाऽऽदरेण कर्तव्या भवेत्। अतस्ता निवर्तयितुं पूर्वपक्षमुपन्यस्यति स्म। आलम्भतिः अभ्यासेन प्राणिसंयुक्तो यजिमदभिधानो, अयमपि आलभति प्राणिसंयुक्त एव, तेन अयमपि यजिमद्वचन एवेति भवति कस्यचिदाशङ्का। अथवा यजिमदभिधानो दृष्ट आलभतिः प्राणिप्रयुक्तः, तस्यायमनुवादो वत्सविधानार्थः। तथा च फलं न कल्पयितव्यं भविष्यतीति। एवं प्राप्ते, ब्रूमः। अस्मिन् संशये आलम्भमात्रं संस्कारः। कुतः? प्रायदर्शनात्। यत्र अन्यान्यपि संस्कारकर्माणि प्रायभूतानि इत्युच्यते। तत्र एतदपि

 वत्सालम्भाधिकरणम्

श्रूयते । प्रायदर्शनादपि चार्थनिश्चयो भवति । यथा आम्र-प्राये लिखित, आम्र इति गम्यते । ननु लिङ्गं प्राय दर्शनम्, कथमनेन सिद्धिरिति । उच्यते । यथा प्राय दर्शनेन सिध्यति तथा वर्णयितव्यम् । कथं च प्रायदर्शनं हेतुः ? न्यायतः प्राप्तौ सत्याम् । न पुनर्यागे ? देवता सम्बन्धाभावात् न यागवचनं । दृष्टार्थत्वाच्च वत्स आलभ्यमानो (स्पृश्यमानो) गां प्रस्नावयिष्यतीति । तस्मादेव न्यायप्राप्तं प्रायदर्शनं द्योतकं भवति । तस्माद् आलम्भनं संस्कारः (स्पर्शमात्रम्) ।

वा— 'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके । सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम् ॥' इति ये वदन्ति तान् प्रति उच्यते । न किञ्चित् साधनं अप्रदर्शितविषयं स्वार्थं साधयति । सूत्रकारेण च इह हेतुमात्रमुपात्तम् । न च अर्थप्रकरणादिभिरपि उदाहरणमतिशयसंशयरहितं गम्यतमनुपलभ्यमाने । तस्मात् अगमके सूत्रे सति अवश्यं दोषप्रतिसमाधानार्थं वृत्तिकारादिभिर्यतितव्यम् । सर्वत्र समन्ते अध्याहारादिवर्णनमुक्तम् (शास्त्रादौ भाष्ये) । सर्वथा शिष्यप्रज्ञाहितकारे सूत्रकारादीनां प्रवर्तमानानां येनैव तदनुगुणं यत् कृतं तदेव ग्रहीतव्यम्, नाग्रहः कर्तव्यः । इदं सूत्रकारेण नोक्तम्, इदं वृत्तिकारेण एतत्प्रदर्शनार्थं एतद् वर्णयन्ति । तदिह भगवान् उपवर्षः किल अग्निहोत्रे धेनुदोहाधिकारे श्रुतमिदं वाक्यं उदाहृतवान् 'वत्समालभेत' इति । तत्र च पूर्ववदेव शेषा संशयमुपवर्णितवान् । किं प्राकृत एव आलम्भे वत्सो विधीयते, तथा आलभ्यमानं अथवा यज्ञनिमित्तत् करोति । तत्र विशेषणाभावात् प्राकृत मध्यमो नास्ति इति पूर्वाधिकरणसिद्धमेव इति नोपन्यस्तम् (भाष्ये) । तेनैतानुक्रमेण यत्निमद्विधानबुद्धौ प्रयतायां अपवादोऽपि क्रियते । तत्र भोक्तृभयोपप्रत्युदाहरणात् गवयमानोऽपि पूर्वपक्षः श्रोतृबुद्धिवैचित्र्यात् क्रियते । नो नाम नास्तिक्यप्रवादानां सामान्यतोदृष्टेन वेदार्थबुद्धिनाशेन तस्य तन्निवृत्ति अप्रदर्शिताशङ्का न शक्या कर्तुं इति प्रदर्श्यते । तत्र केषाञ्चित् पूर्वाधिकरणे एव आलम्भस्य भवतिक्रियावाचित्वेन प्रसिद्ध, अन्येषां च यदनुभावकत्वेन, तदुभयमपि अत्र उभयमेव भवन्ते । तत्र अपूर्वयागविधानम्, प्राप्ते वा वत्सविधानम् इति पूर्वपक्षे द्वैतम् । सिद्धान्तस्तु द्रव्यदेवतासम्बन्धाभावानुपपत्त्या पूर्वमस्माभि यजि कल्पित नादृष्टपूर्वशक्त्यालम्भनिधानेन व्यभिचार्यनुमानाभासेन वा । न चेह असौ अस्ति इति गम्यतुमशक्या । तथा च दोहनादिसम्बन्धात् प्रायदर्शनमुपपद्यते । दृष्टार्थत्वं च गोप्रस्नवनहेतुत्वात् ।

**अर्थवादोपपत्तेश्च । १७ ॥**

भाष्यम्— अर्थवादश्च भवति 'वत्सनिकान्ता हि पशवः' इति (नितरां कान्त प्रिय, पशवः निकान्त येषां ते वत्सनिकान्ताः) । यस्मात् वत्सप्रियाः पशवः, तस्मात् वत्स आलब्धव्य इति । यदि वा प्रज्ञपितः आलभ्यते तत्र एतद्वचनमवकल्पते । अथ संस्कार्यः न एवंजातीयकं वचनं नोपपद्येत । तस्मादपि आलम्भनं संस्कार इति सिद्धम् ।

वा— 'वत्सनिकान्ता हि' इति प्रस्तावनार्थं च वत्सोपचारस्पर्शनविधौ हेतुनिगदोऽर्थवाद उपपद्यते । मारणार्थत्वे तु आलभ्यमाने वत्सप्रियत्वं पशूनामुच्यमानम् असम्बद्धमेव स्यात् । यस्मादसौ मातुः प्रियो वत्सः, तस्मात् सहापनार्थमालब्धव्य इत्यसम्बद्धमेव स्यात् । इतरथा पुनः वत्सप्रिया माता पुत्रस्पर्शानुकरणात् तेन वा स्पृष्टा स्पृश्यमाना स्नेहात् प्रस्नविष्यति इत्युपपद्यते । तस्मादपि प्रयोजनवत्संस्कारभूतालम्भमात्रविधानम् एतत् इति सिद्धम् ।

शा— अग्निहोत्रदोहाधिकारे 'वत्समालभेत' इति श्रुतम् । तत्र असत्यपि देवतासंयोगे प्राणिद्रव्यकालम्भलक्षणाभावात् अत्रापि यागविधिः मन्यते । तन्नोत्तरम्, आलम्भो नाम स्पर्शमात्रं न तस्य यागपरत्वेन क्वचित् । संस्कारोऽपि च दृष्टत्वात् । अतोऽत्र आलम्भमात्रं वत्ससंस्कारो विधीयते ।

सोम— अत्र पूर्वपक्षस्यातिमन्दत्वेन प्रत्युदाहरणमाश्रितम् । प्रयोजनं पूर्वपक्षे अग्निहोत्रप्रकृतत्वात् पशुयागः अनुष्ठेयः । सिद्धान्ते तु वत्सस्पर्शानुकरणम् । सूत्रार्थस्तु— यागविधिः संस्कारविधिर्वा इति संशये यावदुक्तं संस्कारमात्रमेव विधेयम्, दोहनादिसंस्कार प्रायपाठात् इति ।

वि— ' वत्सालम्भो यजिः स्पर्शो वा, नाययागादिवद् यजिः ।, स्पर्शः स्याद् देवताद्यभावात् संस्कारः प्रत्ययात्तः ॥'

भाट्ट— यत्र ॥ न देवताभावान्न तत्र न यागकल्पना, अपितु संस्कारमात्रविधानम् । यथा अग्निहोत्रे ' वत्समालभेत ' इत्यत्र आलम्भमात्रं यागसंस्कारकत्वेन विधीयते । आलम्भोऽ स्पर्शमात्रवाचित्वात् ।

मण्डन— ' वत्सालम्भो यजिर्नहि ।'

शंकर— ' वत्सालम्भो यजिर्न तु ।'

■ वत्सालम्भाधिकरण ( २।३।६।१६–१७ ) 'दैवयज्ञाधिकरणस्य' ( २।३।५।१२–१५ ) अपवादः । कौ. १।१।७।१६, ● वत्सालम्भाधिकरणम् । वत्सालम्भस्य अनिश्चितविधेयवाक्यस्य भेदप्रयोजनम्, संस्कारविधिप्रायपाठ इति च ( न्यायशरीरम् ) । २।३।६।१७.

☞ वत्सक्षीरन्याय. । यथा वत्सविवृद्ध्यर्थं अचेतनं क्षीरं प्रवर्तते, तथा अचेतनाऽपि प्रकृतिः पुरुषमोक्षणाय प्रवर्तते इति सांख्याः । उक्तं च– ' वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ' इति । सांख्यका ७२९.

● वत्सजानुनामिं मेदस्य ( दर्शपूर्णमासार्थस्य ) पुरुषार्गमेन । भा. ४।१।२।१ वर्णक २.

● वत्सत्वं गोत्वैकार्थसमवायिनी वाक्यान्तराणि । तु. पृ. १०११.

● वत्सतरक् अशक्येनयो. समुच्चय, न विकल्पोऽपि यागयो अध्व., अश्वाने । वत्सतरक् उपरिवासस्य कार्ये भविष्यति, वाससु अधोवासस । भा. १२।३।१।१–२, ● वत्सतरक् विश्वजिति एकाहे परिधानार्थमाम्नाता ' अवभृथादुदेत्य वत्सत्वचं परिधत्ते ' इति । १२।३।१।१.

● वत्सत्वगहतवाससो. समुच्चयः अहतराम्नाते विश्वजिति । १२।३।१।१–२. मीको. पृ. ७५१ ' अहताम्नाते विश्वजिति वत्सत्वगहतवाससोः समुच्चय. ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● वत्सनिकान्ता । वत्स. नितरां कान्तः प्रियो येषां ताद्दशाः पशव. । के.

● वत्सरूपदक्षिणया आग्रयणगतया प्राकृतान्वाहार्यदक्षिणाया बाध. । भा. १०।३।६।३४.

● वत्सशब्दः गोऽजयोनिविशेषवचनः । वा. ३।४।४।१३ पृ. ९२०.

☞ वत्ससंयोगे व्रतचोदना स्यात् । ६।४।१२।३४ ॥

दर्शपूर्णमासयो. ' वर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायाम् ' इति श्रुतम् । तत्र वत्सेन संयोग. श्रुत. । तस्मिन् वत्ससंयोगे वर्हि संयोगे च श्रुते सति व्रतचोदना वर्हिर्वत्ससाधनकव्रतविधिः स्यात् । औषधस्य वर्हिदा वानो वर्हिषः वत्सस्य च भक्षण कर्तव्य इति पूर्व. पक्ष. ।

कालो वोत्पन्नसंयोगात् यथोक्तस्य । ३५ ॥

वाशब्देन प्रथमं पूर्वपक्षं निषिध्य द्वितीयं पक्षमाह । ' वर्हिषा वै पौर्णमासे व्रतमुपयन्ति वत्सैरमावास्यायाम् ' इत्यत्र यथोक्तस्य 'अमावास्यायां यजुर्वर्गस्य व्रतं व्रतयति' इति वचनान्तरेण प्राप्तस्य व्रतस्य कालो विधीयते व्रतस्य प्राप्तत्वात् कालस्य चाप्राप्तत्वात् । न तु वर्हिर्वत्ससाधनकं व्रतविधिरयम् । उत्पन्नसंयोगात् । उत्पन्नस्य सिद्धस्य व्रतस्य संयोगोऽयम्, न तु उत्पत्तिसंयोगः । उत्पन्नसंयोगात् यथोक्तस्य व्रतस्य कालोऽत्र विधीयते इति । व्रतं व्रतयति भक्षणीयं भक्षयति इत्यर्थ. । तथा च वर्हिराहरणकाले पौर्णमासे व्रतभक्षणम्, वत्सापाकरणकाले तु अमावास्यायां व्रतभक्षणं कर्तव्यं ।

अर्थापरिमाणाच्च ।३६॥

' वर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायाम् ' इति वाक्ये व्रतभक्षणे वर्हिराहरणकाल., वत्सापाकरणकालश्च विधीयते इति द्वितीयपक्षवादी पक्षान्तरे दोषमाह । वर्हिषा व्रतमुपयन्ति, वत्सेन व्रतमुपयन्ति इति विधाने स्वीकृते अर्थस्य अपरिमाणात् अर्थपरिमाणाभावात् अर्थपरिच्छेदाभावात् निश्चितार्थज्ञानाभावप्रसङ्गादित्यर्थं । किं वर्हिषोऽन्न व्रतयितव्य, किं वत्सेन हस्तस्थानीयेन व्रतयितव्यम्, उत वत्स संनिपात्य अन्यदेव किंचित् व्रतयितव्य इति नैव व्यवतिष्ठते आचार्य । वत्ससाधनकं व्रतं कुर्यात् इत्युक्तम्, कथ

इत्येतत्त अनिश्चितम् । तस्मात् अपि कालार्थः संयोगः । इति द्वितीयः पूर्वपक्षः ।

वत्सस्तु श्रुतिसंयोगात् तदङ्गं स्यात् । ३७ ॥

'बर्हिषा वै पौर्णमासे व्रतमुपैति वत्सैरमावास्यायाम्' इत्यत्र व्रतभक्षणे वत्सः बर्हिश्च तदङ्गं व्रताङ्गं स्यात् । अन्यतः प्राप्ते व्रते अङ्गतया बर्हिः वत्सश्च विधीयते । श्रुतिसंयोगात् 'बर्हिषा वत्सैः उपयन्ति' इति । काले तु लक्षणा स्यात् । तस्मात् बर्हिः वत्सश्च व्रताङ्गतया विधीयते इति तृतीयः पक्षः । तुशब्दो द्वितीयपक्षव्यावर्तकः ।

कालस्तु स्यादचोदना । ३८ ॥

'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति वत्सैरमावास्यायाम्' इत्यत्र न बर्हिर्वत्ससाधनकस्य व्रतस्य विधिः, नापि कालस्य विधिः, नापि बर्हिषो वत्सस्य वा व्रताङ्गतया विधिः, किंतु बर्हिराहरणस्य वत्सापाकरणस्य च काल निर्दिश्यते इति सिद्धान्तः । उक्तपक्षनिराकरणार्थः तुशब्दः । कालनिर्देशस्तु अचोदना न चोदना । कालो न विधीयते किंतु अनूद्यते । अयमेव द्वितीयपक्षाद्विशेषः । काल एव स्यात् परन्तु अचोदना इति । अचोदनात् इति कुतूहलपाठः । कालस्य चोदनाभावात् इत्यर्थः ।

अनर्थकश्च कर्मसंयोगे । ३९ ॥

'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायाम्' इत्यत्र कर्मसंयोगे बर्हिषो वत्सस्य च व्रतकर्मणा संयोगे स्वीकृते बर्हिः वत्सश्च अनर्थक एव स्यात् । तत्र बर्हिस्तावत् पशूनां अभक्षणीयमेव । 'अमापममाश व्रतं व्रतयति' इति च मांसनिषेधात् वत्सोऽपि अभक्षणीय एव । तस्मात् कर्मादिविधिः अयुक्तः । तस्मात् बर्हिराहरणकालस्य वत्सापाकरणकालस्य चानुवाद एवायम् ।

अवचनाच्च स्वशब्दस्य । ४० ॥

'वत्सैरमावास्यायां व्रतमुपयन्ति' इत्यनेन वत्सापाकरणकाले दध्नोऽभिभोजनं इति सिद्धान्तः । पूर्वपक्षी तु वत्सेन व्रतं इति वत्स निःसृत्य अपि तेन तन्मांसेन भोजनं इति मन्यते । तत्र, स्वशब्दस्य तादर्थ्यबोधकस्य शब्दस्य अवचनात् वचनाभावात् । न हि तादृशं वचनं विद्यते । तस्मात् कालानुवाद एवायं इति सिद्धान्तः । के.

वदतो व्याघातन्यायः । यथा– जिह्वा मे नास्ति, मम माता च वन्ध्येत्यादौ प्रसरतीति सर्वदर्शनसंग्रहे बौद्धमतेऽभिहितः इति । साहस्री ६९३.

वध्यघातकन्यायः । यथा भुजङ्गादिभूयिष्ठां वनभूमिं दृष्ट्वा भुजङ्गभुजादेरभावोऽवगम्यते, तथा प्रकृतेऽपि । साहस्री. ३८०.

'वध्यतां यत्परतां बालो नाऽनेनाऽर्थोऽपि जीवता । स्वपक्षहानिकर्तृत्वात् कुलाङ्गारतां गतः ॥' इति न्यायः । एवं च स्वस्तनाननपितृपैतामहादिचरितधर्मपरिभ्रष्टः पुत्रोऽपि वध्य एवेति भावः । साहस्री. १२३.

* वध्यवधानां नाराशंसो द्वितीयः प्रयाजः । शा. १।३।७।१७ पृ. २४८.

* वनम् । एकदेशावस्थिताः वृक्षा एव वनशब्देन चोद्यन्ते । सु. पृ. १०. * वनम् । भवति हि बहुना एकवचनान्तः शब्दः समुदायापेक्षः, यथा यूथ वन [illegible] परिषदिति । भा. २।२।१।२ पृ. ४८० । अपेक्षामात्रमेव समुदायस्य करोति नाभिधेयत्वम् । यूथवन शब्दावपि यदा समुदायोपसर्जनसमुदायिवचनौ तदा साकल्येन दृष्टान्तौ । यदा तु समुदायमेव ब्रूतः तदा तन्निमित्तैकवचनलाभमात्रेण दृष्टान्तत्वम् । वा. पृ. ४८०.

* वनवादः । भाष्यम्— असत्यपि अर्थान्तरे एवंजातीयको भवति प्रत्ययः– पङ्क्तिः, यूथम्, वनम्, इति यथा इति चेत्, न । उत्तरमुक्तमिदं वचनमुपपन्नम् । क्रियमाणे वने वनप्रत्ययो भवतीति । प्रत्यक्षेणाक्षिप्यन्ते वृक्षा अपि न सन्तीति । ... न च वृक्षव्यतिरिक्तं वनम् । यस्मान्नोपलभ्यते अतो वनं नास्तीत्यवगम्यते । यदि वने अन्येन हेतुना सद्भावविपरीतः प्रत्ययः उत्पद्यते मिथ्यैव वनप्रत्यय इति । ततो वनं नास्तीत्यवगच्छामः । . अथ वनादिषु नैव मिथ्येति, न वै न सन्तीति । तस्मादसम्बद्धः पङ्क्तिवनोपन्यासः । भा. १।१।५।८ पृ. ५०–५२ । बाल– वनवादे वनादिवत् परमाण्वादिपुञ्जात्मक एव अवयवी नार्थान्तरम् इत्या-

गद्धा । तस्य अप्रत्यक्षत्वेन व्यवहारानुपयोगित्वात् सत्तादिग्रहणप्रसङ्गेन तन्मूलकनैयायिकमतस्यापि इति तत्प्रामाण्यसिद्धपर्यन्तेन वनादिदृष्टान्तेनैवमुपपादनेन निरस्ता ।

० वनवादः— ( ' सास्नादिविशिष्टा आकृतिः ' इति भाष्यं आशङ्कते— ) ' सास्नादिभिर्विशिष्टत्वमाकृतेरुच्यते कथम् । यद्वाऽवयविसंबन्धि गोत्वं नावयवे स्थितम् ॥' १ ॥ ( समाधत्ते— ) ' एकावयविसंबन्धस्तेषां गोत्वेन विद्यते । तेनाऽसाधारणत्वात्ते स्युर्गोत्वस्योपलक्षणम् ॥ ' (गोत्वजातिमेषां जातिमुपलक्षयितुं सास्नाद्युपादानम् । अस्ति हि नैकानेकावयविसम्बन्धो जात्यन्तरेभ्योऽसाधारणं गोत्वेन, अतः ते शक्नुवन्ति तदुपलक्षयितुमिति ) २ ॥ ( किं पुनरुपलक्षणोपादाने प्रयोजनम् ? अत आह— ) ' पिण्डे सत्तादिजातीनां बह्वीनां समवेतता । ताभ्यो विशिष्यते गोत्वं सास्नादिभिरसंशयम् ॥ ' ३ ॥ ( काश्यपीयास्तु सास्नालाङ्गूलादि गोत्वे लिङ्गमिति पश्यन्तो व्यञ्जकत्वमेव सास्नादीनां मन्यन्ते, केचित्तु यथाश्रुतेन भाष्येण विशेषणत्वम्, तदुभयमयुक्तम्, इत्याह— ) ' न चैते व्यञ्जकास्तस्य गुणवद्वा विशेषणम् । ( कारणमाह— ) तथाहि नाऽगृहीतेषु तेषु स्यात्तेन्द्रियचोदनम् ॥' ( दूरस्थे च दूरस्थे, अदर्शनेऽपि तेषु गोत्वम्, अतो नैते नीलादिवत् द्रव्यस्य गोत्वस्य विशेषणम् ) ४ ॥ ( सास्नादिसामान्यापेक्षणे च गोत्वस्य तेषामपि व्यञ्जकभूतसामान्यान्तरापेक्षणात् अनवस्था इत्याह— ) ' तेषां च व्यञ्जकैः सैः स्यात् पुनर्ग्रहणकल्पना । तथा सत्यनवस्था स्यान्न स्याद्गोत्वावधारणम् ॥' ५ ॥ ( इतश्च न तेषां व्यञ्जकत्वमित्याह— ) ' सर्वेषु च गृहीतेषु सास्नादिषु भवेन्मतिः । गोत्वे, न चैषु सर्वेषु युगपद्बुद्धिसंभवः ॥' ६ ॥ ( तस्मात् यथा सत्तादिजातिभिरेव अवयवैरसमवेतैरिति महत्त्वं गोत्वे तथा अवयविरूपे तत्समवेते च गोत्वादौ महत्त्वम् । न तु तद्ग्रहणापेक्षम् । अन्यथा सत्ताणुत्वादिवत् अपेक्षितत्वप्रसङ्गः स्यादित्याह— ) ' तस्मात् सद्रूपमात्रेण महत्त्वादौ यथैव धीः । क्रियतेऽवयवैः पिण्डे, तथा जातिगुणादिषु ॥' ७ ॥ ( चोदयति— ) ' यद्येवमगृहीतेषु तेषु किं सा न जायते । ( यद्यपि सर्वे अवयवा न गृह्यन्ते, केचित् तावत् दूरस्थैरपि गृह्यन्ते, तदनभिगृह्यमाणे कंचिदप्यवयवं अगृहीत्वा गोत्वधीर्जनित इति । परिहरति— ) तद्देशव्यतिरेकेण प्राप्तं येन न विद्यते ॥ ' ८ ॥ ( तदेव विवृणोति— ) 'गृह्यमाणे तु गोत्वादौ नास्तीयत्कहेतुकः । सास्नादेः कस्यचिद्बोधः सद्देशत्वेन जायते ॥ ' ( समानदेशानि हि अवयवाऽवयविसामान्यानि, तेन गृह्यमाणे गोत्वे नत्वनुत्पन्नोऽपरस्य कस्यचिदवयवस्य तत्सामान्यस्य वा नान्तरीयकं ग्रहणं भवति ) ९ ॥ ( यद्वा न व्यवच्छेदमात्रेण उपलक्षणपरोऽत्र विशेषणशब्दः, किंतु यथाश्रुतोऽपि घटते व्याख्यानमित्याह— ) ' यद्वाऽत्यन्तमेवाद्धा तद्विशिष्टेति कीर्त्यते । ( ' न प्रत्यक्षं सर्वा आख्या भवितुमर्हति, स्वस्तिकः, वर्धमानकः इति हि प्रत्यक्ष दृश्यते ' इति भाष्यार्थमाह— ) नाथ. पराऽनुमानस्य न प्रत्यक्षेति बोध्यते ॥' ( परैः ननु आकृतिः प्रत्यक्षा अस्ति वा न वा इत्यनेन आकृत्यभावे अनुमानमन्तर्गीतम्, तस्य अनेन प्रत्यक्षत्वमेव अभिधीयते इति ) १० ॥

( किं पुनस्तदनुमानम् ? तत् दर्शयति— ) ' परेषां साधनं ह्यत्र नाकृतिः पिण्डतः पृथक् । तद्बुद्ध्याऽनाश्रयविज्ञानात्पङ्क्तियूथवनादिवत् ॥ ' ( पिण्डव्यतिरिक्ता नाकृतिः, तज्ज्ञाने तदनुभवत्वाभावात् । यद्बुद्धौ च यद्बुद्धिर्न भवति तद्वो व्यतिरिक्तमपि न भवति मृदादिभ्य इव मृण्मयम्, वृक्षेभ्य इव वनमित्यर्थः ) ११ ॥ ( किं पुनः स्वयं साधनमभिधाय दूषणमेवोक्तम् ? अत आह— ) ' सर्वत्र लोकसिद्धत्वात्तत्र वाच्यं साधनं स्वयम् । निषेधतां परेषां तु विरोधं दोषमो वदेत् ॥' ( लोकप्रसिद्धपदार्थव्यवहारिणामस्माकं न कश्चिदपि पदार्थः साधयितव्य, प्रसिद्ध तु तत्प्रमाणैरपह्नुवानेभ्यः लोकप्रसिद्धप्रमाणेन विरोध एव वक्तव्य इति ) १२॥ ( चोदयति— ) ' विसंवादो न दृश्येत यदि प्रत्यक्षताऽऽकृतेः । ( परिहरति— ) प्रमाणेऽपि

विसंवादात्तार्किकेषु कुतो नियम् ॥' १३ ॥ (सर्व
प्राणिप्रसिद्धेऽपि प्रत्यक्षादिप्रमाणे अस्त्येव तार्किकाणां
विसंवाद , तत्रश्च निरालम्बनवादिना प्रत्यक्षगम्यस्यापि
स्वपह्नवात् । अतः कुतस्तदीयविसंवादस्याऽऽदरणम् ?
अनादरणीय एव स इति । तदेव दर्शयति–) 'रूपा
द्यपि तेषां हि प्रत्यक्षत्वेन सम्मतं । विवादो
( महाजनस्य तु नास्त्येव क्वापि विप्रतिपत्तिरित्याह–)
नैव लोकस्तु जातौ विप्रतिपद्यते ॥' १४ ॥ (कथ
मवगम्यते इत्याह–) 'व्यवहारा हि दृश्यन्ते सामा
न्यार्थनिबन्धना । दधित्वकादिविनाशे कौण्डिन्य
ब्राह्मणादिषु ॥' १५ ॥ ( विशेषेण हि सामान्यस्य
बाधमाश्रयन्तो ब्राह्मणशब्दस्य सामान्यवाचित्वं मन्यन्ते,
यथैव रुचकाद्युदाहरणात् आकृतिं संस्थानं मन्यते
तदेव सामान्यमिति मन्वाना , तान्प्रत्याह–) 'आकृति-
जातिरेवाऽत्र संस्थानं न प्रकल्प्यते । ( कारणमाह )
न हि वाय्वग्निशब्दादौ किञ्चित्संस्थानमिष्यते ॥'
( नानासंस्थानपरिणामेषु वाय्वादिषु अस्ति वायुत्वादि
प्रत्यभिज्ञा , या संस्थानव्यतिरिक्तं जातिं साधयति )
१६ ॥ ( ब्राह्मणादौ च प्रतिपिण्डं भिन्न संस्था
नम् , तत्कथं सामान्यं स्यात् ? आह–) 'अन्य
दन्यच्च संस्थानं प्रतिपिण्डं प्रतीयते । ( इतश्च न
तत्सामान्यमित्याह– ) संयोगात्मकतायां तु विभागेषु
विनङ्क्ष्यति ॥' १७ ॥ ( शङ्कते ) 'अथ संस्थान
सामान्यं ( निराकरोति– ) अश्वादावपि तत्समम् ।
( अथ सत्ता आकृतिसामान्यमुच्यते, न तद् गोत्वजाते
रस्तीत्याह– ) न गोत्वेन विना ह्येतद् व्यवच्छिन्नं
प्रतीयते ॥' १८ ॥ ( मिथोऽपि मनुष्याश्वादिसंस्थान
सद्भावात्तत्रापि गोत्वादिप्रतीतिः स्यात् इत्याह– ) 'मर्त्य
प्रतिकृतीनां च संस्थाने सत्यपीदृशे । न गोत्वादि
मतिर्दृष्टा, ( उपसंहरति– ) तस्माज्जातिः पृथक्
तत ॥' ( संस्थानात् पृथग्भूता जातिरेव आकृतिः )
१९ ॥ ( इदं च जातिपरत्वं आकृतिशब्दस्य उपक्रमेऽ
भ्युपगतम्, इदानीमुपपादितम्, भाष्यकारोऽपि आकृत्यधि
करणे दर्शयिष्यति 'द्रव्यगुणकर्मणां सामान्यमात्रं आकृतिः'
इति । न हि गुणरूपं संस्थानं सम्भवति इति । एवं
कनकाद्युदाहरणमपि संस्थानातिरिक्तसामान्याभिप्रायमेवे
त्याह– ) 'रुचकादिषु सामान्यं रुचकत्वाद्युदा
हृतम् । ( अननुगतसुवर्णसंस्थानाभिप्राय वा इदमित्याह– )
भिन्नेषु चैषु सामान्यं सुवर्णत्वं प्रतीयते ॥' २० ॥
( एवं च संस्थानाभिप्रायत्वं दूषमात्रम्, न हि भिन्नेषु
रुचकादिसंस्थानेषु अनुवर्तमानं सुवर्णत्वं संस्थानं भवति ।
सुवर्णत्वस्य रुचकत्वादिविशेषानुगतमुपपादयति– )
'वर्धमानकभङ्गे च रुचकः क्रियते यदा । तदा
पूर्वार्थिनः शोकः प्रीतिश्चाप्युत्तरार्थिनः ॥२१॥
हेमार्थिनस्तु माध्यस्थं तस्माद्वस्तु त्रयात्मकम् ।
( त्रयात्मकं उत्पत्तिस्थितिविनाशधर्मात्मकमित्यर्थः । तदे
वोपपादयति– ) नोत्पादस्थितिभङ्गानामभावे स्यान्म
तित्रयम् ॥ २२ ॥ न नाशेन विना शोको नोत्पा
देन विना सुखम् । स्थित्या विना न माध्यस्थ्यं
( एवञ्च संस्थानस्य उत्पत्तिनाशयोरपि न सामान्य
स्यापि नाशोत्पत्ती, न हे यन्तर तस्य विनाशकमुत्पादक
वाऽस्ति, अत एव नित्यताऽपि सामान्यस्य सिद्ध
त्याह– ) तेन सामान्यनित्यता ॥' २३ ॥
( इतश्च सामान्यं संस्थानमित्याह– ) 'सुद्गमाषतिलादौ
च यत्र भेदो न लक्ष्यते । तत्रैकबुद्धिनिर्माह्या जाति
रिन्द्रियगोचरः ॥' ( बहुतरस्थानवितेषु मुद्गादिषु संस्थान
भेदमनुपलक्षयतोऽपि दूरस्था पुरुषा मुद्गत्वादिकमेव
एकबुद्धिगोचरमिन्द्रियेण गृह्णन्ते इति ) २४ ॥ ( इतश्च
प्रत्यक्षं सामान्यमित्याह– ) 'आराद्दृष्टे च पुरुषे
संदेहो ब्राह्मणादिषु । न स्याद्यदि न गृह्येत सामा
न्यं चक्षुरादिना ॥' ( वस्तुमात्रनिश्चयो हि संदेहे न
ब्राह्मणादिसामान्यविशेषेन , अतो गोत्वादिभ्यो यावत्
ब्राह्मणादिषु च अनुवृत्त नरत्व नाम सामान्यं,
यत्प्रत्यक्षगतं तत्र संदेहः ) २५ ॥ ( यदि
प्रत्यक्षा जातिः किमिति तर्हि नरत्वादिवत्
ब्राह्मणत्वादिकमपि सहसैव न गम्यते ? ) 'तस्यो
पलक्षणं चापि क्वचित् केनचिदिष्यते । रूपा
दीनां विशेषेण देशकालाद्यपेक्षया ॥ २६ ॥
सुवर्णं व्यज्यते रूपात्ताम्रत्वादेरसंशयम् । तैलाद्
घृतं विलीनं च गन्धेन च रसेन च ॥ २७ ॥

भस्मप्रच्छादितो वह्निः स्पर्शनेनोपलभ्यते । अश्वत्थादौ च दूरस्थे निश्चयो जायते शनैः ॥ २८ ॥ संस्थानेन घटत्वादि ब्राह्मणत्वादि योनितः । कचिदाचारतश्चापि सम्यग्राजाऽनुपालितात् ॥' २९ ॥ ( योनितो मातापितृसम्बन्धात्, यथा च मातापितृज्ञानाऽपेक्षा ब्राह्मणादेः प्रत्यक्षत्व तथा अर्थवादाधिकरणे ( १।२।२ ) स्वयमेव वक्ष्यति । कचित्तु देशे सम्यग् राज्ञा अनुपालितादपि आचाराद् ब्राह्मण्यादिनिर्णयः स च देशापेक्ष , यस्तु यमन्ताऽऽघातादिना ब्राह्मण्यादिनिश्चयः स कालापेक्ष., सर्वत्र रूपाद्यपेक्षैरिन्द्रियैरेव सुवर्णत्वादिनिश्चयः, अपरोक्षमाणादिति । किं पुनरिय जातिः प्रत्येकं पिण्डेषु वर्तते, व्यासज्य वा, न तावदेका प्रत्येकं अनेकत्र युगपदखण्डं वर्तितुम्, व्यासज्य वर्तितुमपि परस्परसापेक्षेषु वृत्ति , सा कथमतीतानागतवर्तमानेषु अनन्तेषु पिण्डेषु समवेता । प्रत्येकं च गोबुद्धिर्न स्यादत आह- ) ' प्रत्येकसमवेतार्थं दृष्टत्वान्न विरोत्स्यते। (इत्थं हि प्रतिपिण्डं जातिः ' इयं गौः, इयमपि' इति । न चैवमस्या एकत्वहानिरित्याह- ) तथा सत्यपि नानात्वं नैकबुद्धेर्भविष्यति ॥' ३० ॥ ( किमियं विभुः प्रादेशिकी वा, तथा सावयवा निरवयवा वा इति जिज्ञासायामाह- ) ' विभुत्वाऽवयवाऽभावौ प्रतिपाद्यौ च तत्त्वतः ॥' ३१ ॥ ( एतदेव दृष्टान्तेन उपपादयति- ) ' यथा च व्यक्तिभेदेनैव दृश्यमाना पुनः पुनः । कालभेदेऽप्यभिन्नैव जातिर्भिन्नाऽऽश्रया मती ॥' ३२ ॥ ( अपरं पुनः, किं कार्त्स्न्येन सा एका एकत्र वर्तते अनेकत्र एकदेशेन वा अवयवश इति, कोऽयं प्रश्नोऽवयवा एव जातिरित्याह- ) ' कार्त्स्न्याऽवयवशो वृत्तिः अतो जातौ न युज्यते । ( कथमित्याह- ) न हि भेदविनिर्मुक्ते कार्त्स्न्यभागविकल्पनम् ॥' ३३ ॥ ( यत्र हि कृत्स्नतोऽवयवशो वा भेदः तत्रैतत्स्यात्, भेदापेक्षो हि कृत्स्नशब्द., यदिदं द्रव्यमपि अनवयवावयवैरस्या जातौ अवयवत्वेनैति । यदि न देशाऽतिवर्तते, कथं तर्हि वर्तते अत आह- ) ' तस्माद्व्यक्तिषु जातीनां वृत्तिरस्तीति गम्यते। विशेषाऽवसराऽभावात्तन्मात्रेणात्र निश्चिते ॥' ३४ ॥ ( वृत्तिरेवात्र प्रमाणवती, न विशेष इति । कथं पुनः स्तम्भादिषु दृष्टो विशेषो जातौ नाश्रीयते ? अत आह- ) ' या चावयवशो वृत्तिः स्तम्भसूत्रादिषु दृश्यते । भूतकण्ठगुणादेश्च प्रतिपिण्डं समाश्रितः ॥ ३५ ॥ तत्रावयवयोगित्वमविभुत्वं च कारणम् । आकृतेस्तदभावेन न प्रसक्तमदो द्वयम् ॥' ३६ ॥ ( कण्ठगुणः कण्ठभूषणं हारादि, प्रतिपिण्डं समाश्रितः कार्त्स्न्यम्, एकत्र कृत्स्नस्याऽन्यत्राऽवृत्तिः, सा च अविभुत्वात् हारादीनाम्, जातिस्तु विभुः, स एकत्राऽपि कृत्स्नाऽपि वृत्त्या अन्यत्रापि अविरुद्धा आश्रयान्तराऽनपेक्षैव वर्तते, तथा दर्शनात्, इदमेव हि विभुत्वमिति । ननु द्वैविध्यमात्रा वृत्तिः व्यापकनिवृत्त्या जातेर्निवर्तेत, अत आह- ) ' न च द्वैविध्यमेवेति वृत्तेरीत नियामकम् । त्रिविधाऽपि हि दृष्टत्वात्सम्भवेद् द्विविधा यथा ॥' ३७ ॥ ( व्याप्तिरेवाऽत्र नास्ति, प्रकारान्तरस्यापि प्रत्यक्षेण जातौ दृष्टत्वात् द्वैविध्यनियमेन तस्य सम्भव. । अथ जातेरन्यत्र प्रकारान्तरं न दृष्टं इति चेत्, तत्तुल्यं रूपादिष्वपीत्याह- ) ' इतरत्र न दृष्टं चेत् रूपादिष्वपि तत्समम् । नैव ह्यन्योन्यतुल्यत्वं तयोनाप्यनया सह ॥' ३८ ॥ (न चैकत्र दृष्टस्य अन्यत्राऽदर्शनात् अभावो भवति, अनैकान्तिकत्वादित्याह- ) ' न ह्यन्यस्मिन्नदृष्टत्वाद्वृत्तेरौष्ण्यं प्रणश्यति । ( स्यादप्यन निदर्शनाशङ्का, यत्रानुमानगम्येव वृत्तिः स्यात्, न त्वेतदस्तीत्याह- ) न चानुमानगम्येयं कार्त्स्न्येनैव निदर्शनम् ॥' ३९ ॥ ( सा तु प्रत्यक्षगम्या । तत्सादृश्येन कदाचारणरूपेण प्रत्यक्षदृष्टाया वृत्तेर्वृत्त्यन्तरकल्पनेन निराकरणं युक्तम्, तस्मादप्यविशेषादित्याह- ) ' स्वरूपतश्च दृष्टाया वृत्तेर्न परकल्पन. । निराक्रियोपपद्येत तद्विशेषमपश्यताम् ॥' ४० ॥ ( तत्र अयुक्तमित्याह- ) ' अदृष्टाऽसम्भवाथापि या प्रमाननिराक्रिया । साऽयुक्तैव, ऽनुमानेन प्रत्यक्षज्ञानबाधनात् ॥' ४१ ॥ ( जातेर्दृष्टे वृत्तिस्वरूपे च कार्त्स्न्यादिप्रकार. तदसम्भवात् तत्प्रतिनिराकरणं तत्र युक्तमिति । उपसंहरति- ) ' तस्मादसम्भवो यस्य तन्मात्रस्यैव साधनम् । युक्तं न

तावताऽन्योऽपि संभवन् बाधमर्हति ॥' ४२ ॥ ( एवं स्वमतेन व्यक्तिदेशमेव सामान्यमाश्रित्य दूषणं समाहितम्, यदा तु वैशेषिकपक्षेण सर्वगतस्य जातेस्तदाऽप्यदोष इत्याह– ) 'तेन वैशेषिकोक्ताऽपि जातिः सर्वगता मता । व्यज्यते यत्र पिण्डेन वर्णवत्तत्र गृह्यते ॥' ४३ ॥ ( येनैव दर्शनबलेन प्रकारान्तर मुखेनाश्रितम्, तेनैव सर्वगताया अपि जाते केषुचित्पिण्डेषु प्रत्येकसमवायश्रुत्या अभिव्यक्तिः कात्स्न्र्यंभागविकल्पशून्यामाश्रित्य क्वचित् ग्रहणं समर्थ्यते इति । एवमुपपादितां जातिं प्रयोगेण दर्शयति– ) 'तस्मात्पिण्डेषु गोबुद्धिरेकगोत्वनिबन्धना । गवाभासैकरूपाभ्यामेकगोपिण्डबुद्धिवत् ॥' ४४ ॥ ( एकगोत्वालम्बनत्वमेव साध्यम्, गोत्वग्रहणं चानुवादः, गवाभासत्वात् एकरूपत्वात् इति च हेतुद्वयम्, यत् खलु गवाभासमेकरूपं ज्ञानं तत् एकालम्बनम्, यथा एकपिण्डे गोबुद्धिरिति । प्रयोगान्तरमाह– ) 'न शाबलेयाद्गोबुद्धिस्ततोऽन्यालम्बनाऽपि वा । तदभावेऽपि सद्भावाद् घटे पार्थिवबुद्धिवत् ॥' ४५ ॥ ( प्रत्येकसमवायेऽपि प्रयोगमाह– ) 'प्रत्येकसमवेताऽर्थविषया वाऽपि गोमतिः । प्रत्येकं कृत्स्नबुद्धित्वात् प्रत्येकव्यक्तिबुद्धिवत् ॥' ४६ ॥ ( तथा तस्यापि नानात्वं नेत्यत्र प्रयोगमाह– ) 'प्रत्येकसमवेताऽपि जातिरेकैकबुद्धिभिः । नन्तुगेष्विव वाक्येषु ब्राह्मणादिनिवर्तनम् ॥' ४७ ॥ ( यच्च सादृश्यरूपस्य सामान्ये निराकृतम्, तत्रापि प्रयोगमाह– ) 'न च सादृश्यविषया गोधीस्तादृग्रूप्यजन्मन । प्रामाण्ये सति सद्बुद्धि प्रत्यभिज्ञैवचस्तुनि ॥' ४८ ॥ ( गोबुद्धिः धर्मिणी, सदृश. अन्या. न विषय. इति साध्यो धर्म., तदेवेदमित्येवंरूपोत्पत्तेरिति हेतुः, प्रामाण्ये सति इति च विशेषणम्–अबाधितरूपत्वे सतीति यावत् । यत्र यत्र अबाधितरूपा–तदेवेदम्–इत्येवंरूपोत्पत्तिः, तत्र तत्र न सदृशो विषयो भवति यथा एकवस्तुप्रत्यभिज्ञाया इति दृष्टान्तः । 'व्यामोह इति चेत्, न असति प्रत्ययविपर्यासे व्यामोह इति शक्यते वक्तुम्' इति भाष्यार्थमाह– ) 'नैकरूपमतिर्गोत्वे मिथ्या वक्तुं च शक्यते । नात्र कारणदोषोऽस्ति बाधकप्रत्ययोऽपि वा ॥' ४९ ॥ ( असत्यर्थान्तरे एकजातीयके भवति प्रत्यय पङ्क्तियूथं वनमिति यथेति चेत् इति चोद्यस्य उत्तरभाष्यम् 'असम्बद्धमिदं वचनमुपन्यस्तम्' इति, तदाक्षिपति– ) 'यदा व्यस्तव्यतिरेकेण साध्यस्यादन्यथाऽऽकृतेः । वनसाम्यासमेकान्ततताऽसंबद्धता कथम् ॥' ५० ॥ ( यत्तावद् व्यक्तिव्यतिरेकेण ग्रहणं जातिसद्भावे साधनं सिद्धान्तिनोक्तं तस्य अनैकान्तिकत्वमतो नोच्यते, वनस्य वृक्षव्यतिरेकेण गृह्यमाणत्वात्, तत्कथं असंबद्धत्वमिति । समाधत्ते– ) 'साधनं चेन्मयोच्येत युज्येत व्यभिचारिता । दूषणत्वधिया त्वेतदसंबद्धत्वमुच्यते ॥' ५१ ॥ ( न ह्यस्माभिः साधनमुक्तम्, किंतु प्रत्यभिज्ञाविरोधात् दूषणम्, तस्य व्यभिचारोपन्यासोऽसम्बद्ध एव, न हि प्रत्यक्षस्य व्यभिचारोऽपेक्षणीयमिति । कस्य पुनरिदं दूषणम् ? अत आह– ) 'नास्तित्वहेतोरप्येषा प्रत्यक्षेण विरुद्धता । ( कः पुनरसौ ? ) परस्य साधनं ह्यत्र यच्चापूर्वमुदाहृतम् ॥' ५२ ॥ ( अथ वनबुद्धिवज्जातिबुद्धेरपि प्रत्यक्षाभासत्वान्न तद्विरोधो हेतुदूषणमित्युच्यते, अत आह– ) 'प्रत्यक्षाऽऽभासता चात्र नैवास्ति वनबुद्धिवत् । ( कथमित्याह– ) कस्यचिन्न हि मिथ्यात्वात्सर्वं मिथ्येत्यसंगतिः ॥' ५३ ॥ ( तत्र पुनरप्यसंगति असंबद्धत्वमिति । अत्रैव दृष्टान्तमाह– ) 'यथा वनादिबुद्धीनां मिथ्यात्वान्न रसादिधीः । मिथ्यैवं जातिबुद्धिः स्याद्विशेषो वाऽभिधीयताम् ॥' ५४ ॥ ( ननु एवमपि वनबुद्धेर्जातिबुद्धेश्च विशेषो वक्तव्य, येन प्रामाण्याऽप्रामाण्ये व्यवतिष्ठेते, तत्राह– ) 'वृक्षेभ्यो व्यतिरेकेण वने चेन्मतिर्भवेत् । दुष्टत्वदोषापत्तिश्च स्यादाहतौ तु न विद्यते ॥' ५५ ॥ ( 'दोषसद्भावे न विशेष इति कथमवगम्यते, दृष्टत्वदोषादित्याह– ) 'सन्निकृष्टस्य वृक्षेषु बुद्धेरेकत्वं निवर्तते । ( जातिबुद्धिस्तु न कथं निवर्तते इत्याह– ) केनचित्तु प्रकारेण जातिबुद्धिर्न नश्यति ॥' ५६ ॥ ( ननु वनमध्यस्थस्यापि वनमित्येकरूपा कल्पनात् बुद्धिर्जायते, ततः कथं दूरत्वादिदोषेण प्रामाण्यं निवार्यते ।

द्रव्यत्वाऽनन्यत्वादिकं बाधितं किं विध्येत आह–) 'यस्त्वनेकत्ववादास्य न संदिग्धाऽप्रमाणता । ज्ञानं संदिग्धे यत्र तत्र न स्यात्प्रमाणता ॥ ७९ ॥ दृष्टाऽनैकान्तिकं यस्त्वित्येतं ज्ञानं सुनिश्चितम् । ( वस्तुविषयो हि अस्माकं अनेकान्तवादो नैकाकारं संशयति, यत्र तु ज्ञानमेवाऽवस्तुभूतं यथोक्तं भ्रमात्मके 'किमयं स्थाणुः किं वा पुरुषः' इति, तत्र संशयात् अप्रामाण्यं भवति, इह तु अनेकस्यैव वस्तुनि निर्णयात् कुतोऽप्रामाण्यमिति । यत्तु अभेद वादिभिरुक्तम्, यथा घटे समस्तत्ववादिनोऽवयवा बुद्ध्या निरूप्यन्ते तदा अवयवी नाम न कश्चिदुपलभ्यते, तस्मात् न अस्ति अवयवेभ्यो भेद इति, तदयुक्तम्, भेदपक्षेऽपि हि अवयवेषु निरूप्यमाणेषु अवयविप्रतीतिरस्त्येव, समुदायाऽनेकावयवसामग्री असौ, तेषु निरूप्यमाणेषु तस्यापि विनाशो बुद्धिस्थो भवति, तदाह–) पिण्डस्याऽवयवान् बुद्ध्या याऽवयव्यप्रतीतता ॥८०॥ बुद्धिस्थत्वाद्विनाशस्य मौलस्यापि युज्यते । ( वृत्तिनिरासं परिहरति– ) वृत्तिश्चाऽवयवेष्वस्य व्यासज्यैव प्रतीयते ॥' ८१ ॥ ( अवयवेषु अनेकेषु वृत्तिं व्यासज्यवृत्तिरिति । यदपि विकल्पितं किं कार्त्स्न्येन एकदेशेन वृत्तिः किं वा अवयवस्य इति, तत् जातिवदेव अवयविनोऽपि आकारशब्दमेव, 'न हि भेदविनिर्मुक्तं कार्त्स्न्यमागमेषु वचनम्' इति सूत्र ( श्लोवा वनवाद श्लो. ३३ ), न समस्तनिःत्यवयवेषु अपितु अवयवान्तरापि अस्ति, तदाह– ) 'यत्र सामान्यादिसम्बन्धात्प्रत्ययोऽत्र जातिवत् । ( पुनरपि विशेषनिमित्तोपक्रमस्य सास्नादिमुण्डत्वान्तरे दोषमाह– ) सास्नादिगुणहेतुश्चेत्कत्वमित्र गोत्वबुद्धिवत् ॥' ८२ ॥ ( कथमाह ) 'भिन्न एव हि सास्नादिः पिण्डात् पिण्डान्तरे यतः । ( अथ सास्नादिरयं तत्र समवायात्मा न समुदाय तदात्मानमेवेयम्, अतोऽन्यत्रापि भवति उच्यते, तदाह– ) न चावयवमात्रान्यं परैरपि मुपपद्यते ॥' ८३ ॥ ( उपसंहरति– ) 'तस्मात् सास्नादितोऽन्येन गोत्वधीरुपजायते । ( वनबुद्धिरपि यदि वनावयवेषु अभावनी न समुदायस्य स्यादत आह– ) वनान्तरेषु या बुद्धिर्वनमित्युपजायते ॥ ८४ ॥ तस्यामप्येतेन वृक्षत्वं मार्गं बहुत्वं विदुः । ( अस्ति हि अस्माकं वृक्षत्वं बहुत्वसामान्यं समुदायसामान्यं च, यत सर्वेषु वनेषु वृक्षगतबहुत्वोपाधिकृता वृक्षसमुदायकृता वा वनबुद्धिर्युक्तेति । स्यादप्येवं वृक्षस्तिन्बहुत्वाभिधाने बहुवचनं वृक्षत्वाभिधाने तत्समुदायाऽभिधाने च वनमित्येकवचनम्, यदा हि वृक्षा ( हि ) बहवो वनमिति यत्र तदा किं अनुपपन्नमेव एकवचनम्, इत्याह– ) एकत्वेऽप्याकृतेर्यद्बहुत्वं व्यक्त्यपेक्षया ॥ ८५ ॥ बहुत्वे हि तथा व्यक्तेरेकत्वं जात्यपेक्षया । ( यथा हि जातेर्व्यक्त्यात्मना बहुत्वम्, एवं व्यक्तीनामप्यस्ति जात्यात्मना एकत्वम्, जातिग्रहणं देशादीनामपि उपलक्षणार्थमिति । भवत्वेवम्, बहुवचनमपि तु स्वभावव्यवहारेण किमिति न भवति, ततश्चैकस्मिन्नपि वृक्षसमुदाये 'वनानि' इत्यपि प्रयोगः स्यादत आह– ) एकानेकाभिधाने च शब्दा नियतशक्तयः ॥' ८६ ॥ ( नियतशक्तयो शब्दा, केचिदेकत्वेनैवाऽवच्छिन्नमर्थं वदन्ति, केचित्तु बहुत्वेनैव, केचिदुभयथा अपि प्रयोगभेदेन वदन्तीति, तथोदाहरणानि दर्शयति– ) केचिद्दर्शयित्वा ससत्याभ्यां गमयन्त्यव्ययान्तिषु । यथो व्रीहिः सुनिष्पन्न इति जातिं ससत्यया ॥ ८७ ॥ पत्नीसमूहनाशो तु व्यक्तिमात्रविसत्यया । वपिञ्छादिव्यानेष्वतु प्रतीतिर्व्यक्तिसत्यया ॥ ८८ ॥ व्यक्तिजाती वयस्यन्ये द्रव्याऽवयवसत्यया । अस्मानिति यथैकस्मिन् पाशानिविदिरिति ॥' ८९ ॥ ( व्रीहिशब्दश्च अन्येषामपि जातिशब्दाना बुद्धीनामुपलक्षणाय, पत्नीशब्दोऽपि औपाधिको व्यक्तिविशिष्टशक्तिमानो व्यक्तिवचन, स च आकृतिसत्यया व्यक्तिमवच्छिनत्ति, 'पत्नी गच्छ' इति अभिमते द्व्येनैकु नैकवचनस्यैव प्रयोगात् आकृतिरूपया शक्त्या तदेव प्रवृत्तिनिमित्त तत्सम्बन्धिनेवेनोच्यते, न हि पत्नीत्व नाम जातिरस्ति । 'अस्मान्' इति व्यक्तिमात्रसत्यया, 'अदिति पाशान्' इत्यत्र मन्त्रे जातिवचन पाशशब्द एकस्मिन् पाशे बहुवचनान्त प्रयुज्यमानो जाति द्रव्याऽवयवसत्यया वक्ति । यद्यपि चात्र

卐 वनस्पतियागे नोपस्तरणाभिघारणे ॥

वनस्पतीज्यां प्रकृत्य 'सकृदुपहत्येन यजति' इति श्रुतेन सकृद्गृहीतेन तदीयोपस्तरणाभिघारणनिवृत्तिः । स्विष्टकृदिकारत्वेनैव सकृद् गृहीतत्वमात् । इति प्राप्ते, ससंस्कारस्य अयावदेन तन्निवृत्तौ पश्चात्त्रिना हविर्द्विरवदानस्य प्राप्तौ तदर्थोऽयं नियमः । 'पृषदाज्या-द्वयुद् ०' इति शास्त्रान्तरीयवचनात् हविष एव चतुर्गृहीतपक्षेऽपि संस्कारनिवृत्तिः । सङ्कर्ष २।२।१०

● वनस्पतियागे नियमेषु विधिवत् वनस्पतिशब्देनैव देवताया अभिधानं ज्योतिष्टोमे । १०।४।२६।३७ १२ मीमांसा पृ ३८९ 'मनुष्यवनस्पतियागयोर्निगमेषु०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

卐 वनस्पतियागयाज्यायां न देवतोपलक्षणम् ॥

पशौ वनस्पतियागस्य स्विष्टकृद्विकारत्वात् दार्शिक-स्विष्टकृद्याज्यायां इव देवतोपलक्षणनिगमानामुपलम्भात् वानस्पत्ययाज्यायामपि ते स्युः । इति प्राप्ते, वानस्पत्ये प्रैषनिगदे तासां सकृदुपलम्भितत्वेन पुनरुपलम्भे मानाभावान्न स्युः । अनौपलम्भिकप्राप्तेन च याज्यास्विष्टकृद्याज्यायामपि नोपलम्भनीया । याज्याहोमत्वात्तु वनस्पतियाज्यायामपि पुनरुपलम्भमभ्युपगच्छति । सङ्कर्ष २।४।२०

● वनिष्ठु अग्नीधे इडाभक्षविकारः पशौ । भा १०।७।५।१७ ● वनिष्ठु । पशौ इडायाः वनिष्ठुमग्नीधे' अनेन वनिष्ठुना अग्नीध इडाभागकार्यं । अथ च इडापात्रे हृदयादिवत् प्राश्यते । चि १०।७।५ ● वनिष्ठु वपासन्निहित तद्गतो भागविशेषः । धूर्तस्वामी तु स्थविरान्त्रविशेष इत्याह । सोम १०।७।५ ● 'वनिष्ठुमस्य मा राविष्टोरूक मन्यमानाः' (मैत्रा ३।६।६।३) इति मन्त्र निषेधविधिरूप ।वाक्य पृ ६५

卐 वनिष्ठु अधिकरणम् । वनिष्ठुना अग्नीध प्राकृतकृत्स्नेडाभक्षस्य निवृत्तिः अग्नीषोमीये पशौ । अग्नीषोमीये पशौ वनिष्ठु अग्नीध इडाभक्षविकार ॥

अग्नीधश्च वनिष्ठुरध्युप्लीवन् । १०।७।५।१७॥

भाष्यम्— अस्ति अग्नीषोमीये पशौ श्रूयते 'वनिष्ठुमग्नीधे' इति । तत्राधिकरणप्रदेशः । तत्र च संशयः इहापि । किं वनिष्ठु अग्नीधे विकारो भक्षस्य उत तस्य भागनियम इति । तत्र स एव पूर्वपक्षः । अपूर्वत्वात् विधीयते । कस्मादिकार इति । तस्य तदेवोत्तरम् । वचनान्तरेण प्राप्तत्वात् भागनियम इति । ततस्तदेवोच्यते । 'अनस्थिभिरिडां वर्धयन्ति' इति अनुप्राप्तत्वात् अप्राप्तो वनिष्ठुर्विधीयते इति । अथाह, ननु वनिष्ठुरपि तत्र गृहीतत्वात् प्राप्त एवेति । अत्रोच्यते । 'वनिष्ठु प्राश्यति' इत्येतावचनं । तेन इडायाः प्राशनमात्रं तस्य विधीयते इडासंस्कारार्थेन, नाग्नीधस्य, न तस्य भक्षशब्दसंयोगः । तस्मात् प्राशनमात्रम्, न तस्य भक्षे प्राप्तिः । पूर्वस्मिन् वचने न (च ।) (वचनेन इति तृतीयान्त पाठान्तरम्) चतुर्थीसम्बन्ध, तस्यैतत् अग्नीध (धे इति क्वचित्) इति । चतुर्थीसम्बन्धेन भक्षण विधीयते । तस्मात् पूर्वेणाधिकरणेन अनुपपन्नाशङ्काया तुल्यता सूत्रेणातिदिश्यते । सर्वेष्वेवाधिकरणप्रदेशेषु अनुपपन्नाशङ्का निरस्यते ।

शा— 'वनिष्ठुमग्नीधे हरति' तत्रापि पूर्ववदेव भक्षणपूर्वोत्तरपक्षौ । विशेषाशङ्का तु वनिष्ठो इडायाः प्राशनवचनादस्ति प्राप्तिरिति । सत्यमस्ति प्राशनं तत्तु इडासंस्कारार्थं उपस्तरणादिवत् । अतो नास्य इडाभक्षत्वम् । न च भक्षसंयोगोऽस्ति, यथाग्नीधे प्राप्स्यतीति । न चतुर्थीनिर्देशः प्राशनमिवास्ति । तस्मात् अप्राप्तो वनिष्ठुः । 'अग्नीधे वनिष्ठु' इति चतुर्थ्यां अग्नीत्सम्प्रदाने हरणे विधीयते इति प्राकृतस्य इडाभक्षस्य विकारः ।

सोम— वनिष्ठु वपासन्निहितं तद्गतो मांसविशेषः । धूर्तस्वामी तु स्थविरान्त्रविशेष इत्याह । कल्पके तु 'अग्नीधो हरति' इति पाठयन्नपाठ्यम् विषय षष्ठ्या चतुर्थी लभ्यते इत्याह ।

वि— 'वनिष्ठुरपि तद्वत् स्यात् प्राप्ति प्राशनतो यदि । इडासंस्कार एवायं भक्षो विधीयते तत ॥'

भाट्ट— तत्रैव 'वनिष्ठुमग्नीधे हरति' इति श्रुतो वनिष्ठुरपि तथैवेडाभक्षविकारः । यद्यपि च 'हृदये वनिष्ठु' इत्यनेन वनिष्ठो इडायाः प्राशनं विहितं तथापि न तस्य इडात्वम्, न वा तत्प्राशनं भक्षणवत् भागाश्रय, अपि तु

कर्तृसंजननार्थाः, तैर्विनाऽपि सिद्धे कर्तृत्वे फलभावानुत्पादात्। ऋत्विक्फलं च दक्षिणाख्यमात्मकं विनाऽपि तैरुपलभ्यते, न तु याजमानम्। तस्मात् यथैव प्रधानानि पुरुषार्थत्वात् यजमानकर्तृकाणि भवन्ति, एवमेतेऽपीति। यथाप्राप्तरूपाणामेव चैषां यजमानगामित्वम्, इति न दन्तधावनं अध्वर्युणा गृहीत्वा यजमानस्य दन्ताः ज्ञापयितव्याः। केशश्मश्रुवपनेऽपि नियमं नापितकर्तृकमिति नाध्वर्योः क्षुरग्रहणापत्तिः।

व्यपदेशाच्च ॥ ५ ॥

भाष्यम्— परस्मैपदव्यपदेशश्च भवति 'तमभ्यनक्ति' 'दरेणीकयाऽनक्ति' इति च। अन्यो यजमानस्य अञ्जनमभ्यञ्जनं (च) करोतीति गम्यते।

वा— अध्वर्युव्यापारे च 'अभ्यनक्ति' इति परस्मैपदेन निर्देशात् 'अभ्यङ्क्ते' इत्यात्मनेपदयुक्तो विधिर्यजमानस्येति गम्यते।

गुणत्वे तस्य निर्देशः ॥ ६ ॥

भाष्यम्— यदुक्तं समाख्यानात् यथावेदमिति। नैतदेवम्। गुणत्वे तस्य निर्देशः। तत्र यत्र समाख्या नियामिका इष्यते, यत्र कर्मणः प्राधान्यम्। यद्येतस्याः पुरुषाः प्राप्ताः, तत्र समाख्यया नियमः। कल्प्यो हि यजन्तो याजनादिभिः पुरुषाणां अदृष्टार्थत्वात्। कल्प्यश्चारादुपकारकैः। न च कल्प्ते उपपद्यमाने कल्प्यः शक्यः कल्पयितुम्। तस्मात् पुरुषप्राधान्ये समाख्या नियामिका स्यात्।

वा— यत्तु इतरकर्मवत् समाख्यया नियम्यत इति। तत्र समाख्या नियामिका भवति, यत्र कर्तुरपेक्षा। इह स्वामी, यदर्थः परिक्रयः। स च कर्तुः कश्चित् गुणत्वमापादयितुं क्रियते, न संस्काराय। ('कल्प्यो हि' इत्यादि भाष्यं उक्तान्यथानुपपत्त्यभावेन व्याचष्टे— सु) तदर्थमपि कल्पनीयो हि यजनादिभिः सह विनैतदपेक्षया सम्बन्धः, इतरैः पुनः कल्प्योऽपेक्षणादिति।

चोदनां प्रति भावाच्च ॥ ७ ॥

भाष्यम्— चोदनेयमपूर्वं ब्रूमः। अपूर्वं प्रति संस्कारा विधीयन्ते। ते सम्भवन्तु द्रव्येषु कल्प्यन्ते। संनिकृष्टद्रव्याभावे च विप्रकृष्टेषु भवेयुः। यदा तु संनिकृष्टे द्रव्ये सम्भवन्ति, तदा न विप्रकृष्टेषु प्रयोक्तव्याः, कृतार्थत्वात्। तस्माद्याजमाना इति।

वा— प्रधानापूर्वाश्रयत्वाच्च यजमानस्य संस्काराः संनिकृष्टाः सुखमपूर्वेण गृह्यन्ते। तत्सिद्ध्यर्थत्वाच्च तत्रैव कर्तव्या इति।

अतुल्यत्वादसमानविधानाः स्युः ॥ ८ ॥

भाष्यम्— इदं पदोत्तरं सूत्रम्। अथ कस्मात् समानविधाना भवन्ति, अविशेषविधानाद्धि पुरुषमात्रस्य प्राप्नुवन्ति। तदुच्यते। नैतत् समानं सर्वपुरुषाणां विधानम्। कुतः। अतुल्यत्वात्। अतुल्या एते एतद्विधानं प्रति। का अतुल्यता? यत् यजमानस्य विहिताः, न ऋत्विजाम्। कथं यजमानस्य विहिता इत्यवगम्यते? अर्थात् 'स्वयं प्रयोगे स्यात्' (३।७।८।१८) इति। तस्याविशेषात् ऋत्विजामपि विहिताः। प्रयोजनाभावात् अविहिता इति ब्रूमः। कथं प्रयोजनाभावः? ऋत्विग्भिः क्रियमाणाः, न यजमानेन कृता न कारिताः। अतदर्थत्वात् परिक्रयस्य। स्वयंकृताश्च नार्थिन उपकुर्वन्ति। तस्मादप्रयोजनाः। अत ऋत्विक्ष्वविहिताः। एतदतुल्यत्वम्। तस्मात् असमानविधाना इति।

वा— अनेन च न्यायेन यजमानस्य समाख्यया कल्पिता भवन्तु, विशेषाभावात्। न च संस्कारत्वात् प्रतिप्रधानमावृत्तिरिति दोषोऽस्तीति चोदिते वदति। नैतदुक्तम्। सर्वं हि यजमानेन स्वयं कर्तव्यं परिक्रयेण वा कारयितव्यम्। तानि संस्कारान् अध्वर्य्वादयः कुर्युः ते परिक्रयस्य अयोग्यत्वेन अयाज्यत्वाच्च कारिता नापि कृता इति अकर्माङ्गमेव स्युः। तस्माच्च ऋत्विग्यजमानानामेते समानविधाना इति।

वा— पुरुषसंस्काराः केशश्मश्रुवपनादयः किं आध्वर्यवाः उत याजमाना एव इति समाख्यानात् आध्वर्यवत्वे प्राप्ते, ब्रूमः। संस्काराः संस्कृतस्य कार्ययोग्यतां आधातुं क्रियन्ते न कश्चिद्योग्यताजननार्थं कनार परिक्रीणीते, स्वयमेव योग्यत्वात्, स तस्य कार्यं प्रति गुणभावेन परिक्रीणीते, तेन गुणत्वेन परिक्रीतानां कर्तृणां प्राप्ते. यथा प्रधानानि च समाख्यया व्यवस्थानात् यत्नेन पुरुषाणां

गुणमात्र तत्रैव सम्प्रख्यानियमः । संस्कारास्तु याजमाना. वचनात् ऋत्विजामपि भवन्ति 'हिरण्यमालिनः ऋत्विजः' इतिवत् ।

**सोम**—पूर्ववेदग्रन्थेन प्रत्याख्यानात् सगतिः । सूत्रार्थस्तु– संस्काराः कर्मवत् तत्तद्वेदसमाख्यया व्यवतिष्ठेरन्, तेषां कर्तृपुरुषसामर्थ्यजनने उपयोगादिति ।

**वि**— 'संस्कारा वपनाद्याः किमध्वर्योः स्वामिनोऽथवा ।, अध्वर्यौस्तत्र वाक्यात् तद्वेदोक्तश्च तस्य ते ॥, संस्कारैर्योग्यता प्रत्य स्वकार्ये कर्तुमृत्विजः । मीमांसयतः क्रिया तेषां तादर्थ्या यजमानगा ॥'

**भाट्ट**— वपनादय. परिक्रियस्याद्यः समाख्यानात् अध्वर्युकर्तृकाः । तेन अध्वर्युणा क्षुर दण्डनाद्य मन्त्र गृहीत्वा यजमानस्य केशवपनादि दन्तधावन स्नान च करणीयं अञ्जनाभ्यञ्जनवत् । इति प्राप्ते, 'वपते' इत्यात्मनेपदात् वपनफलाश्रयस्य यजमानस्यैव तत्कर्तृत्व प्रतीयते । अस्ति च तस्यापि छेदनाख्यवपनाधारत्वेन 'स्थाली पचति' इतिवत् तत्कर्तृत्वम्, तदादायेन 'तस्मात् केशान् वपाम्यहम्' इति प्रयोगः । यस्तु 'नापितो वपति' इत्यादिप्रयोगः, स छेदनानुकूलक्षुरक्रियाकर्तृत्वमादाय । तत्प्रयोजककर्तृत्वमादायैव 'नापितो यजमानं वापयति' इत्यादिप्रयोग । अतश्च 'वपते' इत्यात्मनेपदस्वरसे आधारत्वमादायैव कर्तृत्वोपपत्तौ क्षुरग्रहणकर्तृत्वेऽपि आत्मनेपदस्य प्रमाणाभावः । तेन अपेक्षितस्य तस्य यजमानकर्तृकत्वनियमे एव प्रमाणाभावे, अध्वर्युकर्तृकत्वनियमस्य कः प्रसङ्गः इति नापितकर्तृकमपि तत् । सोमे तु 'प्रवपति देवम्.' इति परस्मैपदप्रयोगात् अध्वर्युकर्तृकमेवाञ्जनवपनोत्तर 'नापिताय क्षुर प्रयच्छति' इति विधानात् तत्कर्तृकमेव तत् । एवमन्यत्रापि आत्मनेपदयुक्ते द्रष्टव्यम् । अत एव यत्र 'स्नापयन्ति' 'शरीरीधयाञ्जन्ति' 'दण्डेन दीक्षयति' इत्यादौ परस्मैपदनिर्देशः श्रुत. श्रुतः, तत्र सत्यपि आधारत्वमादाय आत्मनेपदयोग्यतया यजमानकर्तृकत्वे, ण्यन्तात् परस्मैपदनिर्देशात् अध्वर्युकर्तृकत्वमिष्टमेव । स्नाने तु शास्त्रसिद्धत्वात् एव, स्नातीति परस्मैपदस्यापि प्रयोगात्, अन्यकर्तृके च स्नापयतीत्येव प्रयोगात्, यजमाननिष्ठव्यापारस्यैव विधेयत्वेन अन्यकर्तृकव्यापारस्य अविधेयत्वेन नाध्वर्युनियमः । न तत्र परस्मैपदात् अन्यकर्तृकत्वनियमः, स्नाधातोः स्वरितेत्त्वाद्यभावेन तदभावात् । अत. परिक्रियसंस्काराः स्वामिकर्तृका एव । कर्तृसंस्कारास्तु हिरण्यमालित्वादयः सामान्यविहिताः सर्वेषामेव । विशिष्य विहितास्तु तेषामेवेति न क्वापि समाख्यया नियमः, तस्याः नियामकत्वेन प्रवृत्त्यभावादिति वक्ष्यते ।

**मण्डन**— 'स्यात् स्वामिनिष्ठ वपनादि कर्म ।'

**शंकर** — 'पुंसंस्कारा याजमानाः ।' ३. 'वचना दृत्विजामपि ।' ४.

● वपनार्थाना आधूननार्थाना च वपनप्रकरणपठितमन्त्राणां क्षुरसञ्ज्ञासम्पत्तये अनियमेनोपादानम् । मा. १०।५।५।१४.

● वपनादयः यजमानसंस्काराः प्रधानोपकारकाः नाङ्गोपकारकाः । वि. ३।७।२, ● वपनादयः संस्काराः यजमानस्यैव । वचनात्तु हिरण्यमालिनो ऋत्विजः सर्वे वाजपेये, लोहितोष्णीषत्व श्येनं सर्वेषां ऋत्विजाम् । ३।८।५, ● वपनादयः संस्काराः यजमानगतमालिन्यमपनीय यागयोग्यतामुत्पादयितु क्रियन्ते । ३।८।३, ● वपनादयः संस्काराः यजुर्वेदे समाम्नाताः । ३।८।१

● वपनादिसंस्काराणां लोपोऽनियतस्य मृताधिकारिपक्षे । १०।२।१८।७०, मीको पृ. ७६० (४) 'अनियतस्य मृताधिकारित्वपक्षे वप-संस्कार-हीनां लोपः' इत्यत्र द्रष्टव्यम् ।

● वपनादिसंस्कारपुरुषोपकारकाः । ते च यजमानस्य दृष्टे कर्तृत्वांशे नास्ति किन्तु भोक्तृत्वांशे अदृष्ट एव । वि. ३।७।२

● वपनशयानिकृन्तनयोः निर्हरणादिवत् दृष्टत्वेन कर्मान्तरगताकाङ्क्षा । मु. ३।८ पृ. ६४

● वपननिषेधः आधाने– अग्न्यर्थंपक्ष– दर्शपूर्णमास– अदृष्टार्थक्रियानिषेध. । चारु पृ. २६०

● वपनप्रयोगप्रवर्तकपरा आदीपोधीनादिरसितु अमरूपे सिद्धान्ते । गा. ३।७।३।६ पृ. १०२८.

* अञ्जन- अभ्यञ्जन- वपनपावनानां बहुयजमानकेषु अहीनेषु नित्यादिनिर्दिष्टेन एकैकेन पदार्थेन पदार्थानुसमयो यजमानेषु । सोम. ५।२।२.

* वपा सर्वप्रधाना । भा. १०।७।८।२३. * यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या । १०।७।१९।६४, * वपयाः प्रातःसवने चरन्ति अग्निष्टोमे पशोः सवनीयस्य । ११।२।३।१४. * 'वपया प्रातः सवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवने' इति वचनं पशुमन्ति त्रीणि सवनानि कर्तव्यानि इति (पोषयति)। टुप्. ११।२।१४।२२. * 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति सवनीयपशोरेकत्वेऽपि कालभेदेन विधानम् । वि. ११।३।३. * वपायाः श्रपणं आहवनीये विहितम्, तस्यारं प्रतिषेधः योऽयं माल्पापप्रतिषेधः वैदिकेऽग्नौ । भा. १२।२।१।६. * वपानां वाजपेयगतानां प्रयाजशेषेणाभिघारणं नास्ति । ४।१।१४।११–१९. मीको. पृ. २७८५ 'प्रयाजशेषाभिघारणाभावः' इत्यत्र द्रष्टव्यम् । * वपायां प्राकृतावदानधर्मस्य नातिदेशः । संकर्ष २।३।१६. मीको. पृ. ६९३ 'अवदानं प्राकृ एकस्पाङ्गे०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* वपाभिधानं अग्निषुनीयगतोरुकशब्देन । ९।१।३।२२. मीको. पृ. १४८ 'अग्निषुनीयगतेन उरुकशब्देन वपाभिधानम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* वपोत्खननस्य आश्मरथ्यमतात्तिरोषः । मु. पृ. ४.

* वपाप्रचारात्पूर्वं पशुपुरोडाशस्य काल । भा. १२।१।१।१, १२।३।१।०.

* वपान्तं इत्याद्यर्थस्यापि पञ्चावत्तत्वमेव ज्योतिष्टोमे अग्नीषोमीये पशौ । १०।७।२०।७२–७३. मीको. पृ. १२० 'अग्नीषोमीये पशौ वपायामिव सर्वेष्वङ्गेषु पञ्चावत्तम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* वपाश्रपणं प्रतिप्रस्थाता करोति । वि. १०।७।८. * वपाश्रपणी तन्त्रं ऐकादशिनेषु पशुषु । ११।४।९।३८–३९. मीको. पृ. १३०६ 'ऐकादशिनेषु पशुषु कुम्भीशूलवपाश्रपणीनां तन्त्रम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * वपाश्रपणी तन्त्रं न नानाजातीयेषु पशुषु, यथा सौत्रामण्याम् । ११।४।१०।४०–४१. मीको. पृ. १९३६ 'तन्त्रं न कुम्भीशूलवपाश्रपणीना०' इत्यत्र अधिकरणं द्रष्टव्यम् । * वपाश्रपणी तन्त्रं वाजपेये समस्तासु प्राजापत्यपशुषु । ११।४।८।३३. मीको. पृ. १९३५ 'तन्त्रं कुम्भीशूलवपाश्रपणीना०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* वपाश्रपणी-कुम्भीशूलानां वाजपेये प्राजापत्यपशुषु अङ्गादिश्रपणार्थं तन्त्रम् । ११।४।८।३०.

Ⅰ वमनाधिकरणम् । वैदिकसोमवमने सोमेन्द्रश्चरुः प्रायश्चित्तम् ॥

पानव्यापच्च तद्वत् । ३।४।१२।३२ ॥

भाष्यम्— इदं समाम्नन्ति 'सोमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिनः' इति । तत्र संदेहः, लौकिकस्य सोमपानस्य वमने सोमेन्द्रश्चरुः उत वैदिकस्येति । किं लौकिकं सोमपानम्, किंच वैदिकम् ? उच्यते । वैदिकं सोमपानं ज्योतिष्टोमे तद्विकृतिषु च । लौकिकं सोमपानं तत् सत्रयानेषु दन्तुराङ्गेषु च धातुसाम्यार्थं असोमयाजिनः सोमे । किं प्राप्तम् ? पानव्यापच्च तद्वत् । लौकिके वमने इष्टिर्भवितुमर्हति, न वैदिके । तदर्हति पूर्वः पक्षः प्रतिनिर्दिष्टः । यथा तत्र दोषसंयोगेन श्रवणात् लौकिके अप्रतिषेधे इत्युक्तम्, एवमिहापि दोषसंयोगेन श्रवणं भवति 'इन्द्रियेण वा एष वीर्येण व्यृध्यते, यः सोमं वमति' इति । लोके धातुसाम्यार्थमासेविते वमनेन विनष्टे धातुसाम्यव्यापदा इन्द्रियेण व्यृद्धिरुपपद्यते । शास्त्राद्धि वैदिके न दोषः स्यात् । तत्र दोष पातयः इति शास्त्रचोदिते निर्वृत्ते नास्ति दोषः । यत्रापि वम्यते, तथापि पानक्रिया तत्र निर्वर्तिता, कृतो वचनार्थ इति न दोषः स्यात् । तस्मात् लौकिकस्य सोमपानस्य व्यापदि सोमेन्द्रः स्यात् ।

वा— अत्रमपि अनारभ्यवाद एव । 'सोमेन्द्रं चरुं निर्वपेत् यः सोमं वमति' इति । तत्रापि पूर्ववदेव अधिकरणद्वयमपि विचार्यते । लौकिकसोमपाने रसायनार्थं कृते वमनेन व्यापन्ने सोमेन्द्रयागः, उत वैदिके, उत उभयत्रापि । तत्र तद्वत् इत्यनेन सामान्यपक्ष,

'दोषात् त्विष्टिर्लौकिके स्यात्' इत्यत्र चातिदिश्यते । अथवा अधिकरणद्वयमपि सिद्धान्तरूपेण अधिकरणद्वयेऽपि अतिदिश्यते । केनचिद्विशेषेण पूर्वपक्षरचना । तत्रेह तावत् वैदिकेन पानेन द्रव्यप्रतिपादनस्य कृतत्वात् न कदाचित् भ्रंशे पुनः प्रतिसमाधानापेक्षाऽस्ति इत्यर्थक इष्टिविधानम् । लौकिके तु वमनेन व्यापन्ने रसायनगुणाभावात् इन्द्रियेण वीर्येण च व्यृद्धिः समाप्यते । न वचनोदरवत् अन्यन्तासम्भावना । तत्प्रयोगे च श्रूयमाणा इष्टिः शास्त्रसामर्थ्येन विधीयते । तस्मात् तत्र स्यादिति ।

दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषः स्यात् । ३३ ॥

भाष्यम्— वैदिकस्य पानस्य व्यापदि भवितुमर्हति, न लौकिकस्य । कस्मात् ? दोषात् । दोषसम्बन्धोऽत्र श्रूयते 'इन्द्रियेण वा एष वीर्येण व्यृध्यते' इति । लौकिके पुनः मातुलाप्याद्यर्थे क्रियमाणे न किंचित् दुष्यति । वमनार्थेन हि तं पिबन्ति लोके । यद्यपि अपमर्थवादः, तथापि फलकल्पनापरिहाराय वैदिके एव इति कल्पना न्याय्या ।

प्रा— तैरेव वैदिकत्वसामान्यादिभिः (हेतुभिः) वैदिके भवति इति पक्षमालोच्यते । न हि वमने वैदिकस्य सम्भवति, अचोदितत्वात् । अतो य एव दोषो लौकिकगामित्वे हेतुः स एव इह वैदिकविषयत्वे स्यात्, तथाहि, 'मन्यग्जरणरूपान्ता प्रतिपत्तिर्विधीयते । तद्व्यापदि प्रधानस्य न भवेत् पूर्ववत् फलम् ॥' न च तावत् लौकिकपानव्यापदि दोषोऽस्ति, वमनार्थमेव पानात् । यद्यपि भवति, तथापि वैगुण्येन तस्य प्रतिसमाधान इति न वैदिकोपायापेक्षा । वैदिके तु पाने सम्यग्जरणपाठात् जरणान्ता प्रतिपत्तिरवधारिता । सा च वमनेन व्यापद्यते । तत्र प्रधानफलवैगुण्याशङ्कायां तत्समाधानार्था इष्टिर्विधीयते । अत्र तु अत्र फलार्थवादः, तत्र सुतरां फलकल्पनामप्राप्य लौकिकाद्व्यावृत्तिर्गम्यते । वैदिके तु वमनेन पानं प्रत्यायितम् (अवमनायितम्), तेन मनुष्यस्य इष्टिश्च इति सुकरः संबन्धः ।

वा— 'तत्राविशेषादुभयोर्दोषाद्वा लौकिके भवेत् । दोषो ह्यत्रास्ति वमनाद् व्यृद्धिरिन्द्रियवीर्ययोः ॥' एवं प्राप्ते, ब्रूमः । 'लोके हि वमनार्थेन पानात् दोषो न विद्यते । सम्यग्जरणपर्यन्तं वेदे पानं विधीयते ॥ वेदे तु क्रतुवैगुण्यात् समाधित्सोपजायते । अपेक्षितार्थता तत्र प्रायश्चित्तविधेर्भवेत् ॥ अपेक्षितविधिर्यायाननपेक्षितचोदनात् । तेन ऋत्वङ्गमेवेष्टिः फलं नैवं न कल्प्यते ॥' ३।४।१६.

सोम— सूत्रार्थस्तु-सोमपानस्य व्यापत्तिरपि अश्वप्रतिग्रहेष्ट्यधिकरणपूर्वपक्षवत् लौकिकी एव निमित्तमिति ।

के— दृष्टान्तसंगतिरत्र ।

वि— 'सोमवामिचरुर्लौकि वैदे वेन्द्रियसम्भव । दृष्टदोषो लौकिकेऽसौ वमने विहितश्चरुः ॥, अतोऽसौ वमनार्थेन लोके पानं श्रुतौ पुनः । जरणाय ततो वान्तिदोषशान्त्यै भवेच्चरुः' ॥

भाट्ट— अनारभ्यैव 'वि वा एष इन्द्रियेण वीर्येण व्यृध्यते (सोमपीथेनर्ध्यते) यः सोमं वमिति, य सोमवामी स्यात् तस्मा एत सोमेन्द्रं श्यामाकं चरुं निर्वपेत्' इति श्रुता इष्टिरपि वैदिकस्यैव सोमस्य वमने भवेत्, न तु लौकिकस्य । वैरूप्यगौरवादिभयेन जरणादि सोमवदेव उभयार्थत्वस्य वक्तुमनुपपत्ते । न च अश्वप्रतिग्रहेष्टिवत् दोषनिर्घातार्थत्वकल्पनया लौकिकमात्रविषयत्वशङ्का, वमनजन्यस्य आर्थवादिकस्य इन्द्रियवीर्याद्यभावरूपव्यृद्धिरूपस्य दोषस्य वैदिकसोमवमनेऽपि व्यवस्थितत्वात् । तन्निर्घातार्थत्वस्य अन्यत्राधिकत्वाच्च । वैदिके वमनार्थतयैव सोमपाननिषेधनात्, तस्य इन्द्रियादिनाशकत्वानुपपत्तेश्च । अतः इन्द्रियवीर्यव्यृद्धिपदेन लक्षणया क्रतुवैगुण्यस्यैव कथनात् तन्निर्घातार्थत्वमेव अस्या इष्टेः युक्तम् । चायने च 'मा मेऽवाङ् नाभिं अति गाः' इत्यादिमन्त्रगर्भात् सम्यग्जरणान्तस्यैव भक्षणस्य दोषप्रतिपत्त्यर्थत्वावगतेः वमने क्रतुवैगुण्यम् । अतश्च अश्वदानवत् वमनस्य नैमित्तिकत्वाभावेऽपि इष्टेः क्वचिन्निमित्तकत्वविरोधाद्वा अविरुद्धम् । १६.

मण्डन— 'वेदोक्तपाने वमने चरुः स्यात् ।'

शंकर— 'पर्याग्निवमने यदि ।'

• वमनेष्टिः ( ३।४।१२।३२–३३ ) 'सोमेन्द्रं चरुं निर्वपेत् य: सोमं वमिति' इति यच्छब्देन इष्टिवमनयो: समानकर्तृकत्वनिर्देशात् यजमानवमने एवेष्टिः । सु. पृ. १५१२, ▪ वमनेष्टिः । सौमेन्द्र कर्म वमनोपस्थापित-कर्माङ्गत्वा अनुमतदेव सोमयामिन उपकरोति, यजमानस्यैव च तथा उपकर्तुं शक्नोति नर्त्विजम्, ततश्च वमना-नार्थत्वेन सौमेन्द्रस्य कर्मणः यजमानकर्तृकत्वात् तस्य च वमनयजमानकर्तृकत्वनिर्देशात् ( निर्वपेत् यः सोम वमिति ) यजमानवमने एव सौमेन्द्रं कर्म । पृ. १५१३, • वमनेष्ट्यां वैदिकसोमवमननिमित्तकत्व अर्थवाद-प्रामाण्याधीनम् । सू. ६६ .

• वमननिरेचनयोः ( सोमस्य ) प्रायश्चित्ताम्नानम् । पा. ३।४।१।२६ पृ. ७८५.

⧗ वयमिव कपोतः श्वो मयूरादिति न्यायः । न्यायोऽयं सन्दिग्धबहुमूल्यवस्त्वपेक्षया अल्पमूल्यवस्तु-वरत्वविषये प्रवर्तते । साहस्री. ६७७.

⧗ वरं सांशयिकान्निष्कादसांशयिकः कार्षापण इति न्यायः । सुवर्णनामकाधिकमूल्यमननिष्कादल्पा-धिकः कार्षापणो वरम् । कार्षापण नाम राजतारिमित-रूपकस्य 'हवेली' इति ख्यातस्येति । न्यायोऽयं सन्दिग्ध-बहुमूल्यवस्त्वपेक्षया अल्पमूल्यवस्तुवरत्वविषये प्रवर्तते । साहस्री. ६७६.

• वरः नाम — 'गौर्वै वरोऽतिवरः, अन्यो धेनुर्वरो-ऽतिवरः, अन्योऽनड्वान् वरोऽतिवरः' इत्यापस्तम्बा-चार्योक्तो वरशब्दार्थो ज्ञेयः । सोम. ३।८।१.

⧗ वरगोष्ठीन्यायः । गोष्ठी नानाऽनेका कच-स्थितस्यात्र 'गोष्ठी सभा' इत्यमरः । अन्योन्यवार्तालाप-स्थानविशेष इति । वरस्याभाव गोष्ठी वरगोष्ठी । तथा यथा वरवधूसम्पूर्णार्थकमन्ये विवाहादिरूपयेव कार्यं निष्पाद्यते तथा प्रकृतेऽपि । साहस्री. २०.

⧗ वरघाताय कन्यावरणमिति न्याय. ।। न हि वरघाताय कन्यामुद्वाहयन्तीति न्यायः ।। द्वाविमौ समानविषयकौ समानार्थकौ स्तः हि अनिष्टान्तरप्राप्ति-र्भावनाया अभीष्टेरपि वस्तु न वरणीयमित्येवं तत्त्वं प्रवर्तेते । साहस्री. १५१,१५८.

• वरदानस्य अध्वर्युकर्तृता अग्निचयने स्वयमातृ-ण्णोपधाने । 'य एता इष्टका उपदध्यात्, स त्रीन् वरान् दद्यात्' इति । त्रि. ३।८।२.

• वरघ्नः नाम धान्यं अयज्ञियं तस्य प्रतिनिधात-व्यम् । भा. ६।३।६।२०.

• वरणं अयन्त्रप्रवृत्ताना प्रवर्तनार्थमभ्यर्थनम् । वा. ३।७।९।२४, • वरणं आधानवत् कर्मोपदिशत् तान् ( ऋत्विजः ) उत्पादयन् दृष्टार्थं भविष्यति । ३।७।१६। ३३ पृ. १०९७. • वरणम् । 'ऋत्विग्यादिभिर्वृणीते' इति येषा आम्नाया वचनम्, तेषा तैरेव मन्त्रैर्वरणम् । संकर्ष. ३।४।११. मीको. पृ. १२४३ "ऋत्विग्यादि-भिर्वृणीते' इति येषा॰" इत्यत्र अधिकरणं द्रष्टव्यम् ।

⧗ वरणभृत्विज्ञामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात् । १०।२।१०।३५ ॥

द्वादशाहादौ सत्रे ऋत्विजा वरणं न स्यात् । पूर्ण-मासादौ वरणस्य आनमनार्थत्वात् सत्रे च तदभावात् आर्त्विज्यस्य । सत्रे सर्वे यजमाना. सर्वे ऋत्विजः इति स्वकर्म सर्वेषां स्वकर्मैव भवति न परकीयम् । पूर्णमासादौ तु ऋत्विजा न स्वकर्म इति तत्र वरणं आनमनार्थं इति युक्तम् । तस्मात् सत्रे वरणं नास्ति इति सिद्धान्तः । के. • 'वरणमृत्विजामानमनार्थत्वात्॰' ( १०।२।१०। ३५ ) । अध्वर्य्वादयो दीक्षावाक्ये अनूद्यन्ते इति वरणमरणे कर्तव्ये स्याताम्, तत्र 'वरणमृत्विजा॰' इति निरूप्यते । वा ३।७।१६।३२ पृ. १०९८. • 'वरणमृत्विजामानमनार्थत्वात् ॰' १०।२।१०।३८। सत्रे ऋत्विजा स्वकर्मत्वेन वरणस्य आत्मार्थत्वापत्तेः आत्मनि च प्रार्थनारूपवरणायोगात् सत्रे वरणं नास्ति । सु. ३।७ पृ. ३५. • वरणमृत्विजा किं प्रत्येकमुद्दिश्य समुदायमुद्दिश्येति । किं पुनरत्र युक्तं समुदायमुद्दि-श्येति । तथा सति अविभेदेन कर्तुं कर्म निर्व-र्तते । भा. ११।८।२।५। यदप्युच्यते समुदायमुद्दिश्य वरणमिति, तदयुक्तम् । वरणमपि भेदेन कर्तव्यम् । एकैकस्य भेदेन वरणम् । टुप्. • वरणं ऋत्विजा प्रकृतौ ( ज्योतिष्टोमे ) आनमनार्थं दृष्टप्रयोजनम् । भा. १०।२।१०।३८, संकर्ष. २।३।१. • वरणं

ऋत्विक्शब्दवाच्यकर्तृत्वजनाभिमुख्यसिद्ध्यै क्रियते । सु ३।७ पृ ३५ * वरणं च प्राक् कर्म प्रवृत्तेः । तत् अगृह्यमाणविशेषत्वात् तन्त्रम् । तेन आनता भवन्ति । ताण्ड्ये । ( इति भाष्य मतम् ) । वार्तिककृन्मते तु वरणं वैदिकं प्रतिकर्म पृथक् कर्तव्यम्, लौकिकं तु वरणं तन्त्रं स्यात् इति । भा ११।४।२।५ * यस्य चिकीर्षुर्यजमानः वरणीयेभ्यो ब्राह्मणेभ्यः सोमं ब्रूयात् । 'तेभ्यः सोमं प्राह' इत्या पस्तम्बः । सोमाभिधानप्रकारश्चात्र कल्पे दर्शितः 'ज्योतिष्टोमेनाग्निष्टोमसंस्थेन रथन्तरपृष्ठेन गवा द्वादशशत दक्षिणेनाहं यक्ष्ये, तत्र त्वमनुज्ञाता भव' इत्यादि । वि १०।२।११ * वरणं लौकिकेन वाक्येन कर्तुं शक्यम् महद्भागमपि अदृष्टं च । वा ३।७।१८।४६ पृ १०१४ * वरणं नाम संस्कारपुरःसरं 'अग्निर्होता०' इत्यादिमन्त्रेण ब्राह्मणप्रार्थना । वरणकाले च यजमानेन ब्राह्मणेभ्यः सोमाभिधानं कर्तव्यम् । वि १०।२।११ * वरणं निरूढपशुबन्धे होतृमैत्रावरुणयोर्द्वयोः । सङ्कर्ष ३।४।१३ मीको पृ २३७१ 'निरूढपशुबन्धे होतृ मैत्रावरुणयोर्द्वयोर्वरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * वरणं प्रकृतौ किं यजमानं उत परिक्रयार्थं इति न परीक्ष्यम् । यजमानं नियमवत् इति कृत्वा यजमानमिति । न । प्रकृतौ आनमनार्थं वरणं दृष्ट प्रयोजनं इति न शक्यं अदृष्टं कल्पयितुम् । ( नियमादृष्टं तु भविष्यतीति ) । भा १०।२।१०।३४ * वरणं प्रार्थनात्मकम् । सु ३।७ पृ ३६ * वरणं भविष्य द्दानश्रुतेनोत्साहजननार्थम् । अत एव वरणकाले 'कश्चित् कल्याण्यो दक्षिणा' इति ऋत्विजां प्रश्नः । वरणं सत्रे लुप्यते दानवत् । वि १०।२।१०, * वरणं महापितृयज्ञे चोदकप्राप्तम् 'नार्षेयं वृणीते न होतारं' इति निषिद्धम् । अत्र वरणं प्रतिषिद्धमप्रजातमनुष्यं इति पर्युदासः । १०।८।१ * वरणं वषट्कर्तृणामेव अग्नी षोमीये पशौ 'सम वृणीते' इत्यनेनोक्तम् । सङ्कर्ष ३।८।१९ मीको पृ १२३ " अग्नीषोमीये पशौ 'सम वृणते' इति वषट्कर्तृणामेव वरणम् " इत्यत्र अधि करणं द्रष्टव्यम् । * वरणं वषट्कर्तृणां समानामपि लौकिक्या वाचा, अग्नीषोमीये पशौ । सङ्कर्ष ३।८।१० मीको पृ १२३ 'अग्नीषोमीये पशौ समानामपि वरणं लौकिक्या वाचा' इत्यत्र अधिकरणं द्रष्टव्यम् ।

वरणं सत्रे नास्ति ॥

'वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात्' । १०।२।१०।३४॥

भाष्यम्— सन्ति द्वादशाहप्रभृतीनि सत्राणि 'द्वाद शाहमृद्धिकामा उपेयुः' इत्येवमादीनि । अस्ति च प्रकृतौ ज्योतिष्टोमे वरणं 'अग्निर्मे होता स मे होता, होतस्त्वं मे होताऽसि इति होतारम्' इत्येवमादि इति । तत् सत्रेषु अतिदेशे किं कर्तव्यम्, नेति । तत्र एतावत् परीक्ष्यं किं प्रकृतौ यजमानं वरणं उत परि क्रयार्थमिति । यदि धर्ममात्रं प्रकृतौ, सत्रेषु कर्तव्यम् । अथ परिक्रयार्थम्, न कर्तव्यमिति । किं प्राप्तम् ? यजमानं नियमवत् इति कृत्वा धर्ममात्रम् । तस्मात् सत्रेषु कर्तव्यमिति । एवं प्राप्ते, ब्रूमः । वरणमृत्विजां सत्रेषु न स्यात् । न कर्तव्यमिति । स्वार्थं हि तेषां कर्म । न च कश्चिदात्मानं वृणीते । प्रकृतौ च आन मनार्थं वरणं दृष्टप्रयोजनं इति न शक्यमदृष्टं कल्पयि तुम् । तस्मात् सत्रेषु वरणं न स्यात् इति ।

( 'अग्निर्मे होता, आदित्यो मेऽध्वर्युः । चन्द्रमा मे ब्रह्मा, पर्जन्यो म उद्गाता, आकाशो मे सदस्यः, आपो मे होत्राशंसिनः, रश्मयो मे चमसाध्वर्यवः' इति पञ्च विंशब्राह्मणे । कै )

शा— ज्योतिष्टोमे वरणं ऋत्विजामाम्नातं 'अग्नि र्होता स मे होता' इत्यादि । तत् सत्रेषु कर्तव्यं नेति संशये चोदकानुग्रहाय कर्तव्यं ऋत्विक्त्वार्थं च प्रकृतौ, तच्च सत्रेऽपि यजमानेषु आधातव्यम् 'ये यजमानास्त ऋत्विजः' इति वचनात् । अतो तुल्यार्थत्वात् कर्तव्य वरणम् । नैवम् । आनत्यर्थं तत्प्रकृतौ कृतम् । न च अत्र यजमाने वरणेन आनमितव्यम्, अतोऽर्थलोपात् कर्तव्यम्, ऋत्विक्त्वमपि यजमानानां कर्तव्यम्, तच्च प्रकृतौ वरणविधानात् तद्द्वारेण आनयनमेव । सत्रेषु तु वरणस्य अर्थलोपात् निवृत्तवरणानामेव न विगुणं किञ्चिदत्र । अध्वर्य्वादित्वं च भविष्यति । यदि कर्मवचन

* वरुणग्रहवचनस्य शब्दस्य जलोदरव्याधिनैव लोके प्रसिद्धत्वात् यस्य जलवृद्ध्या उदरं श्वयति वर्धते ■ वरुणादयेन जलोदरेण गृहीतत्वात् वरुणगृहीत इत्युच्यते । सु पृ १९१२

* वरुणदेवता जलोदररोगप्रदा । वि ३।८।१९

* वरुणपाशो नाम जलोदररोगः । वि ३।४।१५

* वरुणप्रघासा द्वितीयं पर्व चातुर्मास्येषु । वि ७।१।१ वरुणप्रघासैः वर्षासु यजेत(चातुर्मास्यैः)। भा ११।२।३।११ * वरुणप्रघासानाम् एकधाय प्रयोगः, एककाल्यत्वात् समानोपक्रमोपसंहाराश्च । भा ११।२।१०।४५ * वरुणप्रघासाना प्रावृषि अनुष्ठाने 'ऋतुष्वर्तीय हविर्भिर्यजेत्' इति विधिः । प्रकर्ष ३।११।२२ मीधो पृ १६११ 'चातुर्मास्येषु यदि प्रावृषि यजेत॰' इत्यत्र अधिकरणं द्रष्टव्यम् । * वरुणप्रघासेषु अग्निमन्थनादिपुनर्विधानं दक्षिणविहारनिमित्तं प्राप्त्यर्थं यस्यार्थे । भा ७।३।१।२१ * वरुणप्रघासेषु अध्वर्युप्रतिप्रस्थात्रो विहारभेदेनानुष्ठाने तत्तदङ्गेषु निर्वापादिषु पृथक्त्वेन पाठः, न तु तन्त्रम् । वि १२।१।९

■ वरुणप्रघासेषु अध्वर्युभिन्नानां कर्तॄणां तन्त्रम् ॥

कर्तृभेदस्तथेति चेत् । ११।२।१०।४४ ॥

भाष्यम्— तत्रैव चिन्त्यते किं कर्तृभेदेन तन्त्रमिति । किं प्राप्तम् ? कर्तृभेदस्तथा, यथा अङ्गभेदः । अङ्गान हविषा साङ्गानां कर्तृभिरुत्तरे विहारे प्रचरितव्यम् । इतरैर्दक्षिणे । एवं यथादेशं साङ्गानि प्रधानानि कृतानि भवन्ति । तेन उत्तरवैहारिकाः कर्तारो यत्प्रधानविशेषाः दक्षिणे विहारे नोपकुर्वन्ति । तस्मात् कर्तृभेदः भेत्तव्यम् ।

न समवायात् । ४५ ॥

भाष्यम्— नैतदेवम्, अङ्गवत्कर्तृभेद इति । ■ तर्हि ? तन्त्रेण कर्तारः स्युः । कुतः ? समवायात् । वचनेन हि कर्तारः समवायश्च चातुर्मास्यानां यज्ञक्रतूनां प्रसिद्ध इति । समुच्चयस्येन देऽपि सति अन्यत्र एव कर्तृभिः संबध्यन्ते । वरुणप्रघासानां च तद्वत्त्वात् पञ्चभिरभिसंबन्धोऽभ्युपगम्यते । एकधाय वरुणप्रघासानां प्रयोगः एककाल्यत्वात्, समानोपक्रमोपसंहाराश्च । तत् यावद्वचनं तावदेवात्र भेदेन कर्तव्यम् नान्यद्यदि । न च कर्तॄणां भेद उक्तः । तस्मात् तन्त्रं भवतीति । ननु एतत् स्यात् । प्रधानभेद उक्तः प्रधानोपकारकाणाम् अङ्गानां भेदोऽभ्युपगम्यते । कुतः ? अङ्गानां प्रधानगामित्वात् । यथैव हि प्रयाजादीनां सादृश्याद् भेदात् भेदेन क्रिया, एवमङ्गभूतत्वात् कर्तॄणां प्रयाजादिवत् कस्मात् भेदोऽध्यवसीयते इति ।

उच्यते । अत्र विशेषोऽपि सत्य प्रयाजादीनामस्य अङ्गस्य उपकारोऽयथाजातीयोऽन्यस्य । प्रयाजादीनि अदृष्टेनोपकारकत्वेन उपकुर्वन्ति । बर्हिरादीनि यागद्रव्यधारणेन । अपराणि अधिकरणसंस्कारद्वारेण । तानि यागदेशाधिकरणभेदात् भिद्यन्ते । कर्तारस्तु क्रियानिर्वृत्त्या उपकुर्वन्ति । तेन ते देशभेदेऽपि सति सहतोपकारप्रत्यभिज्ञानाच्च तन्त्र क्रियानिर्वृत्तिं शक्नुवन्ति यत्प्रमाणं न भिद्यन्ते । क पुनः प्रकृत उपकार इति । होता तावत् गार्हपत्यस्य पश्चादाहवनीयाद्दक्षिणतो व्यवस्थितस्य वचनेन प्रतोषयन् यागस्य कर्तेत्युच्यते । शक्नोति स्थाने वरिष्ठ एव सामीप्यात् तन्त्रं यागं कुर्वन्नन्यद्वर्त्तयन् प्रतिप्रस्थातारमपि प्रत्याशयितुमिति । अतो न भिद्यते । तथाऽऽग्नीध्रः समानत्वात् अपरदेशस्य तत्रावस्थित एव प्रत्याश्रावणेनोभौ कर्तारावनुग्रहीतुम् । अतोऽसावपि न भिद्यते । तथा ब्रह्मा दक्षिणतोऽवस्थित उभयोराहवनीययोः समानत्वाद् देशस्य । यो ह्येकस्य दक्षिणः स एव इतरस्य दक्षिण इति तत्रावस्थित कृताकृतप्रत्यवेक्षणेन अनुज्ञावचनेन च शक्नोत्युभावनुग्रहीतुम् । अतस्तस्याप्यभेदः । अध्वर्युप्रतिप्रस्थात्रोस्तु वचनाद्भेद उक्त एवत्यदोषः । तस्मात् कर्तृतन्त्रं भवितव्यम् ।

लिङ्गदर्शनाच्च । ४६ ॥

भाष्यम्— लिङ्गं चैतमर्थं दर्शयति । 'प्रथमजं वत्सं दक्षिणा ददाति' इति दक्षिणैकत्वमाह । तदेकत्वे तन्त्रत्वेन उपपद्यते । अन्यत्र दक्षिणाभावाच्च यागेषु । ननु अन्वाहार्येण यागनिष्पत्तिः । न शायते अन्वाहार्य, प्रथम इति । विशेषाभावादुभयत्र । उपादेयत्वेन

चोदितस्यैकत्वं निश्चितम् । तस्मात् दक्षिणैकत्वम् । तथा च तन्त्र कर्तारः ।

**वेदिसंयोगादिति चेत् । ४७ ॥**

**भाष्यम्**— अथोच्येत वेदिसंयोगो होतुः श्रूयते 'अन्तर्वेद्यन्यः पादो होतुर्भवति, बहिर्वेद्यन्यः' इति । एकस्य होतुः पाद उभयत्रोपवर्तुमसमर्थः । तस्मात् कर्तृभेद इति ।

**न देशमात्रत्वात् । ४८ ॥**

**भाष्यम्**— नैतदेवम् । कस्मात् ? देशमात्रत्वात् । नात्र होतुः पादो वेदेरुपकारार्थत्वेनोपदिश्यते । किं तर्हि ? देशमात्रमेतद्विधीयते । तस्मिन् देशे होता स्थातव्यम्, यत्र अन्यैकः पादोऽन्तर्वेदि भवति बहिर्वेद्यन्य इति । कुतः ? एकवाक्यत्वात् । एकमिदं वाक्यं युक्तम्, सन्निधानसामर्थ्यादेकार्थत्वाच्च । यदि च होतुः पादो वेद्यङ्गत्वेनोपदिश्येत, एकस्मिन्नन्तर्वेदिनिहिते कृतः श्रुत्यर्थ इति द्वितीयस्यानियमः स्यात् । सोऽपि नियमार्थो बहिर्वेद्यन्य इति । कथं पुनरेकोऽन्तर्वेदीत्युक्ते द्वितीयोऽपि [redacted] प्रसज्येत, अप्रतिषिद्धत्वात् । यदि द्वयोरन्तर्वेद्यन्यतः प्राप्तिः स्यात्ततः एकस्य वचनं द्वितीयनिवृत्त्यर्थम् । न चास्ति प्राप्तिः । तस्मान्नित्यत्र । तत्र च वाक्यभेदः । अथ तु देशविशेषविधानार्थमेतत्ततस्तेताभ्यामुभाभ्यां सम्भूय क्रियते इत्येकार्थत्वात् एकवाक्यत्वमुपपन्नम् । तस्मात् होतृपादो वेदेरनङ्गम् । अतो नोभयत्र निर्णयः ।

**शा**— कर्तृषु इदानीं तन्त्रतायां चिन्त्यते । तत्र अध्वर्युप्रतिप्रस्थातारौ वचनादेव विहारद्वये व्यवस्थितौ । ब्रह्मा होता आग्नीध्रश्च किं विहारयोर्भेदेन उत तन्त्रेणेति । तत्र देशभेदेन प्रयोगयोर्भिन्नत्वात् प्रयोगाङ्गभूतानां कर्तृणामपि भेदः स्यात् । नैवम् । असत्यपि भेदे तैरेव उभयत्रापि कार्यसिद्धेः । दर्शिता च कार्यसिद्धिः भाष्ये वचनाच्च 'चातुर्मास्यानां पञ्चर्त्विजः' इति । विहारद्वयाभिप्रायं हि इदं पञ्चर्त्विग्वचनम् । न हि एकैकस्मिन् विहारे पञ्च पञ्च सन्ति । वचनादेव विहारद्वये अध्वर्युप्रतिप्रस्थात्रोः व्यवस्थितत्वात् । तस्मात् तन्त्र ब्रह्मादयः ।

**सोम**— पूर्वाधिकरणे देशभेदव्यवस्थापनेन सिद्धं भेदप्रयोगभेदं उपजीव्य एतदधिकरणप्रवृत्तेः संगतिः ।

**वि**— 'कर्तृभेदो न वा तत्र भेदः स्यादङ्गभेदतः । पञ्चर्त्विग्वचनाद्भैर्न द्वयोस्त्वन्या व्यवस्थितिः ॥'

**भाट्ट**— तत्रैव अध्वर्युप्रतिप्रस्थातारौ वचनात् व्यवस्थितौ । ब्रह्मा होता आग्नीध्रश्च किं भेदेन उत तन्त्रेणेति चिन्तायां देशभेदेन तत्तद्देशस्थप्रदानप्रयोगभेदावगतेः प्रयोगाङ्गकर्तृणां भेदः इति प्राप्ते, सत्यपि प्रयोगभेदे तैरेव कर्तृभिः प्रसङ्गात् कार्यसिद्धेः तत्कर्तृपदार्थानामावृत्तौ प्रमाणाभावात् भेदेन ब्रह्मादयः । न च अत्र यदेवाध्वर्युरिति वचनमस्ति, अतश्च वचनुरोधेन अयुना तन्निरापगनेः सत्यपि निरोधे दीक्षणविहारे एव पदार्थाः कर्तव्याः । अत एतोभयप्रेक्षत्वेऽसत्त्वेऽपि नाग्नीध्रकर्तृकप्रत्याश्रावणादीनां भेदेनानुष्ठानं न वा तदर्थमाग्नीध्रभेदः, यत्नुरोधेन उत्तरविहारसन्निधुक्त एव तेनैवाग्नीध्रेण कृतैरेव प्रत्याश्रावणादिभिरुपकारसिद्धेः ।

आवश्यकी चेयं रीतिः अन्तर्वेदिकर्मयजमानपदार्थेषु । न हि तेषां देशभेदादावृत्तिरिष्टा, देशसंस्कारकत्वाभावेनावृत्तौ प्रमाणाभावात् । सकृत्कृतैरेव कार्यसिद्धेश्च । अत एव यजमानमार्गाणो प्रयत्नस्मादस्तनावृत्तिरिष्टैव । न च तदर्थमाग्नीध्रभेदः शङ्क्यः । 'चातुर्मास्यानां पञ्चर्त्विजः' इति वचनेन तद्बाधात् । तत्कर्तृपदार्थेषु तु नैव कश्चिद्विशेषः । विहारद्वयदक्षिणमार्गस्थितेन एकेनैव ब्रह्मणा तन्त्रेण उभयोपकारकपदार्थकरणोपपत्तेः । एवं होतृपदार्थेष्वपि । न च तस्य 'अन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्यः' इति वचनेन वेदिदेशस्य अङ्गत्वावगतेः कथं तन्त्रत्वमिति वाच्यं 'अर्धमन्तर्वेदि मिनोति' इतिवत् देशविशेषस्थापना यार्हपत्यपुरोवायस्यैव तत्र विवक्षितत्वात् । अस्तु वा कथञ्चित्तत्र विशेषस्तथाऽपि प्रसङ्गादेव कार्यसिद्धेर्न पदार्थावृत्तिः कर्तृभेदो वा ।

**मण्डन**— 'न तयोः कर्तृभिन्नता ।' तयोः दक्षिणोत्तरविहारयोः ।

**शंकर**— 'कर्तृतन्त्रं तयोर्मतम् ।'

• वरुणप्रघासेषु अतएव अर्थकर्म प्रधानमित्यर्थः । न प्रतिपत्तिः, नापि वारुण्यामिक्षाप्रतिप्रत्तिर्व्यर्थः । सि.

११।२।१५ ■ वरुणप्रघासेषु अवभृथ प्रधानाङ्गयो देशभेदः 'अप्स्ववभृथेन चरन्ति' इति वचनात्। भा ११।३।१।१ ● वरुणप्रघासेषु अवभृथधर्मक कर्मान्तरस्य विधानम्। ११।२।१।६३–६६ मीको पृ ७०३ 'अवभृथधर्मकर्मान्तरस्य वरुणप्रघासेषु विधानम्' इत्यत्र अधिकरणं द्रष्टव्यम्। ● वरुणप्रघासेषु अवभृथशब्दः सौमिकावभृथधर्मातिदिशन् तद्धर्मसंयुक्तकर्मान्तरं विधत्ते। वि ७।३।८, ● वरुणप्रघासेष्वाश्रयादीनां मारुत्या भेदेनानुष्ठानम्। ११।२।९।३९–४२ ● वरुणप्रघासेषु आमिक्षा मारुती वारुणी च। भा ११।२।१५।६३, ● वरुणप्रघासेषु उत्तरे विहारे 'अध्वर्युरेव हवींषि आसादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति देशतः प्रतिनिर्देशः व्यवस्था बोध्या। बाल पृ १८ ● वरुणप्रघासेषु उत्तरवेदिरस्ति 'उपाने वपति' इत्यनारभ्य श्रुतेन वाक्येन उत्तरवेद्या अग्नेरुपवापस्य विहितत्वात्। वि ७।३।९ ● वरुणप्रघासेषु औत्तरवैहारिकाणि अङ्गानि मारुत्या नोपकुर्वन्ति देशभेदात् कर्मभेदाच्च। भा ११।३।११।४८, ● वरुणप्रघासेषु 'काय एककपाल' (क देवता अस्य इति काय) चातुर्मास्येषु। ७।१।८।२२, ● वरुणप्रघासेषु कायं एककपाले चातुर्मास्यवैश्वदेविकान्नावापूर्वि चैककपालनिष्पत्तस्यातिदेश नाम्ना। ७।३।१०।२६

## ※ वरुणप्रघासेषु दक्षिणविहारे नियमाय मारुत्यर्थं पृथगङ्गानुष्ठानम् ॥

दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वं विक्रियते। ११।२।९।३५ ॥

**भाष्यम्**— वरुणप्रघासेषु विहारपृथक्त्वमाम्नातं 'पृथगग्नी प्रणयत, पृथग्वेदी कुरुत' इति। तत्र श्रूयते 'अध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति। इह विचार्यते किं भेदेन दक्षिणविहारेऽङ्गानि कर्तव्यानि, अथवा यान्येव उत्तरे कृतानि तान्येव इतरामप्युपकुर्वन्तीति। किं प्राप्तम्? भेदेनाङ्गानि कर्तव्यानि। कुतः? देशभेदात्। देशो हि भिद्यते, दक्षिण उत्तर इति। यानि उत्तरे विहारे प्रधानानि तेषां सहान्येन अङ्गानि उपकुर्वन्ति, अङ्गानि तु विधानसात् प्रधानेनोपदिश्येरन्, तस्मात्पादेकदेशत्वमिति। ना प्रदेशाया मारुत्याः। तस्मात् तदर्थं दक्षिणे विहारे भेदेन कर्तव्यानीति।

अचोदनेति चेत्। ३६ ॥

**भाष्यम्**— एवं चेत्पश्यसि देशभेदादङ्गानां पृथङ्निर्वृत्तिः। नैतदुक्तम्। यत्कारणम्, अचोदनाऽत्र मारुत्याः। यत्र याग प्रति प्रति चोद्यते तत्राङ्गानि गृह्णाति। न चेह मारुत्याः फलं प्रति चोदना। किं तर्हि 'चातुर्मास्यैः स्वर्गकामो यजेत' इति। न चेदिह कर्म चोद्यते, अङ्गानां प्राप्तिरेव नास्ति, कुतो भेदः समता वा।

स्यात्पौर्णमासीवत्। ३७ ॥

**भाष्यम्**— स्यादङ्गानां प्राप्तिः। पौर्णमासीवत्। तथा 'पौर्णमास्या पौर्णमास्या यजेत' इति न तावत्कर्म फलं प्रति चोद्यते। अथ यत्रैव तच्चोदितम्, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। अथ च तत्र प्रधानं पौर्णमास्या क्रियते इति। एवमिहापि भविष्यति।

प्रयोगचोदनेति चेत्। ३८ ॥

**भाष्यम्**— अथ उच्येत, प्रयोगस्तत्र पौर्णमास्या चोद्यते यजेतेत्याख्यातेन। प्रयोगश्च अङ्गप्रधानानां निवर्तितः। प्रयोगाङ्गं च कालः। तस्मात्तत्र साङ्गं प्रधानं पौर्णमास्या क्रियते इति।

तथेह। ३९ ॥

**भाष्यम्**— तत्र ब्रूमः। इहापि मारुत्याः प्रयोगश्चोद्यते 'आसादयति' इत्यनेनाऽऽख्यातेन। यथा च कालः प्रयोगाङ्गमेवं देशोऽपि। तस्मात् मारुत्यपि साङ्गा दक्षिणविहारे कर्तव्या। ननु नाऽऽसादयतिशब्देन यागः उच्यते। कथं तत्र प्रयोगं वक्ष्यति? आह। यागार्थमेतदासादनम्, यथा पत्न्यौ। तथा इहार्थं भवति। इतरथा अस्याऽर्थं कल्पयितव्यं स्यात्। यागार्थं चेत्तत् यागोऽयं कार्यः। सैषा अन्यथा यागचोदना भवति। यथा 'सौर्यं चरुं निर्वपेत्, सौर्यं ब्रह्मवर्चसकामेन' इति। तस्मात् इहापि मारुत्या प्रयोगश्चोद्यते। तत्र च प्रधानानामङ्गानां भेदेन क्रिया।

आसादनमिति चेत्। ४० ॥

भाष्यम्— अह । न आसादयतिशब्देन याग उच्यते । किं तर्हि ? आसादनम् । ननु लक्षणया यागं वक्ष्यति । न श्रुतिमुत्सृज्य लक्षणाऽभ्युपगन्तव्या । आसादनस्य दृष्टार्थत्वेन आश्रयिष्यते । आश्रीयेत, यद्यासादनं दृष्टार्थं प्रमाति । यदि दक्षिणेऽग्नौ माध्या होमः सिद्धः स्यादन्यस्मिन्नपि नयनं दृष्टार्थं भवेत् । न त्वसिद्धः । प्रकृतौ त्वेकस्मादाहवनीयस्य तत्रैव सिद्धो होमः । अतस्तस्मिन्निकर्षे नयनं दृष्टार्थं समाप्ति । न त्विह तथा । न चेद् दृष्टार्थता युज्यते श्रुत्यर्थ एव ग्राह्यः । तस्मादासादनमासादयतिशब्देनोच्यते न यागः ।

नोत्तरेणैकवाक्यत्वात् । ४१ ॥

भाष्यम्— नैतद्दृष्टार्थं मासादनम् । कुतः ? उत्तरेणैकवाक्यत्वात् । 'अथोत्तरे विहारे हवींष्यासादयति' इत्यनेनोत्तरविहारसंबन्धेन यद्वचनेन 'मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इत्येतस्यैकवाक्यं नादेवं शास्त्रे, यथा नाऽऽसादनमदृष्टार्थमिति । कथं कृत्वा ? आहवनीयद्वये अन्यतरस्थया हविषा होम प्राप्तः । तदनुविधाना दासादनमपि तत्रैव प्राप्तम् । [illegible] नरसामान्यमनेन क्रियते । यथाप्राप्तस्य च व्यवस्था । होमाय च प्राप्तं नादृष्टाय । तस्मात् होमार्थमासादनम् । अपर आह । एकस्मिन् शास्त्रे एषः एतावमासादयतिवादः, उभयोर्विहारयोरासादनमाह । इतरस्मिंश्च न्याय्यं नहोमार्थम् । एकस्मिन्नीषारणे दक्षिणे होमार्थं न भविष्यतीत्यतोऽपपद्यते । तस्मादुभयत्र होमार्थम् । कथोच्येत, आसादनमेवैतन्निर्दिश्यते । यत्र दृष्टार्थं भाति, तत्र दृष्टार्थम् । यत्र न भवति तत्रादृष्टार्थमिति । तच्च न । विप्रकृष्टयोः यौगपद्यग्रहणात् । यत्र दृष्टार्थं तत्र अनूद्यते, प्रकृतितः प्राप्तत्वात् । यत्रादृष्टार्थं तत्र विधीयते । तदुभयं युगपच्च न भवति । तस्माद्युक्तमेतत् । अथ होमार्थत्वे सति कस्माद्यागचोदना कल्प्यते, नाऽऽसादनमात्रेणेति । आह । होमप्राप्त्यर्थमिति । नैवम् । आसादनं हि होमार्थं भवति । नान्यत्र आसाद्यमानमन्यत्र होमार्थं भविष्यति ।

अवाच्यत्वात् । ४२ ॥

भाष्यम्— अपि च— न च होमार्थमासादनं वक्तव्यम्, सति होमे प्रकृतित एव प्राप्नोति । यागस्तु वक्तव्यः । स च सति होमे शक्यते लक्षणयाऽनेन वक्तुम् । तस्मादपि आसादयतिशब्देन पौर्णमासीवद् यागस्य प्रयोग उच्यते । तथा च तन्त्रभेदः ।

आम्नायवचनं तद्वत् । ४३ ॥

भाष्यम्— वैदिकवचनं तद्वद् युक्तं भविष्यति यदन्यथोऽर्थदृष्टः 'यद्वेदाध्वर्युः करोति तत्प्रतिप्रस्थाता करोति' इति । तथा 'यस्मिन्नेव होमस्तस्मिन् पूर्वे देवतायजनम्' इति दक्षिणेऽपि विहारे देवतायागं दर्शयति । तत्रायमासादयतिशब्दो युज्यते । तस्मादप्येवम् ।

शा— वरुणप्रघासेषु विहारद्वयम्, द्वयोरपि आहवनीयः पृथक् स्थापितः । तत्र श्रूयते 'अथाध्वर्युरुत्तरे विहारे हवींष्यासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति । तत्र विचार्यते किं तयोः अपि हविषां तन्त्रमङ्गानि उत आग्नेयादीनां अङ्गानां मारुत्याश्चामिक्षाया भेदेन अङ्गानि कर्तव्यानि इति । 'सत्यं न तन्त्रमङ्गानि देशभेदात्तथापि तु । न पृथक् स्यादनुष्ठानं प्रसङ्गात् कार्यसिद्धितः ॥' अत्रोच्यते— 'तन्त्रेऽन्यस्य समारब्धे यत्राऽन्यस्य विधिः श्रुतः । तत्र प्रसङ्गो न त्वत्र युगपत्संप्रयोजनात् ॥' तस्मात् उभयत्र अङ्गानां आवृत्तिः ।

सोम— पूर्वत्र अङ्गप्रधानानां एकदेशत्ववत् इह तयोरपि हविषोः एकदेशत्वम्, ततश्च तन्त्रमिति पूर्वपक्षस्थितेः संगतिः ।

वि— 'मारुत्याः सर्वहविर्भिस्तन्त्रं भिन्नमुत वा । प्रयोगैकत्वसम्पन्नं भेदो देशस्य भेदतः ॥'

भाट्ट— चातुर्मास्येषु वरुणप्रघासपर्वणि विहारद्वये आहवनीयद्वयं श्रुतम् । तत्र तत्र हवींषि विहितानि । तदेव वचन 'अथाध्वर्युरुत्तरे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति । तत्र किं तयोरपि हविषा देशैक्यात् तन्त्रेणाङ्गानि ? उत तद्भेदात् भेदेन ? इति चिन्तायाम्, आसादनमात्रे देशभेदश्रवणेऽपि यागेषु तद्भेदश्रवणाभावात् 'अथ वरुणप्रघासैर्यजेत' इत्येकप्रयोगविधिपरिगृहीतानां नानामपि यागानां निरूपेण एकस्मिन्नेव कस्मिंश्चिद्विहारे अनुष्ठानात् देश-

भेदाभावेन तथैवाङ्गानि । न चात्र प्राकृत एवासादने देशभेदश्रवणात् तस्य होमार्थाहवनीयप्रत्यासत्त्यर्थत्वेन दृष्टार्थत्वात् होमेऽपि देशभेदप्रतीतेस्तात्पर्यगत्या तत्र यागानां तत्तद्देशीयप्रयोगविधित्वस्यैवावगमात् तद्भेदेनाङ्गभेद इति वाच्यम्, प्रासादनानुवादेन देशकर्त्रादिनानेक गुणविधाने वाक्यभेदात् । तत्त्वविशिष्टविधानासादन विशेषणे विशिष्टोद्देशेन वाक्यभेदश्च । आसाद्य तत्र देशकर्तृविशिष्टासादनानन्तरमेव मारुत्युद्देशेनोत्तरवाक्ये विधीयते, पूर्ववाक्ये च तद्भिन्नहविषा स्थानयोर्देशस्य गद्गीकृत्य देशासादनविशिष्टासादनानन्तरम्, अध्वर्यो समारोपावस्यैव प्राप्त्युपपत्ते । अतश्च अप्राकृतकार्ययोरेव आसादनयोर्देशभेदेन विधानात् नान्योयोगप्रयोगविधि नम् ।

अस्तु वा प्राकृतकार्ये एवासादनानन्तरविधानम्, प्राकृतासादनस्यैव वा अतिदेशत पूर्वप्रकृत्या विधानम्, तथाऽपि न यागप्रयोगविधित्वम्, आसादनमात्रे एव देशविधानोपपत्तौ यागलक्षणाया प्रमाणाभावात् । अस्तु वा याग एव देशविधान तथापि ' सा उपांशु कर्तव्या ' इतिवद्द्वितीयानिर्देशात् प्रधानमात्र एवाय देशादिविधि न तु साङ्ग इति नाङ्गावृत्तौ प्रमाणमस्ति । इति प्राप्ते

सत्यमत्र वाक्यद्वयेऽपि स्वद्वृत्तरीत्यैव विशिष्टासादन विधानम्, तस्य च वदुक्तरीत्यैव प्राकृतकार्यायत्वात् प्राकृतत्वमेव वा तथापि प्रकृतौ तदासादनस्य तद्वृत्ति यागसिद्ध्यर्थत्वात् तस्य विहारान्तरे करणे अप्राकृतत्व स्थानत्वेऽस्तात्पर्यगत्या अस्य यागप्रयोगविधायित्वेन । आसादनविधिश्च निरपेक्षत्वात् गतयागोपलक्षणम् । एवं च गतानामपि विहारद्वयविकल्पोऽन्यतरस्यैवार्थ्ये च नाश्रित भवति, अ प्रकरणपा मदादीना यागस्यामात्रकरणात् अथव च । ' अग्नौ हवींषि ' ' मारुतीम् ' इति च यागार्थं कर्मीभूतानुवाद सन् तत्तद्यागलक्षणातात्पर्यग्राहक ।

अतश्च ' आसादयति ' इत्यत्र द्वितीयाश्रवणाभावात् ' साय जुहोति ' इतिवत् तद्यागकरणस्याङ्गभावस्य प्रयोगस्यैव देशादिविशिष्टस्य विधेयत्वावगतेर्युक्तैवाङ्गावृत्ति । अङ्गप्रधानयोर्निर्देशाभावेऽपि चात्र साङ्गप्रयोग विध्यन्तरमात्र ।

न चैवमपि अङ्गस्त्वेवाङ्गैरुपकारस्य सिद्धत्वेनैव प्रसङ्गात् यागान्तरस्योपकारोपपत्तेरावृत्तौ प्रमाणाभाव । उपकारलाभे च तदर्थमङ्गानाक्षेपात् विहितदेशाद्यभावेऽपि प्रसङ्गस्य वक्ष्यमाणत्वादिति वाच्यम्, तत्रान्यतरस्य भावेन कस्य वा निरर कुत्र प्रसङ्ग इत्यत्र नियामकाभावेन प्रसङ्गानुपपत्ते ।

न च ' बहूनां स्यात्तद्धर्मत्वम् ' इति न्यायेन भेदेषु वैश्वानराय एव अङ्गानां तन्त्रत्वतात्पर्यग्राहक इति वाच्यम् । तत्रत्येऽपि यत्र साम्य यथा सर्वतोमुखादौ चतुर्दिक्षु चतुर्षु विहारेषु चतुर्भिरध्वर्युभिः क्रियमाणे तत्र विनिगमनाविरहेण तन्त्रनियमाभावे प्रसङ्गासम्भवेन देशकर्त्रादिभेदेनाङ्गावृत्तेरावश्यकत्वात् ।

प्रकृते तु यद्यपि वचनरोधेन मारुत्या प्रसङ्ग प्राप्नोति । तथापि ' यदेवाध्वर्युः करोति तदेव प्रति प्रस्थाता करोति ' इति वचनेन प्रसङ्गाभावप्रतीतेः ध्वर्युविशिष्टमारुतीप्रयोगविधेः मारुतीप्रक्षेपाद्यङ्गमात्रे प्रसङ्गापत्तेश्चावृत्तिरिति ध्येयम् ।

मण्डन—' विहारयोस्तन्त्रभेद । ' ( मंत्र एव न तन्त्रम् ) ।

शंकर—' विहारयो अङ्गावृत्ति । '

८ वरुणप्रघासेषु दक्षिणविहारे प्रतिप्रस्थात्रा मन्त्रा अध्वर्योः पृथगुच्चारणीयाः ॥

मन्त्राश्च, सन्निपातित्वात् । १२।१।९।१८ ॥

भाष्यम्— वरुणप्रघासेषु विहारद्वयकत्वे सति ये मन्त्राः सन्निपातिनः, यथा आज्यग्रहणे प्रोक्षणेऽभिमर्शने । तेषां किं तन्त्रेण प्रयोग , अथवा भेदेन इति । तत्राविशेषात्तन्त्रमेव, न प्रसङ्गचिन्ता । तत्र प्रयोगवचनानुग्रहाय प्रभावे प्राप्ते, उच्यते । मन्त्राश्च आज्यग्रहणादयो भेदेन कर्तव्या । कुत ? सन्निपातित्वात् । सन्निपत्योपकारिण एते मन्त्रा उपस्थित कर्माभिदधति । पृथक्कर्माणि अध्वर्युप्रतिप्रस्थातारौ उपतिष्ठेते । तस्मात् पृथक् प्रयोक्तव्याः । अपि च करणान्तरं मन्त्रान्तेन कर्माणि निर्देशं पान वक्ष्यति, ' मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादि सन्निपात स्यात्सर्वस्य वचनार्थत्वात् ' इति । तथा सति

येन कर्मणा संनिपतितो मन्त्रस्तदर्थोऽसौ इति गृह्यते विशेषः । तस्मादप्यावृत्तिः ।

शा — वरुणप्रघासेषु दक्षिणोत्तरविहारयोः निर्वापादिमन्त्राः [illegible] तन्त्रेण अध्वर्युणा प्रतिप्रस्थात्रा वा अन्यतरेण वक्तव्याः, उत उभाभ्यामपि भेदेन इति संशये अन्यतरेणापि उच्यमानाः शक्नुवन्ति उभयोः स्मृतिं कर्तुं इति मन्यते । निर्वपामीत्यादेः आत्माभिवादित्वात् न तन्त्रता संभवति, इति उभयोः पृथक्पृथक् प्रयोगः । सकृदुपकृदनुष्ठानप्रसङ्गात् तन्त्रावापचिन्ताऽपि इयं अत्र कृता ।

सोम— पूर्ववदिह न कार्यसिद्धिः इत्युक्तेः संगतिः । सूत्रार्थस्तु— निर्वपणादिमन्त्राः भेदेन प्रयोक्तव्याः, तेषां करणमन्त्रतया कर्मादिसंनिपातित्वात्, उभयोश्च कर्त्रोः प्रयोगयोश्च प्रत्यासत्तिभयेन एकेन प्रयुक्तस्य इतरकर्तृककर्मादिसंनिपातासंभवात् इति ।

वि— ' विहारभेदे निर्वापमन्त्रादेस्तन्त्रता न वा ।, तन्त्रं द्वयोः स्मृते. सिद्धे, कर्तृभेदात् पृथक् भवेत् ॥'

भाट्ट— वरुणप्रघासेषु दक्षिणोत्तरविहारयोर्देशभेदात् कर्तृभेदाच्च पदार्थाना न क्रमता इति स्थितम् । तत्र च प्रयाजादिविषये भूयोऽनुग्रहस्य न्यायत्वात् मास्त्वां न्यायप्राप्तः क्रमः. ' प्रदेवान्वर्युः करोति, तत् प्रतिप्रस्थाता करोति ' इति वचनेन बाध्यते इत्याद्युक्तमेव । अतस्ते तावत् पृथगेव कर्तव्या. । मन्त्रास्तु ये अर्थसमवायिनः ते अध्वर्युणा तावत् पठनीया. । ततश्च तेन मन्त्रान्वे पदार्थे कृते पश्चात् प्रतिप्रस्थात्रा स्वपदार्थे क्रियमाणे अध्वर्यु–प्रतिप्रस्थातृकर्तृकपदार्थयोः क्रमविधानात् प्रतिप्रस्थातृकर्तृकपदार्थस्य अध्वर्युकर्तृकपदार्थेनैव उपस्थितिसिद्धेर्मन्त्रकार्यस्य प्रसक्तत्वाभावात् न मन्त्राणां प्रतिप्रस्थात्रा पृथक्पाठः । इति प्राप्ते, -निर्वपामीत्यादिमन्त्रेषु आत्माभिवादितया आत्मकर्तृकनिर्वापस्मृतेरेव कार्योपयोगितया तादृश्याश्चान्यतः अलाभात् न प्रसङ्गः । यत्तूक्तम् ' प्रदेवाध्वर्युः करोति ' इत्यनेन न क्रमविधिः, प्रसङ्गाभावमात्रफलकतया पदार्थकरणमात्रविधानात्, कर्तृभेदेन पाठक्रमस्यापि अनियामकत्वाच्च । अतो युगपदेव द्वाभ्यां समन्त्रकाः पदार्थाः कर्तव्याः इति न प्रसङ्गावकाशः ।

मण्डन— ' पाठः पृथक् स्यात् तद्वसंनिपातिनाम् । '

शंकर— ' विहारयोर्न मन्त्रैक्यम् । ' १०.

* वरुणप्रघासेषु ' द्वयोः प्रणयन्ति ' इति पुनर्विहितमग्निप्रणयनं अपूर्वम् । न प्राकृतं नापि सौमिकं परन्तु अतिदेशप्राप्तं प्राकृतं कृत्वा पुनः अपूर्वं विहितं अग्निप्रणयनं कर्तव्यम् । वि. ७।३।९ वर्णकं २ (पार्थिकमतम्), * ' वरुणप्रघासेषु ' द्वयोः प्रणयन्ति ' इति पुनर्विहितमग्निप्रणयनं न तु वैश्वदेवशुनासीरीययोः । पुनर्विधानं च उत्तरवेद्या अग्निनिधानगुणविधानार्थम् । ७।३।९, * वरुणप्रघासेषु नव हवींषि विहितानि । तेषु मारुतीमामिक्षां प्रतिप्रस्थाता दक्षिणे विहारे अनुतिष्ठति । इतराण्यष्टौ च अध्वर्युरुत्तरे विहारे अनुतिष्ठति । उभयोरपि विहारयोरङ्गानां भेदेनानुष्ठानम्, न तन्त्रम् । ११।२।९.

*** वरुणप्रघासेषु पत्नीसंयाजानां द्विरावृत्तिः ॥**

**एकाग्नित्वादपरेषु तन्त्रं स्यात् । ११।२।११। ४९ ॥**

भाष्यम्— इदमपरं तत्रैव चिन्त्यते । किं आपराग्निका होमास्तन्त्रेण कार्याः उत भेदेनेति । किं प्राप्तम् ? तन्त्रमिति । कुतः ? एकाग्नित्वात् । पौर्णमासिकानामग्निभेदात् भेद उक्तः । इह तु हेतुर्नास्ति । एकाग्नित्वादेतेषाम् । तस्मादेते तन्त्रं भवेयुः ।

**नाना वा कर्तृभेदात् । ५० ॥**

भाष्यम्— नाना भवेयुः । कुतः ? कर्तृभेदात् । मारुत्या यान्यङ्गानि तानि प्रतिप्रस्थात्रा कार्याणि । इतराणि अध्वर्युणा । तन्त्रभावेऽन्यतरेण कर्तृकृतं वैगुण्यं स्यात् । तस्मात् भेदः ।

शा— ये पुनः आपराग्निका होमाः पत्नीसंयाजादयः तेषु तन्त्र आवापो वा इति संदेहे पौर्णमासिकवत् देशभेदाभावात् तन्त्रत्वं स्यात् । असत्यपि देशभेदे कर्तृभेदात् भेदः, प्रतिप्रस्थातृकर्तृका हि मारुत्या उपकुर्वन्ति अध्वर्युकर्तृकास्त्वितरेषां तस्माद्भेदः ।

वि— ' तत्रैव पत्नीसंयाजादौ तन्त्रं भिन्नताऽथवा ? तन्त्रमग्न्यैक्यतो, भेदः कर्तृभेदानिवारणात् ॥ '

भाट्ट— तदेशापराभिका पत्नीसंयाजादयो देशाभेदात्तन्त्रम् । इति प्राप्ते, देशभेदवत् कर्तृभेदस्यापि प्रयोगभेदप्रयोजकत्वात् तदनुरोधेन तत्राप्यावृत्तिः । न च देशभेदादेवाङ्गावृत्तौ सिद्धायां तत्र कर्त्रन्तरापेक्षणे प्रतिप्रस्थातुमात्रविधानाच्च कर्तृभेदस्य स्यात्तन्त्रेण प्रयोगभेदाक्षेप कत्वमिति वाच्यम्, वैपरीत्यस्यापि वक्तुं शक्यत्वेन विनिगमनाविरहेणोभाभ्यामपि कर्तृदेशाभ्यां स्वविशिष्टप्रयोगविधिबलेन प्रयोगभेदाक्षेपोपपत्तेः । अतश्च पत्नीसंयाजादिषु देशभेदाभावेऽपि कर्तृभेदादेवावृत्तिः ।

वस्तुतस्तु देशकर्तृविशिष्टप्रयोगविधानेऽपि वार्त्तिकपरम्परायतनरीत्या तत्तद्देशीयतत्तत्कर्तृकपदार्थानामेव प्रयोगविध्यापत्तेर्होमादिकर्तृकपदार्थानां तत्तद्देशाप्रासिद्धत्, अत एव देशीयानामप्यापराग्निकानां प्रतिप्रस्थातृकर्तृकत्वानापत्तेर्नानेन पत्नीसंयाजादिषु प्रतिप्रस्थातृकर्तृकत्वम् । न हि मारुतीयागे प्रतिप्रस्थातृकर्तृकत्वम्, येनाङ्गप्रधानयोरेककर्तृकत्वात् पत्नीसंयाजेष्वपि तत्प्रसिद्धिः स्यादेव । मारुती यागस्य यजमानकर्तृकत्वेन प्रतिप्रस्थातृकर्तृकत्वाभावात् । किन्तु 'यदेषाम्युत्तुं करोति' इत्यनेन पत्नीसंयाजेषु तत्प्राप्तिः । अत्र हि यत्पदार्थे यागाङ्गत्वाग्न्यभूते अध्वर्युकर्तृकत्वपदार्थस्य मारुतीयागाङ्गत्वे प्रतिप्रस्थातृकर्तृकत्वं विधीयते । अतश्चापराग्निकानामावृत्तिः ।

मण्डन— 'आपराग्निकभेदः स्यात् ।' आपराग्निकानां होमानां भेदः भेदेन अनुष्ठानं स्यात्— न तन्त्रेण इत्यर्थः ।

शंकर— 'आपराग्निकभेदोऽत्र ।'

● वरुणप्रघासेषु प्राचीनतादेव औत्तरवेदिकस्य प्रणयनम् । सकर्ष ३।२।२२ ● वरुणप्रघासेषु वत्सादीनां न भेदः । भाट्ट ११।२।९ ● वरुणप्रघासेषु मारुत्याभेदे प्रयाजादीनां भेदेन क्रिया । भा ११।२।१०।४८ ● वरुणप्रघासेषु यवपिष्टमय मेषं वारुण्यामिक्षायामवदधाति । तस्य आमिक्षासंयुक्तस्य मेषस्य सर्वस्यैव होमः । वि ११।२।१८, ● वरुणप्रघासेषु वारुणी आमिक्षा । तत्र 'वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्ति' । अत्र प्रयोगप्रकार— वरुणप्रघासेषु नव हवींषि । तेष्वन्त्यं हविः वारुण्यामिक्षा । नवमं हविः 'काय एककपालः' ।

वारुण्यामिक्षायां यवपिष्टनिर्मितं मेषमवदधाति, तत आमिक्षासंयुक्तं मेषं सर्वमवदाय हुत्वा, तत एककपालेन प्रचर्य, माण्डलिकेन वारुण्यामिक्षाया निष्कासेन यवतुषैश्च अवभृथमनुतिष्ठन्ति इति । ११।२।१५, ● वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति विहिते कर्मान्तरे अतिदेशप्राप्तो वारुण एककपाल पुरोडाश तुषनिष्कासाभ्यां बाध्यते । अतिदेशात् उपदेशः प्रबलः । ७।३।८ ● वरुणप्रघासेषु विहारद्वये सति पत्नीसंयाजानां तन्त्रं न, कर्तृभेदात् । ११।२।११।४९-५० ● वरुणप्रघासेषु विहारद्वये होतृ आग्नीध्र ब्रह्मणां तन्त्रम् । अध्वर्युप्रतिप्रस्थात्रोस्तु यजनाभेदः । ११।२।१०।४४-४८ ● वरुणप्रघासेषु विहारपृथक्त्वे आज्यग्रहणे, प्रोक्षणे, अभिमर्शने, सन्निपातिनो मन्त्रा अध्वर्युप्रतिप्रस्थातृभ्यां भेदेन कर्तव्याः । भा १२।१।९।२८ ● वरुणप्रघासेषु विहारभेदेऽपि गार्हपत्यस्यैकत्वात् पत्नीसंयाजानां तन्त्र इति पूर्वपक्षः । अध्वर्युः प्रतिप्रस्थाता च एकस्मिन्नेव गार्हपत्ये पृथक्पृथक् पत्नीसंयाजान् जुहुयातामिति सिद्धान्तः । वि ११।२।११ ● वरुणप्रघासेषु वैश्वदेवे च अग्निमन्थनम् । भा ७।१।३।१७ ● वरुणप्रघासेषु वैश्वदेवपर्वस्थपदार्थवाक्यानिर्दिष्टानां 'एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणि' इत्यनेनातिदेशः, न तु अर्थवादमात्रस्य । वि ७।१।२ ● वरुणप्रघासेषु 'शमीमय्यौ हिरण्मय्यौ वा स्रुचौ भवतः' । वि. ७।१।५ ● वरुणप्रघासेषु शमीमय्यौ हिरण्मय्यौ वा स्रुचौ समाख्याः । संमार्गाधिकरणम् । २।१।४।९-१२ ● वरुणप्रघासेषु शालामुखीयो नास्तीति पूर्वपक्षः, अस्तीति सिद्धान्तः । तत्र तु आपस्तम्बमते नास्ति बोधायनमते अस्तीति व्यवस्था । सकर्ष ३।२।२८ मीको पृ २४९१ 'यदि वरुणप्रघासेषु च शालामुखीयोऽस्ति' इत्यत्र द्रष्टव्यम् । ● वरुणप्रघासेषु 'शूर्पेण जुहोति' इति न शूर्पप्रयुक्तो धर्मो विधिः शूर्पस्य तु । ९।१।५।१९–१९ मीको पृ २०७२ 'द्रव्यसंस्कारसमुदायन्याय' इत्यत्र द्रष्टव्यम् ।

● वरुणप्रघासावभृथे अवभृथनामसौमिकावभृथधर्माणामतिदेशः । ७।३।८।१३-१६ मीको पृ २१६ 'अतिदेश वरुणप्रघासावभृथे०' इत्यत्र अधिकरण

कारणतापत्तत्र नासीति निश्चयमन । वि १।१।७ ● वर्णाना प्रयत्नाभिव्यङ्ग्यत्वस्य अङ्गीकार । मणि पृ १६८, ● वर्णाना व्यापकानामपि तत्तद्ध्वनिभि तत्त देशाभिव्यक्ताना स्वसामीप्योत्पत्त्यादिक्रमेण ग्रहणमुपपन्नम् । पृ १७० ● वर्णेषु एकार्थावच्छेदोपाधिना पदेति बुद्धि । वि १।१।६

● वर्णत्रयस्याप्यधिकार अध्वरकल्पादिषु श्रुत सामधेनीसामद्वयासु विकृतिषु । ६।६।७।३८-३९ मीको पृ २८३ 'अधिकार अध्वरकल्पादिषु०' इत्यत्र अधिकरण द्रष्टव्यम् । ● वर्णत्रयस्यापि मनुना पैष्टीपान ( सुरानिषेध ) निषिद्धम् । सु पृ १९८

● तुल्यहिर माध्यमायाएतु अपि सवर्णान्तेक हस्तिपाद्यु ब्राह्मणादिषु मातापितृश्च स्मरणादन वर्ण विवेकानवधारण भवति । वा १।३।८।२७ पृ २८०

● वर्णव्यत्यय प्रत्यक्षित इति चेपाचिमताम् । वा १।३।८।२४ पृ २७१

● वर्णव्यक्तिसंस्कार एतेन प्रयुक्त । वा १।३।८।२८ पृ २७०

● वर्णसङ्कर । न च भर्तृ व्यतिरेकतयेन वर्णसङ्कर अपराधेन नाप्यते । दृश्यते हि अपराधिनीनामपि स्वभर्तृ निमित्त पुत्र । तदपराधनिमित्तस्तु तासा अशुभ फलोपभोगो भवेत् । न तु अपत्याना वर्णान्तरं । न च निरोमत पत्यास्तेरन ग्रह प्रमाद । सवर्णेन च उत्पादितस्य नैव वर्णान्तरापत्ति । सङ्करजातानामपि च पुन उत्कर्षापकर्षाभ्या सप्तमे पञ्चमे वा अपत्यन्तरवर्णापत्ति स्मर्यते । वा १।२।१।२ पृ १०९, ● वर्णसङ्कर । 'माता भस्त्रा पितु पुत्र इति स्मार्तेन दर्शन जनयितुश्च नानाजातित्वोपपत्ति तेन वर्णसङ्कर । १।२।१।३ पृ १२८

● वर्णसमूह । न चैकस्मिन् वर्णसमूहे जातिद्वय समवैतम् । वा १।३।८।१ पृ ८०४

● वर्णस्फोट 'वाक्यार्थे शक्ति स्फोटा वा' इति विन्दौ द्रष्टव्य ।

● वर्णस्वरपदयुक्ता न गीति किंतु स्तोत्रस्वरप्रयुक्ता । टुप् ९।१।२८।२९ पृ १६९८

● वर्तमान काल । एतावतैव चात्र वर्तमान काले यद्भुति कर्मसकल्पात् प्रभृति [illegible] सर्वाय फलापर्यन्तोपभोगात् । वा २।१।२९ पृ ३९८

● न हि वर्तमानकाल कश्चिदस्ति यस्याय प्रति निर्देश । मा १।२।३।२६ । वर्तमानक्रियस्य अनभ्यात् । वा

● वर्तमानता । 'यदि ध्वंसप्रतियोगिना वर्तमानता, न नित्येषु सा' । वि पृ ६२ । अत्र न्यायकणिका-या मते अनागतस्य कारणद्वारेण उपसृष्ट भवति, सा च अतीतस्य स्वजनककारणद्वारेण उपसृष्टत्वे सा वर्तमानता । न चेय नित्येषु सभवति प्रागभावध्वंसाभावानिरासाविनया निष्कारणत्वविनीत्वात् इत्यर्थ । तदेतत् पारिभाषिक वर्तमानत्व न लोकसिद्धम् । अस्ति हि प्रध्वंसरहित भावरहितेष्वपि आकाशादिषु वर्तमानतानिर्णयानुभवो लौकिकाना 'विभुत्व व्योम' 'आकाशोऽस्ति' इत्यादि प्रयोगदर्शनात् । न च भाक्त प्रयोग, विशेषाभावात् । न खलु 'आत्माऽस्ति' 'विज्ञानमस्ति' इति विशेषा दृश्यन्ते । अविशेषेऽपि च एकस्य भाक्तत्वकल्पने तदतिरिक्तस्यापि भाक्तत्वप्रसङ्ग इति । पृ ६२

● वर्तमानस्य 'लट्' इति विन्दौ मणिग्रन्थे द्रष्टव्यम् ।

● वर्तमानत्वादिक्रमपि मावत्रान्वयि । मणि पृ ११३

● वर्तमाननियमस्य गौणत्वे 'इनवच्च पचति सोऽभुत भुङ्क्त इति दृष्टान्तो दातव्य । सु पृ १०

● 'वर्त्मनि जुहोति' अत्र आहवनीयनिवृत्ति । सङ्कर्ष २।८।१८ मीको पृ १०२१ 'आहवनीयप्रकरण पदे जुहोति' 'वर्त्मनि जुहोति' इति' इत्यत्र अधिकरण द्रष्टव्यम् ।

● वर्त्मादिना विशेषविहितेन ज्योतिष्टोमादौ आहवनीयस्य सामान्यविहितस्य बाध । १०।८।८। ६ मीको पृ १८३९ 'ज्योतिष्टोमादौ वर्त्मादिना०' इत्यत्र अधिकरण द्रष्टव्यम् ।

● वर्त्महोम वाक्येन ज्योतिष्टोमे । भा १०।८। ८।१६

* वषट्कारोऽपि पृथक् सोमभक्षकारणम् । ३।५।१०।३१. मीको पृ १८२७ ' ज्योतिष्टोमे वषट्कारोऽपि पृथक् सोमभक्षकारणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

■ वषट्कारश्च कर्तृवत् । ३।२।१६।३८ ॥

अस्त्यत्र वषट्कारदेवता ' सोमस्याग्ने वीहीत्यनुवषट्करोति ' इति । तत्र सन्देहः किं अनुवषट्कारदेवतोपलक्षणीया नेति । अत्रापि स एव न्यायः केनचिद्विशेषेण उपाहरणान्तरेऽतिदिश्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । भवतु तत्राविशेषो देवताया देवतान्तराभावात् अनुपलक्षणम् । इह तु ' सोमस्याग्ने वीहि ' इत्यस्य होममन्त्रस्य करणत्वेनानुवषट्कारे विनियोगात् अग्नेश्चोदनया मन्त्रवर्णाच्चानुवषट्कारदेवतात्वमैकान्तमेव । तस्मात् अनुवषट्कारशेषभूतसोमभक्षणे अग्निरप्युपलक्षणीय एवेति । एवं प्राप्ते, अभिधीयते । नवैतेन यदि होमकालादनुवषट्कारदेवतार्थं सोमो गृह्यते । किं तर्हि ? प्रधानदेवतार्थेन । अनुवषट्कारो हि प्रतिपत्तिकर्म, तेन हि प्रधानदेवतार्थमाहृतस्येव द्रव्यं प्रतिपाद्यते । अतो यथा पूर्वेनः पात्रा अध्वर्युर्होत्रा वा इतरपात्रान्तरेण प्रतिपत्तिकर्मसंबन्धित्वेन नोपलक्ष्यते, तथानुवषट्कारदेवताऽपि । यदा तूपलक्ष्येत यदि च प्रकृतौ देवप्रतिपत्तिसंबन्धिन उपलक्षणं कृतं भवेत् । न त्वेतदस्ति । तदुक्तम्— ' यथा पश्चात्तन पात्रा पूर्वपात्रुपलक्षणम् । अप्राकृतं न कुर्वीत तथैनामपि देवताम् ॥ ' इति ( वा पृ. ७९७ ) । तेन स्वष्टवत् नयत्रिंशद्वत् अनुवषट्कारदेवताऽप्यनिर्नोपलक्षणीय एवेति ।

प्रयोजनम्— न वक्तव्योय । सूत्रं तु– पात्रकर्तृवदनुवषट्कारदेवताऽपि नोपलक्षणीयेति । तीका.

■ वषट्कारश्च कर्तृवत् । ३।२।१६।३८ ॥

अस्य सूत्रस्य केवलानन्दीया वृत्तिः मीको. पृ. ४२६ ' अनुवषट्कारश्च कर्तृवत् ' इत्यत्र द्रष्टव्या ।

* वषट्कारश्च ( अनुवषट्कारश्च ) कर्तृवत् । ३।२।१६।३८ । वषट्कारश्च नैव स्यात् पात्रकर्तृवत् वषट्कारशब्देन अनुवषट्कारदेवताया. लक्षितलक्षणोत्पाः प्रतिपत्तिकर्माङ्गत्वेन प्राकृतकार्यापत्त्यभावात् प्रकृतदेवतासंस्कारभूतस्य उपलक्षणस्य अतिदेशतोऽप्राप्तेः इत्येव उपलक्षणानिरासार्थे नेदं इति पूर्वसूत्रानुवृत्तम् । सु. पृ. ११५५. * वषट्कारः चमसभक्षणे कारणं तत्र होतुः । चि. ३।५।१०. ■ वषट्कारः प्रदानार्थः । भा. १२।३।१५।३५. * वषट्कारः यावति विषये तावत्येव प्रथममक्षः । भा. ३।५।१०।३१ * वषट्कारः षष्ठेऽहनि ऋतुयाजेषु होत्रादिभिः कार्यः तिरस्कप्रैषमन्त्रोत्तरं कर्तव्यः, न तु केवलप्रैषमन्त्रोत्तरम् । ऐब्रा. २२।८. * तन्त्रे च मौलिके वषट्कार निर्दिष्टः । भा. ८।४।५।११, ■ भक्षस्य कारणं वषट्कारः । ३।५।१८।४५. * यदा याज्यावषट्कारयोः समुच्चयः तदा याज्योर्ध्वं वषट्कारः । यदा विकल्पः तदा ' ये यजामहे ' इत्यव्यवहितोत्तरत्वं वषट्कारस्येति पूर्वपक्षः । याज्यावषट्कारयोः विकल्पो नास्त्येव याज्योत्तरमेव च वषट्कारः । संकर्ष. ४।३।४. * वषट्कारेण यागः क्रियते न याज्यामात्रेण, अन्यथानता च वाक्यम् । भा ३।५।१८।४५. * वषट्कारेण हविःप्रदानार्थत्वात् इज्यते न केवलया याज्यया । भा ३।५।१८।४५.

■ वषट्काराच्च भक्षयेत् । ३।५।९।३१ ॥

अथ किं समाख्यैव भक्षणे कारणम् ? नेति ब्रूमः । वषट्काराच्च भक्षयेत् । वषट्कारश्च भक्षणनिमित्तम् । कथम् ? एवं हि श्रूयते ' वषट्कर्तुः प्रथमभक्षः ' इति । अत्र प्राप्तभक्षणानुवादेन प्राथम्यमात्र विधीयते, अथवा वषट्कारनिमित्तकं प्राथम्यविशिष्टं भक्षणान्तरमिति । अत्राय पूर्वपक्षिणोऽभिसंधिः । सर्वत्र विशिष्टविधिगौरवभयेनोपपदद्यमानान्तो विधिर्धात्वर्थस्य विलम्बिनीमपि यथा कथञ्चित्प्राप्तिमपेक्षते । अस्ति च होतुर्वषट्कर्तृत्वात् ' होतुश्चमस ' इति समाख्यया स्वचमसे भक्षणप्राप्तिः । अतस्तेनैव समाख्याप्राप्तभक्षणानुवादेन वषट्कारनिमित्तकं प्राथम्यमात्र विधीयते । तेन वषट्कर्तृत्वनिमित्तकं भक्षणं नास्तीति । एवं प्राप्ते, अभिधीयते । यद्येवं यद्यपि समाख्याप्राप्तं च भक्षणमनुवदितुं शक्यते । तथापि, न वाक्येन भक्षणमात्रानुवादेन प्राथम्यं विधीयते, अन्यत्रापि प्रसङ्गात् । किं तर्हि ? वषट्कर्तुर्यो भक्ष इति वषट्कर्तृसंबन्धिभक्षणानुवादेन । तथा सति वषट्कर्तृसंबन्ध-

सापेक्षस्य भक्षणस्य प्राथम्येन सह न समासः संभवति, असमर्थत्वात्। अथ प्राथम्येन भक्षणस्य प्राधान्याच्च 'भवति वै प्रधानस्य सापेक्षस्य समासः' इत्यनुशासनात् वषट्कर्तृमन्यसापेक्षमपि भक्षं प्रथमपदेन समस्यते इत्युच्यते, तथापि प्राथम्य तावत् भक्षणगुणभूतम्, तदपि वषट्कारनिमित्तत्वात् वषट्कर्तृभक्षणस्य प्राथम्य न निमित्तान्तरेण। किं नहि? वषट्कारेणैव। तेन वषट्कर्तुरिति भवन्यान् गुणभूतस्यापि प्राथम्यस्य सापेक्षत्वात् स्याद् एव समासदोष इति। भक्षणागन्तवो. निष्क्रया-नुनर्दिष्टं विधातु वाऽशक्यत्वात् वषट्कर्तुः प्राथम्य विशिष्टमपूर्वमेव भक्षणं विधीयते इति। ननु 'एक साम तृचे क्रियते स्तोत्रीयम्' इति समासापेक्षं समासस्यामपि ऋचमनूद्य नित्यविधान दृष्टम्, तथा प्राथम्यविधानं भविष्यति। नैतत्। तत्रापि समासार्थेनैव विधानात्, किन्तु तत्र सामान्यविधानेनैव प्राप्तत्वात् नियमस्य चाप्राप्तत्वात् नित्यपरो विधिरित्युच्यते। इह तु वषट्-वषट्कार भक्षणस्याप्राप्तत्वात् समासार्थ एव विशेष्य-त्पर्याक्रमणेन विशिष्ट विधीयते। तेन वषट्कारनिमि-त्तक भक्षण होमात् उर्ध्व कृत्वा समाख्यानिमित्तक भक्षणं चमसे कर्तव्यम्। न तु तथैव प्राधान्यमिति सिद्धम्।

प्रयोजनम्– यथोक्तम्। सूत्रं तु– न केवल समा-ख्यया वषट्कर्ता स्वचमसे एव भक्षयेत्, किन्तु वषट्-कारनिमित्तं चमसान्तरेऽपि भक्षयेदिति। तौता.

⧗ वषट्काराच्च भक्षयेत्। ३।५।१०।३१ ॥

सिद्धान्तसूत्रम्। समाप्तेऽधिकरणे सोमभक्षनिमित्त समाख्या इत्युक्तम्। तत्र निमित्तान्तरप्रतिपादनार्थ-मिदं सूत्रम्। निमित्तान्तरसमुच्चयार्थश्चकारः। यथा समाख्यया भक्षयेत् तथा वषट्कारादपि भक्षयेत् सोमम्। 'निमित्तात्' इति पदं पूर्वसूत्रादनुवर्तते। 'वषट्कर्तुः प्रथमभक्षः' इति प्राथम्यविशिष्टभक्षणस्य विधायकेन विधिवाक्येन वषट्कारस्य भक्षनिमित्तत्वमुक्त भवति। तस्मात् यो य ऋत्विक् चमसं वषट् करोति स तं भक्षयेत् प्रथमम्। ततो यथायथं समाख्यातमपि भक्षयेत्। के.

० 'वषट्काराच्च भक्षयेत्'। (३।५।१०।३१) इत्यधिकरणे 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र समासवशेन प्राथम्यभक्षयोः एकोपस्थितिविषयत्वात् प्रथमभक्षशब्दे एकदेशेन भक्षमनूद्य एकदेशेन प्राथम्यं न विधातुं शक्यते इति वक्ष्यते। कु. ३।१।६।१२. ० वषट्कारस्य 'वषट् ते विष्णवास आकृणोमि०' इत्यत्र वर्तमानस्य आकृणोमि इत्यनेनान्वयेन अस्वातन्त्र्यात् न प्रदानार्थता। संकर्ष. २।८।१९, * आश्रावषट्कारयोः छन्दस्त्व प्रश्न न विरलः। ४।३।३.

⧗ वषट्कारे प्राणापाननिमेषाणां प्रतिशाखं उपसंहारः ॥

कस्मिंश्चिच्छाखायां 'वषट्कृत्यापान्यानिमिषेदपानेन एव प्राणं दधाति निमेषेण चक्षुः' इति श्रुतम्, 'वषट्कृत्य प्राण्यादपान्यादथ निमिषेत्' इति तु शाखान्तरे। तत्र शाखाभेदेन केषाञ्चिद्विधिद्वयं केषाञ्चिद्विधित्रयमेतत्। इति प्राप्ते, अपाननार्थगादस्यापाननिमिषत्वस्यैव श्रुतेऽपि पाठे अपाननिमेषविध्योरुत्तरमर्थवादद्वयभाजेन वषट्-कृत्येत्यस्य निमेषविधानस्यानुपपन्नप्रतीतेः अपाननिमेषयो वषट्कारानन्तरविशेषोत्तरकाल एव प्राप्तौ शाखान्तरे वषट्-कारोत्तर प्राणनस्यैकस्यैव विधिः इतरौ क्रमार्थमनु-वादः। संकर्ष. ४।३।७.

* वषट्कारे 'य कामयेत प्रमायुकः स्यात्' इति यजमानमरणकामस्य होतुर्विधिरयम् इति पूर्वपक्षः। स्वर्गकामस्य विधेरर्थवादोऽयं इति सिद्धान्तः। संकर्ष. ४।३।९

⧗ वषट्कारे 'यं कामयेत प्रमायुकः स्यात्' इति स्वर्गकामविधेरर्थवादः ॥

वषट्कारमेव प्रकृत्याम्नायते '■ कामयेत प्रमायुकः स्यादिति नीचैस्तरां तस्य यात्यावा वषट् कुर्यात्' इत्य-स्यान्ते 'उच्चैः क्रौञ्चमिव वषट् कुर्यात्स्वर्गकामस्य' इति श्रुतौ द्वावपि काम्यविधी कुर्यादिति लिङ्श्रुतेरविशे-षात्। दीर्घरोगसंततस्य प्रत्यासन्नतमिषङ्गिनस्य मरण-कामनाया अपि संभवात्। अन्यथा तादृशस्यारम्भहनन-विधेः स्मृतिषु वैयर्थ्यापत्तेः। सर्वस्वारादिभौतकर्मस्वपि मरणकामाधिकारित्वादर्शनात्। पुरुषाभिप्रायाया विधि-त्वात्। वस्तुतस्तु यः प्रमायुकः स्यादित्यानुक्त्या होतृगत एवैष कामः प्रतीयते। स च द्वेष्ये यजमाने

ऽप्रभवत्येन । अत एव 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति स्मृतिरपि इष्टार्था सती युज्यते । न चाध्वीत इत्युपपदविशेषविरोध । 'यस्मिन् जात एतामिष्टिं निर्वपति पूत एव स' इति श्रुत्येव क्वचित् पञ्चम्यापि समानात् । अत एव प्रकरणान्तरस्य 'यस्य देवता अभि' इति मन्त्राणां तृचानां श्रवणे होतु विधाय, 'स यजमानस्य पाप्मभ्रातृव्यमादित्येति ह स्माह योऽस्य होता स्यात्' इत्यनेन 'एव यथा कामयेत तथा कुर्यात्' इत्युपक्रम्य 'यं कामयेत प्राणेनैनं व्यर्धयानीति वायव्यमस्य लुब्धं शंसेदृचं वा पदं वातीयात्' इत्यादिना तृचभेदेन तत्तद्गतपदादिलोपेन यजमानस्य प्राणादिसम्बद्धिं होतृकामयमाना प्रतिपादितोपपद्यते । तस्मात्प्रधानफलमङ्गफलं वा यजमानगतिर साधारणं यथावचनं स्वीकार्यम् । प्रकृते च होतृपदाश्रवणेऽप्यैतरेयब्राह्मणे प्रकरणगतात्मनेपदश्रवणात् होतुरेवात्र काम्यो विधि । इति प्राप्ते, भवतिस्त्वेव हारूपस्य मरणस्य सर्वथाऽनिष्टत्वेन तदधिकरणदेवस्य यत्फलं तदभावेन तस्य नान्तरायत्वाभावाच्च सर्वस्मात्मरणादौ साधनान्तरकथनावधिविनिरसरोगनता मरणाख्यान्यनुशासनात्मस्य न यजमानस्य काम सम्भवतीति स्वर्गकामविधेरयमपवाद एव । ऋत्विक्कामनाविधिर विधिप्रत्ययस्याविधायकत्वात् । 'विप्र मुह्यस्व मा चास्य मरणे मुह्या' इति लौकिकवाक्येऽपि पूर्वविधेरुत्तरविधिपुनरुपादकतया एकवाक्यता दर्शनात् । नापि होतु काम अन यथासिद्धापवादस्य दर्शनात् । प्रकरणादपि यं कामयेत सर्वेरेनमङ्गै सर्वेणात्मना समर्धयानीत्येतदेवास्य यथापूर्वमनुसृत्य शंसेत्' इति विधेरथवादत्वेनैव समानवाक्यानामुपपत्ते । सकर्ष ४।१।५

● वषट्कारोत्तर प्राणनस्य एकस्यैव विधि अपाननिमेषणयो कमात्सगनुवाद । सकर्ष ४।३।७

● वषट्कारनिमित्त भक्षणं पूर्वं कृत्वा भक्ष्य समाख्याभक्ष कर्तव्य । वा ३।५।१०।३१ ● वषट्कारनिमित्ता होमाभिषवनिमित्ताश्च सोमभक्षा ज्योतिष्टोमे । ते न परिसंख्यार्था किंतु संस्कारार्था । भा १०।२।५।२९-३०

● वषट्कारपाद । सकर्ष ४।३।१-२२

● वषट्कारभक्ष स्वयं याज्यापाठे यजमानस्य ज्योतिष्टोमे ऋतुयाजेषु । ३।५।१८।४४-४६ मीको पृ १२४३ 'ऋतुयाजेषु स्वयं याज्यापाठे॰' इत्यत्र द्रष्टव्यम् ।

होमाद्येषु भक्षणानिमित्तयो वषट्कारस्वाहाकारयो विकल्प सुस्थितो भवति । वि १०।८।१०

— वसतीवरीपर्यन्तानि पूर्वाणि अङ्गानि तादर्थ्यादात्मकालत्वात् अवभृथादाणविशेषाणि तन्त्रम् । अवभृथादीनि उत्तराणि अङ्गानि दीक्षाविसर्गाधीनत्वात् तन्त्रम् । भा ११।४।५।२०

● वसनम् । वस्यते परिधीयते इति वसनम् । 'लोहितवसना ऋत्विज प्रचरन्ति' इत्यत्र वसन् शब्दो न वस्त्रमात्रवचनं किंतु परिधानवचनं । बाल पृ १५७

● 'वसन्ताय कपिञ्जलानालभते' अयं मन्त्रातस्यातस्यैव देवतात्वकल्पनात् मन्त्रवत्त्व विधि । बाल पृ १२ ● 'वसन्ते ज्योतिषा यजेत' इति निमित्तार्थं श्रुति, वाक्यान्तरेण ज्योतिष्टोमस्य कालसम्बन्धं विधि वत्त्वात् । कणिका पृ १६५ ● 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिना वसन्तादिकालविशिष्टमाधानं विधीयते । २।३।३।४ मीको पृ ९२० 'आधानाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । ● 'वसन्ते ब्राह्मणोऽग्नीन् आदधीत' इत्यादौ ब्राह्मणादीनां आधानं विधीयते, न तु ब्राह्मणादिश्रवणं निमित्तार्थम् । ब्राह्मण आदधीत इत्येवं न तु ब्राह्मणो वसन्ते इति । भा २।३।३।४ ● 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्य, शरदि वैश्य, वर्षासु रथकार आदधीत' अयं वाक्य वाचनिकयागविधि श्रौत । बाल पृ १८ ● 'वसन्ते ब्राह्मणमुपनयीत' इत्यादिना वसन्तादिकालविशिष्टस्य उपनयनस्य विधि । वि २।३।३ ● 'यदि वसन्ते यजेत, द्विपशुपुरोडाश्यान्, सहृदमिधारयेत्' । भा १०।८।२०।६६

● वसन्तादिश्रुतिभि प्राप्ते, न ब्राह्मणस्य आधानाक्षेपसमर्था इति आह्निकीनैव अधिकृते इति । वा २।३।८।२२ पृ ७७१

* वसिष्ठादीनां सत्राधिकारो नास्ति विश्वामित्रसमानकल्पत्वाभावात् । वि. ६।६।४.

● वसवः अष्टौ– ' धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ ' सु पृ. १०८६.

● वसोर्धारा नामकर्म । बहून्येतानि कर्माणि । तेषां तु अनुक्रमेण क्रियासन्तानो भवति । द्वादश द्वादशानि जुहोति इत्युक्तम् । तत्रापि मन्त्रान्त एव कर्मादिसन्निपातः । भा. १२।३।११।२६–२७. ● वसोर्धारायां मन्त्रान्ते कर्मादिसन्निपातः अग्निचयने । १२।३।११।२६–२७, मीको. पृ. ४७ ' अग्निचयने वसोर्धाराया मन्त्रान्ते कर्मादिसन्निपातः ' इत्यत्र अधिकरणं प्रष्टव्यम् ।

● वस्तु एकमपि क्रमतः ( उपादेयोरेकगततद्रूपाश्रयभेदात् ) क्वचिदेव विवक्ष्यते न सर्वत्र । कथमेकस्य युगपत् उद्दिश्यमानोपादीयमानत्वं इति चेत् । अपेक्षाहेतुभेदात् द्वैरूप्यमपि भवन्ति इत्युक्तम् ( स्तुतशस्त्राधिकरणे ' आचार्यो मातुलश्चेति ह्येकस्यैकत्वेऽपि सिध्यति । अपेक्षाहेतुभेदेन व्यवहारः पृथक्तया ॥ ' इत्यादिना । ) । भा. ३।२।६।१९ पृ. ७४७.
■ वस्तु त्रयात्मकम् । ' घटमौलिसुवर्णार्थी नाशोत्पत्तिस्थितिष्वयम् । शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥ ' ( नाशोत्पत्तिस्थित्यात्मकत्वात् । रत्नाकरः ) । श्लोवा. वनवादे २१–२२.

※ वस्तूनि मानान्यपेक्षन्ते न प्रयोजनानीति न्यायः । वस्तुसिद्धिमानसिद्धवस्तुनः प्रयोजनाभावापराधेन निराकरणमशक्यमिति विस्तारायामस्य प्रवृत्तिरिति । साहस्री. १६४.

● वस्तुनः एकस्य अनेककार्योत्पादनशक्तेः अनेकत्र दर्शनम् । सु. पृ. ८४३

● वस्तुजातं त्रिविधम्, केवलनिरवचेतनकर्तृकं यथा पचादि । केवलचेतनाकर्तृकं व्योमादि । मिश्रितचेतनकर्तृकं नदीस्रोताद्वहनादि । मणि. पृ. ४५.

※ वस्तुशक्तिन्यायः । यत्र पदार्थशक्तेः प्रवृत्तं विवक्ष्यते, तत्राय प्रवर्तते । तद्यथा– ' दत्ते वैन खले गुडं पाने दाने मनागपि । प्राते मात्र स्वयं यति विकार वस्तुशक्तितः ॥ ' इति । साहस्री. ५५२.

● वस्तुशब्दः न भावविकारवाची, भावविकाररहितेष्वपि नित्येषु आकाशादिषु वस्तुत्वप्रतीतेः । सु. पृ. २४८.

● वस्त्रम् । निर्णेजकधौतगर्दभाकटवस्त्रारोधन उदीच्याना दाक्षिणात्याना च अनाचारः । वा. १।३।३।७ पृ. २०४. ● वस्त्रं पूर्वदिने ब्राह्मणाय दत्तमुत्तमीत्यार्ज्यं न भवति । शिष्टाः प्रभातस्य दिनान्तरे पुनर्गृह्णन्ति । वि. ११।३।१२.

● वहतिः शब्दः प्रापणे सिद्धः । भा. १।१।८।३१.

※ वह्निधूमन्यायः । यथोत्पत्तिप्रतीतिरूपव्यापारभेदाद्वह्निधूमयोरितरेतरापेक्षत्वं न विरुध्यते, तथा प्रकृतेऽपि । किञ्च, यथा धूमरूपकार्यदर्शनात् कारणरूपवह्नेरनुमानम्, तथा यत्र कार्यलिङ्गेन कारणानुमानम्, तत्रास्य प्रवृत्तिरिति । साहस्री. ३९७.

※ वह्निन्यायः । यथा लोकस्याग्नेर्दाहकत्वं पाकस्य प्रकाशकत्वम्, तथा प्रकृतेऽपि । साहस्री. १७६.

※ वह्निविस्फुलिङ्गन्यायः । यथा वह्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवैतस्मादात्मनः सर्वे एते आत्मानो व्युच्चरन्तीति विषयेऽस्य प्रचारः । साहस्री. १२७.

● वाऽपि । वाऽपीति विपर्यासेन प्रयुक्ते भवितव्यर्थः । भा. ७।३।१।२.

● वा– शब्देन विधिशक्तिप्रतिबन्धः । भाट्ट १०।८।४. ● वा– शब्देन संशयो निवर्त्यते । भा. ३।२।८।१५ । ' विकल्पेनोपक्रम वाशब्देन व्याप्यं ' इति । वा.

● वाक्यं अपि क्रियथैव संबध्नीयात् । वा. १।२।४।३१–२ पृ. १४६. ● वाक्यमपि ' यस्मात् वर्तेत कर्तीय. ' इति न्यायाध्ययनं प्रकरणात् कर्तीय । भा ४।३।८।८–९, ● वाक्यं ' अवगत्य शीर्षणी ' इति विनियोगकारकं उक्तम् । ३।३।४।११. ● वाक्य

यंजेत' इत्यादिश्रुतिस्थलीयपदसमभिव्याहारात् कर्तृत्वाद्य- न्यतमसंसर्गविशिष्टादिप्रकारकयागादिविशेष्यक- शाब्दबोधेऽपि नातिप्रसक्तिः इति ध्येयम् ।

ननु एवं 'औदुम्बरो यूपो भवति' इत्यादौ वाक्यभेदाहरणस्यापत्तौ औदुम्बरतया. वाक्यीययूपाङ्गत्वमुपेक्ष्य 'पशुनाप्नोति' इति द्वितीयाश्रुतिप्रमाणकपश्वङ्गत्वस्यैव स्वीकारात् औदुम्बराधिकरणसाधितयूपाङ्गत्वविरोध । अत एव संनिध्यनुग्रहादपि न वाक्यीययूपाङ्गत्वाङ्गीकार इति चेन्न । यूपकर्मकभवनाश्रिताया भावनाया यूपेतरस्य कर्मत्वेन अन्वेतुमयोग्यत्वात्, आश्रयालाभेन च श्रौत पश्वङ्गत्वायोगात् तत्र वाक्यीययूपाङ्गत्वस्वीकारात् । न च 'सोमापौष्णं त्रैतमालभेत पशुकामः' इति प्रकृतस्य निर्वपं- (निरूपणे-) पशुमात्रस्य यागस्य औदुम्बराश्रयत्व सम्भवति । न च स्वसाधनद्रव्यपरिच्छेदद्वारकाश्रयत्वासंभवेऽपि अतिदेशप्राप्त- पशुनियोजनाद्य- यूपपरिच्छेदद्वारकाश्रयत्वसम्भव, यूपस्येव शुक्लादीनामतिदेशप्राप्तत्वेन तत्परिच्छेदस्यापि द्वारताऽऽपत्तौ यूपानुवादानुपपत्ते । अत एव आतिदेशिकपशुनियोजन यूपद्वारा आश्रय इत्यपि न । अथ 'यस्मिन् पशुग्वती यजमान, पश्वायत्तैव वपा कार्या' इत्यत्र (यथा) अवदानानुवादेन पश्वत्वविधिमङ्गीकृत्य हृदयाद्यवदानेऽपि पश्वत्वविधि सिद्धान्तिता दशमे (भाट्ट. १०।७।१८, २० भा), वपापदं अप्रयुक्तानुवाद, उपलक्षण वा स्यात् सर्वानुवादः । तथा अत्रापि यूपपदमप्रयुक्तानुवाद, उपलक्षणं वा स्यात् इति चेन्न । तत्र हि हृदयादिषु पश्वावदानाभावे चतुरवत्तानपञ्चावत्तप्रदानस्य अतिदेशादेव प्राप्ते 'एकादश वै पशोरवदानानि, तानि द्विद्विरवद्यति' इत्यस्य वैयर्थ्यापत्त्या अवदानस्य निरूक्तानुवादत्वस्वीकार । तथा हि अवदानमात्रोद्देशेन पश्वत्वविधौ हृदयाद्यवदानेष्वपि पश्वत्वप्राप्ते हविष स्यवदानप्राप्तौ द्व्यवदानविधि तद्व्यावर्तकत्वेन सार्थक । न च हृदयादिष्वपि चामस्या दीना पश्वावदानस्य अतिदेशादेव प्राप्ते तेषा हविष स्यवदानप्राप्तौ द्व्यवदानविधि सार्थक इति न वोक्त युक्त इति वाच्यम् । तथापि विधे पाक्षिकफलत्वमुपेक्ष्य वपापदस्य एतस्यैव पाक्षिकानुवादत्वौचित्यात् । प्रकृते तु न कस्यापि नैयर्थ्यादिकम्, इति किमिति यूपपदस्य पाक्षिकानुवादत्वाङ्गीकार ।

इदं च प्राचीनाभ्युपेतसमस्यार्थानुसारेणोक्तम् । वस्तुतस्तु अवदानोद्देशेन पश्वत्वविधौ हृदयादिवाक्ये हृदयं चैकादशेतराङ्गेषु अवदानस्य परिसंख्यातत्वात् वपावदानस्यैव अभावे पश्वत्वप्रसक्त्यभावात् वपाऽनुवादानुपपत्ते एकप्रसरताभङ्गापत्तेश्च नाय वाक्यार्थ समञ्जस । किन्तु पश्वत्वविशिष्टावदानान्तरस्य अतिदेशत पूर्वप्राप्त्या पश्वत्वविशिष्टप्राप्तावदानस्य या वपोद्देशेन विधि, तस्यैवोपस्थितत्वात् । हृदयादिवाक्ये हृदयाद्युद्देशेन विधि इति हृदयादिषु तदङ्गपश्वत्वप्राप्ति इति नव्यमताश्रयणे न वपापदस्य अप्रयुक्तानुवादत्वादिप्रसक्ति । परन्तु नव्य मते अवदानविधिसमकालप्रवृत्ताना हृदयाद्यवदानविधीना समुच्चयप्रवृत्तौ अवदानविधिपाक्षिकफलकल्पनापत्त्यतिरिक्त प्रवृत्तप्रमाण न पश्याम । किंच पश्वत्वविशिष्टावदानान्तरस्य वपोद्देशेन विधौ अवदानोद्देशेन पश्वत्वविशेषणविधिकल्पनाया अवदानस्वरूपे आनर्थक्यप्राप्ती वपाभ्यासापूर्वसाधनत्वलक्षणाया आवश्यकत्वात् वपावदानेषु कथं पश्वत्वप्राप्ति । नहि अभ्यासविशेषधर्मस्य अभ्यासान्तरे प्राप्ति सम्भवति, उपदेशस्य अभ्यासविशेषविषयत्वात्, अतिदेशस्य अभ्यासयो प्रकृतिविकारभावाभावेन असम्भवात् । पश्वत्वविशिष्टावदानस्यैव वपोद्देशेन विधौ तु प्रकृतनिर्देश वपाभ्यास पूर्वसाधनीभूतावदाने पश्वत्वविधौ तात्पर्यात् नावदानान्तरे पश्वत्वविधि सम्भवति, इति तदधिकरणसिद्धान्त चिन्त्य एव इति न वपापददृष्टान्तेन यूपपदस्य अप्रयुक्तानुवादत्वादि इति । अतश्च आश्रयालाभात् न पश्वद्देशेन औदुम्बरत्वविधि सम्भवति इति वाक्यस्य यूपाङ्गत्वमेव औदुम्बरताया । न च प्रकारान्तरेण आश्रयालाभेऽपि प्रकृतवाक्ये एव औदुम्बरत्वकरणकपशुकर्मकयूपाश्रयकभावनाविधानात् यूपात्मकौदुम्बरत्वाश्रयलाभ, आश्रयस्य साध्यत्वातिरिक्तस्य दुर्वचत्वेन भावनाया अनेककर्मत्वात् वाक्यभेदापत्ते । ननु राणके (सुधायां औदुम्बराधिकरणे पृ ७७) अतिदेशप्राप्तस्य पशुनियोजनस्य यूपद्वारा आश्रयत्वाभावादस्य 'प्रकृतौ हि प्रत्यक्षोपदिष्टस्य

होमप्रणयनादेः पश्चात् साधनापेक्षाया यथाश्रमसत्त्वादिवत् पर्यायस्यापि (दधि-) गोदोहनादेः आश्रयीभूतसाध्यापेक्षादर्शनात् उभयाकाङ्क्षावशात् साधनत्वमवसीयते। न चैवमस्य अङ्गत्वप्रसङ्गः, तादर्थ्येन विधानाभावात्। अत एव गुणकामप्रयोगे प्रासङ्गिकोपकारिका गोदोहनादिना कर्मसिद्धौ चमसादेरनङ्गत्वेन तदभावे नैगुण्याभावः (-भावादनादर)। निरूढौ तु अवघातकरणोपकारमुखेन फलोपकारप्राकृतगोदोहनादिविशिष्टस्यैव पशुनियोजनस्य (पशुशब्दो नास्ति-मु.) अतिदेशात् साधनानाकाङ्क्षत्वेन पदार्थनिर्दिष्टसाधनान्तरग्राहकत्वं न युक्तम्। अन्यतराकाङ्क्षाहेतुकस्य सम्बन्धस्य इतराकाङ्क्षोत्थापन-(-ोत्थापन-) पूर्वकत्वात् विधिमन्तरेण च आकाङ्क्षानुत्थापनात् (आकाङ्क्षोत्थापनायोगात्)' इति परिहृतम्। तच्चिन्त्यम्। प्रणयनस्य प्रकृतगतावृत्तिचमसेन निराकाङ्क्षतया गोदोहनाश्रयत्वस्य उभयाकाङ्क्षासम्बन्धाभावात् गोदोहनादेः फलसाधनताबोधकवाक्यमेव हि प्रणयने चमसाद्यन्वयबोध, तदैव प्रणयनस्य नैराकाङ्क्ष्यम्, गोदोहने फलसाधनताऽन्यथाऽनुपपत्तिमूलकाकाङ्क्षापन्नस्य प्रणयने गोदोहनाश्रयत्वबोधस्तु तदुत्तरकालीनः, इति 'सर्वतो बलवती फलवत्ताऽनुपपत्ति' इति न्यायेन गोदोहनीयफलसाधनत्वान्यथाऽनुपपत्त्या निराकाङ्क्षस्यापि प्रणयनस्य आकाङ्क्षामुत्थाप्य गोदोहनाश्रयत्वाङ्गीकारः। 'फलं निरूप्य वाचकम्' इति न्यायेन फलवत्तयैव चमसस्य अनङ्गत्वम्। एवमेव च उपरिनिर्दिष्टेन निराकाङ्क्षस्यापि ज्योतिष्टोमस्य फलोद्देशेन विधीयमानोद्भिद्गुणाश्रयत्वम् उद्भिदधिकरणे पूर्वपक्षे (-क्षा) गुणत्वमुच्यते। अत एव प्रक्रममाणासमानाधिकरणत्वाद्धक्रियायाः फलार्थगुणाश्रयत्वं स्थानप्रमाणकमेव। तथाश्राश्रयत्वस्य प्राकरणिकत्व यत्तदस्तु सन्निधिपाठानन्तरमेव। अत पाठसान्निध्याभावेऽपि यूपे यौदुम्बरत्वनिवेशसंभवात् आश्रयत्वसमन्वयेन इत्यस्मदुक्तरीत्या आश्रयत्वगमनम्, इत्यलमनया प्रासङ्गिकचिन्तया।

न च 'धेनुर्दक्षिणा' 'उच्चैर्ऋचा क्रियते' 'बहु श्रपयति' इत्यादिषु यथाक्रमं दक्षिणोद्देशेन अभेदसम्बन्धेन धेनोः, ऋग्वेदविहितकर्मोद्देशेन सम्बन्धिनिरूपणासम्बन्धेन उच्चैष्ट्वस्य, श्रपणोद्देशेन स्वरूपसम्बन्धेन बाहुल्यस्य च विधिसम्भवात् कर्तृत्वान्यतमत्वस्य शाब्दबोधाविषयत्वेन न क्षतिः इति वाच्यम्। वस्तुतो धेन्वादीनां करणत्वेन भावनाऽन्वयस्यैव तत्तदुदाहरणे विवक्षितत्वात्। तथाहि, 'धेनुर्दक्षिणा' इत्यत्र तावत् श्रुतत्वयोः परस्परान्वयाभावात् 'न हि क्रियारहितं वाक्यमस्ति' इति न्यायेन क्रियापदाध्याहारः आवश्यकः। तत्र च भावनायाः साध्यापेक्षायां दक्षिणापदस्य दक्षिणाकार्यपरतया भाव्यसमर्पकत्वम्। करणाकाङ्क्षायां च करणतासंसर्गेण धेनुपदार्थस्य, धेनुपदोत्तरप्रथमायाः या करणत्वलक्षणया धेनुकरणत्वस्य भावनायामन्वयः। धेनुदक्षिणयोः अभेदबोधस्तु पार्ष्ठिकः। धेनुदक्षिणत्वयोर्विधाने वाक्यभेदस्तु विशिष्टकारकविधानात् अनाशङ्क्यः। एवं 'उच्चैर्ऋचा क्रियते' इत्यत्र वेदोपक्रमानुरोधात् धातुना ऋग्वेदविहितकर्मलक्षणात्, तस्य च प्राप्तत्वेन भावनायां उद्देश्यत्वेन अन्वये जाते करणाकाङ्क्षायां उच्चैष्ट्वस्य मन्त्रघटितपरम्परासम्बन्धावच्छिन्नकरणत्वसंसर्गेण भावनाऽन्वयः, न तु मन्त्रघटितपरम्परासम्बन्धमात्रेण, तथात्वे भावनायाः करणाकाङ्क्षोपशान्त्यभावात्। एवं 'बहु श्रपयति' इत्यत्रापि प्रमाणान्तरप्राप्तश्रपणोद्देश्यकभावनायां बाहुल्यस्य कर्तृत्वान्यतमसंसर्गेण अन्वयः। तथाहि, दर्शपूर्णमासयोः 'यस्य हविर्निरुप्तं पुरस्तात् चन्द्रमा अभ्युदियात्, स त्रेधा तण्डुलान् विभजेत्। ये मध्यमाः स्युः, तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्। ये स्थविष्ठाः, तानिन्द्राय प्रदात्रे दधंश्चरुम्। येऽणिष्ठाः, तान् विष्णवे शिपिविष्टाय शृते चरुम्' इति श्रुतम्। तत्र अमावास्याकर्मणि च अभ्युदयावच्छिन्नदिनप्रारम्भे निमित्ते 'त्रेधा तण्डुलान्' इति वाक्येन अपनीतपूर्वदेवताकानां तण्डुलानां प्रत्यक्षविधानेन देवतान्तरसम्बन्धबोधनार्थानि त्रीणि वाक्यानि, न तु कर्मान्तरविधायकानि, अपरित्यक्तपूर्वकर्मसम्बन्धद्रव्यविभागेन देवतान्तरसम्बन्धात्। अत एव पूर्वोद्दिष्टदेवतान्तरसम्बन्धस्य निरूपकीभूतयागापेक्षाया 'ऐन्द्रवायवं गृह्णाति' इत्यत्रेव पूर्वप्रकृतयागा एव निरूपका। अतः आग्नेयस्य मध्यमादिभेदेन सान्नाय्यप्रकृतिः। दधिपयसोर्यागयोः अविनाशित्वेऽप्य-

अत एव 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां निर्वपामि' इति मन्त्रे कर्तृवाक्यत्वमसंनिधाना- न्वयस्य कर्तृत्वान्वयत्वसंसर्गकस्य कर्तृत्वान्वयतमत्वप्र- काशनजन्यस्य वा कर्तृत्वाकाङ्क्षत्वसमन्वययोग्यस्य अजननेऽपि सततमदृष्टमभिव्याहारोऽस्य वाक्यान्तरात् देवस्यत्वादिपदानां स्वार्थविशिष्टनिर्वापप्रकाशनद्वारा निर्वापाङ्गत्वम्। विधि- वाक्यमन्त्रवाक्ययोः अयमपरो विशेषः, यत् विधि- वाक्यं कर्तृवाचकत्वमन्त्रणया, संसर्गविधया तदा- नाधीकारेण वा, स्वत एव विनियोजकत्वम्, मन्त्रवाक्ये तु 'देवस्यत्वादिभिः निर्वापं प्रकाशयेत्' इत्यादिवाक्यान्तर- कल्पनया। देवस्यत्वादिपदानां मन्त्रघटकपदार्थत्वाभावेन विध्यभावेन च मन्त्रवाक्यस्य स्वतः अविनियोजकत्वात्। निर्व्यभावादेव च देवस्यत्वादिपदार्थानां निर्वापाङ्गत्व- मपि न स्वतो मन्त्रवाक्यगम्यम्, अपि तु श्रुतिघटित वाक्यान्तरकल्पनया इति गौणत्वम्। अत्र विधिवाक्यस्य योग्यताज्ञानं विना लक्षणया संसर्गविधया वा कर्तृत्वान्व- यतमबोधकत्वाभावेन योग्यताप्रतिबन्धाप्रमापकत्वेन अन्तरङ्गप्रमापकत्वेऽपि न लिङ्गतो दौर्बल्यम्, प्रत्युत तच्छ्रुति- कल्पवाक्यान्तरकल्पनया प्रमाणभूतात् लिङ्गात् स्वतो विनियोजकत्वेन प्रकरणेन। अत एव अग्नीषोमीय- प्रकरणपठितस्य 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोता- मन्त्रस्य वैकल्पिकप्रकाशकस्य उभयदेवत्याग्नीषोमीये विनि- योगासम्भवात् ज्योतिष्टोममहाप्रकरणरूपवाक्यान्तरकल्प- बोधकप्रमाणबहुत्वलिङ्गेन ऐन्द्राग्नदेवताके सवनीये उत्कर्षप्राप्तौ 'यस्यकस्यदेवत्य पशो आग्नेय्येव मनोता कार्या' इति ब्राह्मणवाक्येन लिङ्गबाधेन अग्नीषोमीयादिरा इत्युक्तं दशमे (१०।८।२१)। मन्त्रवाक्यस्य तु सामर्थ्यकल्पनाद्वारा श्रुतिघटितवाक्यान्तरकल्पकस्य इत्थम्- विलम्बितप्रामाण्यकतया श्रुतिकल्पनापेक्षत्वादविलम्बितप्रामाण्यात् लिङ्गात् दुर्बलत्वम्। अत एव 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः॥' इत्येकान्वययोग्यो- पयोगिपदसंनिधिरूपात् वाक्यात् संपूर्णस्य सदनकरणत्व- प्रसक्तौ बाधेन लिङ्गात् पूर्वार्धस्य सदने, उत्तरार्धस्य सादनेऽपि विनियोगः। तदुक्तम्तु 'तमे पयसि दध्यान- यति, सा वैश्वदेव्यामिक्षा' इत्यत्रैव वाक्यान्तरीयार्थपरामर्श- कत्वेन युज्यते इत्युक्तं वसन्ताधिकरणे। इति वाक्य- निरूपणम्। मुरारि. पृ ११७५-८१.

● वाक्यं पदद्वयात्मकम्। वि. ३।३।८. ● वाक्य प्रक- रणात् बलवत्। भा. ३।२।८।२२, ३।३।१२।२७, ३।३।११।२४ पृ. ६१३, ३।३।७।११, ३।३।६।१२, ३।३।१०।२०, ३।३।७।२४, ३।४।१।१, ३।४।५। २४, ३।४।६।१७, ३।६।१३।३५, ४।३।२।४, ६।५।१५।८५, ८।४।५।१७, ९।१।२।२, ९।१।५। २१, १०।३।१२।८१. ● वाक्यं प्रकरणात् बलीयः। 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽ- क्राताम्' इत्यत्र 'इन्द्राग्नी' पदस्य लिङ्गात् दर्शा- ङ्गत्वे सिद्धे 'इदं हवि.' इत्यादेरपि तदेकवाक्यत्वात् दर्शाङ्गत्वम्, न तु प्रकरणात् पूर्णमासाङ्गत्वम्। मीन्या. ● वाक्य प्रकरणात् बलीयः। प्रवृत्तौ (प्रकरणेन) सापेक्षः, अध्वर्युं पुनर्विधेयेन। भा. १०।३। २१।७४. ● वाक्यं प्रकरणात् बलीयः। रशनाधर्मा. प्रकरणात् अग्नीषोमीयस्य। 'त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति वाक्यात् यूप- मात्रस्य। ३।६।१०।३१. ● वाक्यं प्रकरणात् बलीयः। 'वैत्रा हवींषि आसादयति' इति हविर्मात्र वाक्याद् गम्यते, प्रधानहवींषि प्रकरणात्। ३।७।१।२. ● वाक्य क्रमात् क्रमश्च दुर्बलः। २।८।२।२२. ● वाक्यम्। मनस्युक्तिपात. अन्यविनियोगाभावे वाक्यासमाप्ते, आम्नातस्य च अर्थाभावेन अर्थद्वार- वाक्यान्तरान्वयायोग। सु पृ. ७४८. ● वाक्य मिथ्येत उभयविधाने। भा. ३।२।२।७, १०।७।१५।४९, ● वाक्य लिङ्गात् बलीयः। ३।३।६।१२ पृ. ६८६. ● वाक्यं लिङ्गश्रुती कल्पयित्वा अङ्गत्वे मानम्। मीन्या. ● वाक्यं विशेषवृत्ति, पदं सामान्यवृत्ति। भा. ३।१।६।१२ पृ. ६८९. ● वाक्य विशिष्टपदका- समूहात्मकम्। सु पृ. १०९ ● वाक्य श्रुत्या बाध्यते। भा ४।१।५।१४, ● वाक्य श्रुतेर्दुर्बलम्। 'द्यावा पृथिव्या धेनु०' इत्यादौ गवि सा च श्रुतिः, द्याव- सम्बन्धो वाक्येन स्यात्। तच्च दुर्बलं श्रुतेः। १०।२।

अर्थवत्त्वादस्ति इति नानर्थक्यनिमित्तमप्रामाण्यं लभ्यते।

सर्वेषामेव च श्रुत्यादीनां आनर्थक्यप्रतिहतानां दुर्बलेतराणि नाम भविष्यन्ति। तद्यथा — ऐन्द्र्यादीनां प्रेक्षणादीन् प्रति श्रुत्या शेषित्वं प्राप्नुवदपि अविलङ्घ्य प्रकरणलभ्या पूर्वसाधनत्वेन सम्बन्धो भविष्यति। तत आश्रयित वाक्यात् लिङ्गस्य बलीयस्त्वम्। तथा च भाष्यानुसारे दर्शितम् (३।३।१०)। वा ३।३।७।१४ पृ ८३२–८३३. ● वाक्यस्य लौकिकस्य प्रमाणान्तरदर्शितविषयता। बृहती पृ ९९८. ● वाक्यस्य वाक्यान्तरैकवाक्यत्वे प्रकरणमाकाङ्क्षारूपं प्रमाणमेव। मीन्या ● वाक्यस्य वाक्यार्थे न शक्तिः। पदशक्त्यैव वाक्यार्थसिद्धेः। मीन्या ● वाक्यस्य वाक्यार्थप्रतिपत्त्युपायभूतपदार्थगतिपदाभावे साकाङ्क्षत्वेन अपरिपूर्णस्य विशिष्टार्थप्रतिपादकत्वायोगात् विशिष्टार्थप्रतिपादनं च विना व्यवहारसाधनत्वेन आनर्थक्यापत्तेः परिपूर्णताय श्रुतस्यैकवाक्यभूतपदान्तरकल्पना युक्ता। सु पृ १११, ● वाक्यस्य विधिप्रयोजनत्वम्। पृ. ८६७ ● वाक्यस्य विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणावाक्यभेदौ, आधिक्याभ्युपगमे तु आनर्थक्यम्। यद्वा, पुनश्च अविवक्षितस्य स्वरूपे लक्षणावाक्यभेदगौरवाध्याहारदोषाः। यद्वा न्यूनत्वे लक्षणावाक्यभेदौ, आधिक्ये त्वानर्थक्यम्। अन्यथाकल्पने विपरिणामव्यवहितकल्पना व्यवधारणकल्पनादोषा इति। बाल पृ २–३ ● वाक्यस्य विशेषणविशेष्यभावमात्रे व्यापारः। [illegible] पृ १००२, ● वाक्यस्य सकृदुच्चरितस्य अनेकार्थपरत्वायोगात् आवृत्तिलक्षणवाक्यभेदापत्तिः। पृ ८७२, ● वाक्यस्य सर्वात्मना वक्ष्यमाणसाकाङ्क्षीभावाभावे वाक्यत्वेन नैराकाङ्क्ष्यं कल्प्यते। पृ ६०१, ● वाक्यस्य स्वार्थसमाप्तस्य वाक्यान्तरान्वयो न भवति। पृ ४७८, ७९४ ● वाक्यस्य देवपरत्वे सम्भवति स्तुतिलक्षणाया अप्रामाणिकत्वात्। भाट्ट ४।१।१७ ● अनेनैव प्रवृत्त, अनेनैव निवृत्त इति अतिभार एकस्यैव वाक्यस्य भवति। भा ७।१।१।२ ● एतदेव वाक्यस्य पौरुषेयत्वं यत् प्रमाणान्तरापेक्षस्वार्थप्रतीतार्थप्रत्यायनपरतया प्रयोगः, न प्रमाणादिकार्यता। ऋजु पृ ३४ ● 'ननु सामर्थ्यं समाम्नाये' ११।८।११।१७। तदेतदस्य वाक्यस्य समाम्नाये सामर्थ्यं यत् अनिहितपूर्वकाभिधानम्। इतरथा अर्थवादा वत अनर्थकाः स्युः। भा ११।१।११।१८ ● नच वाक्यस्य पदैकत्वाया प्रमाणमस्ति, विभजन साकाङ्क्षसहन्यमानैकप्रयोजनमात्रोपलक्षणत्वात्। येन वाक्यमेकैकं अल्पपदं अपरं बहुपदम्। वा ३।३।७।१४ पृ ८५१. ● 'वाक्ययोः एकवाक्यत्वं पुनः संहत्य जायते' इति न्यायेन आख्यातभेदेऽपि आकाङ्क्षावशात् अस्ति एकवाक्यता। (अग्निहोत्रं दध्ना जुहोति इति, दध्नेन्द्रियकामस्य जुहुयात् इति च इत्यत्र)। सोम ८।३।३ ● वाक्ययोर्विरोधे 'पञ्चदश सामिधेनीरनुब्रूयात्' 'सप्तदश वैश्यस्य' इत्येतदुदाहरणम्। उभयमपि हि सामान्यविषयत्वादेकवाक्यत्वे कृते विशेषे सति विशिष्टविशेषणयोगात् सप्तदशस्य बलीयो भवति। वा ३।३।७।१४ पृ ८४० ● वाक्यानां अपार्थकत्वं विध्युद्देशेन एकवाक्यत्वात् प्रामाण्यम्। अर्थवादाधिकरणम्। १।२।१।१–१८ ● वाक्यानां अनेकार्थता सगुणकर्मविधानेन अन्यथा स्वीक्रियते। (सौनामन्या गुणग्रहविषये)। भा ८।२।१।७ ● वाक्यानां अर्थवत्त्वमपि द्वैविध्यदर्शनात्। उच्चारणार्थप्रत्यायने हि अविनाभूते तत्र अन्यतरविवक्षया प्रयुज्यमानेऽपि द्वितीयान्तरीयकं भवति। यदि अर्थप्रत्यायनं विवक्ष्यते तदा उच्चारणमप्यात्। अथोच्चारणविवक्षा तत्रोऽर्थप्रत्यायनमनुपपन्नम्। यथा जपेषु विप्रविग्राहेषु च। वा १।२।४।३१ पृ १४३–१४८ ● 'वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते'। नहि अस्य ('दीक्षितो न ददाति' इत्यादेः) अग्निहोत्रादिविधिभिः पदैकवाक्यता। येन तेषामपि विधाने कृताकाङ्क्षत्वस्य अर्थबोधकत्वाभावेन पर्युदासो न भवेत्। किन्तु 'अग्निहोत्रं जुहोति' 'दध्ना जुहोति' इत्यादिवत् 'वाक्यानामेक०' इति न्यायात् वाक्यैकवाक्यत्वम् (पूर्वपक्षशङ्का)। सोम १०।८।७ ● वाक्यानां व्याकरणेन अनन्वाख्यानम्। वा ३।३।८।२८ पृ २६१. ● वाक्यानां– विधिवाक्यानाम्, अर्थवादवाक्यानाम्, उपनिषद्वाक्यानाम्, अध्यात्मवाक्यानां च

फलपर्यन्तगमने क्रमः सविस्तर अर्थवादाधिकरणे (मीको. पृ. ६३९) वार्तिके द्रष्टव्यः। * वाक्यानां स्वार्थपर्यवसितानामपि संहत्य एकमहावाक्यार्थोत्पादनेन एकवाक्यत्वं भवति। सु. पृ. ५२५. * 'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥' वा. १।४।१३।२४ पृ. ३६६. * वाक्ये एकस्मिन् अन्योऽन्यौ विधीयमानौ नान्येन संबध्यते, वचनव्यक्तिभेदात्। भा. ३।१।६।१२ पृ ६९०, * वाक्ये एकस्मिन् द्वौ संबन्धौ न विधीयेते। भिन्नेन हि तथा वाक्यम्। ३।४।१।७, * वाक्ये एकस्मिन् यथोपक्रमं निगमयितव्यम्। १।४।१३।२४. * वाक्ये पुनः 'अर्थं प्रति न सामर्थ्यं, न च दोषत्वमुच्यते। केवलं तद्दर्शनात् अन्यत्वमुपलभ्यते ॥' वा. ३।३।७।१४ पृ. ८२६ * वाक्ये वैरूप्यलक्षणो वाक्यभेदः। 'अरुणया' इत्यत्र तृतीयया करणीभूता एकहायनीमुद्दिश्य अरुणप्रातिपदिकार्थविधौ भिन्नपदोपात्ताया अपि एकहायन्याः एकवाक्ये वैरूप्यम्। बाल. पृ. १८१. * असंबद्धपदार्थप्रस्थाने सति आनन्तर्याभावेऽपि सर्वत्र लोके वेदे च वाक्ये पदानाम्, प्रकरणे च वाक्यानां संबन्धो भवति। सु पृ ६९७. * एकस्मिन्नेव वाक्ये न द्वौ संबन्धौ प्राप्नोति विधातुम्। भा. ३।५।९।३०, ४।३।१३।३३. * न च गुणफलसंबन्धपरे वाक्ये सति कर्मान्तरम्। भा. २।२।८।२२, * 'प्रकृतस्याभिधाने वाक्ये यत्नोपलभ्यते। तत्र स्यादनुवादत्वम्० ॥' ३।२।५।१७ पृ. ५१२, * विशेषसंबन्धपरे वाक्ये सामान्यसंबन्धप्राप्तिमपि स्वप्रयत्नः अभ्येत्याधिकरणोक्तो वाक्यभेदो ग्राह्यः (३।२।८)। ३।७।८।१६, * सर्वेन अविरोधेन वाक्ये निविशमाने विशेषश्च त्यक्तव्यः। २।२।३।१ पृ ४७८. * वाक्ययोः विरोधे शेषभूतस्य उपांशुत्वस्य 'तस्य वा एषा यज्ञस्य' इति व्यवेतयज्ञपदैकवाक्यत्वात् यज्ञमात्रधर्मत्व 'तस्मात् यत्किंचित् प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति' इत्यनेन संनिहित यत्किंचित्पदैकवाक्यतया अयज्ञपदार्थधर्मत्वेन बाध्यते। देपानेषले तु 'पञ्चदश सामिधेनीः अनुब्रूयात्, सप्तदश वैश्यस्य' इति। कौ. ३।३।७।१४ पृ. ३६१. * वाक्ययोः विरोधे सामानाधिकरण्यबोधकवाक्यात्, निमित्तविशेषसंयोगबोधकं वाक्यं बलीयः। वा. ३।३।७।१४ पृ. ८५०. * लिङ्गवाक्ययोर्लिङ्गं बलीयः। भा. ३।३।७।१४ पृ ८४९.

* वाक्यांशस्य पदमात्रस्य प्रमितिजनकत्वं नास्ति। वि. २।२।७.

वाक्याधिकरणम्। तद्भूताधिकरणम्। वेदवाक्यधर्मप्रमापकम् ॥

उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात्। १।१।७।२४॥

भाष्यम्— यद्यपि औत्पत्तिको नित्यः शब्दः संबन्धश्च, तथापि न 'चोदनालक्षणो धर्मः'। चोदना हि वाक्यम्। न हि 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यतो वाक्यात् अन्यतमात् पदात् 'अग्निहोत्रात् स्वर्गो भवति' इति गम्यते, गम्यते तु पदत्रये उच्चरिते। न चात्र चतुर्थः शब्दोऽस्ति अन्यदतः पदत्रयसमुदायात्। न चायं समुदायोऽस्ति लोके, यतोऽस्य व्यवहारादर्थोऽवगम्यते। पदान्यमूनि प्रयुक्तानि, तेषां नित्योऽर्थः, अप्रयुक्तश्च समुदायः। तस्मात् समुदायस्यार्थः कृत्रिमो व्यामोहो वा। न च पदार्था एव वाक्यार्थः। सामान्ये हि पदं प्रवर्तते, विशेषे वाक्यम्। अन्यश्च सामान्यमन्यो विशेषः। न च पदार्थात् वाक्यार्थावगतिः, असंबन्धात्। असति चेत् संबन्धे कस्मिंश्चित् पदार्थेऽवगते अर्थान्तरमवगम्येत, एकस्मिन्नवगते सर्वमवगतं स्यात्। न चैतदेवं भवति। तस्मादन्यो वाक्यार्थः।

स्यादेतत्, अप्रयुक्तादपि वाक्यात् अगृहीते संबन्धे स्यमानादर्थावगम इति। यदि स्वरूपेण शब्दो धर्ममात्मीयमुपक्रामेत्। न नैष शब्दधर्मो यदप्रयुक्तादपि शब्दादर्थः प्रतीयते। नहि प्रथमश्रुतात् कुतश्चिच्छब्दात् केचिदर्थं प्रतियन्ति। (उच्यते)। तदभिधीयते, पदधर्मोऽयं न वाक्यधर्मः। वाक्याद्धि प्रथमश्रुतादपि प्रतियन्तोऽर्थं दृश्यन्ते। नैतदेवम्। यदि प्रथमश्रुतादवगच्छेयुरपि तर्हि सर्वेऽवगच्छेयुः पदार्थविदोऽन्ये च। न अपदार्थविदोऽवगच्छन्ति, तस्माच्चैतदेवम्। ननु पदार्थविद्भिरपि अन

गच्छद्भिः अकृत एव वाक्यार्थसम्बन्धो भविष्यति, पदार्थ वेदनेन हि सम्भूता अवगमिष्यन्ति, यथा तमेव पदार्थं द्वितीयादिश्रवणेनेति । नेति ब्रूमः । यदि वाक्ये अन्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहित पदार्थेभ्योऽर्थान्तरं प्रत्याययति, उपकारस्तु तदा न पदार्थज्ञानादनन्यस्ते । तस्मात् कृत्रिमो वाक्यार्थप्रत्ययो व्यामोहो वा, न पदार्थद्वारेण सम्भवति वाक्यार्थज्ञानमिति । ननु एवं भविष्यति, सामान्यवाचिनः पदस्य गौरिति वा अश्व इति वा, विशेषकं शुक्ल इति वा कृष्ण इति वा पदमन्तिकादुपनिपतति यदा, तदा वाक्यार्थोऽवगम्यते । तत्र । कथंचित् गौरिति वा अश्व इति वा सामान्यवाचिनः पदात् सर्वगवीषु सर्वाश्वेषु वा बुद्धिरुपसर्पन्ती श्रुतिजनिता वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तेत ? न च शुक्ल इत्यादेर्विशेषवचनस्य कृष्णादिनिवृत्तिर्भवति शब्दार्थः । न चानर्थको मा भूदिति अर्थपरिकल्पना शक्या । अतो न पदार्थजनितो वाक्यार्थः, तस्मात् कृत्रिम । पदसङ्घाता लक्ष्यन्ते, सङ्घाताश्च पुरुषकृता दृश्यन्ते, यथा – ' नीलोत्पलवनेष्वद्य चरन्तश्चारुसंस्था । नीलकौशेयसंवीता प्रनृत्यन्तीव कादम्बाः ॥ ' ( ' रामा. कौशेयसंवीता कादम्बा इव शोभना ' इति उत्तरार्धपाठो व्याख्यानमालायाम् । ) अतो वैदिका अपि पुरुषकृता इति ।

बृहती— ' उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात् ' । ' यद्यौत्पत्तिको नित्यः शब्दः संबन्धश्च, तथापि न चोदनालक्षणो धर्मः ' इति ( भाष्येण ) किमिदमारब्धम् ? इदमारब्धम्– वृद्धव्यवहारादौत्पत्तिकसम्बन्धः शब्दार्थज्ञानस्य, वृद्धव्यवहारश्च प्रमाणान्तरावगतस्य वाक्येनार्थं प्रतिपादयन् कश्चित् कञ्चिदन्यं प्रतिपद्यते । तत्प्रतिपत्त्या बालोऽपि जानाति ' अनेनैव तत् प्रतिपाद्यते ' इति । प्रतिपत्तिश्च हानोपादानादिकार्यानुगम्या । हानोपादानादि च प्रमाणान्तरप्रमितविषयमेव शक्यतेऽवगन्तु नाप्रमितविषयम् । अतश्च प्रमाणान्तरप्रमितविषयमेव औत्पत्तिकत्व वाक्यस्याऽवगन्तुम्, न पुनर्यत्र शब्दावगमपूर्वको व्यवहारः, तत्रौत्पत्तिकत्वं शक्यावगमम् । ( यदेव हि प्रमाणान्तरेण शक्यतेऽवगन्तुं तद्विषयमेव हानोपादानं शक्यावगमम् । अत कथमनुन्मीलितागमविवेचनो बालः शब्दैकगम्यविषयं हानोपादानं बुध्येत ? अनवबुद्धहानोपादानश्च कथं तद्विषयां प्रतिपत्तिं वृद्धस्यानुमिमीते ? अननुमिततद्विषयवृद्धप्रतिपत्तिश्च कथं तद्विषये शब्दस्य शक्तिमवधारयेत् ? अनवधारिततद्विषयशक्तिश्च तदर्थं कथं शब्दादवगच्छेत् ? अनवगच्छंश्च कथं व्यवहरेदिति ) तस्मात् वैदिकानामग्निहोत्रादीनामौत्पत्तिकत्वं दुरवगमम् । तस्मादौत्पत्तिकत्वलेशोऽनर्थकः । वेदप्रामाण्यसिद्ध्यर्थं औत्पत्तिकत्वमिष्यते स्वतःप्रामाण्यवादिभि ( मीमांसकैः ) । न च वृद्धव्यवहारात् निरूपित एव वेदार्थप्रतिपत्तौ अभ्युपायः प्रतिपत्तुं क्षमम् । ( शङ्कते– ) किमिति न क्षमम् ? ( उत्तरं– ) समुदायाद्धि वृद्धव्यवहारे अर्थोऽवगम्यते । न चासौ समुदायो वेदे प्रयुक्तः । तस्मान्न निमित्तता प्रतिपद्यते । ( चोदयति– ) ननु चान्वयव्यतिरेकाभ्यां वृद्धव्यवहारादेव पदार्थपूर्वको वाक्यार्थोऽवगम्यते । आवापोद्वापाभ्यां हि ' देवदत्त गामभ्याज शुक्लाम्, देवदत्त गामभ्याज कृष्णाम्, विष्णुमित्र गां बधान शुक्लाम् ' इत्येतस्मिन् शुक्लार्थे, अन्यत्र आपोद्धृतशुक्लार्थे अन्विताभिधानार्थे, अन्यत्रापोद्धृताम्नायार्थे अन्विताभिधानार्थश्च वाक्यार्थोऽवगम्यते, अतोऽवगम्यते पदेभ्यः पदार्था एवावगम्यन्ते, न वाक्यार्थः । पदार्थसमुदायेन वाक्यार्थोऽवगम्यते । अन्यथा हि एकपदोद्धारे सकलवाक्यार्थानवगतिरेव स्यात्, न पदार्थमात्रस्य । तस्मात् पदेभ्यः पदार्थाः, पदार्थेभ्यः परस्परान्विताववगतिः ( परस्परान्वितार्थावगतिः । पूर्वपक्षी परिहरति– ) यदि पदेभ्यः पदार्था अवगम्यन्ते पदार्थेभ्यः परस्परान्वयः, किं पदार्थनिमित्तक एव वाक्यार्थः ? ( चोदयिता– ) ओमित्युच्यते । ( पूर्वपक्षी– ) कस्य पदार्थस्य कस्मिन्नन्वये हेतुत्वम् ? ( चोदयिता– ) सर्वस्य सर्वस्मिन्निति ब्रूमः । ( पूर्वपक्षी– ) एवं तर्हि सर्ववाक्यार्थावगतिः सर्वस्मात् ( स्यात् ), नियमे वा हेतुर्वक्तव्यः ' इत्थंभूतेन इत्थंभूतोऽन्वयः प्रतिपाद्यते ' इति ( सन्निहितोच्चारितपदप्रतिपादितसाकाङ्क्षान्वययोग्येन तथाभूतपदार्थान्तरान्वयः प्रतिपाद्यते इति ) न चायं वृद्धव्यवहारं मुक्त्वा अन्यत् कारणम्

( अर्थस्य )। अत सिद्धमौत्पत्तिकत्वमस्मत्पक्षे । भेदाभिधानपक्षे यथा न सिध्यति, तथा प्रदर्शितम्। अत एव च यथाविनियोग मन्त्रार्थान् मन्त्रविदो वर्णयन्ति । भेदे हि नियतमभिधानं स्यात्। अत 'उणादयो बहुल' इत्येव मात्रत्वागमपूर्वकमेव स्यात् ( विनियोगाधीन हि अर्थे कथा मन्त्रागमार्थे 'उणादयो बहुल' इत्यादुपयुज्यते, वृद्धव्यवहारप्रसिद्धनियतार्थाभिधाने तु न तस्योपयोग )। न चैतत्त्व ( मीमांसकस्य ) अभीष्टम्। उपदेशश्चायवानुष्ठानाम् (निगमनिरुक्तव्याकरणादीनामङ्गविद्यानामुपदेश कल्पनिकभेदपक्षेऽपरात् ) भेदपक्षे हि लोकत एव नियतशब्दानां निर्णयसम्भवे। अस्मत्पक्षे पुनरागमानुसारी निर्णय । आनन्त्याच्चागमस्य उपदेशोऽर्थवान्। अतश्चायं भेदव्यपदेश लौकिकानाम्, वैदिकानाम्, छन्दसि, भाषायाम्, निगमे, इति च। आगमभेदाच्चोपपन्ना भवति ( आगमे व्याकरणे दर्शनभेदाद्धोपपन्ना भवति । तथाहि केचित् अग्नि शब्दमानिष्ठन्ते, केचित् 'अत भुवि' इति पठन्ति तदुपपन्न भवति। अत एव च– ) केचित् कचित् आगमिकं शब्दं प्रदर्शितं भवति । ( अत एव भेद काल्पनिक ) अत एव च एकशब्दावाच्यत्वमनेकधा । अन्यथा हि भेदागमे एकशब्दाभिधान प्रमाण ( स्यात् )। न चैकमत्र ( शब्दरूपे ) अभिधानसद्भावेऽपि ( एकाभ्याभिधानम् , शाखान्तरेऽपि हि एक शाखामिच्छन्ति मीमांसका , तदपि भेदे सति प्रमाण स्यात् )। अपि च कार्यानवच्छेदात् न प्रमाणतायाः, एकत्वाच्च कार्यस्य नानाभिधान ( नानार्थप्रतिपादन ) न प्रमाणे नोपपद्यते । वाक्यपक्षमाश्रित्य अत्रागन्तव्यमनेनापि गुरुवच्चनाप्रतिषेधार्थं वाचनेन ( पाणिनि ) शास्त्रविकल्पज्ञापनाय अपन्यासो भवति। अन्यथा हि तस्यैव निरोधक स्यात् । ( वाक्य 'नीलमुत्पलमानय' इति नियामकद्वयो पश्चात् परस्परसम्बन्धोऽवगम्यते, समासे तु 'नीलोत्पलमानय' इति परस्परसंबद्धयो पश्चात् नियामकत्व प्रतीयते )। अत एव अभिधेयत्वावतिपत्तिनिरूपण नामाख्यातोपसर्गनिपातानाम् । भेदे हि स्वरूपभेद पारमार्थिक , तत्र प्रत्यभिज्ञाने सति 'निघ्नते' 'प्रघ्नते विप्र' इत्यत्रान्य न स्यात् । तथा भगवदादिषु वर्णमात्रवादिन ( भवति इति वक्तोपघ्ने समस्या च वद्यायाथते तत् वर्णमात्रवादिनो न स्यात् )। 'राज पुरुषस्य हस्तिन' इति पदत्रय संबन्धोऽपि भवति, न राजपुरुषस्य हस्तिन इति ( मत्पक्षे तु राजपुरुषशब्दे पदभागयो राजपद भाग्येव केवल कल्पनामात्र इति न भवत्येव प्रसङ्ग )। एव उपर्यारिदम्, अपरम्प्येत्यम्, न पुन 'औपगव स्येद' इति ( इदमर्थार्थेन संबन्ध )। तथा च 'करण करणेन' इति विभक्तेरर्थाविरनुपपत्तिश्च । ( यदि करणशब्दे विभक्तेरुपरि 'घटेन करणेनोदकमानय' इति यदा 'उदकमानयनं घट करण' इत्यनापि स्यात्। अथ 'करण इयन न भवति, 'करणेन' इत्यत्रापि न स्यात्। मत्पक्षे तु वाक्यभेदाभावात् पर्यनुयोग , पदाना वाक्येऽप्यभावात् ) तथा च सुप्धातव ( सुबन्ता धातवश्च ) 'अश्व, गर्दभ' इति, 'अश्वति, गर्दभति' इति च। तथा च अपदत्वमभेदमनणक्रमस्यार्थप्रतिपत्तये ( इत्वदीर्घप्लुता सानुनासिका निरनुनासिकाश्च प्रत्येक पद , पुनस्ते त्रेधा उदात्तादिभि, इत्येवमपदत्वभेदभिन्न सन् अर्थप्रतिपत्तयेऽभ्यस्यते वर्ण ) अन्यथा हि ( पारमार्थिके पदवर्णविभागे ) एकस्याद्यस्तु न सर्वासामतिपत्ति स्यात् ( भांत, अप्रतिपत्तिरा ) स्यात्, यत्नश्च नोपपद्यते । ( इतश्च शब्दविवर्तात्मकोऽर्थ , यस्मात्– ) प्रमाणान्तरप्रतीतेऽर्थ एकत्वागमो भूणा 'सुरभि चन्दन' 'शीतो वायु' इति च ( घ्राणेन्द्रियेण सौरभ्यमनगम्यते, चन्दन तु दर्शनस्पर्शनाभ्याम्, तथा स्पर्शेन्द्रियेण शैत्यम्, वायु अनुमानेन, इति वैशेषिकमतेन । तेन भिन्नानि गन्धशैत्यानि, भिन्नेषु चाभिन्ना वसतिमत्ता ) 'चन्दनस्य सुरभि', 'वायो शीत' इत्येव स्यात् ( तस्मात् विवर्तात्मकोऽर्थ )। उपसर्गनिपातानां क्वचित् विशेषणार्थता ( प्रपचतीत्यादिषु ) क्वचिद्वाचकत्व ( प्रत्यक्षे इत्यादिषु ) क्वचिद्विपरीतार्थता ( प्रतिष्ठते इत्येवमादिषु ) तद्भाव ( एकरूपत्वे ) नोपपद्यते ( वाक्यनिकत्वे तूपपद्यते )।

गता ( अतो नियोगाभिधानं इति वक्ष्यमाणेन सम्बन्धः )। ‘ आचार्यचोदित करोमि ’ इति हि दर्शितं ( भाष्ये। चोदित प्रवर्तित, कार्यमनयोभिन इत्युच्यते, नान्यथा चेतनः प्रवर्तयितुं शक्यते ) । ननु च प्रेषणादयोऽप्यवगम्यन्ते लोके । ( उत्तर– ) उपायो हि ते, न शब्दार्थाः । के पुनरमी उपाया नाम ? (उत्तर–) उपायो हि तत्प्रयोगदर्शनमात्रात् शब्दार्थे निरोधेऽवस्थापयन्ति, यथा हरिर्हयमभिधेयाय पशुरम् । ( हरणक्रिया यदा पशुमनभिन्नैः, तदा शब्दाः नतां रतिरिरिरित्युच्यते ) । परममी नियोग समधीनश्चायोभिः प्रयुज्यमानः प्रेषणादि व्यपदेशं लभते, प्रवर्तकत्व तु शब्दार्थे सर्वेनापरित्यागात् । अतो नियोगाभिधानसिद्धम् । नियोगाभिधाने च सति तत्साधनमपनियन्तोऽवगम्यते । साधनाभिधाने च ( यागादौ साधने साध्यान्वितेऽभिधीयमाने अर्थात्– ) साध्यर्यातयद । मत इदमुक्तं ‘ तद्भूतानां आख्यातेष्वर्थेषु व्यवस्थितानां क्रियात्वावगते. निमित्तमनुपपद्यते ’ इति ( नेद भाष्ये– के. ) । ननु च प्रयोगे सति एतदुक्तं स्यात् (यदि अपूर्वान्वितेषु प्रयोगो दृष्ट. स्यात्तदैतदुक्तम्, न तु सोऽस्ति । परिहरति– ) येन योक्तं अप्रयोगे इति ? एवभूतेषु हि दृष्टो लौकिक प्रयोगः, वैदिका अपि त एव । अतस्तथाभूतेष्वेवास्य प्रयोगः ( लोके हि कार्यान्वितमभिधायितया पदानि व्युत्पन्नानि, तेन वेदेऽपि कार्यान्विता एव वैः पदार्थाः वक्तव्याः, लिङादिभिरपि पदार्थान्वितमेव कार्यं कथयितीति विज्ञाते पदान्वयोग्यतया क्रियायतिरिक्तकार्यागतिः इति न किंचिदनुपपन्नम् । तस्मादपूर्वमेव अन्वितमभिधीयते लिङादिभिः । शङ्कते–यदि व्यतिपन्नो व्युत्पत्तिवगति – ) एव तर्हि निमित्ततो नैमित्तिकावगति ( न च व्यतिपन्नमप्रतिपन्नं व्यनिष्पन्नमीति, तत् कथं ततो व्युत्पत्तिवगतिरिति । उत्तर– ) मन्द । नैतम् । कथं नोपायोऽयम् । नहि अविज्ञोऽन्यश्चक्षुषः शक्यते प्रतिपत्तुम् ।

( एवं स्वमतं स्थापयित्वा वैयाकरणमत निराकुर्वन्नाह– ) स प्रत्येऽन्विता पदार्थाः, एवमभिधानानि पदानि, तदिदं वाक्यपदीयं (मतम्) । ‘ अन्विताभिधायीनि पदानि, न पुनरर्थविच्छेदशून्यानि, पदान्येव च वाक्यम्, न पदानि इति ’ इति । वाक्यपदे अधिकृत्य कृतो ग्रन्थो वाक्यपदीयं ‘ शिशुक्रन्दयममभद्द्र० ’ इति छः ) । अन्यथा ( एवंविधात्पदार्थानाश्रयणे ) हि अवगम्यमानः पदपदार्थविवेक. अवस्तुतो भवति अविद्यमानः प्रतिपन्नः ( स्यात् ) । तस्मान्न कार्यतः ( वाक्यार्थप्रतिपत्तिलक्षणात् ) तावत् शब्दवाक्यार्थयोः पदपदार्थाभ्यामन्यत्वं कल्पयितुं क्षमा प्रभा (पदान्येव अन्विताभिधायीनि वाक्यम्, पदार्था एवान्विता अभिधीयमाना वाक्यार्थ इति ) । प्रपञ्चतस्तु भेदानवगमात्सत्येयत्त्वं इत्युक्त ( स्फोटनिराकरणपर्वणि । यतो वाक्यार्थावगतिः प्रामाणिकी ) अतः क्रियार्थेन समाम्नाय ( वेदानाम् ) ।

ननु च नास्त्येव क्रियार्थेनैव आम्नानं लोके । ( एकदेशी परिहरति– ) अस्ति तावत् क्रियार्थता वेदे, तद्विषयमिदमधिकरणं भविष्यति । ( चोदकः– ) किं न लौकिकविषयमिदमधिकरणम् ? ( एकदेशी– ) किं वा मन्यते भवान् ? ( चोदकः– ) न्यायाभिधानसाम्यात् सर्वत्रेति मन्यामहे ( यो न्यायोऽभिहित अन्विताभिधानलक्षणः, स लोके वेदे च सम इति हेतोः सर्वत्रेदमधिकरणमिति । परमसिद्धान्ती ब्रूते– ) मन्यतु सर्वत्र । ( चोदकः– ) ननु च क्रियार्थेन इत्यव्यापकम् ? ( सिद्धान्ती– ) व्यवहारक्रियैवेयं क्रिया इति मत्वा साम्यतु भवान् । ( यागक्रियाशब्देन लिङ्गियोगोऽभिहितः, किंतु व्यवहाररूपा क्रिया अभिप्रेता, सा च लोके सर्वत्रास्तीति व्यापकम् ) अतः सिद्धं ‘ अर्थस्य तन्निमित्तत्वात् ’ इति । वैदिकानां तन्निमित्तत्वम् । ‘ तेष्वेव पदार्थेषु ’ इति ( भाष्ये ) अन्वितेषु इत्यर्थः । कुत ? नानपेक्ष्य पदार्थान् पार्थक्येन वाक्यार्थः प्रतीयते ( अन्विता एव पदार्था वाक्यार्थः ) । न चेत् प्रतीयते कथं वाक्यं प्रमाणत्वेन कल्पयिष्यते ? ननु चान्वयो न पदार्थः, स च वाक्यार्थो भविष्यति, अतश्चार्थात् वाक्यमपि पदेभ्योऽन्यदिति उच्यते ( इत्यत आह ) " नन्वर्थापत्ति." इत्यनेन ( भाष्येण ) । 'तद, अर्थस्य तन्निमित्तत्वात्' इत्यन्विताभिधानेन कथितोऽस्यार्थ.– अर्थापत्तिर्नास्तीति । ' अपि चान्वयव्यतिरे-

आदेशिना यावदवयवरूपेण आदेशानां तदुपस्थापकत्वकल्पने गौरवात् । व्याकरणभेदेन आदेशिना अननुगमाच्च । अन्यथा 'ऋषभो वृष' इत्यादावपि अन्तरेण अन्य तरस्मरणेन एकमेव शक्त्यापत्ते । अत श्रूयमाणानुपूर्वी विशिष्टा वर्णा वाचका, न तु स्मारकानुपस्थापका इति वर्णस्फोट ।

एव 'हरिणा, हरये, रामात्, हरे' इत्यादौ पदादेस्त विभागाभावात् कस्यचिदंशस्य उच्चारणाचारतम्, कस्य चित् करणत्वादिवाचकत्व इति नियन्तुमशक्यत्वात् संपूर्णस्यैव करण त्वादिविशिष्टहरेर्वाचकता इति पदस्फोट ।

एव 'कृष्णोद्दि' 'गच्छन' इत्यादौ वाक्ये अत्र विभागाभावात् एकस्यपदैकानुपूर्वीकस्य भागमात्रवाचकस्य अन अंशे मानाभावात् वाक्यस्यैव विशिष्टार्थे शक्ति इति वाक्यस्फोट ।

■ त्रिविध सखण्डवाक्यस्फोट, अखण्डवाक्य स्फोटश्च । आद्यो द्विधा पदरूपसखण्डवाक्यस्फोट, वर्ण रूपसखण्डवाक्यस्फोटश्च । तथाहि, 'विष्णोद्व' इत्यादि वाक्येषु आकाङ्क्षादिसहकृत-तत्तत्पदस्मारित-पदार्थानां संसर्गरूपवाक्यार्थावगमेऽपि तस्य शाब्दत्वसिद्ध्ये वाक्यस्य शक्ति कल्प्यते । सैव वाक्यस्फोट । स च अखण्ड एव स्वरूपेण हेतु । अभिहितान्वयवादिमते अन्यथाऽ सिद्धिवत् 'हरिणा नम्रा भोग' इति वाक्य इव अत्रापि यथापूर्वभागे तदवगमो वा कल्प्यते । यद्वा 'हरत्र' इत्यादौ पदविभागानिर्णयात् वर्ण ( अक्षर ) समानपक्षवाक्यस्य संयोजकत्वेकल्पने ध्वनिरूप स्फोट, तदा वर्णरूप सखण्डवाक्यस्फोट । अखण्डश्च व्यवहारकाले सह ।

न चैव वाक्यस्य पदवत् स्मारकत्वापत्त्या अनुभावकत्वापत्ति इति वाच्यम् । अनुमानस्य प्रत्यक्षमात्र वृत्तिता इष्टत्वात् । यथार्थज्ञानजनकत्वस्यैव वाक्यप्रमाण त्वात् । आकाङ्क्षादिसहकृतपदार्थस्मरणजन्यशाब्दज्ञानजनक त्वस्यैव अनभिमतार्थवाचकतया प्रामाण्यविधान ।

यद्वा । वाक्ये बोधकत्वातिरिक्त धर्मो न शक्ति, मानाभावात् । हस्तिपकादौ तु तस्य मानान्तरगम्यत्वात् युक्त तेन तत्स्मरणम् । अतो न स्मारकत्वापत्तिर्दोषोऽपि । एव च आकाङ्क्षादिज्ञानस्य हेतुत्वाभावात् तात्पर्यज्ञान स्यैव हेतुतया कार्यकारणभावकल्पनालाघवम् ।

यद्वा । 'घटमानय' इत्यादिवाक्येषु ध्वनिधर्मै तारत्वमन्दत्वादिभिरिव घटत्वादिध्वनिधर्मैरेव एकशब्दो वर्णरूपोऽभिव्यज्यते । ■ एष वाक्यस्फोट ।

एव पदस्फोटेऽपि द्वैविध्यमूह्यम् ।

एव च 'एक पद' 'एक वाक्य' 'महत् पद' 'महत् वाक्य' 'शब्दात् प्रत्येमि' इत्याद्यनुभवोपपत्ति । वर्णानामनेकत्वेन महत्त्वाभावेन च तदनुपपत्ते इत्याहु ।

परे तु यथा कुशला शरेण इषु एकेनैव वेगाख्य व्यापारेण वर्मच्छेदम्, उरोभेदम्, प्राणहरणं च शत्रो करोति एव शब्द एकेन अभिधाव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभव च करोति इति 'यत्पर शब्द स शब्दार्थ' इति वाक्यार्थे शक्तिमाहु । तदुक्तम् । 'पूर्णो धावति' इत्यत्र परस्य, 'शुक्लो जात' इत्या दिषु हलार्थानाम्, 'गच्छ गच्छसि चेत्' इत्यादौ 'मा गा' इति निषेधस्य वाक्यार्थताऽऽपत्त । अत एव तात्पर्यार्थप्रत्ययाय व्यञ्जनैव अङ्गीकृता । तच्च व्यञ्जना-निरूपणे स्पष्टम् ।

केचित्तु वाक्यार्थे तात्पर्याख्य व्यापारम् वृत्त्यन्तर माहु ।

प्राभाकरास्तु । कार्यान्विते पदानां शक्ति । तथाहि, पदेषु स्मारिका अनुभाविका चेति शक्तिद्वयम् । तत्र स्मारिका जातौ । अनुभाविका कार्यान्विते । एव च घटादिपदानि घटत्वादिजातिस्मरणद्वारा घटादे कार्यान्वयानुभवजनकानि । तथाहि, सर्वत्र व्यवहारेणैव शक्तिग्रह । प्रयोज्यवृद्धस्य प्रयोजकवाक्यश्रवणानन्तर गोकर्मकानयन-चेष्टया तादृशप्रवृत्तिजनकज्ञानानुमानद्वारा स्वप्रवृत्तौ कार्यताज्ञानस्य हेतुत्वदर्शनात् कार्यताज्ञानमनुमाय पदानां कार्यताज्ञान हेतुत्वमवधार्य तस्य त्यक्ति पुरुषान्तरे तदर्थताज्ञानं विना अनुपपन्नतया कार्यान्वये अनुभाविका शक्तिमवधारयति । कार्यं च अपूर्वमेव इति यत्र कार्यतावाचकपदाभाव तत्र न वाक्यार्थबोध, किंतु पदार्थस्मरणमात्रम् । लिङादियुक्त लौकिकवाक्यस्य च लक्षणया यागसाधनादिरूपकार्यान्वित बोधकत्व इत्याहु ।

वेदान्तिनस्तु इतरान्विते एव शक्तिग्रहः, न तु कार्यान्विते । तथाहि, प्रयोजकवाक्यस्य आनयनकर्मता-विशिष्टगोरूपे अर्थे शक्तिमवधार्य आवापोद्वापाभ्यां गवादिपदस्य गोत्वादौ शक्तिमवधारयन् आद्यव्युत्पत्ति-गृहीतान्वयांशे शक्तिमत्यजन् इतरान्विते एव शक्तिमव-धारयन्ति । एवं च अन्वयेऽपि शक्तिः इत्याहुः ।

नैयायिकास्तु समभिव्याहारेण वाक्यार्थबोधः घटा-नयनविशिष्टसंसर्गज्ञाने तादृशानुपूर्वीज्ञानस्य हेतुत्वमात्र-कल्पने लाघवात् । शाब्दत्वं च न शब्दवृत्तिविषयत्वं किंतु शब्दजन्यप्रतीतिविषयत्वम् । तेन वृत्त्यविषयस्यापि अन्वयस्य शाब्दबोधोपपत्तिः इत्याहुः ।

सिद्धान्तस्तु वाक्यस्य वाक्यार्थे लक्षणा । न च शक्याभावात् कथं लक्षणा इति वाच्यम् । बोध्यसम्बन्ध-स्यैव लक्षणात्वात् । 'घटमानय' इत्यादिवाक्ये घटा-नयनसामान्यबोधेऽपि तद्विशेषबोधस्य लक्षणां विना अनु-पपत्तेः । नहि घटानयनसामान्यं वाक्यार्थः । ज्ञानेच्छा-प्रवृत्तीनां समानप्रकारकत्वसमानविशेष्यकत्वेन हेतुहेतु-मद्भावात् विशेषविषयकेच्छाप्रवृत्त्यनुपपत्तेः । अतः तद्वि-शेषरूपवाक्यार्थस्य लाक्षणिकत्वं युक्तम् । स्फुटीकरिष्यते चैतत् तद्भूताधिकरणे ( १।१।७ ) । मणि. पृ. ८०–८३.

० वाक्यार्थाधिकरणसिद्धान्तस्तु–तथा च वाक्यानां वाक्यार्थे शक्तिज्ञानं नापेक्ष्यते । तात्पर्यं च न पुरुषे-च्छापठितं इति तत्तदृग्भागिवाद्यनिष्ठापकरूपं वाक्यं पदार्थज्ञानसहकारेण तत्तत्कार्यान्वितभावनारूपं वाक्यार्थं बोधयति इति न चोदनायामप्रामाण्यं इति । कस्तूरि. १।१।७ । वाक्यार्थज्ञानं न पदार्थोपस्थितिमन्तरा भवति, किंतु पदैरेव उपस्थितानामर्थानां योग्यतया परस्परसम्ब-न्धमेव वाक्यार्थज्ञानं तत्र च न लोकानपेक्षता इति चोदना धर्मे प्रमाणम् । वृत्ति.

० वाक्यार्थावगमः न वाक्यग्रहणमूलकः किंतु पदार्थग्रहणमूलकः एव, पदार्थानां अन्वीयमानत्वात् तद्व्यतिरेके व्यभिचरितमानत्वात् । वेदनाथः १।१।७ ५५ पृ. ५८

० वाक्यार्थैकत्वे यत्र एकवाक्यता संभवति, तत्र सर्वविशेषणविशिष्टैकभावनाविधिः । यथा 'देवदत्तः काष्ठैः स्थाल्यामोदनं पचति' इत्युक्ते सर्वेषामेकवाक्यविषयत्वम् । वा ३।१।६।१२ पृ ६९१.

० वाक्यार्थत्वं भावनायाः । सु. पृ. ६८३

० वाक्यार्थप्रतिपत्तिन्यायः । साहस्री ८६२.

० वाक्यार्थप्रतिपत्तिन्यायेन शब्दनिष्पत्ति–(सम्बन्ध-प्रतिपत्ति) । समवे तत्र शक्तिकल्पने गौरवात् । मीन्या.

० वाक्यार्थप्रतीतौ पदार्थानां करणत्वम् । बाल पृ. ७०.

० वाक्यार्थबोधः समभिव्याहारेण इति नैयायिकाः । मणि. पृ. ८२.

० वाक्यार्थबोधप्रकारः कार्यत्वनिष्पत्ति अधिकृत्य गुरुमते प्रदर्श्यते । तत्र 'तृप्तिकामः पचेत्' इत्यादौ प्रत्ययार्थकार्यत्वस्य प्रकृत्यर्थेनापि अन्वयवत् 'स्वर्गकामो यजेत' 'शुचिः सन्ध्यामुपासीत' इत्यादिवैदिकविधौ प्रत्ययार्थकार्यत्वस्य न प्रकृत्यर्थयागादौ अन्वयः संभवति, प्रकृत्यर्थप्रतीत्ययोग्यत्वात् । तथाहि, यागादिक्रियायां कार्यत्वान्वये नियोज्यान्वयो हेतुः, नियोज्यविशिष्टस्यैव यागादिक्रियायां कार्यत्वान्वयदर्शनात् । अन्वयप्रयोजक-रूपवत्त्वम् अन्वये योग्यत्वात् । प्रकृते स्वर्गकामस्य नियोज्यत्वेन नियोज्यस्य स्वर्गफलकामनाप्रयुक्तकार्यताज्ञान-विषयत्वेन सम्बन्धेन यागादिक्रियायामन्वये स्वर्गसाधनत्वं स्वर्गसाधनत्वेन ज्ञायमानस्य वा योग्यता । तच्च न संभ-वति साक्षात् स्वर्गसाधनत्वस्य बाधात्, परम्परया तत्सा-धनत्वस्य परमापूर्वज्ञानं विना दुर्ज्ञेयत्वात् । तथा च यागे नियोज्यान्वयासम्भवात् न कार्यत्वान्वय इति ।

अथ 'शुचिः सन्ध्यामुपासीत' इत्यादौ नित्ये यथा इष्टसाधनत्वज्ञानं विनाऽपि 'शुचिनियोज्यक सन्ध्यावन्दन-विषयकं कार्यं' इति बोधः तथा 'स्वर्गकामनियोज्यको यागः कार्यः' इति बोधः स्यात् इति चेत्, सङ्गते कामनाविशिष्टस्य नियोज्यत्वेन नित्यविधितो विशेषात् ।

न च कामना अवच्छेदकत्वस्य आत्मनाऽपि तद-न्वयम्, शक्यमापात्तलिङ्गकार्यताज्ञानस्य प्रवर्तकत्वे नाविघ्नन इति वाच्यम् । नहि 'स्वर्गकामः' इत्याद

वैफल्यापत्तेः । कामनाया उपलक्षणत्वे नित्ये इव नैरा- धीनकार्यताज्ञानात् निष्कामस्यापि प्रवृत्त्यापत्तेः, इष्टसाधने मानाभावात् अप्रवृत्त्यापत्तेश्च । नहि नित्यविधिव पक्षे स्वर्गकामपदसमभिव्याहारात् अत्र को विशेषः । विशेषणत्वे हि विशिष्टस्य स्वप्रयोज्यकार्यताज्ञानजनकरूपनियोज्यत्वेन अन्वये स्वकामनाविषयसाधनत्वस्य योग्यतया स्वर्ग- कामपदैकवाक्यतानिर्वाहप्रतीत्यनुपपत्त्या याच्य अपूर्वं कामनाविशिष्टान्वयि सिध्यति । अत एव प्रधानविधावेव अपूर्वाकाङ्क्षा, न नित्यविधौ आङ्गवादिविधौ च । 'मदीयं कार्यं' इतिबोधजनकरूपनियोज्यत्वे च कामनाया विशेषणतया प्रयोजकस्य कामिनो जनकत्वं इति विशिष्ट- प्रयोज्यत्वं तज्जनकत्वं च कर्तृत्वाधिकारित्वाभ्याम् । नोचेत् तु उपलक्षणता अनन्यगत्या न दूषिका । प्राथमिक- नियोज्यान्वये विशेषणत्वेन इष्टसिद्धेः ।

एतेन 'राजा स्वाराज्यकामः' इत्यादौ राजत्वादिवत् विशेषणान्वये सति व्यावर्तकत्वेन विशेषणत्वमपि अपा- स्तम् । कामनाभावेन तदनैकट्यात्, 'यदा कामना तदा तत्कृतिः' इति रीत्या व्यावर्तकत्वसम्भवात् । अतो यागे कार्यतान्वये नियोज्यान्वयो योग्यता । तत्र च इष्टसाधनत्वेन ज्ञायमानत्वम्, स्वर्गसाधनत्वस्य योग्यता- त्वाभावात् इति गुरुमतनिष्कर्षः ।

अत्र काम्यसाधनत्वेऽपि तत्त्वेन अज्ञायमाने नियोज्या- नन्वयात् काम्यसाधनत्वेन ज्ञायमानत्वमुक्तम् ।

यत्तु काम्यसाधनत्वेऽपि तत्साधनत्वभ्रमात् नियो ज्यान्वयात् उपस्थितकाम्यसाधनत्वेनागृहीतासंसर्गकत्वमेव योग्यता । उपस्थितधर्ममेव अपूर्वान्वयसिद्धिरिति । तत्र । तन्मते योग्यताविशिष्टज्ञानस्यैव शाब्दबोधे हेतुत्वात् अन्यथाख्यात्यापत्तेः ।

एतेन स्वर्ग– ( काम्यसाधनत्व– ) ज्ञानतोऽपि नियोज्यस्य चिकीर्षाविरहस्य न यागकृति इति ॥ नियोज्यस्य योग्यता, न वा चिकीर्षा, तद्धेतोऽपि उपादान प्रत्यक्षविरहेण असत्त्वात्, इति परास्तम् ।

अन्वयप्रयोजकस्य हि न अन्वितवृत्तित्वेन गृहीतत्वम्, किन्तु अनन्वितवृत्तित्वेन अगृहीतत्वम् । तत्र च यदा यस्य तत्र तदा तस्य न योग्यतात्वम्, किन्तु विशिष्ट-

नियतया उक्तनियोज्यत्वमेव, प्रयोजकता तस्य विशिष्ट- निष्ठत्वात् । चिकीर्षात्वमपि तथैवेति चेत्, सत्यम् । किन्तु तत्प्रयोजकत्वस्य तस्य उक्तनियोज्यत्वद्वारकत्वेन गुरु इति तात्पर्यम् । अत एव कृतिप्रयोजकत्वरूपकर्तृत्वाश्रयस्य कृतिसमवायित्वस्य कर्तृत्वम्, फलभोक्तृत्वरूप साधि- कारित्वं न कामनायाम्, इति न तत्रोर्विशिष्टनिष्ठत्व इति प्रागेवोक्तम् ।

यत्तु तन्मते अन्यथाख्यात्यभावात् 'यागो मत्कृति- साध्यः' इति ज्ञानं कृतिप्रत्ययस्य नास्त्येव इति न किञ्चिदेतत् ।

ननु योग्यतान्वये योग्यतान्तरापेक्षायां अनवस्था- ऽऽपत्ते नियोज्यान्वयरूपयोग्यतान्वये न योग्यतान्तरा- पेक्षा इति चेत्, सत्यम् । नियोज्यत्वरूप योग्यतारूपस्य स्वर्गकामे अन्वये योग्यतान्तरानपेक्षायामपि नियोज्यत्वेन रूपेण स्वर्गकामस्य पदार्थस्य धात्वर्थे यागे अन्वये योग्य- तान्तरस्य आवश्यकत्वात् ।

घटे छिद्रेतरत्वस्यान्वये योग्यतान्तरानपेक्षायामपि छिद्रेतरत्वेन घटस्यान्वये, योग्याहरणस्य आहरणे, योग्य- जलत्वस्य जले योग्यतात्वात् । तथाहि, यथा घटादिमात्रेण आहरणान्वयसम्भवात् घटे छिद्रेतरत्व आहरणे योग्याहरणत्व जले च योग्यजलत्व योग्यता, तथा स्वर्गादिकामस्य 'ममेदं कार्यं' इति ज्ञानजनकस्य ममान्यगतान्वयाभावात् स्वर्गकामे नियोज्यत्वम्, क्रियाया काम्यसाधनत्वेन ज्ञायमानत्व योग्यता । नित्ये तु शौचादिमत्त्वमेव योग्यता इति बोध्यम् ।

अथ अपूर्वरूपकार्येऽपि न नियोज्यान्वयसम्भवः । अपूर्वस्य प्रागनुपस्थित्या तत्र काम्यसाधनत्वरूपयोग्यता ज्ञानासम्भवात् इति चेत् । विशिष्य अपूर्वत्वेन ज्ञानासम्भवेऽपि कार्यत्वेन तस्य काम्यसाधनत्वज्ञानसम्भवेन नियोज्यान्वयसम्भवात् । ओदनत्वेन तृप्तिसाधनतया ज्ञाते ओदने तृप्तिकामान्वयवत् समानप्रकारकत्वेनैव योग्यताधियो नियोज्यान्वये हेतुत्वात् । अपूर्वं त्वमस्तु योग्यताज्ञानात् । 'यागजन्य कार्यं स्वर्गादि प्रकृतकाम्यसाधनं' इत्यत्र अपूर्व- स्यैव विषयत्वात्, यागजन्यस्य कार्यान्तरस्य अप्रयाततात् ।

* वाक्यगतिः । लोकाधीनावधारणा वाक्यगतिः । लोके च प्रत्युद्देश्यं विधिवाक्यपरिसमाप्तिः । न खलु येनैव प्रयत्नेन एकमर्थं विधातुं एकमुद्दिश्यामः तेनैव अपरमपि उद्देष्टुं ईश्महे इति स्वानुभवसिद्धमेतत् । तस्मात् द्वयोरुद्देश्ययोः नैकवाक्यत्वमवायसम्भवः । कणिका. पृ. ३७३.

* वाक्यगम्य 'यदि कामयेत वर्षेत् पर्जन्य इति नीचैः सदो मितुयात्' इति सामानाधिकरण्य 'यदि कामयेत' इति आत्मनेपदश्रुत्या बाधितम् । वा. ३।८। ५।११. * वाक्यगम्यस्य आरुण्यस्य एकहायनीद्वारत्वं 'अर्थैकत्वे द्रव्यगुणयोः' (३।१।६।१२) इत्यत्र उक्तम् । सु पृ. ११९२.

* वाक्यत्वं नाम जातिः भिन्नस्थानकरणप्रयत्नाभिव्यङ्ग्यवर्णानेकपदसमूहे अवयवे वा भिन्नभावपदार्थसम्बन्धप्रत्ययाकाङ्क्षायनपादानात् प्रमाणत्वादिन्यायेन कस्यचित् तद्भूताधिकरणे (१।१।७) न अभ्युपगतम् । वा. १।१।१। पृ. ८०५, सु पृ. १२७०

* वाक्यशेषाः 'श्रूयमाणस्य वाक्यस्य॰' इति विन्दौ द्रष्टव्यम् ।

* वाक्यपरिसमाप्ति प्रत्येकं दृष्टा । भा. ३।१। ६।१२ पृ. ६५६ । समुदाये वाक्यपरिसमाप्तिः । १०। १।४।८.

* वाक्यपाद नाम द्वादशलक्षण्या तृतीयाध्यायस्य तृतीय पादः । बाल पृ. १०१.

* वाक्यप्रकरणे क्रमात् बलीयसी । भा ३।६। ५।३०, * वाक्यप्रकरणयोः प्रकरणं अर्थविप्रकर्षात् दुर्बलम् । शा. ३।३।७।१४, मीको. पृ. २९३५ 'बलाबलाधिकरणम्' इत्यत्र द्रष्टव्यम् । * वाक्यप्रकरणयोर्विरोधे दोषानेकत्वे 'पूर्वेद्युरमावास्यायां वेदिं करोति' इत्युदाहरणम् । प्रकरणेन हि हविरभिवासनोत्तरकालं यद्विधानं तस्य ग्रहणं प्राप्नोति । अमावास्यासमभिव्याहारेण तु पूर्वेद्युः । वा ३।३।७।१४ पृ ८३१. * वाक्यप्रकरणयोर्विरोधे दोषानेकत्वे पूषानुमन्त्रणमन्त्रगतस्य 'अहं देवस्य पुष्टिमान् भूयासम्' इति पदसमुदायस्य प्रकरणाद्दर्शाङ्गत्वे प्रसक्ते पूषपदैकवाक्यत्वात् पूषदेवत्यकर्माङ्गत्वम् । (सूत्रकारोदाहरणं तु प्रसिद्धमेव) । इदं अविकारात्यगौणप्रकरणोदाहरणम् । मुख्यप्रकरणोदाहरणं तु वैमृधस्य प्रयाजादिवत् दर्शाङ्गत्वप्रसक्तौ वाक्येन पौर्णमासमात्राङ्गत्वम् । दोषानेकत्वे तु वेदिकरणस्य हविरभिवासनोत्तरस्य अधिकारमुख्यप्रकरणात् मुख्यप्रकरणादेव वा दर्शाङ्गत्वे सिद्धे 'पूर्वेद्युरमावास्यायां' इत्यनेन पूर्वेद्युः काल । कौ. ३।३।७।१४. * वाक्यप्रकरणयोर्विरोधोदाहरणं 'अग्नीषोमाविदं हविरजुषेताम्॰' इत्यादिः सूक्तवाकमन्त्रः । वि. ३।३।९.

* वाक्यप्रकरणाधिकरणम् । वि. ३।३।९.

* वाक्यप्रमाणत्वं यथार्थज्ञानजनकत्वम् । इति वैयाकरणाः । मणि. पृ. ८१.

* वाक्यप्रयोगः वक्तॄणां परप्रत्यायनार्थः । वा. २।१। १४।४६.

* वाक्यभेदः । 'अथ प्रबन्धलक्षणा विप्रकीर्णा ततस्ततः । वाक्यभेदमिदा याः संक्षिप्येह ब्रवीम्यहम् ॥' तत्र द्विविधस्तावत् वाक्यभेदः आवृत्तिलक्षणो विभागलक्षणो वैरूप्यलक्षणश्चेति । आवृत्तिलक्षणोऽपि त्रिविधः प्रकृत्यावृत्तिः, प्रत्ययावृत्तिः, उभयावृत्तिश्चेति । प्रकृत्यावृत्तिरपि द्विविधा प्रातिपदिकावृत्तिः धात्वावृत्तिश्चेति । प्रातिपदिकावृत्तिरपि द्विविधा समासासमासभेदात् । प्रत्ययावृत्तिरपि चतुर्विधा– सुप्–तिङ्–कृत्–तद्धितभेदात् । तदुक्तं 'अर्थैकत्वादेकं वाक्यं' (२।१।१४ ४६) इत्यत्र वार्तिके 'पदतदेकदेशावृत्तिमूलावृत्तिप्रकारात्मकः तद्विभागलक्षणो वाक्यभेदः' इति । तथा 'विभागलक्षणो वाक्यभेदस्तत्कल्पनायाः अनेकादृष्टकल्पना च दोषः, इतरस्मृत्यनपेक्षत्वादप्रामाण्यं' इति । एतद् व्याख्यातं भट्टसोमेश्वरेण (सु पृ. ६८२) "वाजपेयगुणविधौ आख्यातपदावृत्तिः, यदैकत्वविवक्षायां पदैकदेशप्रातिपदिकावृत्तिः, हविरार्तौ उभयत्वेन विशेषणे 'हविरार्तिमार्च्छेत्' इति पदसमूहावृत्तिः, आग्नेयस्य कृत्स्नप्रकरणनिवेशे अष्टधा इतिपदस्य विभागस्यादिवाक्यात् विभाग." इति । विभागलक्षणवाक्यभेदस्य तु अवान्तरभेदा न सन्तीति नोक्ताः ।

पृ ६८०, * प्रत्ययावृत्तिलक्षणो वाक्यभेद । २।२। १२।२७ पृ. ५५२. * प्रत्येकवाक्यपरिसमाप्तिनिमित्तः वाक्यभेद. । शु. पृ ११९४ * पदान्तरगतार्थग्रहणनिमित्तोऽपि वाक्यभेदः । वा. १।४।२।३ पृ. ३१०. * परस्परनिरपेक्षार्थविधाने वाक्यभेदो भवति । 'अग्नये च प्रजापतये च सायं जुहोति' इत्यत्र 'च'शब्दश्रवणात् परस्परसापेक्षत्वेन पदद्वयस्य आख्यातान्वयात् न वाक्यभेद. । एवं 'गोश्च अश्वश्च अश्वतरश्च' इत्यादावपि न वाक्यभेदः । मीन्या. * प्राप्ते कर्मणि अनेकार्थविधौ वाक्यभेदापत्तिः । सु. पृ. ९२६, * प्राप्ते कर्मणि गुण-फल-रूपानेकार्थविधौ वाक्यभेदापत्तिः । पृ. ९२७. * प्राप्ते कर्मणि सम्बन्धद्वयकरणात् वाक्यं भिद्येत । वा २।१।१२।२१ पृ. ७३४. * प्राप्तोद्देशेन कालद्रव्याद्यनेकगुणविधाने वाक्यभेद. । संकर्ष. १।१।१६. * यानि एकक्रियाविशेषणानि भवन्ति, तानि तया विधीयमानया (क्रियया) अर्थादाक्षिप्यमाणानि न विधायकव्यापारं भिन्दन्ति । क्रियान्तरविशेषणे पुनर्विधीयमाने, तया क्रियया साकाङ्क्षत्वरहितया आक्षिप्यमाणे वाक्यं विधायकस्य आवृत्तिरेकस्या इति वाक्यभेद. प्रसज्येत । वा.२।२।१२।२७ पृ ५५६, * यत्र सकृदुच्चरिते द्वे विवक्षिताविवक्षितत्वे भवतः तत्र वाक्यभेद. । ९।२।२।४ पृ ११९२, * यदा वि भावनारूढ विधिस्त भावनार्थत्वेनैव गृह्यते तदा अर्थाद्विशेषणविधौ भवति अवाक्यभेदं वक्ष्यामः । यदा तु तद्विशेषणार्थमित्यवधार्यते तदा भावनायाः सन्निधिप्रापितत्वात् अनेकविशेषणयोगे सति यदर्थं विधित्वमव सीयते तदर्थैनैकस्य विधान नेतरस्य तद्देशस्यापि इति वाक्यभेदो भविष्यति । २।२।५।१६ पृ ५०३, * यदि तत्र द्वावपि साकाङ्क्षविशेषसम्बन्धौ इदमेव वाक्यं कुर्यात् ततो वाक्यं भिद्येत । ३।१।८।२२ पृ. ७९९ * यदि फलं दध्ना कुर्यादिति ब्रूयात् न दध्ना होममिति । अथ दध्ना होमं भावयेदिति ब्रूयात् न फलमिति । उभयवचने भिद्येत वाक्यम् । भा. २।२।११।२६ पृ.५४६. * युगपदुपलक्षणविधिकल्पने वाक्यभेद । वा. २।१। ३।९ पृ. ४८७. * वचनव्यक्तिभेदात् वाक्यभेदः प्रसज्यते । भा. ९।३।१२।३४. * वाक्यपरिसमाप्तिलक्षणः तावत् एको वाक्यभेदः । वा. ३।१।७।१४ पृ. ७२०. * वारवन्तीयस्य आश्रयान्वयविधिनिमित्त वाक्यभेदवत् आश्रयस्य अग्निष्टुद्विशेषणविधिनिमित्तोऽपि वाक्यभेदः स्यात् । [illegible] पृ. ८५७, * विधिप्रत्ययावृत्तिलक्षणः वाक्यभेदः । पृ. ८८५. * विधेयभेदादपि वाक्यभेदो भवति । मीन्या. * विभक्तिवैरूप्यादिनिमित्तः अपरः वाक्यभेद. । वा. ३।१।७।१४ पृ. ७२१. * विवक्षितार्थेभ्यो न्यूनताभ्युपगमे वाक्यभेदो यथा– 'यदाग्नेयोऽष्टाकपालः अमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति । अत्र विवक्षितोऽर्थः द्रव्यदेवताकालद्वयविशिष्टयागविधि तदपेक्षया न्यूनोऽर्थः. विद्वद्वाक्यविहितयो यागयोः द्रव्यदेवतयोरेव विधीयते न यागविधिः इति । तदभ्युपगमे वाक्यभेद इति । बाल. पृ. ३. * विशिष्टानुवादो न वाक्यं भिनत्ति । वा. २।२।१२।२७ पृ ५५७. * विशिष्टानुवादलक्षणो वाक्यभेद । सु पृ. ८३६. * विशिष्टार्थभेदेन वाक्यभेदात् यजुर्मन्त्रभेद', यथा 'इषे त्वेति शाखां छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि' । 'आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम्' इत्यादौ च । [illegible] २।१।१५. * विशिष्टभावनाविधानस्य एकत्वे न वाक्यभेदो भवति । सु पृ ८६८ * विशिष्टविधाने वाक्यभेदो न भवति द्वाभ्यां तु विशेषणाभ्यां विशिष्टेनमाधान विधास्यते तेन भविष्यति वाक्यभेद. । भा. २।३।३।४. * विशेषणवैशिष्ट्यात्तो विशेष्यादौ च यदि विधि व्यापार. तर्हि वाक्यभेदः । सोम.७।३।१. * विस्पष्टमर्थद्वयम्, विभागे च निराकाङ्क्षता, तेन वाक्यभेद । भा ३।२।११।२५. * वैरूप्यनिमित्तो वाक्यभेदः 'न सोमं वमति, यस्य सोमं कश्चित् वमति' इति । वा. ३।८।१३।२५, * वैरूप्यलक्षणः वाक्यभेद । १।१। १०।२१, * 'श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने । लक्षणावाक्यभेदादिदोषो नानुमिते ह्यतो ॥' १।४।३।३ पृ २२९. * सकृदुच्चरितस्य विधायकस्य अनेकार्थविधिशक्त्यनभ्युपगमात् आवृत्तिलक्षणवाक्यभेदपरिहारेऽपि एकस्य अनेकार्थे तात्पर्यात् गौरवलक्षणवाक्यभेद· अपरिहार्य । सु. पृ. ९३१, * सकृदुच्चरितस्य विधायकस्य

विध्यनुवादवैरूप्यप्रयुक्तवाक्यभेदापत्तिः । पृ. ९२८. * समासोपात्तविशिष्टार्थविधौ नास्ति वाक्यभेदः । बाल. पृ. १०२. * सूत्रे वाक्यभेदः यथा— ' अग्रहश्च स्यकालत्वात्, देवधर्मोपयातनम् । व्याख्यानं वाक्यभेदेन ॥ ' श्लो.वा. १।१।५७ । ' ते सर्वार्थाः प्रयुक्तत्वादृत्विजश्च स्वकालत्वात् ' ( ३।७।१९।२९ ) इत्येकत्र सूत्रं वाक्यभेदमाश्रित्य अधिकरणान्तरं व्याख्यातम् ।

तथा ' अभ्युदये दोहापनयः स्वधर्मा स्यात् प्रवृत्तत्वात् ' ( ९।४।१०।४१ ) ' शृतोपदेशाच्च ' ( ९।४।१०।४२ ) इति सूत्रद्वयेन अभ्युदितेष्टौ दधिशृतयोः प्रदेयधर्माः कर्तव्याः इत्युक्त्वा ' अपनये पाठ्यान्तरे विधानात् चरुवदीयत् ' ( ९।४।११।४३ ) ' व्रणार्थाः शृतश्रुतिः ' ( ९।४।११।४४ ) इति सूत्रद्वयेन प्रदेयधर्माणामपयातनमुक्तम् । तदिदं पूर्वयोः सूत्रयोः अनयोश्च वाक्यैकभावेन ऐकाधिकरण्यात् अभ्युदितेष्ट्यामेव प्रदेयधर्मापयातनमुच्यते इति प्रतिभासमानमपि ततो भित्त्वा अधिकरणान्तरं पशुकाण्डेष्टिविषयं व्याख्यातम् । रत्नाकरः.

* वाक्यभेदाद् लक्षणा वरम् । लक्षणायाः पददोषत्वात् वाक्यभेदस्य च वाक्यदोषत्वात् । मीन्या. * वाक्यभेदात् व्यवहितकल्पनाश्रयणं वरम् । वा. ३।६। ७।१२ पृ. १०४९.

## ॥ वाक्यभेदाधिकरणम् ॥

समेषु वाक्यभेदः स्यात् । २।१।१५।४५ ॥

भाष्यम्— ' इषे त्वा, ऊर्जे त्वा ' इति । तथा ' आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम् ' इति । अत्र संदेहः किमेवमादिषु भिन्नं वाक्यं उत एकमिति । एकमिति ब्रूमः । इषे त्वा इत्येवमुक्ते न किञ्चिद्दृष्टं प्रयोजनम्, तथा ऊर्जे त्वा इत्यपि च । वचनसामर्थ्याद् दृष्टम् । तदुभाभ्यामेकं कल्पयितुं न्याय्यम् । एवं अल्पीयस्यदृष्टानुमानकल्पना भविष्यति । तस्मादेकं वाक्यम् । एवं प्राप्ते, ब्रूमः । समेषु वाक्यभेदः स्यात् । समेषु परस्परानाकाङ्क्षेषु वाक्यं भिद्यते । ' इषे त्वा ' इत्यनेन एकोऽर्थः क्रियते, ' ऊर्जे त्वा ' इत्यनेन अपरः । ननु इदानीमेव उक्तं नात्र दृष्टोऽर्थ इति । यद्यपि प्रत्यक्षादिना प्रमाणेन नोपलभ्यते, श्रुत्या तु गम्यते ' इषे त्वेति छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि ' इति । तथा ' आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम् ' इत्यायुःक्लृप्तेरन्या प्राणक्लृप्तिः । ननु सामान्यमात्रमिदं तत्र विशेषणभेदात् भेदमर्हतीति । यथा ' अग्नये जुष्टं निर्वपामि ' इति निर्वाप एकस्तस्य विशेषाः ' सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ' इति, न तेषां भेदात् निर्वापस्य भेद इष्यते । एवमिहापि क्लृप्तिर्नाम एकोऽर्थः, नासौ आयुरादिभिर्विशेषैः भिन्नो भविष्यतीति । उच्यते । इह 'क्लृप्तीर्वाचयति' इति बह्व्यः क्लृप्तयः श्रूयन्ते । ताश्च वक्तव्याः । तत्रैका आयुःक्लृप्तिः ' आयुर्यज्ञेन कल्पताम्' इत्येष मन्त्रः शक्नोति वदितुम् । 'प्राणो यज्ञेन कल्पताम्' इत्ययमपि प्राणक्लृप्तिपरम् । एवं तु सर्वं क्लृप्तिविशेषवचनाः । तत्र दृष्टं प्रयोजनम् । तस्मात् अनेकार्थत्वात् तत्रापि वाक्यभेद इति । ननु सामान्यवचनादेकत्वं यथा विभागे । नैतदेवम् । विभागे दृष्टार्थं सामान्यमिह न । अपि च क्लृप्तीर्वाचयति इति विहितम्, ' आयुर्यज्ञेन कल्पताम् ' इति चाऽऽयुःक्लृप्त्यभिधानमभिनिर्वर्तते सत्यम्, ' प्राणो यज्ञेन कल्पताम् ' इति न प्राणक्लृप्तिः । तस्मात् वाक्यभेदः ।

वा— येषां अदृश्यमानकर्मसमवेतार्थत्वेन लैङ्गिकविनियोगाभावेन वचनाद्विनियोगः, तेषां प्रागदृष्टार्थमन्त्राणामेकमन्त्रत्वं युक्तम् । तथाहि 'कल्प्यस्तेषामदृष्टोऽर्थः स चाल्पः स्याल्लघीयान् । कल्पिते च तदेकत्वे साकाङ्क्षाः स्युर्नियोजिताः ॥' यदा हि बह्वदृष्टकल्पना निष्प्रमाणिका इत्येकमदृष्टं सर्वेषु कल्पितं भवति तदा प्रत्येकं तत्साधनशक्त्यभावात् विभज्यमानसाकाङ्क्षत्वमप्यस्तीत्येकवाक्यता । कथं पुनरस्मिन् पक्षे प्रतीकभेदेन विनियोगः ' इषे त्वेति शाखां छिनत्ति ' ' ऊर्जे त्वेत्यनुमार्ष्टि ' इत्येवमादि. । कथं च ' क्लृप्तीर्वाचयति ' इति बहुत्वनिर्देशः । तदुच्यते ' एकोऽपि बहुभिर्मन्त्रैः प्रतीकैर्विनियुज्यते । पुनः पुनः प्रयोगाच्च क्लृप्तीरित्यभिधीयते ॥ ' आदिमध्यावसानग्रहणेन एकोऽपि मन्त्रस्तत्र तत्र विनियुज्यमानोऽपि न भिद्यते । यावद्विनियोगं हि सकृत् आवर्त्यते, तत्कृतस्य अप्रयोजन-

गात्। कल्पतां कल्पतामिति च पुनः पुनः प्रयोगादेकवाक्यत्वेऽपि बहुवचनाविरोधः। उच्यते। नैतदेवम्। 'रूपादुत्तरकाले हि विनियोगप्रयोजने। तस्मात्प्रागेव तत्काले भेदाभेदपरीक्षणम्॥' विद्यु तावत् प्रयोजनकल्पनं विनियोगवाक्यं वा। न हि तदुत्तरकालं स्वरूपनिरूपणं युक्तम्। अज्ञातरूपस्य विनियोगाशक्तेरविनियुक्तस्य च प्रयोजनकल्पनानुपपत्तेः। तच्च निरपेक्षं तु रूपं पाठादेव अवधार्यते। तत्कालावधृतभेदाभेदानुवर्तिनी तु प्रयोजनविनियोगकल्पना। प्रमाणवत्त्वानेकापि कल्पनीयमित्युक्तम्। रूपोपलब्धिवेलायां चैषां विना न परस्परसाकाङ्क्षत्वं एकप्रयोजनत्वं चोपलभ्यते। ततश्च निष्प्रतिद्वन्द्वेऽवधारिते भेदे पश्चात् किंचिदेकत्वापादने कारणं संभवति। न च प्रागनुपलब्धं साकाङ्क्षत्वं कल्पयितुं शक्यम्। तेन च विना यद्यप्येकप्रयोजनत्वं भवेत्तथाऽप्येकाङ्गैकत्वादेकवाक्यत्वाभावः, किंतु यदा रूपभेदात् विनियोगभेदः तदैवाचादृष्टार्थत्वेऽपि प्रयोजनभेदः। तत्पक्षेऽपि चायुष्यस्य यावद्विनियोगं तेन तेन भवितव्यम्। इयांस्तु विशेषः। तत्र समस्ताम्नानात् समस्तेभ्यः। न चैषामदृष्टार्थत्वम्, आयुरादिदृष्टार्थसाधनत्वात्। तत्रत्येन चैषां यावता विना चोदितकरणसामर्थ्यं नास्ति तावदनाम्नातमपि कल्पनीयं छिन्नधीत्यादि। यद्वा, यथैव 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इति वचनात् अनारभ्याम्नातस्यापि विनियोगमात्रानुसन्धानेन स्तोत्राभिमुख्यविधानत्वं भवति एवमिध्मादीनां छेदनादिसंस्करणहेतुत्वम्। उभयमपि चैतत् प्रमाणवदिति सूत्रकारेण केश्चित्कथंचिदाश्रितम्। सर्वथाऽत्रैव अध्यवसातव्यम्। विकल्पवाक्यप्रयोगासंभवात् प्रत्यक्षप्रयोगानुपपत्तेश्च अध्याहारः। अथवा यथाम्नातविनियोगानुसारात् तादर्थ्येनैव स्मृत्वा सर्वकारायाने यतितव्यम्। तथानुष्ठानभिन्नप्रयोगोऽवतपरिग्रह इति ह्यप्रयोजनभेदादपि भिन्नो वाक्यभेदः। किंच, '**अन्योन्यनिरपेक्षाणां कार्यान्यत्वे नियोगतः। प्रत्येकं यागहेतुत्वात्तद्भावस्य कल्पते**॥' तथा 'आयुर्यज्ञेन कल्पताम्' इत्येवमादीनां निराकाङ्क्षत्वोपलब्धेः नैकवाक्यत्वापत्तिः। गतत्वाच्चार्थैक्ये। न च तद्धि, आयुःकल्पनादीनां भिन्नत्वात्। निर्वापवत् अभेद इति चेन्न, कल्पतीति मन्त्रबहुत्वचोदनाया प्रत्यक्षत्वात्। इह तावत् अर्थो नामकर्माङ्गत्वापवादविवक्षया मन्त्रा मन्त्रोच्चारणमात्रं प्रयोजनम्। तत्र च बहुत्वं कल्पतेः श्रूयते। तद्वदत्र अर्थभेदमन्तरेण न भवतीत्यभ्युपसर्जनभूतोऽर्थो न तावेन व्याश्रीयते। कल्पतिनिर्देशवचनं तु दृष्टार्थमिति मन्त्रबहुत्वापादनार्थत्वात्। 'यथा विभागे' इति। यद्वत् श्रुतनिर्वापैकत्वलक्षणात् कल्पतीनाम्। पुनः पुनरुच्चारितानामपि यथा विभागे साधनभेदे कल्पतिर्न भिद्यते तथा कल्पतिभेदोऽपि न भविष्यतीति मन्यते। 'नैतदेवम्' इत्युत्तरम्। इह सामान्यविवक्षानुपयोगात्। अथवा सिद्धान्तवाद्येव 'यथा विभागे नैतदेवम्' इति स्वयमेवैकवाक्यभूतमुत्तरं ददाति। ननु च विभागवाक्यानामपि भेदोऽस्त्येवेति नोपपन्नमीयम्। एवं तर्हि नैवेदं प्रभेदप्रतिपादकम्, किं तर्हि दृष्टान्तेन सहैकवाक्यत्वात् तदीयविकल्पापादनाक्षेपपरमिति। यथा विभागे तथाऽत्र विकल्पः कस्मान्न भवतीति। 'नैतदेवम्' इति समानार्थत्वे हि विकल्पो भवति, न चेह सामान्यविवक्षा येन विभागवदैकार्थ्यं भवेत्। कल्पतिविशिष्टायुराद्यभिधानपरत्वात्। विभागे हि साधनानामप्रयोजनत्वात् सामान्यभूतनिर्वापमात्रप्रकाशनपरत्वम्। इह पुनरायुरादीनामाशास्यत्वेन प्राधान्यात् तदुपलक्षणत्वेन कल्पत्युपादानम्, न त्वायुरादिविशिष्टा वा प्रकाश्यते, निष्प्रयोजनत्वात्। अथापि क्रियामात्रस्य तथाऽपि तद्भेदपरत्वात् नानार्थत्वम्। भेदपरत्वे च पूर्वोक्तमेव दूषणमनुच्यते। अथवा 'कल्पीर्वाचयति' इति नैव मन्त्रपरः कल्पतिशब्दः, कथं तर्हि? क्रियाबहुत्वाभिधान एव, शब्दानामर्थेनाश्रवात्। अतश्च बहुत्वसंख्यया कर्मभेदात् विशेषणकृतभेदाश्रयणाच्च मन्त्राणां तत्परत्वे चोदितार्थनिर्वृत्त्या दृष्टार्थत्वाद्भिन्ना भिद्यन्ते। अथ पुनरस्मिन्नर्थे वाचयतीत्युच्यते, शब्दपदार्थको ग्रहः प्रयुज्यते। नैष दोषः, उभयत्र प्रयोगात्। यथैव हि शब्दं श्रुत्वा ज्ञातो वाचयतीत्युच्यते तथैव च यः शब्देनार्थं बोधयति तमपि प्रयोजको वाचयतीति। तस्मात् कल्पतिनिर्वापाद्वैषम्यात् वस्तु प्रवृत्तमप्ययुक्तं वाचयतीत्यसमर्थो निराक्रियते,

तत्प्रकाशनेन च भिन्ना एव मन्त्रा दृष्टार्था भवन्तीति वाक्यभेदः ।

शा— 'अदृष्टार्थत्वमेतेषां अनुष्ठेयाप्रकाशनात् । नैवैकं यत्र साकाङ्क्षा. सर्वं इत्येकवाक्यता ॥' अदृष्टं हि कल्प्यमानं एकमेव युक्तं तावतैव उपपत्तेः । अतः सर्वं तावत् एकार्थाः । तथ परेण सह कस्मिंश्चिदपि सम्भूयकारित्वात् विमन्यमानाः साकाङ्क्षा भवन्ति इत्येकवाक्यता । निश्चिते च मन्त्रैकत्वे यद्यपि प्रतीकभेदेन अनेकत्र विनियोगः. 'इषे त्वेति छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि' इति, तथापि वाक्यविनियोग एकत्र आनर्थक्यं ने । ( इति प्राप्ते, ) उच्यते– 'यद्यप्येषामदृष्टोऽर्थस्तथापि न तदेकता । स्पष्टो हि निराकाङ्क्षा भिन्नत्वेनावधारिताः ॥ अन्योन्यानादरेणैव प्रार्थयन्ते प्रयोजनम् । यथापेक्षमतस्तेषां भिन्नादृष्टप्रकल्पनम् ॥ यथा विश्वजिदादीनां भेदेन फलकल्पना । यथा च समिधादीनामपूर्वं भिद्यते ॥ तद्वदत्र न चाभिप्रायदृष्टार्थत्वागमः । शाखाच्छेदप्रकाशेन दृष्टार्था हि विधेरमी ॥' 'इषे त्वेति छिनत्ति' इति शाखाच्छेदने करणत्वेन मन्त्रो विधीयते । क्रियानिर्वर्तकं च करणं भवति । न च मन्त्राणां क्रियानिर्वर्तकत्वम्, अन्यतः प्रज्ञानात् । तेन विनियोगात् एवा प्रकाशनार्थत्वम् । तत्र यावता विना नोदितस्य प्रकाशनं न सम्भवति तत् अध्याहृतं 'छिनद्मि' इत्यादि । तत्र एकेन छेदनं प्रकाशनं, अन्येन अनुमार्जनं इति अर्थभेदात् मन्त्रभेदः । तथा 'आयुर्यज्ञेन कल्पताम्' इत्यादीनामपि स्वरूपतो निराकाङ्क्षत्वात् 'क्लृप्तीर्वाचयति' इति च क्लृप्तिमद्ग्रन्थगणस्य चोदितत्वात् तत्परत्वे आयुरादिविशिष्टक्लृप्तिभेदप्रकाशनपरत्वात् अर्थभेदेन मन्त्रभेदः ।

सोम—पूर्ववत् इह यजुर्भेदस्याभावात् न अत्र तद्भेद इति प्रयत्नाद्यानात् सङ्गतिः बोध्या । सूत्रार्थस्तु सर्वेषु परस्परनिरपेक्षतया तुल्येषु यजुर्भेदः स्यादिति ।

वि— 'इषेत्वादिमन्त्र एको भिन्नो वैकः क्रियापदे । अध्याहर्तव्यमाकाङ्क्षादेकवाक्यत्वकल्पनात् ॥, छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे । अध्याहृते स्यादाकाङ्क्षान्मन्त्रभेदोऽर्थभेदतः ॥'

भाट्ट— यत्र तु नोक्तविधं विभज्यमानस्याकाङ्क्षत्वं यथा 'इषे त्वा ऊर्जे त्वा' इत्यनयोः, यथा वा 'आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पताम्' इत्यादौ तत्र सत्यप्येकत्वे 'प्राणो वा' इत्यादिर्यजुर्भेदः । किन्तु यत्र विनियोगानुसारेणार्थभेदः एव प्रमाणतः । तदा मन्त्रैकत्वे प्रमाणाभाव एव । अत्र हि 'इषे त्वेति शाखां छिनत्ति' 'ऊर्जे त्वेत्यनुमार्ष्टि' इति विनियोगभेदात् इषे त्वेति छिनद्मि इति क्रियापदाध्याहारेण भिन्नमेव मन्त्रानुसन्धानम् । एवं 'ऊर्जे त्वा उन्मार्ज्मि' इति । एवं 'क्लृप्तीर्वाचयति' इति बहुवचनात् क्लृप्तिभेदावगमेन अर्थभेदः । अतश्चात्र यजुर्भेद इति पूर्वोक्तप्रत्युदाहरणमात्रम् ।

मण्डन— 'भिन्नं यजुः स्याद्विनियोगभेदात् ।'

शंकर— 'यजुर्भेद इषेत्वादौ ।'

* वाक्यभेदापत्तिर्न, विशिष्टविध्यन्यथानुपपत्तिकल्पितैः विधिभिः अनेकार्थविधानेऽपि प्राधान्येन विशिष्टस्य प्रयोजनत्वात् तस्य चात्र एकत्वात् । सु पृ. ८६८. * वाक्यभेदापत्तिः पौरुषेये वाक्ये अदोषः इत्यभ्युक्तम् । ऋजु. पृ. ७०.

* वाक्यभेदापत्तिलक्षणः न्यायः अविवक्षासाधकः । सु पृ. १०१५.

* वाक्यभेददोषः. अविकल्प सतो भूतार्थस्य कल्पने यथा– 'वषट्कर्तुः प्रथमभक्षः' इति । अत्र प्राथम्यमात्रविधौ भक्षानुवादात् प्राथम्यस्य च विधानात् एकपदे चोभयासम्भवात् । बाल. पृ. ४.

* वाक्यभेदपरिहारार्थं दुर्बलत्वेऽपि उपपत्ता । सु पृ. ११३०.

* वाक्यवाक्यार्थयोः सम्बन्धः औत्पत्तिकः । ऋजु पृ. १०३.

* वाक्यविनियुक्तेषु प्रोक्षणादिसन्निपत्योपकारकेषु अपूर्वप्रयुक्तत्वम् । ९।१।२।२-३.

* वाक्यविनियोगः संप्रति प्रस्तूयते । वा. ३।३।१।१.

कल्पना यानखाला समाख्या बाध्यते । वा. ३।३।७।१८ पृ. ८३१. ● वाक्यसमाख्ययोर्विरोधे (शेषानेकत्वे) मध्यानुराध्गतसभ्याकमित्यादेः लिङ्गाद् ग्रहणादौ विनियोगे अजगते तदेकवाक्यतापन्नशेषपदाना समाख्यया मध्याह्नस्वभ्रमवतो वाक्यात् ग्रहणाग्रहत्वम् । शेषानेकत्वे तु प्रैषानुवचने समाख्यया होतृप्राप्ते. वाक्येन मैत्रावरुणविधानम् । कौ. ३।३।७।१४ पृ. २६१–६३.

● वाक्यसमासौ भिन्नार्थौ । वाक्येन (राजपुरुष.) पुलिङ्गैकत्वविशिष्टस्य पुरुषः प्रतीयते । समासे तु न ज्ञायते किं द्वयोः पुंसो. उत बहूनाम्, उत स्त्रियाः, उत नपुंसकस्येति । तस्मात् वाक्यसमासौ नैकार्थौ । टुप्. १०।८।१।४ पृ. २०६०.

● 'सामर्थ्यं धर्मणश्चानदेकं लिङ्ग निरूपितम् । अपरं वाक्यसामर्थ्यं पौर्वापर्यनिरीक्षणात् ॥' वा. ३।४।१।११ पृ. ९६५. ● वाक्यसामर्थ्यात् गान्यार्थमेव छेदनं न उपवेषार्थम् । टुप्. ४।२।१।८.

● वाक्यस्थं उपसर्जनं 'कठस्य दासः पुरुषः' इतिवत् विशेषणः सम्बध्यमान दृष्टम् । समासस्थं तु न सम्बध्यते । वा. ३।८।४।१३ पृ. १३८.

● वाक्यस्फोट. । वाक्यमेव वाचकम्, न सारपदम् । न पदसमुदायस्य वाक्यत्वम्, किन्तु अखण्डरूपम् । तस्यैव विशिष्टार्थे शक्तिः स एव वाक्यस्फोटः । इति वैयाकरणा । तन्न इति मीमांसकाः । मणि. पृ १७१. ● वाक्यस्फोट 'वाक्यार्थ शक्तिः स्फोटा या' इति विन्दौ (मीको. पृ. ३८६८) द्रष्टव्यः ।

● वाग् यन्तव्या । 'वैष्णवीमनूच्य वाग् यन्तव्या, सारस्वतीमनूच्य वाग् यन्तव्या, बार्हस्पत्यमनूच्य वाग् यन्तव्या' इति । भा. १२।८।२।१

ॠ 'वाचे हविष्कृत्' इति वाचो हविष्कृत्त्वं अर्थवादः ॥

'हविष्कृदेहि' इति मन्त्रे हविष्कृत्पदेना नपुंसकमुच्यते । हविर्वरणस्याप्यर्थवत्त्वात् मन्त्रस्तु परेण प्रयोक्तव्यः । सैषु न पराधिकारात् । वाग्देव्येव वा हविष्कर्त्री । 'वाग्वै हविष्कृद्वाचमेव तदाह्वयति' इति वाक्यशेषात् । न च एतत्तत्रे आग्नेयपवमानाघ्रातानामविशेषेण दैवी कर्मोपपत्तिरिति वाच्यम् । पशुपुरोडाशे 'हविष्कृता वाचं विसृज्य पर्णं निधारिति' इति क्रमेण औपवसथ्यहविःकर्तृत्वापत्तेः । आज्यनिर्वापस्य पूर्वं कृतत्वेन तदर्थमाहूताया वाग्देव्याः पुनराह्वानाभावेन वाग्विसर्गे हविष्कृत्येषकालिकत्वविध्यनुपपत्तेः । न च श्रान्तात्याधिकरणन्यायेन प्रैषावृत्तिः । एतत्पक्षे प्रैषस्यादृष्टार्थत्वेन प्रयाजानामिव प्रसङ्गोपपत्तेः । तस्मादेषा हविष्कृद्देवतेव । इति प्राप्ते, 'पत्न्येव हविष्कृदुपोत्तिष्ठति देवान्पत्नीन् पितॄन् वा भिक्षुन्या वदन्ति' इति वाक्यशेषात् ह्वयंतर्वा वाचो हविष्कृत्त्वमर्थवादमात्रम् । संकर्ष. १।१।११.

● वाचः एकार्थत्वाभिलात् युगपत्सम्बन्धः । भा. ३।३।७।१८ पृ. ८२३ । क्रमवर्तित्वाद् वाच. युगपदशक्तेः । वा. ● वाचो विसर्गो हविष्कृद्ग्रहण कालनक्षणार्थमित्युक्तम् (३।२।३) । भा. ११।३।७।१५. ● वाचो मते द्वे सामनी अनुक्ते । वाल. पृ. ७२.

● वाङ्नियमः ज्योतिष्टोमादौ । स सर्वाङ्गः, तेन जिह्वाचापल्ये निवारिते सति मनसः एकाग्र्याय सर्वकर्मसु योग्यत्वम् । वि. ३।१।१८, ● वाङ्नियमः दर्शपूर्णमासयोः हविष्कृदाह्वानप्राचीनापूर्वप्रयुक्तः, न परमापूर्वप्रयुक्तः । ९।१।७, ● वाङ्नियमः नाङ्गार्थः किन्तु कर्तृसंस्कारार्थः । ११।३।८. ● वाङ्नियमस्य प्रणीताप्राचीनस्य हविष्कृदाह्वाने त्यागः । वाङ्नियमस्य च मध्यकालीनाङ्गप्रधानापूर्वमेव प्रयोजकं न परमापूर्वम् । भा. ९।१।६, वि. ९।१।७.

ॠ वाङ्नियमन्यायः । साहस्री. ८६०.

● 'व्रीहीनवहन्ति' इत्यत्र, परमापूर्वस्य व्रीहिसाधनत्वमेव प्रदेयपुरोडाशसम्बन्धेन लभ्यते । अस्ति च आग्नेयादे सर्वस्यापि साधनता । अत एव न वाङ्नियमन्यायोऽपि । भाट्ट. ३।१।४, ● 'आग्नेय्या आग्नीध्रमुपतिष्ठते'— समन्वति च प्रकृतानामपि आग्नेयीनां वाङ्नियमन्यायेन स्तोत्रद्वारा ज्योतिष्टोमपूर्वसम्बन्धेऽपि कार्यान्तरद्वारा स. । आग्नेयीनां स्तोत्रादौ विनियोगेऽपि पाठक्रमेन ज्योतिष्टोमप्रकरणे पाठादेव तावत् अपूर्वसम्बन्धावगमः । ३।२।८. ● 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इत्यत्र

मान याचयन्ति ) शिष्यार्थोऽपि मन्त्रस्यैवाधिकारात् तस्य च शिष्यानर्हत्वेन तद्विषयकसामर्थ्याभावात् लिङ्गात् उच्चारणसमर्थस्मरणवाचनारम्भप्रयुक्त्यर्थः । सु पृ. ६२.

* वाचनिक ऊहः यथा 'मरुद्भ्यवहन्ति' इति । बाल. पृ. १२६, * वाचनिक विकल्पः अष्टविधः– १ जात्योः २ द्रव्ययोः ३ गुणयोः ४ क्रिययोः ५ जातितदभावयोः ६ द्रव्यतदभावयोः ७ गुणतदभावयोः ८ क्रियातदभावयोश्चेति । एते पुनः क्रत्वर्थाः पुरुषार्थाश्च । पुनश्च पुरुषार्थे, वाचनिको विकल्पः एकादशविधः –१ जातिद्रव्ययोः २ जातिगुणयोः ३ जातिक्रिययोः ४ द्रव्यगुणयोः ५ द्रव्यक्रिययोः ६ गुणक्रिययोः ७ जातिद्रव्यगुणानाम् ८ जातिद्रव्यक्रियाणाम् ९ जातिगुणक्रियाणाम् १० द्रव्यगुणक्रियाणाम् ११ जातिद्रव्यगुणक्रियाचतुष्टयविषय एकः इति । पृ.१५२–१५३, * वाचनिक व्यवस्थितविकल्पः, यथा– देशतः, कालतः, कर्तृतः, धर्मतः, फलतः, निमित्ततः, अवधिविशेषेति । पृ. १५९–१६१, * वाचनिकः समुच्चयः क्रत्वर्थः पुरुषार्थश्च । क्रत्वर्थः पञ्चदशभेदश्च । पृ. १७०–१७१, * वाचनिकाः विकल्पभेदाः अष्टविंशत् । पृ. १५८, * वाचनिकाः समुच्चयभेदाः पञ्चविंशत् क्रत्वर्थाः पञ्चदश, पुरुषार्थाश्च पञ्चदशैवेव निश्चत् । अथ क्रत्वर्थाः उच्यन्ते (१) जात्योः– 'गौश्चाश्वश्च' इति ज्योतिष्टोमे दक्षिणासु । (२) द्रव्ययोः– 'आग्नेय मग्निष्टोम आलभेत, ऐन्द्राग्नमुक्थ्ये द्वितीयम्, ऐन्द्रं वृष्णिं षोडशिनि तृतीयम्, सारस्वतीं मेषीमतिरात्रे चतुर्थीम्' । अत्र तत्तद्देवताविशिष्टपशुद्रव्याणां समुच्चयो विधीयते । (३) गुणयोः– ब्रह्मपुराणे 'मृष्टस्निग्धानि यानि स्युरीषत् कट्वम्लकानि च । स्वादूनि देवभोज्यानि तानि श्राद्धे नियोजयेत् ॥' (४) क्रिययोः– 'गगन तमे कुर्यात्' 'गोसव तमे कुर्यात्' इति । (५) जातिद्रव्ययोः– देवलः 'मनोज्ञं गुडसंस्कार नैवयज्ञनमश्नरत् । चोष्यपेयसमृद्ध च यथाशक्त्युपकल्पयेत् ॥' अत्र अन्नशब्दोक्ता जातिः, चोष्यादिशब्दोक्तं च द्रव्यम् । (६) जातिगुणयोः– 'अथ पिण्डावशिष्टान्नं भोजयेत् प्रयतो द्विजान् । भोजनैः सनिष्टैः स्नेहैर्भक्ष्यपूपविशेषैः ॥' इति देवलः । अत्र स्नेहैरिति गुणः तिलजातिश्च सहादेशोपस्थापितशब्देन चशब्दसमानार्थेन प्राप्ते श्राद्धे समुच्चित्य विधीयते । (७) जातिक्रिययोः– शङ्खलिखितौ 'ततस्तिलैर्मांसैः शाकैः पूपैः कृशरपायसापूपैर्विमलैः पानैर्मधुना घृतेन दध्ना पयसा च प्रभूतमिष्टमन्नं दद्यात्' अत्र पयसा पूर्वं पायसं इति मृष्टान्नवद्धितोपात्ता श्रपणक्रिया पयआदिजातिश्च प्राप्ते श्राद्धे चशब्देन समुच्चित्य विधीयते । (८) द्रव्यगुणयोः— ब्रह्मपुराणे 'पूरिका च रसाला च गोक्षीरं च नियोजयेत् । यानि चाभ्यवहार्याणि स्वादुस्निग्धानि मो द्विजाः ॥ ईषदुष्णान्यन्नेव देयानि श्राद्धकर्मणि ॥' इति । अत्र रसालाशब्देन द्रव्यं स्निग्धोष्णादिगुणश्च समुच्चित्य चशब्देन विधीयते । (९) द्रव्यक्रिययोः– पूर्वोक्ते शङ्खलिखितवाक्ये पायसशब्दगततद्धितोक्तश्रपणक्रिया भक्ष्यशब्दोक्तं द्रव्यं च समुच्चित्य निहितम् । (१०) गुणक्रिययोः– सौरपुराणे 'विविध पायसं दद्यात् भक्ष्याणि विविधानि च । लेह्यं चोष्यं यथाकाममुष्णमेव फलं विना ॥' इति । अत्र पायसशब्दगततद्धितोक्ता श्रपणक्रिया उष्णगुणश्च । एवं क्रत्वर्थवाच्यादिविषया वाचनिकसमुच्चयभेदा दश उक्ताः । एवमेव दश पुरुषार्थवाक्यादिविषया वाचनिकसमुच्चयभेदाः यदा स्युः यदि उदाहरणानि समभवेयुः । न तु तानि समभवन्ति । शेषोदाहरणानि तु अन्वेष्याणि । एवं वाचनिकसमुच्चयभेदाः २० उक्ताः । पृ.१७०–१७३. * वाचनिकस्य सर्वत्र कार्यशेषभावः । आ. १०।६।१९।२४, * वाचनिके नियमाणे न दोषः । १२।४।७।२१.

* वाचनिकप्रयाजादिविनियोगस्थले न स्याद्यहिकार्याणां (चयने) । माह. ४।१।७.

* वाचनिकभक्षविषयकं अधिकरण पञ्चमं षष्ठ नवम दशम च (३।५।५–६, ९–१०) । के.

* वाचनिकविकल्पे अष्टौ दोषा न सन्ति । बाल. पृ. १६१

* वाचनिकव्यवस्थाविधि सप्तविध – देशतः, कालतः, कर्तृतः, सम्बन्धितः, कर्मतः, फलतः, निमित्ततश्चेति । बाल. पृ. १८.

बाधः, चतुःसङ्ख्यायास्तु न बाध । तथा च चतुर्भिः कुडवादिभिः शरावं पूरयित्वा सप्तदशशरावात्मको निर्वापः कार्यः । वि. १०।२।२८ । वस्तुतस्तु उपायपूरणपर्यन्त मुष्टिचतुष्टयावृत्तिः कर्तव्या, किंवा यावद्भिर्मुष्टिभिः शरावपूर्णं तावन्तो मुष्टयो ग्राह्याः । भाट्ट (मुष्टि. शरावेण गण्यते, चतुष्ट्वं च सप्तदशत्वेन बाध्यते, शरावेणैव सप्तदशकृत्वो निर्वापः निर्वापमन्त्रावृत्तिः सप्तदशवार इति केवलानन्दो मन्यते, अन्यथा शरावो व्यर्थ एव स्यात् ) । ● वाजपेये सप्तदशशरावे चरौ गुप्तिलोपेन चतुर्मन्त्रानुषङ्गः कर्तव्य. । १०।२।२८।६५-६८. 'मरक्षमुष्टिन्याय.' इत्यत्र अधिकरणं द्रष्टव्यम् । ● वाजपेये सप्तदशसङ्ख्याकाना प्राजापत्यपशूना या वपाः ताभि मेदेनानुष्ठान इति पक्षः । पाक प्रदान च सहैव कर्तव्यं इति तया( सा )-होमोऽपि सहैव, तथा च क्रमं इति सिद्धान्तः । वि. ११।२।५.

■ वाजपेये सर्वसोमोत्तरं प्राजापत्याङ्गप्रचारः ॥

उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादयाच्यो हि प्रकृतिकालः ॥ ११।३।१५। ४८ ॥

भाष्यम्— वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते 'उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति' इति । तत्र विचार्यते किमार्भवकाले प्रचरितव्यम्, उत अल्पस्य सोमानामुपरिष्टात्, उत विनाशस्थाने, अथवा सर्वसोमानामुपरिष्टात् इति । किं प्राप्तम् ? आर्भवकाले इति । कुत. ? प्रकृतौ आर्भवकाले प्रचारो दृष्ट. । प्रकृतिवत् इहापि तत्रैव कर्तव्यः । एवं च अङ्गविपर्यासो न कृतो भवति । यदि सर्वसोमानामुपरिष्टात् प्रचार क्रियेत, ततः 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति ' इति ' प्रहृत्य परिधीन् हारियोजनम् ' इति एतदुभयमपि विपर्यस्येत, नाग्निमारुतादूर्ध्वं अनुयाजैश्चरेत्, हुतश्च हारियोजन परिधयः प्रह्रियेरन् । सोऽयं अङ्गानां विपर्यासो विना वचनेन क्रियेत । अथ तु आर्भवकाले प्रचारः, ततो नैव दोषो भवति । एवं प्राप्ते, उच्यते । 'उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति' इत्युक्ते सर्वसोमानामुपरिष्टात् प्रचर्येत । कुत. ? अविशेषात् । सोमानां इत्युक्ते सर्वसोमानां ( इति ) अविशेषवचनात् प्रतीयते । यत्तु आर्भवकाल. प्रकृतितः प्राप्यते इति, अयाच्यो हि प्रकृतिकालः, चोदकेनैव प्राप्तः । तदर्थो हि विधिः क्रियमाणः अनर्थकः स्यात् । तस्मात् सर्वसोमानामुपरिष्टात् प्रचार ।

टुप्— यदि आर्भवकाले प्रचार. क्रियेत अप्रवृत्तिविशेषकर वाक्यं स्यात् । ननु ( चोदकप्राप्तप्राप्त्यर्थेन 'वीर्यं वै प्रात सवनं, यत् प्रात.सवने पशून् आलभन्ते वीर्य एवैतानालभते ' इति, 'तान पर्यग्निकृतानुत्सृजन्ति यज्ञायज्ञियस्यालभन्ते ' इति च ) वचनेन प्रात.सवने माध्यंदिनसवने वा सावर्ण्येन कर्तव्याः प्राप्नुवन्ति । तेन सर्वोत्तरसवनीयार्भवकाले अङ्गप्रचारनियमार्थं अर्थवद् वचनम् । ( तस्मिश्च सति यथाक्रमाना पूर्वयोः सवनयोः विकल्पो न भविष्यति । अङ्गप्रचारस्तु आर्भवकाले ) उच्यते । प्रात.सवने माध्यंदिने वा सवने ये पशवः ( मत्वर्थे ) वाक्ये ते संस्कारवाक्ये, आलभ्यमानत्वात् । अङ्गप्रचारस्तु आर्भवकाले एव, ( चोदकप्राप्ते कर्त व्य. ) नान्यस्मिन् ( काले ) । तस्मात् ( वचनार्थवत्त्वात्, ननु अल्पानां सोमानामुपरि आयापस्थाने किमिति न भवति इत्यत आह- ) अविशेषात् सर्वसोमानामूर्ध्वम ।

अङ्गविपर्यासो विना वचनादिति चेत् ॥ ४९ ॥

भाष्यम्— अथ यदुक्तं एवं सति अङ्गविपर्यासो विना वचनेन कृतो भविष्यतीति । तस्य कः परिहार इत्याशङ्क्य सूत्रम् ।

टुप्— ननु 'आग्निमारुतादूर्ध्वम्, प्रहृत्य परिधीन्' इति च क्रमविपर्यासः प्राप्नोतीत्युक्तम् ।

उत्कर्षे संयोगात् कालमात्रमितरत्र ॥ ५० ॥

भाष्यम्— नैष दोषो यदुक्तमङ्गविपर्यास इति । कथं कृत्वा ? पशुप्रचारे तावदुत्कृष्यमाणे अनुयाजाना परिधिप्रहरणस्य चोत्कर्षो न्याय्य, संयोगात् । तानि हि पशुप्रचारेण सह संयुक्तानि । न च आग्निमारुतस्य अनुयाजैः सह, हारियोजनस्य वा परिधिप्रहरणेन, क्रमो निर्दिष्टः । न हि परिधिप्रहरणं हारियोजनस्याङ्गम्, हारियोजनो वा परिधिप्रहरणस्य । उभौ वा कस्यचिदेकस्य प्रधानस्य । एवं आग्निमारुतमनुयाजाश्च यदि पर-

पार्थसारथिस्तु मनोतामन्त्रस्य पूर्वपक्षे नत्वतेत्याह। तत्तु विभिन्नदेवतास्थले एकस्य पशोर्देवताद्वयोद्देशकृतैकावदानत्रयपूर्वकं होमं कृत्वा अपरस्यापि कार्यमिति स्वयमेव पञ्चमे ( ५।३।५ ) व्यवस्थापितत्वात् कालभेदेन अवदानकालीनमनोतामन्त्रस्यावृत्ते. पूर्वपक्षे अपि समानत्वादुपेक्षितम्।

मण्डन— ' प्राजापत्या. सर्वसोमोपरिष्टात्। '

शंकर— ' कृत्स्नसोमोर्ध्वाः पशवः। '

● वाजपेये सोमग्रहाः सुराग्रहाश्च। वि. १०।४।३.

● वाजपेये हिरण्यमालित्वं सर्वेषामृत्विजाम्, नाध्वर्योरेव। ३।८।८।१२. मीको. पृ ३३८९ ' लोहितोष्णीषाधिकरणम् ' इत्यत्र द्रष्टव्यम्। ● ' एतस्य त्वाविर एव कार्यः ' यूप. इति वाजपेये। भा. १२।३।४।१४.

● वाजपेयाङ्गं बृहस्पतिसव.। भा. ४।३।१२।२९, १०।२।१२।२१.

● वाजपेयाङ्गत्वेऽपि बृहस्पतिसवस्य स्वकाल- ( वसन्त- ) कर्तव्यता। भा. ४।३।१७।८०.

♊ वाजपेयाधिकरणम्। वाजपेयशब्द. कर्मनामधेयम्।

नामधेये गुणश्रुते. स्याद्विधानमिति चेत्। १।४।५।६॥

भाष्यम्— ' वाजपेयेन स्वाराज्यकामो यजेत ' इति श्रूयते। तत्र किं गुणविधि कर्मनामधेयमिति संदेह। एवं चेत् संदेह, उच्यते गुणविधि। न संदेहः, श्रूयते हि गुणः। सोऽश्रूयमाणो न शक्यो नास्तीति वदितुम्। तस्मात् गुणविधि।

वा— तत्रसमर्थेन आख्यातपदस्य धात्वर्थं फल प्रति करणं गुणं च प्रति साध्यो भवन्न विरोत्स्यते। तेनो द्विदा याग यागेन च पशून् भावयेदिति युगपद्विधिव्यापाराद्विनैव मत्वर्थलक्षणया सर्वसंसिद्धि। तथा आख्यादिपदस्य तन्त्रेण सोऽस्मद्पक्षादियोग.। तस्मात् सर्वत्र स्वतन्त्रिकल्पिते नामधेये गुणश्रुतेः प्रसिद्ध्यादिभिर्गुणप्रत्ययानपगमाद्विधानमेव भवतु अतः नामधेयत्वेनेति यथासंभवं सर्वाधिकरणाशेषेण इदमारभ्यते। तेनेदमपि वाक्यं शुद्धं भविष्यतीति वाजपेयोपन्यासः। सर्वाण्येव त्विहोदाहर्तव्यानि। आह च—' करणेषूपदिष्टेषु याऽर्थोत्साध्यत्वकल्पना। तथा गुणविधानेन नास्ति मत्वर्थलक्षणा॥ '

तुल्यत्वात् क्रिययोर्न। ७॥

भाष्यम्— नैतदेवम्, तुल्ये हीमे क्रिये स्याताम्। या च वाजपेयक्रिया या च दर्शपूर्णमासक्रिया, उभयत्र दार्शपौर्णमासिको विध्यन्त. स्यात्। तथा च दीक्षणीयासूपसत्सु न दर्शनं नावकल्प्येत ' सप्तदशदीक्षो वाजपेय. ' इति, ' सप्तदशोपसत्को वाजपेय. ' इति।

अथवा तुल्यत्वात् क्रिययोर्नेति। यदि न गुणविधिस्तत्तुल्यैषा वाजपेयक्रिया ज्योतिष्टोमक्रियया। तत्र दीक्षाणां उपसदां च दर्शनमुपपन्नम्। तस्मात् कर्मनामधेयमिति। सिद्ध एतावतापि. पुनरुत्तरसूत्रेण।

वा— वाजपेये तावद् विशेषोऽभिधीयते— ' वाजपेयं यवागूः स्यादौषधद्रव्यता तत. । द्रव्यसामान्य सामान्याद्वैष्टिकत्वं प्रसज्यते॥ '

ऐकशब्द्ये परार्थवत्। ८॥

भाष्यम्— यदि गुणविधि. स्यात्, स्वार्थवत् परार्थस्याभिधानं विप्रतिषिध्यते यजेतेत्यस्य शब्दस्य। यदि ' स्वाराज्यकामो यजेत ' इति स्वाराज्यकामस्य याग विधातुं स्वार्थमुच्यते न तर्हि वाजपेयेन गुणेन यज्ञं परार्थमनूद्येत यागेन वाजपेयगुणकेनेति। भिद्येत हि तथा वाक्यम्। ननु द्वे एवैते वाक्ये प्रत्यक्षमुपलभामहे ' स्वाराज्यकामो यजेत ' इत्येतदेकं प्रत्यक्षं पदद्वयम्। ' यजेत वाजपेयेन ' इत्येतदपि प्रत्यक्षमेव। नैतदेवम्। एवं सति चत्वारि पदान्युपलभेमहि त्रीणि त्वेतान्युपलभ्यन्ते। उच्यते। यजेतेत्येतदुभाभ्यां सम्बध्यते। सकृदुच्चारितं सन्न उभाभ्यामेष्यतीति। रूपाभेदात्। ईदृशमेवास्य रूपं स्वाराज्यकामेन संबध्यमानस्येदृशमेव वाजपेयेन। अतस्ताभ्यामुभाभ्या संभन्त्स्यते इति। नैतदस्तीदृशेनैव रूपेणेति। यत्राज्ञातमतो विधि, यदि ज्ञातस्ततोऽनुवाद.। न च ज्ञातोऽज्ञातश्च युगपद्भवतीति। आह— यदिदमुक्तं गुणविधिपक्षेऽनुवादो यजेतेति। यज्ञमनुवादः तेनैतस्मिन् गुणो विधीयते। वाजपेयशब्देनेति मा चोच.। न ह्याख्यातमन्तरेण

गुणत्वेन फले निराकरणात् । मु. पृ. ८२४.

* यदि च ('वाक्यगतपदेषु') एवं फलसंबन्धि द्रव्याणि च तदङ्गभूतानि इति कल्प्यते तर्हि वाजपेयाधिकरणन्यायेन एकस्य पदं प्रति उपादान–विधान–गुणभावात्, इतरस्य प्रति उद्देश–अनुवाद–प्राधान्यात् वैरूप्यनिमित्तवाक्यभेदप्रसङ्गः । (तस्मान्नैव युक्तम्)। वा. ४।१।१।२ पृ. ३७३.

% वाजपेयादिविकृतौ वैकल्पिकानां प्राकृतानां खादिरत्वादीनां मध्ये अन्यतमपुनःश्रुतौ नियमविधिन्यम् ॥

विरोधिनामेकश्रुतौ नियमः स्यात् ग्रहणस्यार्थवत्त्वाच्छरवच्च श्रुतितो विशिष्टत्वात् । १०।७।१६। ५१ ॥

भाष्यम्— अस्ति वाजपेयः, 'शरदि वाजपेयेन स्वाराज्यकामो यजेत' इति । अत्र श्रूयते 'खादिरो यूपो भवति' इति । तत्र संशयः किं खादिरो वा, पालाशो वा, रौहितको वा, उत खादिर एवेति । तथाऽन्यत्र श्रूयते 'बृहत्पृष्ठं भवति' इति । तत्र संशयः किं बृहद्वा पृष्ठम्, रथन्तरं वा, उत बृहदेवेति । तथाऽन्यत्र श्रूयते 'यवमयो मध्यमः' इति । तत्र संशयः किं यवमयो वा, व्रीहिमयो वा, उत यवमय एवेति । सर्वेषु किं प्राप्तम् ? विरोधिनामन्यतमे श्रूयमाणे नियमः स्यात् । खादिर एव यूपः, बृहदेव पृष्ठम्, यवमय एव मध्यम इति । कुतः ? ग्रहणस्यार्थवत्त्वात् । एवं बृहत्खादिरयवानां ग्रहणमर्थवद्भविष्यति । इतरथा प्राप्तानुवादमात्रमनर्थकं स्यात् । श्रुत्या विशिष्टाः खादिरादयश्चोदकप्राप्तान् पलाशादीन् बाधेरन् । शरवत् । यथा 'शरमयं बर्हिर्भवति' इति शरेषु श्रुतेषु कुशा निवर्तन्ते, एवमिहापीति ।

उभयप्रदेशान्नेति चेत् । ५२ ॥

भाष्यम्— इति चेत्पश्यसि, उभयं हि प्रदिशति चोदकः, खादिरं पालाशं च, बृहद् रथन्तरं च, व्रीहीन् यवांश्च । तेनेदानीं चोदकेन तुल्ये प्रदेशे सति पलाशादयो निवर्तिताः । खादिरग्रहणमनर्थकं परिसंख्यातुम् । त्रिदोषत्वात् परिसंख्याया इत्युक्तम् । तस्मान्न नियमः, विकल्प एवेति ।

शरेष्वपि । ५३ ॥

भाष्यम्— यदुभयप्रदेशादुभयं भवतीत्यध्यवसीयते, शरेष्वपि श्रुतेषु कुशा नैव निवर्तेरन्निति, स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति स्म ।

विरोध्यग्रहणात्तथा शरेष्विति चेत् । ५४ ॥

भाष्यम्— इति चेत्पश्यसि, एवं न्याय उच्यमानः शरेष्वपि दोष प्रसज्यतानि । न शरेषु किंचन दोषयति । यत्तेन कुशा निवर्तन्त इति, तथा स्यात् । कुतः ? विरोध्यग्रहणात् । न हि विरोधिषु शरेष्वङ्गीक्रियमाणेषु कुशाः शक्या अङ्गत्वेन उपादातुम् । तस्मात् कुशा निवर्तन्ते इति ।

तथेतरस्मिन् । ५५ ॥

भाष्यम्— तथा इतरस्मिन्नपि खदिरादौ विरोधिन्यङ्गीक्रियमाणे न शक्याः पलाशादयोऽङ्गत्वेन उपादातुम् । तस्मात् निवर्तिष्यन्ते इति ।

अशत्यानर्थक्यमिति चेत् । ५६ ॥

भाष्यम्— इति चेत् पश्यसि, विरोध्यग्रहणात् पलाशादीनां निवृत्तिर्भविष्यतीति । चोदकश्रुतेः आनर्थक्यं स्यात् । प्रापयति हि चोदकः पलाशादीनि । स [illegible] तुल्यः खदिरादिषु पलाशादिषु च । ननूक्तम्— अग्रहणादिति चेत्, न तुल्यत्वादिति । न च शक्यं वक्तुम्, खदिरादिभिः प्रयोगवचन एकवाक्यतामेतीति । अन्यानिप्रयोगवचनेन हि [illegible] श्रूयमाणः परम्परया पशुयागं यास्यतीति । अथेदानीं वाग्यप्रयोगवचनस्यादिविधानात् यागान् यास्यति । तेषु पलाशादयो विरोधाच्चोदकप्राप्ता न खदिरादिभिर्निवर्तिताः । तस्माद्विकल्प इति ।

ग्रहणस्यार्थवत्त्वादुभयोरप्रतिपत्तिः स्यात् । ५७ ॥

भाष्यम्— अन्यातिप्रयोगवचनो हि मन्त्रश्रुतेन खदिरेणैकवाक्यतामेति । तस्मिन् निराकाङ्क्षे न पलाश प्रवर्तिष्यते । तस्मात् खदिरविशिष्टः पशुयागो वाग्प्रयोगवचनेन गृहीतो न पलाशविशिष्टः । तस्मात् खदिरस्यैव प्रवृत्तिर्नियमतो । एवं रथन्तरे, यवमये च । तस्मात् खदिरादीनां नियमः । नैषां पलाशादिभिर्विकल्प इति ।

शा— यत्र चोदकेन अनेकेषां प्राप्तानां एकं प्रत्यक्षं श्रूयते, यथा 'खादिरो यूपो बृहत्पृष्ठं यवमयः पुरोडाशः' इत्यादिषु तत्र किं श्रुतस्य खादिरादेः अतिदिष्टस्य पलाशादेः प्रकृतिवद्विकल्पः अथवा श्रुतस्यैव नियम इति संशये, विकल्प प्रकृतिवत्, प्रत्यक्षवचनं तु न खादिरादेर्विधायकं प्राप्तत्वात्, पलाशादिनिवृत्त्यर्थत्वे त्रिदोषा परिसंख्या स्यात्, तस्मादनुवादमात्रमिति यथाचोदकं विकल्प । नैवम् । यथैव प्रकृतावपि नियतानुष्ठानत्वे प्राप्ते व्रीहियवादिभक्षणं नियमार्थम् । एवं चोदकेनापि अनियमेन खादिरादिप्राप्त्यभावात् प्रत्यक्षवचनेन नियमार्थं, तन्नियमात् च अर्थाभावात् पलाशादेर्निवृत्तिः ।

सोम— यथा अभ्युदितो आतरणात् न त्रिधा तथा खादिरादिकमपीत्युदितेन सगतिः । सूत्रार्थस्तु–विविधानां खादिरपलाशादीनां मध्ये एकस्य श्रवणं प्रकृतनियमार्थं स्यात् तथा सति तद्ग्रहणमर्थवत्त्वेन श्रुतिर्नो विशिष्टत्वात् प्रत्यक्षश्रुतिचोदितत्वात् चारकानुमानिकनिवृत्तिः स्यादिति ।

वि— 'बृहत्पृष्ठ खादिरस्य विकल्पा नियमा उत।, विकल्प्याश्चोदकप्राप्ते, नियमा स्युः पुनर्विधे ॥'

भाट्ट— प्रकृतौ ऐकल्पिकानामनेकेषामतिदेशेनानियमेन प्राप्तौ, विकृतौ चैकस्य पुनः श्रवणं यथा 'खादिरो यूपो भवति, बृहत्पृष्ठं भवति, यवमयः पुरोडाशः' इत्यादिषु । तत्र यूपाद्युद्देशेन खादिरत्वादिमात्रविधानात् पूर्वप्राप्तत्वे सत्यादिनियमाप्त्यापत्तेरनुवादमात्रत्वे चानर्थक्यात् पलाशाद्यादिरूपविकल्पो नियमविधिरेव अयं खादिरत्वादौ । प्रकृतावधृतस्याद्यनादरणाद्वृत्तिफलकं सोमादिनियमवदिति ।

अतिदेशस्य च पलाशादिविषयस्याकल्पनादेव न तदापि प्रामाणिकीति सिद्धमतः शिष्यहितार्थमुक्तम् ।

मण्डन— 'स्यात् वाजपेये खादिरो हि यूप ।'

शंकर— 'नैकल्पिकैकनियम ।'

■ वाजपेयोपदिष्टे प्राजापत्ये पशुभिराविदैहिकानां क्रतुपशूनां समुच्चय ॥

प्राजापत्येषु चाऽऽम्नानात् । १०।४।३।६ ॥

भाष्यम्— अस्ति वाजपेय 'वाजपेयेन स्वाराज्यकामो यजेत' इति । तत्र प्राजापत्याः पशवः, 'सप्तदश प्राजापत्यान् पशूनालभते' इति । सन्ति तु प्रकृतौ क्रतुपशवः । त इह चोदकेन प्राप्ताः । तत्र संशयः किं ते प्राजापत्यैः क्रतुपशवो बाध्यन्ते, उत समुच्चीयन्ते इति । किं प्राप्तम् ? प्रत्यक्षा प्राजापत्याश्चोदकप्राप्तान् क्रतुपशून् बाधेरन्निति । एवं प्राप्ते, ब्रूमः । प्राजापत्येषु च समुच्चयः स्यात् । कस्मात्? अन्यार्थत्वात् । आम्नायन्ते हि क्रतुपशवः 'ब्रह्मवादिनो वदन्ति, नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्र इति । अथ कस्माद्वाजपेयेन सर्वे यज्ञक्रतवोऽवरुध्यन्ते, पशुभिरिति ब्रूयात् । आग्नेयं पशुमालभतेऽग्निष्टोम तेनावरुन्धे, ऐन्द्राग्नेनोक्थ्यम्, ऐन्द्रेण षोडशिनम्, सारस्वत्याऽतिरात्रम्, मारुत्या बृहत्स्तोत्रम् । एतावन्तो वै यज्ञक्रतवस्तान् पशुभिरेवावरुन्धे' इति समुच्चयं दर्शयति । ननु दर्शनमिदमुपपत्स्यते, योऽन्य न्याय इति । उच्यते । प्रकृतिलिङ्गासंयोगः । ननु पशुत्वं प्रकृतिलिङ्गम् । नेत्याह । नात्र पशुमात्रं देवता विधीयते, अन्यार्थत्वात् । सत्यादेरनभिधानात् कर्मान्तरं चैव मुख्यम्, पृथक्त्वनिवेशात्तदन्यथा कर्मभेद इत्यादिति । अतो क्रतुपशूनामपि समुच्चयो भवितुमर्हतीति ।

शा— वाजपेये श्रूयते 'सप्तदश प्राजापत्यान् पशूनालभते' इति । सन्ति तु चोदकप्राप्ता आग्नेयाद्याः क्रतुपशवः । ते किं प्राजापत्यैर्निवर्त्यन्ते उत समुच्चीयन्ते इति । पशुत्वेन प्रकृतिलिङ्गेन संयोगादिति मन्यमानस्योत्तरम्– न पशुत्वं प्रजापत्यार्थमग्नीषोमीयपशुत्वमनेकसाधारणम् । न च प्राकृतपशुद्वारेण गुणविधिः सम्भवति, देवतायास्तस्य सत्त्वात्तस्य च विधौ वाक्यभेदात् । तस्मात् कर्मान्तरत्वात्, तानि च भिन्नार्थत्वात् प्राकृतैः समुच्चीयन्ते ।

सोम— पूर्वत्र प्रयोगवचनविषयत्वात् तस्य च अविरोधात्समुच्चयेऽपि इह प्राजापत्यानां विधानात् प्राकृतानां बाध इत्युत्थिते सगतिः । सूत्रार्थस्तु– 'आग्नेयं पशुमालभते अग्निष्टोममेव तेनावरुन्धे ऐन्द्राग्नेनोक्थ्यम् ऐन्द्रेण षोडशिनं स्तोत्रम्' इति वाजपेये क्रतुपशूनामाम्नानात्प्राजापत्यैः समुच्चयः, न बाध इति ।

वि— 'प्राजापत्यैः पशुना किं नाथो यद्वा समुच्चयः ।, अभिप्रायात्पशुस्ति स्यादिङ्ग तत्रास्ति बाधनम् ॥ पशून् उद्दिश्य हस्त्याशा देवस्त्र च विधौ भिदा । कर्मा यत्रे ग्रहः बाधाद्रोधनाच्च समुच्चयः ॥'

भाट्ट— वाजपेये 'सप्तदश प्राजापत्यान् पशून्' इति श्रुता यागाः पूर्वेण देवेन प्राकृतानां क्रतुपशूनां तुल्याकालीनपशुयागत्वसामान्यात् निवर्तकाः । सत्यपि साहस्ये अदृष्टाय वैनैककार्यतानयमे साहस्यस्य कार्यैकत्वनीभरवन्तीनप्रतीतिकत्वाच्च । न चात्र अतिदेशप्राप्त पशुयागाश्रयेण पशूद्देशेन देवतामात्रविधानाशङ्का । सकृत्या अपि विधाने वाक्यमेदापत्तेः कर्मान्तरावश्यकत्वात् । अतोऽत्र समुच्चय एव । अत एव वाजपेये 'यदाग्नेय पशुमालभते तेनाग्निमेवमवरुन्धे' इत्यादिक्रतुपशुज्ञापक लिङ्गमप्युपपद्यते ।

मण्डन— 'प्राजापत्या न बाध्यते ।'

शङ्कर— 'प्राजापत्यैः क्रतुपशु ।' (न बाध्य इत्यर्थः) ।

● वाजपेयगत-प्राजापत्यपशुवत्क्रतुपशूनां वपाश्रपणार्थं कुम्भीशूलवपाश्रपणीनां तन्त्रम् । ११।४।८।३३ मीको पृ. ११३५ 'तत्र कुम्भीशूलवपाश्रपणीना०' इत्यत्र अधिकरण द्रष्टव्यम् ।

● यत्र षोडशिस्तोत्रोत्तरं वाजपेयस्तोत्रं क्रियते सा षोडशिसंस्थैव वाजपेयपदवाच्या । अत्र सप्तदश स्तोत्राणि । भाट्ट ३।६।१६

● वाजपेययूपन्याय (३।३।१।१८) । 'वाजपेयस्य यूप' इति वाजपेयाङ्गपशुयागगतयूपवत् । सोम ८।१।३ ● मखमादिक तु दीक्षणीयाद्यङ्गानि वाजपेययूपन्यायेन एकस्यनयस्य ग्रामसमनुयते इति नास्ति सोमेऽतिदेश । शा ८।१।३

● वाजपेयशब्द कर्मनामधेय न गुणविधि । १।४।६।९–८. मीको पृ ३१८८ 'वाजपेयाधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम् । ● वाजपेयशब्दत्वात् सोमयागविशेषवचन । भा ३।१।३।१८.

● वाजसनेयिभि शङ्खलिखितोक्तमेव धर्मसूत्र परिगृहीतम् । या १।३।७।२५ पृ २४४

● वाजसनेयिशाखाया माध्यन्दिन (अत्र) चरकशाखासु च दृष्टु । वा १।३।८।२७ पृ २८६

● वाजिना आवाहन वैश्वदेवे पर्वणि न कर्तव्यम् । सकर्ष । ४।४।८

卐 वाजिमन्दुरान्याय । 'वाजिशाला तु मन्दुरा' इति कोशात् । तथा पूर्व–(२०६)अत् । साहस्री २१३

卐 वाजिन उपसेचनार्थं यागार्थात् पृथङ् नोत्पाद्यम् ॥

'चातुर्मास्येषु वाजिभ्यो वाजिनम्' इत्यत्र तादर्थ्यचतुर्थ्या यागोत्पत्त्यैव सर्वस्य वाजिनस्य यागे विनियोगेनात्र पुनर्विनियोगस्य 'शेषात्स्विष्टकृत' इत्यादाविव शेषपदाभावे स्वेच्छया कर्तुमशक्यत्वात् 'वाजिनेनोपसिञ्चति' इति विहितमुपसेचन च प्रयोजक सद्यः वाजिनमाक्षिपति । इति प्राप्ते, यागोत्पत्तौ विनियोगस्थलेऽपि परार्थाऽऽमिक्षाऽनुनिष्पन्नस्य वाजिनस्य विनियोगाकाङ्क्षया यागोपसेचनयो सम्भवत्प्रवृत्तेरायुक्तो यत्रभौवाज्यदयेवोभयत्र विनियोगसम्भवात वाजिनान्तरमुत्पाद्यम् । सकर्ष १।४।१

● वाजिनम् । 'तप्ते पयसि दध्यानयति' तत्र घनीभूत पिण्ड आमिक्षा, अवशिष्ट जल वाजिनम् । त्रि २।२।९ ● वाजिन न प्रयोजक तप्ते पयसि दध्यानयनस्य किन्तु आमिक्षैव प्रयोजिका । ४।१।९।२२–२४ ● वाजिन यागे उपसेचने चैकमेव विनियुज्यते न वाजिनान्तर उपसेचनार्थमुत्पादयितव्य चातुर्मास्येषु । सकर्ष १।४।१. ● वाजिन सानाय्यविकृतम् । भा ८।२।१।५ ● 'वाजिभ्यो वाजिनम्' इति वाजिनगुणककर्मान्तरविधि , न तु आमिक्षागुणके कर्मणि गुणविधि । २।२।१।२३–२४ मीको पृ १५८० 'गुणवाद' इत्यत्र द्रष्टव्यम् । ● वाजिनस्य । तप्तस्य पयसो दध्यानयनसंस्कृतस्य आमिक्षाशब्देन घनीभूतस्य वैश्वदेवयागे विनियोगात् तदनुनिष्पादितो द्रवस्य वाजिन शब्दोच्चरणोपयुक्तत्वात् प्रतिपत्त्यपेक्षस्य प्रतिपत्तिमनिष्यति । सु पृ ८२४ ● वाजिनस्य पर (आमिक्षा) प्रयुक्तदध्यानयनोपजीवित्वावगतेर्न दध्यानयनप्रयोजकत्वम् ।

हि उभयत्रापि वाजिनन्यायेन कर्मान्तरत्वाशङ्का समपनि। २।२।११।२६ पृ. २९०, * पाठक्रमेण प्रधानविधे. एकवाक्यतागमोत्तर अन्यसम्बन्धयोगात् वाजिनन्यायेन भेदोपपत्तिः। प्रधानविधेः पर्याप्तेण अङ्गवाक्याहरन्तरस्य एकादशे ( ११।१।८ ) निषेत्स्यमानत्वेन पाठस्थानिया-मकत्वात्। अतः सर्वेषां युगपत्सम्बन्धात् न वाजिन-न्यायेनापि भेदकत्वम्। २।२।१०।२३ पृ. २६४. * स्वर्गकामवाक्ये वाजिनन्यायेन चन्दनादिद्रव्यविशिष्ट-कर्मान्तरविधानात् न कश्चिद्दोषः। सोम ६।२।१.

* वाजिनन्यायस्वरूपम्– दध्यानयनस्य आमिक्षार्थस्य चार्कर्यम्, न वाजिनार्थत्वम्। अतः आमिक्षा-प्रयुक्तदध्यानयनानुनिष्पन्नत्वात् वाजिनस्य, न दध्यानयन-प्रयोजकता इति हि तन्न्यायः। कौ. ४।१।४।९ पृ ६८.

* वाजिनयाग., परत्वस्य लोपकाशिकोऽपि दध्या-नयनस्य अप्रयोजक.। बाल पृ. १०७, * वाजिनयागः वाजिनस्य उत्पत्तेः अप्रयोजकः उपादानपालनयोस्तु प्रयोजक.। पृ १०६, * वाजिनयागमनुनिष्पन्नस्य वाजिनस्य प्रतिपत्ति चातुर्मास्यवैश्वदेवे। भाट्ट. ४।१।९, * वाजिन-यागस्य आक्येन समापन वाजिनयागे चातुर्मास्यवैश्वदेव-पर्वणि। ८।१।९, * वाजिनयागस्य आमिक्षाविकारेऽति-देशः अनुनिष्पन्नप्रतिपत्तित्वात्। ४।१।९ * वाजिन-यागस्य प्रधानतया अङ्गत्वाभावेन अनतिदेशात् वाजिन-यागप्रतिषेधदर्शनरूपं लिङ्गमयुक्तम्। इति कृत्वाचिन्तया इदं इति केचिदाहुः। तदयुक्तम्। वाजिनयागस्य वाजिनापचारे द्रव्यप्रयोजकत्वादङ्गतया अनित्यस्य नित्ये. आमिक्षायागादिभिः बहविकारविधिविषयत्वाभावेन वाजिन. प्रतिपत्त्यर्थतया लिङ्गदर्शनवत् अङ्गत्वस्यैव युक्त-त्वात्। सोम. ७।१।१०. * वाजिनयागे सान्नाय्य-धर्माणामतिदेशः। ८।२।१।१-९

* प्रतिपत्तिकर्मत्वेऽपि निराकाङ्क्षत्वभूतवाजिनयाग-न्यायेन इतिकर्तव्यताकाङ्क्षाया सोमवन्यायागन्यायादत्वेन अतिदेशोपपत्तं. ( सौमापौष्णचरुयागे )। कौ ३।२। ५।१८ पृ २९७.

* वाजिनयागवत्। न च वाजिनयागवत् गुणा-र्थेद. संभवति स्वर्गशब्दस्य फलपर्यवसानाऽपि सम्पत्तेः। ( कर्मान्तरमेव दर्शपूर्णमासाङ्क स्वर्गविशिष्ट विधीयता इति शङ्कया उत्तरमिदम् )। रत्न ६।१।१।२.

* वाजिनयागवत्। वाजिनयागो यथा कर्मान्तर प्राप्नोति तथा 'क्षौमे वसानौ अग्निमादधीयाता' इत्यत्र पुंस्त्व विवक्षाया कर्मान्तर प्राप्नोति। रत्न. ६।१।५।२२ वर्णकं २.

* वाजिनयागसुराग्रहयोः ऐष्टिकधर्मातिदेशः। ८।२।१।१–९. मीको. पृ. २१८ 'अतिदेशः वाजिन-सुराग्रहयोः ऐष्टिकधर्माणाम्' इत्यत्र अधिकरण द्रष्टव्यम्।

* वाजिनवत्। वाजिन यथा अनुपङ्गात् उत्पन्नं प्रतिपत्तिं आहुतिरूपां निष्पादयति तथा अध्ययनानुष्ठ-नयन अनुषङ्गात् अध्यापनमानार्थकं निष्पादयति। रत्न. ६।८।६।२४ वर्णक २.

* वाजिनशब्दस्य कारकविभक्त्यन्तत्वात् नापि न नाम्ना अन्वय सम्भवति। सु. पृ. ८३१.

* वाजिनहोम' चातुर्मास्येषु वैश्वदेवपर्वगत-आमिक्षाहोमात् ( आमिक्षायागात् ) कर्मान्तरम्। वि २।३।९.

* वार्ते नाध्येयम्, अध्ययनधर्मोऽयं न कर्मणि प्रयोगधर्म.। १२।३।७।१८–१९

* वातादिन्यायः। वातपित्तश्लेष्माणः परस्पर विरुद्धा अपि देहधारणादि एक कार्यं कुर्वन्ति। न्यास-

* वातप्रदीपन्यायः। वातेन दीपनिवृत्ति। साहस्री ३७६.

* 'वादमात्रं ह्यनर्थकम्' ( अर्थवादरहित, तद-नर्थक इत्यर्थ )। ११२।२।१९ सूत्रम्.

* वादित्रं अस्ति महानाटे 'दिवि दुन्दुभयो नदन्ति' इत्येवमादि। भा. १०।४।५।९.

* वाधयमानां ( नर्भेश्वाना सोधनार्थीवाट.। वाध्रे श्वाना इति केचित्। वाध्र'श्च इति आश्वलायनश्रौतसूत्रे १२।१० ) नाराशंसी द्वितीय प्रयाज.। वि. ६।६।१.

* वानप्रस्थ'। ब्राह्मण., परिव्राट्, वानप्रस्थ इति धर्मभेदान् ब्रह्मचारिणा। भा. ८।२।५।२४.

* वामदेवेन दृष्टाः पञ्चदश ऋचः। तत्र पञ्चदशाना-मृचा मध्ये एकादश सामिधेन्य. अन्त्याश्चतस्रः यागानु-

वाक्याः, न तु सद्युपाः । संकर्ष. ४।४।२.

● वामदेवाधिकरणम् । संकर्ष. ४।३।२. मीको. पृ. १४ 'अगस्त्यस्य कयाशुभीयादौ एकादशैव सामिधेन्यः' इत्यत्र अधिकरण द्रष्टव्यम् ।

● वामदेव्यं नाम साम । भा. ९।२।६।२८ वर्णक २, ● वामदेव्यं साम आधाने गायति । 'य एवं विद्वान् वामदेव्यं गायति' इति । २।३।२।१९. ● वामदेव्यं साम 'कया नश्चित्र०' इति गायत्रे तृचे गीयते । तच्च माध्यंदिने पृष्ठस्तोत्रेषु द्वितीयम् । वि. १।४।३, ● वामदेव्यं साम 'कया नश्चित्र०' इति तृचे गीयते अध्ययनतः । परन्तु 'ककुप्सु रथन्तरं गायति' इति विधानेन ककुब्जातृचे रथंतरं गेयम् । ७।२।१, ● वामदेव्यं साम 'कया नश्चित्र० कस्त्वा सत्यो० अभी षु ण.०' इति तृचे (६८१, ६८२, ६८४) गीयते । तत्र प्रथमा ऋक् योनिर्नाम । ९।२।१ वर्णक २.

● वामदेव्यादिषु पृष्ठशब्दप्रसिद्धिः । मीको पृ २६०८ 'पृष्ठानि' इति निन्द्यो द्रष्टव्यम् । या १।८। २।३ पृ. ३६२.

● वामदेव्यादिसामानि स्थाने विहितानि, तत्र उद्गातृ. गान विकल्प्यते । वि. १०।८।६ । ब्रह्मा उद्गात्रा सह गाने विकल्प्यते कल्पसूत्रानुसारेण, तथापि गानमेव विकल्प्य ब्रह्मणो गाननिषेधात् इति । भाट्ट १०।८।६ । यारज्ञीयादिसामानि नैवानि इति । शा. १०।८।६

● वामदेव्यमस्तोत्रे शोनौ इलोरथंगेय्ये 'औ हो हो हायी' इति स्तोभ. । यथा स्वर., वर्णविशेषः, विराम, इत्येते गीत्युपयोगित्वात् अतिदिश्यन्ते तथा स्तोभा अपि अतिदेष्टव्या । तथा च तत्रैव साम्नि उत्तरयोर्ऋचो. स्तोभस्य उक्तस्य अतिदेशः कर्तव्यः । वि ९।२।१०.

● वायवीयौ संयोगविभागौ शब्दाभिव्यञ्जकौ । (उच्चारयितृमुखोद्गतवायवीयसंयोगविभागाना स्तिमितसमीरणापसारणेन शब्दाभिव्यञ्जकत्वम् । न तु शब्दादिस्ताना तेषाम् । वैद्यनाथः ) अभिघातेन हि प्रेरिता. वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागान् उत्पादयन्ति, यावद्वेगं अभिप्रतिष्ठन्ते । ते च वायोरप्रत्यक्षत्वात् संयोगविभागा नोपलभ्यन्ते । अनुपरतेष्वेव तेषु शब्द उपलभ्यते नोपरतेषु । भा. १।१।६।१३.

● 'वायव्यं श्वेतमालभेत भूतिकामः' । अत्र किं दार्शपौर्णमासिक आलम्भ. गुणविधि. उत आलम्भान्तर किंवा यागान्तर इति विचारे यागान्तरमिदं न गुणविधि. नापि आलम्भान्तरम् । २।३।५।१२–१५. मीको. पृ. १००६ 'आलम्भनिर्वपन्वाव:' इत्यत्र अधिकरण द्रष्टव्यम् । ● 'वायव्य श्वेतमालभेत भूतिकाम.' इत्यत्र श्वेतगुणस्य विधि । न अनुवाद. । ४।१।१०।२५. मीको. पृ. २१७७ 'द्रव्येषु गुणश्रुति. नियमविधानार्थां' इत्यत्र अधिकरण द्रष्टव्यम् । ● 'वायव्य श्वेतमालभेत भूतिकाम.' इत्यादौ छाग एव, नान्यः पशुः । भा. १०।२।३०।६९. ● 'वायव्य श्वेतमालभेत भूतिकाम' इति द्रव्यदेवतासंयुक्तत्वात् कर्मान्तरविधिः । वि. २।३।५. ● वायव्ये पशौ विहितेन आघारमन्त्रेण प्राकृताघ्रान्तस्य न बाध. । १०।३।१।१२–१३.

● वायव्यादिपशौ मनोतामन्त्रस्य नोह. ('त्वं ह्यग्ने प्रथम' इत्यत्र 'त्वं हि वायो प्रथम.' इति नोहः ) अग्निशब्देन प्रयोक्तव्य. । १०।४।२१।८३. मीको पृ ३०८९ 'मनोतान्वाय:' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● वायव्यपशौ अग्नीषोमीयपशुविकृतौ अग्नीषोमीयदेवताया निवृत्तायां तदीयपशुपुरोडाशोऽपि स निवर्तते । वि. १०।१।९. ● वायव्यपशौ उपाकरणे हिरण्यगर्भमन्त्रस्य निवेश । १०।३।२।१३–१७. 'हिरण्यगर्भमन्त्रन्याय.' इत्यत्र अधिकरण द्रष्टव्यम् । ● वायव्यपशौ उपदिष्टश्वेतगुणेन प्राकृतालङ्कारस्य न बाध. । १०।२।३०।७०. मीको पृ. २१५४ 'द्रव्यस्य गुणेन न बाध.' इत्यत्र अधिकरण द्रष्टव्यम् । ● वायव्यपशौ 'हिरण्यगर्भ.' इत्याघारमन्त्र । तत्र चोदकप्राप्तनिकर्षाप्यता नास्तीति पक्ष. । मन्त्रान्तरेण पूर्वमन्त्रबाधेऽपि चोदकप्राप्तनिकर्षाप्यता अस्त्येवेति सिद्धान्त । वि. १०।३।१२, ● वायव्यपशौ 'हिरण्यगर्भ. समवर्तताग्रे' इत्याघारमाघारयति' ।

प्रथमाघारे ' प्रजापतिं मनसा ध्यायन्नाघारयति ' इति प्रकृतौ । द्वितीयाघारमन्त्रस्तु प्रकृतौ ' ऊर्ध्वोऽध्वर ' इत्यादि. तत्र वायव्यपशौ प्राकृतमन्त्रं बाधित्वा हिरण्यगर्भमन्त्रो द्वितीयाघारे इति सिद्धान्तः । १०।३।२.

• वायव्यश्वेतपशौ आघारे प्राकृतेतिकर्तव्यता प्राप्नोति । मन्त्राश्च मन्त्रविशेषरूपगुणविधिः । १०।३।११-१२.

• वायुः अपि स्पार्शनप्रत्यक्ष. । स्पार्शने च उद्भूतस्पर्शो हेतुः न तु रूपमपि । मणि. पृ. २१. • वायुः न प्रत्यक्ष., वायोरप्रत्यक्षत्वात् । भा. १।१।६।१३.

☒ वायुर्नावमिवाम्भसीति न्याय. । यथा, नद्याः परं पारं गच्छन्ती नौका प्रतिकूलो वायुर्नदीस्रोतसि महावर्ते पातयति, जलेनापूर्य वा मज्जयति, महापाषाणेनाभिहत्य भञ्जयति, पुनःपारं विषमस्थानं वा गमयति, सर्वथानर्थवतीमेव करोति, तथा विदुषोऽपि प्रज्ञा विवेकबुद्धिमनादिविद्यावासनाभिरुत्थापिताभिरुपप्लुतो मनो विषये वा कर्मणि वा योगे वाऽप्युपासने वा व्यवहारे वाऽन्यत्र वा पातयिता वायुः नावमिव विप्लवयतीत्यर्थः । साहस्री. ५२५

• वायुनिरूप. । भा. १।२।१।१०. • ' वायुर्वै क्षेपिष्ठा देवता ' इत्यादौ अर्थवादेऽपि प्रामाण्यमनिषत्तये वाक्ये एव लक्षणा अङ्गीकार्या, प्रत्येकपदात् तदनुपपत्ते. । न च तत्र कर्मणि क्षिप्रदेवताप्रसादहेतुत्वस्य पदार्थानन्वितोपस्थितत्वमेव, न तु तदन्यप्राशस्त्यलक्षकत्वमिति वाच्यम् । पदार्थमात्रमर्थबोधे ' वायुः क्षेपिष्ठा ' इत्येन धी. स्यात्, न कर्मप्राशस्त्यविषया सा स्यात् । अद्वैत. २।१।५५४-५५६ • वायोश्चाप धर्म. ( चलनम् ) सर्वत्र हि व्यजनादिषु चलना त्मकत्वेन उपलभ्यते । बृहती. पृ १६१ • वायोः सद्भावे किं प्रमाणम् ? अस्ति तस्मिन् व्यजनादिचालने वायूपलम्भाप्रसङ्गापत्ते. । नहि तेनाशो जन्यते पार्थिवस्य वायूपादानत्वायोगात् । वैद्यनाथः. १।१।६।१३ पृ.७९.

☒ वायुभक्षणन्याय. । साहस्री २०१.

☒ वायुशैत्यौष्ण्यन्याय. । वायोः शैत्यं औष्ण्यं वा औपाधिकम् । साहस्री. २०२.

• वारणं यज्ञपात्रं नित्यं गोदोहनादि नैमित्तिकमेव दर्शपूर्णमासयोः । भा. ३।३।२।४. मीको. पृ. २३९८ ' नैमित्तिकानि च नित्यप्रकृतानि ' इयत्र अधिकरणं द्रष्टव्यम् । • वारण. यज्ञावचरः सर्वत्र । यज्ञावचर यज्ञप्रचारहेतुः पात्रम् । वि. ३।१।१२

☒ वारणाधिकरणम् । वारणवैकङ्कताधिकरणम् । वारणवैकङ्कतपात्राणि सर्वयागेषु निविशन्ते ॥

गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात् । ३।१।१२।२२॥

भाष्यम्--अग्न्याधेये वारणवैकङ्कतपात्राणि अहोमार्थानि होमार्थानि च श्रूयन्ते । ' तस्माद्वारणो वै यज्ञावचरः स्यात्र त्वेतेन जुहुयात्, वैकङ्कतो यज्ञावचरः स्यात् जुहुयादेतेन ' इति । न च वारणवैकङ्कतानां पात्राणां अग्न्याधेयेन संबन्धः । कुत. ? यज्ञावचरत्ववचनात् । यज्ञार्थेतानि पात्राणि वाक्येन प्रकरणं बाधित्वा भवन्ति । तत्रैष संदेह, किं पवमानेष्टिषु निविशन्ते उत दर्शपूर्णमासादिषु सर्वयागेषु इति । किं तावत् प्राप्तम् ? पवमानहविःषु इति । कुतः ? उक्तमेतत् (३।१।९।१८) पदार्थे असंभवन् पदार्थः तद्गुणे कल्प्यते इति । अग्न्याधेयप्रकरणे च समाम्नानात् पवमानहविषां तद्गुणता । तस्मात् पवमानहविःषु इत्येवं प्राप्तम् । एवं प्राप्ते, ब्रूम. । गुणानां समत्वात् पवमानहविषां अग्न्याधेयस्य च न परस्परेण संबन्ध. । यथा आधानं अग्नेर्गुणः संस्कारार्थं, एवं पवमानहवींष्यपि अग्नेरेव गुणभूतानि । तस्मात् परस्परेण संबन्ध इति । यदुक्तं आधानस्य प्रकरणे समाम्नायन्ते इति, यद्यपि समाम्नायन्ते तथापि प्रकरणं बाधित्वा वाक्येन अग्निं भजन्ति । किमिदं वाक्यम् ? ' यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति ' इति । ननु आहवनीयोऽत्र यागस्याधिकरणत्वेन गुणभूतः श्रूयते । सत्यम्, अधिकरणमाहवनीय., तथापि तु आहवनीयार्थं एव याग., प्रयोजनवत्त्वादाहवनीयस्य निष्प्रयोजनत्वात् पवमानहविषाम् । कथमेषां निष्प्रयोजनता ? फलाश्रवणात् । कल्प्यं फलमिति चेत्, सर्वं कल्प्यम्, अग्निसंस्कारस्तु तत्फलम्, न स्वर्गः । स्वर्गे कल्प्यमाने द्विरदृष्टं कल्प्येत, होमाच्च स्वर्गो भवति, तस्य

वि— ‘वैकङ्कतादिकं पात्रं पवमानहविष्षु च । यद्वोदितं प्रकरणादाधानेऽङ्गमस्तु तत् ॥ अनर्थकं तदङ्गेषु हविष्ष्वेवानुनिष्ठते ।, नाधानहविषा साम्यात् वाक्यात्सर्वेऽपि ते भवेत् ॥’

भाट्ट— आधाने पवमानेष्टिप्रदेशान्तरे ‘वारणो यज्ञावचर, वैकङ्कतो यज्ञावचर’ इति श्रुतम् । तत्र यज्ञसाधनत्वेन श्रुतानां वारणादीनां साक्षात् अयज्ञरूपाधाने निवेशासंभवात् आनर्थक्यतदङ्गन्यायेन ( ३।१।९।१८ ) पवमानेष्टिरूपे यज्ञे एव निवेश । इति प्राप्ते, भाष्यकारेण नायम् एव सिद्धान्तितम् । आधानप्रकरणे पठितेन ‘यदाहवनीये जुहोति’ इति वाक्येन पवमानहविषां अङ्गत्वमवगते आधानाङ्गत्वाभावेन आनर्थक्यतदङ्गन्यायासंभवात् स्वरूपेण च पवमानेष्टीनां अप्राकृतित्वात् वारणवैकङ्कतादीनां सर्वप्रकृतियज्ञाङ्गत्वं सर्वयज्ञाङ्गत्वं चेति । वार्तिककारस्तु न तावदनारभ्याधीतेन पवमानहविषां अङ्गत्वम् । तेन सर्वहोमानुवादेन आहवनीयविधानात् पवमानेष्टीनामेव विशिष्य उपस्थित्यभावे ताभ्यां प्राधान्यलक्षणाया प्रमाणाभावात् । नापि पवमानेष्टिप्रकरणे वाक्यान्तरकल्पना तदभावेऽपि वारणादीनां सर्वयज्ञार्थत्वोपपत्ते । अस्तु वा आधानप्रकरणे तत्, तथापि तेन आधानाङ्गभूतहोमानां आहवनीयाधिकरणकत्वमेव, न तु अन्याङ्गत्वसिद्धि । ताभ्यां अपि करणत्वं च । अत एव तत्र आहवनीयपदं आधानजन्यसंस्कारपूर्वविशिष्टाग्निपरत्वकमेव, पवमानपूर्वविशिष्टाग्निरूपमुख्याहवनीयस्य तदानीमभावात् । न चैव पवमानेष्टिहवि श्रपणादौ गार्हपत्यादिप्रापकाभाव, तत्र मुख्यगार्हपत्याधिकरणत्वबाधेऽपि सति संभवे प्रकृतिधर्मगार्हपत्यादिबाधे प्रमाणाभावात् । अतश्च सत्यपि वचनान्तरे पवमानेष्टीनां अङ्गत्वे प्रमाणाभावात् आधानाङ्गत्वेऽपि वारणादीनां सर्वयज्ञार्थत्वेन सूपपादनीया । सर्वत्र स्वोद्देश्यस्य अपूर्वव्यभिचारे अपूर्वसाधनलक्षणार्थं प्रकरणानुप्रवेश । यथा व्रीहीन् इत्यादौ । अत एव तादृशस्थले आनर्थक्यतदङ्गन्याय । प्रकृते तु यज्ञपदेनैव अव्यभिचरितापूर्वसाधनत्वोपस्थितौ तदर्थं प्रकरणानुप्रवेशाभावात् प्रधानार्थत्वस्यैव न्याय्यत्वात् च । वस्तुतस्तु । एवमपि यदि पवमानेष्टिसंनिधौ पात्राणि श्रूयेरन् तदा अनुवादस्य सति संभवे सन्निहितगामित्वात् ‘व्रीहिभिर्यजेत’ इत्यादिवत् भवेत् प्रकृतमात्रविषयत्वम्, न त्वेतदस्ति । पवमानेष्टीनां प्रदेशान्तरस्थत्वात् । अतो वारणादीनां सर्वयज्ञार्थत्वमेव । प्रयोजनम्— पवमानेष्ट्यन्तर्पात्राणां नाशे दर्शाद्यर्थं अन्येषामुत्पत्ति पूर्वपक्षे, सिद्धान्ते तु वारणादीनामेवेति ।

मण्डन— ‘वारणं यज्ञमात्राङ्गम् ।’

शंकर— ‘नेष्ट्यङ्गं वारणादि च ।’

* वारणाधिकरणापोदितस्य अन्याधेयस्य अनुवाक्याधिकरणेन उन्नीतम् । सु पृ १०७२

* वारयते ( अथ ) कूरैभवयोगाद्रूक्षिका । मणि पृ १४०

* वारवन्तीयं साम आधाने गायति । भा ३।३।२।९ * प्रकृतौ ज्योतिष्टोमे यज्ञायज्ञीयस्य अग्निष्टोमाख्यस्तोत्रसाधनत्वेन अग्निष्टोमसामशब्दवाच्यत्वात् तत्कार्यापत्ति वारवन्तीयस्य । सु पृ ८७२

* वारवन्तीयादीनां कर्मान्तरत्वम् । २।२।१२।२७ मीको पृ १३२८ ‘रेवत्यधिकरणम्’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

* वारवन्तीयसंस्कार यदि कश्चित् विधीयेत तर्हि कथंचित् व्रीहिप्रोक्षणादिषु इव प्रकृतप्रत्ययो भवेत् इति पूर्वाधिकरणाभिहितन्यायेन उत्पत्तिशिष्टसामत्वे प्रकृतग्रहणायोगाशङ्का । सु पृ ८८१

* ‘वाराही उपानहौ उपमुञ्चते’ इति श्रूयते । तत्र वराहशब्देन आर्यप्रसिद्ध्या सूकर एव ग्राह्यो न कृष्णशकुनि अभिनयते । भा १।३।४।८-९

* ‘वराहं गावोऽनुधावन्ति’ इति वराहोपलक्ष्यर्थवाद । वि १।३।५

* वारुणं एककपालं अवभृथे प्रधानम् । तच्च प्रास्य अप्सु कर्तव्यम् । ‘अभ्यवहरन्नपेन चरति’ इति । वि ११।२।८, * वारुणं कृष्णं ऐकादशिनेषु एकादश पशु अश्वमेधे ज्योतिष्टोमे च । ८।१।३ * वारुणा चतुष्कपाल पुरोडाशा बहूनामश्वानां प्रतिग्रहे अश्वप्रतिग्रहेष्ट्याम्, तत्र प्रतिपुरोडाशं कपालचतुष्कभेद ।

११।४।२।३१-३६. मीको. पृ. ७३५ ' अश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालसंख्याभेदः ' इत्यत्र द्रष्टव्यम् । ० ' वारुणेनैककपालेन ' इत्यादिना अपूर्वस्यावभृथस्य विधानम् । वृ. १०।७।१५।४७-५०. ० ' भूम्यन्तरापुरदेन सोमेनैव विनिर्मिता । श्रूयन्ते वारुणे लोके देहा, मन्त्रानुगुणाः ॥ ' धा. ३।११७।१३ पृ. ७०२. ० वारुणेषु चतुष्कपालेषु बहुत्वनिग्रहानुसारेण बहुषु कृतेषु कामानुसमयेनैव पुरोडाशधर्माः कर्तव्याः, अन्यथा पुरोडाशानारम्भः । वि. ५।२।२. ० वारुणी आमिक्षा वरुणप्रघासेषु । सा द्विधा प्रयुज्यमाना दृश्यते । एकदेशः अन्या, अवभृथे ( आज्यभागाग्निष्टकृतोरन्तरा ) एकदेशः समिष्टयजुरूर्ध्वम् । भा. ११।२।१५। ६३. ० वारुणी इष्टिः अश्वदाने । ३।४।११।३०-३१ मीको पृ. ७३६ ' अश्वप्रतिग्रहेष्ट्यधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । ० ' वारुण्याः निष्कासेन तुषैश्चावभृथं यन्ति ' । ब्रा. ११।२।१४ । वारुण्या आमिक्षाया स्थालीलग्नेन शेषेण पिष्टकर्मोपमक्रतिभूतयागानां तुषैश्च इत्यर्थं इति केचित् । पिष्टमयमेवास्य आमिक्षायाश्चावयवतया प्रधानहविष्ट्वाभावात् पुरोडाशादिरूपप्रधानहविषां तुषैः इत्यन्ये । अनिर्देशादुभयेषामित्यपरे । सोम. ११।२।१८. ० ' वारुण्या. निष्कासेन तुषैश्च ' इत्यत्र ( ११।२।१५ ) निरपेक्षस्यायः । वाक्यार्थ. पृ. २०. ० वारुण्याः निष्कासेन पुरोडाशो याज्यते अवभृथे । वाल. पृ. १३७.

० वारुण्यधिकरणम् ( वारुणी इष्टिः वैदिके अश्वदाने ) । ३।४।१०।२८-२९. मीको. पृ. ७३० ' अश्वप्रतिग्रहेष्टिः वैदिके अश्वदाने ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

० अत्र वारुण्याधिकरणोपपादितरीत्या लुप्तापि योगरूढत्वनदीत्वात् समाम्नाया यौगिकत्वम्, तथापि नाम्ना. स्थानत्वेन मानत्वम् । पूर्वपक्षे । कौ. ३।३। ६।१३ पृ. ३४४.

० वारुणचतुष्कपालः वैदिकाश्वदाने कार्यः । वि. ३।४।१४. ० वारुणचतुष्कपालानां प्रयोगस्तु भेदेन न सह, साहित्यस्यानिरूपितत्वात् । परंतु वार्तिके तन्त्ररत्ने च ' वचनान्तरमेण साहित्यप्रतिपादनं द्रष्टव्यम् ' इत्युक्तं अश्वप्रतिग्रहे । सोम. ५।१।१.

० वारुणचतुष्कपालपुरोडाशेषु अधिश्रयणाद्यभिवासनान्तेन काण्डेन अनुसमयः । वि ५।२।२.

० वारुणप्राघासिकैककपालधर्माणां साकमेधीयैककपाले अतिदेशः । ७।१।५।२३. मीको. पृ २२९ ' अतिदेशः, साकमेधीयैककपाले वारुणप्राघासिकैककपालधर्माणाम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

० वारुणीनिष्कासतुषप्रचारस्य अर्थकर्मता । भाट्ट. ११।२।१८.

० वार्त्रघ्नौ आज्यभागौ पौर्णमास्याम् । ' अग्निर्मूर्धा० भद्रा॰नन्० ' ' त्वं सोमासि सत्पतिः० ' । भा. ३।१।१३।२३.

० वार्त्रघ्नी पौर्णमास्यामनूच्येते ( आज्यभागयोर्याज्यानुवाक्ये ) । वा. ३।१।१३ पृ. ८७५. ० ' वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम् ' अयं व्याख्यानविधि अरथर्थः । वाल पृ १७. ० ' वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम् ' इति कालार्थं संयोग । ' तस्मात् कालार्थं एताय संयोगोऽन्नाद्विकल्पनात् । न्याय्यः पूर्वपक्षत्वात् कालो हि दुर्निरूपः ॥' वा ३।१।१३।२३ पृ ७४०. ० ' वार्त्रघ्नी पौर्णमास्याम्, वृधन्वती अमावास्यायाम् ' इत्यत्र मन्त्रलिङ्गविनियोगस्य वाक्यबाध्यता, वाक्यस्य च लिङ्गापेक्षया दुर्बलत्वेन, तत्रत्यो लिङ्ग बाधित्वा मन्त्रस्वरूपाश्रयत्वात्पयत्नम् । कु. ३।१।१३।२३ .

वार्त्रघ्न्यधिकरणम् । अनुवाक्याधिकरणम् । पूर्णमासे वार्त्रघ्नीयुगलं अमावास्यायां वृधन्वतीयुगलं च आज्यभागाङ्गम् । वार्त्रघ्नीवृधन्वत्योरनुवाक्यत्वे. आज्यभागाङ्गत्वम् ॥

लिङ्गस्यार्थसंयोगात् । ३।१।१३।२३॥

भाष्यम्— दर्शपूर्णमासयोः श्रूयते ' वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम् ' इति । सन्देहः किमनुवाक्याद्वियस्य प्रधाने नियमः, उत

● वासस वासे गुह्याच्छादनम् । वि. १०।८।८. ● ' यथा काष्ठतृणादीनां मारुतादेव शुद्धता । स्नपने वाससो नैव तोयप्रक्षालनादिना ॥ ' वा. ११।२।२ पृ. १८१. ● वाससि अन्वाहार्यस्थानापन्ने अधिधारणस्य बाधः आग्रयणे । १०।३।१०।२८. मीको. पृ. ८५५ ' आग्रयणे वासोवत्सयोः अन्वाहार्यस्थानापन्नयोरपि अभिघारणस्य बाधः ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● वाससि अन्वाहार्यस्थानापन्ने पात्रानुद्धारणमग्रयणे । १०।३।१।३७ मीको पृ. ८५२ ' आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वाससि पात्रस्य बाधः ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● वाससि मानोपायहरणे कार्ये ज्योतिष्टोमे । १०।६।२०।७७. मीको. पृ. १८३१ ' ज्योतिष्टोमे सोमस्य मानमुपायहरणं च वाससा कर्तव्ये ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

𝕿 वाससि मानोपायहरणे प्रकृतौ सोमस्य वचनात् । १०।६।२०।७७ ॥

प्रकृतौ ज्योतिष्टोमे तावत् सोमस्य मानोपायहरणं वाससि वाससा च भवत । वाससि मानं वाससा च उपायहरणं स्यात्, ' वाससि मिनोति ' ' वाससा चोपावहरति ' इति वचनात् । उत्तरसूत्रेषु विशेषविचारं करिष्यते तदर्थं इदं सामान्यतः उक्तम् । के.

● वासोऽन्तरोत्पादनं अहर्गणे प्रत्यहमुपावहरणार्थम् । १०।६।२१।७८. मीको. पृ. ७६८ ' अहर्गणे प्रत्यहं सोमोपावहरणार्थं पृथक् वास उत्पादनीयम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● वासोऽन्तरोत्पादनं सोमोपावहरणकाले एव अहर्गणे, तत्सोमोपावहरणार्थत्वेन न मानार्थम् । १०।६।२१।७९-८० मीको पृ १०१६ ' उपावहरणविचारः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● वासआदिशब्दानां आकृतिनिमित्तता । भाट्ट ७।३।१.

● वासोद्वयं पुरुषस्य आवासतः प्राप्यते । मा. १२।१।१।२.

𝕿 वासोपत्सं च सामान्यात् । १०।३।६।३९॥

वासश्च वत्सश्च तयोः समाहारो वासोवत्सम् , वासोवत्सं आग्रयणेऽपि चेदनाविव प्रकृत्या अन्वाहार्यदक्षिणाया विकारः । सामान्यात् कार्यसामान्यात् दक्षिणाकार्यस्य ऐक्यात् । आग्रयणे ' वासो दक्षिणा, वत्सः प्रथमजो दक्षिणा ' इत्युक्तम् । प्रकृतौ च ' अन्वाहार्यः दक्षिणा ' । सा चोदकेन आग्रयणे प्राप्ता विशेषविहितेन वासोवत्सेन बाध्यते । न समुच्चयः । तत्कार्येण आपन्न दक्षिणा उपमिता । के.

● वासोवत्सयोः आग्रयणे अन्वाहार्यस्थानापन्नयो रभिघारणं नानुष्ठेयम् । १०।३।११।४८. मीको. पृ ८५५ ' आग्रयणे वासोवत्सयो० ' इत्यत्र द्रष्टव्यम् । ● वासोवत्सयोः आग्रयणे दक्षिणारूपयोः प्राकृतान्वाहार्य धर्मा कर्तव्याः । १०।३।१०।३५. मीको. पृ ८५५ ' आग्रयणे दक्षिणारूपयोर्वासोवत्सयो प्राकृतान्वाहार्यधर्माः कर्तव्या ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● वासोवत्सदक्षिणया आग्रयणे उपदिष्टया अन्वाहार्यदक्षिणाया बाधः । १०।३।६।१४. मीको. पृ. ८५४ ' आग्रयणे उपदिष्टवासोवत्सदक्षिणया० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● वासोवत्सन्यायः । वि १०।३।७.

● वासोविन्यासमात्रं उपवीत कर्तृगुणे भवति । भा. ३।१।१२।२१ पृ. ७३३.

● वासोहिरण्यादीनां अवदानावदानम् । वि ३।१।६.

● वासना स्मृतिहेतुः संस्कारः । रत्नाकर आत्मवादे १२४. ● वासनाः । वासितम् आत्मनि-रूप्यते ( इति मीको ) । वृहती. पृ ५५.

● वासनातो व्यामोह:, व्यामोहात् वासना इति अनादित्वात् बीजाङ्कुरवत् अदोष ( इति मीको ) । वृहती पृ. ५५.

● वासिष्ठ धर्मसूत्र वह्वृचैरेव परिगृहीतम् । भा १।३।७।२५ पृ. २४४. ● वासिष्ठ प्रत्यक्षं वे ब्राह्मणशाखात् अधीतस्य पत्र वासिष्ठ आर्ष, न तु केवल गोत्रम् । भा. ६।६।८।३९. ● वासिष्ठानां नाराशंस कल्पानां नाधिकार इति पक्षः । वैश्वामित्रादीनां अधिकारः न्यायेन प्रदर्शन इति सिद्धान्त । ' वैश्वामित्रे होता ' इति विशेष ।

'वासिष्ठो ब्रह्मा' इति तु अर्थवादः। 'रश्मिरसि क्षयाय त्वा' (तैत्ति. ४।४।१) इत्यादिस्तोमभागसंज्ञकमन्त्रवेत्ता वासिष्ठोऽत्र, न तु तद्गोत्र इति। त्रि. ६।६।८. ✽ 'वासिष्ठानां नाराशंसो द्वितीय प्रयाज तनूनपादन्येषाम्' अयं अन्यवरणप्राप्तो व्यवस्था विधिः। श्राद्ध पृ १८.

☞ वासिष्ठानां ब्रह्मत्वस्य नियमात्। ६।६।४। २४॥

सर्वे ब्राह्मणानामेवाधिकार इति पूर्वं समधिगतम्। तत्रापि वासिष्ठानां तत्समानकल्पानां चैव सत्राधिकारः स्यात् नान्येषां ब्राह्मणानामपि। कुतः? 'वासिष्ठो ब्रह्मा भवति' इति ब्रह्मत्वस्य वासिष्ठानां नियमात् इति पूर्वः पक्षः। अत्र यद्यपि कुतूहलवृत्तिषु सर्वेषु पुस्तकेषु वासिष्ठः पठ्यते तथापि व्यर्थत्वात् कुतूहलानुसारी पाठः स्वीकृतोऽस्माभिः। वासिष्ठपाठान्तरे तु षड्भिनियमार्थत्वं तस्य स्वीकर्तव्यम्।

सर्वेषां वा प्रतिप्रसवात्। २५॥

वासिष्ठानां तत्समानकल्पानां चैव सत्रेऽधिकार इति पूर्वपक्ष सूत्रेण प्राप्त वाशब्देन निरस्यन् सिद्धान्तमाह। सर्वेषां सत्रेऽधिकारः स्यात्। ननु तर्हि 'वासिष्ठो ब्रह्मा' इति कथमुच्यते, तत्राह–प्रतिप्रसवात् 'य एव कश्चन सोमभागमधीयीत स एव ब्रह्मा भवेत्' इति ब्रह्मत्वस्य प्रतिप्रसवः कृतः। तेन नात्र वसिष्ठगोत्रोत्पन्नस्य वासिष्ठत्वं किंतु स्तोमभागाख्यमन्त्रज्ञानवतो अवासिष्ठस्यापि वासिष्ठत्वं विवक्षितं च। इदं च स्तोमभागमन्त्रज्ञानस्तुत्यर्थं वचनम्। तस्मात् सर्वेषां ब्राह्मणानां सत्राधिकारः। तत्रापि विशेषस्तु 'वैश्वामित्रस्य०' इत्युत्तरसूत्रे वक्ष्यते। स्तोमभागा नाम मन्त्रास्तु 'रश्मिरसि क्षयाय त्वा क्षयं जिन्व' इत्यादयः तैत्तिरीयके पठ्यन्ते (तैत्ति. ४। ४।१)।

वैश्वामित्रस्य हौत्रनियमाद् भृगुशुनकवसिष्ठानामनधिकारः। २६॥

यद्यपि ब्राह्मणानां सर्वेषां सत्राधिकारः तथापि भृगुशुनकवसिष्ठानां सत्रे अनधिकारः न अधिकारः, किंतु तद्भिन्नानाम्। कुतः? 'विश्वामित्रो होता भवति' इति वैश्वामित्रस्य हौत्रनियमात्। सत्रे वैश्वामित्रस्य हौत्रं तावत् नियतम्। 'वासिष्ठो ब्रह्मा भवति' इत्यपि नियमो भाति। उभयोश्च अप्रमाणत्वात् विरोधः। तत्र स्तोमभागाख्यमन्त्राध्यायिनः गौणं वासिष्ठत्वं उक्तम्, वैश्वामित्रत्वं तु न गौणम्। तस्मात् वैश्वामित्रतत्समानकल्पानां सत्रेऽधिकारः। वैश्वामित्रभिन्नकल्पानां तु भृगुशुनकवसिष्ठानां न सत्राधिकारः इति सिद्धान्तः। के.

✽ वासुदेवार्जुनयोः प्रतिषिद्धमातुलदुहितृरुक्मिणीसुभद्रापरिणयनम्, 'उभौ मध्वासवक्षीबौ' इति सुरापानाचरणं च धर्मातिक्रमः। वा पृ. २०४.

यत्तु वासुदेवार्जुनयोः मद्यपानमातुलदुहितृपरिणयनस्मृतिविरुद्धमुपन्यस्तं तत्र अधिकारसुरामात्रस्य त्रैवर्णिकानां प्रतिषेधः। 'सुरा वै मलमन्नानां पाप्मा च मलमुच्यते। तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्॥' इति। मध्वीमाध्वीस्तु क्षत्रियवैश्ययोः नेव प्रतिषेधः, केवलब्राह्मणविषयत्वात् 'मद्यं नित्यं ब्राह्मणस्य (वर्ज्यं)' इति वचनात्। यच्चैतत् 'गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा। यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः॥' इति, एतदपि ब्रह्मवादिशब्दस्य तत्पर्यायत्वब्राह्मणसाधुकारितानिमित्तत्वात् प्रवचनाध्ययनेन मुख्यवदयोः एकार्थत्वात् 'प्रब्रूयाद् ब्राह्मणस्त्वेषां' इति नियमात् यदैव प्रवचनं स एव तस्यैव तद्धर्मः तत्साधुकारी च भवति। तस्मात् ब्राह्मण एव ब्रह्मवादिनः। तथा च मद्यसामान्यप्रतिषेधाहनिन्दार्थवादे अभिहितम् 'अकार्यमन्यत् कुर्याद्धि ब्राह्मणो मदमोहितः।' इति। तस्मादेतदुक्तं भवति, यथैव एका अन्नसुरा सर्वाणामपि अपेया, तथा सर्वा ब्रह्मवादिभिरपेयेति। इतरथा 'यथैवैका' इति च 'ब्रह्मवादिभिः' इति च उभयमपि अनर्थकमेव स्यात्। श्लोकान्तरनिर्देशेनैव वर्णत्रयप्रत्यवायाभावात्। तेन 'उभौ मध्वासवक्षीबौ' इत्यविरुद्धम्। तथा सान्यार्थदर्शनं अनुशासनवचनं 'तन्मात्स्यमासीत् तत् पश्चात् पर्यौहत, सुरा वै मात्स्यम्, ततो राजन्यमसृजत, तस्मात् ज्यायांश्च स्नुषा च श्वशुरश्च सुरां पीत्वा विलपन्त आसते, पाप्मा वै मात्स्यम्। तस्मात् ब्राह्मणः सुरां न पिबेत्

● विकल्प अग्नीषोमीये पशौ पार्वणहोमानन्तरं प्रयाजादिहुत्वा भिघारयितो मन्त्रयो । ५।३।७।१९–२० मीको पृ २ ३ 'पात्राधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प अग्न्यग्निष्टोमयोः सर्वसदाग्निष्टयोः उद्गातृप्रतिहर्त्रोः अवच्छेदयोगस्य । ५।७।१८।७९–८३ मीको पृ ८९१ 'अवच्छेदयोगस्य अग्निष्टोमसर्वसदाग्निष्टयोः विकल्प' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प अभिगुप्रैषगतस्य एकवचनान्तस्य मेधपतिशब्दस्य बहुदैवत्ये पशौ द्विवचनान्तेन मेधपतिशब्देन । ९।३।१३।४२–४३ मीको पृ ३४० 'अधिगुप्रैषगतस्य मेधपतिशब्दस्य०' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प अभिमर्शनमन्त्रस्य आग्नेयविकारेषु । भा ८।२।७।१९, ● विकल्प अर्थे परत्वात् । अशक्तेन निवृत्ते (कार्ये) नान्य प्रयोगमर्हति । ९।७।७।२९ ● विकल्प अश्वमेधे सवनीयपशुनार्थे अधिगुप्रैषे अश्वनिषये 'चतुस्त्रिंशद्वाजिन' इति मन्त्रस्य । वि ९।४।६ ● विकल्प अष्टदोषग्रस्त । ते च दोषा — १ प्राप्तप्रामाण्यपरित्याग । २ अप्राप्ताप्रामाण्य स्वीकार । ३ त्यक्तप्रामाण्यस्वीकार । ४ स्वीकृतप्रामाण्य परित्याग इति प्रयोगद्वयालोचनेन प्रतिवाक्यं चत्वार इति वाक्यद्वये अष्टौ दोषा । नि ८।१।१ ● विकल्प आधाने सामनाम् । १०।८।६।१९–११ ● विकल्प आधानदक्षिणाना सङ्ख्यानाम् । १२।८।७।१० मीको पृ ९४४ 'आधाने दक्षिणाना सङ्ख्यानां विकल्प' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प एकार्थाना गुणानामेकस्मिन् कर्मणि व्रीहियवयो, यवादियावनां यूपद्रव्याणाम्, बृहद्रथन्तरयोश्च । १२।३।४।१०–१ ● विकल्प एकार्थानाम् । भा १२।३।१५।३३ ● विकल्प एकादशिना पशुगणेषु पत्नीसंयाजेषु आज्यानाम् । १२।४।५।१०–१७ मीको पृ १३०९ 'एकादशिनादिपशुगणेषु पत्नीसंयाजेषु आज्यानां विकल्प' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प करणमन्त्राणामाम्नातानाम् । १२।३।१३।२९ मीको पृ १३६३ 'करणमन्त्राणामाम्नातानां विकल्प' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प गौसुपायाना विश्लेषादीना शाखाभेदेन समाम्नातानाम् । ५।२।७। २१ मीको पृ १०६८ 'गौसुपायाना विश्लेषादीना शाखाभेदेन समाम्नातानां विकल्प' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प गुणाना एककार्याणाम् । १२।३।८।१०–१७ ● विकल्प गुरुत्वेऽपि एकविंशति-सप्तदशयोरिव समत्वात् । सकर्ष ३।५।२६ ● विकल्प चातुर्मास्यग्रहोमो मन्त्रयो पौर्णमासिकदार्शिकयो सौम्यस्य । भा ८।१०।१५।२६ ● 'विकल्पश्चाष्टदोषप्रस्तात् कथञ्चन श्रूयते' । वा १।३।८।१९ पृ २१८० ● विकल्प 'चित्ताय स्वाहा, चित्ताय स्वाहा' इत्यादिमि शाखान्तरगते 'चित्त च स्वाहा' इत्यादीनाम् । सकर्ष २।४।१२ मीको पृ १७०२ "चित्ताय स्वाहा, चित्ताये स्वाहा' इत्यादिमि०' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प जाघन्या न समुच्चय पशुगणेषु पत्नीसंयाजेषु । अथवा पत्नीसंयाजेन च न प्रतिपत्तिकर्म किन्तु अर्थकर्म । १२।४।६।१०–१६ ● विकल्प न 'इमे वयम्, इमौ वयम्' इति पाठयो स्रुवादापनमन्त्र, कर्मान्तर आवश्यकत्वात् । सकर्ष ४।३।१ स्रुवादापनमन्त्रे 'इमे वयम्, इमौ वयम्' इति पाठौ०' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प न एकादशिनेषु पशुषु उपपाकहोमे अनेक गुणानाम् । किन्तु समुच्चय । १२।८।१८ मीको पृ ११५८ 'उपपाकगुणसमुच्चयन्याय' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प न किन्तु समुच्चय होमाना मन्त्राणाम्, क्रियमाणानुवादित्वात् । १२।३।१६। १६–१८ 'होममन्त्राणा समुच्चय' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प न द्रव्यस्य कर्मणो वा आग्रयणेषु । सकर्ष ३।१।११६ मीको पृ ८० आग्रयणेषु वत्तद्द्रव्यकाल्पना नियमो न विकल्प' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प न याज्या अप्रवृत्ति समुच्चये । पक्षे बाध स्यात् । भा ७।३।११।२९, ● विकल्प न भवति नानाकार्यत्वात् । ३।१।९।१२ पृ ६०७ ● विकल्प न मन्त्राणा नयस्तुत्याशीरभिधानानाम् । किन्तु समुच्चय । १२।४।१।१–२ मीको पृ १७४४ 'नयस्तुत्याशीरभिधानमन्त्राणा समुच्चय' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकल्प न सवनीयपशुगतप्रसङ्गस्य सवनीयपुरोडाशेषु किन्तु पाशुक तन्त्र पुरोडाशेषु प्रवर्तते ।

* यद्यपि तुल्यार्थत्वे नास्ति विकल्पः, भिन्नविषयत्वात् । ८।१।१५।४०. * समानविषयत्वे हि विकल्पो भवति । चा. २।१।१५।४७ पृ. ४५१. * समुच्चयासम्भवे च बाधविकल्पौ, न सम्भवति समुच्चये । भा. १०।३।८।२६. * विकल्पाः निरालम्बनाः । नहि नाम वस्तु जात्यादिभिः ( जाति-नाम-गुण-क्रियाद्रव्यैः ) योजयितुं शक्यते, तस्य विकल्पैरस्पर्शात् । किंतु तद्गृह्णन्तोऽपि विकल्पाः तद्ग्रहाभिमानिनो भासन्ते । तदभिमानानुरोधेन सदालम्बना इत्युच्यन्ते । परमार्थस्तु निरालम्बना एव ( इति बौद्धाः ) । ऋजु पृ. ४०. * विकल्पाः पुनः यथायथं मानामानविषयाः पञ्चधा । ( १ ) प्रकृतिमात्र एव ( २ ) विकृत्युपदिष्टपदार्थविषयाः ( ३ ) अप्रकृतिविकृत्यात्मककर्माङ्गोपदिष्टपदार्थविषयाः ( ४ ) विकृतौ उपदिष्टातिदिष्टपदार्थविषयाः ( ५ ) विकृतौ अतिदिष्टमात्रविषया इति । बाल पृ. १६२–६३. * एकस्मिन् कर्मणि भूयोमन्त्रत्वे मन्त्राणां विकल्पेन प्रयोगः । संकर्ष. १।२।३. मीको. पृ १००० 'भूयोमन्त्राधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * एकस्मिन् कर्मणि मन्त्राभेदेन मन्त्रनानात्वे विकल्पेन विनियोगः । संकर्ष. १।२।२. 'नियतकर्ममन्त्रन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । * ये हि एकस्मिन् कार्ये विकल्पेन साधकाः श्रूयन्ते, ते परस्परेण विरोधिनो भवन्ति । विरोधिना च न सह प्रवृत्तिः । लोकवत्– यथा 'मत्स्यान् न पयसा समश्नीयात्' इति । यद्यपि मधुरा मत्स्या भवन्ति, तथापि पयसा सह न समश्यन्ते । भा. १०।७।१९।६६. * विकल्पस्य अष्टदोषग्रस्तत्वेऽपि गत्यन्तराभावात् स्वीकारः. स्थीकार्यः व्रीहियवयोः, अतिरात्रे षोडशिग्रहे च । तथा हि प्रथमप्रयोगे व्रीहयः स्वीकृताः, न यवाः इति यववाक्ये प्रामाण्यपरित्यागः अप्रामाण्यस्वीकारः इति दोषद्वयं प्राप्तम् । कालान्तरे द्वितीयप्रयोगे यवाः स्वीकृताः न व्रीहयः तेन यववाक्ये एव त्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यपरित्यागः इति अपरौ द्वौ दोषौ इति यववाक्ये चत्वारो दोषाः सिद्धाः । तथैव च व्रीहिवाक्ये प्रथमौ द्वौ दोषौ उत्पन्नौ । पुनः कालान्तरे प्रयोगान्तरे व्रीहयः स्वीकृताः न यवाः, तदा व्रीहिवाक्ये तृतीयचतुर्थौ दोषौ उत्पन्नौ इति चत्वारो दोषा व्रीहिवाक्ये सिद्धाः । इति प्रयोगद्वयानुसारेण विचारे प्रतिवाक्यं चत्वारः चत्वारः अष्टौ दोषाः सिध्यन्ति । वि. १०।८।३. * 'विकल्पस्याष्टदोषत्वात् न तावत् समुपेयता' । तुल्यार्थविकल्पो हि तावत् अष्टदोषत्वात् अगतिकगतिन्यायेन कथंचिदेवाश्रीयते । 'एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ॥ सति त्वन्यतरे त्वेतद् नैव कल्पनमर्हति ॥' वा. १।३।२।३ पृ १७४–१७५. * विकल्पस्य चान्दाय्यत्वात् । अन्याय्यश्च विकल्पः । तत्र हि अभावः पक्षे । नित्यवच्च 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रूयमाणे यदभावः पक्षे परिकल्प्यते तदश्रुतं भवति, श्रुतं च हीयते । यावांश्च श्रुतस्यार्थस्योत्सर्गे दोषः तावानश्रुतपरिकल्पनायाम् । उभयत्र हि प्रसिद्धिर्बाध्यते । भा १।१।७। १४ पृ. ८४६, १०।८।१४, १०।८।८।१६. * विकल्पस्य तुल्यार्थत्वमात्रेण वक्तव्यत्वात् 'एकार्थास्तु विकल्पेरन्०' ( १२।३।१० ) इत्यत्र । सु. पृ ८००. * विकल्पे अष्टौ दोषाः । परिसंख्यायां दोषत्रयम् श्रुतहानिः, अश्रुतकल्पना, प्राप्तबाधश्चेति । वि. १०।७। १२ * विकल्पे अष्टौ दोषाः– प्रतीतप्रामाण्यत्यागः, अप्रतीताप्रामाण्यकल्पनम्, त्यक्तप्रतीतप्रामाण्यस्य पुनरुज्जीवनम्, अप्रतीतस्य अप्रामाण्यस्य कल्पितस्य त्यागः एतच्चतुष्टयं वाक्यद्वये इत्यष्टौ दोषाः । ( वस्तुद्वयविकल्पे ) । वाक्यत्रये द्वादश । वाक्यचतुष्टये षोडश इत्येवं रीत्या वाक्यानेकत्वे दोषवृद्धिरपि इति । बाल पृ. १५१– १५२, * विकल्पे अष्टौ दोषा भवन्ति परं न्यायगम्ये एव विकल्पे ते ते द्रष्टव्याः, न तु ऐच्छिकविकल्पे व्यवस्थितविकल्पे च । पृ. १६१–१६२. * विकल्पे ऐच्छिके अष्टदोषदुष्टत्वम्, न तु व्यवस्थितविकल्पे । संकर्ष. ३।३।९. * विकल्पे च पक्षे बाधः । भा. २।२।८।२२ पृ. ५३०. * विकल्पे बीजनैकार्थ्यमात्रम्, द्वारैक्ये सतीतरनरपेक्षत्वे साकांक्षत्वात् । कु. ३।१६।१२ पृ. २५५. * विकल्पे हेतुः एकार्थत्वम्, समुच्चयप्रमाणाभावश्च । प्रथम. १२।

रूप्यते । तेन एकस्मिन् पुरोडाशनिर्वृत्तिरूपोपकारे अन्यनिरपेक्षतया विनियोगेन निश्चित् आम्नानयोरपि (व्रीहियवयोः) पर्यायेणैव प्रयोगवचनग्रहणम्, न युगपत् इति न प्रयोगविधेरपि अन्यायप्रसक्तिः । निरपेक्षनिपातादेव च मिश्रत्वमपि अनुपपन्नम् ।

शि— ' समुच्चयो यवव्रीह्योर्विकल्पो वा, इत्र पूर्वपक्ष । आद्यो, नैव नैरपेक्ष्यश्रवणापेक्षयोऽन्तिम ॥ '

भाट्ट— यत्र स्थानान्तरकार्यान्वयेन यथा व्रीहियवादौ तत्र समुच्चयग्राहकप्रमाणाभावात् विकल्प एव । न च तत्र प्रयोगविधिना युगपदनुष्ठानोपसंग्रहात् समुच्चय, विनियोगानुसारेणैव हि प्रयोगविधिप्रवृत्तत्वात् । यत्र प्रमाणान्तरेण विनियोगविधिवाक्यप्रमाणान्तरकार्यैक्यं न निर्णीतं यथा प्रयाजादौ, तत्रैव प्रयोगविधिना एकवाक्योपादानेन साहित्यावगमात् समुच्चय । तावता च प्रयाजादौ कारणतावच्छेदकैक्यस्य कार्यतावच्छेदकैक्यस्य औत्सर्गिकत्वात् अपान्तरकार्यभेद एव निर्णीत इति तत्त्वम् । प्रकृते तु पुरोडाशनिष्पत्तिरूपावान्तरकार्यस्य एकस्यावगमात् प्रमाणान्तरविनियोगविध्यनुरोधेन प्रयोगविधिनाऽपि विकल्पेनैव ग्रहणम् । यद्यपि नैया अपाधिकरणोक्तरीत्या व्रीहियवत्वाविरूपकारणतावच्छेदकभेदेन आग्नेयत्वादिरूपकार्यतावच्छेदकरूपनम, तथापि आग्नेयत्व-यागत्वधर्मावच्छिन्ननिष्पत्तिसाधनतापुरोडाशनिष्पत्तिरूपावान्तरकार्यैक्ये प्रमाणाभावात् तत्रैक्यनिर्णय स्फुट एव । विनिगम च तथाक्रमे तृतीयस्य निरपेक्षसाधनत्वावगमात् नियमविधित्वेन च द्वयोरपि निवृत्तिरर्थात् नैकस्मिन् कार्ये व्रीहियवयो. समुच्चय सम्भव इति यत्र देवताधिकरणे कौस्तुभे । अतश्च व्रीहियवस्थले यागावृत्त्या मिश्रीकरणेन वा समुच्चयासम्भवात् विकल्पमङ्गीकृत्य एकेनैव कार्यसिद्धौ तत्प्रयोगे उभयप्रसङ्ग. । अत एव सर्वबाधकाभावमपि प्रयत्नपूर्वकमेव नुतम् । एवं च शास्त्रान्तरपर्यालोचनया यत्नान्तरकल्पिप्रयोगे एव व्रीह्यादेरन्यतरावगमात् तत्प्रयोगे तदितरस्थानपूरकत्वेन न प्रत्युपस्थापि ।

मण्डन— ' कार्यैकत्वे स्याद् गुणाना विकल्प. । '

शंकर— ' यवव्रीहिविकल्पनम् । '

● विकल्पगतदोषनिरूपणम् । तत्र द्वयोर्विकल्पे तावत् अष्टौ दोषा. । तथाहि, व्रीह्यनुष्ठाने यवशास्त्रस्य प्रतीतप्रामाण्यत्यागः, अप्रतीताप्रामाण्यस्वीकार चेति द्वौ दोषौ । तथा पुनः यवानुष्ठानसमये व्रीहिशास्त्रे त्यक्तस्य प्रतीतप्रामाण्यस्य पुनरुज्जीवनम्, अप्रतीतस्य प्रामाण्यस्य कल्पितस्य त्याग इति द्वौ दोषौ । तदेव व्रीह्यनुष्ठाने यवशास्त्रे द्वौ दोषौ व्रीहिशास्त्रे च द्वौ इति चत्वारो दोषा. । एवं यवानुष्ठानेऽपि व्रीहिशास्त्रे द्वौ दोषौ यवशास्त्रे च द्वौ इति चत्वार । एवं समुदाय विकल्पे अष्टौ दोषा. । एवं वस्तुत्रयविकल्पे प्रतिशास्त्र दोषचतुष्टयापत्तौ वस्तुत्रयविकल्पे एकशास्त्रकदया दोष चतुष्टयं द्वादश दोषा । ननु एकस्मिन् युगले दोषाष्टकप्रसक्तौ प्रतियुगलं दोषाष्टकयुक्ते. त्रिविकल्पे त्रीणि युगलानि इति चतुर्विंशतिर्दोषा स्यु । एवं चतुष्टयविकल्पे षड् युगलानि इति षडष्टकानि अष्टाचत्वारिंशत् दोषाः स्युरिति चेत्, न । स्यादि एतत् यदि सामयिकाना प्रामाण्यत्यागानाम्, सामयिकाना चाप्रामाण्यकल्पनाना भेद स्यात्, न तु तदस्ति । त्रिविकल्पे हि शास्त्रद्वयार्थानुष्ठानसमयद्वयेऽपि अननुष्ठीयमानार्थकतृतीयशास्त्रे एव प्रामाण्यत्याग. एक एव, न समयभेदाद्भिन्न । एवम प्रामाण्यकल्पनमपि ■ समयभेदात् भिन्नम् । ततश्च त्रिविकल्पे तृतीयशास्त्रे तौ द्वावेव दोषौ, तद्विपर्ययरूपौ च द्वावेव दोषौ इति द्वादशैव दोषाः इति द्विविकल्पप्रसक्तदोषाष्टकात् प्रतिशास्त्रं दोषचतुष्कस्यैव प्रवृद्ध चतुर्विकल्पे षोडश दोषा , पञ्चविकल्पे विंशति , षड्विकल्पे चतुर्विंशति, सप्तविकल्पे अष्टाविंशति , अष्टविकल्पे द्वात्रिंशत्, नवविकल्पे षट्त्रिंशत्, दशविकल्पे चत्वारिंशत् अग्निहोत्रहवण्या तेषु । एवमुत्तरत्रापि शास्त्रसंख्यातः चतुर्गुणा दोषा. ऊह्या । इति विकल्पदोषनिरूपणम् । बाल. पृ १५१–१५२.

● विकल्पप्रयोजननिरूपणम् । अथ द्वादशे अध्याये 'एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य' इत्यधिकरणे (१२।३।१०) व्रीहियवादीना विकल्पे एकार्थत्व हेतुरुक्त, तेन न

प्रसङ्गेन। अन्योन्यपक्षव्यावर्तने 'यदि प्रस्तोताऽपच्छिन्द्यात् ब्रह्मणे वरं दद्यात्, यदि प्रतिहर्ता सर्ववेदसं दद्यात्, यद्युद्गाता अदक्षिणो यज्ञः परिसमाप्य तेन पुनर्यजेत यत् पूर्वस्मिन् दास्यन् स्यात् तद् दद्यात्' इति निमित्त-दानादिनैमित्तिकविधीनां युगपदपच्छेदे विकल्प इति षष्ठे (६।५।१७–२०) उक्तम्। [५, ६] जातितदभावयोः द्रव्यतदभावयोश्च विकल्पयोः क्रमशः उदाहरणे यथा– वाजसनेयिनाम् 'ऋतु–नक्षत्र– ध्मार–चातु प्राश्य–आग्रयण– इष्टि–पूर्वापर्यारम्भण–काम्येष्टीनां वा कुर्वीत' इत्याद्यत्र श्रुतम्। तदिह नक्षत्रशब्देन कृत्तिकायुक्ते. जातितदभावयोर्विकल्पः। ध्मार–चातुः-प्राश्ययोश्च यौगिकत्वेन द्रव्यवाचित्वात् द्रव्य-तदभावयोर्विकल्पः। अत्र वाजसनेयकेऽपि न याच-निको विकल्पः, किंतु विधिनिषेधरूपात् न्याय्य एव इति बालबोधोऽनुवादः। [७] गुणतदभावयो-र्विकल्प क्रत्वर्थो यथा– दर्शपूर्णमासे वाजसनेयिना-मेव वेदिपरिमाणविशेषतदभावयोः, 'व्याममात्री पश्चात् स्यादित्याहुः' इति 'नात्र मात्राऽस्ति' इति च समाम्नानात्। [८] क्रियातदभावयोर्विकल्पः क्रत्वर्थो यथा– 'अतिरात्रे षोडशिनं गृह्णाति' 'नाति-रात्रे षोडशिनं गृह्णाति' इति।

तदेवमष्टविधो न्यायगम्यो विकल्पः। सोऽयं न्याय-गम्यो विकल्पः क्रत्वर्थपुरुषार्थभेदेन द्विविधः। तत्र क्रत्वर्थोऽपि क्रत्वर्थः उदाहृत एव। स च अष्ट-विध एव जातिद्रव्ययोः, जातिगुणयोः, जातिक्रिययोः, द्रव्यगुणयोः, द्रव्यक्रिययोः, गुणक्रिययोः इति द्विक-विषयाः षट्। तथा जातिद्रव्यगुणानां जातिद्रव्य-क्रियाणां जातिगुणक्रियाणां द्रव्यगुणक्रियाणां चेति त्रिक-विषयाश्चत्वारो भेदाः, तथा चतुष्कविषय एकः इत्ये-कादशभेदाः न संभवन्ति ऐकार्थ्याभावात्। पुरुषा-र्थस्य तु एतेऽपि एकादश संभवन्ति। पूर्वोक्ताश्चाष्टौ इति एकोनविंशतिविधोऽसौ। [१] तत्र न्यायगम्यः पुरुषार्थजात्योर्विकल्पो यथा– 'वानस्पत्येन ब्रह्मवर्चसकामस्य प्रणयेत्' इति वाजसनेयिनामुक्तम्। 'कांस्येन ब्रह्मवर्चसकामस्य प्रणयेत्' इति तु चतुर्थे उदाहृतम् (४।३।२।८ भाष्ये)। अत्र हि जातिरेव फलार्थं विधीयते। यथा हि 'औदुम्बरो यूपो भवति' इत्यत्र अविशेषेण 'यस्य पर्णमयी जुहूर्भवति' इत्यत्र च 'जुह्वा जुहोति' इत्यनेन द्रव्यप्राप्तेः जातिमात्रं क्रत्वर्थत्वेन विधीयते, तथा वानस्पत्यकांस्ययोरपि 'चमसेनापः प्रणयेत्' इत्यनेन आकारविशिष्टप्राप्तेः जातिरेव फले विधीयते। अत एव वानस्पत्यकांस्य-मये चमसाकार एव पात्रे गम्यते। तदुक्तं तन्त्ररत्ने चतुर्थे 'नैमित्तिकं विकारत्वात्' इत्यधिकरणे (४।३।२।८) 'ननु प्रणयने विशेषत एव चमसो विहितः। सत्यम्। न तु स कांस्यादिना विरुध्यते। आकारवाची हि चमसशब्दः, न प्रकृतिविशेषमपेक्षते। शक्यते हि कांस्येनापि तदाकृतिकं पात्रं संपादयितुम्, सामान्यविहितं दोषार्थं वारणमेव तेन विरुध्यते' इति ग्रन्थेन। तस्मात् जात्योरत्र एकस्मिन् फले विहितयोः न्यायगम्यो विकल्प इति। [२] न्यायगम्यः पुरुषार्थद्रव्यविकल्पो यथा– 'गोदोहनेन पशुकामस्य प्रणयेत्' इतिवत् यौगि-केनैव शब्देन द्रव्यान्तरस्य पशुफलार्थत्वेन विहितस्य विकल्पो भवति। [३] न्यायगम्यः पुरुषार्थगुणविकल्पो यथा– 'यदि कामयीत वर्षुकः पर्जन्यः स्यात् नीचैः सदो मिनुयात्' इति वृष्ट्यर्थविहितनीचैर्मानाख्यगुणेन सह पुरुषार्थविहितगुणान्तरस्य विकल्पः इति। [४] न्यायगम्यः पुरुषार्थक्रियाविकल्पो यथा– एतासां काम्येष्टीनाम्। [५–७] न्यायगम्यस्य पुरुषार्थजाति-तदभावयोः, द्रव्यतदभावयोः, गुणतदभावयोश्च विकल्पस्य उदाहरणानि मृग्याणि। [८] पुरुषार्था हि जातिद्रव्यगुणाः गुणफलसम्बन्धेनैव संभवन्ति, तेषां च निरपेक्षविषया निषेधाः यद्यपि अभाविप्रतिषेधसूत्रे (१।२।१।८) वार्तिक-कृता वैयर्थ्याभिरस्ताः, तथापि यत्र तद्विधाः गुणफल-सम्बन्धविषयः सामान्यतः प्रवृत्ताः, सामान्यत एव च तन्निषेधाः, 'अभिचारमहीनं च कृत्वा चान्द्रायणं चरेत्' इति काम्याहीननिषेधवत् तत्र पुरुषार्थस्यापि जात्यादितदभाव-विकल्पः संभवति। जातिकृदुक्तं तु वैयर्थ्यं निषेधस्य अनुष्ठानमात्रफलत्वाभ्युपगमेन। तस्य तु दोषार्थत्वात् वस्तुतो न वैयर्थ्यम्। निषेधाभावे हि कामस्य कामना-

विकल्प । [ ४ ] तथा 'चित्रया यजेत पशुकामः' इति पश्वर्थविहितचित्रेष्टिक्रियातद्भावयो ऐच्छिको विकल्प इति ॥

एवं ऐच्छिकविकल्पस्य एकोनविंशतिः क्रत्वर्थविषयाः एकोनविंशतिश्च पुरुषार्थविषया इत्येवं अष्टात्रिंशत् ऐच्छिकविकल्पभेदाः, पूर्वोक्ताश्च सप्तविंशतिः यथागम्यविकल्पभेदाः, अष्टात्रिंशच्च वाचनिकविकल्पभेदा इति सर्वे मिलित्वा त्र्यधिकं शतं ( १०३ ) विकल्पभेदाः सिद्धाः ।

पुनरपि द्विविधो विकल्पः पूर्वोक्तो यथासंभवं अव्यवस्थितो व्यवस्थितश्च । आद्यो यथा– अग्निहोत्रे दध्याद्य विकल्प । द्वितीयो यथा– 'व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत आ यवेभ्यः, यवैरिष्ट्वा यवैरेव यजेत आ व्रीहिभ्यः' इति व्रीह्याग्रयणोत्तरं व्रीहिभिरेव दर्शपूर्णमासौ कार्यौ यवाग्रयणावधि, यवाग्रयणोत्तरं च यवैरेव दर्शपूर्णमासौ कार्यौ व्रीह्याग्रयणपर्यन्तम् इति । यदा तु 'अग्निहोत्रीं वै तानादयित्वा तस्याः पयसा जुहुयात्' इति व्रीह्याग्रयणकाले, यवाग्रयणकाले च यवानग्निहोत्रधेनुं खादयित्वा तत्पयसा अग्निहोत्रहोमे कृते आग्रयणसिद्धिपक्षः तदा आग्रयणाभावादेव व्रीहियवयोरपि अव्यवस्थितविकल्प एव ॥ व्यवस्थितविकल्पस्तु द्विविधः यथागम्यो वाचनिकश्च । तत्राद्यो यथा 'क्षुरेणावद्यति' 'स्वधितिनाऽवद्यति' 'हस्तेनावद्यति' इति सहत-द्रव्य-मांसावदानेषु अव्यवस्थितविकल्पे प्राप्ते न्यायतो व्यवस्था उक्ता 'अर्थाद्वा कल्पनैकदेशत्वात्' इत्यत्र ( १।४।१८।२५ )। स्मार्तोदाहरणं तु 'प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि, पञ्च वा, ग्रहणान्तिकम्' इत्यव्यवस्थितविकल्प उक्तः स्मृतिपादे ( १।३ ) वार्तिककृता समर्थासमर्थगार्हस्थ्ययोग्यायोग्यविषयोऽयं व्यवस्थितविकल्प इति न्यायेन स्थापितम्, 'वेदान् अधीत्य, वेदौ वा, वेदं वाऽपि, यथाक्रमम् । सामर्थ्यासमयोग्यत्वमङ्गीकृत्यैवमुच्यते ॥' इति ( वा पृ १९२ )।

वाचनिकस्तु व्यवस्थितविकल्पः सप्तधा भवति । देशतः, कालतः, कर्तृतः, प्रयत, फलतः, निमित्ततः, अवधितश्चेति । [ १ ] तत्र देशतो वाचनिको व्यवस्थितविकल्पो यथा— तैत्तिरीयाणां श्रौतसूत्रे 'त्रयः परिधयः' इति परिधिषु विहितेषु पश्चाद्दक्षिणोत्तरेषु स्थविष्ठादीनां परिधीनाम् अव्यवस्थितविकल्पे प्राप्ते 'स्थविष्ठं पश्चात्, अणीयान् द्राघीयान् दक्षिणार्ध्ये अणिष्ठो ह्रसिष्ठ उत्तरार्ध्ये' इति देशतो व्यवस्थितविकल्प उक्तः । स्मार्तोदाहरणमपि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादौ यत्र वसन्तशास्त्रस्य तत्र त्रिकाण्डमण्डनेन 'श्रौतस्मार्तक्रिया सर्वा कुर्याच्चान्द्रमसेन तु' इति चान्द्रनियमे कृते 'अमावास्यया मासान् सम्पाद्य अहरुत्सृजन्ति, अमावास्यया हि मासान् सम्पादयन्ति पौर्णमास्या मासान् सम्पाद्य अहरुत्सृजन्ति पौर्णमास्या हि मासान् सम्पादयन्ति' इति श्रुत्युक्तस्य द्विविधस्य चान्द्रस्य सर्वदेशेषु अव्यवस्थितविकल्पे प्राप्ते त्रिकाण्डमण्डनेन, 'चान्द्रोऽपि शुक्लपक्षादिः कृष्णादिरिति च द्विधा । कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन । येऽपि चेच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे ॥' इति देशतो व्यवस्थितविकल्प उक्तः । [ २ ] कालतो वाचनिको व्यवस्थितविकल्पो यथा–दर्शपूर्णमासयोराज्यभागयोः क्रमे वार्त्रघ्नीयुगलं वृधन्वतीयुगलं च इति याज्यानुवाक्यायुगले पठिते तयोः पौर्णमास्याम् अमावास्यायां च अव्यवस्थितविकल्पे प्राप्ते 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्याम्' इति वचनात् कालतो व्यवस्थितविकल्पः । पौर्णमास्यमावास्याशब्दौ कर्मवाचिनौ अङ्गीकृत्य कर्मतो व्यवस्थितविकल्पोऽयं इति सोमेश्वरमतं ( सु पृ ७२७) अस्माभिः शास्त्रदीपिकाकारैः निरस्तम् । [ ३ ] कर्तृतो वाचनिको व्यवस्थितविकल्पो यथा– यजमाने व्रते तत्प्रकाशकस्य दर्शपूर्णमासप्रकरणपठितस्य 'अग्ने व्रतपते०' 'वायो व्रतपते०' 'आदित्य व्रतपते०' इति मन्त्रत्रयस्य ब्राह्मणक्षत्रियवैश्येषु अव्यवस्थितविकल्पे प्राप्ते ब्राह्मणादिकर्तृत्वेन क्रमेण व्यवस्थितविकल्प उक्तः । स्मार्तोदाहरणमपि आश्वलायनगृह्यसूत्रे, 'यदि वासांसि वसीरन् रक्तानि वसीरन् काषायं ब्राह्मणो, माञ्जिष्ठं क्षत्रियो, हारिद्रं वैश्यः' इति । अत्र वृत्तौ 'वासांसि वसीरन्' इति अजिनेन पूर्वविहितेन सह वैकल्पिको वासोविधिः इत्युक्तम् । तथा 'यदि रक्तानि वसीरन्'

इति पदिशब्दस्य व्यवस्थिता बोऽङ्गीकृत । तत्र भाषाया दीना अव्यवस्थितविकल्प ब्राह्मणे प्राप्ते ब्राह्मणादि पर्यन्त बाधादे व्यवस्थितविकल्प । [ ८ ] क्रमतो व्यवस्थितविकल्पो यथा—चरणप्रयाणेषु 'द्वादशी प्राश्न' इति विहाय्य विहितम्, तस्य अव्यवस्थितविकल्पो नरहविरासादन प्राप्त तत्र 'अश्वत्थसंवत्सर विहार हवींष्यासादयति, माध्वतीमेव दक्षिणस्यारा इनिश मिन् इति माध्वी पतितत्त्व हविरासादन माध्वी हविरासादनात्परमत विहारद्वयस्य व्यवस्थितविकल्प । [ ७ ] फलतो व्यवस्थितविकल्पो यथा—ज्योतिष्टोमे पोड शिसस्ये 'सौभरमुत्तरयाना ब्रह्मसाम भवति' इति उक्त्वा नयनसाम्यान्तोनमधनत्वेन ( उत्तममये ब्राह्मणाच्छंसि सर्वपिस्तोत्रसाधनत्वेन ) नित्य सौभर विहितम्, ज्योति ष्टोमातिरात्र तु 'यदि बृहत्साम अतिरात्र स्यात् सौभर मुत्तमाना ब्रह्मसाम कार्यम्' इति ब्रह्मसामत्वेनैव नैमित्तिक 'यदि रथन्तरसामा सौभर कुर्यात्' इति सोमस्यनगेऽपि नैमित्तिक विहितम् । अतो नित्य नैमित्तिक च सौभर पुन फलसाधनत्वेन विहित 'यो वृष्टिकामो, यो न्ना द्यकामो, य स्वर्गकाम, स सौभरेण स्तुवीत' इति । सौभरस्य च फलानामनीशस्य नानानिधनकस्य अत्र व्यवस्थितविकल्पे प्राप्ते 'हीष् इति वृष्टिकामाय निधन कुर्यात्, ऊर्क् इत्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय' इति तत्तत्फले तत्तन्निधनकस्य सौभरस्य विधानात् फलतो व्यवस्थितविकल्प । [ ६ ] निमित्ततो व्यवस्थितविकल्पो वाचनिको यथा—'दशाह शावमाशौच सपिण्डेषु विधीयते । अर्वाक् सञ्चयनादस्था त्र्यहमेकाहमेव वा ॥' इत अशौचविषयेन चतुर्णां पक्षाणाम व्यवस्थितविकल्पे मनुना उक्ते 'उपनीते तु नियम' इति स्मृत्यन्तरात् 'दन्तजातेऽनुजाते च कृतचूडे च संस्थिते' इति मनुवचनान्तरे चोपक्रमस्थे अनुलोमक्रमे अशौचविधान दन्तजाते दशाहपक्षे कृतचूडे च एका हपक्षे । तत्र च 'निर्वृत्तचूडकाना तु त्रिरात्राच्छुद्धि रिष्यते' इति मनुनैव विरोधापत्ते प्रतिलोमक्रमाश्रयणेन दन्तजाते एकाह, अनुजातमपत्य वशात् न्यादृशो त्र्यह कृतचूडे चतुरह, उपनीते दशाह इति व्यवस्थित विकल्पो विरोधाधिकरणे ( १।३।२।३ ) वार्तिककृता उक्त । अस्मिन् पक्षे निवृत्तचूडकाना इति त्रिरात्रपक्ष प्रथमवर्षादूर्ध्व कृतचूडविषय, चतुरहस्तु तृतीयवर्षकृतचूड विषय, अकृतचूडे त्वपि त्र्यह एवेति प्रकारान्तरे णापि व्यवस्थितविकल्पो वार्तिके दर्शित । 'ब्राह्मणस्य स्वाध्यायाभिवृत्त्यमम्' इति गौतमवचनात्, 'एकाहाद् ब्राह्मण शुध्येद् योऽग्निवेदसमन्वित । त्र्यहात् केवलवेदस्तु द्विहीनो दशभिर्दिनै ॥' इति स्मृत्यन्तराच्च त्रिवेदस्याग्निमत एकाह, द्विवेदस्य चतुरह, अग्निरहितस्य दशाह इत्य यमेव पक्ष आदृतो मेधातिथिविज्ञानेश्वरादिभि । अनु जातपदव्याख्या मेधातिथौ 'अनुजातो दन्तजातात् बाल तर इति स्मरन्ति' इति, तत् 'दन्तजातानुजाता यद्दत्तचूडेषु च क्रमात् । त्रिनिक्रिया यद्दैकाह्न' इति वार्तिकविरोधाद् उपेक्ष्यम् ( वा पृ १९० ) । अत्र हि क्रमग्रन्थस्य प्रतिलोमक्रमपरतोक्तेः दन्तजातविषयात् एकाहात् अधिकत्र्यह अनुजातविषय उक्त । स दन्तजातात् परतरे अनुजातशब्दार्थे सत्येव विषयविरोधेनेति । [ ७ ] अर्थतो व्यवस्थायास्तु उदाहरण मुक्तमेव 'व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत' इत्यादि ।

सर्वस्मिंश्च व्यवस्थितविकल्पे पूर्वोक्ता अष्टौ दोषा न सन्ति इतरेतरविषये इतरेतरशास्त्रप्रवृत्त्यभावेन एका नुष्ठानेऽपि इतरशास्त्रस्य प्रतीतप्रामाण्यत्यागाद्यभावात् । 'व्यवस्थितविकल्पे च दोषाष्टक नास्ति' इति शास्त्रा न्तराधिकरणे ( २।४।२ ) 'न चैक प्रति शिष्यते' इति सूत्र ( १९ ) 'अथ तेषा विकल्पेनाभ्युपगमम्, तत्र शाखान्तराणामेव व्यवस्थितविकल्पत्वाज्ञानात् अनाकुलत्व कल्पितम्' इति वार्तिके ( पृ ६४० ) अनाकुलत्व इत्यनेनोक्तम्, भट्टसोमेश्वरेण व्याख्यात 'पूर्वपक्षिणा ( मुखमूले नासीत् पक्ष ) प्रतिचरण अग्निहोत्रादि म वस्थाऽनभ्युपगम निरपेक्षसाधनत्वेन समुच्चयायोगात् एवे नैव ( अग्निहोत्रादिना सर्वेषु फलसिद्धे ) शाखान्तरी याग्निहोत्राद्यानर्थक्यापत्त विकल्पनाश्रयत्व वाच्यम्, तच्च कर्मैक्याभ्युपगमेन शाखानामेव व्यवस्थितै कल्पादिचरणे प्रतिपद्यमानत्वेन अष्टदोषत्वनिमित्ताकुलत्वानापादकत्वात् कल्पित वरम्' इति ( न्यु पृ ९९२ ) । एव ऐच्छिक

तव्यः, न चेति विचारे सिद्धान्तमाह । यजमाने यजमानप्रधाने कर्मणि विकारः यजमानपदस्यैकवचने ऊहः 'यजमानो आयुराशास्ते', 'यजमाना आयुराशासते' इति यथायथ स्यात् । यदि सूक्तवाकः प्रस्तरप्रहरणे तत्साधन संस्कार वा प्रकाशयति । प्रहरणफल च आयुराशासन यजमानस्य इति यजमानस्य प्राधान्यम् । तस्मात् यत्र अनेके यजमानाः तत्रोहः कर्तव्यो भवति वचनस्य । के.

* विकारो न अग्निगुप्रैषगतस्य 'प्रास्मै' इति पदस्य अग्नीषोमीयसवनीययो समानविधित्वपक्षे । ९।३।८।१३. मीको. पृ. ३६९. 'अध्रिगुप्रैषगतस्य प्रास्मै इति पदस्य०' इत्यत्र अधिकरण द्रष्टव्यम् । * विकारः नाम कार्यान्तरिप्रमाणम् । बाल. पृ. ८.

विकारः सन्नुभयतोऽविशेषात् । ६।७।५।१८ ॥

विश्वजित् यागः ज्योतिष्टोमस्य विकारः, ज्योतिष्टोमे च द्वादशशतं दक्षिणा । तेन द्वादशशतधनेन यजमानेन ज्योतिष्टोमस्य विकारः सन् विश्वजित् कर्तुं शक्यते एव । अथ द्वादशशतात् धनात् न्यूनधनेन अधिकधनेनापि वा उभयत न्यूनाधिकोभयपक्षयोरपि कर्तुं शक्येत । अविशेषात् विशेषाभावात् । तत्र हि सर्वस्य देयम् । यस्य च यावत् धनं तत् सर्वं स्वम् । तस्य परिमाणेन द्वादशशतात् न्यूनं वा स्यात् अधिकं वा स्यात् । यावत् धनं तावति सर्वस्मिन् दत्ते सर्वस्वदानस्य न विशेषोऽस्ति । तस्मात् द्वादशशतात् न्यूनधनेन अधिकधनेन वा सर्वस्वं दत्त्वा विश्वजित् कर्तव्यो भवति इति पूर्व पक्ष ।

अधिकं वा प्रतिप्रसवात् । १९ ॥

द्वादशशतात् अधिकधनेन न्यूनधनेनापि वा विश्वजित् कर्तव्यः इति प्राप्ते पूर्वपक्षे वाशब्देन निरस्यन् सिद्धान्तमाह । यस्य द्वादशशतात् अधिकं धनं आनागनीयं स्यात् तेनैव विश्वजित् कर्तव्य, न तु ततो न्यूनधनेन । प्रतिप्रसवात् । ज्योतिष्टोमे तावत् सर्वस्वस्य प्रतिप्रसव उच्यते । द्वादशशतं विधाय तत्र आह 'एतावता वाव ऋत्विज आनमनीया अपि वा सर्वस्वेन' इति । तत्र यदि ऋत्विजः द्वादशाधिकेन शतेन नानमन्ति, नानमन्तितरां ततो न्यूनेन धनेन । तथा च अत्र सर्वस्वशब्देन अधिकमेव ग्राह्य भवति । यथा च ज्योतिष्टोमे तथैव विश्वजित्यपि । तस्मात् द्वादशशतं ततो अधिकं सर्वस्वम् । तस्मात् न्यूनधनस्य नाधिकारः । अत्र भाष्यात् द्वादशशतधनेन ततोऽधिकधनेन वा विश्वजित् कर्तव्य इति सिध्यति । सूत्रस्वारस्येन तु द्वादशशतादधिकधनेनैव विश्वजित् कर्तव्यः इति सिध्यति इति विशेष ।

अनुग्रहाच्च पादवत् । २० ॥

यस्य द्वादशशतादधिकं धनं तेन विश्वजित् कर्तव्यः इति उक्ते सिद्धान्ते हेत्वन्तरस्य कथनपरं सूत्रम् । इतस्य सर्वस्व नाम द्वादशशतादधिकं धनम् । अधिके हि दीयमाने तदन्तर्गतत्वात् द्वादशशतमपि दत्तं भवति । तत्र सर्वस्वदाने अधिकाय धनस्य अनुग्रहो भवति । पादवत् यथा कार्षापणे दत्ते कार्षापणपादोऽपि दत्तो भवति । तत्र कार्षापणदाने पाददाने अनुग्रहः क्रियते । तद्वत् । तस्मात् द्वादशशताधिकधनस्यैव विश्वजिदधिकार इति सिद्धान्तः । पादः चतुर्थोऽशः । के.

* विकारास्तु कामसंयोगे नित्यस्य समत्वात् । ३।६।१६।४३ ॥ नित्यस्याश्रयस्य अवध्यादि काम्यो गुणो विकार इति नित्यत्वसाम्येन आश्रयस्य नित्यधर्माश्रयानिरोधात् इति न्यायसूत्रम् । तस्याधिकरण सिद्धान्तसूत्रमिदम् । सु. पृ. ८४८. * 'तत्कोपकार साक्षादुक्ता. प्रथम प्राकृते. सह । संबध्यन्ते, समीपस्थ विकारा. प्रोक्तस्य चोदितम् ॥' वा २।१।४।१२५ ४१४. * विकारेण प्रकृतिलिङ्गसंयोगो यथा— 'नैर्ऋतश्चरुर्नगावपूतानाम्' इति । भा १०।४।२।२ । तत्र दुग्धकणाविमोक दृष्ट्वा फलम्, नूतनघातकार्ये पतति नानात्मन मिति । दुप् * 'विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् । १२।१।१।८ ॥ गुणकालविकारात् न तन्त्रभेद स्यात् यतापि तद्विकारे अर्थस्य अङ्गजन्योपकारस्य अविकृतत्वात् इत्यर्थः । मीम. १२।१।२ पृ ८४५. * यदि च सत्यपि प्रयोजनत्वे कार्याभावात् नुष्ठानं ततो वरुणप्रघासेषु उत्तरवेदिहरिकैरेवाङ्गैर्मारुत्याः नार्गसिद्धे, सत्यपि देशभेदे कर्तृभेदे च 'विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात्' इत्यनेन न्यायेन पृथगङ्गानि न क्रियेरन् । शा. १२।१।२. * विकाराणां सोमस्य दर्शपूर्णमासोत्त-

कालता । ५।८।१।२८. ' सोमविकाराणां दर्शपूर्णमासाभ्यां प्राक् नानुष्ठानम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

ख़ विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात् स्यात् । ५।२।८।१६॥

अग्नीषोमीये पशौ ' पृषदाज्येन अनुयाजान् यजति ' इत्युक्तम् । तत्र प्रयाजानुयाजाज्यधारणार्थं यत् उपभृन्नाम पात्रम्, तदेव पृषदाज्यमपि धारयेत् उत पृषदाज्यधारणार्थं भिन्नं पात्रं स्यात् इति विचारे उपभृत्पात्रेण प्रकृताविव एकमेव पात्रं स्यात् इति उत्पन्ने पूर्वपक्षे प्राप्ते तुशब्देन तं निरस्य सिद्धान्तमाह । अनुयाजानां विकारे प्राकृतद्रव्यात् वैरूप्यदर्शनात् अन्यद्रव्यत्वे पशौ पृषदाज्यद्रव्यत्वे सति पृषदाज्यधारणार्थं पात्रभेदः भिन्नं पात्रं स्यात् । अर्थभेदात् घृतस्य आज्यस्य प्रयाजार्थत्वात् पृषदाज्यस्य च अनुयाजार्थत्वात् । अर्थभेदात् द्रव्यभेदात् इति वा । नहि द्रव्यद्वयं भिन्नं एकपात्रे प्रणीतुं शक्यम् । के.

* विकारेषु प्रकृतिवदुपचारः । शा. २।२।६।१७ पृ. ५१२.

* विकारपक्षे तु ज्ञायते प्राकृतस्य पूर्वस्य सर्वस्य इष्टे अपवादविषये अन्यतरस्मिन् कर्मणि निवृत्ते प्राकृत एव हान्तं भवति इति बाधप्रसङ्गः । शा. १।६।१६।४२ पृ. १०५५.

* विकारो ईप्सितं कर्म । प्रकृतहस्तिविनाशोत्पादन विकृतिः । यथा ' सीदीगनद्दणि ' । मणि. पृ. १२१.

* विकृतिः अग्नीषोमीयपशुः सान्नाय्यस्य । ८।२।२।१०–१४. मीको. पृ १०० 'अग्नीषोमीयः पशुः सान्नाय्यविकार ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिः अग्नीषोमीयपशुः सान्नाय्यस्य । तथापि पयसः न दधः । ८।२।३।१५–१८ मीको. पृ १०० ' अग्नीषोमीयः पशुः पयोविकारः ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिः नाम्ना, निमित्तेन वा चोद्यते । शा. १२।२।६।२१, * विकृतिः नाम्नि वा निमित्ते वा सत्यते आगच्छति । १२।२।१३।१६. * विकृतिः प्रकारमपेक्षते । स चैकः प्रकारः ( विकृत्या अपेक्ष्यते ) । प्रकारापेक्षायां प्रमाणमस्ति । न सादृश्यापेक्षायाम् । लौकेन साधयेत् । कथं हि अपेक्षाया सादृश्येन आग्नेये बुद्धिर्भवति । आग्नेयेनापि प्रकारः ( सङ्गताः प्रथममुपस्थाप्यन्ते ) । तत्र एतानि विकृतिः । ते चापेक्षिताः । शास्त्राणि पदार्थाश्च अनपेक्षितानि, व्यवहितानि च । तस्मात् कृत्स्न चोदकः प्रापयति । कृत्स्नप्रापितवाक्योपसंहारः । टुप्. १०।७।१।३१.

ख़ विकृतिः प्रकृतिधर्मत्वात् तत्काला स्याद् यथाशिष्टम् । ५।१।११।१९ ॥

वाजपेयाख्ये तृतीये पर्वणि प्रथमदिने ' अग्नये ऽनीकवते प्रातरष्टाकपालं, मरुद्भ्यः सान्तपनेभ्यो मध्यंदिने चरुः, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम् ' इति इष्टित्रयं विहितम् । इदं यथाकालं स्वतन्त्रकाले वेति विचारे पूर्वपक्षमाह । विकृतेः प्रकृतिधर्मत्वात् अनीकवत्यादिविकृतिः यथाशिष्टं तत्काला प्रकृतिकाला स्यात् । प्रकृतेरेव धर्मा यस्याः सा प्रकृतिधर्मा विकृतिः । प्रकृतिधर्मैः सा च प्रकृतिधर्मेत्युच्यते तस्मात् । विकृतौ अतिदेशेन प्रकृतेर्धर्मा एव भवन्ति । प्रकृतिश्च दर्शेष्टिः द्व्यहकाला । कालोऽपि धर्मविशेषः । तस्मात् यथाशिष्टं चोदकेन शिष्टं विहितं प्राप्तिं अनतिक्रम्य द्व्यहकालत्वमनतिक्रम्य तत्काला तस्याः प्रकृतेः काल इव कालो यस्याः विकृतेः सा विकृतिः तत्काला द्व्यहकाला स्यात् । तस्मात् आनीकवतीसान्तपनीयागृहमेधीयाः द्व्यहकालाः स्युः इति पूर्वः पक्षः ।

अपि वा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात् प्रकृतिधर्मलोपः स्यात् । २० ॥

साकमेधेषु अनीकवत्यादीष्टयः द्व्यहकालाः स्युः इति पूर्वपक्ष प्राप्तस्थे. अपि वा– शब्दः । आनीकवती, सान्तपनी, गृहमेधीया च इष्टिः क्रमकालसंयुक्ता । क्रमश्च कालश्च ताभ्यां संयुक्ता । वाक्यस्थ इत्थं. क्रमेणोक्ताः । प्रातः मध्यन्दिने सायं इति तासां कालाः उक्ताः । तस्मात् सा सा इष्टिः सद्य एव क्रियेत । तत्र सद्यस्कालत्वे साक्षाद् विहितेऽपि 'सद्य कार्या.' इति विधेः क्रमकालविधानेन अनुमानात् । यस्मादेताः विशिष्टक्रमकालसंयुक्ताः तस्मात् सद्य कार्याः इति अनुमीयते । तस्मात् प्रकृतेः दर्शेष्टेः यो धर्मो द्व्यहकालत्वम्, तस्य लोपः स्यात् अनीकवत्यादिषु । तथा च एताः सद्यस्काला न द्व्यहकालाः ।

कालोत्कर्ष इति चेत् ॥ २१ ॥

साकमेधीये तृतीये पर्वणि पूर्वदिने अनीकवती-सान्तपनीयागृहमेधीया इष्टयः क्रमेण प्रातः, मध्यंदिने, सायं चेति विहिताः । ताः सद्यस्काला भवेयुः इति सिद्धान्तिना उक्ते पूर्वपक्षी आह । ननु कालस्य उत्कर्षः स्यात् । पूर्वदिने प्रातर्मध्यंदिने सायं चेति इष्टयः उपक्रम्यन्ते, परेद्युः प्रातर्मध्यंदिने सायं चेति समाप्यन्ते । न च चोदकस्य प्रातरादिकालविधेश्च विरोधोऽस्ति । तस्मात् ग्रहकाला एता इति ।

न तत्संबन्धात् ॥ २२ ॥

साकमेधाख्ये तृतीये पर्वणि पूर्वदिने प्रातर्मध्यंदिने सायं इति विहितानां अनीकवतीसान्तपनीयागृहमेधीयाना-मिष्टीनां कालोत्कर्षेण ग्रहकालत्वं पूर्वपक्षिणा पुनरुक्तं सिद्धान्ती निषेधति । न कालोत्कर्षः कर्तुं शक्यते । तत्संबन्धात् अङ्गैः सह प्रधानानां एकेनैव प्रातरादि कालेन संबन्धात् संबन्धस्य भवनात् । तत्र अन्यकालेषु अङ्गेषु अन्यकालेषु च प्रधानेषु कृतेषु न खलु तेषु कालेषु कृतं स्यात् । तस्मात् न ग्रहकालता किंतु सद्यस्कालतैव । के.

* विकृति. प्राकृतान् धर्मान् चोदकेन गृह्णाति । भा. ५।४।७।२२ * विकृति । यत्र न समग्राङ्गो-पदेशः सा विकृतिः । यथा सौर्यादिः । विकृतौ हि प्रायः प्रधानमेव, नवीनं हि विधीयते अङ्गकलापस्तु अन्यतो गृह्यते । यतो गृह्यते सा प्रकृतिः, यत्र गृह्यते सा विकृतिः । प्रकृतिविकृतित्वं चेदं पारिभाषिकमेव । न तु सूत्रम् यदवश्य पाठ्यम् । मीन्या. * विकृतिर्हि उप-कारकाङ्क्षिणी कल्प्तोपकारान् पदार्थान् उपमितपक्षित-प्रापणेन गृह्णाति । टुप्. ४।१।१।७. * प्रकृत्या हि विकृतिः तुल्यशब्दा भवति । भा ८।१।१।२५. * विकृतयः ऐन्द्राग्नादयः साङ्गाः पौर्णमास्याममा-वास्यायां वा कर्तव्याः 'य इष्ट्या पशुना॰' इति वच-नात् । तेन सद्यस्काला विकृतयः । ५।४।७।२२-२४. मीको. पृ. ११२० 'ऐन्द्राग्नादीनां विकृतिरूपाणा-मिष्टीनां सद्यस्कालता' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतयः महाप्रकरणोपनिपातिन्यः क्रमप्रकरणयोः क्रमस्य अर्थविप्रकर्षे उदाहरणम् । तासु हि यत् प्राकृताङ्गमप्यशक्तित्वेन नोत्पन्नं तत् पुरस्तात् परस्तात् वा अव्यवस्थितक्रमभाग् भवति, प्रकरणस्य कल्प्तोपकारे प्राकृते व्यापारित्वात् । वा. ३।३।७।१४ पृ. ८३३, * विकृतयः प्रागनन्यागापेक्षित्वात् स्वप्रकरणस्थानमपि अतिक्रम्य प्राकृतं वदन्ति इति सर्वत्र व्यापकत्वात् । ३।६।१।८. * विकृतयः सद्यस्काला । भा.५।४।७।२४, * विकृतयः सर्वाः पूर्वभागाः, चोदनावाक्यानां अवसा सत्वात् । ८।१।१६।२८. * विकृत्या प्रकृते. प्रधान-प्रसङ्गसिद्धिः यथा तीर्थश्राद्धेन दर्शश्राद्धस्य । बाल. पृ. १४९, * विकृते. गवामयनप्रकरणे सदशोदभूनिक वरुणप्रघासानामुक्तं सप्तमे प्रणयनाधिकरणं । तत्र हि 'उपाय वपन्ति' इति वरुणप्रघासाश्वमेधप्रकरणपाठीतमपि 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति पर्युदासैकवाक्यता वरुणप्रघासाप्रकरणे बाधित्वा चातु-र्मास्यानामेव 'अत्र' इति वाद इत्युक्तम् । पृ ११-११. * विकृते. उपकारकपदार्थाकाङ्क्षा न तु प्राकृतपदार्थ-मानस्याकाङ्क्षा । मीन्या.

सू विकृतेः प्रकृतिकालत्वात् सद्यस्कालोत्तर विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् । ५।४।७।२३॥

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम.' इत्यादिः उक्ता दर्शपूर्णमासाभ्यामुपरिष्टात् कर्तव्या विकृतिः उप-स्थाप्य स्यात् । वेदिकरणादि च इतराङ्गसहितं प्रधानं च एकस्मिन्नेवाहनि कर्तव्यम् । तयोः अमावास्यापौर्णमासी रूपकालयोः 'य इष्ट्या पशुना वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा' इति वचनेन प्रत्यक्षेण शिष्टत्वात् विहितत्वात् । ग्रहकालत्वे गृहीते तु प्रकृतिकालव्यवधानात् दर्शपूर्णमासयोः प्रकृतेर्यत् ग्रहकालत्वं चोदकेन प्राप्तम् । तत्र अनुष्ठाने ग्रहणप्रसङ्गः । परंतु तत् आनुमानिकत्वात् प्रत्यक्षविधानेन बाध्यते । तस्मात् सद्यस्कालत्वं इति सिद्धान्तः ।

'उत्तरा विकृतिः' इत्यत्र 'उत्तरा सति.' इति मोम-यू-कु-पाठः । तनु विस्तारे इति धातोरतिशयस्य-निष्पत्तिः । तति इष्टिसमुदाय. इत्यर्थ. । इति पक्षेऽपि अर्थः समानः ।

'उत्तरा तति.' अत्रैव पाठो युक्त.। विकृतिः इति पाठे तु उत्तरा इति विशेषणं व्यर्थं भवेत्। तस्मात् भाष्ये ततिशब्दाभावेऽपि सुत्यातोत्तरेतिविशेषणत्वात् 'तु' पुस्तकपाठ एव साधीयान्।

द्वैयह्नकाल्ये तु यथान्यायम्। २३॥

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम.' इत्यादिः उक्ता विकृति. सवनकाले इति मतेन सिद्धान्ते उक्ते तुशब्देन तं निरस्यन् पूर्वपक्षमाह। सवनकालत्वं न युक्तम्। द्वैयहकाल्ये द्व्यहकालत्वे तु स्वीकृते यथान्याय अतिदेशत्वं न्यायमनतिक्रम्य अनुष्ठानं स्यात्, तच्च युक्तम्। तस्मात् इष्टिरियादौ कर्तव्ये एव। द्व्यहकालामभिनिर्वपेत् तदहरेव द्वितीयमुपक्रम्य तृतीयेऽहनि समापनीया इत्यादि। द्वे अहनी कालः यस्या. सा द्व्यहकाला, द्व्यहकालाया भाव द्वैयहकाल्यम्। 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' (पा. ७।३।३) पदान्ताभ्यां यकारवकाराभ्यां परस्य आदेरच वृद्धिर्न स्यात्। किंतु ताभ्यां यकारवकाराभ्यां पूर्वौ ऐजागमौ ऐकारौकारौ क्रमेण स्त.। इत्यनेन 'द्व्यह' इत्यस्य 'द्वैयह' इति निष्पन्नम्। 'द्वैयत्रे वा यथान्याय' इति भ–कु पाठे वाशब्द. सिद्धान्तपक्षनिरासार्थ। द्व्यहस्य भाव. द्वैयह्न इति विग्रहः। अर्थस्तु उक्त एव।

वचनाद्वैककाल्यं स्यात्। २४॥

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम' इत्यादय. दर्शपूर्णमासाभ्यामुक्ता विकृतय. द्व्यहकाला. स्युः, न सवनकाला इति सूत्रेण पूर्वपक्षे प्राप्ते पुन. सिद्धान्तमाह। वाशब्द. पूर्वपक्षनिरासार्थ.। 'य इष्ट्या पशुना सोमेन वा यजेत स पौर्णमास्याममावास्यायां वा यजेत' इति सांगसहितप्रधानानुष्ठानस्य प्रयोगस्य विधायकात् वचनात् ऐककाल्यम्, एकः अहोरूप. काल. यस्या. सा एककाला, तस्या. भाव. ऐककाल्यम्, एकाहकालत्वं सवनकालत्व स्यात्। वचनेन चोदकस्य बाध इति भावः। के.

सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत्। २५ सिद्धान्तसूत्रम्॥

सान्नाय्य शृत दधि च अमावास्यायाम्। तद्विकारा. आमिक्षा पशुश्च इति। अग्नीषोमीयपुरोडाशस्य विकाराः 'अग्नीषोमीयमेकादशकपालं निर्वपेच्छ्यामाक' इत्यादयः सोमात् अग्निष्टोमानुष्ठानोत्तरं स्यु., न प्राक्। प्रकृतिवत्। दर्शगतसान्नाय्यरूपा प्रकृति.। पौर्णमासीगताग्नीषोमीय पुरोडाशरूपा प्रकृतिश्च यथा इष्टिपूर्वाधानपक्षे सोमादूर्ध्वं भवति तद्वत्। प्रकृतिवत् विकृतिः इति न्यायात्।

तथा सोमविकारा दर्शपूर्णमासाभ्याम्। २६॥

अतिदेशेन सिद्धान्तमाह। यथा सान्नाय्याग्नीषोमीयपुरोडाशविकाराः सोमादूर्ध्वं तथा सोमविकारा. ज्योति. गो. आयु. इत्येवमादय., ते दर्शपूर्णमासाभ्या मूर्ध्वं स्यु। प्रकृतिवत्। यथा प्रकृतिः अग्निष्टोम., इष्टिपूर्वाधानपक्षे सोमादूर्ध्वं भवति, तद्वत् विकृतिरपि। के.

* विकृतेः महाप्रकरण सदृशेन असदृशेन च भवति। बाल. पृ. ९, * विकृतेः महाप्रकरण सदृशोद्भूतिर प्रकृतेस्तु असदृशोद्भूतिकम्। पृ ११, * विकृत्योः प्रधानत्वं यथा– आहिताग्नेः युगपदग्नेर्गृहदाहादौ क्षामवत्यादीनाम्। पृ. १८८, * विकृत्यो. प्रधानप्रसक्तौ यथा– या विकृतयो निमित्ते काम्ये च विहिता., तत्र काम्यप्रयोगेण नित्य–(नैमित्तिक) प्रयोगस्य प्रसङ्गसिद्धिः। स्मार्तोदाहरण तु दर्शश्राद्धविकृतिभूतयोः महालय–नित्यश्राद्धयो. पूर्वेण उत्तरस्य प्रसङ्गसिद्धिः। पृ. १८९, * विकृतीनां अविरुद्धत्व यथा प्राकृते स्वरत्वे प्राप्त प्रत्यक्षोपदेशवशेन प्रधानेऽसत्यसक्तौ 'तदुत्पत्तेर्वा स्वधर्मः स्यात्' (१०।७।२४।५१) इत्यनेन न्यायेन प्रयोगवचनस्य चोदकापेक्षितत्वेन दुर्बलत्वात् चोदकप्रापितस्वरधर्मत्वम्। शा. ३।३।२।९ पृ. ८११ * विकृतीनामैन्द्राग्नादीनां सवनकालता। ५।४।७। २१–२४. मीको. पृ ३३२० 'ऐन्द्राग्नादीनां विकृतिरूपाणा॰' इत्यत्र द्रष्टव्यम्। * विकृतौ अभिधानस्य अतिदेशः। १०।८।११।२३–२८. मीको. पृ. १२७ 'अन्यतिथ्याद्यधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम्। * विकृतौ अग्निशब्दस्य ऊह निर्वापमन्त्रे। ९।१। १३।३८–३९ मीको. पृ १२२६ 'ऊह अग्निशब्दस्य विकृतौ निर्वापमन्त्रे' इत्यत्र अधिकरणं द्रष्टव्यम्। * विकृतौ अतिदिष्टानां प्रकृतानामपि संभवादिना बाध। (आट्ट. १०।१।१), * विकृतौ अतिदिष्टपदार्थे

विषय. समुच्चय. 'मसने उभे कुर्यात्', 'गोसने उभे कुर्यात्', 'अपचितो अपि एकाहे उभे बृहद्रथन्तरे कुर्यात्' इति। बाल. पृ. १७७ • विकृतौ अपि उद्देशदेशनामेव उपलक्षण न्यायेन अनुगमद्भावं। वि. ३।७।१६. • विकृतौ अपूर्वपदार्थान्तरं प्राकृतधर्माणां नास्ति। ३।८।१६।२२. • विकृतौ अर्थश्चोदकेनातिदिश्यते, न शब्दो वाचक इत्येतद् वक्ष्याम। टुप्. ९।१।१२।१९. वर्णकं २. • विकृतौ इडानिगदे यजमान शब्दस्य न ऊहः। भा. ९।१।१६।४८. मीको पृ. ३१९३ 'यजमानविकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। • विकृती उत्सर्गभावः। सु. पृ. ८९५. • विकृता-वुपदिष्टैः पदैरन्यादिभिः प्राकृतपदेवतादीनां बाधः। १०।७।१७।५८–६०. मीको. पृ. १०८३ 'काम्यासु विकृतिषु उपदिष्टे.' इत्यत्र अधिकरणं द्रष्टव्यम्। • विकृतौ उपदिष्टातिदिष्टपदार्थविषय समुच्चय. यथा– उक्थ्यादौ उपयत्ना समुच्चय, पात्नीवते पत्नीनिर्णामसमु-च्चय.। वाजपेयादिषु अन्नहोमस्य अजादिजातेश्च समु-च्चय. | दीक्षाहुतिमन्त्राणां आकूत्यादीनां प्रयुजं स्वाहा– आकूत्यै प्रयुजेऽग्नये स्वाहा इति पण्णां पण्णां मन्त्राणां समु-च्चयः। वाजपेये सप्तदशत्वेन सह अभ्युदयभागस्य समुच्चयः। नक्तनिष्ठी उपहोमाना नारिष्ठहोमाना च। बृहस्पतिसवे अभि-षिक्तस्य बार्हस्पत्यग्रहस्य अतिदिष्टग्रहाणां च समुच्चयः। वाजपेये प्राजापत्यपशूनां सप्तदशपशूनां च समुच्चयः। सारस्वत्या आमनहोमानां अनुयाजैः सह समुच्चय.। महा-व्रते कलमायीणां पत्नीनां अतिदिष्टानां कामानुकरणादिना च समुच्चय। अग्न्याधेयाङ्गभूतनीवारेण गौगुल्वाम्यश्रुतेन नवनीते-नातिदिष्टेन समुच्चय। महाव्रते तार्प्येण अहतस्य समुच्चय.। महाव्रते उपदिष्टश्लोकादिसाम्ना अतिदिष्टगायत्र्यादिसाम्ना च समुच्चयः। स्तोमविवृद्धौ उपदिष्टातिदिष्टसाम्नां समुच्चयः। पशुगणे उपरद् होमे गुदानां समुच्चय. प्रतिनिधित्वात् इति। वाल. पृ. १७७–१७८, • विकृतौ उपदिष्ट-पदार्थविषय. समुच्चय यथा–दशपेये 'दश ब्राह्मणाः सोमान् भक्षयन्ति' इति ब्राह्मणजाते. 'दश दश एकैकं चमसमनुप्रसर्पन्ति' इति वाक्यान्तरयाश्च समुच्चय.। पृ. १७७, • विकृतौ एव यज्ञोद्भूतिक अवान्तरप्रकरणम्। पृ. १२, • विकृतौ औपदेशिकयोः भावयोः बाध्यबाधकता यथा–गादिरैन्द्रयूपयो.। पृ. १३३, • विकृतौ औपदे-शिकयोः भावाभावयोः बाध्यबाधकत्व यथा– अतिरात्रे षोडशिग्रहणाग्रहणे। पृ. १३३. • विकृतौ वर्धमाना-काङ्क्षया उपकारकपदार्थ अतिदिश्यते। मीन्या • विकृतौ क्वचित् प्रकृतिधर्मातिदेशः। वि. ७।१।१९, • विकृतौ क्वचित् 'बृहत् पृष्ठं भवति' इति श्रूयते। तत्र विधिचोदकाभ्यां बृहद्रथन्तरयोर्विकल्पः इति पूर्वपक्षः। पृष्ठे बृहत एव नियम ■ विकल्प. इति सिद्धान्तः। १०।७।१६

## ※ विकृतौ चापि तद्वचनात्। ५।३।७।२२॥

द्विपत्नीके बहुपत्नीके च विकृतिप्रयोगे पत्नीसंनह्य इति मन्त्र ऊहितव्यो न वेति विचारे विकृतौ चापि प्रकृतौ इव नोहितव्यः, 'यथा प्रकृतौ तद् विकृतौ' इत्य-तिदेशवचनात्। प्रकृतौ च एकत्वमविवक्षितम्। द्विपत्नी-कत्वादावपि द्वित्वं बहुत्वं एकत्वं च न विवक्षितम्। तस्मात् पत्नीशब्दे अविकारः इति सिद्धान्त। के

※ विकृतौ त्वनियमः स्यात् पृथग्वाक्यत्वाद् ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद् गुण-शास्त्रं यथेति स्यात्। १०।७।२९।६४॥

विकृतौ 'सौमारौद्रं घृते चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः' इत्यादौ विकृतीष्टौ व्रीहियवयोः अनियम विकल्प स्यात्। ग्रहणस्य व्रीहिनिर्देशस्य गुणार्थत्वात् व्रीहिनिर्देशः शुक्लत्वादिगुणविधानार्थं न यागसाधनार्थः। व्रीहयश्चेत् शुक्लाः, यागस्तु व्रीहिभिर्वा यवैर्वा। पृथग्वाक्यत्वात् यथा 'पृषदाज्येनानुयाजान् यजति' इत्यत्र आज्यं पृषत्तासिद्ध्यर्थं भवति तद्वत्। तस्माद् विकल्प। उभयोश्च व्रीहियवयो चोदकेन प्रदिष्टत्वात् प्राप्तत्वात् विकल्प। गुणशास्त्रं 'शुक्लानां व्रीहीणां' 'कृष्णानां व्रीहीणां' इत्यादि गुणशास्त्रं तु 'यदा इति स्यात्' ('यदि वै स्यात्' इत्यपि पाठः) यदा व्रीहय. तदा शुक्ला इति विधानार्थं स्यात्। तस्मात् विकल्पः इति पूर्व. पक्षः।

ख्यातम् । सुबोधिन्या तु अनन्यागतत्वात् इत्याकार प्रश्निन्य न्यायस्य अप्रसरात् इति व्याख्यातम् ।

तस्मात् सौयारीद्रादिचरौ व्रीहीणां नियम यवानां बाध इति सिद्धान्त । के

* विकृतौ तु चोदकप्राप्ता सव ( धर्मा ) आनुमानिका स्युः ( अपि ) । भा ३।३।५।१९ * विकृतौ दक्षिणाग्नान चोदकेन प्राप्त बाधित्वा निषिध्यते, विरोधात् । टुप् १०।७।२७।८९ पृ १९८१ * विकृतौ दर्शपूर्णमासादप्रकृतिगता गुणकामा न प्रवर्तन्ते । ८।१।१४।२३-२५ * विकृतौ वैश्वानरेष्टिगुणसन्निपत्यत्वादपि त्यागादौ प्रयोग । १०।८।१४।२६-२९ मीको पृ ३५५२ 'पावकाग्नियाय' इत्यत्र अधिकरण द्रष्टव्यम् । * विकृतौ द्विपशुका एकवचनान्तबहुवचनान्तयाशब्दयो द्विवचनान्तेनोह । ९।३।४।१०-१८ मीको पृ २७७७ 'पाशपाश' इत्यत्र अधिकरण द्रष्टव्यम् । * विकृतौ द्विबहुपत्नीकाया 'पत्नीं संनह्य' इत्यत्र वचनस्य नोह । ९।३।७।२२ मीको पृ १२२८ 'ऊहः न एकवचनस्य०' इत्यत्र अधिकरण द्रष्टव्यम् । * विकृतौ निर्वापमन्त्रे सवितृ अग्नि पूष शब्दाना न ऊह । एते कर्मसमवेतमर्थं नाभिदधति । भा ९।१।१२।३६-३७ * विकृतौ पार्वणहोमयोर्नातिदेश । ९।२।१८।५०-५५ मीको पृ ७७४७ 'पार्वण याय' इत्यत्र अधिकरण द्रष्टव्यम् । * विकृतौ प्रवरो नास्ति । अप्रवरत्वादुक्तस्यप्रधानादेव अपूर्वाद्भक्षणम् । मीन्या * विकृतौ प्रवरो न प्रवर्तते । ( यत ) विकृते प्राकृताङ्गोपाश्रयत्वात् विकृतौ अतिदिष्टानां प्रयाजादीनां प्राकृताङ्गोपकार प्राकृतप्रमाणसिद्धेन उपकारेण निवृत्ते । ( उपकाराद्युपकारानुपकारासंभवात् ) । सु पृ ११९८ * विकृतौ प्रकृतिगता कार्यमुद्दर्शी एव अतिदिश्यन्ते । वि ३।८।२७, * विकृतौ प्रकृतिगतानां पुन नियम-कर्तृ-प्रयाजयाजनानां नातिदेश, किन्तु नियमरूपस्यैवातिदेश, तस्यैवापूर्वसाधनत्वात् । ८।१।१३

* विकृतौ प्राकृतस्य विधेरहणात् पुन श्रुतिरनर्थिका स्यात् । १०।७।९।२४॥

विकृतौ साकमेधगतगृहमेधीये कर्मणि 'आज्यभागौ यजति' इति चोदकप्राप्तावपि पुन श्रुति अनर्थिका स्यात् न विधायिका किंतु अनुवाद । प्राकृतस्य आज्यभागयोर्विधेरेव अनेन ग्रहणात् अनुवादात् । तस्मात् चोदकेन प्राप्तयो आज्यभागयो अनुवादोऽयं 'आज्यभागौ यजति' इति । इति प्रथम पक्ष ।

अपि वाऽऽम्नेयवत् द्विशब्दत्व स्यात् । २५ ॥

द्वितीय पक्षमाह । आज्यभागयो द्विशब्दत्व स्यात् । द्वौ विधायकौ शब्दौ ययो तौ द्विशब्दौ तयो भाव द्विशब्दत्वम् । यावेव आज्यभागौ चोदक प्रापयति तावेव 'आज्यभागौ यजति' इति शब्दोऽपि प्रापयति । आग्नेयवत् । यथा आग्नेये आवाहननिगदे 'अग्निमग्न आवह' इत्युच्यते । अत्र द्वौ अग्निशब्दौ अर्थस्तु एक एवाग्नि । आग्नानभावह इत्युच्यते । अत्र यथा एकस्य द्विशब्दत्व तद्वत् आज्यभागयोरपि । तस्मात् 'आज्यभागौ यजति' इत्यनेन चोदकेन च एकमेव कर्म चोद्यत इति ।

न वा शब्दपृथक्त्वात् । २६ ॥

द्वितीय पक्ष वाशब्देन पर्युदस्य तृतीय पक्ष स्थापयति । न एकस्य कर्मणो द्विशब्दत्व युक्तम् । तस्मादर्थवादार्थ अनुवादोऽयं 'आज्यभागौ यजति' इति 'आज्यभागौ यजति चक्षुषी' इति । आग्नेयदृष्टान्ते तु शब्दपृथक्त्व न, अर्थभेद एव । अत्र आवह इत्यनेन आवोढा अग्निरुक्त, अग्निमावह इत्यनेन वोढव्योऽभिधीयते । न च तत्र वैशेष्यं क्रियते । तस्मात् अर्थवादार्थं अनुवाद इति तृतीय पक्ष ।

अधिकं वाऽर्थवत्त्वात् स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्य स्यादपूर्वत्वात् । २७ ॥

चतुर्थं पक्षमाह । अर्थवादगुणाभावे अविकारे च सति वचनात् अधिकं स्यात् अर्थवत्त्वात् इत्यन्वय । वाशब्द पूर्वोक्तपक्षत्रयव्यावृत्त्यर्थ । 'आज्यभागौ यजति' इति वाक्य नार्थवाद । न च आज्यभागौ गुण कश्चिद्विहित । न अवयवान्तरगुणो । अत एव अविकार विकाराभावे च सति 'आज्यभागौ यजति' इति पुन

चनात् अधिकमेव आज्यभागरूपं कर्म चोदकप्राप्तप्राकृताज्यभागानुष्ठानोत्तरं कर्तव्यं स्यात् तस्य अर्थवत्त्वात् अदृष्टार्थकल्पनात् । तेषु श्रुतिगुणविधिप्राकृतधर्मवाक्येषु हि सत्सु अपूर्वत्वात् वचनस्य अपूर्वार्थत्वात् तदर्थं स्तुत्यर्थकत्वं स्यात् । न तु इह तत् किमपि । तस्मात् प्राकृताज्यभागाभ्यां भाज्यभागरूपमेव कर्मान्तरं इह विधीयते ।

सुबन्धूक्ते तु— आज्यभागकर्मणी अधिकारे अप्राकृते कर्मान्तरे प्राप्येते ये । अर्थवत्त्वात् कर्मान्तरत्वे अन्येव पुनः श्रवणस्य अर्थवत्त्वात् । ते च कर्मणी अधिके प्रधानयागादुपरिष्टात् कार्ये पाठक्रमात् । अर्थवाद-गुणाभावे वचनात् अर्थवादगुणस्य अर्थवादत्वप्रयोजकधर्मस्य विध्येकवाक्यत्वस्य अभावे अनुवादे वचनात् आज्यभागयोः पुनर्वचनात् विध्येकवाक्यत्वाभावेन अर्थवादत्वासंभवात् इति करुत् । तेषु हि तादर्थ्यम्, हि यत: तेषु 'अन्तुमत्ताज्यभागौ' इत्यादिवाक्येषु गुणविधानं युज्यते– इति व्याख्यातम् ।

प्रतिषेधः स्यादिति चेत् । २८ ॥

आज्यभागौ इति तत्कर्मकत्वे लक्षणाप्रसङ्गात् न कर्मान्तरवचनम् । किंतु परिसंख्यया आज्यभागेतरयोः अग्राह्यप्रतिषेधः स्यात् । तस्मात् समाख्या इति पक्षस्य ।

नाश्रुतत्वात् । २९ ॥

चतुर्थपञ्चमाभ्यो पञ्चमं पक्षं दूषयति । न प्रतिषेधः, अश्रुतत्वात् । नहि अत्र प्रतिषेधवाचि किंचित् पदं श्रूयते । तस्मात् परिसंख्या । किंतु कर्मान्तरवचनम् ।

अग्रहणादिति चेत् । ३० ॥

न कर्मान्तरचोदना । अत्र आज्यभागयोः स्वशब्देन ग्रहणम्, अन्येषामग्रहणात् चोदकेन ग्रहणम् । स्वशब्देन गृहीतयोः आज्यभागयोः चोदकेन अग्रहणात् । तथा च प्रकृतिवदेव सर्वमनुष्ठानम् । तस्मात् चोदकेन अग्रहणात् आज्यभागौ यजतीति ग्रहणम् । इति षष्ठ पक्षः ।

न तुल्यत्वात् । ३१ ॥

नैतदेवम् । चोदको यथा अपूर्वताया इतराण्यङ्गानि गृह्णाति तथा आज्यभागावपि । तस्मात् अन्यैरेव उक्तत्वात् चोदकेन अगृहीतयोराज्यभागयोर्ग्रहणं इति वक्तुं न युक्तम् ।

तथा तद्ग्रहणे स्यात् । ३२ ॥

ननु चोदकेन आज्यभागावेव गृहीतौ तथा च आज्यभागवाक्येन चोदकस्य भाज्यभागयोः संकोचः इति सप्तमः पक्षोऽस्तु इति चेन्नेत्याह । तद्ग्रहणे चोदकेन आज्यभागयोरेव ग्रहणे तथा स्यात् अग्रहणेन तुल्यं स्यात् । चोदको यथा आज्यभागौ गृह्णाति तथा इतराण्यपि अङ्गानि गृह्णीयात् चोदकस्य सर्वत्र तुल्यत्वात् ।

अपूर्वतां तु दर्शयेद् ग्रहणस्यार्थवत्त्वात् । ३३ ॥

'आज्यभागौ यजति' इति वाक्यं गृहमेधीयस्य अपूर्वतां दर्शयेत् । ग्रहणस्य आज्यभागयोर्ग्रहणस्य गृहमेधीयापूर्वतायामेव अर्थवत्त्वात् सफलत्वात् । पूर्वपक्षे तु तत् अनर्थकं स्यात् । तस्मात् गृहमेधीयं कर्म अपूर्वम् । न प्रकृतिर्न विकृतिः । तुशब्दः पूर्वपक्षनिरासार्थः । के

* विकृतौ प्राकृतैकदेशग्रहणे प्रायश्चित्तानामेव ग्रहणम्, अन्यासां लोपः । १०।८।११–६. मीको. पृ. ११५५ 'कपालभ्रंशात्' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ प्राकृताज्यगुणानां नातिदेशः । ८।१।१४।२३–२५. मीको. पृ. १५२ 'अतिदेशो न विकृतौ प्राकृताज्यगुणानाम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ प्राकृतधर्मानुवादेन विधीयमानयोः धर्मयोः अन्तराले अपूर्वमपि यद् पठ्यते, तदपि प्रकरणेन विनियुज्यते यथा आमवहोमेषु । मीन्या. * विकृतौ प्राकृताज्यानुवादयोः बाधः । भाट्ट १०।४।२१. * विकृतौ मन्त्रे सर्वनीराद्विपदानां ऊहः । भाट्ट. ९।३।१ * विकृतौ यजमानशब्दस्य दर्शपूर्णमाससम्बन्धकल्पनागतस्य ऊहः । ९।१।१५।८१. मीको पृ. ९६९ 'आयुरादिफलन्याय' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतौ यत् प्रकृतत्वानुवादेन श्रूयते तत् प्रकरणाद् गृह्यते । यथा 'औदुम्बरो यूपो भवति' इति यूपानुवादेन औदुम्बरत्वम् । मीन्या. * विकृतौ यस्याः प्राकृतविधिविहितसंकीर्तनं तस्य पुरस्तात् परस्ताद्वा चेत् तमङ्गमाम्नायते तत्र कर्मकालयोर्गृहीतयोरन्तर्वर्तित्वात् ( अन्तर- ) प्रकरणादौ

पकारेष्वनिर्दिष्टेषु पश्चात्तज्जनकापेक्षायां तज्जनकप्राकृतपदार्थानां पृथगतिदेशकल्पनम् । न चैवं विकृतौ शास्त्रोपकारार्थेऽपि पदार्थानामेवोपकारान्तरकल्पनया करणापत्तेः ऊहबाधोच्छेदापत्तिः । उपकारजनकापेक्षायामेव पदार्थातिदेशस्य कल्पनेन तद्वत्ये तस्यैवाकल्पनात्, पदार्थातिदेशस्यैव प्रथमतः कल्पनेऽपि वा वचनातिदेशनामातिदेशयोरिव निरूपितरूपाणामेव पदार्थानामतिदेशात् प्राकृतोपकाराभावे उपकारान्तरकल्पनानुपपत्तेश्च ।

परन्तुस्तु उपकारजनकापेक्षायामपि पृथक्पदार्थातिदेशकल्पने गौरवात् पदार्थविशिष्टोपकाराणामेक एवातिदेशः । प्रकृतिवत् तत्तत्पदार्थजन्यात्तत्तदुपकारान् विकृतौ कुर्यादिति । शाब्दस्य तु पृथक्प्रयुक्तो पाऽतिदेशकल्पने नैव किञ्चित्प्रमाणं पश्यामः । तत्र तु प्राकृतयोग्यताजनकैर्विकृतिनियोग्यता प्रकृतिवच्चनेनैव विस्पष्टातिदेशः । जनकत्व चोपकारवत् पदार्थऽन्यविशिष्टविशेषेक एवोभयोरतिदेशः । अतिदेशलक्षण च पदार्थमादायोपपन्नतरम् । अत एवापेक्षितत्वादिनोपकाराणामेवातिदेशः । पदार्थानां तु तदाक्षेपादेव करणमिति न तेषां विकृत्यङ्गत्वमित्यपास्तम्, तथात्वे उपकारत्वस्याप्यतिदेश्यतावच्छेदककोटिप्रवेशे गौरवापत्तेः । उपकाराणां प्रकृतावपि परमनिष्ठयोग्यतारूपफलप्रयुक्तपदार्थानुनिष्पन्नानामिह पदार्थाक्षेपकत्वकल्पने गौरवाच्च । अतिदेशेकदेशेऽपि च प्रकृतिवदाम्नाय्याप्यतिदेशाच्च पदार्थानामुपकारमनादृत्यातिदेशः । एत च यत्र प्राकृतोपकाराभावस्तत्र तज्जनकपदार्थस्य नैवातिदेशः ।

न चैवमपि प्रत्युपकारं प्रतिपदार्थं चाऽनन्तातिदेशकल्पने गौरवदेकस्यैवातिदेशस्य पदार्थान्तरप्राप्त्यर्थमाश्रयणस्य बाधितपदार्थप्रापकत्वापत्तिः, एकस्यैवातिदेशस्य बाधितपदार्थांशे तात्पर्यविषयकत्वाकल्पनात् अत एव तादृशविषये न तच्छास्त्रम् । वस्तुतस्तत्तद्भिन्नविषयमेव ।

न चैवं पदकल्पकत्वात् बाधानापत्तौ पुनः प्रसक्तावनापत्तिः, विशेषादर्शननिमित्तकभ्रान्तिप्रसक्तस्यैव तदुभयाङ्गीकारात् । अत एव बाधस्य बोधकस्य विशेषविषयत्वाप्रतिबन्धकत्वमेव प्रसक्तापवादत्वमित्युक्तं कौस्तुभे । स चायं बाधाख्यनिरूपणे इत्युक्तम् । तत्राभ्यासोदाहरणं वक्ष्यते ।

अर्थलोपाद्बाधस्य तु विकृतिविशेषे 'स्वयं दिनं बर्हिर्भवति' इति । अत्र स्वयंदिन्नबर्हिषि लवनप्रयोजनस्य स्तरणोपयोगिमूलत्वप्राप्त्यसंयोगनाशस्य प्रतियोग्यभावेनानुत्पत्तेर्यथैलोपेनाप्यर्युकर्तृकस्य प्रयोगान्तःपातिनो वैधस्य लवनस्य तदङ्गभूतासिदानादेश्च बाधः । ( इत उत्तरः कृष्णलचरुनिषयको भाष्यग्रन्थः मीको. पृ. ६८० 'अवघातस्य कृष्णलचरौ बाधः' इति हिन्दी पठीत इति शेषम् ) । के.

मण्डन— 'दृष्टार्थं यत् विकृतौ न तत् स्यात् ।'

शंकर— 'दृष्टार्थबाधो विकृतौ ।'

विकृतौ शब्दवत्त्वात् प्रधानस्य गुणानामधिकोत्पत्तिः संनिधानात् । १०।३।१।१ ॥

अग्नीषोमीये पशौ 'एकादश प्रयाजान् यजति एकादशानुयाजान्' इति श्रूयते । तदिदं अप्राप्तया प्राकृतेतिकर्तव्यतया कर्मान्तरं विधीयते इति पूर्वः पक्षः । तत्र - विकृतौ प्राकृतगुणभिन्नगुणस्य प्राकृतप्रयोजने अग्नीषोमीयपश्वादौ शब्दवत्त्वात् एकादशत्वादिविशिष्टप्रयाजादिविधायकशब्दवत्त्वात् गुणानां अधिकोत्पत्तिः, अप्राकृतगुणानां अधिकानां स्वातन्त्र्येण उत्पत्तिः स्यात् । प्रधानस्य संनिधानात् मुख्यविशेष्यस्य भावनायाः संनिधानात् । यद्भुत्वा धात्वर्थविधिः इत्यर्थः । इति सुबोधिनी । विकृतौ अग्नीषोमीयपश्वादौ प्रधानस्य करणाङ्गभूतयागमानस्य शब्दवत्त्वात् प्रत्यक्षश्रुतत्वात् गुणानां प्रयाजानां अधिकोत्पत्तिः एकादशत्वसंख्याविशिष्टतया उत्पत्तिः । न तु प्रयाजानुवादेन केवलगुणविधिः । ननु विशिष्टविधौ गौरवं स्यात् तत्राह— संनिधानात् एकपदश्रुतिसामर्थ्यादित्यर्थः । तस्मात् विशिष्टविधिः आश्रयणीय इति कुतूहलम् ।

प्रकृतिवत्त्वस्य चानुपरोधः । २ ॥

अग्नीषोमीये पशौ 'एकादश प्रयाजान् यजति एकादशानुयाजान्' इति श्रुतम् । तदिदं अप्राप्तया प्राकृतेतिकर्तव्यतया, कर्मान्तरं विधीयते इति पूर्वपक्षे हेत्वन्तरमाह । एकादशत्वसंख्याविशिष्टप्रयाजविधौ सति प्रकृतिवत्त्वस्य 'प्रकृतिवत् कर्तव्य' इति चोदकशब्दस्य अनुपरोधः, न उपरोधः, बाधा न भवति । वैकृतैरेव संनिहितैः प्रयाजैः उपकाराकाङ्क्षाशान्तेः ।

* विकृतिगता पर्युदासविधिप्रकारा मीको पृ २४८० 'पर्युदासविधि चोदयामि' इति विन्दौ द्रष्टव्या । * विकृतिगतानां अपूर्वाङ्गानां ज्योतिष्टोमादीनां प्रकरणं न विनियोजकम् । मीन्या

* विकृतिगत निषेधविधिप्रकारा मीको पृ २७३० स्तम्भ १ इत्यत्र द्रष्टव्याः ।

* विकृतिगतद्रव्यादिविधायकपदस्योह शौर्यादिविकृतौ अग्निर्दिप्यतो । ९।३।१।१-२ मीको पृ ३११८ 'मन्त्रोहन्याय' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* विकृतिगत-भावाभावविषयकविकल्पोदाहरणानि मीको पृ ३०१२ 'विकल्पभङ्गा' इति बिन्दौ द्रष्टव्यानि ।

* विकृतिगत-सन्निपत्योपकारकक्रियानिषेधप्रकारा मीको पृ २७३६ स्तम्भ १ इत्यत्र द्रष्टव्या ।

* विकृतिस्थ चोदकेन गमनम् । वि ३।२।१६

* विकृतिनिगमेष्वपि वैधशब्देनैव देवताभिधानम् । वि १०।४।१७

* विकृतिप्रकृत्यो समानतन्त्रे विकृतिगतेन प्रकृते प्रसङ्गसिद्धिः । १२।२।१३।३३ मीको पृ २६९७ 'प्रकृतिविकृत्यो समानतन्त्रत्वे०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* विकृतिप्रकृत्यर्थता आघानस्य । ३।६।५। १४-१७ मीको पृ ९१४ 'आधान सर्वकर्माथम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* विकृतिप्रधानेन अङ्गस्य प्रसङ्गो यथा–आम्यभरणादिश्राद्धेन पाकाङ्गभूतश्राद्धस्य । वाट पृ १०, * विकृतिप्रधानस्य स्वाङ्गविधिना सह प्रधानाङ्गत्वम् यथा– ऐन्द्रस्य आग्निमारुतस्य प्रधानभूतस्य आमिक्षाया अतिदिष्टेन तदङ्गभूतेन विकृतिरूपेण मानाय्यदहनिर्वापनिमित्तकेन्द्रपञ्चशरावयागेन सह तन्त्रम् । पृ १४८

* विकृतियागेषु केषुचित् अग्निचयनस्य अतिप्रख्याणां चातिदेशः । १०।८।१६।२३–२८ मीको पृ १६७ 'अग्न्यतिदेशाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* विकृतिरूपं वैदिकं कर्म यथा– मासाग्निहोत्रादि । बाल पृ ८७

* विकृतिविशेषे 'कौत्सं भवति' 'काण्वं भवति' इति श्रूयते । अत्र कौत्सादिनाम प्राकृतेन साम्ना समुचित इति पक्षः । प्राकृतस्य बाध इति सिद्धान्तः । परन्तु एकवचनेन एकमेव प्राकृतं साम बाध्यं न सर्वाणि । एवं द्विवचनेन द्वे बाध्ये, बहुवचनेन बहूनि बाध्यानि । वि १०।५।१०–११ * विकृतिविशेषे कौत्सादिसामभिः प्राकृतसाम्नां बाधः । भा १०।४।८।१७ वर्णक २ मीको पृ १४०३ 'कौत्सकाण्वरथिन्तरादिसामभि०' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिविशेषे प्रणीतयैव ऋचा आहवनीयोपस्थानम् । ९।२।८।२९–३० वर्णक २ * विकृतिविशेषे श्रूयमाणैः कौत्सादिसामभिः तत्समसंख्याकप्राकृतसामबाधः । १०।४।९।१८–१९ मीको पृ २४९८ 'कौत्सादिन्याय' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिविशेषे सामिधेनीधार्ये अपेक्षितानामेव मनुष्यिज्ञानमूलामेव समामनानं प्राकृतधर्मस्य समानयनम् । भा १०।८।१९।७३–७६

* विक्रय प्रतिषिद्धः अधानाम् । स्मर्यते च 'नाश्वं विक्रीणीत' इति । भा १०।६।११।८७ * विक्रयेऽपि हि स्वत्वपरित्यागपरस्वत्वापादनसद्भावात् सम्यग्दानार्थो विद्यते । तथा च लोके विक्रीय वक्तारो भवन्ति अस्माभिरर्थाय दत्तमिति । क्रीत्वा वदन्ति अस्माभिरर्थाय गृहीतमिति । शा ३।५।१०।२८ पृ ९६१

卐 विक्रयी त्वन्यकर्मणोऽचोदितत्वात् । ३।७।१५।३१॥

अस्ति सोमविक्रयी । तत्र सन्देहः किं अध्वर्य्वादीनामन्यतम, उत एतेभ्योऽन्य एवेति । पूर्वपक्षदेनाय विचारः । अत्राय पूर्वपक्षः – यद्यपि सोमविक्रयी साक्षात् तदङ्गत्वेन विहितः । न च विक्रयं विना क्रयो भवति । तेन क्रयविधिनैव आर्थिको विक्रयविधिरिति सोऽपि कर्माङ्गत्वात् । स च प्रकृत ऋत्विगेव इति प्रकृतानामेवान्यतमः सोमविक्रयीति । एवं प्राप्ते, अभिधीयते– भवेदेव यदि क्रयविधिर्विक्रयविधिमपेक्षेत । स तु राग-

* श्लोकमप्युदाहरति– 'वितीर्य हि महद्राज्यं भुवि सम्भिष्य चाव्रवीत् । इष्टं हि विदुषां लोके समासव्यासधारणम् ॥' इति । भा ८।१।२।४

* विदग्ध अन्यतरस् । वि ७।४।७

* विदहन ( पुरोडाशादे ) यावद्धि श्रपणे परस्परगतस्फोटादि ... तावद्धोऽधिकम्यश्रपणानुकूल श्रपणाख्य । तु टृ १२६१

॥ विदेवनाधिकरणम् । राजसूये विदेवनादीनां कृत्स्नयागाङ्गता ॥

मध्यस्थं यस्य तन्मध्ये । ४।४।२।३ ॥

भाष्यम्— राजसूये अभिषेचनीयमध्ये 'अक्षैर्दीव्यति' इति विदेवनादयः समाम्नाताः । ते किं अभिषेचनीयस्याङ्गं उत कृत्स्नस्य राजसूयस्य इति संशयः । उच्यते । मध्याम्नानात् अभिषेचनीयस्येति । तथा आनन्तर्यमनुग्रहीष्यते इति ।

वा— विदेवनादय अभिषेचनीयमध्ये समाम्नायमाना क्रमादभिषेचनीयाङ्गम् । विरोधे च प्रकरणं दुर्बल इत्युक्तम् । तस्मात् निर्णीतत्वात् अनारभ्यम् । उच्यते । प्राकृताङ्गसम्बन्धेन श्रूयमाणा यथाम्नाताकाङ्क्षायां आनुपूर्व्यां पदार्था उपनिपतन्ति ते तेनैव क्रमेण गृह्यन्ते । एते च माहेन्द्रस्तोत्रकालत्वात् उपनिपतन्ति प्राकृताङ्गमध्ये । तस्मात् अवान्तरप्रकरणात् अभिषेचनीयाङ्गम् । महाप्रकरणात् राजसूयाङ्गम् । तत्र दुर्बलम् । तस्मात् अभिषेचनीयाङ्गत्वात् विदेवनादय तदङ्गम् इति ।

सर्वासां वा समत्वाच्चोदनातः स्यान्नहि तस्य प्रकरणं देशार्थमुच्यते मध्ये । ४ ॥

भाष्यम्— सर्वासां च अनुमत्यादीनां चोदनानां मध्ये विदेवनादि स्यात् । कुतः ? चोदनातः समत्वात् । समाना एता अनुमत्यादयः चोदनाः । ता सर्वाः फलवत्यश्च प्रधानभूताः । सर्वासाम् एषां प्रकरणम् । नहि अभिषेचनीयस्य केवलस्य । क्रमादभिषेचनीयस्य केवलस्य । क्रमात् अभिषेचनीयस्य प्राप्नुवन्ति । प्रकरणात् सर्वासाम् । प्रकरणं च क्रमात् बलीय । तस्मात् नाभिषेचनीयस्य केवलस्येति । अभिषेचनीयस्य तु मध्ये स्थानं विदेवनादीनां तत्र क्रियमाणा सर्वासामुपकुर्वन्तीति ।

वा— यत्रैवोत्पद्यते तत्रैव प्रयोजनमपेक्षमाणा राजसूयप्रकरणगृहीता निराकाङ्क्षा भवन्ति । तस्मात् अपवादत्वाभावात् प्रकरणात् सर्वार्थानां तत्रैव उत्पत्तिदेशे करणे प्राप्ते 'माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यते' इति वचनात् अभिषेचनीयमध्ये नियम्यते । न च अवान्तरप्रकरणेन गृह्यते पशुवदप्राप्तत्वेन तस्मात् सर्वस्य प्रयुक्ता विदेवनादय । अत अवान्तरप्रकरणे निरूप्यते तृतीये चिन्ता ।

शा— ( सिद्धान्त– ) 'तत्र प्रयोजनापेक्षा धर्माणां यत्र चोदना । विदेवनादिकानां तु न मध्ये प्राप्तितो विधिः ॥' अभिषेचनीयानन्तरं विहिता प्रयोजनापेक्षा अभिषेचनीयाङ्गत्वाभावेन प्रकरणात् राजसूयाङ्गता तेषां तावत्कर्तृसमर्थं भूयः प्रयोजनमपेक्षते, येन अवान्तरप्रकरणविषयतां प्रतिपद्येरन् । तस्मात् राजसूयाङ्गम् । –

मोक्ष— विदेवनादीनामङ्गत्वं यदुक्तं तस्य विशेषव्यवस्थापनेन स्थिरीकरणात् सङ्गतिः ( एकविषयत्वम् ) ।

वि— 'एकस्यैवाभिषेचस्य मध्ये निखिलस्य वा । राजसूयस्याद्यपक्षोऽस्त्रिं, अन्तिमोत्तरः ॥'

भाट्ट— विदेवनादीनां स्थानक्रमत्वे सिद्धे सन्निधानात् अवान्तरप्रकरणाद्वा अभिषेचनीयमात्राङ्गत्वस्य तृतीये एव निराकृतत्वात् सकलराजसूयाङ्गत्वस्यैव महाप्रकरणादवगते स्थैर्यसम्पन्नम् । तदीयाधिकरणप्रयोजनकथनार्थं च इदमधिकरणम् ।

मण्डन— 'देवनमप्यत्र गुण सकलस्य ।'

शङ्कर— 'विदेवनादि सर्वाङ्गम् ।'

॥ विदेवनाधिकरणम् ( द्वितीयम् ) । राजसूये विदेवनादीनां अभिषवकृत्स्नाङ्गत्वम् ॥

कृतदेशात्तु पूर्वेषां स देशः स्यात् तेन प्रत्यक्षसंयोगात् न्यायमात्रमितरत् । ५।२।१०।२१ ॥

भाष्यम्– राजसूये श्रूयते 'अक्षैर्दीव्यति' 'शौनःशेपमाख्यापयति' 'अभिषिच्यते' इति । [illegible] सन्देह किं विदेवनादीनां अन्ते प्रयोग उत अभिषेचनीयात् पूर्वं इति । किं प्राप्तम् ? 'अन्ते तु बादरायण' इत्यन्ते प्रयोग कर्तव्य इति । एवं प्राप्ते, ब्रूमः । कृतदेशात्

* विद्याधिगमः त्रैवर्णिकानां नियतः न ब्राह्मणानामेव । भा. ६।२।१२।१२.

* विद्याग्रहणोत्तरकालश्च दारसंग्रहः । भा. ६।८।२।१३

* विद्यावान् । अध्ययनविधिसिद्धविद्यावता जीवता अग्निहोत्रादिकं कर्म कर्तव्यम् । शा. ६।२।७.

* विद्या-विनयाधाने शिष्यस्य आचार्यो वर्तते प्रधानभूत. । भा. ३।१।४।२.

* विद्यासोमप्रजाः त्रैवर्णिकानां नित्याः । भा. ६।२।१२।१२.

* विद्यास्थानानि । प्रतिकल्पमन्वन्तरयुगनियमनित्यकृपिनामानिषेधकृत्नि विद्यास्थानपरा. ये वेदेऽपि मन्त्रार्थवादेषु श्रूयन्ते तत्प्रणीतान्येव विद्यास्थानानि धर्मज्ञानाङ्गत्वेन समस्तानि । वा. १।३।२।७ पृ. २०२, * परिमितान्येव हि चतुर्दश अष्टादश वा विद्यास्थानानि ( ' पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाश्च, आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रमपुर्थं च ' ) धर्मप्रमाणत्वेन शिष्टैः परिगृहीतानि वेद-ऋग्वेद – अङ्ग – उपाङ्गाष्टादशधर्मसंहितापुराणशास्त्रशिक्षादण्डनीतिसंज्ञकानि ( ऋग्वेदाः – आयुर्वेदधनुर्वेदगान्धर्ववेदा. । अङ्गानि – शिक्षादीनि । उपाङ्ग-पूर्वोत्तरमीमांसाद्वयम् ), न च तेषां मध्ये बौद्धार्हतादिग्रन्थाः स्मृता गृहीता वा । १।३।३।७ पृ. २०१ .

* विद्वांश्च अधिक्रियते । टुप्. ५।१।१०।३९.
* विदुषां पुनः पद-वाक्य-प्रमाणोद्धारि मुख शोभते । वा. १।२।१।३५ पृ. १३३.

* विद्वदधिकरणम् । पौर्णमास्यमावास्याशब्दौ प्रधानवाचकौ इति विद्वदधिकरणे ( २।२।३ ) व्याख्यापितम् । वृ. ३।७।४।८ .

* विद्वद्वाक्यम् । ' य एवं विद्वान् पौर्णमासीं यजते ', ' य एवं विद्वानमावास्यां यजते ' इति वाक्यद्वयम् । वि. २।२।३ .

* विधवानियोगोऽपि ब्रह्मचारिणः अनुचित. । सु. पृ. १८५.

* विधवानियोगविधेरपि एकापत्यविषयत्वात् अनेकोत्पादनानौचित्यम् । सु. पृ. १८५.

* विधात्री श्रुतिः लिङाद्यात्मिका । मीन्या. * विधात्री श्रुतिः— लिङ्-लोट्-तव्य-पञ्चमलकाराणा तु विधिसामर्थ्यम् । वा. ३।१।७।१३ पृ. ७००. * यागपशुगामयो. एकस्य विधात्री यजतेरपरितनीं विभक्तिं उपलभामहे लिङम् । भा. २।२।१२।२७ पृ ५६२.

* विधानं अज्ञातस्य ज्ञापनम् । भा. २।३।१।४ पृ. ५९३. * विधानं अप्रवृत्तप्रवर्तनम् । तत्र पुरुषविषय. शब्दव्यापारः । वि. २।३।१३, ४।१।२ वर्णक २. * विधान यत्नः इतिकर्तव्यता इत्यर्थ । भा. ११।२।२।८. * विधानं हि अत्यन्तानवगतार्थविषयम् । वा. १।२।२।१९ पृ. १४१, * न च विधेयान्तरोपादाने सति अतिक्रान्तार्थविधानं अवकल्पते इत्युक्तम् ( २।१।१।१६ इत्यत्र ) । २।२।११।२६ पृ. ५४७.

* विधायकं ब्राह्मणम् । भा. १०।८।१०।२० । ब्राह्मणवाक्यस्य विधायकत्वम् । वि. १।२।२. * विधायकः अविदितस्यार्थस्य वक्ता (शब्दः) विधायको भवति । भा. २।३।५।१२. * विधायक ऋङ्मन्त्रः यथा— ' पूर्णीपादिव्याघमानायत पान्० ' इति ( ऋग्. १०।११७।५ ) । यजुर्मन्त्र. यथा– ' वसन्ताय कपिञ्जलानालभते ' इति । बाल पृ. ५८. * ' एकशक्तिः स्वभावेन सर्वदैव विधायकः । असत्यार्थविधिस्तुष्टो नानेकार्थविधिक्षम ॥ ' वा. २।१।११।२७ पृ. ५५३, * गुणोपादानवशेन धात्वर्थानुवादिनो विधायक., कदाच गुणं विदधत् यदन्यत्र अप्राप्तस्यैव विधत्ते । २।२।१२।२७ पृ. ५५२.

* विधायकाविधायकयोः वाक्ययोरेकवाक्यत्वं न भाति । विधायक ब्राह्मणम्, अविधायको मन्त्र. । भा. १०।८।१०।२०.

* विधायकत्वं नास्ति मन्त्रवाक्यस्य तत्त्वम् । २।१।६।३०–३१. * न च मान्त्रेण ( वाक्येन ) ब्राह्मणादिप्रयुक्तस्य विधायकत्वं निवार्यते तदनुगुणत्वात् । वा. २।३।१।४ पृ. ५९३. * यत्र हि अनेकविधायकश्रवणं तत्र एकस्य विधायकत्वं अन्यस्यानुवादकत्वं इत्येकवाक्य-

त्त्समवे वाक्यभेदाख्यो विधिभेदो न स्योग्यितो । पराक्रम ५०।१ * विधायकत्वे समगति अनुवाद करत्वम सामान्यम् । मोम १।१।१६

* 'विधायकवाक्ये, कर्तरि छन्दोगवादिविशेषण-विशिष्टत्वग्राहकप्रमाणाभावे सर्वविषयत्वमेव ब्रह्मज्ञस्य' इति हि न्याय । 'सर्वधर्मेतामाहक-न्याय' अयम् । कस्तूरि १।१।७।१०

* 'विधायिष्यते तु नेर वचनेन' इत्यनेन न्यायेन विध्यनुमानम् । अग्निप्रकरणे यत् सततश्चत्री-सुपदधाति अजमेधोभयतो दधाति, तस्मादुभाभ्या हस्ताभ्या परिगृह्य पुरुषोऽन्नमत्ति' इत्यत्र । वा १।३।४।१ पृ २२१

* विधि अज्ञातज्ञापनात्मक । सु पृ ८४५ * 'विधिरत्यन्तमप्राप्तौ नियम पाक्षिके सति । तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते ॥ अपूर्वविधि, नियमविधि परिसंख्याविधि । धा १।२।४।२४ पृ १५२, * विधि अप्रवृत्तप्रवर्तको ऽपि तदधीना मत्वामेन प्रतिपत्तेन तु प्रयत्नो भवतीति 'प्रतिषेध प्रदेशोऽनारभ्य विधाने च०' (१०।८।१) इत्यत्र वक्ष्यते । सत्यम्, यस्य शास्त्रम तरेण अप्राप्तिरस्ति तमेवोपेयम् । १।३।१।२, * विधि अनुक्तो हि सन् अर्थवादादेव कल्प्येत यदि अन्यथा नोपपद्येत । १।२।१।७ पृ १२०।

■ विधिरप्येकदेशे स्यात् । ६।३।२०।४०॥

गुरुन प्रथम व्रीहय अवघातमात्रपर्याप्ता लब्धा । नीवाराश्च शेषकार्याणामपि पर्याप्ता लब्धा । तदा एकदेशे अपि निर्वर्त्यमाने मुख्यद्रव्येण अवदाननिर्वर्तन समवेऽपि शेषकार्याणामपि समर्थस्य प्रतिनिधेर्नीवार द्रव्यस्य विधि निदान स्यात् । तदा प्रतिनिधिर्नीवार इति पूर्व पक्ष ।

अपि वाऽर्थस्य शक्यत्वादेकदेशेन निर्वर्त्येतार्थानामविभक्तत्वाद् गुणमात्रमितरत् तदर्थत्वात् । ४१ ॥

दर्शपूर्णमासादौ व्रीहयो द्व्यवदानमात्रपर्याप्ता लब्धा । नीवारास्तु शेषकार्याश्रमपि पर्याप्ता लब्धु शक्या । एवं स्थिते प्रतिनिधिरेव ग्राह्य इति पूर्वपक्ष मुख्य प्राप्त अभि-धानशब्देन निरस्यन् सिद्धान्तमाह । उक्ताया स्थितौ प्रतिनिधिर्न ग्राह्य । अर्थस्य द्व्यवदानमात्रस्य प्रधानस्य उपलब्धै अल्पैरपि व्रीहिभि शक्यत्वात् । एकदेशेन प्रधानकार्यशेषकार्यपर्याप्ताना बहूना व्रीहीणा एकदेशेन उपलब्धेन मुष्टिमात्रेणापि द्व्यवदानमात्र प्रधान निर्वर्त्येत नियेन सर्वं यमित्यर्थ । अर्थाना प्रधानाना यागेन अवि भक्त भवत् विभक्तत्वाभावात् । द्व यदैवतात्मको याग । तेन द्व्यवदानस्य द्रव्य यागेन अविभक्तम् । द्व्यवदान-ग्रहणेन च यागो निर्वर्तित एव भवति । इतरत् प्रधाना द यत् स्विष्टकृदादिशेषकार्यं तु तदर्थत्वात् प्रधानार्थत्वात् गुणमात्रम् । तस्मिन् लुप्तेऽपि न यागलोपो भवति । तस्मात् प्रधानाङ्गनिष्पत्ति मुख्ये लब्धे प्रतिनिधि सर्व पर्याप्तोऽपि न ग्राह्य इति सिद्धान्त ।

कुतूहले तु निर्वर्त्येत इत्यत्र वर्तेत इति पाठ । एकदेशेन वर्तेत यागे न्याप्रियेत इति तदर्थ । अर्थाना विभक्तत्वात इति पाठ । अर्थाना अवदानपरिमाण शेषकार्यरूपाणा व्रीहित्वस्य च विभक्तत्वात् वैलक्षण्यात् । व्रीहित्व हि प्रधानगुण 'व्रीहिभिर्यजेत' इति विधा नात् । इतरत् अवदानपरिमाण शेषकार्ये च सर्व गुण मात्र यागाङ्गभूतपुरोडाशगुण एव । तदर्थत्वात् पुरोडाशार्थत्वेन विधानात् । इति ।

सूत्रार्थं समाप्य पुन कुतूहलम् । 'अयद चित्यम् । व्रीहय एव पुरोडाशभावमापन्ना यागद्रव्य इत्यनुपपन्नम्, तण्डुलाणामेव व्रीहिशब्दार्थत्वात् । तुषाणा च पुरोडाशे अनुप्रवेशाभावात् । 'रभसा महतोऽसि इति पुरोडाश कपालेन तुषानुपवपति' इति विधानात् । व्रीहयस्तण्डुलानामेव पिष्टप्राकृत्या पुरोडाशानुप्रवेशात् व्रीहि-शब्दस्य तण्डुलपरत्वे ■ लक्षणाप्रसङ्ग । ततश्च 'व्रीहिभिर्यजेत' इति यागसाधनपुरोडाशप्रकृतिद्रव्यविधिरेवायम् । उत्पत्तिवाक्यावगतपुरोडाशद्रव्यस्य प्रकृतिद्रव्यापेक्षत्वात् । यत्तिस्तु प्रकरणप्रस्तावाद एव । ततश्च व्रीहित्वमपि अवदानपरिमाणशेषकार्यवत् अङ्गमेव इति कथ व्रीहित्वस्य ततो विशेष । एव च 'अर्थाना विभक्तत्वात् गुणमात्रमितरत्तदर्थत्वात्' इत्यनुपपन्नम् ।

सामर्थ्यभेदेन चतुर्विधत्वेकपरत्वात् (उत्पत्त्यादिविधि-वाक्यभेदः) तच्चैदपर्थं प्राप्त्युपपदविशेषसकम्मात् । क्वचिदनुवादपरता यथा 'उद्भिदा यजेत' इति । अन्यतः कर्मानिर्देशाभावात्, फलपदसंबन्धाच्च । क्वचित् त्रिपरता यथा ज्योतिष्टोमवाक्ये, उत्पत्तेरन्यतो लाभात् (सोमेन यजेत इत्यतः) । क्वचित् द्विपरता, यथा दर्शपूर्णमासवाक्ये, उत्पत्तिप्रयोगयोः अन्यतः सिद्धेः । क्वचिदेकपरता यथा 'अग्निहोत्रं जुहोति' (अत्र उत्पत्तिपरता) '(पौर्णमास्या-) पौर्णमास्या यजेत' इति (अत्र प्रयोगपरता) । विधि. पृ. २७७–७९.

● विधिरुपवीतस्य दर्शपूर्णमासयोः 'उपव्ययते' इति । वि. ३।४।१. ● विधिरेव च ब्राह्मणानिच. । भा. १।२।८।४५. ● विधिरेव धर्मे प्रमाणम् । वि. १।१।५. ● विधिरेव प्रधानं प्रवृत्तिकारणम्, तस्यैव तु अनुग्राहिका माहात्म्यावगतिः । श्रा. १।२।१ पृ ७. ● विधिः कः ? यद्वाक्यमुपलभ्य पुरुषः कस्मिंश्चिदर्थे प्रवर्तते, कुतश्चिद्वा निवर्तते, स विधिः । विधीयते ह्यनेनार्थः । यथा लोके 'देवदत्त गामभ्याज शुक्लाम्' इति । भा. ७।४।२।१०, ● विधिः कश्चिद् वेदभागः । यः अविदितमर्थं वेदयति यथा– 'सोमेन यजेत' इति । १।४।१।१, ● विधिः कर्तव्यप्रतिपादनात्मकः । सु. पृ. ८ ● विधि कर्तुं स्वतन्त्रसाधनताज्ञानम् । कणिका. पृ ३७७ ● 'विधिरप्यानर्थक्यं क्वचित्' (१।२।२।२३ सूत्रांशः ।) 'यजमानः प्रस्तरः' इत्यादौ गुणविधेरसम्भवात् 'विधिश्चानर्थकः क्वचित्' इत्यौदुम्बराधिकरणसमुक्तेन न्यायेन न गुणविधिः । भी. १।४।१३।२३ पृ. २७३.

● विधिश्चतुर्धा । फलनिमित्तयोः कर्मविधिः अधिकारविधिः । देशकालयोः कर्मविधिः प्रयोगविधिः । उपकारे शेषतया कर्मविधिः विनियोगविधिः । एतद्विनयभिन्नः विधिः उत्पत्तिविधिः इति । कु. २।२।५।१५

● विधिः चतुर्विधः — उत्पत्तिविधिः, अधिकारविधिः, विनियोगविधिः, प्रयोगविधिश्चेति । तत्र कर्मस्वरूपमात्रबोधको विधिः उत्पत्तिविधिः । यथा—'अग्निहोत्रं जुहोति' इति । अङ्गप्रधानसंबन्धबोधको विधिः विनियोगविधिः । यथा– 'दध्ना जुहोति' इति । प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः । फलस्वाम्यबोधको विधिः अधिकारविधिः । स च 'यजेत स्वर्गकामः' इत्येवरूपः । मीन्या. ● विधिः चेतनप्रवर्तना । बाल. पृ. ७४, ● विधिः चोदना उपदेश इत्येकोऽर्थः । पृ. ८. ● विधिर्वाथवान् अनुवादात् । भा. १०।२।१४।४३

**सू** विधिस्तु धारणेऽपूर्वत्वात् । ३।४।५।१५ वि. ॥

मृताग्निहोत्रे महापितृयज्ञे वा श्रुते 'अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इति वाक्ये हिशब्दयोगात् वर्तमानापदेशात् विध्यन्तरेण चैकवाक्यत्वात् अर्थवादोऽयं न विधिः इति पूर्वपक्षं कल्पयन् मानमुक्त्वेन प्रयाजभाष्यः सिद्धान्तमाह । स्रुग्दण्डस्य उपरि समिधो धारणे विधिरेवायं नार्थवादः । अपूर्वत्वात् वाक्यान्तरेण अप्राप्तत्वात् । तस्मात् धारणे विधिः इति सिद्धान्तः । के.

● 'विधिस्तु धारणेऽपूर्वत्वात्' (३।४।५।१५ वि.) । 'अधस्तात् समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति' इत्यत्र सत्यामपि अनोयत्वेन एकवाक्यत्वप्रतीतौ विधीयते एव उपरिधारणं अपूर्वत्वात् । तथा चोक्तं शेषलक्षणे 'विधिस्तु धारणेऽपूर्वत्वात्' इति । शांभा. ३।४।३।२० अनु. । अथ स्यात् इत्यादि महापितृयज्ञे दर्शनादग्निहोत्रे च श्रूयते । कल्पतरु

● विधिः त्रिविधः — अपूर्वविधिः नियमविधिः परिसंख्याविधिश्च । 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥' अत्यन्ताप्राप्तविधायको विधिः अपूर्वविधिः । यथा 'व्रीहीन् प्रोक्षति' अत्र प्रोक्षणं अत्यन्ताप्राप्तम् ।

पक्षे प्राप्तस्य अप्राप्तांशपूरणफलको विधिः नियमविधिः । यथा 'व्रीहीनवहन्ति' इति व्रीहीणां पुरोडाशद्वारा यागसाधनत्वस्य तुषविमोकसाधनीभूतावघातनखविदलनान्यतराक्षेपतया अवघातस्य पक्षप्राप्तत्वात् ।

एकस्मिन् प्रधाने नियतप्राप्तस्य अङ्गद्वयस्य, एकस्मिन्नङ्गे नियतप्राप्तस्य प्रधानद्वयसंबन्धस्य अन्यतरनिवृत्तिफलको विधिः परिसंख्याविधिः । यथा पञ्चपञ्चै

पुरुषार्थश्च । तत्र क्रत्वर्थः उत्पत्तिविधिर्यथा– 'समिधो यजति' इत्यादिः । पुरुषार्थ. उत्पत्तिविधिर्यथा–'अग्निहोत्रं जुहोति' इत्यादि. । क्रत्वर्थो विनियोगविधिर्यथा 'व्रीहीन् प्रोक्षति' इत्यादिः । पुरुषार्थो विनियोगविधिर्यथा– द्रव्यार्जनविधि. । क्रत्वर्थः प्रयोगविधिर्यथा, आरम्भणीयादिविधिः अतिदेशिककालदेशानेकत्वावस्थाऽऽपन्न. ।

पुरुषार्थः प्रयोगविधिरपि द्विविध – अवान्तरप्रयोग विधि, महाप्रयोगविधिश्च । तत्राद्यो यथा– 'पौर्णमास्या पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इत्यादि । अत्र च फलान्वये करणत्वेनैव प्रयोगाच्छेदेन कर्मणो विवेयत्वात् तस्य करणत्वाभिन्न अङ्गाङ्गित्वमन्योन्यमपि विवक्षितम् । फलस्यापि च विधेयत्वात् तदेकत्वमपि विवक्षितम् । महाप्रयोगविधिश्च– 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । अत्रापि पञ्चानेकप्रयोगसाधकः पूर्वोक्तोऽर्थोऽपि न्यायत्वात्. । तस्य फल एक. एकस्य ।

[ पृ. १४ ] क्रत्वर्थे अधिकारविधिरपि द्विविध – नैमित्तिक सन् अदोषनिर्घातार्थः, अनैमित्तिक सन् दोषनिर्घातार्थोऽपि च । तत्राद्यो यथा– 'भिन्ने जुहोति' इति । द्वितीयो द्विविध – विहिताकरणनिमित्तकः, निषिद्धाचरणनिमित्तकश्च । तत्राद्यो यथा– 'यदि अग्नौ यत्र आर्तिमियात् भूः स्वाहेति गार्हपत्ये जुहुयात्' इत्यादि । अनृतादिनिषिद्धाचरणेऽपि अस्य प्रवृत्ते द्वितीयोदाहरणमपि इदमेव ।

पुरुषार्थे अधिकारविधिस्त्रिविध – काम्य, नैमित्तिक, सवनीतश्च ।

काम्योऽपि द्विविध – कर्मफलसम्बन्धपर गुणफलसम्बन्धपरश्च । तत्राद्यो यथा–'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादि । द्वितीयो यथा– 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादि ।

नैमित्तिकोऽपि द्विविध.– नियतनिमित्तकः अनियतनिमित्तकश्च । [ पृ. १५ ] तत्राद्यो यथा–'यावज्जीवमग्निहोत्रं जुहोति' इत्यादि. । द्वितीयो यथा–'यस्याहिताग्नेरग्निर्गृहान् दहेत् अग्नये क्षामवतेऽष्टाकपालं पुरोडाशं निर्वपेत्' इत्यादि. ।

तृतीयोऽपि द्विविध –निमित्तकालदेशनाशफलसम्बन्धी, इतरफलसम्बन्धी च । तत्राद्योऽपि द्विविध – विहिताकरणनिमित्तक, निषिद्धाचरणनिमित्तकश्च । तत्राद्यो यथा– 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेत् अग्नये पथिकृतेऽष्टाकपालं निर्वपेत्' इत्यादिः । निषिद्धाचरणनिमित्तो यथा–'यत्रैकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्' इत्यादि. । इतरफलसम्बन्धी यथा–'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्यारभ्य 'यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इत्यन्तो जातेष्टिविधि ।

विधि पुनरपि एकादशविध.–( १ ) सामान्यविधि, ( २ ) विशेषविधि, ( ३ ) प्रतिप्रसवविधि, ( ४ ) अभ्यनुज्ञाविधि, ( ५ ) उपसंहारविधि, ( ६ ) व्यवस्थाविधि, ( ७ ) पर्युदासविधि, ( ८ ) अभावविधि, ( ९ ) साधारणविधि, ( १० ) उत्कर्षविधि, ( ११ ) अपकर्षविधिश्चेति ।

इह च अभ्यनुज्ञाविधि प्रतिप्रसवविधिरप्यस्ति, यथा– 'षण्णां कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रह ॥' इति । तथा प्रतिप्रसवरूपोऽप्यस्ति 'क्रीतराजकोऽभोज्यान्न' इति । तथा प्रतिप्रसवोऽपि अभ्यनुज्ञाविधिभिन्नोऽप्यस्ति 'पूषा प्रपिष्टभाग' इति । अतस्तौ पृथगुक्तौ । यद्यपि च उपसंहारविधि विशेषविधिभेद एव, प्रतिप्रसवविधेरपि च सामान्यविधिविशेषविधिभेदौ सम्भवत, तथापि भेदं विनाऽपि सामान्यसम्भवात् गोबलीवर्दन्यायेन पृथगुद्देश ।

एकादशविधोऽपि विधिर्द्विविध – क्रत्वर्थ पुरुषार्थश्च । तत्र क्रत्वर्थ सामान्यविधिर्यथा–'यदाहवनीये जुहोति' इति । पुरुषार्थ सामान्यविधिर्यथा– पुनराधेये । क्रत्वर्थो विशेषविधिर्यथा – 'पदे जुहोति' इति । पुरुषार्थो विशेषविधिर्यथा – 'य कामयेत वीरो म आजायेतेति, स चतुर्होत्रा जुहुयात्' इति । वीरपुत्रकामनाया हि चतुर्होतृहोमेन बाधात् पुनराधानस्य कामस्यैव पुत्रेष्टि. । क्रत्वर्थ. प्रतिप्रसवविधिर्यथा – 'पूषा

यागप्रयोजकत्वेन दृष्टार्थत्वात् पशुंहोमविधि दृष्टार्थ इत्युच्यते ॥ अभावविधिस्तु पूर्वोदाहृतयोर्मध्ये यदाद्यो य स दृष्टार्थे पुरुषार्थस्तु अदृष्टार्थं ॥

सामान्यादिविध्येकादशक पुनरपि जाति–द्रव्य–गुण–क्रिया–विषयत्वेन प्रत्यागमत्र चतुर्धा । जात्यादिविषयमपि उद्देश्यांशे, विधेयांशे, उभयांशे चेति जात्यादि विषयमपि विध्येकादशकं प्रत्येक त्रिविध इति द्वाविंश दुत्तर शत भेदा भवन्ति । एषामुदाहरणानि अनेकानि ग्रन्थगौरवभयात् न प्रदर्शितानि ॥ [ पृ २२ ] विधि पुनरपि अष्टविध – ( १ ) धात्वर्थमात्रविधि ( २ ) सगुणधात्वर्थविधि ( ३ ) किंचिदुद्दिश्य धात्वर्थविधि ( ४ ) तत्रैव विशिष्टधात्वर्थविधि ( ५ ) धात्वर्थेऽन्यस्यविधि ( ६ ) धात्वर्थे अन्ययो सम्बन्धविधि ( ७ ) धात्वर्थानुवादेन प्रत्ययेन अन्ययो सम्बन्धविधि ( ८ ) मुख्यस्य धात्वर्थं अन्यगौणेन सम्बन्धविधिश्चेति । अत्र भूषणभूषणा द्वितीयाध्यायार्थसंस्तारे गम्यते ॥

विधि पुनरपि त्रिविध –अपूर्वविधि , नियमविधि , परिसंख्याविधिश्च ॥ विधिर्योऽयमी चतुर्विध – जाति विधि , द्रव्यविधि , गुणविधि क्रियाविधिश्चेति । तत्र जातेरपूर्वविधिर्यथा – ' खादिर वीर्यकामस्य यूप कुर्यात् ' इति ॥ द्रव्यस्यापूर्वविधिर्यथा – ' गोदोहनेन पशुकामस्य प्रणयेत् ' इति गोदोहनशब्दस्य यौगिकत्वेन द्रव्यवाचित्वात् ॥ गुणस्यापूर्वविधिर्यथा– ' यदि कामयेत वर्षुक पर्जन्य स्यात् नीचै सदो मिनुयात् ' इति ॥ क्रियाया अपूर्वविधिर्यथा – ' अग्निहोत्र जुहोति ' इति ॥ देवताविधि , होमाधिकरणीभूताहवनीयादिविधिश्च अपूर्वविधावेव अन्तर्भूत । देवताया यागसिद्धया दृष्टार्थत्वेऽपि विध्येकप्रमाणकत्वात् । आहवनीयादेरपि अधिकरणत्वेन दृष्टार्थत्वेऽपि होमविधिना अनाक्षिप्तत्वेन अदृष्टार्थत्वस्य आपातप्रतिद्वोक्तविकरणवार्तिके उक्तत्वात् । तदेव द्विविधोऽपि अपूर्वविधि दृष्टार्थ अदृष्टार्थश्च ॥ देवताविधिरपि तद्धित–चतुर्थी–मन्त्रवर्ण–द्वितीया–अर्थवादभेदात् पञ्चविध । तदाग्रे स्फुट । आर्थवादिक अर्थवादभेदेषु वक्ष्यते ॥ अध्ययनविधिरपि अपूर्वविधि दृष्टार्थश्च । नहि अत्र नियम ॥

अपूर्वविधि पुनरपि द्विविध – क्रत्वर्थ पुरुषार्थश्च । तत्राद्यो यथा–[ पृ २३ ] ' समिधो यजति ' इत्यादि ॥ द्वितीयो यथा– ' अग्निहोत्र जुहोति ' इत्यादि ॥

नियमविधिस्तु त्रिविध – प्रतिनिधिनियम , प्रतिपत्तिविधि , तदुभयव्यतिरिक्तश्चेति ॥ प्रतिनिधिनियमोऽपि तावत् अपूर्वविधिरिव जाति–द्रव्य–गुण–क्रिया–विषयत्वेन चतुर्विध । तत्र जातिप्रतिनिधिनियमो यथा– पूतीकविधि ॥ द्रव्यप्रतिनिधिनियमो यथा–षड्ह ' यदि सत्राय दीक्षितानां प्रमीयेत सोऽस्य नेदिष्ठ स्यात् स तस्य स्थाने दीक्षेत ' इति । नेदिष्ठशब्दस्य यौगिकत्वेन द्रव्यवाचित्वात् । ' यथुपाकृत पशु पलायेत अन्य तद्वर्णम् ' इति च कार्त्तीयम् ॥ गुणप्रतिनिधिनियमो यथा– कात्यायना कृष्णसारङ्गाभावे लोहितसारङ्गविधि अग्नीषोमीये पशौ ' यदि कृष्णसारङ्ग न विन्देत्तथो अपि लोहितसारङ्ग स्यात् ' इति वचनात् ॥ क्रियाप्रतिनिधिनियमो यथा– आपस्तम्ब " यदि यजमान मन्येत ' प्रजापतेर्विभान्नाम लोक ' इति स्रुवया यजमानभागमवधाय समिद्धयजुषा सह जुहुयात " इति । अत्र होम प्रतिनिधि देवताऽभावात् । तथा आहिताग्निपात्र प्रतिपत्ति ' दक्षिणे हस्ते जुहूमासादयति ' इत्यादीना प्रतिनिधि पतिताहिताग्निपात्रेषु अन्य स्मर्यते ' पात्राणि तु दहेदग्नौ यजमाने वृथा मृते ' इति । तथा द्विजा नामे आद्धान्नभोजनस्य प्रतिनिधि स्मर्यते । हेमाद्रौ देवल – ' निधाय वा दर्भवटूनासनेषु समाहित । प्रैषानुप्रैषसंयुक्त विधान प्रतिपादयेत् ॥ निर्दिश्य यस्य मुद्दिश्य यत्र पात्र ततो गति । पात्राभावे क्षिपेदग्नौ गवं दद्यादथाप्सु वा ॥ ' इति ॥ प्रतिनिधिनियम सर्वं क्रत्वर्थ एव, न पुरुषार्थ अपि इति न द्विविध । तथा प्रतिनिधिनियम सर्वोऽपि दृष्टार्थ एव, नादृष्टार्थोऽपि इति न द्विविधत्रिविधो चेति ।

प्रतिपत्तिविधिस्तु क्रियाविधिरेव, न जातिद्रव्यगुणविधि इति न चतुर्विध । तथा प्रतिपत्तिविधि द्रव्यो द्देश्यक एव, न जातिगुणक्रियोद्देश्यक इति न उद्देश्य चातुर्विध्यादपि चतुर्विध ॥ प्रतिपत्ति पुन क्रत्वर्थैव [ पृ २४ ] न पुरुषार्था इति न द्विविधस्तद्विधि ॥ प्रति-

पत्तिविधि पुन दृष्टार्थ दृष्टादृष्टोभयार्थश्च, नादृष्टमात्रार्थ इति न त्रिविध । तत्राद्यो यथा– 'चात्वाले कृष्णविषाणां प्रास्यति' इत्यादि ॥ द्वितीयो यथा– स्विष्टकृद्विधि इति ॥ प्रतिपत्तिः पुनश्च द्विविधा– वाक्यादिनियुक्तप्रतिपत्त्याश्रयिका वाक्यादिनियुक्तोपादानानुपपत्तिसिद्धा– प्रतिपाद्य नियमा च । तत्राद्या उदाहृतैव । द्वितीया यथा– 'शकृत् प्रतिपद्यति' इति ॥ प्रतिनिधिप्रतिपत्तिनियमव्यतिरिक्तोऽपि नियमविधि प्रतिपत्तिविधिवत् आत्मा द्विविधत्वेन तावच्चतुर्विध । तत्र ज्ञाननियमविधिर्यथा– क्रयवाक्ये 'गवा' इति । गोपदादेव हि क्रयवाक्य आकृत्यधिकरणवार्तिके 'भव्रयद्यन्दयात्' इति सूत्रे अन्यथासिद्धमन्ये उदाहृतम् ॥ द्रव्यस्य नियमविधिर्यथा– 'स्वहायन्या' इति ॥ गुणस्य यथा– 'अरुणया' इति (अरुणया एकहायन्या गवा सोमं क्रीणाति) ॥ क्रियायाश्च यथा– 'व्रीहीनवहन्ति' इति ॥ सोऽयं प्रतिनिधिप्रतिपत्तिविधिव्यतिरिक्तो नियमविधिः पुनर्द्विविध –क्रत्वर्थ पुरुषार्थश्च । अनन्तरोदाहृत चतुर्विध क्रत्वर्थ ॥ पुरुषार्थो यथा– 'ऋतौ भार्यामुपेयात्' इति । 'प्राङ्मुखोऽन्नानि भुञ्जीत' इति च ॥ पुनः सोऽपि नियमविधि त्रिविध– दृष्टार्थ, अदृष्टार्थ, दृष्टादृष्टोभयार्थश्च । तत्र पुरुषार्थक्रियानियमो नैमित्तिकसर्गोऽपि 'ऋतौ भार्यामुपेयात्' इत्यादि दृष्टादृष्टोभयार्थ । इह हि प्रयोजकत्वेन तादृग्मनुष्यते निष्प्रत्यवायस्य अनागोवत्कत्वात्, तत्प्रत्यवायदेवतागमकत्वात् । प्राङ्मुखत्वादेरपि भोजननिरपेक्षेण अदृष्टमात्रेण अप्रयुक्ते अनवधानात् दृष्टार्थनैव । क्रत्वर्थ तु भार्यानुगमनिमित्तोऽपि तुष्ट्यादे ऋतौ निमित्त अदृष्टार्थं प्रयुक्त एव विधि । सुरेश्वरमते तु उदाहृते इति दृष्टादृष्टोभयार्थोऽयम् ॥ केवलदृष्टार्थस्तु नियमविधिर्यथा– प्रकृतौ वैकल्पिकयो बृहद्रथन्तरयो अन्यतरस्य कानिचिद्विकृतौ नियम श्रूयते इति ॥

परिसंख्याविधेरपि अपूर्वविधिवत नियमविधिवच्च आत्मादिविषयाणि उदाहरणानि मृग्याणि ॥ परिसंख्याविधि पुनर्द्विविध – श्रौतपरिसंख्या, लाक्षणिकपरिसंख्या च । आद्या यथा– 'इमामगृभ्णन्' इति । द्वितीया यथा गृहमेधीये पञ्चम पक्षे ॥ [पृ १५] परिसंख्या पुनर्द्विविधा – शाब्दी आर्थी च । तत्राद्या निषेधरूपैवेति भट्टसोमेश्वर । एतत्प्रकारेण शाब्दी परिसंख्या इति मिथ्या । यथा 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च, अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति ॥ आर्थी तु द्विविधा साक्षात्परिसंख्या या निषेधा । आपातपरिसंख्या च या तदधीना, सा च फलतः परिसंख्येति गीयते । तत्र साक्षात्परिसंख्या भाष्यकारनिर्णीत सिद्धान्ते उदाहरणं नास्त्येव । पूर्वपक्षे तु गृहमेधीये पञ्चमे पक्षेऽस्ति । भाष्यकारासम्मते तु सिद्धान्तेऽपि कचित् अङ्गीकृता । यथा दशमे अङ्गिरसां द्विरात्रे श्रुत 'वैश्वानरं पूर्वेऽहन् साम भवति, षोडश्युत्तरे' इति । तत्र द्विरात्रोत्तमाहास्य अतिरात्रसंस्थत्वात् प्रकृत्यतिरात्रषोडशिविकल्पे प्राप्ते 'उत्तरेऽहन् द्विरात्रस्य ध्यते' इति वाक्यान्तरेण अनारभ्याधीतेन नियत षोडशी इति 'उत्तरे' इत्यनेन अङ्गिरसां द्विरात्रे एव परिसंख्यायते । तेन द्विरात्रान्तरे विकल्प इति भाष्यकारान्येषां सिद्धान्त ॥ शबरस्वामिभिस्तु परिसंख्या नाङ्गीकृता त्रिदोषत्वात् । वैश्वानरविधेस्तु अथवाद 'षोडश्युत्तरे' इत्यङ्गीकृतमिति । 'शतदक्षिण' इत्यपि न साक्षात्परिसंख्या । यद्यपि 'न वा परिसंख्यानात्' (३।७।१६।२३) इति सूत्रकृता तत्र परिसंख्याशब्दमेवोक्त भाष्यकृता च तथैव व्याख्यातम् । तथापि वार्तिककृता गणितवाक्ये समर्थ्यतुले उप सहारमात्रमेवोक्ता । तदेतदुपपादितमस्माभि शास्त्रदीपिकाप्रकाशे । तस्मात् आपातपरिसंख्योदाहरणं स्मार्तमेव । 'पञ्च पञ्चनखा भक्ष्या' इति ॥ आपातपरिसंख्योदाहरणं तु 'इमामगृभ्णन्' इत्येव ।

[पृ २६] परिसंख्या पुनर्द्विविधा – क्रत्वर्था पुरुषार्था च । पूर्वोक्तानि श्रौतानि आद्योदाहरणानि । द्वितीयोदाहरणं तु स्मार्तमेव 'पञ्च पञ्चनखा भक्ष्याः' इति ।

परिसंख्या पुनर्द्विविधा दृष्टार्था अदृष्टार्था च । तत्र क्रतुनिरूपणा सर्वाणि अदृष्टार्थं एव । विधेयारम्भ कचित् दृष्टार्थं, कचिददृष्टार्थं । आद्यो यथा –'इमाम

■ विधिर्वा स्यादपूर्वत्वाद्वादमात्र ह्यनर्थकम् । १।२।२।१९ ॥

इह ये विधिवन्निगदा अर्थवादास्ते उदाहरणम् । 'औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवा ऽस्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै' इति । किमस्य विधि कार्यम्, उत अस्तापि स्तुतिरिति ।

अत्र प्रमाकरेण स्वाभाव्यमतिरोगेन 'औदुम्बरो यूपो भवति, ऊर्जं पशूनाप्नोति' इत्युभयमुदाहृत्य विचारितम् । अत्राय पूर्वपक्ष --- 'औदुम्बरो यूपो भवति' इति विधिर्थंनस्थित एव । 'ऊर्जं पशूनाप्नोति' इत्यत्रापि विध्यपेक्षितपशुरूपफलस्यदर्शनात् पुरुषार्थत्वे च संभवति स्तुत्यर्थत्वायोगात्, प्रयोजनवत्त्वात्र विधितात्पर्यं तावत् प्रतिभाति । तथा ऊर्क्शब्दाभिधेयस्यौदुम्बरस्य अनिर्दिष्टव्यापारस्य पशुसाधनत्वं न सम्भवतीति विधिपक्षेऽपि यूपो पस्थितावश्यम्भावात् अनन्यथाभावितनिहितयूपोऽनुवादि विधानेश्वरत्वात् 'पशूनाप्नोति' इति वर्तमानापदेशप्रतिमा तस्य पञ्चमलकारत्वकल्पनात् ऊर्ग्दुम्बराद्यर्थवादवाना च संनिधानाविशेषात् आनुष्ठानेऽपि निषिद्धपदोपात्तकल्पना दोषात् एकार्थतात्पर्यमपि स्फुरति । अवहननार्थसदेहेनाऽनध्यवसायात् अप्रामाण्यमिति । सिद्धान्तस्तु यद्यपि नियोगविनियोगार्थं विध्यपेक्षितस्याप्यभाव अप्यस्ति, तथापि 'सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते' इति न्यायेन एकवाक्यत्वमनुगृहाय यस्मिन् पक्ष एकवाक्यत्वमनुगुणं भवति, तदेव स्वीकरणीयमिति न्यायानुसारात्, स्तुत्यर्थ एवेति इति । तदेतदधिकारिकल्पकवाक्यार्थाभिधानम् । सर्वत्रैव हि स्तुत्यनुरोधे न्यायानुसार । नैयायिकपक्षपरित्यागेन ■ भक्तग्रहणमिति विवेच्यम् । संशयस्तु अप्रामाण्याशङ्कया सिद्धान्ताभिधाने सर्वत्रैव वैयाश्र्यभवनात् सकलवाक्येष्वेवाऽप्रामाण्येनैव पूर्वपक्ष प्रवर्तेत । तेनात्रापि संशये सति विधित्वेन पूर्वपक्ष इतराऽर्थवादत्व सिद्धान्तोऽयुक्तमुचितम् । यत्तु अप्रामाण्येन पूर्वपक्षाभिधानं तदसमञ्जसमेव । अतो यथावर्तितक्रमेणैतदधिकरण वर्णनीयमिति ।

पूर्वोक्तानर्थक्यप्रतियोगिनामर्थवादानां विध्येकवाक्यतया प्रामाण्य प्रतिपादितम् । इदानीं तेषामेव विधिप्रतियोगिनां प्रामाण्य प्रतिपाद्यते । तत्र 'औदुम्बरो यूपो भवति ऊर्गोऽवरुध्यै' इत्यत्र संदेह किमयं फलविधि, उत अर्थवाद इति । अत्रायं पूर्वपक्षिणोऽभिसन्धि । यद्यप्यौदुम्बरस्य फलप्रतिपादिका कापि श्रुतिर्नास्ति, तथापि 'औदुम्बरो यूपो भवति' किमर्थमित्याकाङ्क्षायाम् ऊर्गभिधेयस्यैव सन्निहितस्य तादर्थ्यं सम्भाव्यते । विशेषतो यथा 'रूपलाय स्थाली' 'यूपाय दारु' तथैहापि तादर्थ्यप्रतिपादिका चतुर्थीश्रुति कापि श्रुतिसमानार्था सम्भवति । तेनात्र समभिव्याहारादेव तृतीयात्यार्थ्योदुम्बरस्य यागाम्येव स्वर्गकारणत्वेनैव नियेश, अतस्तु स्वर्गस्येव साध्यत्वेन । न च स्तुतित्वेनैव अस्यान्वय, फलार्थं चेन विध्युपयोगे सति स्तुत्यर्थत्वायोगात् । न चात्र विधिरेव नास्ति, 'औदुम्बरो यूपो भवति' इत्यत्र औदुम्बरयूपस्य स्वत भवनायोगादप्राप्तत्वेन औदुम्बरं यूपं भावयेदिति सिद्धे तेऽन्यत्वमुपकल्पनीयत्वात् ।

न च चातुर्थिकपर्यायमप्यधिकरणेनास्य गतार्थत्वम् । तस्यान्यत्रैव तुल्य यथातथा सिद्धेऽर्थवादत्वेऽपात्रलोकश्रवणस्य रात्रिसत्रन्यायेन विपरिणामकल्पनया फलत्वमाश्रित्य 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवाद' (४।३।१।१) इत्यनेन अध्यायोद्वय द्रव्यादेफलश्रुति फलशब्दासाधावाच्च विपरिणमयितुं शक्यते इत्युक्तम् । इह त्वर्थवादत्वमेव सुस्पष्टत्वाभ्युपगमनिरासेन प्रतिपाद्यते इत्यपुनरुक्ति ।

ननु औदुम्बरशब्दस्याक्रियात्मकत्वात् गुणफलसम्बन्धो वक्तव्य । न चासौ सम्भवति यत्र क्रियाश्रितो गुण फल साधयति, गुणसाध्या च क्रिया गुणाश्रय । यथा दध्नो होम, गोदोहनस्य प्रणयनम् । न चात्र प्रकृतो याग उदुम्बरसाध्य । न च यूपसम्बन्धोपस्थिता यूपोत्पत्ति पशुनियोजन वाऽऽश्रय इति वाच्यम्, यतः फले गुणविधि प्रकृतो विहित क्रियाविर्वर्तमान कर्माश्रयति । यथा– दधिगोदोहनादिषु न च यूपोत्पत्ति पशुनियोजन वा विकृतिविहितम्, प्रकृतो भूतत्वात् । किञ्च लोकानुसारसम्बन्धो ह्याश्रयो भवति । यथा दधिगोदोहनयोर्होमप्रणयनाभ्यां । अत्र तु उदुम्बरस्य

मानर्थक्यम् । तत्र अवश्यं स्तुतिः कल्पयितव्या । शमयिष्यामि. अद्भिः अग्नेस्य ज्वलतः च संबन्धोऽयं यजमानस्य कष्टं शमयति इति । तत्सामान्यात् इतरेषु 'यजमानः प्रस्तरः' इत्यादिषु तथात्वम् । यथा इति यावत्, तावत् तथात्वमिति । किं तत् सामान्यं विध्यसंभवः स्तुतिप्रयत्नश्च ।

प्रकरणे संभवन्नपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥

दर्शपौर्णमासप्रकरणाम्नाते 'यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यः शृतः स सदेवः, तस्मादविदहता शृतंकृत्यः सदेवत्वाय' इत्येतद्वाक्ये 'यो विदग्धः स नैर्ऋतः' इत्यादेः 'अविदहता' इत्यादिविधिशेषतया अर्थवादरूपस्य चेत् प्रकरणे स्वीये दर्शपूर्णमासप्रकरणे एव संभवन् सन् निविशेत, अपकर्षः प्रकरणादन्यत्र निवेशश्च न कल्प्येत । नैर्ऋतयागानुवादेन विदग्धस्य विधाने हि तत्र स्वीक्रियमाणे अपकर्षः स्यादेव । हि यतः तं प्रति प्रकरणनिहित दर्शपूर्णमासयागमुद्दिश्य विध्यानर्थक्यं विदग्धस्य विधेः असंभवदर्थकत्वं स्यात् प्रकृतयोगे निर्ऋतिदेवताविरहेण नैर्ऋतपदेन प्रकृतकर्मानुवादासंभवात् । इति कासुरिकाचार्याः ।

योऽवधारणे । केचन श्रुतिवाक्ये तस्यैव विदग्धस्य नैर्ऋतत्वनिन्दया 'तस्मादविदहता शृतंकृत्य' इति विधेः शेषीभवन् 'यो विदग्ध' इति वाक्यशेषः दर्शपूर्णमासयोः प्रकरणे इति नैर्ऋतयागादावलक्षणे संभवन् तस्य निवेशः सन् अपकर्षः, कर्मणि यत्, अपकृष्यमाणः दर्शपूर्णमासाभ्यामन्यत्र विकृतिषु निविशमानो भवितुं न कल्प्येत (कल्प्येत इत्यस्य स्थाने) न समर्थो भवेत् । विधिकल्पनत्वे तु विकृतिषु अपकर्षः प्रसज्येत इति यावत् । कुतः ? हि यस्मात् तं प्रति दर्शपूर्णमास कर्मविशेषं प्रति दर्शपूर्णमासयोरिति यावत् । विध्यानर्थक्यं 'यो विदग्धः स नैर्ऋतः' इति विधेः असंभवन्निवेशत्वम्, 'तस्मादविदहता शृतंकृत्यः' इति अविदाहविधानेन 'यो विदग्धः' इत्यनुवादस्याधमत्वात् । इति कुतूहलम् ।

ननु 'यो विदग्धः स नैर्ऋतः' इत्यत्र यो निर्ऋतियागः तमुद्दिश्य विदग्धद्रव्यविधिसंभवे अर्थवादत्वकल्पनमन्याय्यम् अत आह । प्रकरणे दर्शपूर्णमासप्रकरणे संभवन् निविशमानः अर्थवादरूपेण अपकर्षः प्रकरणवियोगः न कल्प्येत, विधिपक्षं मुक्त्वा प्रकरणसंबन्धकल्पनपक्षो न संभवति । अतः विधिकल्पनानर्थक्यं दर्शपूर्णमासे निर्ऋतियागाभावात् । इति सुबोधिनीवृत्तिः ।

यदि स्तुतिः दर्शपूर्णमासयोरेव श्रूयते स्थाप्यते । तथा सम्भवन्नपकर्षो न कल्प्येत (अपकर्षकल्पनाप्रसङ्गो न स्यात्) । अपकृष्यते इत्यपकर्षः । विधिपक्षे यत्र नैर्ऋतः तत्र विदग्धता नीयेत (अपकर्षः स्यात्) । तथा सति प्रकरणं बाधितं भवेत् । दर्शपूर्णमासकर्म प्रति (संकल्पार्थः) नैर्ऋताभावात् विदग्धविधानं अनर्थकं स्यात् । तस्मात् स्तुतिरेव । इति भाष्यम् । सिद्धान्तसूत्रमिदम् ।

विधौ च वाक्यभेदः स्यात् ॥ २५ ॥

'औदुम्बरो यूपो भवति' इति विधौ (यूपस्य विधौ) आश्रीयमाणे 'ऊर्जोऽवरुद्ध्यै' इत्येतस्मिन्नपि (फलस्य विधौ आश्रीयमाणे) वाक्यं भिद्येत । एक औदुम्बरो यूपः प्रशस्तः (इत्येक), च ऊर्जोऽवरुद्ध्यै (इति द्वितीयमिति) । तस्मात् विधिविभागदानामपि स्तुतिरेव कार्या अर्थवादानाम् इति । इति भाष्यम् । के.

* 'विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्' (१।२।२।१९) इत्यनेनैव अत्र विधिः (निरूप्यते) । वा. १।०।१।१ पृ ८९० * 'विधिर्वा स्यादपूर्वत्वात्' (१।२।२।१९) इत्यौदुम्बरादिवाक्यमपूर्वत्वात् प्रमाणमन्यार्थेन नैकल्पिको यजमानः आम्नायते विधीयते प्रस्तरेण प्रस्तरकार्ये, इति पूर्वपक्षः । को. १।४।१३।१३ पृ २७२. * त्रिविध विधानं तदङ्गानां प्रयोगः । भा १।२।१।१. * विधिः विधेयान्तररहितः अनन्यपरः कर्मस्वरूपमेव विदधत् पूर्वाङ्गविधादपरमेव कर्मान्तरं करोति (इति प्रथमाध्यायोक्त-) विधिवल्लक्षणविकल्पोपजीवनम् । वा. २।१।२।१ पृ. ६४०. * विधिः वेदभागः, यस्तु अन्यतमः । स च धर्मे मुख्यं प्रमाणम् । नामधेयान्यपि 'अग्निहोत्र' इत्यादीनि विधावेव अन्तर्भवन्ति । वि.

मुपपाद्य प्रामाण्यसमर्थनं कृतम् । १।१।१।१ पृ. ५० श्रम् . ७ विधिना स्वविषये इष्टसाधनत्वाऽपेक्ष्यते । माट्ट. १।८।८ ❋ नार्थविधीयमाने अर्थवाद समवति 'विधिना त्वेकवाक्यत्वात्' इति न्यायात् अविधेयस्य आनर्थक्यात् । शा. ७।३।५ पृ ५२८. ❋ यत्त 'विधिना त्वेकवाक्यत्वात्' ( १।२।१।७ ) इति तत् अङ्गप्रधानवाक्यानधिमेव पश्चात् सकलफलाद्याभिप्रायेण इति केचित् । वा १।४।१३।२८ पृ. ३६६. ❋ विधेः अनोपरत्वात् न धर्मे प्रामाण्य इति पूर्वोक्त. । अनोपरत्व-सापेक्षत्वयोः अप्रामाण्यकारणयोः अभावात् विधे. स्वत सिद्ध प्रामाण्ये इति सिद्धान्त. । वि. १।१।५. ❋ विधे अर्थवादान्वयस्य श्रुतार्थपरता अर्थवादस्य फलम् । तु. पृ. ४१. ❋ विधे अवस्था. उत्पत्तिविनियोगप्रयोगरूपा. द्वितीयतृतीयचतुर्थाध्याये. निरूपिता. । षष्ठेन च अधिकारो निरूप्यते । परिभाषा पृ. ८२५. ❋ विधे एकस्य अनेकफलसम्बन्धात् एकमेव विशेषणं विधेरत्र पर्यवसितं ' चोदिते हि तदर्थत्वात्. ' ( २।२।३।६ ) इत्यत्र दर्शितम् । सु पृ ७७२ ❋ 'विधेरेव द्वे कर्मणी कल्पयिष्याम.' इति न्यायेन विधेरेव प्ररोचनार्थस्मरणात् ■ तदर्थ विधेयार्थवादापेक्षा । सोम १।८।१९. ❋ 'विधेरेव द्वे कर्मणी कल्पयिष्याम.' इति न्यायेन विहित एव प्ररोचनासम्भवेन ( प्ररोचनाश्रसम्भवेन इति विग्रह ) विधे. अवश्यमर्थवादानपेक्षत्वेन, विधित सामान्याक्षेपोपपत्तेः । कु. १०।१९।२०

❋ विधेः कर्मापवर्गित्वात्कर्मान्तरे विधिप्रदेशः स्यात् । ४।२।१४।२९ ॥

पूर्वपक्षःप्रथम् । ज्योतिष्टोमे 'यदातिथ्याया बर्हिस्तदुपसदां तदग्नीषोमीयस्य ' इति श्रुतम् । अत्र आतिथ्याया यद् बर्हिः विहित तत् तत आच्छिद्य उपसदादौ विनियोगो विधीयते इति प्रथम पूर्वपक्ष । तत्रायं सूत्रार्थ:, विधे. विधानस्य कर्मापवर्गित्वात् कर्मणा आतिथ्याकर्मणा सम्बन्धात् अपवर्गित्वात् अपच्छेदकत्वात् अपच्छेदनपरत्वात् अर्थान्तरे उपसदादौ विधिप्रदेशः विधे. विधानस्य उपयोगस्य प्रदेश नियमन स्यात् इति । आतिथ्यायामेव बर्हि सम्पादनीयम्, परन्तु तस्य तत्र नोपयोगः दृष्टार्थः किंतु अदृष्टार्थ तत्र सम्पादनम्, उपयोगस्तु उपसत्सु अग्नीषोमीये पशौ च इति ।

अथ आतिथ्याया बर्हि सम्पादनीय विनियोक्तव्यं च । तत्र विनियुक्तस्यैव बर्हिषः पुन उपसदादौ विनियोग उक्तेन वाक्येन विधीयते । तथा च उपयुक्तस्य उपयोग. इति द्वितीयः पक्ष. । तत्राय सूत्रार्थ.– अर्थान्तरे उपसदादौ कर्मान्तरे विधिप्रदेश. विधीयते उपयुज्यते इति विधि., तस्य आतिथ्यायामुपयुक्तस्य बर्हिष प्रदेश विनियोग. स्यात् । विधे. आतिथ्याया बर्हिर्विधानस्य कर्मापवर्गित्वात् दृष्टकर्मोपकारकत्वलाभात् । अन्यथा केवलमदृष्टार्थता स्यात् इति ।

अथ आतिथ्याबर्हिषो ये धर्मा आस्तरणादय. तेषा उपसदादिबर्हिषि अतिदेशार्थं उक्त वाक्य इति तृतीय पूर्वपक्ष । तत्राय सूत्रार्थ – अर्थान्तरे कर्मान्तरे उपसदादौ विधिप्रदेशः विधे. विधीयमानस्य आतिथ्याबर्हिर्धर्मस्य प्रदेश अतिदेश. स्यात् । विधेः विधीयमानस्य आतिथ्याबर्हिषः कर्मापवर्गित्वात् कर्मणा आतिथ्याकर्मणा सह अपवर्गित्वात् समाप्तत्वात् । आतिथ्यकर्मणा सह तदीय बर्हिरपि समाप्त सत् नान्यत्र विधातु शक्यते । तस्मात् तद्धर्म निर्देश एवाय इति । इद सर्वं कुतूहलानुसारेणोक्तम् ।

सोमेश्वरेण तु तृतीयपक्षानुसारेण सूत्र व्याख्यातम् ' विधे विधीयमानस्यातिथ्याबर्हिषस्तत्कर्मातिथ्यापवर्गापवर्गित्वात् उपसदादिसम्बन्धकाले आतिथ्यासम्बन्धाभावात् सूत्रपूर्वक-श्रवणे लक्षणाप्रसङ्गात् लक्षणायां धर्मलक्षणैव शिष्टव्याख्यानुग्रहात् ज्यायसी इति अर्थान्तरे उपसदादौ विधिप्रदेश. आतिथ्याविहितधर्मातिदेश स्यात्' इति ।

अपि वोत्पत्तिसंयोगात् अर्थसम्बन्धोऽविशिष्टानां प्रयोगैकत्वहेतु स्यात् । ३० ॥

ज्योतिष्टोमे ' यदातिथ्याया बर्हिस्तदुपसदा तदग्नीषोमीयस्य ' इति पठ्यते । तत्र यदर्थक आतिथ्याबर्हि तदर्थं उपसदामग्नीषोमीयस्य च इति तदर्थं इति पूर्वः पक्ष. । तन्निरासार्थ. अपि-वा- शब्दः । उत्पत्तिसंयोगात् बर्हिष आतिथ्योपसदग्नीषोमीयैः उत्पत्त्या एव उत्पत्तिविधिनैव संयोगात् संबन्धात्

अविशिष्टाना विशेषेण रहितानामेव अयाणा अर्थेन बर्हिषा संबन्धः । एकेन बर्हिषा त्रयाणा सम्बन्धे विशेषो नास्तीत्यर्थः । ■ च सम्बन्धः प्रयोगैकत्वहेतुः स्यात् । प्रयोगस्य बर्हिषः प्रयोगस्य यदेकत्व तेषु, तस्य हेतु स्यात् । त्रयार्थे बर्हिषः प्रयोग एक एव इति अवि-शिष्टाना अर्थसम्बन्धेन सिध्यति । तन्त्ररत्ने तु ' अयम आभ्यासादिधर्मेण सम्बन्धो नातिव्याप्त एव, किंतु अवि-शिष्टाना आनिप्योपसदग्नीषोमीयानाम् । सो हेतुस्तत्प्र-योगैकत्वहेतुः । प्रयुज्यते इति प्रयोगो बर्हिः तदेकत्व हेतुर्यस्य स. तथोक्तः । बर्हिःसाधारणत्वं तदर्थसम्बन्धोऽपि साधारण इत्यर्थः ' इति व्याख्यातम् । सर्वयागानां त्रयाणा साधारण बर्हि. इति सिद्धान्त. । के.

* निर्ग. धर्मनादृगुणप्रयोजकत्वात् । भा. १०।६। १२।११. * त्रिधे' । कामाधिकारे अन्वादीनामधि-कारस्य अतिदिष्टत्वाभावेन, नित्याधिकारे च आम्नात-मानस्य इष्टत्वात् सामान्यतः प्रवृत्तस्य सामर्थ्यानुरोधेन संकोचस्थानेऽपि नातिप्रसक्तिः । सु पृ. ५३२. * त्रिधेश व्यापार आहवनीयगार्हपत्यामिधानासिद्ध' । ऋजु पृ. ५. * ' त्रिधेस्त्वेकश्रुतित्वादपर्यायविधानात्०' इत्यत्र सर्वेषामेव अङ्गाना एकप्रयोगत्वकल्पनया एव सिद्धिं दर्शयति । भा ११।१।२।२६ पृ. ९४८ । अत्र सुधा– सर्वाङ्गप्रयुक्तस्य सिद्ध्यै सर्वेषामङ्गाना एक प्रयोगं प्रयोजनं इत्यस्त्यत्र अपर्यायविधानेन हेतुना विधित्सितस्य अङ्गसामस्त्य एकविधिश्रुतिवशात् यदा प्रतिपन्नं सर्वाङ्गविधायकः एको विधिर्नैष्यते । पृ १४७०. * ' त्रिधेस्त्वेकश्रुतित्वात् ' इत्यनेन न्यायेन ( ११।१।२।२६ ) सर्वेषाम् अङ्गाना युगपत् । भा. ११।१।३।२८.

सू त्रिधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यव-च्छ्रुतभूताभिसम्बन्धादर्थेन युगपत् प्राप्तेर्यथान्याय-मशब्दो निर्वीतवत् सर्वप्रयोगे प्रवृत्तिः स्यात् । ११।१।२।२६ ॥

भाष्ये आग्नेयादिप्रयोगे एकदेशोनाप्यनुष्ठानं सर्वाङ्गो-पसंहारेणैव वा इति विचारे सर्वाङ्गोपसंहारेणैव इति सिद्धान्त प्रतिपादयितुं सूत्रम् । अत्र भाष्यम्– न नु एवदेवं एकदेशेनापि अङ्गाना प्रयोग इति ( सोमतुल्यवद-स्यार्थोऽयम् ) । कथं तर्हि ? सर्वाङ्गोपसंहारेण । कुतः ? त्रिधेः एकश्रुतित्वात् । एकेन शब्देन अङ्गाना प्रयोगो विधीयते ' दर्शपूर्णमासाभ्यां यजेत ' इति सर्वापेक्षया इत्यु-क्तम् । सा नु अपेक्षा कृत्स्ने वा अग्न्यन्वाधानादिव्यापारे तदेकदेशे वा ? तत्र एकदेशापेक्षा न युक्ता । कस्मात् । अपर्यायविधानात् । इमान्यङ्गानि न पर्यायेण विधीयन्ते, कदाचित् समिधो यजति, कदाचित् तनूनपातमिति । कथ तर्हि ? नित्यवत् यथाभूतानि च श्रुतानि तथाभूतानि अपेक्षया अभिसम्बध्यन्ते । यथोच्येत नित्यवत् श्रुतानामपि सता एकदेशोऽपेक्ष्यते इति । नैवमुक्तम् । कुत ? अर्थेन युगपत्प्राप्तेः । अर्थेन प्रधानोपकारेण ' यद्वै कपोतवत् ' युगपत् सन्निपतन्ति अङ्गानि । तत्र न गम्यते विशेषः, इदं प्राप्यते इदं नेति । अतः सर्वाणि प्राप्यन्ते । यथान्यायं च स्वसम्बन्धो निर्वीतवत् । यथा ' निवीता ऋत्विजः प्रचरन्ति ' इति ऋत्विग्विशेषाभावात् सर्वेषा च सन्निधानात् सर्वे ऋत्विजः निवीता भवन्ति । एव-मिहापि सर्वप्रयोगे प्रवृत्तिः स्यात् । इति ।

त्रिधे. यावदङ्गानुष्ठानबोधकविधिः । एकश्रुतित्वात् प्रधानविधिवाक्यस्थत्वात् यावदङ्गप्रयोगविधेः । नित्यवच्छ्रुतात् अत्रत्यायाचकशब्दात् श्रुता यत्किंचन आकाङ्क्षा कथमाका-ङ्क्षा, तथा अभिसम्बन्धात् ( अर्थेन प्रधानोपकारेण युगपदेककाले प्राप्ते सम्बन्धात् । यथान्यायं ( यथाभाग इत्यस्य स्थाने पाठोऽयम् ) प्रथम यस्य आकाङ्क्षापूरकता अन्वित तथैव अनुष्ठानम । निवीतवत् इति दृष्टान्तः । तस्मात् इत्यादिना निगमनम् । इति सुबोधिनी ।

अत्र न्यायसुधा ( पृ. १४७६ )– प्रधानेन सह एक-वेदविहितानामङ्गाना वाक्यैकवाक्यतापन्नवाक्यस्मृतानामेक-महावाक्यार्थभूतानामङ्गप्रधानविशिष्टभावनाविधायकैकविधि-योगविधिप्रयोजकत्वसमवेऽपि वेदान्तरविहितानामेकवाक्य-त्वायोगात् न तत्प्रयोगाय तदेकप्रयोगविधित्वाशङ्कानिरासार्थं विदा-नमुच्यम् । साङ्गप्रधानप्रयोगविधे. एकप्रधानप्रयोगविधि-श्रुतिनिरूपणत्वेन न्यायर्थापत्त्या अवान्तरविरहत्वेन सर्वाङ्गाना विधानावगतेः । नित्यवच्छ्रुताना च तथाभूतानां श्रुत्यादि-

मानसयोरेव द्विधाभवनरूपस्य स्वफलस्य च्छेदस्य द्वैधीकरणव्यपदेश्ययोः उद्भिदाद्याख्ययोः करणम्, तथेहापि अपूर्वस्य यज्ञत्पुरुषप्रयत्न व्याप्यमानो भावार्थः तस्मिन्नेव प्रयत्ने अपूर्वभावनारूपे करणम्। ननु एवं प्रयत्नस्यैव भावार्थो भावनाया करणम्, न यागादिर्नाम हि कर्मेव स्यात्। उच्यते। तत्र न कर्म यागादपूर्वार्थं कृतिविषयत्वात्। यतस्यैव हि कारकाणि कर्तृव्यतिरिक्तानि व्यापारयोग्यानि, न स्वतन्त्रता तानि कर्मता प्रतिपद्यन्ते। अनीप्सितत्वात्। क्रियायाश्चेप्सिते कर्मता दृश्यते एव। यथा 'अग्निहोत्रं जुहोति' इति। करणं तु यत्रापि स्वरूपनिवृत्तौ न प्रभवति। तथाप्यपूर्वभावनारूपता तदधीनत्वमित्यनुपपन्नम्। यथा परशोरेव। न हि परशुः कर्म। करणं तु भवति, अनीप्सितत्वात्। उद्यमननिपतनयो द्वैधीकरणमननुरूपताया तदधीनत्वात्। परशुसम्बन्धमात्रेण उद्यमननिपतने द्वैधाभवनफलनिष्पादकतया द्वैधाभवने कारणता भजेते। अत 'उद्भिदा यजेत' इति तृतीयानिर्देशोपपत्तेः। अपूर्वभावनायाः कारणतानागम्य तत्तामस्याध्यक्षिच्छन्दस्य। एवं चापूर्वप्रयोक्तैव भावना, एकत्वात्पुरुषप्रयत्नस्य एकेनैव च कारणे तत्कालन्नाव्याप्यत्वात् एका एव भावना इति। अत एव न साध्यत्रिकृद्धिरिति प्राभाकराः। यदि विषयीभूतस्य करणता, हन्त तर्हि दर्शपूर्णमासाभ्यामित्यत्र तत्राभिहिताना तु नैनैव प्रतिपत्त्यनुपपत्तेरभावात् विषमभावयोश्चादेश्मैव कारण स्यात्। ननु भेदेनेतिकर्तव्यतामन्यो न स्यात्। उच्यते। न कारणभूतमात्मानमेव प्रतिनिधाप्स्यतो यच्च। यदैव निवर्तीभूत तदेव करणं नापरदिति। तस्मात्। प्रतीत्यनुसन्धायश्च विषयभावः स यथाभिधानमवकल्पते प्रतिपत्त्युपायत्वाद् अभिधानस्य। अतस्त्वनाभिधानात् सहितान। विषयभावः करणं सिद्धमनुमेयो नियोगस्य यथासम्भवं वेदितव्यम्। स्वभावाधीना हि साधनाना साधकता इति स्वभावभेदे हि भिन्ना साधकता। साधकत्वे च कृतिविषयत्वात् कारणतेनाभेदेन कारणभाव। नन्वेवं प्रत्येकं कारणमात्राश्रयणे कारणान्तरनिरपेक्षणात् किमिति नियोगसिद्धिहेतुता न भाति। नैवम्। यथाश्रुतकरणाधीनसिद्धित्वान्नियोगस्य। तत्र यद्यपि करणानि तस्य श्रूयन्ते इति नैव तस्य सिद्धिः। अनेककरणव्यापारतोऽपि एकस्य दृष्टा। यथा गमनस्य अश्वेन शिबिकया वा गच्छतीति। भिन्नस्तत्र करणव्यापार इति यदुच्येत। अत्राप्युत्पन्नापूर्वव्यापारान्तरव्यापारभूतानि भिन्नानि सन्निपत्योपकारकाणि एव। अत एव द्वैधेन निजत्वात्कारणभावस्य परमापूर्वप्रयुक्तेऽपि आग्नेयादिनाम्यकर्मांशत्वमसङ्कर। अपूर्वसाधननिवेशितत्वाद् धर्माणां तस्य च भेदात्। ये पुनर्यागादीनामपूर्वं प्रत्यन्तरा भावना नानुमन्यन्ते। तेषां यागादीनां करणभावो दुर्घटः। अव्यापाररूपत्वादपूर्वस्य, व्यापारमन्तरेणासम्भवाच्च करणभावस्य। गौणकरणधर्मिति चेत्। कथं तर्हि इतिकर्तव्यतायाः? करणं हि इतिकर्तव्यतया सम्बध्यते। गौणं च न करणम्, नहि गौणो मुख्यधर्मं लभते वेदेऽपि सर्वाख्यातेष्वेव भावनाभिधानमाहुः, तेषामपि मतमस्माकं न युज्यते। नहि धात्वर्थाभिधायिषु लिङादिषु भावनाभिधाने प्रमाणमस्ति। यदपि करोति वचनीति उत्तरदर्शनप्रमाणमुपन्यस्यन्ति, तदपि न। साधकव्यापारविशेषणत्वो यत्र किं करोतीति वचनीत्युत्तरेणापि तदेव निर्दिश्यते। यत्तु व्यापारमात्रवाचिधातूच्चारणमात्रं न क्रियते, तत्र सामान्यस्यापि प्रसक्तत्वात् अन्यथा तदुच्चारण प्रश्नेन सहासम्भवः। अत एवाचेतने व्यापारे वर्तमानाद्यत्नादीनां प्रयोगः। लिङादयस्तु चेतनमेवाधिकृत्य प्रयुज्यन्ते न चाचेतनेषु गौणः प्रयोगः। मुख्यचेष्टाविरोधात् कर्त्रादिकर्तृत्वादिमात्रवचनत्वेन 'रथो गच्छति' इत्यादिषु लडर्थे तत्राचेतनेऽपि मुख्य एव लडर्थ इति। धातूनामेव क्रियावाचित्वात् प्रथमोपनिपाती व्यापार एव धात्वर्थो मुख्यः। यत्तु संयोगविभागौ क्रियानैव भवतः अव्यापारेण। केवलस्य संयोगस्याग्राह्यत्वात् संयोगेऽपि संयोगेऽस्य गच्छतीत्यप्रयोगाद्विभागेऽपि विभागे प्रयोगानुपपत्तेः। न चैतस्य विभागस्य गमिवाच्यतेति निपुणेन मनीषिणा निर्णीतं भाल्लवितेन मनोहारिणा निबन्धेन।

'शालिकनाथेन कृत कृतिनामुपकारसिद्धये सम्यक्।
समुदीक्ष्य या गुरुमतं सम्यग्निरूपणीयमिदम्॥'

प्रकरणपञ्चिका पृ १८७—२०१.

रथयूपे 'उपशयो यूपो भवति' इति यूपशब्देन । ७।३।१३-२८ ● विध्यन्त न सोमे ऐष्टिकधर्माणाम् । ८।१।३।३-१० ● विध्यन्त नाम इत्थम्भावरूप इतिकर्तव्यतानुधारणम् । तस्य च अनेकाङ्गनाक्यनदर्थतत्प्रयोजनालोचनमध्यस्य पञ्चमाग आदि इत्याचार्याणा विध्यादिशब्देन प्रसिद्धि । भा ३।३।७।१४ पृ ८५४ ● विध्यन्त निर्वापेन प्रथमस्य उत्तरनिकायिषु । ८।१।१२।२९ ● विध्यन्त नैयमिकाग्निहोत्रस्य कौण्डपायिनामयनगताग्निहोत्रे । भा ७।३।१।१-८ ● विध्यन्त पशौ सान्नाय्यात् । टुप् १२।२।१।१ पृ. २२१६, ● विध्यन्त पशुपुरोडाशे दार्शपौर्णमासिकात् अग्नीषोमीयात् पुरोडाशात् । १२।१।१।१ पृ २२१६ ● विध्यन्त प्रथमस्य मानसस्य साहस्रस्य च उत्तरेषु । ८।१।१२।२९ ● विध्यन्त आरणमापासिकैकापाकधर्माणा साकमेधीयेषु पाके । ७।१।५।११ ● विध्यन्त श्येनीयविशेष धर्माणा इषौ । ७।१।२।१३-१६, ● विध्यन्त पशुधर्माणा पशुविशिष्टाग्ने । ८।१।६।६-७ ● विध्यन्त सवनीयपशुधर्माणा ऐकादशिनेषु पशुषु दैवत्यसामान्यात् मुख्यकालत्वाच्च । ८।१।७।१४ ● विध्यन्त साद्यस्केन निगम्यते । टुप ८।१।३।५, १०।८।१।२५. ● विध्यन्त सान्नाय्यस्य अग्नीषोमीयपशौ । तथापि पयसो न दध्न । ८।२।२।१०-१४, ८।२।३।१०-१८ ● विध्यन्त सान्नाय्यस्य आग्नेये पयसि । भा ८।१।१०।३४ ● विध्यन्त सान्नाय्यस्य साकिने । ८।२।१।१-१ ● विध्यन्त सान्नाय्यधर्माणा वैश्वदेवामिक्षाणाम् । ८।२।८।१९-२४ ● विध्यन्त सोमस्य अभिजिद्-विश्वजिदादिषु श्येने च, अगत्वचोदनत्वात् । ८।१।९।१६, ● विध्यन्त सौमिकानुमन्त्रमाणा चातुर्मास्यस्थगतान्नायानश्रूये । ७।३।४।१२-१५ ● विध्यन्त नारिष्ठानि सवरणतीमध्यमन्त्र अग्नीषोमीयपशुगतानिमन्त्र्ये । ७।२।७।१९ ● विध्यन्त नारिष्ठानि सौमिकातिर्येष्टिगतैकानन्द राजसूये पूर्वत्रिसयुक्तगतैकाद्विकपाले । भा ७।३।८।१८ ● विध्यन्तेन धर्म प्रवर्तते । भा ८।१।१।३।२०. ● विध्यन्तस्य अतिदेशोऽविहितकर्मप्रयोगेषु कौर्यादिषु । ७।४।१।१

● विध्यन्तस्य वैदिकस्य यस्य लिङ्ग किंचित्, शब्दगतमयगत वा वैकृत्या कर्मचोदनाया तद्गुणवाक्ये वा दृश्यते तत्र स विध्यन्त स्यात् । भा ८।१।२।२

**अनु विध्यन्ताधिकरणम् । सौर्यादौ वैदिकस्यैव विध्यन्तस्य अतिदेश ॥**

**स लौकिक स्यात् दृष्टप्रवृत्तित्वात् । ७।४।१।१॥**

भाष्यम्— अधुना एव चिन्त्यते किं अनियमो लौकिकी वैदिकी वा इतिकर्तव्यता उत लौकिक्यैव आहोस्वित् वैदिक्यैव इति । अत्र विशेषाभावात् अनियमे प्राप्ते उच्यते, स लौकिक स्यात् । स खलु कर्तव्यतोपाय लौकिक स्यात् । कुत ? दृष्टप्रवृत्तित्वात् । दृष्टा हि अस्य तत्रतत्र प्रवृत्ति, यथा पार्वणस्थालीपाके, अष्टकायाम्, आपद्धाभणे कर्मणि । इत्येव यत्सर्वयाग अपूर्वं साध्यते तत्रस्य अस्य प्रवृत्तिर्दृष्टा । अत आम्नानात् विज्ञायते यागस्य अपूर्वं साधयन् अयम् अभ्युपाय इति । अत्र चापि याग । तस्मात् अत्रापि स एवाभ्युपाय ।

टुप्— इद तु चिन्त्यम्, किमसौ लौकिकी वैदिकी वेति ।

**वचनात्तु ततोऽन्यत्वम् । २ ॥**

भाष्यम्—आह, किं एष सर्वोऽवगतं सर्वैव लौकिकी इतिकर्तव्यतेति ? एव खलु प्राप्तम् । एव प्राप्ते, ब्रूम । वचनात्तु ततोऽन्यत्वमिति । यस्य प्रत्यक्ष वचनम्, वैदिकस्तस्य न लौकिकी स्यात्, तत्रलाभन्यांसि वैदिकी एव स्यात् । यथा उपवसथे, गृहमेधीये च ।

**लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् । ४॥**

भाष्यम्— लिङ्गेन वा इतिकर्तव्यता नियम्येत । कथम् ? यत्र लिङ्गम् । वैदिक्याश्च लिङ्गम् । तस्मात् वैदिकी । किं पुनर्लिङ्गम् ? सौर्ये तावत् चरौ भवति 'प्रयाजे प्रयाजे कृष्णल जुहोति' इति । तथा प्राजापत्ये 'अर्थं बर्हिषो दद्यात्, अर्थं न, स्तम्भ इति अपि केशां कर्मोपि अर्धे न' इति । तथा त्रिवृति 'न होतारं वृणीते, नार्षेयम्' इति । एतैर्लिङ्गैर्वैदिकी

'ग्रीष्माय कल्पविङ्कानालभते' इति । तेन वैदिकी इतिकर्तव्यता प्राप्यते । ननु यदि तत् ब्राह्मणं अस्य अन्त. कल्प्यते, तत्र न भवति । तदेतत् मयूरस्यं आपद्यते । तद्यथा, मयूरस्य नृत्यतः अन्यदपाक्रियते अन्यत् भविष्यते । एवमिहापि इद् वैदिके तत् अपाक्रियते । नैष दोषः । प्रत्यक्षस्य तत्र भावः । इह पुनरानुमानिकः । न च आनुमानिकं प्रत्यक्षं बाधते । इह तर्हि न प्राप्नोति, प्रत्यक्षविरोधात् । स्यादेवम्, यदि विरोधः स्यात् । न तु अस्ति विरोधः । तत्रापि भविष्यति इहापि । नवैतदुक्तं 'विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत' इति (१० सू.) । उच्यते । प्रकृतिवदिति किम् ? आह, अष्टमे प्रकृतिनियमं करिष्यति, इयमस्य प्रकृतिरिति । तदुच्यते, विध्यन्तो वा प्रकृतिरिव प्रवर्तेत । यो यस्य कर्मणः प्रकृतिरिति, यस्य आग्नेयः प्रकृतिः, तस्य आग्नेयादेव । यस्य अग्नीषोमीयः, तस्य अग्नीषोमीयादिति । एवं सर्वत्र । अथ कस्मात् न लौकिको विध्यन्तः कल्प्यते ? उच्यते । लौकिकस्य विधेः अभावात् विध्यन्त एव नास्ति, कुत एव कल्पनेति । आह, लौकिकी इतिकर्तव्यता प्राप्नोति किं विध्यन्तकल्पनयेति । उच्यते । वैदिकी हि अत्र इतिकर्तव्यता, न लौकिकी । कस्मात् ? तथाहि लिङ्गदर्शनं प्रयाजादि समर्थितं भवति ।

टुप्— कथंभावाकाङ्क्षाया यत्र इतिकर्तव्यता न आम्नायते, तत्र कथंभावस्य अश्रूयमाणत्वात् चोदना स्वर्गं वाक्यं बुद्धौ उपस्थापयति । तद् वाक्यमनपेक्षित फलवाक्यार्थमवबोधयति । स च वाक्यार्थः फलकरणेतिकर्तव्यतानुगतः । तत्र फलकरणे अनाकाङ्क्षितत्वात् न सम्बध्येते । इतिकर्तव्यता तु अपेक्षितत्वात् सम्बध्यते उपमितत्वाद्धितप्रापणेन । सादृश्यं च वैदिकेनैव भवति, न लौकिकेनेति ।

लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् । ११ ॥

भाष्यम्— यदि लिङ्गात् वैदिकोऽभ्युपायो भवति, तेन तर्हि ? अलिङ्गे लौकिकः स्यात् । यत्र कर्मणि किंचिल्लिङ्गं नास्ति, तत्र लौकिकः स्याद्विधानम्, यथा 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् यस्य सजाता वीयुः' इति ।

लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थाली पुलाकेन । १२ ॥

भाष्यम्— अत्रोच्यते । स्यादेतदेवं यदि लिङ्गहेतुको वैदिक उपायः स्यात् । न तु असौ लिङ्गहेतुकः । किं हेतुकस्तु ? विध्यन्तहेतुकः । विध्यन्तोऽपि न्यायपूर्वः । न च न्यायस्तुल्यः सर्वेषां कर्मणां वैदिकानां लिङ्गवतां अलिङ्गवतां च । कुतः ? चोदनाशब्दसामान्यात् । कर्मचोदनायां शब्दः समानः । सर्वत्र विध्यादिरस्ति, न विध्यन्तः । तुल्यश्च अपेक्षया अन्यत्र श्रुतेन विध्यन्तेन सम्बन्धः । तदेतत् न्यायपूर्वकं लिङ्गमेकत्रापि दृश्यमानं तुल्यन्यायानां सर्वेषां धर्मवत्तां ज्ञापयति । यथा स्थाल्यां तुल्यपाकानां पुलाकानां एकं उपमृज्य अन्येषामपि सिद्धतां जानाति तुल्यो हेतुरस्य च अन्येषां च सिद्धत्वस्येति । तस्मात् सर्वत्र वैदिकी इतिकर्तव्यता । अथ यदुक्तं दृष्टप्रवृत्तित्वात् लौकिकी इतिकर्तव्यतेति । अत्र ब्रूमः । सामान्यतो दृष्टमेतदुपदिश्यते । सामान्यतो दृष्टं च यदव्यभिचारि तत् प्रमाणम् । सव्यभिचारि चैतत् । दृष्टा हि यागाद्यः अनेकविधेतिकर्तव्यताकाः । तस्मात् दृष्टप्रवृत्तित्वात् इत्यहेतुः । यत्तु वैदिक्या भाक्तत्वात् तत्पूर्वाणि लिङ्गानि भविष्यन्तीति । अत्र ब्रूमः । भाक्तत्वस्य अप्रतिकर्तव्यतात्वे किं हेतुः ? तत्प्राकृतश्च तस्याः शब्दपूर्वः । तत्त्वेन च दर्शपूर्णमासयोः असौ इति श्रूयते, न सर्वेणेति । तस्मान्न भाक्तत्वम् । अतो विध्यन्तेनैव इतिकर्तव्यता प्राप्यते नान्यथा ।

अथ यस्मादेतानि वैकृतानि वाक्यानि न्यूनान्येव समाम्नायन्ते, किमेभिः पूरितैः ? न्यूनानि अनर्थकानि भवन्तीति । भवतु, को दोषः ? सिद्धैरपि सपरिग्रहो न युज्यते । प्रमादात् भविष्यतीति । नास्त्यक्षरे प्रमादः । वा प्रमादः, पुनः एतावन्ति ग्रन्थे भविष्यति । कथम् ? 'तुल्यं च साम्प्रदायिकम्' (१।२।१।८) इत्युक्तम् । व्यामोहोऽपि विदुषां युगसहस्राणि बहूनि नानुवर्तेत । युज्यते चैषां अपेक्षया पूरणम् । तस्मात् ऊनानि नानुमन्यन्ते । अतो वैदिकी इतिकर्तव्यता इति सिद्धम् ।

नाशकालीनेति। यत्र ‘कलञ्जभक्षणम् अनिष्टसाधनम्’ इति वाक्यात् अनिष्टसाधनत्वादिशाब्दबोध तत्र नञन्य-सम्बन्धनाशकालीनाभावदशायां उक्तप्रयोगापत्तिवारणाय अनुमितिजन्येति नाशविशेषणम्। अनिष्टानयकभक्षणेन-नुविधायिताविहेतत्वज्ञानजन्यानिष्टसाधनत्वानुमितिसम्बन्ध-सम्बन्धनाशकालीनप्रकृत्यभावदशायां तादृशप्रयोगापत्ति-वारणाय व्यभिचरेत्यादि। अत्र निरुक्तसम्बन्धेन लिङ्गार-णाप्रयोज्याभाववर्तमानतादशायां तादृशप्रयोगापत्तिः, अतः स्वनिषयकज्ञानमपि स्वजन्यानुमानकालीनत्वमात्रोपपेक्ष्येव विशिष्य तत्तद्व्यक्तित्वेन प्रविष्टं ज्ञानसाधनाय विशेषणम्। अत्र प्रथमं स्वपदं प्रवृत्तिकारणतावच्छेदकीभूतस्वत्वरूप-शक्तिपरम्, द्वितीयं स्वपदं तु पूर्ववत् लिङादितत्तद्व्यक्ति-परम्। तेन निरुक्तसम्बन्धसम्बन्धनाशकालीनलिङादिज्ञानो-पवेशघटितज्ञानजन्यानुमितिसम्बन्ध इत्यादि. फलितोऽर्थः। एवं च अनुमितिजन्य विशिष्यप्रवेशोऽपि न क्षतिः।

तत् सिद्ध निवारणरूपस्य लिङर्थस्य अनेन सम्बन्धेन आख्यातार्थकृतौ अन्वयः इति। नञ्पदं तु स्वार्थस्य अभावस्य प्रतियोगितासम्बन्धेन आख्यातार्थकृतौ अन्वया-नुवादकं सत् लिङाद्यर्थतात्पर्यग्राहकं इति सर्वमनाकुलम्।

तत् सिद्धं प्रवर्तना–प्रेरणा–विधि– अपरपर्यायभूता भावना नञ्घटितवाक्ये लिङाद्यर्थः। सैव च शब्दनिष्ठ-त्वात् वेदे शाब्दी भावना इत्युच्यते। तत्त्वच्छक्तितावच्छे-दकं तु लिङ्त्वं लोट्त्वं च, न तु तव्यत्वादिकमपि, तेषां ‘प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च’ (पा. ३।३।१६३) इति स्मृत्या प्रैषाद्यर्थकत्वेन विध्यर्थकत्वास्मृतेः। प्रमाणा-न्तरप्रमितेऽर्थे पुरुषनिष्ठा पुरुषप्रवर्तना प्रैष। अतिसर्गः कामचारः। ‘स्वाध्यायोऽध्येतव्यः’ इत्यादौ तु अध्ययना-र्थत्वात् प्रयत्नाधेन विधौ लक्षणा इति सांप्रदायिकाः। लिङाद्यादेशत्व वा शक्तताच्छेदकं भूयमाणत्वात्। रहस्य. पृ. २–१९.

• विध्यर्थबोधक्रमः। तदयं भाट्टमते बोध-क्रमः। स्वर्गकामनिष्ठा यागकरणिका स्वर्गफलिका प्रयाजादीतिकर्तव्यताका भावना इत्यर्थभावनाबोध।

विधिनिष्ठ शक्तिमद्वर्णिका मनुष्यर्थवादोपकृता प्रव-र्तना इति शब्दभावनाबोधः वृत्तिकल्पनेन लक्षणया वा उपपद्यते। तत अर्थभावना निरुक्तप्रवर्तनाविषय इत्येक-वाक्यतया महावाक्यार्थबोधः। अत एव विध्युक्ता भावना लिङर्थ इति भाट्टसिद्धान्तः। विधिः प्रवर्तना, तदुपरक्ता तद्विशिष्टा अर्थभावना लिङ्प्रतिपाद्या इत्यर्थः। अर्थभावनाविशेषणत्वेनैव शब्दभावनायाः अन्वयः। राजादिकृत्याज्ञादेः तथैवानुगमात्। तदन्वयेन योग्यत्वेन प्रवर्तनायामपि स्वकृतनिष्ठानानुबन्धीष्टसाधनत्व कल्प्यते।

‘न सुरां पिबेत्’ इत्यादौ प्रतिषेधवाक्यार्थोऽपि इत्यमेवोह्यः। एवमन्येऽपि अन्यथबोधाः व्यवहार्याः इति। मणि, पृ. ९३.

* विध्यर्थवाद पयोहोमस्य, अग्निहोत्रे वर्तित यवाग्वादिनिषेध.। १०।८।४।७. मीको पृ १७४१ ‘वर्तिल्पयागन्याय’ इत्यत्र अधिकरणं द्रष्टव्यम्। * विध्यर्थवादः वैश्वानरयागस्य ‘योऽस्य पुत्रे’ इति वाक्यम्। अक्षानुवादोऽन्यविध्यर्थं अग्निरना द्विराते। १०। ५।१३।५३–५७ यशंक २ मीको पृ १८१ ‘अग्नि-रना द्विरातं पौर्णमिस्योपसद्वार’ इत्यत्र अधिकरणं द्रष्टव्यम्। * विध्यर्थवादयो. एकवाक्यत्वम्। सु. पृ. ७८४ * विध्यर्थवादयो. एकवाक्यत्वाभावात् अर्थवादस्य धर्मे नास्ति प्रामाण्य इति पूर्वपक्षः। विध्यर्थवादयो. पदैकवाक्यत्वाभावेऽपि वाक्यैकवाक्यता अस्त्येव। अर्थवादो हि विध्यपेक्षित प्राशस्त्यं समर्पयति। ततश्च अर्थवादा अपि धर्मे प्रमाणम्। शि. १।२।१. * विध्यर्थवादयोर्बलाबलम्–– विध्येकवाक्यत्व विना अर्थवादत्वानवगमात् विधिविरोधावसरेऽपि स्तुति-निन्दाभावानुपपत्तेः न विधिजन्येन ज्ञानेन अर्थवाद-जन्यस्य ज्ञानस्य बाध्यत्वलक्षण विध्यर्थवादयोर्बलाबल किंतु विध्येकवाक्यत्वानुसारेण अर्थवादस्वरूपावधारण लक्षण तस्य विरोधकारणत्वाभावात् न मुख्यार्थबाधाप-वेक्षम्। सु पृ १७०१ * विध्यर्थवादयो. शक्तिः विषयावबोधने तुल्या। वा ३।४।१।१३ पृ ९६७, * विध्यर्थवादानां प्रधानगुणभावे सत्यपि पूर्वापरो-च्चारणकृतोऽन्यो विशेषो भवति। सर्वैव तावत् पूर्वं विधान अनुपजातपरिबुद्धि, द्वितीयविधानान्तरानुत्पाद्य-त्वात् आकाङ्क्षया आत्मानं लभते। पश्चात्तनं तु

व्यतिरेकसामर्थ्येऽपि न प्रमाणिकी कार्यतेति युक्तमेतत्। किन्तु एवं सति सुखदुःखप्राप्तिपरिहारातिरिक्तेषु तत्साधनतैव प्रवृत्तिकारणमङ्गीकृतं स्यात्। ततश्च 'ग्राममानय' इत्यत्र ग्रामानयनस्य सुखदुःखप्राप्तिपरिहारत्वाभावात् प्रवृत्तिहेतुभूतां कार्यतामभिदधानो विधिशब्दः समीहितसाधनताभिधायी स्यात्। तेन अयं ग्रामानयनं कृत्यहं तथाविधे पुरुषाणां कृति प्रवर्तनं तथाविधमित्यर्थः। तथाविधता साधनत्वस्य समीहिततया समर्पणीति तत्साधनत्वैव पारिशेष्यात् कार्यताविना शब्देनाभिहिता भवति। तथा च वेदेऽपि अपूर्वस्य स्वयं सुखदुःखप्राप्तिपरिहारत्वाभावात् तत्साधनतैव कृत्यर्हेति कार्यरूपमपूर्वमभिदधानो लिङ् समीहितसाधनतामेवाभिदध्यादिति नैमित्तिकनिषेधाधिकारयोरपि साधनत्वापूर्वाभिधानात् तद्द्वेनैवाश्रुतमपि फलं कल्पनीयं स्यात्। ननु न सुखस्य कार्यत्वम्, तत्साधनेऽपि भावात्। न साधनत्वम्, सुखेऽपि भावात्। तदुभयानुगतं कार्यत्वं तत्रात्मकं कार्यत्वं नाम प्रवृत्तिकारणमिति। मैवम्। न हि साधने कार्यत्वं नाम किञ्चित् प्रवृत्तिनिमित्तमुत्तरकाले वा प्रत्यक्षेणावगम्यते इत्युक्तम्। अतो नास्त्युभयानुगतं कार्यत्वं नाम कश्चिदर्थविशेषः। कर्तव्यतावदस्तु अयमेकोपाधिरित्यात् उभयत्र प्रवर्तते, तद् द्वयमपि साध्यमानं स्वोद्देशेन पुरुषं प्रवर्तयतीति अनेनैवोपाधिना कार्यशब्दप्रवृत्तिः। तस्मात् कार्यतामात्रं क्रियायाः प्रवृत्तिकारणम्, अपि तु समीहितसाधनत्वावगमः। भवतु वा समीहितसाधनत्वोपलक्षणमेव कार्यत्वम्। तत्तु क्रियायाः एवाभिधातव्यम्। तत्रैव प्रवृत्तिदर्शनात्। अत एव लोके क्रियैव कार्यतया शब्देन प्रतिपाद्यते, वेदे तु फलकामिनियोज्यान्वयानुगुण्यात् स्थिरमेव कार्यं लिङादिभिरभिधीयते इति चेन्मैवम्, क्रियायामपि कामिनः कार्यतावगमाविरोधात्। नासौ फलसाधनीभवितुं समर्था आशुतरत्वात्, इति चेन्न, अपूर्वद्वारेणोपपत्तेः। तद्द्वारेणान्यस्य साधनत्वं संभवति अतिप्रसङ्गात्। अत्रान्तरव्यापारो वा शक्तिर्वा साधनत्वमुपपादयति नापूर्वम्। तथा हि अग्निः व्यापारवति काष्ठे ज्वलति इति व्यापारयोः स्थित्यनुपपत्तेरिति चेत्, किमिदानीं काष्ठानां पाकसाधनत्वं नास्ति तत्रापि हि काष्ठेभ्यस्तेजसा परमाणव-

समुद्गताः स्थाल्युदरमनुप्रविशन्तः तण्डुलान् विक्लेदयन्ति। न च तेषां द्रव्यरूपाणां काष्ठावान्तरव्यापारत्वं तच्छक्तित्वं वा समस्तीति न तद्द्वारेण काष्ठादीनां साधनभावः स्यात्। मा भूदिति चेन्न, सर्वलोकप्रसिद्धिविरोधात्। 'काष्ठैः पचति' इति निर्विवादप्रयोगात्। तस्मात् यदेव येन समीहितफलोद्देशप्रवृत्तेन तदुपायभूतमन्तरा ज्ञायते तदेव तस्यावान्तरव्यापारत्वेन अभिधीयते। तेन यागस्यापूर्वस्य कर्मान्तरव्यापारत्वम्। यदि चैव नेष्यते ततोऽपूर्वं प्रत्यपि साधनस्य कर्मणो न स्यात्। तदपि न कर्मानन्तरं जायते क्षिप्रकृताशुतरतत्त्वानुष्ठानप्रवीभागात्। तत्रानन्यमुखरतापूर्वाणि अवान्तरव्यापारत्वेनैषितानि। उत्तरापूर्वाण्येव परमापूर्वस्य कारणानि, न यागादीनि, इति चेन्न, न, असिद्धत्वादवान्तरापूर्वत्वाच्च। अधिकारवाक्ये फलकामिनियोज्यान्वयानुगुणापूर्वाभिधानसिद्धिः अभिधीयते पश्चात्तदेवावान्तरापूर्वाभिधानसिद्धिः प्राक्तनलोकावगतक्रियाभिधायित्वमेव तेषु सम्भवतीत्यसिद्धत्वादुत्पत्त्यपूर्वाणां न परमापूर्वसाधनत्वेन अन्वयसंभवः। न च यागादेरपूर्वाभिधायित्वम्, येनावान्तरापूर्वाणां प्रत्यवायपरमापूर्वं प्रति कारणत्वं स्यात्। तस्मात् यथैव कल्प्यम्। किञ्च कार्यत्वमेवापूर्वस्य नोपपद्यते कृतिसाध्यं हि कार्यमुच्यते। कृतिश्च पुरुषप्रयत्नः। न च प्रयत्नमात्रेणापूर्वस्य सम्भवः, निरवधिकं प्रयत्ने तदुत्पादात्। प्रयत्नेन हि यागः, ततोऽवान्तरापूर्वम्, ततः पश्चात् अधिकारापूर्वम्, तस्मात् कार्यत्वानुपपत्तेर्न कार्याभिधायिलिङ्वाच्यता अपूर्वस्य सम्भवति। तथा च प्रयत्नसाध्यत्वमपूर्वस्य यागावान्तरापूर्वद्वारमाश्रयितव्यम्। तद्वत् यागस्यापि फलसाधनत्वमपूर्वद्वारकमिति नेष्यते। मा वा भूत् फलसाधनक्रियापूर्वं साधनं तारतम्येन, तावतापि कार्यतया कामनानुमतत्वेन पुरुषः, यस्मिन् अकृते समीहितं न प्राप्यते, कृते च प्राप्यते साक्षात्परम्परया वा तदेव कार्यतया बुध्यते, न तु साक्षात् भावविशेषमात्रोपयोगी। अतश्च कामिनः क्रियायामपि कार्यतावगतिरेषितव्या। कथमन्यथा स्वतन्त्रः प्रवर्तते। सत्यम्, अतस्तेन तत्रापि कार्यावगतिः, न तु शाब्दी किन्तर्हि

नताऽभिधीयते इत्यवधारणीयम् । तथाऽस्मिन् पक्षे प्रत्ययावगतलिङ्शब्दादिभ्यः प्रवर्तनावगते न शब्दस्वरूपविशिष्टाभिधाव्यापाराभिधानाद्विशेष इति । न्यायविदां त्विष्टसाधनत्वमेवाभिमतम्, न च संविद्विशेषः तेन रूपेणाभिधानाभावात् । प्रवर्तनारूपेण तु शब्दोऽभिधत्ते प्रवृत्तिहेतुं धर्मं प्रवर्तना । सा चापौरुषेये वेदे प्रैषादीनामसम्भवात् पारिशेष्यादिष्टाभ्युपायतैव निश्चीयते तेन अभिधाव्यापारप्रवर्तनाभिधानात् प्रवर्तनारूपेणेष्टसाधनता शब्दोऽभिधत्ते न स्वरूपेणेति न प्रतीतिविरोधः । इदमेव भगवतो मण्डनमिश्रस्यापि 'पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः । प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥' (विधि २८३)। 'एवङ्कारं च प्रवर्तनाप्रत्ययम्' इत्यादिग्रन्थेऽभिमतम् । एवं चान्ते कार्यान्तरं कल्पितं न भवति तदर्था हि प्रेरणमध्येषणमनुज्ञानमिष्टसाधनता चेति सङ्कोऽर्थो शब्दस्य कल्प्येरन् । प्रवर्तनासामान्यवाचित्वे तु लाघवं स्यात् तथापि तु रागद्वेषमोहादीनां प्रवृत्तिहेतूनामनाश्रयत्वादे । तत्र योऽवगम्यमानतया प्रवृत्तिहेतुस्तदभिधायी लिङ्शब्द इति । न च प्रवर्तनैव स्यात् कमनीयोऽभि प्रतिपाद्यमानः प्रैषादिव्यपदेशभाक् तेनोद्गत शब्दार्थ इति धावतम् । अनर्थान्तराभ्युपगमेनैव व्याख्याता लिङ्प्रयोगादित्युक्तम् । तस्मात् प्रवर्तनासामान्यं शब्दार्थः । एष च विशेष एव शब्दार्थो इष्टसाधनयोऽपि हि । न च प्रवर्तनायाः इष्टसाधनतार्थत्वम् ॥' इत्यत्र श्लोके पूर्वार्धेन परागमुपन्यस्योत्तरार्धेन स्वमतमुपन्यस्तमिति व्याख्यातव्यम् । प्रवर्तनासामान्यमभिदधता लिङ्शब्देन निर्विशेषसामान्यस्यानर्थक्यापत्तेरपौरुषेये च वेदे पुरुषधर्माणां प्रैषादीनां विशेषाणामभावात् पारिशेष्यादिष्टसाधनतैव बोध्यते इति 'अभिधाभावनामाहुः' इत्यस्यापि वार्तिकपादस्यायमर्थः । अभिधीयते इत्यभिधा प्रवर्तना वर्तयता या सैव च पुरुषप्रवृत्तिं भावयतीति भावना तामाहुरिति । अथवा अभिधाया शब्दस्य भावना अभिधाभावना सैव प्रवर्तना परस्म वैनाऽपि शब्देन पुरुषः प्रवर्त्यते तदिष्टसाधनत्वेऽभिधीयमाना शब्दव्यापारत्वेनोच्यते तामाहुरिति । अथवा इष्टसाधनताऽभिधानमभिधा सैव विधानं विधिरिति व्युत्पत्त्या विधिरित्युच्यते सैव च भूतिकर्तृत्व प्रतिपद्यमाना पुरुषप्रवृत्ते प्रयोजकस्य शब्दस्य व्यापारो भावना तामाहुर्युक्तवन्तीति योजनया पश्चात्तीति व्याख्येयम् । तदेवं शब्दकर्तृक प्रवर्तनारूपेष्टसाधनत्वाभिधानमेव शब्दभावनेति गीयते । तथा पुरुषप्रवृत्त्यर्थं प्रवृत्ते पुरुषप्रवृत्तिर्हि स्वर्गादिस्थानीया सा या समीहितसाधनताविज्ञानं तु परम प्रवृत्तशब्दव्यापारजन्यतया यागादिवत् करणं प्राधान्यमाननु इतिकर्तव्यतेति विवेचनीयम् । प्रवर्तनेति समीहितसाधनतैवोच्यते । तदुद्देशेन हि कृतिः प्रवर्तते इति वर्णितम् । एवं च प्रवर्तनावचनं प्रवर्त्यत्ववचनं प्रत्यय इत्यादि ग्रन्थस्याविरोधः । न च सहप्रयोगविरोधः, प्रवृत्तिनिमित्तभेदात् पर्यायत्वाभावात् । इष्टसाधनशब्दो हि तत्साधनतामेव साक्षादभिधत्ते, लिङादयस्तु प्रवर्तनारूपेण इत्यर्थं लक्षण्य चेति नास्ति पर्यायता । तदिदं कर्तव्यरूपं प्रवर्तनारूपं वा समीहितसाधनत्वमेव लिङादिभिरभिधीयते इत्येतावदेव रमणीयम् । स्वव्यापाराभिधानपुरस्सरं ग्रन्थानुगुण्यमपि नातीव दृश्यते । तथा हि निषेधवाक्येषु प्रतिषेधस्य वर्जनस्य नञाभिधेयस्य लिङादिभिर्विधेयो प्रतिषेध इति यत्तत्र यत्नं कृतमहोऽपि य 'ब्राह्मण न हन्यात्' इत्यत्र पुरुषार्थनिषेधस्य प्रतिपादयता प्रतिषेधविधानविरुद्धप्रसङ्गे निषिध्यतेनेऽप्यविरुद्धमुपपादयता तेन निष्फलमपि द्वेषाद्यधिगमनुदितं हननं प्रतिषिध्य चरितार्थो नञ् न लिङ्व्यापारं प्राप्नोति प्रतिषेद्धुमिति । यदि हि स्वव्यापारो विधेयः स्यात्तत् तस्यानुवादोऽवकल्पते । न हि द्वेषादिनिमित्ता हननादिप्रवृत्तो लिङ्व्यापार प्रवर्तक इति यो न हन्यादित्यादिषु लिङाऽनूद्य नञा प्रतिषिध्येत । ननु कथं यत्राऽप्यनभिधेया प्रवर्तनानूद्यते अननूदिता वा कथं निषिध्यते । ननु मन्मते समीहितसाधनता हननस्य विद्यते एवेति कथं निषिध्यते । उच्यते, प्रवर्तना निष्फलं कर्तव्यता च महान्तमनर्थं जनयन्तु हननादिषु यद्यपि स्वल्पसुखसाधनत्वं तेन प्रवर्तना कर्तव्यता वा न हि तादृशी प्रेक्षापूर्वकारिणां कृति प्रसक्ते । ये तु महान्तमनर्थं न जानन्ति ते स्वल्पसुखसाधनत्वादेव भ्रान्त्या कर्तव्यतां मन्यन्ते स तथ्यते

**अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् । ३१ ॥**

अयमभिप्रायः । मन्त्रेदेनदेव यदि यच्छब्दादिप्रयोगात् केषुचिद्विधित्वमुपघातो न भवेत् । तथाहि, सर्वत्र खलु यच्छब्दादियोगादनुवादता परिस्फुरति । तथन क्रियायोगात् यच्छब्दस्तत्र यच्छब्देन यथागता क्रियामनूद्य तद्वाचा पुरुषप्रवृत्तौ विधीयमानायां न विधित्वमितिस्तिरोधीयते । विधेयभूतायाः पुरुषप्रवृत्ते अननुवादात् कर्तृयोगिनि यच्छब्दे यः करोतीति प्रवृत्तेरेवानूदितत्वात् भवति विधित्वस्योपघात इति । तेन सत्यु 'यस्योभय हविरार्तिमार्च्छेत्' 'य एवं विद्वान् पौर्णमासीं यजते' इत्यादिकर्तृयोगित्वात् यच्छब्दस्य विधित्वानुपघातः । 'यदाग्नेयोऽष्टाकपाल॰' इत्यादिषु क्रियायोगित्वात् यच्छब्दस्य विधित्वमित्याहुनैवेति । तदुक्तं यौगंमात्याधिकरणे — 'क्रियापदैकयोगित्वे यच्छब्दो न रुणद्धि विधिम् । कर्तृयुक्तः स एवाप्राप्तितार्थानुपादकम् ॥' इति ( वा. पृ. १८८ ) । स च कर्तृयुक्तयच्छब्दाद्युपबन्धो मन्त्रे ब्राह्मणे वा अविशिष्ट एवेति तद्दर्शने विधित्वानुपघाते इति कर्माभिधायकत्वमात्रमुभयत्रापीति । तदुक्तम् — 'येषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात् । विधिशक्तिः प्रणश्येत्तु ते सर्वत्राभिधायकाः ॥' इति ( वा. पृ. ४३१ ) । अतोऽस्ति तृतीयोऽपि प्रकार इति । इदं तु इह वक्तव्यम् — अत्र यच्छब्दाद्युपबन्धेन मन्त्रब्राह्मणवाक्यगताख्यातशब्दस्याभिधायकत्वमभिमतं पदार्थे वाक्यार्थे वा । न तावत्पदार्थे, अभिधायकवाक्यगतस्य आख्यातशब्दस्य पदार्थाभिधायकत्वाविरोधात् । नापि वाक्यार्थे, सर्वत्रैव वाक्यार्थस्य गम्यमानत्वेनानभिधेयत्वात् । अथ एतदेव वाक्यार्थाभिधानं यत् स्वरूपविशेषे विशेषणान्वययोग्यप्रधानीभूतपदार्थाभिधानम्, तदा ब्राह्मणे यच्छब्दाद्युपबन्धस्य... विशेष्यीभूतार्थप्रतिपादकत्वेन तथाभूतार्थाभिधानेनाभिधायकत्वमिति । सत्यं ते सर्वत्राभिधायका इत्यनेन सर्वत्राभिधायकत्वमभिमतम्, किन्तु अभिधायकत्वेन विशेषार्थप्रतिपादकत्वमात्रम् । तच्च ब्राह्मणे मन्त्रे च समानमेव । तत्र 'न ता नश्यन्ति' इत्यत्र यच्छब्दः, 'अहे बुध्न्य मन्त्रं मे गोपाय' इत्यामन्त्रणविभक्तिः, 'दामि, गृह्णामि' इत्युत्तमपुरुषः, 'यदि सोममपहरेयुः' इत्यत्र यदिशब्दः, यदिश्वेवमादयः । प्रायेण मन्त्रेष्विति सूत्रे मन्त्रलक्षणाः ; किन्तु एतावानत्र विशेषः ब्राह्मणगताना स्वरूपमेवोपलभ्य विधित्वनिवृत्तौ सत्यां स्वरूपादेव कर्मसु प्रयोगानर्हत्वात् निमित्तादिव्याख्यापनार्थतैव । मन्त्रगतानां तु दामि गृह्णामि निर्वपामीत्येवमादीनां स्वरूपमेवोपलभ्य शक्यमेभिः कर्म कर्तुमिति विनियोगबुद्धिर्भवति । तदुक्तम् — 'अनुष्ठाने पदार्थानामवश्यंभाविनी स्मृतिः । अनन्यसाधनानन्यकार्यैर्मन्त्रैर्नियम्यते ॥' इति ( वा पृ ४३३ ) । तेन सदयोगेऽत्र किं प्रधानस्वरूपकर्मविधायकत्वमेव परत्वेन ? अथ विधायकत्वमपि ? कर्मणि प्रतिपादकत्वमपि तृतीयः प्रकारोऽस्तीति मन्तव्यम् । प्रयोजनं पूर्वपक्षे — विधायकत्वे सर्वमाख्यातानामाख्यातकर्ममेवे अनुष्ठानभेदः । सिद्धान्ते तु नैवम् । सूत्रं तु — यच्छब्दाद्युपबन्धः स्यात् । मन्त्रग्रहणमुपलक्षणार्थम्, तेनायमर्थः — यच्छब्दाद्युपबन्धसहितमाख्यातमभिधानवाचकं विधित्वप्रत्यायनमात्रेऽनुभूत प्रयोगसामर्थ्यादिति । बौवा

**विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् । २।१।६। ३० ॥**

'न ता नश्यन्ति, न दभाति तस्करो, नैना अमित्रो व्यथिरादधर्षति । देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह' इत्याम्नायते । अयं मन्त्रः काम्यपशुप्रकाण्डे गोदेवतापरतया पठितः । याभिर्गोभिः देवान् यजते, याश्च ददाति ता गावो न नश्यन्ति, न च तस्करो हरति, न च अरातिः कश्चिदपि शत्रुकृतो व्याधिः उपद्रवः पीडयति । गोस्वामी च ताभिः सह ज्योक् चिरकालं सचते संयुक्तो भवति इति मन्त्रार्थः । अत्र — यजते — ददाति इत्यत्र विचारः । किं यद्वत् ब्राह्मणे भावशब्दो विधायकः, तद्वत् मन्त्रेऽपि, उत मन्त्रे न विधायकः इति । तत्र पूर्वपक्षमाह ; विधिमन्त्रयोः विधौ ब्राह्मणे मन्त्रे च विधीयमानस्य भावशब्दस्य ऐकार्थ्यं एकः एवार्थः स्यात् । ऐक-

साधारणविधिविरोधित्वम् । दार्शिकादेरुत्तमपुरुषस्य च परप्रवर्तनरूपविधिविरोधित्वम् । अतो विधायकत्वासम्भवात् मन्त्रगतानां स्मारकत्वम् । ब्राह्मणगतानां निमित्तादिप्रतिपादकत्वं लक्षणयेति द्रष्टव्यम् ।

मण्डन— ' मन्त्रे स्थितं भावपदं विधिनो । '

शंकर— ' मन्त्रा. स्युः अभिधायकाः । '

* विधियुक्तवाक्यान्तरकल्पनात् मन्त्रकल्प्यः विधिर्यथा- उपांशुयाजादौ याज्यानुवाक्या-सूक्तवाकादि-मन्त्रकल्प्यः देवताविधिः । यथा वा- ' उत्तादिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण ' इति अश्वदानफलविधिः । एतत् विरोधाधिकरणभट्टटीकाव्याख्यानान्ते सोमेश्वरेणोक्तम् । याज्ञ पृ १२

* विधिरूपं मन्त्ररूपं च अवान्तरवाक्यं द्विविधम् । बाल. पृ. ९.

* विधिरूपप्रमाणप्रतिपादनं प्रथमाध्यायगत-प्रथमपादार्थः । वि. प्रस्तावना श्लोक १३.

* विधिलक्षणे । नहि गौणत्वेन विधातुं शक्यते, लक्षणत्वेन चोच्चारयितुम् । प्रसिद्धसंबन्धो हि शक्नोति लक्षयितुम् । न च अविहितः एवंजातीयक शब्दावगम्य-प्रसिद्धसंबन्धो भवति । भा. ३।१।७।१४ पृ ७३५

* विधिर्यच्छिरदस्य अर्थवादस्य ' औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बरः ' इत्यादेः किं विधि-कार्यं उत स्तुतिः इति सन्देहे स्तुतिरेव कार्यं इति सिद्धान्तः । भा. १।२।२।१९-२५. * विधिनिगदानां अर्थवादत्वमुक्तम् । भा ३।६।७।२७. * विधिनिगदाधिकरणम् । १।२।२।१९-२५. मीको. पृ. १३३६ 'औदुम्बराधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम् । * ' विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः ' ( ११।१।१०।६५ ) । प्रधानैरपृथक्कारानामङ्गानां तन्त्रम् । एवं सहत्वस्य कृत्वा प्रयोगवचनोऽनुग्रहीष्यते, 'द्वादशाहेन प्रजाकाम याजयेत्' इति । तदुक्त 'विधिवत् प्रकरण०' इति एव प्राप्ते । भा. ११।४।६।२३.

* विधिवत् ( ' चोदिते तु परार्थत्वात् विधिवदविकारः स्यात् ' ५।१।१३।४० ) । यथा यत्र यजमानो गुणभूतो विधीयते, तत्र येन केनचित् यजमानेन स विधिः सिध्यति । यथा ' यजमानसम्मितौदुम्बरी भवति ' ' स्रुक्फं यजमानोऽन्वारभते ' इति । भा. ९।१।१३।४०,

* विधिवत् ( 'विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः' ११।१।१०।६५) । यथा विधौ तुल्यत्वात् प्रकरणस्य सर्वाण्यङ्गानि विज्ञायन्ते, न यस्य संनिधौ तदर्थानि । कस्यच्न प्रकरणेन नाभिहत्वात् । भा. ११।१।१०।६५.

* विधिवाक्यं अर्थवादात् प्रबलम् । स्वार्थपरतया विधेर्मुख्यत्वम्, प्रथमश्रुतत्वात् असञ्जातविरोधित्वम्, अनधिगतार्थबोधकत्वादप्राप्तार्थत्वं चेति विधेः प्राबल्यम् । अर्थवादस्तु स्तावकत्वात् मुख्यः । चरमश्रुतत्वात् सञ्जातविरोधी, ज्ञातार्थानुवादित्वात् प्राप्तार्थश्च । विवे. सन्देहजनकत्वे तु अर्थवादोऽपि निर्णयहेतुः । वि. १।४।१९

* विधिवाक्यस्य विधायकत्वेनोपयुक्तस्यापि पदार्थक्रमनियामकत्वं मन्त्राम्नानक्रमाभावे । भाट्ट. ५।१।४.

* विधिवाक्यानां फलपर्यन्तगमने क्रमः सविस्तर अर्थवादाधिकरणे मीको. पृ ६३९ वार्तिके द्रष्टव्य. ।

* विधिवाक्ये देवतायाः सगुणत्वे निगमेष्वपि सगुणाया एव देवताया अभिधानम् । 'अग्नये पवमानाय' इति विधिः । ' अग्निं पवमानं यज ' इति वक्तव्यम, न तु ' अग्निं यज ' इति । ' इन्द्राय वैमृधाय ' इति विधौ सति ' इन्द्रं वैमृधं यज ' इति वक्तव्यम्, न तु ' इन्द्रं यज ' इति केवलम् । वि. १०।४।१६,

* विधिवाक्ये यावन्ति पदानि, तावन्ति प्रत्येकमपूर्वं प्रतिपादयन्ति इति पूर्वपक्षः । विधिवाक्ये एकमेव पद अपूर्वप्रतिपादक इतराणि तु पदानि तच्छेष. इति सिद्धान्त । २।१।१, * विधिवाक्ये सन्दिग्धोऽर्थः अर्थवादान्निर्णीयते । ' अक्ताः शर्करा. उपदधाति ' इति विधिवाक्ये शर्कराः केन द्रव्येण अक्तव्या. इति संशयः । ' तेजो वै घृतं ' इत्यर्थवादात् घृतेन अक्तव्याः इति अर्थवादान्निर्णयः । १।४।१९.

* विधिवाक्यसंनिधौ अर्थवादसत्त्वे स्तवनेन प्ररोचना, यत्र नार्थवादः तदा विधिशब्देनैव प्ररोचना । इदं विस्तरेण अर्थवादाधिकरणे (मीको. पृ ६३९) द्रष्टव्यम् ।

* विधिविपरिवृत्ति शाखात् उत्पद्यते. प्रतिषेधिका, नान्यथा । सु. पृ० ९५९.

पुरुषधर्मत्वात् । नापि अन्यः तत्समर्थाचरणलक्षणः कारीयादिषम् अनुपलब्धेः ( कारीयोऽभिव्यापयति इतिवत् )। अत एव उपलब्धिः प्रेरकापेक्षणादसमीचीना । ( ननु यथा निश्चयतः कारीयादीनां अध्ययनप्रवृत्तमनुकर्तृव्यापारमभिधत्ते तथा लिङादयः स्वव्यापारेण पुरुषप्रवृत्त्यनुकूलां प्रवर्तनामभिधास्यन्ते इति चेत्तत्राह-) न च लिङादेः प्रेरणाव्यतिरिक्ते तत्समर्थाचरणमात्रे लिङादयो निरूपितप्रयोगाः । कारीयादिषु शीतात्पोदनादिना शक्तता समादधत् प्रवृत्तिहेतुः । शब्दस्तु कथमिति न निरूप्यते । (एतदेव विपरीतं आशङ्क्य निराकरोति-) अभ्युपगतम् । पवनादिरिव लिङादिः प्रेरयति पुरुषम् । तद्वत् । अभिधानवैयर्थ्यात् । अप्रतीतव्यापारस्यापि ( लिङादेः ) पवनादेरिव स्वभावतः प्रेरकत्वात्, पूर्वोक्तदोषापाताच्च ( अप्रमाणतादिदोषप्रसङ्गादित्यर्थः )। नहि प्रवृत्तिं प्रति कारकत्वे शब्दस्य सत्यपि तद्व्यापाराभिधानमङ्गम् । अनभिहितव्यापारस्यापि तस्य कारकत्वात्, कारकस्य अनपेक्षितज्ञानत्वात् ( एतेन वैयर्थ्यात्, पूर्वदोषतः इति पदे विवृते ) ( अप्रवृत्तेः इति विवृणोति-) उपेक्ष्यापि तु शब्दस्य प्रयोगभूम°, न प्रवर्तते पुरुषः, प्रवर्तकोऽपि शब्दस्य अननुष्ठेयत्वात् । नहि सर्वस्मिन् प्रवर्तयितरि प्रवृत्तिः प्रेक्षावताम्, अपि तु अनुविधेये । ( अथ अनुविधेयः शब्दः कस्मात्तु न भवति, इत्यत आह-) न ▪ अर्थानर्थप्राप्तिपरिहाराद्यनुविधानकारणं स्वाम्यादाविव शब्दे समस्ति ( आक्रोशन्देन करणादि निर्णीतम् ), फलात् प्रवृत्तौ तद्वैयर्थ्यम् ( शब्दव्यापारवैयर्थ्यम् ) । का एव ( शब्दव्यापारात् ) फलागमात् अवैयर्थ्यमिति चेत्, तन्न, फलायोगात् । आते हि तदुपदेशस्ये हितकरे एव प्रवर्तयितरि अन्यथाऽनुपपत्त्या फलागमः । ( प्रथमः उपदिष्टस्यार्थस्य मानान्तरेण प्रमाऽ°, तेन सह वर्तते इति तथा यथा क्रिया यस्य उपदेशस्य, सा सम्योपदेष्टु°, स तथोक्त°, तस्मिन् समयभङ्क्ये । यदेव यस्मै हितमुपदिशति कर्म, तस्य तत्प्रवृत्तौ हितप्राप्ते सर्वादर्शनात् उपदेष्टुर्नितरी अपि तत्प्रज्ञानकारणे दैवज्ञसज्ञाने एव इति तदेतस्मिन् प्रवर्तयितरि तत्प्रवर्तनाऽन्यथाऽनुपपत्त्या फलागमः इत्यर्थः ) । शब्दे तु किमनुपलम्भम् । प्रवर्तनामात्रस्य ( ज्ञानानामप्रयोक्तृकस्य ) स्वाम्यादाविव विपरीते अप्युपपत्तेः । पुरुषप्रयोऽर्थप्रसक्तेः शासनस्य नेयमिति चेत्, शासनादि क्रियाया शास्त्रमुच्यते । शासनं च गच्छितसमारोपितस्य यच्छेदेन हिताहितप्राप्तिपरिहारोपायतरशापनम् । ततश्च शास्त्रात् एव पुरुषप्रयोऽथगतिरित्यर्थः ) न, प्रमाणाभावात्, प्राङ् ( फलागमात् ) शास्त्रत्वासिद्धेः । ( तदनेन फलायोगात् इति विवृतम् ) ।

( कथीकेः इति व्याचष्टे- ) लिङादिव्यापारे च लिङो ( लिङादि- ) स्वरूपाभिधानप्रसङ्गः । अन्यथा ( लिङादिस्वरूपानभिधाने ) शब्दविशिष्टव्यापारप्रत्ययात् ( लिङादेः- ) अभिधानात् विशिष्टत्वे अर्थस्यापि तत्प्रसङ्गात् ( व्यापारत्वप्रसङ्गात् ) योग्यत्वस्य उभयत्रापरिज्ञानम् । ( कारिकार्थमुपसंहरति- ) तस्मात् नाभिधेया भावना विधिरूपम् ॥ ३ ॥

अथ मतम् । अभिधैव भावना विधिर्लिङाद्यर्थ इति । ( नाभिधेया भावना अभिधाभावना, अपि तु अभिधैव अर्थाभिधाव्यापारः शब्दस्य भावना विधिर्लिङाद्यर्थ इत्यर्थः ) अत्रोच्यते । 'प्रवृत्तेः सर्वतोऽर्थे वा प्रसङ्गात् कार्यतो गतेः । अस्थानान्निपतेर्हेत्वोरभावश्चाभिधैव न ॥' ४ ॥ विधिरित्यनुपक्रमे । [ सर्वतः प्रवृत्तेः प्रसङ्गात्, अर्थे प्रवृत्तेः प्रसङ्गात्, कार्यतो गते. हेत्वोः अस्थानात् हेतो. निपतेरभावात् हेतो. अभिधैव न विधिः इति पदान्वयः । के. ] ( प्रवृत्तेः सर्वतः प्रसङ्गात् इति हेतुं विवृणोति- ) अभिधा चेत् विधि, सर्वशब्दानां व्यापार अभिधेयेषु वद्धानः ( अभिधा व्यापारसत्वात्. ) इति घटादिशब्देभ्योऽपि प्रवृत्तिप्रसङ्गः । अन्यथा ( अभिधाया ) अविशेषात् । ( अर्थे वा इति विवृणोति- ) अभिधेयविशेषाच्छेदे स एव प्रवृत्तिहेतु अन्वयव्यतिरेकाभ्याम् । ( अन्वयव्यतिरेकाभ्यां अभिधेयविशेषागमे सति प्रवृत्ते., सत्यामपि अभिधाया घटादिशब्देभ्य. तदभावे प्रवृत्तेरभावात् इत्यर्थः ) । ( कार्यतो गतेः इति विवृणोति- ) अनन्यलभ्यस्तु शब्दार्थः इति स्थितौ ( अर्थप्रतीतिलक्षण- ) कार्योन्नेयाया. अभिधाया. शब्दार्थत्वमयुक्तम् ।

( अस्थानात् इति विवृणोति– ) अभिधायाश्च अभिधाऽपेक्षणे अनवस्थापातात्। ( अभिधाऽभिधाऽपि अभिधात्वेन अभिधेया, एवं तदभिधाऽपि इत्यनवस्थापात )। अर्थाभिधैव अपेक्षते ( अभिधाम्, नाभिधा ) इति चेत्, न। नियामकस्य हेतोरभावात्, अर्थाभिधानस्य च। नहि अत्र हेतुरस्ति अर्थाभिधैव अपेक्षते, नाभिधेति ( अर्थाभिधानस्य च इत्यनेन 'नियतहेतोरभावाच्च' इति व्याख्यातम्, 'च' इति अभिधानाभावहेतुसमुच्चयात्)। अभिधीयते अभिधा इति, पुरुषस्य न प्रवृत्ति, इति किं तेन लक्षणम्।(अभिधीयते लिङादिभिः अर्थाभिधा इति, प्रेषादय इत्यादिव्याप्तिपरिहारार्थिना प्रवृत्तिः इति च किं तेन लक्षणम्, न हि [illegible] प्रासाद [illegible] इति विपाको वहनमाहरति। उपसंहरति–) तस्मात् अभिधा न विधिः ॥ ४ ॥

अस्तु तर्हि ( लिङादीनां ) अर्थभेदः ( विधिः )। नैतदपि। 'अपौरुषेये प्रेषादिर्नृधर्मो नावकल्पते। न च प्रवर्तनामात्रमविशेषमकर्तृकम् ॥' ५ ॥ लोके हि प्रतीत प्रेषणाऽध्येषणाऽनुज्ञारूपाणि अभिप्रायाविशेषे प्रयोक्तृधर्मो लिङर्थः। तस्य अपौरुषेयेषु वेदवाक्येषु असम्भवः। (लोकावगतसामर्थ्यात् लिङादेर्वेदेऽपि श्रूयमाणात् प्रेषादि–) प्रतीते सम्भव इति चेत्, न; पौरुषेयत्वापत्तेः। (वेदान्तवादिनः प्रत्याह–) वेदात्मनः ( वेदस्य चैतन्यवत आत्मनः ) अभिप्राय इत्यभिधानीय। तेन असङ्कल्पने अभिप्रायान्तरस्याभावात्, तद्भावस्य पौरुषेयत्वदोषात्।

यदपि मत अनेकसामर्थ्यकल्पनागौरवात् व्यभिचाराच्च प्रेषादीनामवाच्यत्वात् अर्थाभिचारात् प्रवर्तनामात्रं लोके लिङर्थः ( न पुनः प्रेषादयः ) तस्य अपौरुषेये वेदेऽपि उपपत्तिरिति। इदमपि असारम्। निर्विशेषसामान्यायोगात् अकर्तृकत्वे व्यापारानुपपत्तेश्च। ( कारिकोक्त प्रथम हेतुं विवृणोति–) न तावत् प्रेषादयो विशेषा वेदे सम्भवन्ति। नाप्यन्यो विशेषः कश्चिदुपलभ्यते। तदुपलम्भे वा सामान्याभिधानप्रसाधन असम्भवाद्वैयर्थ्यम् ( विशेषस्यैव प्रसङ्गात् )। तदुक्तम् आश्रयणीयेऽपि प्रवर्तने सामान्ये आश्रयणीये समुच्चितत्वादिभेद स्यात्।

( द्वितीयं हेतुं विवृणोति– ) प्रवर्तना च प्रवर्तयितुर्व्यापारः, स तमन्तरेण इति नावतिष्ठते, पुरुषस्य अभावात्। शब्दस्य च ( अचेतनत्वात् ) प्रवर्तकत्वनिषेधात्। ( तस्मात् ) प्रवर्तयितुरभावः ( तदभावात् तद्व्यापारस्य प्रवर्तनाया अभावात् ) ॥ ५ ॥

यदि मन्येत, फलं प्रवर्तकम्, तद्व्यापारः ( अर्थिता प्रीत्यात्मता वा ) प्रवर्तना, फलार्थिनः पुरुषस्य तत्साधने प्रवृत्तेः। अन्यथा ( फलव्यापारमन्तरेण ) अभावात्। [illegible] कश्चित् व्यापारविशेषः प्रवर्तना, अपि न प्रवृत्तिसमर्थं व्यापारमात्रं प्रयोजकव्यापारः। 'भिक्षा वासयति' 'कारीषोऽग्निरध्यापयति' इति दर्शनात्। ( दूषयति– ) तदसत्। 'अर्थिता व्यापृतिः पुंसो नियमः [illegible]। फलसाधनता धर्मनिष्ठेया साध्यता कदा ॥' ६ ॥ फलार्थिता चेत् प्रवृत्तिहेतुः सा इच्छा तद्योगो वा इच्छासमवायो वा 'कृत्यविरसन्नसेषु मत्वार्थाभिधानं [illegible]' इति ( वार्तिककार– ) वचनात् पुरुषधर्म इति न फलव्यापृतिः। अथ तदिच्छोपहारमुखेन फलस्य प्रवृत्तिहेतुधर्मं प्रीत्यात्मता फलव्यापारः प्रवर्तना। ( इष्टलक्षणं फलम्, सुखानुशायिनी चेच्छा इति फलेन सुखात्मना भवितव्यम्, सुखत्वेन तदिच्छामुपहरति, इच्छा च प्रवृत्तिं प्रसूते, इति इच्छोपहारमुखेन फलसमवायिनी प्रीत्यात्मता प्रवृत्तिहेतुव्यापारत्वात् भवति प्रवर्तना इत्यर्थः ) साऽपि तत्रैव ( प्रीत्यात्मना फले एव ) न कर्मणि। फलव्यापाराच्च प्रवर्तमानः तत्र प्रवर्तते ( फलस्यासत्त्वेन तत्साधनत्व अन्यथा नाविशेषात्– ) नियमनिमित्ताभावात्। ( चोदयति– ) तत्साधनत्वात् कर्मण्येव प्रवर्तते, [illegible] एवं ( अन्यथा फलसाधनत्वाभावात्। परिहरति– ) तत्र एव ( तत्साधनत्वे सति प्रवृत्तिसम्भवादेव भवतु ) तर्हि तत्साधनत्वं प्रवृत्तिहेतुः कर्मणि न फलरूपम्। ( भवतु को दोषः ? इत्यत आह– ) तच्च कर्मसमवायि ( न फलसमवायि ) इति कथं प्रवर्तकं स्यात् ( न फलम् )।

( चोदयति– ) एवं तर्हि तत्साधनता प्रवृत्तिहेतुः। सा च फलसमवायिनी इति न दोषः। तथाहि, कर्मणि

सर्विषम्य तुल्यपादेः कर्मविशेषेण साध्यत्वात् कर्तैव प्रवृत्तिः ( न तु सर्वेन । तदेतद्दूषयति– ) का पुनरिय साध्यता ? यदि रूप फलस्य, सर्वेन प्रवृत्तिप्रसङ्गः ( फलरूपसाध्यतायाः साधनाधीननिरूपणत्वाभावात् न साधने प्रवर्तयेत् । प्रवर्तयेद्वा सर्वमेव अन्यत्वाविशेषात् इत्यर्थः । चोदयति– ) कारकविशेषः ( प्रवर्तकः । विशेष्यते व्यावर्त्यते कर्मकारकं गगनकुसुमादिभ्यो येन शक्तिभेदेन स तथोक्तः ) स हि फलस्य साधननियतः शक्तिभेदो रूपादिवत् । अन्यथा ( फलस्य शक्तिभेदाभावे ) कारकत्वाभावात् ( कारकत्वाभावप्रसङ्गात्, शक्तिमत एव कारकत्वात् ) । यथा हि रूपादीनां ( कर्मकारकाणां ) शक्तिविशेषात् ग्रहणे साधननियमः, तथा फलेष्वपि द्रष्टव्यः, गगनकुसुमादेरनुत्पादात् तृप्त्यादेश्च ( फलस्य ) धर्ममात्रेण । ( तदेतत् विकल्प्य दूषयति– ) कदा पुनरयं शक्तिभेदः साध्यताऽभिधानः ? फलस्य भावनसमये न तावत्, वैयर्थ्यात् अप्रवृत्तिहेतुत्वाच्च । न खलु असतस्तथोत्पादप्रयोगिनी शक्तिरस्ति । नापि सिद्धे फले तत्साधने कश्चित् प्रवर्तते । अभावकालेऽपि असत् कथं शक्तिमत् ? तदुपपद्यत् ।

ननु सदेव कार्यमुत्पद्यते । इद तावत्सत्कार्यवादिनोऽनुमाप्य वक्तव्यम् । अपि च निरुपाख्यत्वकार्योऽनुत्पादात्तदन्यव्यतिरेकाभावादुपादेयस्योपादानरूपेण सत उत्पत्तिः कल्पते । सर्वात्मना तु सतो तदनुपपत्तेर्नैकर्म्यं नोपादेयवत् । साध्य नोपादानम् । कथ तर्हि कर्म कारकम् ? नैव कर्मकारक कारकाश्रितमिति कश्चित् । क्रियासाध्य योगी सातात्त्वेन । वैविध्य तर्हि हीयते । तथ न रसन कारकस्य शक्याध्यवसानम् । कथ तर्हि घट करोतीति प्रयोगः ? उपादेयबुद्ध्या उपादाननिर्देशात् । बुद्धिसत्त्व वा क्रियासम्बन्धयोग्यत्वा निर्वर्त्यस्य कारकभावः । यथोक्तम्– 'व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः । कारकत्व तथा सिद्ध बुद्धिरूपप्रकल्पितम् ॥' एतेन साध्य साधनयो परस्परानुकूल्य पर्यस्तम् ( एतेन फलगतशक्तिभेदसाधनानिराकरणमात्रेण साध्यसाधनयोः सिद्धि प्रति परस्परानुकूल्य मकथ. साध्यता पर्यस्ता वेदितव्या । तथापि वाक्यात् ' कदा ' इति प्रश्नस्य ) ।

अस्तु तर्हि कर्म प्रवर्तकम्, अभिमतसाधनता तस्य प्रवर्तना ( प्रयोजकव्यापारः ) प्रवृत्तिहेतुरूपत्वात् । न, तस्य विषयत्वात ( प्रवृत्तिप्रभुः प्रयोजकः प्रवर्तकः । सिद्धश्च स भवति । तदिह सिद्ध चेत् कर्म प्रवृत्तेः प्राक्, प्रवृत्तेर्भावनाया विषयः, न भाव्यम् । सिद्धश्चेत् कर्म, असिद्धत्वात् कथ प्रवर्तकमित्यर्थः ) अपि च 'प्रज्ञायते लिङादीनां व्यञ्जनीया प्रवर्तना । प्रयोक्तृधर्मो, न मिथो यथाऽनियतकर्तृका ॥' ७ ॥ लोकाद्धि शब्दार्थाधिगमः । तत्र च प्रवर्तना नियताधारा प्रयोक्तृसंश्रयैव लिङर्थं अवगम्यते । णिजर्थस्तु वा अनियताधारा । न च णिजर्थवत् लिङाद्यर्थोऽपि भवितुमर्हति । यथालोकप्रसिद्धं शब्दार्थावगमाभावात् ॥ ७ ॥

यस्य तु ( दर्शन इति परेणान्वयः । दर्शनमाह– ) "एव सति पुरुषयत्न. अतुराद्यः, होमानुगतस्तु व्यापारः श्रुत्या उच्यते इति ( तेषु–तेषु शास्त्रप्रदेशेषु भाष्यकार– ) दर्शनात् चेतनकर्तृकव्यापारात्मिका ( प्रयत्नशब्दप्रवेदनीया ), इतरथा वा स्पन्दास्पन्दसाधारण्येन औदासीन्यप्रच्युत्यात्मव्यापारमात्र भावना विधिशब्दपर्याया लिङर्थः अपराभृष्टकालभेदा ( ननु यदि भावनैव विधिः, पचति, अपाक्षीत्, पक्ष्यति इत्यत्रापि अस्ति भावना, इति पचेदित्यनेन तुल्यार्थत्वप्रसङ्ग. इत्यत आह– अपरामृष्टकालभेदा प्रवृत्तिहेतुर्भावना विधिः । सा च लिङर्थः । न तु पर लडाद्यर्थं इत्यर्थः ) । लडादिषु तु ( भावनायाः ) सत्त्वेऽपि कालविशेषेण ( वर्तमानादिना ) विधिरूपप्रतिबन्धात् अप्रवृत्तिहेतुत्वात् यत्नादिभिरिव लिङभिधेयाया ( 'यदि रथन्तरसामा सोम स्यात्' 'य एवम् विद्वान् अग्निमिन्धे' इत्येवमादिषु लिङभिधेयायाः प्रतिबन्धो यथा ) " इति दर्शनम्, त प्रति उच्यते 'नैकं विरुद्धं, न च तद्विशेषयेत् त्वा कथ्यताम् । कालभेदाऽपरामर्शो. कथं नास्मात् प्रवर्तते ॥ ' ८ ॥ ( यदि हि भावना विधि इत्येकमेव तत्त्वम्, तत– ) लिङादिषु ( लडादिषु ? ) कालभेदेन विधिरूपस्य प्रतिबन्धे भावनाकारमात्र ( विधेः भावनायाश्च ) अभेदात् । अविरुद्धे ( च भावनायाः विरुद्धाविरुद्धविरुद्धधर्माध्यासात् ) भेदप्रसङ्गात् । न खलु एकं विरुद्धमविरुद्धं च

नियुज्यते ( नियोगान्तराभावात्, स्वात्मनि च विषयविषयिभावानुपपत्तेः, भेदाधिष्ठानत्वात् तस्य । शङ्कते– ) स्वरूपेणैव स कार्यः ( नियोगः ), न तत्र अन्यापेक्षा ( नियोगान्तरापेक्षा ) विषयवत् ( यथा हि विषयो विषयिनियोगकर्तृतयाऽऽक्षेपात् कर्तव्यः, नैव नियोगस्य कर्तव्यता, स्वभावत एव तस्य कर्तव्यतात्मकत्वात् । परिहरति– भवतु ) किंतु 'यजेत' इति 'याजयेत्' इत्यर्थः स्यात् । तथा च स्वर्गकामोऽन्यनियोगमात्रेण कृतशास्त्रार्थः स्यादिति साधु समर्थितं भवता । ( अयमभिसन्धिः– न तावत् अपूर्वं भावार्थं विषयं कार्यतया अनवगच्छता स्वात्मनि नियोज्यप्रेरणं नियोगो लिङर्थः इत्युपपादितमसकृत् । तथा च भावादय एवाऽऽक्षिप्यन्ते इति यजेतेति लिङा कार्यं नियोगमभिदधता यागविषयत्वादिरर्थः कर्तव्यः इत्युक्तं स्यात् । तस्य चार्थोऽध्येषे भेदेऽपि समः । न चाज्ञाद्यो विषयानुष्ठानमन्तरेण आज्ञापयितुं कर्तुं शक्याः । न ननु राजा विप्रं नियुञ्जानः किञ्चिदावहते अहनि स्वयं शिल्पिकाम् । ततश्च स्वर्गकामो यागनियोजनमात्रेण कृतशास्त्रार्थः स्यात् इति साधु सुष्ठु समर्थितमभवता । अतश्च न नियोगः कार्यं स्यात्– ) नियोगार्थे च कार्ये स्वर्गयागयोः परस्परसम्बन्धः नष्टः स्यात् ( कार्यत्वनियोगान्वयादुभयोः । चोदयति– ) एकनियोगसम्बन्धिनोः ( स्वर्गयागयोः ) अवश्यंभावी भव नियमात् ( परस्परसम्बन्धः स्यात् । न विनियोगसदृशो नियोगः, तद्विषयतया तद्विशेषेण अवस्थानात् । परिहरति– ) सत्यम्, नान्यकामो यागनियोगे स्वर्गकामनियोगी न यागादन्यत्र । साध्यसाधनभावस्तु अयुक्तः ( स्वर्गयागयोः एकनियोगसम्बन्धिनोरपि स्वर्गकामयागयोरिव सम्बन्धोऽवगम्यते, न पुनः स्वर्गयागयोः । अनवगम्यमानश्च विनियोगो न नियोगविषय इत्यर्थः । )।

ननु न नियोगो विषयनियोज्यसम्बन्धमनुवेन् ( स्वय ) कर्तव्यताऽवगमसामर्थ्यं ( तदर्थबन्धे ) रूपमापद्यते । कंचित ( नियोज्यं स्वर्गकामादिं ) क्वचित् ( विषये यागादौ ) नियुङ्क्ते इति हि नियोगस्य रूपं 'अस्येदं कर्तव्य' इति । न च ( स्वर्गस्य यागेन– ) सम्बन्धो गुणप्रधानभावादृते सम्भवति, इति नेदं पर्यनिष्पत्तये, इति स्वर्गस्य अपवर्गत्वात् यागस्य ( अनिष्टत्वेन ) तादर्थ्यम् ( स्वर्गार्थत्वम् ) । इष्टसमुच्चे तदर्थान्वयप्रतीतेः । ( इत्थंयुक्ते वाक्ये स्वयमनिष्टस्य तदिष्टार्थान्वयप्रतीतेः । दूषयति– ) कथंतु नियोगविषयसम्बन्धं नियोगः । विषयनियोज्यविशेषणतामापतितस्तु कुतः ? ( यदीदं नियोगसम्बन्ध तयोर्भवतु परस्परान्वयनियम स्वर्गकामयागयोः । स्वर्गयागयोस्तु किमायातम् ? नहि स्वर्गो याग इव नियोगेन संबद्धः, अपि तु नियोज्यविशेषण इत्यर्थः । चोदयति–) निर्दिष्टसम्बन्धेन ( यद्यपि न साक्षात् स्वर्गो नियोगेन संबद्धः, तद्विशिष्टस्तु नियोज्य. नियोगसंबद्धः इति स्वर्गोऽपि नियोज्यमुखेन नियोगसंबद्धः इति एकनियोगसम्बन्धात् यागेनापि सम्बध्यते । तथा च साध्यसाधनभावसिद्धिः स्वर्गयागयोरित्यर्थः । दूषयति–) जीवनादेरपि प्रसङ्गः ( जीवनादेरपि निमित्तस्य नियोज्यद्वारेण सम्बन्धद्वारेण नियोगसम्बन्धे यागादिसम्बन्धप्रसङ्गः । चोदकः पृच्छति–) किमतः ? ( उत्तर– ) अङ्गत्वं वा निमित्तस्य, ( नियोगविषये यागादौ ) प्राधान्यं वा । ( तत्र ) अङ्गत्वे ( निमित्ते अभिप्रेते सति ) अविशेषप्रसङ्गो निमित्तस्य ( प्राधान्यं तु यागं प्रति साध्यत्वलक्षणं जीवनादेः निमित्तस्य सिद्धस्य न सम्भवत्येव । अभ्युपेत्योच्यते– ) प्राधान्ये काम्यनैमित्तिकाधिकारयोः भवि-दोषः, उभयोः कामनिष्ठत्वात् ( ततश्च ) न नैमित्तिकः प्रयोगनियमः स्यात् । तथा लोभवश ( काम्ये नैमित्तिके च ) सर्वाङ्गोपसंहारो न स्यात् । ( चोदक आह– ) नियोज्यभेदसमर्पणेन कृतार्थस्य जीवनादेः न विषयसम्बन्धः स्यात् ( नहि अस्य विषयसम्बन्धमन्तरेण वैयर्थ्यम्, नियोज्यावच्छेदकतया अर्थवत्त्वात् । यदि नियोज्यभेदसमर्पणेन चरितार्थं जीवनं न सम्बन्धान्तरमर्हति, तन्न भो निमित्तनैमित्तिकभावमपि न भवेत इति नेत्याह– नियोज्यभेदसमर्पणस्यैव जीवनादेः – ) आर्थस्तु निमित्तनैमित्तिकभावः । तस्मिंश्च सति तदविचारात् । ( दूषयति– ) 'स्वर्गकामो यजेत' इत्यपि तर्हि एवं स्यात् ( नियोज्यविशेषणं कामः निमित्तत्वेन सम्बध्येत, न साध्यतया । चोदक आह– ) न भविष्यति ( कामना

निमित्तभावः ) साध्यस्यैव विशेषणत्वात् ( साध्यत्वं तु— ) काम्यत्वात् । ( दूषयति— ) तथापि न ( कामस्य ) विषय सम्बन्धे प्रमाणं अन्यसाध्यस्यापि ( स्वर्गस्य नियोज्यावच्छेदकतया ) विशेषणत्वोपपत्तेः । ( परमार्थतस्तु साध्यता ऽपि न प्रतीयते ) इच्छामात्रदर्शेश्च । ( प्रयत्नव्याप्यता हि साध्यता, न पुनः उद्देश्यतामात्रम्, नापि तद्विना भाविनी सा । न खलु कारणानि अवश्यं कार्यवन्ति व्यभिचारात् ) । ननु कामिनः अधिकारावगतिः कामोपाये ( स्वर्गाद्युपाये एव ) अवकल्पते । नान्यथा तत् ( कर्म ) नियोज्येन कृतं स्यात् । ( उत्तर— ) कामिना कृतं नियोज्येन कृतं स्यात् । न तु कामः प्रवृत्तिहेतुः, अधिकारहेतुस्तु ( नियोगावगमनहेतुस्तु नियोज्यावच्छेदकतया, इति न व्यर्थं कामश्रवणम् ) । अधिकारहेतुश्च प्रवृत्तिरिष्यते, न फलहेतुका, स्वाधिकारात् तदवगमात् । ननु कामिनोऽधिकारः ( स्वर्गकामादिपदसम्बन्धादवगम्यते ; तथा च कामो निमित्तमधिकारस्य ) कामानुपाये च न कामनिमित्त ( नियोगः ) । अधिकारो न निर्निमित्तः ( कामरूपत्वेन स्वरूपहानिप्रसङ्गात् ) न वा अन्यनिमित्तः ( कामपदवैयर्थ्यात् । उत्तरमाह— ) कामनिमित्तः, सति अस्मिन् ( कामे ) अधिक्रियमाणत्वात् । ( चोदकः स्वाभिप्रायमाह— ) ननु अनुपाये अधिक्रियमाणस्य न फलार्थिता ( नियोगावगमस्य ) निमित्तम् । उपाये हि उपेयार्थिना नियोगनिमित्तम् ( नियोगावगमनिमित्तम् । दूषयति— यदि उपेयार्थिना अनुपाये नियोगावगमनिमित्तं— ) सिद्ध तर्हि उपायोपेयभावे नियोगः, न नियोगात् तत्सिद्धिः । ( चोदक आह— ) सिद्धः एवासौ नियोगात् प्रतीयते । ( अयमर्थः— न तदवगमपुर सर नियोगविज्ञानम्, अपि तु नियोज्यस्य स्वर्गकामस्य यागे नियोगावगमः अपर्यवस्यन् स्वर्गयागयोः साध्यसाधनभावमाक्षिपति । तेन सिद्धः एवोपायोपेयभावः कारणान्तरात् नियोगेन ज्ञाप्यते इति । दूषयति— ) न । सापेक्षत्वात् ( सापेक्षत्वप्रसङ्गात् ) । तथाहि यदि विशिष्टपुरुषनियोगः शब्दार्थः ( यो हि पुरुषः स्वर्गः उपायेन मे साध्यः इत्यवगच्छति, तदीयो नियोगः शब्दार्थः, तर्हि नियोगात् प्राक् अयं विशेषः पुरुषस्यावगन्तव्यः, इति— ) कथं स नियोगात् गम्यते ? ( शङ्कते — ) अथ फलविशेषनिमित्तको नियोगः ( यागसाध्यता स्वर्गस्य विशेषः, तन्निमित्तको नियोगः शब्दार्थः । निराकरोति— ) नासौ प्रागसिद्धे तद्भावे ( यागसाध्यत्वे फलस्य भवितुमर्हति, इति मानान्तरेण— ) इति प्राक्सिद्धतद्भावावबोधः शब्देनोच्यते इति प्रमाणान्तरापेक्षत्वप्रसङ्गः । ( यदि मन्येत नियोगनिमित्तत्वं अनुपेयस्य कामस्य न सम्भवति इति यागं प्रति उपेय एवेति, तत्राह— ) उपेयस्यैव च अधिकारनिमित्तत्वे जीवनादिषु अधिकाराभावः ( अधिकाराभावप्रसङ्गः । अपि च अधिकारनिमित्तता कामस्याभ्युपेत्य इदमुक्तम्, परमार्थतस्तु— ) निमित्तत्वप्रतीतिहेतु— ( लिङादि— ) शब्दाभावाच्च अयुक्तमेतत् । ( चोदयति— मा भूत् निमित्तत्वप्रतीतिहेतुः शब्दः किंतु— ) नियोज्यविशेषणमेव तु, तस्मिन् सति नियोगात् अर्थात् निमित्ततोच्यते । ( परिहरति— ) यदि च स्वर्गकामादयो निमित्तपराः, न तर्हि नियोज्यपराः । तत्र ( निमित्तपरत्वे ) अधिकाराप्रतीतेः प्रयोगाभावः । ( शङ्कते— ) अथ ( निमित्तपरादपि शब्दात् अपेक्षितत्वात् ) अर्थात् ( निमित्तत्वेन ) अधिकारसिद्धिः । ( निराकरोति— तर्हि अधिकारसिद्ध्यर्थं ) मुधा कर्तृविशेषणपक्षनिरासः । ( कुतः सिद्धिः अधिकारिणः इति चेत्तत्राह— ) यथैव हि ( भवता ) कामितया अधिकारोऽवगम्यमानः उपायभूते धात्वर्थे, तथा ( अस्माकमपि ) कामितया कर्तृत्व नानुपाये । ( तथापि कुतोऽधिकारविशेषप्रतिलम्भः इत्यत आह— ) यस्य च कामोपाय तस्यैव कर्म इति अर्थात् कर्तृनियमसिद्धेः अधिकारसिद्धिः ( अस्माकम् भवता तु ) अधिकारनियोगेन कर्तृनियमसिद्धिः । ( दूषणान्तरमाह— ) इष्टपयुक्ते च वाक्ये इष्टार्थे अन्वय, न नियोगार्थ अन्वयः । उभयार्थे अन्वये ( तु ) वाक्यभेदात् ।

( सम्प्रति अस्वातन्त्र्यपक्षमुपन्यस्यति— ) ननु न विनियोगोपमर्दी नियोगः, विशेषाभावात्, यथाविनियोग व्यवस्थानात् । तत्र परस्परान्विताः पदार्थाः नियोगविषयतामापद्यन्ते । न चान्वयो गुणप्रधानभावम् तरेण । तत्र इष्टत्वात् स्वर्गः प्रधानम्, कर्म गुणतः ( गुण',

सार्वविभक्तिकस्तसिः ) इति कर्मोपसर्जने ( कर्म उपसर्जनं यस्य तस्मिन् स्वर्गे यागसाध्ये ) स्वर्गकामः पुरुषो नियुज्यते इति न नियोगप्रधानता ह्रास्यते, कर्मफलसम्बन्धोऽपह्नूयते । न च बाधे ( अयोगसर्जने ) स्वतः प्रवृत्तो नियोज्यः पुरुषः, उपायरहिते अधिनोऽपि अप्रवृत्तेः । न च प्राङ्नियोगात् उपायोपेयज्ञानम् ( नियोगादेव तदवगतेः । तदेतत् स्वाभ्युपसिद्धान्तविरोधेन दूषयति- ) न खलु विनियोगनिबन्धना स्वर्गयागसङ्गतिः इष्यते ( भवद्भिः ) तार्तीयी सा ( विनियोगनिबन्धना ) नैयोगिकी स्थिता ( पार्ष्ठाधिकरणस्य-३।१।३-तृतीयेऽध्याये साक्षात्सङ्गतिमनिच्छता टीकाकारस्य सम्मता, इति सिद्धान्तव्याघातः । अपिच नोपायफलविषय नियोग अभ्युपगम्यतः इदमपर अनिष्टमापद्यते इत्याह- ) मानार्थेन ( केवले ) नियोगविषयः इति मत्युद्भूतमेव स्यात् । ( अपि च यदा फलं नियोगविषय., तदा ) निर्विषयता न स्यात्, विषयस्यानधिकारहेतुत्वात् ( अनधिकारहेतुरेव विषयः कस्मात् भवति इत्यत आह- ) विश्वजिदादौ तद्कल्पन प्राप्ते ( विषयस्याधिकारहेतोर्विद्यमानत्वात् । ननु प्रयोजनमेतत्, प्रमाणं तु वक्तव्यम्, तदिदमुच्यते- ) विधेयत्वलक्षणत्वयोर्विरोधात् प्राप्त्यप्राप्तिभ्याम् ( लक्षणस्य प्राप्त्या प्रसिद्धत्वात् अप्राप्तस्य च विधेयत्वेन विधिविषयत्वात्, नासौ तदनुपपत्तेः । नियोगावगमात् प्राक् स्वर्गकामः क्रियया संबध्यमानः कर्तृत्वेनैव सम्बध्यते, पश्चात्तु नियोगप्रतीतौ नियोज्यत्व इति कर्तुरधिकारत् पुनरपि गच्छत्यग्रतोऽपि एवेत्याह- ) कर्तृत्वा च अन्वयात् प्राक् नियोगात् नियोज्यत्वाभावात् । ( इह यागफलनिष्पादने इत्याह- ) अनन्यकर्तृत्वनात्मसुखश्च ( यागानाभिन्नविषयकर्तृत्वभावतः कर्तृत्वता च स्वनिष्ठत्वभाव व्यवच्छेदात् आत्मकर्म-सुखस्य च भोग्यस्य स्वर्गादेः ) वामस्य अतन्त्रत्वात् । तत्त्वतेऽपि इच्छातोऽपि अनन्यकार्या स्यात् ( तद्विषयत्वानियोगस्य कृतार्थिन् । उपसंहरति- ) तस्मात् परस्पर अनन्वितयोः ( याग-स्वर्गसाधनयोः ) नियोगान्वय । तदन्वये परस्पर वाक्यभेदात् [ यागस्वर्गसाधनयोः परस्परमन्वये च वाक्यभेदप्रसङ्गादित्यर्थः- इति केचन: ] ( तदन्वये च न परस्पर सन्ध्य, परस्परपि साधनया द्वयोः वाक्यभेदात् ) एकनियोगसम्बन्धादपि साध्यसाधनभावः प्रत्युक्तः ।

ननु नियोगात् अस्य ( लिङादेः, पुरुषस्य ) इदमुपकारक इत्यवगम्यते, कथं तस्य ( अधिकारिणः ) कर्म स्यात् ( यदि नोपकारकं कर्म ) क इव अस्योपकारः अन्यत्र कार्यात् ( उपकारात् । ननु यागेन किमस्यैवोपकारः ? इत्यत आह- ) उपकारान्तरे ( कल्प्यमाने ) अविपद्यमानमेकं स्यात् ( अविनिश्चितार्थम् । तथा च श्रुतहानिरश्रुतकल्पना चेति दोषद्वयमापतितम् । दूषयति- यदि लिङर्थे, अस्य पुरुषस्य इदं उपकारकं कर्म इति सिद्धमवगम्यते- ) तत्कार्योपगतस्तर्हि नियोगार्थः ( लिङर्थः । चोदकः पृच्छति- ) किमतः ? ( उत्तर- ) उपदेशकरन ( प्रसिद्धं ) हीयते, लिङादिलिङ्गत्वात् ( अत, ) सापेक्षत्व च ( अपामाण्यनिमित्तं मूर्खाभिधेयकं प्रसज्येत । उपसंहरति- ) तस्मात् अस्येदं कर्तव्यमिति नियोगार्थं ( न पुनः अस्येदमुपकारकमिति ) अनुष्ठानमवीतेः अन्यथा चाचस्य ( उपकार्योपकारकयोस्तु नियोगार्थत्वे व्यभिचारः स्यात् ) नैमित्तिकनिषेधाधिकारयोः उपकाराश्रयणात् ( न चायमुत्पत्तिस्वभाव , तस्यासुखस्य हिताहितप्राप्तिपरिहारलक्षणस्य अनुकूलवेदनीयत्वाऽभावेन उपकाराभावात् । ननु वेदेऽपि नियोगविषयस्य कर्मणो नियोज्यार्थकता उचिता, इत्यत आह- ) न च नियोज्यार्थ एव कर्मणि नियोगः, अत एव ( नैमित्तिकनिषेधाधिकारयोः व्यभिचारादेव । ननु लोके प्रतीतिसामर्थ्यात् नैमित्तिकनिषेधाधिकारयोरपकार कल्पयिष्यामः, इत्यत आह- ) लौकिके न अध्येषणादौ अभावात् ( नियोज्यार्थता कर्मणः । पुनरपि स्वर्गं साध्यताया उपलक्षणवैलक्षण्येन नियोगविशेषणतया प्रमाणयति- ) ननु नियोज्यं स्वर्गः, नोपलक्षणं ( येन आत्मानं च कार्ये निवेशयेत् । परिहरति- ) भवतु नियोगे अस्य ( स्वर्गस्य ) अन्वय ( यागस्य तु कथम् ? ) ननु नियोग एव याग सम्बन्ध ( स्वर्गस्य यागेन संबन्धं ) विदधाति ( तथा च स्वर्गयागयोः सम्बन्धः साध्यसाधनभावः इति । परिहरति- ) तथा याग, वैदिकः पुरुषो नियुज्यते इति ( तथा च स्वर्गयागयोः संबन्धो नाम नियोगात्, न तु स्वर्ग.

यागया । नहि एतावता नियोगप्रमितिस्तयोर्न कल्प्यते इति ) 'यस्याग्निर्गृहान् दहेत्' ( स यजेत ) इति यथा ( यथा आहिताग्नेर्गृहदाहवत इष्टौ नियोगो नैर्गृहदाह प्रति साधनतामवगमयति, तथा स्वर्गकामस्यापि यागनियोगो न यागस्य तद्विशेषण प्रति साधनभावमवगमयितुमर्हति ) । ननु इष्टसिद्ध्युपायो भावार्थो नियोगात् फलसिद्धि स्यात् । ( परिहरति- ) स्यात् यदि इष्टो भावार्थः । न तु अयमेवमुक्त भावनाविवेके (यादृशा चेत् कर्म नियोगविषय, तर्हि तन्नियोगात् प्रागवगत यम् । न खलु अनवगतगोचरो नियोगः तद्गोचर नियोगमवगन्तुमुत्सहते । न च स्वर्गाचपिनी याग प्राङ्नियोगावगमात् मानान्तरेण पाक इवौदनावधि अवगतम । न च नियोगात् तदवगम , परस्पराश्रयदोषप्रसक्ते , सति नियोगावगमे तद्विरूपणम्, तस्मिंस्तु सति तदवगम इति । यद्यपि यागस्य प्रमाण तत्सिद्धम्, तथापि भावनात्मना न तत् सिद्धम् । तेन च तद्विषय , न पुना स्वभावेन । तदावेश वा नियोगस्तमथने नास्य स्वर्गसंबन्ध स्यात् इति भाव ) नैमित्तिके च फल- ( कल्पना- प्रसङ्ग , इष्टोपाये भावार्थस्य कामनात् तत्राप्यविशेषात् । न चापूर्वमि-द्रागोचर ) यथा न अस्मिन् दर्शने न प्रकारा तरेणापि कर्मफलसम्बन्ध , तथोक्त भावनाविवेके । अत स्वर्गयागयोरसम्बन्धात् न पुरुषार्थसाधनतावगम, पुरुषार्थसाधन च विधायते प्रमाण त । ( तदनेन प्रबन्धेन चतुर्दशकारिकाविवरणेन गतेन स्वर्गयागयो परस्परासंगतिप्रसङ्गात् नियोगस्य कार्यता प्रतिपादिता पुनरप्यमेन प्रकारान्तरेण निषेधति- ) लोकश्च शब्दार्थाव गमात् न नियोगप्रधानता ( नियोगपरत्वं प्रति ) न लिङ्गो अनियोगात् ( नियोगपर तत्सिद्ध ) नापि प्रतिपत्ता प्रत्येति ताम्, ( नियोगसिद्धि नियोक्तुर्नाश्रयात् ) नियम सिद्धापि अननुष्ठानात् ( नियोज्यस्य प्रवृत्तेः ) नहि 'मामाज्ञ' इति नियोगसिद्धिजिज्ञासया नवतु, अपि तु नियमसिद्धि ( नहि अन्येनानीताया गवि उपलक्षणं यनमारभते । तस्मात् नियमसिद्धौ नियोक्तुर्नियोज्यो यमभिप्रेते तत्प्रवृत्तिविषयस्यापि साधनताम् अवगमयति, न तु नियोगपराम् । चोदयति-) अस्तु लोके शब्दवृत्त अपवेदे,

विवक्षापरो हि समन्वयो लोके शब्दानां ( अर्थाना ), नियोगपरो वेदे । ( तेन वेदे नियोगस्यैव कार्यता । दूषयति- ) अयमपि शब्दस्योपरि स्फोट । यदि खलु विवक्षापरे अन्वये शब्दसामर्थ्यं लोकेऽवगम्यते ( तत् ) न ( विवक्षितात् ) अर्थान्तरे ( वेदस्य ) अनन्यप्रमाणकत्वात् ( लोकप्रमाणकत्वात् ) शब्दसामर्थ्यस्य, ( लोके यथा तदवगमस्य वेदे संभवति । मन्यते- ) वक्तुरभावात् ( न विवक्षाप्रमाणो वेदे ) इति चेत् ( निरा करोति- ) अयमेव विवक्षापरेऽन्वये तमनुमापयेत् इति प्राप्त पौरुषेयत्वम् । ( सोऽयं अस्मिन् पक्षे लोकविरोध लक्षणस्य शब्दस्योपरि पौरुषेयत्वप्रसङ्गलक्षण स्फोट । अथ इष्टतरमपौरुषेयत्वम्, तत ) प्रतिपत्त्यभावो वा ( स्फोट , तदुपायाभावात् । अथ स्वानुमानसिद्धा वेद वाक्यप्रमाणानन्तरा प्रतीति नापह्नवमर्हति, तदाह- ) गमनी वा प्रतिपत्ति न शब्दनिमित्ता सांप्रतं स्यात् ( स्वत सिद्धेऽपि वेदवाक्ये पुरुषान्तरेणानिबन्धना तदुच्चारणात् अर्थप्रतीति । यदि तु संबन्धाभावात् न प्रत्ययोत्पादनसमर्थ , तत ) सामान्यतोदृष्टा वा ( लौकि वाक्यवत् हि वाक्य अर्थविशेषप्रत्ययनिमित्तमुपलभ्यम्, वैदिक च तथा इति तदपि प्रत्यायकम्, इति सामान्यतो दृष्टात् अर्थप्रत्ययो वैदिकादपि वाक्यात् ) तस्मात् लाघ विकप्रयोगज एव ( प्रयोगप्रभव एव इति यावत् ) समभवतो नियमो 'नियोग कार्य' इति । ( एता वता चतुर्दशकारिकाया पूर्वार्धे ' नियोगान्तरेण साभिधेयविषयभावावगम्यमात्' इति व्याख्यातम् । अथ पश्चार्धं व्याचष्टे- )

अपि च न लोके नियोगमात्र प्रवृत्तिहेतु सर्वस्य नियोगादप्रवृत्ते , अनुविधेयनियोगाच्च तद्भावात् ( तस्य वृत्तिभावात् । तस्मात्- ) अनुविधेयस्य नियोक्तुः प्रिय नियोगात् प्रवृत्तिहेतु । अनुविधानस्य च अर्थानर्थ प्राप्तिपरिहारादि प्रमाणान्तरसिद्धम् । ( वेदेऽपि अनु विधेयो ऽस्तु लोकवत् इति चेत् तत्राह- ) न च वेदे ( अपौरुषेयेऽपि ) नियोक्ताऽपि ( दृश्यते ) । कुत पुनरनुविधेय । ( धर्मस्य अप्रत्यक्षसिद्धे । चोदयति- ) ननु शब्दा ( नियोक्ता अनुविधेय । शब्दनियोक्तुर्

च न्यायमि प्रथममेव ' ' प्रमाणान्तात् ' –कारिका २ – इत्यादिना । ( अभ्युपगम्याह– ) भवतु नाम नियोक्ता, न तु अनुविधेयः ( अनुविधान– )हेत्वभावात् । न हि अर्थानर्थप्राप्तिपरिहारयोः शब्दानुविधाने प्रमाणमस्ति । नियोग इति चेत् ( शब्दानुविधाने सति अनुविधातुः पुरुषस्य हितप्राप्ति अहितनिवृत्तिश्च भवति इत्यत्र नियोगः प्रमाणमिति चेत् ) न । तस्य ( नियोगस्य ) प्रमेयत्वात् ( न खलु प्रमेय प्रमेयत्वेन प्रमाणं भवति ) नियोगज्ञानं तर्हि ( नियोगस्य प्रमेयतया प्रमाणत्वाभावे प्रमाणमस्तु ) न । तस्य नियोगविषयत्वात्, तस्य च ताभ्यामन्यत्वात् ( नियोगस्य अर्थानर्थप्राप्तिपरिहाराभ्यां भिन्नत्वात् ) । ननु मा नाम भूत् नियोग अर्थानर्थप्राप्तिपरिहारयोः प्रमाणम्, तथापि चेतनप्रवृत्तिं विना अनुपपद्यमानः स्वयमेव अर्थानर्थप्राप्तिपरिहारमन्तरेण असंभवात् प्रवृत्तिः अर्थानर्थप्राप्तिपरिहारप्रयोजनं आक्षेप्स्यते, आक्षेप्स्यते च तदेकदेशतया प्रमेयस्यापि प्रमाणता, कारकत्वेन आक्षेपकप्रवृत्तित्वात् इत्यत आह– ) न चार्थादाक्षेप, अन्यथानियोगदर्शनात् ( आपाततः सुखलाभमात्राय तत्र प्रवर्तनाभावात् ) ' क्षेत्रोऽस्य कर्षकः, गच्छतु भवाननेन ' इति यथा । ( चोदयति– ) तदर्थोऽप्यनियत ( अथानर्थप्राप्तिपरिहारोपायत्वेनाप्यनवसितः ) नियोग ( नियोक्ता नियुज्यते अनेनेति व्युत्पत्त्या ) लोके, तस्य च ( साध्यसाधनभावस्य ) प्रमाणान्तरविषयत्वात् तदपेक्षत्वात् (प्रमाणान्तरापेक्षत्वात्) तन्निबन्धना प्रवृत्तिर्लोके ( अन्यत्र तावत् न नियोगस्य मानान्तरेण बाधितत्वात् प्रवृत्तिः । मानान्तरगोचर–) नियोगनिष्ठस्तु ( पदार्थान्तराय ) वेदे, अतो नान्यापेक्षा । ( तदेतत् दूषयति– ) असौ चरमेव ( विरुद्धापरमनिराकरणप्रस्तावे ) । अपि च ( लौकिको भवतु अलौकिको वा, सर्वथा नियोग इत्येव– ) न नियोगमात्रं प्रवृत्तिहेतु । ( चोदयति– न चेत् प्रवर्तयति– ) मिथ्या तर्हि नियोगज्ञानम् । न चैतत् युक्तं कारणाद्यभावात् । ( परिहरति– ) न वयं नियोग मवजानीमहे येन मिथ्यात्वं स्यात् ( वेदस्य ) । सत्यपि तस्मिन् पुरुषः प्रवर्तते लोके इव यस्य कस्यचिद्वियोगात्, नहि तत्र नियोगो नास्ति । ( अथ न तन्नियोगपरं लौकिकं अपि तु विनियोगपरं इत्यत आह– ) अतात्पर्ये ( अनियोगपरत्वे लौकिकस्य लोकाधीनावधारणार्थस्य वैदिकस्य ) तात्पर्यं अप्रमाणकं इत्युक्तम् । ( ननु न वयं नियुक्तिमात्रं नियोगं ब्रूमहे, अपि तु कर्तव्यताम् । स नियोगः प्रवृत्ते हेतुरित्यादव गम्यते इति शङ्कते– ) ननु कर्तव्यताऽवगमात् प्रवृत्तिः । अवगम्यते च नियुक्तः ' इदं मम कर्तव्यम् ' इति । यस्तु अवगम्यमानेऽपि अनुष्ठेय नानुतिष्ठति, स तदेऽपि अर्थानर्थप्राप्तिपरिहारयोः अननुतिष्ठन्निव न दृष्टार्थाय । ( दूषयति– ) तदेतत् अविमृष्टनियोगरूपम् ( वच. ), तथापि ( लोकानुसारात् आक्षदित्युदित ) प्रवर्तनामात्रं नियोग । स च लिङाद्यर्थः ( न पुन प्रवृत्तिहेतुः कर्तव्यता ) इति ' प्रवर्तितोऽहमत्र ' इति प्रतिपत्ति शब्दात् ( प्रवृत्तिहेतु ) कर्तव्यताऽवगमस्तु नियोक्तु अनुविधेयत्वात् । अनुविधेयनियोगे ' ममेदं कर्तव्य ' इत्यध्यवसायात् । इतरस्य तु ( कर्तव्यताऽध्यवसायरहित– ) प्रवर्तनामात्रमवगते । ( अथैव अवश्यकर्तव्यताकीर्तनेऽपि त्रुटि कथ सम्भवेत् इत्याह– ) उक्तं च ' कर्तव्यताविषयो नियोग, न नियोग कर्तव्यतामाह ' । ( कर्तव्यताविषयो नियोग प्रवर्तना नियोक्तृधर्म, तमभिदधाति लिङ्, न नियोज्यस्य धर्म कर्तव्यता प्रवर्तनाया विषयमाह, विषयस्य विषयिणः अन्यत्वात् । नवीनास्तु वदन्ति, ' अनिरूपितनियोगयाथार्थ्यस्येदं चोद्यं ' इत्युपक्रम्य इदमुक्तं ' कर्तव्यताविषयो हि नियोगः, न [ पुन ] कर्तव्यतामाह ' इति [ बृहती १।१।२ पृ. २९–३० ] यत्कर्तव्यतानुष्ठानविषयो यस्य नियोगस्य स तथा । तेन हि नियोग साध्यते, न पुन. नियोगो यत्नस्यानुष्ठानं ज्ञापयति । एतदुक्तं भवति, साक्षान्नियोग एव कर्तव्यतया अवगम्यते लिङादिभ्य । स तु यागविषय. तदनुष्ठानमन्तरेण कर्तव्यतया अपर्यवसानात् तदनुष्ठानमाक्षिपति । सोऽयं आक्षेपाख्यस्य उपादान व्यापार नियोगस्याख्यायते इति । तदेतत् अपूर्वात्मनि कार्यरूपे नियोगे सति उपपद्यते । चोदयति– नियोगस्य ) तद्विषयत्वादेव हि तर्हि कर्तव्यतायाम ( विषयिणो विषयनान्तरीयकत्वात् ।

तेषामुपदेशः ' इति च [ भाष्य चोदनासूत्रे पृ. १९ ] । नाप्यकरणे प्रत्यवायहेतुता, अभावो हेतुत्वानुपपत्तेः । तुल्ये च साध्यत्वे नानुपपत्तिः प्रयाजादीनाम् ( प्रयाजादीनामङ्गत्वानुपपत्तिः ) । नहि स्वरूपे कार्ये फलानुपयोगीति अङ्गम् । प्रयुक्तेरपि प्रत्यविशेषाभावात् ( दर्शपूर्णमासाभ्यां साध्यत्वेन तुल्यस्यापि प्रकरणादिविनियुक्तस्य न प्रयुक्तिहेतुतात्र सम्भवति विनियोगानुसारादुपादानस्य ) । न च दुरितात् धर्मेण अनुपचितात् पापक्षयात् प्रवृत्तिः । अनात्मीयत्वे ( अपि ) ततश्चित्तमोहनाविषत् । पापक्षयस्य च पुरुषार्थत्वेऽप्यर्थात् ( नित्यानां कर्मणां प्राग्भवीयपापपरिपाकदोषोत्पादात् पुरुषार्थत्वेऽर्थात् ) । अनारब्धत्वे वा ( नित्यकर्मणः ) तत्राभावात् । भाष्यीयेण न्यायेन नित्यत्वे ( नित्यत्वे ) न दोषः ।

( चोदयति– ) " यदि तर्हि फलवत्यपि न सर्वाङ्गोपसंहारः, काम्येऽपि तथा स्यात् । यावज्जीवश्रुतेः इतरत्र ( नित्ये ) एवं ( सर्वाङ्गोपसंहारः ) इति चेत्, इतरत्रापि ( काम्ये अपि ) स्वर्गकामश्रुतेरस्तु । यथैव यावज्जीवमग्निहोत्रं जुहुयात् तथा सर्वेण स्वर्गकामेन । ( नित्ये ) यथा यत्र यावन्ति शक्नोति, तत्र तावतामुपसंहारः, तथा ( काम्येऽपि ) यो यावन्ति शक्नोति स तावन्ति उपसंहरिष्यति । अङ्गविधिविरोधादिह स्वर्गकामश्रुतिः अर्थिमात्रविषया [ न ? ] विशेषमनुरुध्यते । शक्त्यपेक्षया तु अङ्गविध्यविरोधे नित्यवत् न विशेषानुरोधहेतुः । अथ मतम्, अनुपरोधे स्वर्गकामश्रुतेः अङ्गविषय एवोपरुध्येत, अविशेषप्रवृत्ता यथाशक्त्युपसंहारात् । ( तर्हि ) नित्येऽपि तुल्यम् । यावज्जीवश्रुतेः अनन्यगतित्वात् तन्नैवम् । कामश्रुतिस्तु सर्वाङ्गोपसंहारसमर्थेऽपि उपपन्ना, तदाविरोधात् काम्यमोक्तिन्यायेन ( १।४।२।१४। ३७ ) तदनुरोधेनाङ्गनिवृत्तिः । सत्यमविशेषः, दर्शितस्तु स्वर्गकामश्रुतेर्विषयमपरोधन्यायो विरोध । तत्र अङ्गप्रधानविरोधे प्रधानानुरोधः श्रेयान्, लोकवत् । यथा हि ' ब्राह्मणान् भोजय नानाविधोपकरणेनान्नेन ' इति यथासत्त्वमुपकरणं यावज्जनोपकरणानुरोधेन ब्राह्मणनियमः । एवं नाङ्गविधीनामपि नात्यन्तसांस्कारत्वम् । नच काम्येष्वपि ' यदा शक्नुयात् ' इत्येव अस्तु, न ' यो यदा शक्नुयात् ' इति अश्रौतत्वात्" । नैतत् सारम् । एकप्रयोगविधिविरोधप्रसङ्गात् अनेकप्रयोगकल्पनाप्रसङ्गात् । फेनत्वपदार्थे नाङ्गत्वाभावात् विशेषश्रुतेरविरोधाच्च । ( एतद्धि– ) स एव प्रयोगविधिः कल्पनाङ्गस्य प्रयोग तमेव प्रति विदधाति, न विदधाति इति स्यात् । कल्पनागौरवं च सामर्थ्यभेदेन प्रयोगभेदात् । पदस्य च पदान्तरसम्बन्धे विशेषपरत्वं सर्वत्रापि न कदाचित्यायपरत्वम् । नित्येऽपि तर्हि एवमेवास्तु ' जीवन् यदा शक्नुयात् ' इति । ( शङ्कते– ), यावदित्यनुपपन्नमिति चेत्, ( परिहरति– ) अनित्यनिमित्तेषु कथम् ? अपि च तात्पर्येण होमप्रसङ्गः । अथ कालविशेषवादानानुरोधात् तथा, हन्त अङ्गविध्यनुरोधादित्यपि यावज्जीवश्रुतिः सामर्थ्ये सत्यपि अनिर्णयानुरोधात् ' यदा ' इति स्यात् ( यदा शक्नुयात् इत्युपलभ्यविधिः ) । अथ मत जीवतः श्राद्धे एव कर्मणि अधिक्रियते नाङ्गस्य विधानम्, अधिकृतस्य तु प्रयोगो यावदधिकारं नाङ्गानुरोधेन निवर्तते, यथासम्भवं तु अविकारकत्वात् तस्य । न च काम्येऽपि प्रसङ्गः, कार्यनिष्ठत्वात् कामाधिकारस्य प्रयोगनिष्ठत्वाच्च नैमित्तिकस्य साधनापेक्षत्वात् कार्यस्य, यावदङ्ग च साधनमात्रासतेः सर्वाङ्गोपसंहारेणैव कार्यसिद्धिः । ननु कामस्याप्यधिकार एव कर्तव्यः, सत्यम्, एकत्र निमित्तपर्यन्तः अपरत्र फलपर्यन्तः । तत्र निमित्तपर्यन्ते निमित्तवतोऽधिकृतस्य अप्रयुञ्जानस्याधिकारातिक्रान्तिः इति यथासम्भवं प्रयोगः । फलपर्यन्ते तु अङ्गवैकल्ये फलानुपपत्तेः फलकामिना अधिकारहेतुर्भवन्ति इत्यधिकारप्रभावात् नाधिकारातिक्रान्तिरेव' इति न ( ? ) यथाकथंचित् प्रयोगः, एवं न कात्स्न्येन प्रयोगः, नाथान्तरेष्वपि ( कालेषु ), यथाशक्ति चोपसंहारो नित्येषु, न काम्येषु इति सर्वं चतुरस्रम् ।

( तदेतदेकदेशिमतं निरस्य दूषयति– ) नैतत् चतुरस्रम् । इदमत्र भवान् व्याचष्टां किं शक्त्यपेक्षोऽधिकारो यथाऽधिकारं च प्रयोगः, आहोस्वित् शक्त्यपेक्षोऽधिकारः अधिकृतस्य तु यथाशक्ति प्रयोगः ? पूर्वस्मिन् कल्पे यथैव कालविशेषयुक्ते कर्मणि ( दर्शपूर्णमासादौ ) तत्कालजीविनोऽधिकृतान् अन्यस्य

कार्यता ॥ ' ३३ ॥ यस्मात् यथोक्ताय प्रयोगाय एकान्ततोऽसमर्थः ( शूद्रपङ्ग्वादिः ) स दूरपर्युदस्त एवाधिकारात् । न स्वसौ तादृशो नियोज्यतया प्रत्येतुं पार्यते । तेन शक्त्यङ्गोपदेशो अपेक्ष्य समर्थस्य तावदधिकारप्रतीतिः । सा चेयमधिकारप्रतीतिः ( नैमित्तिके ) नेति पर्यवसिता अनित्यत्वात् सामर्थ्यस्य ( अनैमित्तिकस्य चावश्यकार्यत्वात् ) । अन्यथा अधिकृतस्य सर्वाङ्गोपसंहाराभावे ( सति ) नानुष्ठानं यथाक्रमसन्यथा, अन्यादृशोऽधिकारात् तादृशप्रयोगस्य ( न्यूनाङ्गस्य ) अशास्त्रीयत्वात् नानुष्ठानमनधिकारात् । अतः पुनरपि शक्तमेवाधिकारप्रतीतिविषयमवगमयेत् । शक्तिर्हि प्रमाणेनैवेत्युक्तम् ( शक्तिश्रुतिः चोदनैकदेश इत्युक्तमाचार्यैः । यदि तु न चोदनैकदेशः स्यात्– ) न प्रयोगाङ्गत्वात् ( कल्प्येत ) अनन्यप्रमाणकत्वात्तस्य । ( पूर्वपक्षी– ) सा कालतः अङ्गतो वा आश्रीयेत, तत्र अङ्गतः नश्वरे शब्दावगतानामङ्गान्तराणां हानात्कस्यचिद्विरोध । कालस्तु तत्त्वलक्षणमशब्दार्थत्वात् न कश्चिद्विरोध ( इति काम्ये नैमित्तिके च यदेवेष युक्तम् । सिद्धान्ती– ) न चाय मविरोधो निर्निमित्तेऽधिकारे दृष्टम्, अनेन, ईदृशेन ( भावेन, करणेन, इतिकर्तव्यताविशेषेण ) इत्येवमभिधानस्य शब्दार्थत्वात् । सनिमित्ते तु निमित्तश्रुतिर्विशेष, यस्मिंश्च तस्मिन् कार्यस्य नमिमित्तस्य बाधात् । ( शङ्कते– ) इतरत्रापि स्वर्गकामश्रुतिविरोधः । ( असमर्थमसमर्थं चाधिमात्र प्रति अप्यकुचितश्रुतिरधिश्रुतिः, समर्थं प्रति नियम्यमाना पीड्येत ) इति चेत् । ( समाधत्ते– ) अत्रम् ( केवलपदार्थपरत्वात्स्वर्गादिदोषश्रुतेः इति पृ० २२२ ) । न च पुरुषविशेषनिर्देशोऽत्र विवक्षितः साध्यत्वात् । न च सातत्येन प्रयोगः ( प्राप्नोति ), निमित्ते कालविशेषवत कर्मफलाऽवगमात् । कालविशेषेण तस्याप्यविशेषणात् नैमित्तिक निमित्तानुप्रवेशित्वात् । तदुक्त ( आचार्येण ) ' न काले गुणो, निमित्तं चेतत् ' इति । न गुण एवं- न्यर्थः, न त्वङ्गान्तराण्येव ( निमित्तेन– ) असाम्यात् वचनव्यक्तिभेदात्, उपादेयानि हि ( कालात्– ) अङ्गान्तराणि, अनुपादेयं निमित्तम । ' एभिः एतानि वा कुर्यात् ' इत्येषु वचनव्यक्तिः, ' अस्मिन् सति '

इति निमित्ते । ततः अङ्गान्तराणि नाल निमित्तमनुप्रवेष्टुम् । कालस्त्वनुपादेय. ( निमित्तेन ) समानवचनव्यक्तिः अङ्गमपि सन् निमित्तमनुप्रविशतीति युक्तम् । ( शङ्कते– ) अथ निमित्तोपसंहार एव किं नेष्यते ? ( कश्चित् परिहरति– ) काम्येऽपि तत्प्रसङ्गात्तथा । ( शङ्काकारः– ) ननु प्रयोजनमेवत् । ( सिद्धान्ती– ) सत्यम । हेतुस्तु पावज्जीवश्रुतेरनतिरिक्तार्थता । प्रकरणिनोऽपि अङ्गार्थत्वं च ( तस्मात् काम्यविधिवाक्यं प्रकरणसद्भावे काम्यस्याङ्गतायां प्रमाणम्, न निमित्ततायाम् ) । तदेव अविरोधात् अनिमित्ते कालत शक्त्याश्रयो ' यथा ' इति, निमित्तवति तु निमित्तविरोधात् कालतः एताङ्गतो यथेति ।

( एवं कारिकापूर्वार्धं व्याख्याय पश्चार्धं व्याख्यातुमाक्षिपति– ) किं पुनरिदं ( निमित्तं ) यद्विरुध्येत ? कालत शक्त्याश्रय ( इति स्वरूपाक्षेप. ), कस्य चेति ( इति संबन्ध्याक्षेप. ), कुतो गम्यते निमित्तनैमित्तिकभावः ( इति प्रमाणाक्षेपः ), कथं चास्य नैमित्तिकसम्बन्ध । ( स्वरूपाक्षेपं विभजते– ) यदि तावत् ' अस्मिन् सति ' को विरोधः ( कालत शक्त्याश्रयेण ) नहि कालतोऽपि शक्त्याश्रये तस्मिन्नसति तत्क्रिया ( किंतु– ) सत्येव, अथ तस्मिन् सति क्रियते एव । ( दूषयति– ) व्याप्तिरेव. न त्वीदृशो निमित्तार्थः ( निमित्तशब्दार्थः ) । हेतुर्हि निमित्तम्, न चास्य हेतुः कार्यजन्म । कार्ये तु सति हेतौ । तस्मान्न विरोधः । ( कस्येत्याक्षेपं विभजते– ) यदि कर्मणो निमित्तम्, तत एव कर्मणो नैमित्तिकत्वम्, अनिरूपितादपि निमित्तात् निमित्तवद्दर्शनात् पुरुषस्याभावात् । ( अथ विधेर्निमित्तं ) न तस्य निमित्तादुत्पत्तिर्नित्यत्वात् । तस्य तस्मिन् सति न बोधो वाक्यादेव तत्सिद्धेः । ( अथ फलस्य निमित्त तर्हि ) कर्मैश्वर्ये सति ( निमित्ते फल ) भवत्येवेति । सत्येव तस्मिन् ( निमित्ते ) कर्मणि फलमिति चेत्, विरोधाभावः सर्वाङ्गोपसंहारेण । अथाधिकारस्य ( निमित्त इति चेत् ) न, ( निमित्तात् किंतु ) नियोगादधिकारः । ( शङ्कते– ) स एव नियोगसंबन्धस्तन्निमित्त । ( दूषयति– ) यदि तर्हि तन्निमित्तको नियोग, न नियोगाधिमि-

निबन्धनानुष्ठानस्य पर्णमयीत्वादीनाम्, फलविधौ तदभावः। अतः अर्थवादः क्रत्वर्थः, फलविधिः पुरुषार्थः। सत्यपि च विध्यधीनानुष्ठानत्वे पर्णमयीत्वस्य क्रतुप्रयोगविध्य विषयत्वात् पुरुषार्थत्वम्। तद्व्यापारपरिमाणं च एवमेव विविक्तम्। प्रथमे तु यद्यपि विधितः प्रवृत्तिर्विनोपरम्या, सामान्यरूपा तु पुरुषे या अन्येनाकृता पुरुषार्थः। अङ्गापेक्षा तु करणत्वात् पराधीना तज्ज्ञानं च विधे. इति सामान्यतोऽपि (न केवल विशेषतः) प्रवृत्तेस्तदा-यत्तत्वात् अङ्ग क्रत्वर्थ.। (शङ्कते-) इदं तर्हि कथ (भाष्योक्त) 'प्रयोजकः कश्चित् पुरुषार्थः, अप्रयो-जकः क्रत्वर्थः' इति। (पृच्छति-) किमत्र कथम्। (चोदकः-) प्रयोजको हि अत्र क्रत्वर्थपुरुषार्थावुक्तौ, तथैवं सङ्गतं 'प्रयोजकः कश्चित् पुरुषार्थः, कश्चित् क्रत्वर्थः' इति। (परिहरति-) नैष दोषः, पुरुषार्थः क्रत्वर्थः इति समानाधिकरणसमासः, पुरुष. अर्थः (विषय. आश्रयः कामनिमित्तयोः, क्रतुः अर्थः विषयः क्रतुविधेः) इति विग्रहात्। एतदुक्त भवति, कस्यचित् कश्चित् पुरुषः किंचित् प्रयोज्यमित्यर्थः (कस्यचित् कर्मणः काम्यस्य नैमित्तिकस्य वा कश्चित् पुरुषः कामी निमित्त-वान् वा प्रयोजकः, किंचित् कर्म काम्यं नैमित्तिकं वा कस्यचित् कामिनो निमित्तवतो वा प्रयोज्यमित्यर्थः)। क्रतुविधेरपि किंचित् प्रयोज्यम्, किंचिद् अप्रयोज्यं यथा आमिक्षावाजिनद्वारेण दध्यानयनम्। (एवं भाष्य व्याख्यातम्। पूर्वे तु पुरुषेच्छाधीनप्रवृत्तिः पुरुषार्थः, क्रतुविध्यधीनप्रवृत्तिश्च क्रत्वर्थ इति। एतदेव क्षिप्तम्)। तत्र 'यस्मिन् प्रीतिः' (४।१।२।२) इति पञ्चमो अनुष्ठान न विधित इति दर्शितम्। (विचारप्रयोजन-माह-) प्रयोजनं श्येनादिफलस्यानर्थत्वम्। पुनः क्रत्व-नन्तरयेन तदङ्गत्वेन च क्रतुप्रयोगविधिविषयत्वाविषयत्वे शेषलक्षणेन (दर्शिते भवतः)। क्रत्वर्थपुरुषार्थौ विभक्तौ क्रतुशेषत्वाशेषत्वविचारेण (साम्यवैषम्यविचारात् पूर्वं दर्शितौ)। परतस्तु सिद्धे एकशेषत्वे क्रतुविधिप्रयोग-विधिव्यापारपरिमाणमात्रचिन्तायाम्। अत एव (साम्य-वैषम्यविचारोपक्रमे भाष्यकारेण-) उक्तं अतिक्रान्त-स्तृतीयविषय इति।

पञ्चमे तु किं चिन्त्यते। ननु क्रमः (चिन्त्यते), केन प्रमाणेन? (उत्तर-) श्रुत्यादिभिः। (आक्षेप-) नैतत् सारम्। 'चोदनालक्षणोऽर्थो धर्मः', स च चतुरवस्थ एव (विविनातुर्विध्यात्) इत्युक्तम्। क्रमश्च तद्व्यतिरिक्तः। न चैष प्रयोगविधेर्विषयः, अननुष्ठेय-त्वात्, अपदार्थत्वात्, पदार्थव्यतिरेकेण इदन्तयाऽनि-रूपणात्। पदार्था हि क्रमेण अनुष्ठीयन्ते न तु क्रमः। नापि विनियोगविधेः उत्पत्तिविधेर्वा (विषयः)। अत एव (अननुष्ठेयत्वादेव) नाधिकारविधे. (विषय.) अनियोज्यत्वात्। स्याच्च तावत् श्रौते क्रमनियमे तत्परो विधि. अर्थादिषु तत्परविध्यसंभवः। (एवमाक्षिप्ते समाधत्ते-) उच्यते। प्रयोगो विध्यर्थ इत्युक्तम्। क्रमभेदश्च प्रयोगविशेषः। तथाहि, क्रमेण पदार्था अनुष्ठीयन्ते इत्युच्यते। तथा च प्रयोगविधिविषयत्वात् न चोदनालक्षण-धर्मातिवर्ती क्रमः। (एवं प्रमेय परि-शोध्य विचारस्यानुपयोगमाशङ्कयति-) तत्र प्रथमं क्रमपदार्थाति-रेकेण इदन्तयाऽनिरूपितत्वात् अप्रयोज्यतामविनियोज्यता-मनुत्पाद्यतां च मत्वा विधिविषयत्वमनाश्रित्य प्रयोगविधि-विषयता दर्शिता। उत्तरपक्षेण तु उदाहरणशुद्धिः कृता दीक्षापदार्थस्य प्राप्ते.। अननुष्ठेयस्यापि कथंचिदनुष्ठीय-मानस्य विशिष्टक्रमानुष्ठानस्य निष्प्रयोजनत्वात् कर्तृनियमविधौ अध्वर्युसंबन्धस्य आनर्थक्यात् अनेकार्थविधिनो वाक्य-भेदात्। दीक्षापदार्थस्य तु प्रतिप्रधानावृत्तेः अनुष्ठानविशेष-विधेरेकार्थत्वात् (विधीयते अनेनानुष्ठान इति अनुष्ठान-विशेष. क्रमः) तद्विधौ 'न पूतः पावयति' इति प्रति-षेधात् (ननु अध्वर्युरूपा बहव. इति सैषा प्रतिप्रस्थातृ-विषये वचन भविष्यति इत्यत आह-) 'इतरमन्यस्तेषां यतो विशेष. स्यात्' (३।८।१०।२२) इति। अध्वर्युरूपस्य आर्त्विज्याभावात् उत्तरान्यथियोऽश्च। ब्रह्म-चारिणश्च आचार्यपरतन्त्रत्वात्। अर्थादिषु तु यद्यपि पदार्थपरो विधिस्तथापि तत्प्रयोजनापेक्षी (अनु-ष्ठानविशेषं क्रम प्रतिपादयति इति परेण संबन्धः) स्वाध्यायविधि-प्रमाणित-पाठक्रमनियम-प्रयोजनापेक्षश्च (स्वाध्यायविधिप्रमाणितो यः पाठक्रमनियमः तत्प्रयोजन न तदपेक्षः प्रयोगविधिः पुरुषार्थः। क्रम प्रति-

पादयति इति परेण सम्बन्धः । प्रवृत्तिक्रममाह– ) निशांत च क्रममनुरुध्यमानं स्वागतं च सहभावमत्यन्तमबाधमानं अनुष्ठानविशेषं प्रतिपादयन्ति इति प्रयोगाङ्गत्वम् । ( ननु ) चिन्तितोऽसौ ( चतुर्थे प्रयोगचिन्तयैव ) पुरस्तात् । ( उत्तर– ) सत्यम्, प्रयोगचिन्ता (प्रयोगस्य ये पदार्थास्तत्क्रमियत्तारूपं प्रयोगाङ्गं चिन्तितम् । क्रमस्तु न तथा– ) अस्मिंस्तु क्रम प्रयोगविशेष एव । अतः पूर्वेणासिद्धं अनुष्ठानविशेषचिन्तेयं इति भिद्यते लक्षणार्थः ।

यद्वे तु अधिकारांशो निरूप्यते सर्वाङ्गोपसंहारसमर्थस्य उतेतरस्यापीति, अन्ये शास्त्रीयत्वात् शास्त्रीयाशास्त्रीयत्वा स्याम् । ( पूर्वपक्षमाह– ) तत्र यथैव अपेक्षितसाधनत्वं प्रवृत्तिहेतुर्नेतरत् तथा शक्यत्वमपि (लोकत एवान्वय व्यतिरेकाभ्यामवगतमिति )। शक्यताऽपि प्रवर्तनाप्रवृत्ति रूपमनुप्रविशन्ती इष्टसाधनतावत् शास्त्रगम्या । तथा चाधिमानस्येष्टसाधनम् । शक्यं च शास्त्रात् प्रतीत कर्म प्रमाणान्तराविरोधेन यथासम्भवं व्यवतिष्ठते ( यो यावन्ति शक्नोत्युपसंहर्तुमङ्गानि तस्य तावद्विशेषाङ्गं तत् प्रधान शक्यमभिमतसाधनमिति ) इति सर्वाधिकार उक्तः । ( सिद्धान्तमुपक्रमते– ) प्रमाणान्तरनियम्यत्वात् ( तुशब्दः पूर्वपक्षव्यावर्तनार्थः ) शक्तेस्तावत् शास्त्रगम्यत्वात् विधिरूपानुगततया अपि न शास्त्रार्थता ( प्राप्तत्वात् ) विधिस्तु मानान्तरगम्यशक्त्यपेक्षः शब्देन प्रतीयते । न चैवं सापेक्षत्वदोषः, यथा मानान्तरगोचरपदार्थैरपेक्षितत्वे । अन्यथा ( शास्त्रस्य शक्तिनियामकत्वे ) सर्वं सर्वाङ्गोपसंहारसमर्थं स्यात्, कुतो यथाशक्ति व्यवस्था । ( पूर्वपक्षी– ) प्रमाणान्तरविरोधादिति चेत् । ( उत्तर– ) हन्त तर्हि शब्दस्याप्रामाण्यम् । लब्धप्रमाणान्तरसिद्धौ च पदार्थस्वरूपविशेषोपलब्धिनिपत्ति ( पदार्थस्वरूपविशेष शक्त्यात्मक तदुपायतनिष्पत्तिपर्यन्त शास्त्रविषयस्य च ) आ प्रयोगान्तरं शास्त्रविषयोऽभ्युपगमनीयः । तथा च ( शक्यतायामपि नियामके प्रमाणे सति ) तावकस्य प्रवृत्तिहेतुत्वकर्तृत्वादिति । तावदर्थकत्वं प्रवर्तो गम्यते इति समर्थाधिकार: ( सिद्धान्ति ) ॥ ३४ ॥

सति चाधिकारे ॥ करोति ॥ एव पुरस्तात् प्रतिपादितः । कथं पुनस्तस्य अभाव शङ्क्यते ? इह केचित् ‘ साध्यत्वात् कर्तुराख्यातैर्व्यापारा सिद्धसाधना । प्राधान्येनाभिधीयन्ते फलेनापि प्रवर्तिना ॥ ’ ३५ ॥ क्रियाप्रधानमेकार्थं वाक्यं ( शब्दस्पृत्यनुसारात् ) इति । क्रियैव हि ( साध्यरूपा ) भावते, स्वभावसिद्धं ( तु ) द्रव्यं ( ता प्रति ) गुणः ( स्वर्गादि ) इति वदतः फलस्यासम्बन्धः वाक्ये मन्यते । तथा च फलाभावादधिकाराभावः, नहि अफलेषु कर्मसु कश्चिन्नियोज्यः स्वामी वा । ( चोदयति– ) कथं पुनरसम्बन्धः फलस्य ? ( समाधत्ते– ) कर्मणः ( धात्वर्थस्य ) साध्यत्वप्रतीतेः, द्वयोः साध्ययोः समवायात् । तथाहि, यदि यागादय एव क्रिया ते एव पूर्वापरभूताः प्रधानात्मना गम्यन्ते ( न तदा मान्यान्तरापेक्षाऽस्ति ) । अथापि तद्व्यतिरेकिणी क्रिया, सा च सकर्मिका साध्यप्रधाना, तथापि ते एव ( यागादयः, न तु फलम् ) । कुतः ( पौर्वापर्यनियमात्, प्रत्ययस्य प्रकृत्यर्थाभिसम्बन्धिसाध्याभिधायित्वात् ( धात्वर्थस्य च– ) साध्यत्वेन प्रतीतेः, अन्यथा (धात्वर्थस्यासाध्यत्वे) द्रव्यगुणशब्दाविशेषात् ( अविशेषप्रसङ्गात् ) । अनभ्युपगमाच्च ‘ येषामुत्पत्तौ ’ इति ( २।१।१।२ ) न्यायात् स्वरूपाभिसम्बन्धाच्च ( धात्वर्थस्य साध्यस्य ) ‘ काष्ठैः पचति ’ इति । ननु कर्मात्वमभिसम्बन्धात् ( काष्ठैरोदनं पचतीति ) नैव स्यात् । न, कर्मण्यपि कारकत्वमुक्ते कारकत्वेनैव क्रियाऽन्वयात् ( स्व– )धर्मत्वेन भूततयोपादानात्, ईप्सिततमत्वं तु प्रमाणान्तरविषयः । तथा च दृष्टफलेषु ( ओदनपाकादिषु ) अस्तु फलवत्ता, यागादिषु तु न फलं स्वर्गादि, तथा असम्भवात् मानान्तरस्य चाभावात्, एवं च ‘ तानि द्वैधं ’ इत्युक्तम् ( २।१।३।६ ) ( केषाञ्चित् कर्मणां फलानां साध्यत्वेन प्रधानत्वं ज्योतिष्टोमप्रयाजादीनाम्, केषाञ्चिच्च मानान्तरसिद्धफलानामवघातादीनां फलं प्रति गुणत्वेनेति ) । अन्यथा ( सर्वेषां फलार्थत्वे तु ) एकरूप्यमेव स्यात् ( एकरूपतैव स्यात् । प्रमेय परिशोध्य मतमस्य व्याचष्टे– ) एष तावत्

‘ द्रव्याणां कर्मसंयोगे ( कर्मसंयोगे इत्यत्र पाठः )

वर्णयता अनिष्ट एवाधिकारो भवति। सत्यम्, न्यायस्तु निरूपणे नाभ्युपगमः। न च 'यागं कुर्यात्' इत्यर्थे यथाऽधिकारभ्रंशोऽपरिहार्यः तथा वक्ष्यते ॥ ३५॥

(एवं पूर्वपक्षयित्वा सिद्धान्तमाह–) अत्रोच्यते, 'विशेषा एव शब्दार्था दृष्टरूपान्वयेऽपि हि। न च प्रवर्तनाबोध दृष्टशक्तेर्विनाऽर्थनात् ॥' ३६॥ न तावत् सामान्य लिङाद्यर्थः, प्रेषणाऽध्येषणाऽभ्यनुज्ञोपदेशानां तु विशेषाणामेव लोके प्रतीतेः, मोहादिभेदानामनागतेश्च। नहि प्रवृत्तिहेतुमात्रबोधः क्वचिदस्ति। सामान्यशब्दात् विशेषप्रमाणाभावे तन्मात्रागतेः। अतो न तावन्मात्रं शब्दार्थः। विशेषानुपपत्तेः तु वृक्षादीनामिव कर्तृत्वं तान्त्रीयतानुपपन्नम्। अन्यथा (तान्त्रीत्यादिवचनाभावे) कर्तृप्रयोगप्रतीतिप्रसङ्गात् (कर्तृमात्रे प्रयोगप्रसङ्गात्)। नाप्युपाधयो न शब्दार्थाः (उपदेशादयः), अप्रतीतानामभेदकत्वात्, अन्यस्य प्रत्ययहेतोरभावात्। 'तदन्तरात् तदृशान्यः समानशब्दोऽयम्' इति च (कात्यायन–)स्मरणात्। (द्विविधोऽप्युपाधिः उपहितसमानाधिकरणः तद्व्यधिकरणश्च। तद्यथा 'दण्डिहरिः पश्य' 'गार्गिकया श्लाघते' इति च। तत्र च समानशब्दः समानाधिकरणोपाधिः स तदन्तराच्यः प्रत्ययान्तवाच्यो दण्डिहरिपक्षादिः। न तु असमानशब्दः असमानाधिकरणः 'गार्गिकया श्लाघते' इत्यादि। नहि 'गार्गिकया' इति श्लाघाविकारविहिते वुञि तदन्तेन असमानाधिकरणः (च–) गार्गिकया श्लाघा अभिधीयते इत्यर्थः। ननु तटस्था एवोपाधयः न पुनरभिधानिमित्तमिव इत्यत आह–) मोहादीनामपि उपाधित्वात् (अन्यथा) तत् इतरेण शब्दार्थत्वप्रसङ्गात्। उपेत्यापि तु (प्रवर्तनामात्राभिधानं) उच्यते। सामान्यचोदनाया विशेषपरत्वात् विशेष एव प्रतिपाद्यः। स च न कश्चित्, सर्वो वा, कश्चिदेव वा, सर्वथा तु विशेषप्रत्ययस्तमयेन सामान्यबोधोऽपर्यवसायी। तत्र इष्टनच्छन्दनपेक्षणा अभिप्रायमात्रानुविधायिना तदपेक्षणा च तदानुकूल्यमपेक्षमाणानां प्रवृत्तिहेतवः प्रेषणाऽध्येषणाऽभ्यनुज्ञा अपुरुषबुद्धिप्रभवया (चोदनाया) न प्रतिपाद्याः। न मोहादय (प्रवृत्तिहेतवः) दोषनिषेधात्।

ते हि प्रतिपाद्यमाना अप्रवृत्तिहेतव इति प्रवर्तनाऽवबोधो निहन्येत, विपर्यय एव स्यात्। नेष्टता (इष्टसाधनता इति कणिकायाम्) कर्मणि (प्रवृत्तिहेतुः) मत्स्यविधेः घात्। इष्टसाधनतामपि चेन्न गमयेत् अप्रतिपादकत्वमेव स्यात्। सामान्यबोधस्य विशेषप्रत्ययक्षमत्वे अनर्थकत्वाभिप्रायापत्तेः। तस्य च हेतुद्वयाभावे (कारणदोषबाधकप्रत्ययाभावे) अप्रामाण्यात्, तदुक्तं 'असाधकं तु तादर्थ्यात्' इति (६।१।१।२), भवेदसाधकं कर्म साधयितारं नाधिगच्छेत् अनधिकारि स्यात् इत्यर्थः, तादर्थ्यात् प्रवर्तनामात्रार्थत्वात् (विधि–)शब्दस्य प्रीतिसाधनत्वानवगमात्, प्रीत्यर्थत्वाच्च पुरुषप्रयत्नानाम्। अविशेषे तु प्रीतिसाधनत्वे सिद्धोऽधिकारः। सर्वविशेषप्रत्ययापगमे चासाधकं वाक्यं स्यादबोधकं अविशेषार्थत्वात् सामान्यचोदनायाः ॥ ३६॥

नन्वुक्तं 'प्रख्यायते लिङादीना व्यापारीया प्रवर्तना। प्रयोक्तृधर्मः' (कारिका ७) इति। सत्यम्, आज्ञादिको नोपदेशः (प्रयोक्तृधर्मो वेदे)। ननु उपदेशोऽपि अनुग्रहाभिप्रायात्मक इति न प्रयोक्तृधर्मतामतिवर्तते। नैतत् सारम्। उपदेशो प्रैषादिष्विव प्रवृत्तिहेतुत्वाभावादभिप्रायस्य। तथाहि, 'आज्ञादौ कर्मशक्तेर्हि नाभिप्रायानुरोधिता। उपदेशे कर्मशक्तिमबुध्य प्रवर्तते ॥' ३७॥ आज्ञाऽभ्यर्थनयोर्हि कर्मणः सामर्थ्यमनपेक्षमाणः तद्विशेष (तस्य कर्मणः प्रयोजनविषयविशेष) अनाद्रियमाणः तदभिप्रायानुरोधादेव किंचित् समीहमानः अभिप्रायानुरोधी प्रवर्तते। अनुज्ञानेऽपि यद्यपि क्रियाफलात् प्रवृत्तिः तथाप्यभिप्रायानुकूल्यमपेक्षते। उपदेशे तु सत्यप्यनुग्रहाभिप्राये कर्मणः समीहितसाधकत्वाभावे न प्रवर्तते। कर्मशक्तिं त्ववबुध्य (उपदेष्टुः) अप्रतारकत्वमात्रेण विप्रलम्भकनिमित्ताभावेन सत्यार्थवचनात् असत्यपि अनुग्रहाभिप्राये वक्तुः प्रवर्तते। तस्मादुपदेशे तु सत्यपि अनुग्रहाभिप्रायः शब्दार्थः, अनुग्रहाभावात्तु कर्मणः (इति मूलपाठः। तस्मादुपदेशप्रवृत्तेः प्रतिविशिष्टसमीहितसाधनत्वभावाभावानुविधानात् अभिप्रायाऽननुविधानाच्च नानुग्रहाभिप्रायः शब्दार्थः, अभिमतसाधनता तु कर्मणः शब्दार्थः–इति तु कणिका)।

फलं तु सर्वत्र कर्तृभावनागोचरः ' इति ( भावनाविवेके ) । द्रव्यगुणशब्दार्थस्वरूपतोऽपि ( द्रव्यगुणशब्दार्थविशेषस्तु धात्वर्थस्य रूपतोऽपि ) निष्पाद्यस्य साधनत्वात् ( प्राग्सिद्धेः ) सिद्धस्योपादानाभावात् ( गोदोहनादीनां तु अन्यतः सिद्धानां सतामुपादानात् ) । अत एव भावनामनुरञ्जयतो यागादेः तद्विशेषणस्य प्रतीतेः ( भावनाया विशेषणस्य प्रतीतेः नाव्यस्थायकः । यदपि चोदितम् , सर्वाभिमतसाधनत्वेन कर्मणो गुणभावात् गुणप्रधानभावेन द्वैविध्य हीयेतेति तत्राह– ) द्विविधत्वं तु अपूर्वमात्राभावानङ्गत्वम् । पुरुषप्रयत्नस्य यागादिक्रियायाः स्वर्गे ( साध्ये ) अपि अविरुद्धम् , दृष्टे इव क्लेशे पशुविषयत्वम् । न च यागादेर्व्यापारत्वं शब्दादेव ( साधनतया ) तत्प्रतीतेः । ज्ञानप्रदीपादीनां चोत्पत्तेरपि व्यापारत्वाभ्युपगमात् ।

( यदोक्तं ' स्वर्गं कुर्यात् ' इत्याद्यवाक्योपदेश इति, तदनुपपन्नम् , द्विधा हि भवति क्रियानर्हता अत्यन्तसत्त्वात् गगनवत् , अत्यन्तासत्त्वाद्वा खपुष्पवत् । न चैतदुभयमपि स्वर्गादौ सम्भवतीत्याह– ) न च स्वर्गो नित्यः , अत्यन्तमसत्त्वात् येनाशक्यः । उपायाज्ञानात् इति चेत् ( परिहरति– ) अत एव स ( उपायः ) ज्ञाप्यते ( विधिना, अतश्च ज्ञातोपायः शक्यो भविष्यतीति ) । न चाऽरभ्यकर्मप्रत्ययत्व. ( स्वर्गादेः ) फलस्यानुवादात् प्रमाणान्तरोपसंहारार्थं विधेः , ' दध्ना जुहोति ' इति यथा । ( न यथाचक्ष्महे न फलविधयेति, किंतु तदुद्देश्यत्वात् ) फलविषयाया एव प्रवृत्तेः यागविषयत्वेन ( अज्ञातत्वात् ) शब्दो हेतुः ( प्रमाणं ) इति यागो विधीयते । नहि अन्या पुरुषस्य कर्मणि प्रवृत्तिः , अन्या करणे, करण एव प्रवृत्तः फलप्रवृत्तो भाति, कर्मण्येव ( फले ) प्रवर्तमानः करणे प्रवर्तते । तदेवं अर्थावगमान्न वैयर्थ्यम् । नाप्यन्यत् ( आत्मज्ञानाधिकारानुवेशः ) प्रयोजनम् । ' स्वर्गकामो यागं कुर्यात् ' इति यागविधौ शब्दे तदनभिधानात् ( तत्रैव तात्पर्यसमवायात् ) अप्रमाणत्वात् ( आत्मज्ञानाधिकारानुप्रवेशस्य । तत्परत्वे वा– ) श्रुतहानात् अश्रुतकल्पनाच्च ( श्रुतयागकर्तव्यताहानात् अश्रुतात्मज्ञानानुप्रवेशकल्पनाच्च ) । न च दृष्टमेव प्रयोजनं आत्मप्रतिपत्तिः, कर्मभिः कृतकामनिबर्हणेन दान्तेन कामैरनाकृष्टमनसा आत्मतत्त्वस्य सुप्रत्ययत्वात् । यदि त्वस्तु कामनिबर्हणानि कर्माणि, तैश्च कृती न प्रयोजनान्तरमपेक्षते कामी, तथा च तत्पर एव कर्मविधिः इति नान्यपरत्वे प्रमाणम् ( कामनानपेक्षित्वात् ) । न नाशाक्षरम् , धर्मोऽभिलाषकत्वात् श्रेयसः प्रीतिरूपत्वात् , प्रीतेश्च कामेषु प्रत्यात्मसंवेद्यत्वात् । न च भोगो निबर्हणम् , नहि कामानां तृप्तिरस्ति । अथ प्रवृत्त्यन्तरनिवृत्त्या, तथापि यदि कामी यागेन कुर्यात् नान्येनोपायेन कामम् , को विशेषः कामपक्षे ( कामाक्षेपे इति कश्चित्पाठः ) केवलं कामनिवृत्तये प्रवृत्तौ, अथ च पक्षेऽपि अप्राप्तविधौ अन्यनिवृत्तिः । अथ कामी यागं कुर्यात् कामम् , ( उत्तर– ) दुर्लभमर्थद्वयं अविशेषतः श्रौतत्वपरित्यागश्च । ( स्वर्गं कुर्यादिति श्रौते सम्भवति, न कामनिवृत्तिलक्षणशिष्टेः युक्ता आश्रयितुमिति ) यागविधिपरत्वे न कामनिषेधः , कामनिषेधपरत्वे न यागविधिः । अथोत् ( अर्थापत्त्या ) कामनिवृत्तिः ( इति चेन्न ) उभयस्याप्यसमवायात् । सर्वदृष्टार्थप्रवृत्तिनिरोधे न कर्मविधिष्वनेकेऽपि अपार्थकाः स्युः दृष्टोपायप्राप्यत्वात् तद्वर्गस्य ( यागादेः ) । स्वाभाविकत्वाच्च फलोपभोगस्य स्वभावत्वाच्च एवमस्मिन्नर्थे छद्मना आश्रित स्यात् । तस्मात् महदेतदपदमिदं ' दृष्टेनैव कर्मनिचय आत्मज्ञानाधिरम्यारोहन्ति ' इति । नियोगस्यानुष्ठाप्यत्वात् शास्त्रस्य इति ज्ञाननियोगोऽपि नियोज्यानुष्ठानपरत्वात् इति न तत्र आत्मप्रतिपत्तिः । ( शङ्कते– ) ज्ञानस्वभावादिति चेत्, ( निराकरोति– ) विधिवैयर्थ्यात् । अवहन्त्यादिवत् इति चेत् , न, नियमार्थत्वात् ( अवहन्त्यादिविधेः ) । न ज्ञानविशेषनियमः , पक्षेऽपि अप्राप्ते । सम्प्रत्येव च सम्भवात् न तत्परिच्छेदः । ( उपसंहरति– ) तस्मात् साधने धात्वर्थे अधिकारसिद्धिः । साधनस्य चास्य विधिः इत्युक्तम् ॥ विधिविवेकः समाप्तः ।